८७ ( ५ ) दीधितिव्याख्या—न्यायवाचस्पतिभट्टाचार्यः (?) ( विद्यानिवाससूनुः ) ।

८८ ( ६ ) व्याख्या—जयरामन्यायपञ्चाननतर्कालंकारभट्टाचार्यः ।

८९ ( ७ ) व्याख्या—काशीनाथः ।

९० ( ८ ) रौद्री—रुद्रभट्टाचार्यः ।

९१ ( ९ ) व्याख्या—महेशः ।

९२ (१०) विद्योतम्—म. म. गोकुलनाथः ।

९३ (११) प्रवेशः—विश्वेश्वरपण्डितः पर्वतीयः ।

९४ सर्वोपकारिणी प्रवेशो वा (भवानन्दीव्याख्या)—महादेवो मुकुन्दपण्डितात्मजः पुण्यस्तम्भनिवासी (पुणतांबेकर)

९५ .. संगतिविवृतिः ( गदाधरीव्याख्या )—आर्डे इत्युपनामकः कृष्णंभट्टः ( काशीस्थः ) ।

९६ न्यायरत्नम् ( गदाधरीटिप्पणम् )—पर्वते इत्युपनामको रघुनाथशास्त्री पुण्यग्रामस्थरामानुजमतानुयायिराघवाचार्याणां शिष्यः ।

तर्कामृत(२१)स्य टीकाः कथ्यन्ते—

९७ ( १ ) चषकः —गङ्गाराम जडी ( नारायणपुत्रः नीलकण्ठशिष्यः दिनकरपुत्र्याः पुत्रः )

९८ ( २ ) तर्कामृततरङ्गिणी—मुकुन्दः ।

९९ ( ३ ) तर्कामृतदर्पणम्— ०

तर्कभाषा(२५)टीकाः कथ्यन्ते—

१०० ( १ ) तर्कभाषाटीका—गोवर्धनमिश्रः ( केशवमिश्रशिष्यः बलभद्र–विजयश्री–पुत्रः पद्मनाभ–विश्वनाथ–बन्धुः )

१०१ ( २ ) टीका—माधवभट्टः ।

१०२ ( ३ ) प्रकाशिका—चिन्नुभट्टः सहजसर्वज्ञपुत्रः ( स च विजय-
नगरे हरिहरराज्यसमये आसीत् )।

१०३ ( ४ ) प्रकाशिका ( भावार्थदीपिका )—म. म. गौरीकान्तभ-
ट्टाचार्यः।

१०४ ( ५ ) प्रकाशिका—म. म. कौण्डिन्यदीक्षितः।

१०५ ( ६ ) प्रकाशिका—म. म. बलभद्रः (त्रिपाठी विष्णुदासतनुजः)

१०६ ( ७ ) तर्कभाषाभावः—रौंविलवेंकटबुद्धः (धः)।

१०७ ( ८ ) तर्कभाषाव्याख्या—मुरारिः ( गङ्गाधरपुत्रः )।

१०८ ( ९ ) तर्कभाषावृत्तिः—सिद्धचन्द्रगणिः ( भानुचन्द्रगणिशिष्यः
जैनः )

१०९ (१०) युक्तिमुक्तावली—नागेशभट्टः (?)।

११० (११) तर्कभाषाव्याख्या—माधवाचार्यः।

तार्किकरक्षा(२६)याष्टीकाः कथ्यन्ते—

१११ ( १ ) सारसंग्रहः— ०

११२ ( २ ) निष्कण्टका—मल्लिनाथः।

११३ ( ३ ) न्यायकौमुदी—विनायकभट्टः।

११४ तार्किकरक्षाव्याख्याव्याख्यानम्—हरिहरः।

न्यायसिद्धान्तमञ्जर्याः(२८)टीकाः कथ्यन्ते—

११५ ( १ ) तर्कप्रकाशः ( शितिकण्ठी )—श्रीकण्ठदीक्षितः ( विश्वना-
थात्मजः )।

११६ ( २ ) व्याख्या—श्रीकृष्णन्यायवागीशभट्टाचार्यः।

११७ ( ३ ) न्यायरत्नावली— ०

११८ ( ४ ) न्यायमञ्जरीप्रकाशः—भास्करः ( लौगाक्षीत्युपनामकः मु-
द्गलात्मजः )

११९ ( ५ ) न्यायसिद्धान्तमञ्जरीसारः—यादवः ( नृसिंहात्मजः )।

न्यायसिद्धान्तमुक्तावल्याः(३०)टीके कथ्येते—

१२० ( १ ) रौद्री—रुद्रभट्टाचार्यः ( रामेश्वरपुत्रः )

१२१ ( २ ) प्रकाशः —{ महादेवभट्टः<br>दिनकरभट्टः } एतदुभाभ्यां निर्मितः ।

१२२ प्रकाशस्य व्याख्या ( रामरुद्री ) रामरुद्रभट्टाचार्यः ।

तर्कसंग्रह(३२)स्य टीकाः कथ्यन्ते—

१२३ ( १ ) न्यायबोधिनी—शुक्लरत्ननाथः ।

१२४ ( २ ) दीपिका—अन्नंभट्टः ।

१२५ ( ३ ) व्याख्या—मुरारिः ।

१२६ ( ४ ) सिद्धान्तचन्द्रोदयः श्रीकृष्णधूर्जटिदीक्षितः ।

१२७ ( ५ ) न्यायबोधिनी—गोवर्धनः ।

१२८ ( ६ ) टीका—क्षमाकल्याणः ।

१२९ ( ७ ) न्यायार्थलघुबोधिनी—गोवर्धनरङ्गाचार्यः ।

१३० ( ८ ) टीका—गौरीकान्तः ।

१३१ ( ९ ) पदकृत्यम्—चन्द्रजसिंहः ।

१३२ (१०) निरुक्तिः—जगन्नाथशास्त्री ।

१३३ (११) निरुक्तिः ( वाक्यार्थः )—पट्टाभिरामः ।

१३४ (१२) चन्द्रिका—मुकुन्दः ।

१३५ (१३) वाक्यवृत्तिः (उपन्यासः) } मेरुशास्त्री गोडबोले । अयं मम ( न्यायकोशकारस्य )न्यायगुरोः पितृव्यः ।

१३६ (१४) तरङ्गिणी—विन्ध्येश्वरीप्रसादः ।

१३७ (१५) तर्कचन्द्रिका—वैद्यनाथ-गाडगीळ इति ।

---

# अथ प्रकीर्णकं नाम चतुर्थ उपोद्घातः ।

१३८ ( १ ) अनुमानलक्षणम्—लक्ष्मीदासः ।

१३९ ( २ ) अनुमितिमानसम्—हरिरामतर्कालंकारः ( गदाधरभट्टाचार्यगुरुः ) ।

१४० ( ३ ) आकाङ्क्षावादः—रघुदेवभट्टाचार्यः ।

१४१ ( ४ ) आख्यातवादः ( आख्यातविवेकः )—रघुनाथतार्किकशिरोमणिः ।

१४२ ( ५ ) ईश्वरवादः—रघुदेवभट्टाचार्यः ।

१४३ ( ६ ) एवकारवादार्थः—हरिरामभट्टाचार्यः ।

१४४ ( ७ ) कारकवादः—जयरामभट्टाचार्यः ।

१४५ ( ८ ) कारकवादः—भवानन्दः ।

१४६ ( ९ ) क्रोडपत्राणि—शंकरमिश्रः, न्यायकोशकर्ता च ।

१४७ (१०) गुणरहस्यम्—०

१४८ (११) गुणरहस्यप्रकाशः—०

१४९ (१२) चित्ररूपवादार्थः—विद्यानिवाससूनुर्न्यायवाचस्पतिभट्टाचार्यः ।

१५० (१३) जगन्नाथदीक्षितीयम्—जगन्नाथदीक्षितः ।

१५१ (१४) जातिमाला—०

१५२ (१५) तर्ककुतूहलम्—विश्वेश्वरपण्डितः पर्वतीयलक्ष्मीधरसूनुः ( इसवी १८ शतकम् ) ।

१५३ (१६) तर्कचन्द्रिका—विश्वेश्वराश्रमः ।

१५४ (१७) तर्कपरिभाषा—०

१५५ (१८) तर्कप्रदीपः—कोण्डभट्टः ।

१५६ (१९) नञर्थवादटीका—जयरामः ।

१५७ (२०) न्यायकलिका—जयन्तः ।

१५८ (२१) न्यायकौस्तुभः—महादेव-पुणताम्बेकरः ।

१५९ (२२) न्यायपारिजातः यल्लुभट्टः।
१६० (२३) न्यायमञ्जरी जयन्तभट्टः—
१६१ (२४) न्यायसारः—०
१६२ (२५) न्यायसारविचारः—राघवभट्टः ( म. म. शारङ्गसुतः )।
१६३ (२६) न्यायसिद्धान्ततत्त्वम्—गोकुलनाथः।
१६४ (२७) न्यायसिद्धान्तमाला—जयरामभट्टाचार्यः।
१६५ (२८) पदार्थदीपिका—कोण्डभट्टः ( रंगोजीभट्टपुत्रः )।
१६६ (२९) पदार्थमालाप्रकाशः—लौगाक्षिभास्करः।
१६७ (३०) पदार्थविवेकः—०
१६८ (३१) पदार्थविवेकटीका—गोपीनाथ मौनी।
१६९ (३२) परामर्शविचारः—म. म. हरिरामतर्कालंकारभट्टाचार्यः।
१७० (३३) प्रकाशतावादार्थः— ,, ,, ,,
१७१ (३४) प्रतियोगिज्ञानकारणताविचारः—रघुदेवभट्टाचार्यः।
१७२ (३५) बालबोधः—म. म. गोविन्दपण्डितः।
१७३ (३६) बाधबुद्धिवादार्थः—०
१७४ (३७) भावदीपिका—श्रीकृष्णन्यायवागीशभट्टाचार्यः।
१७५ (३८) भाषारत्नम्—कणादापरनामा रघुदेवः।
१७६ (३९) मितभाषिणी—०
१७७ (४०) मुक्तिहारः—गदाधरः।
१७८ (४१) रत्नकोशवादः<br>रत्नकोशविचारः } म. म. न्या. पञ्चा. हरिरामतर्कालंकारभट्टाचार्यः ( गदाधरभट्टाचार्यगुरुः )।
१७९ (४२) लाघवगौरवरहस्यम्—गोकुलनाथः।
१८० (४३) वाक्यार्थभेदवादः—आपदेवसूनुः।
१८१ (४४) विधिनिरूपणम्—रुद्रभट्टाचार्यः।
१८२ (४५) विधिवादः—गदाधरभट्टाचार्यः।
१८३ (४६) विशिष्टवैशिष्ट्यवादार्थः—हरिरामभट्टाचार्यः।
१८४ (४७) विषयतावादार्थः—०

| | |
|---|---|
| १८५ (४८) व्युत्पत्तिवादः<br>१८६ (४९) शक्तिवादः | गदाधरभट्टाचार्यचक्रवर्ती । |
| १८७ (५०) शब्दार्थतर्कामृतम्— | श्रीकृष्णभट्टः ( गोवर्धनात्मजः मौनिकुलोत्पन्नः ) । |
| १८८ (५१) शब्दार्थमञ्जरी— | भवानन्दः । |
| १८९ (५२) समासवादः— | म. म. न्या. पञ्चा. वासुदेवभट्टाचार्यसार्वभौमः । |
| १९० (५३) सिद्धान्तदीपप्रभा* | ( शशधरीयस्य व्याख्या ) । |

न्यायकोशकर्ता

---

* एवमन्येऽपि न्यायवैशेषिकशास्त्रीयाः केचन नाममात्रप्रसिद्धाः केचन संग्रहादौ वर्तमाना बहवो ग्रन्थाः सन्ति । तथापि विस्तरभयात्तेषां नामानि न संनिवेशितानि इत्येतैरेवालम् इति शम् ॥

# येभ्यो ग्रन्थेभ्यः शब्दान् गृहीत्वाऽयं न्यायकोशो व्यरचि

| ग्रन्थसंख्या. | ग्रन्थप्रतीकः (ग्रन्थचिह्नम्) | एतच्चिह्नानामर्थः (ग्रन्थनाम) | विषयः—<br>(न्याय.)गोतममतानुसारी<br>(वैशे.) कणादमतानुसारी<br>(मिश्रम्) उभयमतमिश्रम् |
|---|---|---|---|
| १ | अथर्व, भा० | अथर्वभाष्यम् ( प्रस्तावना ) | वेदार्थः |
| २ | आपस्त० | आपस्तम्बमहर्षेर्धर्मसूत्रम् | धर्मः |
| ३ | ए० वा० | एवकारवादार्थः | मिश्रम् |
| ४ | ऐतरेय० | ऐतरेयोपनिषत् | ऋग्वेदोपनिषत् |
| ५ | काव्यप्र० | काव्यप्रकाशः | काव्यम् |
| ६ | का० व्या० | कारकव्याख्यानम् ( कारकवादः ) | मिश्रम् |
| ७ | कि० | किरणावलिः | ( वैशे० ) |
| ८ | कु० | न्यायकुसुमाञ्जलिः | ( न्याय० ) |
| ९ | कु० व्या० | न्यायकुसुमाञ्जलेर्व्याख्यानम् | ( न्याय० ) |
| १० | कु० व्या० ता० | कुसुमाञ्जलेर्व्याख्यानस्य तात्पर्यविवरणम् | ( मिश्रम् ) |
| ११ | कृष्णं० | गदाधरीव्याख्यानम् कृष्णंभट्टी | ( मिश्रम् ) |
| १२ | गण० | गणरत्नमहोदधिः | व्याकरणम् |
| १३ | ग० | गदाधरी | ( मिश्रम् ) |
| १४ | ग० व्यु० | गदाधरीव्युत्पत्तिवादः } इत्यादिरूह्यः | ( मिश्रम् ) |
| १५ | ग० शक्ति० | गदाधरीशक्तिवादः } | ( मिश्रम् ) |
| १६ | गीता, भा० | भगवद्गीताया भाष्यम् | वेदान्त० |
| *१७ | गौ० | न्यायदर्शनम् | ( न्याय० ) |
| *१८ | गौ० वृ० | गौतमसूत्रवृत्तिः | ( न्याय० ) |
| १९ | चि० | तत्त्वचिन्तामणिः | ( मिश्रम् ) |
| २० | चि० प्र० | तत्त्वचिन्तामणेः प्रकाशः | ( मिश्रम् ) |
| २१ | छान्दो० | छान्दोग्योपनिषत् | सामवेदः |
| २२ | जग० | जगदीशी | ( मिश्रम् ) |
| २३ | जैमि० | जैमिनिसूत्रम् | पूर्वमीमांसा |
| २४ | जै० न्या० | जैमिनीयन्यायमाला | पूर्वमीमांसा |

*१९२२ खिस्ताब्दे आनन्दाश्रमसंस्कृतग्रन्थावल्यां मुद्रितमेकनवति ( ९१ ) ग्रन्थाङ्कयुतं

तेषां ग्रन्थानां नामादीनि ग्रन्थप्रतीकेभ्यो ज्ञेयानि।

| ग्रन्थकर्ता | लिखितं अङ्कितं वा पुस्तकम् | पत्राणाम् पृष्ठानां वा संख्या | अङ्कनलेखनादिकालः-शकः संवत् अथवा इसवी | अङ्कनस्थानम् | पुस्तक-स्थानम् |
|---|---|---|---|---|---|
| सायणाचार्यः | अङ्कितम् | ० | ० | मुंबई | |
| आपस्तम्बः | अङ्कितम् | ९८ | इसवी १८६८ | मुंबई | ए. कालेज |
| ० | अङ्कितम् | १३ | ० | धारवाड | |
| ० | अङ्कितम् | ५३ | इसवी १८९३ | मुंबई | स्वीया |
| मम्मटभट्टः | अङ्कितम् | १९८ | संवत् १९२३ | बनारस | |
| जयरामभट्टाचार्यः | लिखितम् | १२ | ० | ० | एल्फिन्. कालेज |
| उदयनाचार्यः | लिखितम् | २९ | ० | ० | ए. कालेज |
| उदयनाचार्यः | अङ्कितम् | ६५ किंवा(४८) | इसवी १८६४ | कलकत्ता | ए. कालेज |
| हरिदासभट्टाचार्यः | अङ्कितम् | ६५ किंवा(४८) | इसवी १८६४ | कलकत्ता | ए. कालेज |
| महेशचन्द्रन्यायरत्नः | अङ्कितम् | ६५ | इसवी १८६४ | कलकत्ता | ए. कालेज |
| कृष्णंभट्टः ( आर्डे ) | अङ्कितम् | ७३ | संवत् १९३४ | बनारस | |
| वर्धमानः | लिखितम् | ० | ० | ० | ए. कालेज |
| गदाधरभट्टाचार्यचक्रवर्ती | लिखितम् | ० | इसवी १८५८ | ० | स्वीया |
| गदाधरभट्टाचार्यचक्रवर्ती | अङ्कितम् | १४८ | संवत् १९४२ | बनारस | |
| गदाधरभट्टाचार्यः | अङ्कितम् | १४८ | इसवी १८८६ | बनारस | |
| श्रीमध्वाचार्यः | अङ्कितम् | ३९७ | इसवी १८८७ | मुंबई | |
| गौतमः | अङ्कितम् | २९७ | इसवी १८६५ | कलकत्ता | ए. कालेज |
| विश्वनाथपञ्चाननः | अङ्कितम् | २६४ | इसवी १८२८ | कलकत्ता | ए. कालेज |
| गङ्गेशोपाध्यायः | अङ्कितम् | २२६ | इसवी १८७२ | कलकत्ता | |
| रुचिदत्तः (भाकु (कु) शास्त्री) | लिखितम् | ११४ | संवत् १६४९ | ० | एल्फि. कालेज |
| ० | अङ्कितम् | ० | इसवी १८९३ | मुंबई | स्वीया |
| जगदीशभट्टाचार्यः | लिखितम् | ० | ० | | जिनसीवाले |
| जैमिन्याचार्यः | अङ्कितम् | १२६९ | संवत् १९२५ | कलकत्ता | ए. कालेज |
| माधवाचार्यः | अङ्कितम् | | | पुणे | |

यद्गौतममुनिप्रणीतन्यायसूत्रभाष्यं तत्पुस्तकस्थाः सूत्राङ्का अस्यां तृतीयावृत्तौ निर्दिष्टाः।

## येभ्यो ग्रन्थेभ्यः शब्दान् गृहीत्वाऽयं न्यायकोशो व्यरचि

| ग्रन्थसंख्या | ग्रन्थप्रतीकः (ग्रन्थ-चिह्नम्) | एतच्चिह्नानामर्थः ( ग्रन्थनाम ) | विषयः— (न्याय.) गौतममतानुसारी (वैशे.) कणादमतानुसारी (मिश्रम्) उभयमतमिश्रम् |
|---|---|---|---|
| २५ | त० कौ | तर्ककौमुदी | ( वैशे० ) |
| २६ | त० दी० | तर्कदीपिका | ( मिश्रम् ) |
| २७ | त० प्र० | तर्कप्रकाशः ( शितिकण्ठी ) | ( मिश्रम् ) |
| २८ | त० भा० | तर्कभाषा | ( न्याय ) |
| २९ | त० व० | तत्त्वावलिः | ( वैशे० ) |
| ३० | त० वा० | तर्कसंग्रहवाक्यार्थः | ( मिश्रम् ) |
| ३१ | तत्त्वप्र० | तत्त्वप्रकाशिका | वेदान्तः |
| ३२ | तत्त्वसं० | तत्त्वसंख्यानम् | वेदान्तः |
| ३३ | त० सं० | तर्कसंग्रहः | ( मिश्रम् ) |
| ३४ | तर्का० | तर्कामृतम् | ( वैशे० ) ( मिश्रम् ? ) |
| ३५ | ता० र० | तार्किकरक्षा | ( न्याय० ) |
| ३६ | तैत्तिरी० | तैत्तिरीयोपनिषत् | वेदान्तः |
| ३७ | दि० | दिनकरी | ( मिश्रम् ) |
| ३८ | दीधि० २ | दीधितिः, अनुमानखण्डः | ( मिश्रम् ) |
| ३९ | नील० | नीलकण्ठी | ( मिश्रम् ) |
| ४० | न्या० क० | न्यायकन्दली ( प्रशस्तपादभाष्यटीका ) | ( वैशे० ) |
| ४१ | न्या० बि० टी० | न्यायबिन्दुटीका | बौद्धन्यायमतम् |
| ४२ | न्या० बो० | न्यायबोधिनी | ( मिश्रम् ) |
| ४३ | न्या० म० | न्यायसिद्धान्तमञ्जरी | ( मिश्रम् ) |
| ४४ | न्या० र० | न्यायरत्नम् ( गदाधरीटिप्पणम् ) | ( मिश्रम् ) |
| ४५ | न्या० ली० | न्यायलीलावती | ( वैशे० ) |
| ४६ | न्या० वा० | न्यायवार्तिकम् ( गौतमसूत्रटिप्पणम् ) | ( न्याय० ) |
| ४७ | न्या० सि० दी० | न्यायसिद्धान्तदीपः | ( न्याय० ) |
| ४८ | पञ्च० कूट० | पञ्चदशी—कूटस्थ० | वेदान्तः |

तेषां ग्रन्थानां नामादीनि ग्रन्थप्रतीकेभ्यो ज्ञेयानि ।

| ग्रन्थकर्ता | लिखितं अङ्कितं वा पुस्तकम् | पत्राणाम् पृष्ठानां वा संख्या | अङ्कनलेखनादिकालः-शकः संवत् अथवा इसवी | अङ्कनस्थानम् | पुस्तकस्थानम् |
|---|---|---|---|---|---|
| लौगाक्षि-भास्करः | अङ्कितम् | २२ | इसवी १८८६ | मुंबई | स्वीया |
| अन्नंभट्टः | अङ्कितम् | ५० | इसवी १८७५ | बनारस | |
| श्रीकण्ठः ( शितिकण्ठः ) | लिखितम् | | ० | ० | महा. चिम० आपटे |
| केशवमिश्रः | लिखितम् | ५२ | संवत् १७०४ | ० | ए. कालेज |
| चन्द्रकान्ततर्कालंकारः | अङ्कितम् | २७८ | संवत् १९२६ | कलकत्ता | स्वीया |
| पट्टाभिरामः | अङ्कितम् | २२ | शके १७९५ | पुणे | स्वीयः |
| जयतीर्थार्यः | अङ्कितम् | ३८१ | शके १८०५ | मुंबई | स्वीया |
| श्रीमध्वाचार्यः | अङ्कितम् | पृ० १ श्लो० ११ | इसवी १८९३ | मुंबई | स्वीयम् |
| अन्नंभट्टः | अङ्कितम् | २२ | श० १८०५ | मुंबई | स्वीयः |
| जगदीशभट्टाचार्यः | लिखितम् | १२ | संवत् १८०६ | ० | ए. कालेज |
| वरदराजः | लिखितम् | पत्र १० श्लो० १६१ | ० | पुणे | डे. कालेज |
| कृष्णयजुर्वेदः | अङ्कितम् | १३ | इसवी १८९३ | मुंबई | |
| महादेवभट्टः | अङ्कितम् | २३७ | संवत् १९२३ | बनारस | |
| रघुनाथभट्टाचार्यतार्किकशिरोमणिः | अङ्कितम् | २२६ | इसवी १८७२ | कलकत्ता | |
| नीलकण्ठभट्टः | अङ्कितम् | ५० | इसवी १८७५ | बनारस | |
| श्रीधरः | अङ्कितम् | ० | ० | बनारस | |
| धर्मोत्तराचार्यः | अङ्कितम् | ० | इसवी १८९० | मुंबई | |
| गोवर्धनः | अङ्कितम् | २५ | शके १७९४ | पुणे | स्वीया |
| जानकीनाथभट्टाचार्यचूडामणिः | लिखितम् | ६१ | शके १७३५ | | स्वीया |
| रघुनाथशास्त्री, पर्वते | अङ्कितम् | ३३२ | शके १७७२ | पुणे | स्वीयम् |
| महामहोपाध्याय-वल्लभाचार्यः | लिखितम् | ६८ | ० | | डे. कालेज |
| उद्योतकराचार्यः | अङ्कितम् | ० | इसवी १८८२ | कलकत्ता | ० |
| शशधरः | लिखितम् | ८१ | शके १७८२ | ० | मुंबई |
| सायणाचार्य-कूटस्थदीपविद्यारण्यः | अङ्कितम् | ० | ० | ० | ० |

# येभ्यो ग्रन्थेभ्यः शब्दान् गृहीत्वाऽयं न्यायकोशो व्यरचि

| ग्रन्थसंख्या. | ग्रन्थप्रतीकः (ग्रन्थ-चिह्नम्) | एतच्चिह्नानामर्थः (ग्रन्थनाम) | विषयः— (न्याय.) गोतममतानुसारी (वैशे.) कणादमतानुसारी (मिश्रम्) उभयमतमिश्रम् |
|---|---|---|---|
| ४९ | प० च० | पदार्थचन्द्रिका ( सप्तपदार्थीटीका ) | वैशे० |
| ५० | प० मा० | पदार्थमाला | वैशे० |
| ५१ | पाणि० | पाणिनीयाष्टाध्यायी | व्याकरणम् |
| ५२ | पात० सू० | पातञ्जलयोगदर्शनम् | योगमतम् |
| ५३ | पु० चि० | पुरुषार्थचिन्तामणिः | धर्मशास्त्रम् |
| ५४ | प्र० च० | प्रमाणचन्द्रिका वेदेशतीर्थसहिता | वेदान्तः |
| ५५ | प्रथमा० वि० | प्रथमान्तार्थमुख्यविशेष्यकबोधविचारः | मिश्रम् |
| ५६ | प्र० प० | प्रमाणपद्धतिः | वेदान्तः |
| ५७ | प्र० प्र० | प्रमाणादिपदार्थप्रकाशिका | न्याय० |
| ५८ | प्रशस्त० | कणादसूत्रभाष्यम् | वैशे० |
| ५९ | बृह० | बृहदारण्यकोपनिषत् शुक्लयजुः-ब्राह्मणम् | वेदान्तः |
| ६० | ब्रह्मसू० | ब्रह्मसूत्रम् | वेदान्तः |
| ६१ | भवा० | भवानन्दी ( दीधितिव्याख्या ) | मिश्रम् |
| ६२ | भाग० | श्रीमद्भागवतम् | ज्ञान-भक्ति-वैराग्यम् |
| ६३ | भार० | महाभारतम् | वेदार्थविषयः |
| ६४ | भा० प० | भाषापरिच्छेदः | मिश्रम् |
| ६५ | मङ्गल० | मङ्गलवादः | मिश्रम् |
| ६६ | मध्व० भा० | ब्रह्मसूत्राणां मध्वभाष्यम् | वेदान्तः |
| ६७ | मनु० | मनुस्मृतिः | धर्मशास्त्रम् |
| ६८ | म० प्र० | न्यायसिद्धान्तमञ्जरीप्रकाशः | मिश्रम् |
| ६९ | मिता० | मिताक्षरा ( याज्ञवल्क्यस्मृतिव्याख्या ) | धर्मशास्त्रम् |
| ७० | मीमां० कौ० | मीमांसार्थसंग्रहकौमुदी | मीमांसा |
| ७१ | मु० | न्यायसिद्धान्तमुक्तावली | मिश्रम् |
| ७२ | मू० म० | मूलमथुरानाथी (तत्त्वचिन्तामणि-व्याख्या ) | मिश्रम् |

तेषां ग्रन्थानां नामादीनि ग्रन्थप्रतीकेभ्यो ज्ञेयानि ।

| ग्रन्थकर्ता | लिखितं अङ्कितं वा पुस्तकम् | पत्राणाम् पृष्ठानां वा संख्या | अङ्कनलेखनादिकालः-शकः संवत् अथवा इसवी | अङ्कनस्थानम् | पुस्तक-स्थानम् |
|---|---|---|---|---|---|
| शेषानन्तः | लिखितम् | ० | ० | ० | जिनसीवाले |
| जयरामभट्टाचार्यः | लिखितम् | १०९ | ० | ० | स्वीया |
| पाणिनिः | अङ्कितम् | ६६२ | इसवी १८३९ | बोन,यूरोपखं० | ए० कालेज |
| पतञ्जलिः | अङ्कितम् | १०८ | शके १८०९ | मुंबई | स्वीयम् |
| शेषाचार्यः | लिखितम् | ५५ | ० | ० | स्वीया |
| अचलशर्मा | अङ्कितम् | ६ | ० | धारवाड | ० |
| जयतीर्थार्यः | लिखितम् | ५६ | ० | ० | स्वीया |
| लौगाक्षि-भास्करः | लिखितम् | २५ | ० | ० | स्वीया |
| प्रशस्तपादाचार्यः | अङ्कितम् | ४६ किंच ६७ | संवत् १९४५ किंच १९४६ | लाहोर किंच मुंबई | स्वीयम् |
| ० | अङ्कितम् | ८५ | इसवी १८९३ | मुंबई | स्वीया |
| सत्यवतीसुतो व्यासः | अङ्कितम् | सूत्राणि ५६४ | शके १८०५ | मुंबई | स्वीयम् |
| सदानन्दभट्टाचार्यः | लिखितम् | ० | ० | सुरत | जिनसीवाले |
| सत्यवतीसुतव्यासः | अङ्कितम् | ० | ० | मुंबई | स्वीयम् |
| सत्यवतीसुतव्यासः | अङ्कितम् | ० | ० | मुंबई | ० |
| विश्वनाथपञ्चाननभट्टाचार्यः | अङ्कितम् | श्लो० १६९ पृ० ४६ | संवत् १९३९ | बनारस | ० |
| हरिरामतर्कवागीशः | लिखितम् | ११ | ० | ० | ए० कालेज |
| श्री-मध्वाचार्य ( आनन्दतीर्थार्यः | अङ्कितम् | ३८१ | शके १८०५ | मुंबई | स्वीयम् |
| भृगुप्रोक्तसंहिता | अङ्कितम् | अ० १२ श्लो. २६८४ | शके १७८८ | मुंबई | स्वीया |
| लौगाक्षिभास्करः | लिखितम् | ७३ | संवत् १५४७ | ० | ए० कालेज |
| विज्ञानेश्वरः | अङ्कितम् | ३६९ | शके १७८५ | मुंबई | स्वीया |
| रामेश्वरः ( शिवयोगमिक्षुः ) | अङ्कितम् | ५६ | संवत् १९३० | बनारस | स्वीया |
| विश्वनाथपञ्चाननभट्टाचार्यः | अङ्कितम् | २३७ | संवत् १९२३ | बनारस | स्वीया |
| मथुरानाथतर्कवागीशभट्टाचार्यः | अङ्कितम् | ७६८ | इसवी १८८४ | कलकत्ता | स्वीया |

## येभ्यो ग्रन्थेभ्यः शब्दान् गृहीत्वाऽयं न्यायकोशो व्यरचि

| ग्रन्थसंख्या. | ग्रन्थप्रतीकः (ग्रन्थ-चिह्नम्) | एतच्चिह्नानामर्थः (ग्रन्थनाम) | विषयः—<br>(न्याय.) गोतममतानुसारी<br>(वैशे.) कणादमतानुसारी<br>(मिश्रम्) उभयमतमिश्रम् |
|---|---|---|---|
| ७३ | ( याज्ञ० ) | याज्ञवल्क्यस्मृतिः | धर्मशास्त्रम् |
| ७४ | राम० | रामरुद्री | मिश्रम् |
| ७५ | ल० म० | लघुमञ्जूषा | व्याकरणम् |
| ७६ | ल० व० | लक्षणावलिः | मिश्रम् |
| ७७ | लौ० भा० | मीमांसार्थसंग्रहः | मीमांसा |
| ७८ | वाक्य० | वाक्यवृत्तिः | मिश्रम् |
| ७९ | वाक्यार्थ० | संग्रहवाक्यार्थः ( संग्रहार्थविवेचनी ) | मिश्रम् |
| ८० | वाच० | वाचस्पत्यम् | कोशः |
| *८१ | वात्स्या० | गौतमसूत्रभाष्यम् | न्याय० |
| ८२ | वादावलिः | वादावलिः | वेदान्तः |
| ८३ | वीरमित्रो० | वीरमित्रोदयः | व्यवहारशास्त्रम् |
| ८४ | वेदा० प० | वेदान्तपरिभाषा | वेदान्तः |
| ८५ | वेदा० सा० | वेदान्तसारः ( टीकाद्वयसमेतः ) | वेदान्तः |
| ८६ | वै० | वैशेषिकदर्शनम् | वैशे० |
| ८७ | वै० उ० | वैशेषिकोपस्कारः ( कणादसूत्रव्याख्या) | वैशे० |
| ८८ | वै० वि० | कणादसूत्रविवृत्तिः | वैशे० |
| ८९ | वै० सा० | वैयाकरणभूषणसारः ( भट्टोजीकृतकारिकाणां व्याख्या | व्याकरणम् |
| ९० | वै० सा० द० | वैयाकरणभूषणसारदर्पणः | व्याकरणम् |
| †९१ | श० प्र० | शब्दशक्तिप्रकाशिका | मिश्रम् |
| ९२ | शाब० भा० | शाबरभाष्यम् ( जैमिनिसूत्रभाष्यम् ) | मीमांसा |
| ९३ | शारी० भा० | शारीरकमीमांसा ( ब्रह्मसूत्रभाष्यम् ) | वेदान्तः |
| ‡९४ | सर्व० | सर्वदर्शनसंग्रहः | सर्वेषां मतानि |
| ९५ | सा० म० | सारमञ्जरी | मिश्रम् |

* १९२२ ख्रिस्ताब्दे आनन्दाश्रमसंस्कृतग्रन्थावल्यां मुद्रितमेकनवति-( ९१ ) ग्रन्थाङ्कयुतं

† १८७२ ख्रिस्ताब्दे कलिकातानगरे संवादज्ञानरत्नाकराख्यमुद्रणालये मुद्रितं यच्छब्दशक्ति-

‡ १९२४ ख्रिस्ताब्दे पुण्यग्रामस्थराजकीयप्राच्यग्रन्थश्रेण्यामेकेनानुक्रमाङ्केन (१) युतं निर्णयसागर-

तेषां ग्रन्थानां नामादीनि ग्रन्थप्रतीकेभ्यो ज्ञेयानि ।

| ग्रन्थकर्ता | लिखितं अङ्कितं वा पुस्तकम् | पत्राणाम् पृष्ठानां वा संख्या | अङ्कनलेखनादिकालः-शकः संवत् अथवा इसवी | अङ्कनस्थानम् | पुस्तकस्थानम् |
|---|---|---|---|---|---|
| याज्ञवल्क्यः | अङ्कितम् | अ० ३ श्लो.१०१४ | शके १७८५ | मुंबई | स्वीया |
| रामरुद्रभट्टः | अङ्कितम् | २३७ | संवत् १९२३ | बनारस | स्वीया |
| नागेशभट्टः | अङ्कितम् | ० | ० | बनारस | ए० कालेज |
| सुखदयालुशास्त्री | अङ्कितम् | ३९ | संवत् १९३५ | लवपुरी | स्वीया |
| लौगाक्षिभास्करः | अङ्कितम् | ५६ | संवत् १९३९ | बनारस | स्वीयः |
| मेरुशास्त्री गोडबोले | अङ्कितम् | २४ | शके १७९५ | पुणे | स्वीया |
| पट्टाभिरामः | अङ्कितम् | २२ | शके १७९५ | पुणे | स्वीया |
| तारानाथतर्कवाचस्पतिः | अङ्कितम् | ५४४२ | इसवी १८८४ | कलकत्ता | ए० कालेज |
| पक्षिलस्वामी | अङ्कितम् | २९७ | इसवी १८६५ | कलकत्ता | ए० कालेज |
| जयतीर्थमुनिः | लिखितम् | २८ | ० | ० | स्वीया |
| मित्रमिश्रः | अङ्कितम् | ७२४ | इसवी १८७५ | कलकत्ता | स्वीयः |
| धर्मराजाध्वरीन्द्रः | लिखितम् | ११३ | इसवी १८७३ | ० | स्वीया |
| सदानन्दः | अङ्कितम् | १९३ | संवत् १९४२ | कलकत्ता | ० |
| कणादर्षिः | अङ्कितम् | ४७६ | इसवी १८६१ | कलकत्ता | ए० कालेज |
| शंकरमिश्रः | अङ्कितम् | ४७६ | इसवी १८६१ | कलकत्ता | ए० कालेज |
| जयनारायणतर्कपञ्चाननः | अङ्कितम् | ४७६ | इसवी १८६१ | कलकत्ता | ए० कालेज |
| कोण्डभट्टः | अङ्कितम् | २१२ | संवत् १९२३ | बनारस | ए० कालेज |
| हरिवल्लभः | अङ्कितम् | २१२ अथवा ४६० | संवत् १९२३ अथवा १९४२ | बनारस | ए० कालेज |
| जगदीशभट्टाचार्यः | अङ्कितम् | १८८ | इसवी १८७२ | कलकत्ता | स्वीया |
| शबरमुनिः | अङ्कितम् | १२६९ | संवत् १९२५ | कलकत्ता | ए० कालेज |
| शंकरभारती ( शंकराचार्यः ) | अङ्कितम् | ० | ० | बनारस | ए० कालेज |
| सायणाचार्यः | अङ्कितम् | १८० | इसवी १८५८ | कलकत्ता | ए० कालेज |
| जयकृष्णतर्कालंकारः | अङ्कितम् | ९१ | शके १८०९ | बनारस | स्वीया |

ौतममुनिप्रणीतन्यायसूत्रभाष्यं तत्पुस्तकस्थाः सूत्राङ्का अस्यां तृतीयावृत्तौ निर्दिष्टाः ।
ाणिकपुस्तकं तत्रत्याः पृष्ठाङ्का अस्यां तृतीयावृत्तौ निर्दिष्टाः ।
ाल्यद्वारा मुद्रितं सटीकं सत्सर्वदर्शनसंग्रहपुस्तकं तत्रत्याः पृष्ठाङ्का अस्यां तृतीयावृत्तौ निर्दिष्टाः ।

## येभ्यो ग्रन्थेभ्यः शब्दान् गृहीत्वाऽयं न्यायकोशो व्यरचि

| ग्रन्थसंख्या | ग्रन्थप्रतीकः (ग्रन्थ-चिह्नम्) | एतच्चिह्नानामर्थः (ग्रन्थनाम) | विषयः—<br>(न्याय.) गौतममतानुसारी<br>(वैशे.) कणादमतानुसारी<br>(मिश्रम्) उभयमतमिश्रम् |
|---|---|---|---|
| ९६ | सा० सं० | सारसंग्रहः ( तार्किकरक्षाया व्याख्या ) | न्याय० |
| ९७ | सांख्य० का० | सांख्यकारिका (श्लो०७२) टीकाद्वययुता | सांख्यमतम् |
| ९८ | सांख्य० कौ० | सांख्यतत्त्वकौमुदी | सांख्यमतम् |
| ९९ | सांख्य० भा० | सांख्यप्रवचनभाष्यम् | सांख्यमतम् |
| १०० | सांख्यसू० | सांख्यसूत्रम् | सांख्यमतम् |
| १०१ | सि० च० | सिद्धान्तचन्द्रोदयः | मिश्रम् |
| १०२ | स्व० * | स्वयम् | स्वयंकृतम् |

* एवमन्येपि भट्टि-नैषध-शिशुपालवध-कुमार-रघुवंश-इत्यादयः काव्यग्रन्थाः ग्रन्थान्तरेषूदाहृता ?पलब्धास्तत्रत्या काश्चन ग्रन्थपङ्क्तय उपयुक्ता अत्र कोशे संगृहीताः। तथाऽपि 'ग्रन्थपृष्ठाधिक्य-

तेषां ग्रन्थानां नामादीनि ग्रन्थप्रतीकेभ्यो ज्ञेयानि।

| ग्रन्थकर्ता | लिखितं अङ्कितं वा पुस्तकम् | पत्राणाम् पृष्ठानां वा संख्या | अङ्कनलेखना-दिकालः-शकः संवत् अथवा इसवी | अङ्कनस्थानम् | पुस्तक-स्थानम् |
|---|---|---|---|---|---|
| ० | लिखितम् | ७३ | ० | ० | तनुसुखराम-त्रिपाठी |
| ईश्वरकृष्णः | अङ्कितम् | ५८ (४०) | इसवी १८८३ | बनारस | स्वीया |
| वाचस्पतिमिश्रः | अङ्कितम् | ६३ | इसवी १८७३ | बनारस | ए० कालेज |
| विज्ञानभिक्षुः | अङ्कितम् | ० | इसवी १८५६ | कलकत्ता | टाउनहाल, मुंबई |
| कपिलः | अङ्कितम् | ० | ० | ० | ,, |
| श्रीकृष्णधूर्जटिदीक्षितः | अङ्कितम् | ३८ | संवत् १९४२ | बनारस | स्वीयः |
| न्यायकोशकर्ता भीमाचार्यः | ० | ० | ० | ० | ० |

नानाविधा ग्रन्थाः महाभारतादीतिहासग्रन्थाः मात्स्यादीनि पुराणानि आत्रेयादिस्मृतिग्रन्थाश्च ये ये मयात्रात्रानुक्रमणिकायां तन्नामानि संनिवेशितानि इति क्षन्तव्यमेतज्जिज्ञासुभिः।

# चिह्नविवेकः ।

१ व्याख्यायमानशब्दस्य पुरतो वर्तमानः (   ) एतच्चिह्नान्तर्गतः शब्दो व्यापकधर्मविशिष्टस्य बोधकः ।

२ प्रमाणत्वेन गृहीतेभ्यो येभ्यो ग्रन्थेभ्यः शब्दानुद्धृत्यायं न्यायकोशो व्यरचि तेषां ग्रन्थानां प्रतीकान्यपि (   ) एतच्चिह्नान्तः समुपन्यस्तानि ।

३ यत्र समानार्थे लक्षणपरिष्काराणामनेकत्वं तत्रैकैकस्यादौ [   ] एतच्चिह्नान्तर्गतः ककारादिवर्णः परिष्कारभेदबोधनाय समुपन्यस्तः ।

४ यत्र मिथो विभिन्ना अनेकेऽर्थास्तत्रैकैकस्यादौ क्रमेण १।२ इत्याद्यङ्कोऽर्थभेदबोधनाय समुपन्यस्तः ।

५ यस्य शब्दस्योपरि १।२ इत्याद्यङ्का निर्दिष्टास्तस्याधस्तात्तत्पृष्ठे तादृशाङ्कद्योतितं टिप्पनम् ।

६ ययोर्ग्रन्थयोर्मध्ये········एतादृशं बिन्दुसमूहरूपं चिह्नं भवेत् तच्चिह्नं तयोर्मध्ये विद्यमानस्य ग्रन्थस्य परित्यागसूचकम् ।

# न्यायकोशः ।

श्रीपाण्डुरङ्गो विजयते ॥ नत्वा श्रीविठ्ठलं देवं गुरूंश्च पितरौ तथा। भीमाचार्यो वितनुते न्यायकोशं कृते विदाम् ॥ १ ॥ न्यायसूत्रादितः शब्दानुद्धृत्यायं सुनिर्मितः। प्राग्भिस्तु कविभिर्यस्मान्नोपदर्शित ईदृशः ॥ २ ॥ अतः संमानयन्त्वेनं न्यायकोशं दयालवः। निर्मत्सराश्च विद्वांसो बालकस्येव चेष्टितम् ॥ ३ ॥

## अ.

**अंहस्पतिः**—क्षयमासः। यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा। संसर्पांहस्पती मासावधिमासश्च निन्दिताः ॥ ( पु० चि० पृ० १६ )

**अकर्मकः**—(धातुः) [क] व्यापारसमानाधिकरणफलवाचकः (ल० म०)। यथा वृक्षात्पर्णं पततीत्यादौ पत्—धातुरकर्मकः।

[ख] व्यापारव्यधिकरणफलवाचकत्वाभाववान्।

[ग] व्याकरणशास्त्रीयकर्मसंज्ञकार्थानन्वय्यर्थक इति शाब्दिका वदन्ति। ( ल० म० धा० ५ )

[घ] फलावच्छिन्नव्यापारवाचको धातुरकर्मक इत्यपि कश्चिद्वक्ति। ( ल० व० )

[ङ] व्यापाराधिकरणमात्रवृत्तिफलवाचकः। ( वाच० )

---

१ व्यापाराधिकरणेतरावृत्ति यत्फलं तद्वाचक इत्यर्थः। तेन गम्यादौ फलस्य ( द्विष्ठत्वेन ) व्यापाराधिकरणकर्तृनिष्ठत्वेऽपि नातिव्याप्तिः। ( वै० सा० द० ८९ )

२ अत्र अधोदेशसंयोगानुकूलव्यापारस्य पत्—धात्वर्थत्वेनाधोदेशसंयोगरूपं फलं तदनुकूलव्यापारश्चैतद्द्वयमेकस्मिन् पर्णे तिष्ठतीति फलव्यापारयोः सामानाधिकरण्यं संगच्छत इत्यवधेयम्।

३ अत्रावच्छिन्नत्वं च पूर्वोक्तसामानाधिकरण्यात्मकमेवेति भाति।

४ तेन गम्यादेर्व्यापाराधिकरण-(कर्तृ) वृत्तिफलवाचित्वेऽपि नाकर्मकत्वम्। (वाच०)

५ अत्रोक्तं हरिणा—फलव्यापारयोरेकनिष्ठतायामकर्मक इति। एकनिष्ठतायामेकमात्रवृत्तितायामित्यर्थः। ( वाच० )

**अकस्मात्**—हेतुशून्यः कालः ( गण० ) । यथा अकस्मादयमागत इत्यादौ ।

**अकारः**—शून्यवचनः । ( पु० चि० पृ० १० )

**अकारणगुणोत्पन्नगुणत्वम्**[1]—कारणगुणोत्पन्नावृत्तिर्[2]गुणत्वसाक्षाद्व्याप्या[3] च या जातिस्तादृशजातिमत्त्वम् ( दि० गु० ) । तादृशजातिस्तु बुद्धित्व सुखत्वशब्दत्वादिः ।

**अक्रिया**—कर्माकरणम् । तत्त्रिविधम् । तदुक्तं छन्दोगपरिशिष्टे कात्यायनेन अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम् । अक्रिया च परोक्ता च तृतीया चायथाक्रिया । ( मिता० टी० बा० पृ० २५३ )

**अक्षपादः**[4]—न्यायसूत्रकर्ता गौतमर्षिः । स हि प्रमाणप्रमेयादिषोडशपदार्थवादी पदार्थतत्त्वज्ञानान्मोक्षं मन्यते ।

---

१ अकारणगुणोत्पन्नगुणास्तु बुद्ध्यादिषट्कं भावना शब्दश्चेति । एते च विभुविशेषगुणा इत्यप्युच्यन्ते । ( प० मा० ) ( मा० प० गु० )

२ कारणगुणोत्पन्नत्वं चात्र स्वाश्रयसमवायिसमवेतगुणजन्यत्वम् । तद्यथा—शुक्लं पटस्य रूपं तदाश्रयः पटः तस्य समवायी तन्तुः तत्र समवेतो गुणस्तन्तो रूपं तेन जन्यत इति पटस्य रूपं कारणगुणोत्पन्नं भवतीति बोध्यम् ।

३ गुणत्वसाक्षाद्व्याप्यत्वं* च संस्कारत्वान्यगुणत्वव्याप्यव्याप्यत्वे† सति गुणत्वव्याप्यत्वम् । ( दि० गु० )

४ अत्र श्रूयते । गौतमो हि स्वमतदूषकस्य व्यासस्य मुखदर्शनं चक्षुषा न कर्तव्यमिति प्रतिज्ञाय पश्चात् व्यासेन प्रसादितः पादे नेत्रं प्रकाश्य तं दृष्टवान्—इति पौराणिकी कथा ।

अत्राप्युच्यते—अक्षपादप्रणीते च काणादे सांख्ययोगयोः । त्याज्यः श्रुतिविरुद्धोर्थ इति पद्मपुराणम् । ( वाच० )

---

* परममहत्त्वत्वादिकमादायातिव्याप्तिवारणाय साक्षादिति पदम् । ( दि० गु० )

† अन्वयस्तु—संस्कारत्वान्यो यो गुणत्वव्याप्यस्तद्व्याप्यत्वं तस्मिन्निति । अत्र संस्कारत्वान्येति विशेषणाभावे तु भावनात्वस्य गुणत्वसाक्षाद्व्याप्यत्वाभावेन भावनाया असंग्रहः स्यादतस्तद्विशेषणम् ।

**अक्षरम्**—१ परं ब्रह्मेति मायावादिन आहुः । २ मोक्ष इत्यपीति वेदान्तिनः । ३ लक्ष्मीरपीति माध्वाः । ४ भगवदंशभूतो भगवद्रूपो धामविशेष इति वल्लभीयाः । ५ अकारादयो वर्णा इति काव्यज्ञाः । ६ वर्णस्मारकरेखात्मकलिपिसंनिवेश इति लेखकाः ।

**अखण्डोपाधिः**—(उपाधिः) अनिर्वचनीयो धर्मः । स च क्लृप्तसप्तपदार्थातिरिक्त एव ( सि० च० ) ( ल० व० ) । यथा अनुयोगितात्वप्रतियोगितात्वविषयतात्वादिः ।

**अग्निः**—तृतीया । ( पु० चि० पृ० ३७ )

**अग्निदैवत्यम्**—कृत्तिका । ( पु० चि० पृ० ३५२ )

**अग्निहोत्रहवणी**—निर्वापसाधनं काष्ठपात्रम् ।

**अघटकत्वम्**—[ क ] स्वाविषयकप्रतीतिवृत्तितन्निरूपितविषयिताकत्वम् । ( ग० कूटा० )

[ ख ] तद्विषयत्वाव्यापकविषयतावत्त्वम् । यथा वह्न्यभावनिष्ठविषयत्वाव्यापकं घटनिष्ठं विषयत्वं तद्वत्त्वस्य घटे सत्त्वेन घटस्य वह्न्यभावाघटकत्वम् । वह्नेस्तु तद्घटकत्वम् ।

**अङ्गम्**—१ प्रयोजकम् उपकारकं वा । यथा व्याप्तिरनुमित्यङ्गमित्यादौ ( सर्वद० पृ० ८ चार्वा० )। २ यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गमिति शाब्दिकाः । ३ मुख्यफलाजनकत्वे सति मुख्यफलजनकव्यापारजनकमङ्गमिति मीमांसकाः । ४ लग्नमिति मौहूर्तिकाः । ५ शरीरावयवोऽङ्गमिति काव्यज्ञा वदन्ति ।

---

१ अत्रायं नियमो बोध्यः—सखण्डोपाध्यतिरिक्तानामेव धर्माणां निर्वचनार्हत्वमिति ।

२ अत्र च कार्यकालवृत्तित्वेनैव कारणत्वस्य मीमांसकैः स्वीकृतत्वात्प्रयाजादिहोमजन्यापूर्वं प्रत्येव जनकत्वेन मुख्यफलजनकव्यापारजनकत्वमुपपद्यत इति ।

**अङ्गविधिः**—( विधिः ) गुणविधिः । यथा दध्ना होमं जुहोतीत्यादि ।

**अचित्**—दृश्यम् । ( सर्वद० पृ० ९२ रामानु० )

**अचिरनिर्मथितः**—( अग्निः ) १ चयनकाले निर्मथ्योखासु धृतोऽग्निरचिरनिर्मथितः । २ सद्य एवालौकिकमथनेन जातोऽग्निरचिरनिर्मथितः । ( जै० न्या० अ० १ पा० ४ अधि० १० )

**अजपादम्**—पूर्वाभाद्रपदा । ( पु० चि० पृ० ३५३ )

**अजहत्स्वार्था**—१ ( लक्षणा ) [ क ] लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधिका । यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातके लक्षणा । ( न्या० बो० )

[ ख ] यत्र वाच्यस्याप्यन्वयस्तत्राजहती लक्षणा । यथा छत्रिणो गच्छन्तीत्यादौ । ( त० दी० ४ )

[ ग ] शक्यलक्ष्योभयवृत्तिना शक्यवृत्तिनैव वा रूपेणानुभावकत्वादजहत्स्वार्था । यथा द्रव्यत्वादिना नीलघटत्वादिना च घटपदस्य लक्षणा । ( श० प्र० )

---

१ अत्र अग्निहोत्रं जुहोतीत्यनेन बोधिते होमे दधिरूपो गुणो विधीयत इति बोध्यम् ।

२ अत्र व्युत्पत्तिः—न जहति पदानि स्वार्थं यस्यां सा अजहत्स्वार्था—इति द्रष्टव्या । ( वै० सा० )

३ अत्र काकपदेन दध्युपघातकत्वात्मकलक्ष्यतावच्छेदकरूपेण काकत्वादितरमार्जारादयश्च बोध्यन्ते । तत्र दध्युपघातकेभ्यो दधिरक्षणे तात्पर्यात् ।

४ प्रतिपाद्यसंबन्ध एव लक्षणा—इति मीमांसकमताभिप्रायेणेदमुदाहरणम् । तेन छत्रिभित्यस्य मतुबर्थकेन्प्रत्ययान्ततया पदसमूहरूपत्वेन* वाक्यत्वात् तच्छक्त्याप्रसिद्ध्या शक्यसंबन्धरूपलक्षणाया अभावेपि नैतदुदाहरणासंगतिः । तथा चात्रैकसार्थवाहित्वेन रूपेण छत्र्यच्छत्रिषु गमनकर्तृत्वान्वयः । केचित्तु—छत्रपदस्यैकसार्थे लक्षणा । तद्धितार्थः संबन्धी । तथा चैकसार्थसंबन्धिनो गच्छन्तीत्यन्वयबोध इत्याहुः । आदिना यष्टीः प्रवेशयेत्युदाहरणं बोध्यम् । ( नील० )

---

* नैयायिकमते पदशक्त्यैव निर्वाहे वाक्यशक्तिर्लक्षणा च न स्वीक्रियत इति तात्पर्यम् ।

[ घ ] स्वार्थापरित्यागेन परार्थलक्षणा ।

[ ङ ] यत्र स्वार्थस्य विशेष्यतया क्रियान्वये प्रवेशः सा । ( त० प्र० ख० ४ पृ० ४४ )

२ ( शक्तिः ) अवयवार्थसंवलितसमुदायार्थबोधकत्वमजहत्स्वार्थत्वम् । उदाहरणं राजपुरुष इति ( ल० म० पृ० ३७) इति वैयाकरणाः । अत्रेदं बोध्यम् । वैयाकरणमते वृत्तिर्द्विधा शक्तिर्व्यञ्जना च । शक्तिश्च द्विधा प्रसिद्धाप्रसिद्धा च । प्रसिद्धा च त्रिधा रूढिः योगो योगरूढिश्च । आद्योदाहरणानि—घटः पटः मणिः रथंतरम् (साम) शुश्रूषा (सेवा) । इयमेव जहत्स्वार्थेत्युच्यते । द्वितीयोदाहरणानि पाचकः पाठक इत्यादीनि । तृतीयोदाहरणानि पङ्कजम् राजपुरुष इत्यादीनि । इयमेवाजहत्स्वार्थेत्युच्यते । क्वचिच्च तात्पर्यग्राहकवशात्केवलरूढ्यर्थस्य केवलयोगार्थस्य बोधः । यथा—अश्वगन्धादिपदमोषधिविशेषे रूढम् अश्वसंबन्धिगन्धवत्तया वाजिशालाबोधे यौगिकम् । अत एव यौगिकरूढमित्युच्यते । अप्रसिद्धा शक्तिरेव नैयायिकादिभिर्लक्षणेति व्यवह्रियते । एवं च वैयाकरणमते शक्त्यपेक्षया लक्षणावृत्तिः पृथक्नास्त्येव । व्यञ्जना च द्विधा गूढव्यङ्ग्यागूढव्यङ्ग्या च ।

**अजहल्लक्षणा**—नैयायिकमतेजहत्स्वार्थावदस्यार्थोनुसंधेयः ।

**अजीवः**—अबोधात्मकं सर्वं वस्तु । ( सर्वद० पृ० ६७ आर्हत० )

**अज्ञानम्**—१ ज्ञानाभावः । २ अविद्या । तत्रोक्तम्—अनादि भावरूपं यद्विज्ञानेन विलीयते । तदज्ञानमिति प्राज्ञा लक्षणं संप्रचक्षत इति मायावादिवेदान्तिनो वदन्ति । ( सर्वद० पृ० ९३ )

**अज्ञानम्**—( निग्रहस्थानम् ) [ क ] अविज्ञातं चाज्ञानम् ( गौ०५।२।१८) । विज्ञातार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदविज्ञानं तदज्ञानं निग्रहस्थानमिति । अयं खल्वविज्ञाय कस्य प्रतिषेधं ब्रूयादिति । ( वात्स्या० ५।२।१८ )

---

१ अप्रज्ञाने भावसाधकं प्रमाणमनुमानम् । तच्च विवादास्पदं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम् अप्रकाशितार्थप्रकाशकत्वादन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति ( सर्वद० पृ० ९६ )। एतत्परहस्यं तु तत्रैव टीकायां द्रष्टव्यम् ।

[ ख ] परिषदा विज्ञातस्य वादिना त्रिरभिहितस्याप्यविज्ञानम् । इदं च किं वदसि—बुध्यत एव नेत्याद्याविष्करणेन ज्ञातुं शक्यत इति (गौ० वृ० ५।६०) । अत्र अविज्ञानमित्यस्यार्थस्तु वाक्यार्थस्याबोध इति । ( नील० )

**अणुः**—भोक्तुमशक्या अणवः । ( सर्वद० पृ० ७२ आर्हत० )

**अणुत्वम्**—परिमाणविशेषः । स च परमाणौ द्व्यणुके च तिष्ठति ।

**अतद्गुणसंविज्ञानः**—( बहुव्रीहिसमासः ) [ क ] यो बहुव्रीहिः स्वार्थस्यान्वयिनि स्वार्थघटकस्याप्यर्थस्यान्वयबोधनेऽसमर्थः स इति प्राचीना आहुः । यथा दृष्टसागरमानय चित्रगुमानयेत्यादौ च । ( श० प्र० )

[ ख ] यत्र स्वार्थस्योपलक्षणतया विधेयान्वयः सः । यथा—चित्रगुरित्यादौ । ( त० प्र० ख० ४ पृ० ४९ )

**अतद्व्यावृत्तिः**—तद्भिन्ननिवर्तनम् । यथा—योगाचारबौद्धमते—नीलत्वादिरूपो धर्मः अनीलव्यावृत्तिरूप इति ( दि० १ आत्म० पृ० १०० ) । शिष्टं तु अपोह—शब्दव्याख्याने दृश्यम् ।

**अतलम्**—षष्ट्यधिकशतत्रयम् । तथा हि गणकप्रसिद्ध्या कटपयाः वर्गाः । तत्र वर्णाक्षरसंख्यया संग्रहः । गणकप्रसिद्ध्याकारः शून्यवचनः । टकारात्षष्ठेन तकारेण षट् संख्या । यवर्गतृतीयेन लकारेण त्रित्वसंख्या । तत्राङ्कानां वामतो गतिरिति पूर्वोक्तप्रकारेण मेलने अतलशब्दः षष्ट्यधिकशतत्रयसंख्यामाह । ( पु० चि० पृ० १० )

**अतिक्रान्तभावनीयः**—योगिविशेषः । ( सर्वद० पृ० ३८४ पातञ्जल० )

**अतिदेशः**—[ क ] एकत्र श्रुतस्यान्यत्र संबन्धः । यथा स्तोकं पचति मृदु पचतीत्यादौ स्तोकमृद्वादौ क्रियाविशेषणानां कर्मत्वमित्याद्यनुशासनेन कर्मत्वातिदेशः ( ग० व्यु० १ ) । यथा वा व्याकरणे स्थानिवदिति सूत्रेण भव्यमित्यत्र भू इत्येतस्मिन्नस्तित्तिधातुत्वातिदेशः ।

---

१ अत्र दृष्टसागरमानय चित्रगुमानयेत्यादौ च गुणीभूतसमुद्रगवादीनामानयनेन्वयासंभवेनातद्गुणसंविज्ञानोयं बहुव्रीहिरिति । २ स चातिदेशः षोढा—शास्त्रातिदेशः कार्यातिदेशः निमित्तातिदेशः व्यपदेशातिदेशः तादात्म्यातिदेशः रूपातिदेशश्चेति । उदाहरणानि शब्दकौस्तुभे स्थानिवत्सूत्रे द्र० ।

[ ख ] इतरधर्मस्येतरस्मिन्प्रयोगायादेशः । ( वाच० )

[ ग ] अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्मसंततेः । अन्यत्र कार्यतः प्राप्तिरतिदेशोभिधीयते ।

[ घ ] १ प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु । धर्मोपदेशो येन स्यात्सोतिदेश इति स्मृतः ( जै० न्या० अ० ७।५।१। अधि०१ ) । २ स्वविषयमुल्लङ्घ्यान्यविषय उपदेशः । यथा—कालोपपाते तद्दैवते तद्दैवतं हुत्वा तद्वातिदिश्यानेन जुहुयात् ( कात्या० श्रौ० २५।२।४ ) इत्यादौ—अतिदेशशब्दार्थः । ३ उपदेशः । यथा—इत्यर्चितः स भगवानतिदिश्यात्मनः पदम् ( भाग० ४।९।२८ ) इत्यादौ—अतिदेशशब्दार्थः ।

**अतिप्रसङ्गः**—१ अतिव्याप्तिः । २ प्रकृतादन्यत्र प्रसञ्जनम् ।

**अतिरिक्तत्वम्**—व्यतिरेक—शब्दस्यार्थवदस्यार्थोनुसंधेयः ।

**अतिव्याप्तिः**—( लक्षणदोषः ) १ [ क ] अलक्ष्यवृत्तित्वम् । यथा गोः शृङ्गित्वस्य लक्षणत्वेतिव्याप्तिः । ( त० दी० ) ( ल० व० )

[ ख ] लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम् ( न्या० बो० ) । यथा मनुष्यो ब्राह्मण इति लक्षणस्य शूद्रेतिव्याप्तिः ( त० कौ० ) । २ व्याप्य-

१ यथा मीमांसायां प्रकृतिवद्विकृतिः कर्तव्येत्यादिः* ।

२ अत्र मनुष्यत्वं हि लक्ष्यतावच्छेदकब्राह्मणत्वाश्रये ब्राह्मणत्वाश्रयभिन्ने च शूद्रादावपि वर्तत इत्यतिव्याप्तं भवतीति तात्पर्यम् ।

३ इदं च लक्षणस्य ( व्यतिरेकिहेतोः ) व्यावर्तकत्वाभिप्रायेण । विस्तरस्तु 'लक्षणम्' इत्यत्र द्रष्टव्यः ।

* अत्रेदं बोध्यम् । प्रकृतिभूतदर्शकार्याङ्गकार्याणि प्रयाजादीनि विकृतौ पश्वादियागेऽतिदिश्यन्त इति ।

त्वासिद्धिः । विपक्षमात्राद्व्यावृत्त्यभावात्सोपाधिकत्वाच्च । यथा गोर्लक्षणस्य पशुत्वस्य महिष्यादावतिव्याप्तिः । गोत्वे हि सास्नादिमत्त्वं प्रयोजकं न पशुत्वम् । ( त० भा० )

**अतिसामान्यम्**—यद् विवक्षितमर्थमाप्नोति चात्येति च तत् । यथा ब्राह्मणत्वं विद्याचरणसंपदं क्वचिदाप्नोति क्वचिदत्येति । (वात्स्या० १।२।५४)

**अतीतकालः**—१ कालात्ययापदिष्टवदस्यार्थोनुसंधेयः ( गौ० वृ० १ । ४९ ) । २ भूतकालवदस्यार्थोऽनुसंधेयः ।

**अतीन्द्रियगुणत्वम्**—[ क ] लौकिकसाक्षात्कारविषयगुणत्वन्यूनवृत्तिसंस्कारत्वान्यधर्मसमवाय्यन्यगुणत्वम् । ( दि० गु० )

[ ख ] लौकिकप्रत्यक्षाविषयगुणत्वसाक्षाद्व्याप्यजातिमत्त्वम् ( प० मा० ) ( ल० व० ) । सा च जातिर्गुरुत्वत्वम् अदृष्टत्वमित्यादिः ।

**अतीन्द्रियत्वम्**—इन्द्रियजन्यलौकिकप्रत्यक्षाविषयत्वम् । यथा कालस्यातीन्द्रियत्वम् । ( स्व० )

**अत्यन्तमहती**—श्रवणद्वादशीयोगे बुधवारो भवेद्यदि । अत्यन्तमहती नाम द्वादशी सा प्रकीर्तिता ॥ ( पु० चि० पृ० २१५)

---

१ साधारणानैकान्तिकत्वमपि संभवति ।

२ इदं च व्यावर्तकत्वेन विवक्षितं चेत्सव्यभिचार एवान्तर्भवतीति बोध्यम् । यथा अयं विद्याचारसंपन्नो ब्राह्मणत्वादिति ।

३ अत्रातीतत्वं च–१ चरमकृतिध्वंसः ( न्या० म० ४ ) । २ [ क ] वर्तमानध्वंसः ( ग० व्यु० ल० ) । [ ख ] वर्तमानकालवृत्तिध्वंसप्रतियोगित्वम् ( वाक्य० ) । यथा दुर्दिनमतीतमित्यादौ दुर्दिनस्यातीतत्वम् ।

४ अतीन्द्रियगुणाश्च गुरुत्वम् अदृष्टं ( धर्माधर्मौ ) भावना स्थितिस्थापकश्चेति । ( भा० प० गु० )

५ अत्र साक्षाद्व्याप्यत्वं च संस्कारत्वान्या या गुणत्वव्याप्या जातिस्तदव्याप्यत्वे सति गुणवृत्तित्वम् । ( प० मा० )

अत्यन्ताभावः—( अभावः ) [ क ] यद्वस्तु यत्र न कदापि भविष्यति न च कदाचिद्भूतं तस्य वस्तुनस्तत्रात्यन्ताभावो मन्तव्यः (वै० उ० ९।१।९)। यथा वायौ रूपं नास्तीति प्रतीतिसाक्षिकोभावः ( वै० वि०९।१।९)। [ ख ] त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोभावः ( त० सं० )। [ ग ] त्रैकालिकः संसर्गाभावः ( त० कौ० )। [ घ ] नास्तीत्यनुभवसिद्धो नित्यः संसर्गाभावः (न्या० म० १) (मु० १)। [ ङ ] प्रतियोग्याश्रयोभावोत्यन्ताभावः (सर्व० औलु० पृ० २३२)। यस्याभावस्याश्रयो भूतलादिवत्प्रतियोग्यपि संभवति सः। घटेपि घटात्यन्ताभावस्य सत्त्वात्। घटप्रतियोगिकानां प्रागभावप्रध्वंसान्योन्याभावानां तु न कदापि घट आश्रयो भवति। घटप्रागभावस्याश्रयो मृत्पिण्डः। प्रध्वंसस्याश्रयः कपालानि। अन्योन्याभावस्य च पटादिः। केचित्तु ( प्राञ्चः ) यत्र भूतले पूर्वं घटादिकं स्थितमथापसारितं पुनरानीतं च तत्रोत्पादविनाशशाली सामयिकनामा चतुर्थः संसर्गाभाव एव प्रतीयते नात्यन्ताभाव इत्याहुः ( वै० वि० ९।१।५ )। केवलाधिकरणादेव नास्तीति व्यवहारोपपत्तावभावो न पदार्थान्तरमिति प्राभाकरा आहुः ( दि० १ ) (त०

१ अत्र [ क ] अत्यन्तः-अन्तमवधिमतिक्रान्तो नित्योभाव इति व्युत्पत्तिः। अत एवायमात्यन्तिकस्त्रैकालिक इत्यभिधीयते ( वै० उ० ९।१।९ )। असौ त्रैकालिकस्तस्मादुक्त आत्यन्तिकस्तथा (त० व० २७२)। [ ख ] अन्तं स्वप्रतियोगिनिष्ठाभावप्रतियोगित्वमतिक्रान्तोत्यन्तः स चासावभावश्च इति विग्रहः। तस्य भावोत्यन्ताभावत्वम्। स्वप्रतियोगिनिष्ठस्वसदृशाभावप्रतियोगित्वव्यभिचार्यभावत्वमिति यावत्। तद्यथा—घटात्यन्ताभावस्य स्वप्रतियोगिनिष्ठात्यन्ताभावप्रतियोगित्वाभाववति घटवृत्तिधर्मे सत्त्वात्तत्त्वं तत्राक्षतम्। घटान्योन्याभावस्य तु स्वप्रतियोगिनिष्ठान्योन्याभावप्रतियोगित्वव्यापकत्वात्तथात्वानुपपत्तिः ( वै० सा० द० १३४)। अत्रेदं बोध्यम्—ध्वंसप्रागभावकालेपि तदधिकरणेत्यन्ताभावो वर्तत इति नवीननैयायिकानां मतम्। ध्वंसप्रागभावयोरत्यन्ताभावेन सह विरोधेन स न वर्तत इति प्राचीना वदन्ति ( ग० व० १ ) ( मुक्ता० १ )।

२ संसर्गाभावलक्षणं द्रष्टव्यः।

३ त्रैकालिकत्वमिह नित्यत्वम् ( नील० )। तच्चाभावस्य विशेषणम्।

४ तादात्म्यातिरिक्तसंसर्ग इत्यर्थः। तेन नान्योन्याभावेतिव्याप्तिः।

दी०) । अत्यन्ताभावो द्विविधः । एकपर्याप्तधर्मावच्छिन्नप्रतियोगिताकः । अनेकपर्याप्तधर्मावच्छिन्नप्रतियोगिताकः । आद्यो धर्मो घटत्वादिः । द्वितीय उभयत्वादिः । अयमेव व्यासज्यवृत्तिरित्युच्यते ( सि० च० ४ ) ।

**अथ**—१ आनन्तर्यम् । २ आरम्भः । ३ प्रश्नः । ४ कार्त्स्न्यम् । ( सर्वद० पृ० ३३६–३४३ ) ।

**अदः**—परोक्षबुद्धिविषयः ( दि० ४ ) ( ग० श० ) । यथा असौ हरिश्चन्द्रो राजेत्यादावदःशब्दार्थः । विप्रकृष्टपरोक्षव्यक्तिरिति केचित् ( दि० ४ ) ।

**अदत्तम्**—अदत्तं तु भयक्रोधशोकवेगरुगन्वितैः । तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥ बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम् । कर्ता ममेदं कर्मेति प्रतिलाभेच्छया च यत् ॥ अपात्रे पात्रमित्युक्ते कार्ये वा धर्मसंयुते । यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम् ॥ ( मिताक्षरा २।१७६ )

**अदृष्टम्**—( गुणः ) [ क ] धर्माधर्मशब्दवदस्यार्थोनुसंधेयः ( भा०प०) । [ ख ] पुण्यपापात्मकं भोग्यम् । अपूर्वशब्दवदस्यापि व्यवहारस्तत्तन्मतानुरोधेन बोध्यः ।

**अदृष्टार्थकः**—( प्रमाणशब्दः ) [ क ] यस्यामुत्रार्थः प्रतीयते सोदृष्टार्थकः ( वात्स्या० १।१। ८ ) ।

[ ख ] शब्दतदुपजीविप्रमाणमात्रगम्यार्थकः ( गौ० वृ० १।१।८ ) । स च स्वर्गापूर्वादीनामस्तित्वादिप्रतिपादकः शब्दः ।

---

१ अदो वासनया जन्यते । भोगप्रायश्चित्तज्ञानादिना नश्यति । अदृष्टसद्भावे प्रमाणं चानुमानम् । तच्च [ क ] चैत्रस्य शरीरादिकं चैत्रस्य विशेषगुणजन्यं कार्यत्वे सति चैत्रस्य भोगहेतुत्वाच्चैत्रप्रयत्नजन्यकुसुमपर्यङ्कादिवदिति ( सि० च० ४ ) । [ ख ] विमता भोगव्यक्तयो हेतुसापेक्षाः कादाचित्कत्वात् घटवदित्यादि । तदुक्तम्–सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः । प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिकः ॥ इति । चिरध्वस्तं फलायालं न कर्मातिशयं विनेति च ( कु० १ ) । आगमस्तु–पौरुषं दैवसंपत्त्या काले फलति पार्थिव । त्रयमेतन्मनुष्यस्य पिण्डितं स्यात्फलावहम् ॥ इत्यादि ।

**अद्यतनः**—( कालः ) [ क ] अतीतरात्रेरन्त्ययामेनागामिन्या रात्रेः पूर्वयामेन च सहितः कालः ।

[ ख ] अतीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितो दिवस इति शाब्दिका वदन्ति ( ल० म० ) ।

**अद्रव्यद्रव्यत्वम्**—असमवेतद्रव्यत्वम् ( ग० दशा० ) । यथा आकाशादेर्निरवयवद्रव्यस्य कुत्रापि समवायेनावर्तमानस्य अद्रव्यद्रव्यत्वम् ।

**अद्वैतम्**—द्विधा इतं द्वीतम् । तस्य भावो द्वैतम् । द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते ( बृ० वा० ४।३।१८०७ ) । न विद्यते द्वैतं द्विधाभावो यत्र तत् ( सिद्धान्तबि० श्लो० १० ) ।

**अधः**—( दिक् ) [ क ] गुरुत्वासमवायिकारणकक्रियाजन्यसंयोगाश्रयो[1] दिग्विशेषः ( वै० उ० २।२।१० ) ।

[ ख ] पतनजन्यसंयोगाश्रयः ( वै० वि० २।२।१० ) । यथा पर्णमधः पततीत्यादौ ।

**अधर्मः**—(गुणः) [ क ] शरीरादिजनकात्मविशेषगुणः (त० भा० गु० ३६ ) । अयं च जीवमात्रसमवेतो भोगप्रायश्चित्तादिनाश्यश्चेति विज्ञेयम् ( त० कौ० ) । अधर्मो न प्रत्यक्षः किं त्वनुमानगम्यः । तच्चानुमानं देवदत्तस्य शरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तस्य भोगहेतुत्वात् देवदत्तप्रयत्नजन्यवस्तुवत्–इति ज्ञेयम् (त० भा० गु० ३६) ।

[ ख ] नरकदुःखादिदुःखानां साधनम् ( मु० ) ।

[ ग ] निषिद्धकर्मजन्यः ( त० सं० ४ ) । निषिद्धकर्म चात्रानिष्टसाधनत्वेन वेदबोधितं कर्म ( वाक्य० ) । तच्च सुरापानादि ।

[ घ ] दुःखासाधारणं कारणम् ( प्र० प्र० ) । अधर्म आत्मगुणः कर्तुरहितप्रत्यवायहेतुः अतीन्द्रियः सम्यग्ज्ञानविरोधी ।

तस्य तु साधनानि शास्त्रप्रतिषिद्धानि धर्मसाधनविपरीतानि हिंसानृत-

---

१ गुरुत्वमेव असमवायिकारणं यस्यास्तया क्रियया जन्यो यः संयोगस्तदाश्रय इति विग्रहः ।

स्तेयादीनि विहिताकरणं प्रमादश्च । एतानि दुष्टाभिसंधिं चापेक्ष्यात्मम-नसोः संयोगादधर्मोत्पत्तिरिति । अविदुषो रागद्वेषवतः प्रवर्तकाद्धर्मा-त्प्रकृष्टात्स्वल्पाधर्मसहिताद्ब्रह्मेन्द्रप्रजापतिपितृमनुष्यलोकेष्वाशयानुरूपैरिष्ट-शरीरेन्द्रियविषयसुखादिभिर्योगो भवति । तथा प्रकृष्टादधर्मात्स्वल्पधर्मसहि-तात्प्रेततिर्यग्योनिस्थानेषु अनिष्टशरीरेन्द्रियविषयदुःखादिभिर्योगो भवति। एवं प्रवृत्तिलक्षणाद्धर्मादधर्मसहिताद्देवमानुषतिर्यङ्नरकेषु पुनःपुनः सं-सारप्रबन्धो भवति । ज्ञानपूर्वकात्तु कर्मणः कृतादसंकल्पितफला-द्विशुद्धकुले जातस्य दुःखवियोगोपायजिज्ञासोराचार्यमुपगम्योत्पन्नषट्-पदार्थतत्त्वज्ञानस्याज्ञाननिवृत्तौ विरक्तस्य रागद्वेषाभावात्तज्जयोर्धर्माधर्मयोर-नुत्पत्तौ संचितयोरुपभोगान्निरोधे संतोषसुखं शरीरपरिखेदं चोत्पाद्य रागादिनिवृत्तौ निवृत्तिलक्षणः केवलो धर्मः परमार्थदर्शनजं सुखं कृत्वा निवर्तते । तदा नित्यस्यात्मनः शरीरादिनिवृत्तौ बीजाभावेन पुनः शरी-राद्यनुत्पत्तौ दग्धेन्धनानलवदुपशमो मोक्ष इति (प्रशस्त० गु० पृ० ३६)।

**अधिकम्**—( निग्रहस्थानम् ) [ क ] हेतूदाहरणाधिकमधिकम् ( गौ० ५।२।१३ )। एकेन कृतत्वादन्यतरस्यानर्थक्यमिति । तदेतन्नियमाभ्युपगमे वेदितव्यमिति ( वात्स्या० ५।२।१३ ) । नियमश्चैकस्यैव हेतोर्दृष्टान्तस्य वा प्रयोगः कर्तव्य इत्याकारको वादिप्रतिवाद्युभयसंमतः पूर्वकृतः संकेतः। [ ख ] कृतकर्तव्यापुनरुक्ताभिधानम् ( गौ० वृ० ५।२।१३ ) । अनु-वादस्तु न कृतकर्तव्यः साभिप्रायत्वात् । प्रतिज्ञाधिक्यं च पुनरुक्तम् । धूमादालोकात् महानसवत् चत्वरवत्—इत्यादिकं तु विना समयबन्धं दार्ढ्यादिभ्रमादुक्तमधिकम् । यथा महानसं महानसवत्—इति तु नाधिकं किं तु पुनरुक्तम् ( गौ० वृ० ५।२।१३ )।

[ ग ] अधिकहेत्वादिकथनम् । यथा शब्दोनित्यः शब्दत्वाच्छ्रावणत्वा-च्चेत्यादि ( नील० ) ( दि० १ ) ।

**अधिकरणम्**— ( कारकम् ) यद्धातूपस्थाप्ययादृशार्थे विग्रहस्थया सप्त-म्या यः स्वार्थोनुभाव्यते तदेव तद्धातूपस्थाप्यतादृशक्रियायामधिकरणं नाम कारकम् । यथा ग्रामे गन्तेत्यादौ । अत्र धात्वर्थे गतौ ग्रामनिष्ठम-

धिकरणत्वं तन्निरूपितमाधेयत्वं वा सप्तम्यानुभाव्यत इति तदेव तद्वत्तयोपस्थाप्यतादृशक्रियायामधिकरणकारकम् ( श० प्र० ८९ )।
अधिकरणत्वं च [ क ] अधिकरणमिति प्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः । यथा घटवद्भूतलमित्यादौ भूतले घटाधिकरणता ।
[ ख ] विषयताविशेष इति केचिद्वदन्ति ।
[ ग ] यथार्थविशिष्टधीविशेष्यत्वमित्यपरो वक्ति ।
[ घ ] कर्तृद्वारा कर्मद्वारा वा क्रियाश्रयत्वमिति शाब्दिका वदन्ति ।

**अधिकरणम्**—अवान्तरप्रकरणम् ( मीमांसाधिकरणकौमुदी पृ० १ )। विषय संशय पूर्वपक्ष उत्तर सिद्धान्त एतत्पञ्चाङ्गबोधकवाक्यसमुदायरूपन्यायत्वमधिकरणत्वमिति मीमांसका वेदान्तिनश्चाहुः ।

**अधिकरणसिद्धान्तः**—( सिद्धान्तः ) [ क ] यत्सिद्धावन्यप्रकरणसिद्धिः सोधिकरणसिद्धान्तः ( गौ० १।१।३० )। यस्यार्थस्य सिद्धावन्येर्थो

---

१ एतन्मतेधिकरणं च [ क ] कर्त्रादिव्यवहितक्रियाधारः । [ ख ] अधिकरणत्वशक्तिमत् । सा शक्तिः कर्तृकर्मद्वारा यः क्रियाश्रयस्तन्निष्ठा । अधिकरणं त्रिधा । औपश्लेषिकम् वैषयिकम् अभिव्यापकं चेति । तदुक्तं हरिणा । उपश्लेषस्य चाभेदस्तिलाकाशकटादिषु । उपकारास्तु भिद्यन्ते संयोगिसमवायिनाम् ॥ अविनाशो गुरुत्वस्य प्रतिबन्धे स्वतन्त्रता । दिग्विशेषादवच्छेद इत्याद्या भेदहेतवः ॥ इति । औपश्लेषिकवैषयिकाभिव्यापकेषु त्रिष्वपि उपश्लेषोस्त्येव । उपकारः संबन्धः । तद्भेदात्तु त्रित्वेन व्यवहारः । कटे आस्त इत्यादौ संयोगिन्याधारे कतिपयावयवव्याप्त्यैव संबन्धः । तिलेष्वित्यादौ समवायिनि समस्तावयवव्याप्त्या सः । खे शकुनय इत्यत्राकाशस्य तात्त्विकावयवाभावेन कल्पितदेशत्वात् कल्पितदेशापेक्षया व्याप्त्युक्तान्यतर उपश्लेषः । केचित्तु औपश्लेषिकमित्यस्य उप समीपे श्लेषः संबन्धस्तत्कृतम्—इत्यर्थः । एवं च यत्किंचिदवयवावच्छेदेनाधारस्याधेयेन व्याप्तिरप्युपश्लेषः । यथा कटे आस्ते गुरौ वसति इति । एवमेव गङ्गैकदेशे तरन्तीषु गोषु कूपैकदेशस्थिते गर्गकुले गङ्गायां गावः कूपे गर्गकुलम् इत्यादौ बोध्यम् । वैषयिकं तु अप्राप्तिपूर्वकप्राप्तिरूपसंयोगसमवायेतरभिन्नसंबन्धेन यदधिकरणं तत् । यथा खे शकुनयः मोक्षे इच्छास्ति इत्यादि । अभिव्यापकं तु यत्र सर्वावयवावच्छेदेन व्याप्तिस्तत् । यथा तिलेषु तैलं दध्नि सर्पिरिति । अभिव्यापकमेव मुख्यमधिकरणमित्याहुः ( ल० म० ११८ )।

अनुषज्यन्ते न तैर्विना सोर्थः सिध्यति तेर्थाे यदधिष्ठानाः सोधिकरणसिद्धान्तः । यथा देहेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति । अत्रानुषङ्गिणोर्था इन्द्रियनानात्वं नियतविषयाणीन्द्रियाणि स्वविषयग्रहणलिङ्गानि ज्ञातुर्ज्ञानसाधनानि गन्धादिगुणव्यतिरिक्तं द्रव्यं गुणाधिकरणं अनियतविषयाश्चेतना इति पूर्वार्थसिद्धावेतेर्थाः सिध्यन्ति । न तैर्विना सोर्थः संभवतीति ( वात्स्या० १।१।३० ) ।

[ ख ] यस्यार्थस्य सिद्धौ जायमानायामेवान्यस्य प्रकरणस्य प्रस्तुतस्य सिद्धिर्भवति सः । यथा तद्द्व्यणुकादिकं पक्षीकृत्योपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वे साध्यमाने सर्वज्ञत्वमीशस्य ( गौ० वृ० १।१।३० ) । यथा वा क्षित्यादिकर्तृसिद्धौ कर्तुः सार्वज्ञ्यम् ( त० भा० ४३ ) ।

[ ग ] अनुमेयस्य सिद्ध्यार्थो योनुषङ्गेण सिध्यति । स स्यादाधारसिद्धान्तो जगत्कर्ता यथेश्वरः ॥ ( तार्किकर० श्लो० ६१ ) ।

**अधिकवृत्तित्वम्**—तदपेक्षयाधिकदेशकालान्यतरवृत्तित्वम् । यथा पृथिवीत्वमपेक्ष्य द्रव्यत्वस्याधिकदेशवृत्तित्वम् । योधिकदेशवृत्तिर्धर्मः स एव व्यापकधर्मो भवति ।

**अधिकारः**—१ स्वामित्वं यथेष्टक्रयविक्रयादिकर्तृत्वसंपादकस्वामित्वं वा । यथा सर्वे स्युरधिकारिण इत्यादावधिकार इति धर्मशास्त्रज्ञाः । २ [ क ] यद्धर्मविशिष्टेन कृतस्य कर्मणः फलजनकत्वं सः ( मू० म० १ ) ।

[ ख ] यत् प्रवर्तमानपुरुषनिष्ठं तथा ज्ञायमानं सत्प्रवृत्तिहेतुः सः ।

[ ग ] यत् विधिवाक्येषु पुरुषविशेषणत्वेन श्रूयते सोधिकार इति मीमांसकाः । ३ स्वसूत्रे लक्ष्यसंस्कारकवाक्यार्थशून्यत्वे सति विधिसूत्रैकवाक्यतापन्नत्वमिति शाब्दिका वदन्ति । ४ आरम्भः । यथा अथ शब्दानुशासनमित्यादावथशब्दार्थोधिकार इति शाब्दिका आहुः ।

---

१ यथा अथातो ब्रह्मजिज्ञासेत्यादौ शमदमादिसंपत्सारासारविवेकादिरधिकारः ।

२ यथा स्वर्गकामो यजेतेत्यादौ स्वर्गकामनादिकमधिकारो भवति ।

३ अत्र शब्दशास्त्रमधिकृतं भवतीत्यर्थो बोध्यते ।

**अधिकारविधिः**—फलस्वाम्यबोधको विधिरधिकारविधिः ( मी० न्या० पृ० ४६ ) ।

**अधिवत्सरः**—यस्मिंश्चान्द्रसंवत्सरे मध्यममानेन गुरोः संक्रान्तिर्नास्ति सोधिवत्सरः ( पु० चि० पृ० ११ ) ।

**अधिविन्ना**—भर्त्रा विवाहान्तरे कृते पूर्वमूढा ।

**अधिवेदनम्**—धर्मपत्न्यां सत्यां रागत एव विवाहान्तरकरणम् ।

**अधिगमः**—१ ज्ञानम् । २ प्राप्तिः । ३ स्वीकारः (वाच०) । ४ निध्यादेः प्राप्तिरिति व्यवहारज्ञाः । ५ व्याख्यानादिरूपपरोपदेशजनितं ज्ञानमधिगम इत्यार्हता आहुः ( सर्व० आर्ह० पृ० ६३ ) ।

**अधिश्रयणम्**—विक्लित्तिहेतुभूतश्चुल्ल्युपस्थापनरूपो व्यापारः । यथा तण्डुलं पचतीत्यादौ पाकानुकूलोवान्तरव्यापारः ।

**अधिष्ठाता**—१ अध्यक्षः । २ नियन्ता । ३ अधिदेवः । यथा आत्मेन्द्रियाद्यधिष्ठाता ( भा० प० श्लो० ४७ ) इत्यादौ ।

**अधिष्ठानम्**—१ आश्रयः । यथा प्राणसंचारादेः प्राणवहनाड्यादिः ( दि० २३१ ) । २ आरोपविशेष्यः । यथा शुक्ती रजतस्याधिष्ठानम् ।

**अधीनत्वम्**—१ [ क ] प्रयोज्यत्वापरपर्यायः स्वरूपसंबन्धविशेषः । यथा दण्डाधीनो घट इत्यादावधीनत्वम् ।

[ ख ] एतत्समयसंबन्धो दण्डाधीन इत्यादिप्रतीतिसाक्षिकः स्वरूपसंबन्धविशेष इति केचित् ( मू० म० १ ) । २ तन्निर्वाह्यनिश्चयकार्यकारिताप्रयोजकरूपवत्त्वम् ( ग० बाध० ) ।

**अध्यक्षम्**—१ प्रत्यक्षम् । यथा उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ( भा० प० श्लो० १५२ ) इत्यादौ । २ प्रत्यक्षविषयः । यथा अध्यक्षो विशेषगुणयोगतः ( भा० प० श्लो० ४९ ) इत्यादौ ।

**अध्ययनम्**—[ क ] उच्चारणोत्तरकालिको नियमपूर्वको ग्रन्थस्वीकारानुकूलो व्यापारः । यथा उपाध्यायादधीत इत्यादौ धात्वर्थः ( ल० म० ) ।

१ अत्र उच्चारणाप्रयोपादानम् । उपाध्यायान्निःसरन्तं ग्रन्थमधीते इत्यर्थः (ल०म०)।

[ ख ] पठनम् । तच्च गुरुमुखोच्चारणानुसार्युच्चारणम् ।

[ ग ] सार्थाक्षरग्रहणमिति मीमांसकाः । यथा साङ्गो वेदोऽध्येतव्यो ज्ञेयश्चेत्यादौ ।

[ घ ] अक्षरमात्रपाठोऽध्ययनमिति वेदाक्षरपठनकर्तार इदानींतना वैदिकंमन्या मन्यन्ते ।

**अध्यवसायः**—१ इदमेवमेव—इति विषयपरिच्छेदो निश्चयः । २ उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेः रजस्तमोभिभवे सति यः सत्त्वसमुद्रेकः सोयमध्यवसाय इति वृत्तिरिति च सांख्या आहुः । स चाध्यवसाय आत्मधर्म इति नैयायिकाः । बुद्धिधर्मः ( बुद्धेर्व्यापारः ) इति सांख्यादयः ( सां० कौ० ) ।

**अध्यात्मम्**—आत्मसंबन्धि । यथा—इत्यध्यात्ममित्यादौ ।

**अध्यायः**—१ अध्ययनम् । यथा स्वाध्यायोऽध्येतव्य इत्यादौ । २ वेदशास्त्रादिग्रन्थस्यैकार्थविषयसमाप्तिद्योतको विश्रान्तिस्थानमंशविशेषः । यथा श्रीभागवतस्य पञ्चमोऽध्याय इत्यादौ ।

**अध्यावहनिकम्**—यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् । अध्यावहनिकं नाम स्त्रीधनं तदुदाहृतम् ॥ ( मिताक्षरा अ० २ श्लो० १४३ )

**अध्यासः**—१ अयथार्थज्ञानम् । २ स्मृतिरूपः परत्र पूर्वदृष्टावभास इति शंकरभारती वक्ति । यथा शुक्तौ इदं रजतमिति ज्ञानम् ( शारीर० ) । स चाध्यासो द्विविधः—अर्थाध्यासो ज्ञानाध्यासश्चेति । तदुक्तम्—प्रमाणदोषसंस्कारजन्मान्यस्य परात्मता । तद्धीश्चाध्यास इति हि द्वयमिष्टं मनीषिभिः ॥ ( सर्वद० सं० शांक० पृ० ४२० ) ।

**अध्याहारः**—१ अश्रुतपदानामनुसंधानम् ( दि० ४ ) । यथा घटमानयेत्युक्ते त्वमिति पदस्याध्याहारः । अध्याहारो द्विविधः । शब्दाध्याहारः । अर्थाध्याहारः । शब्दाध्याहारो नामाकाङ्क्षितार्थबोधकपदानुसंधानम् । अर्थाध्याहारो नामाकाङ्क्षितार्थानुसंधानम् । अत्रेदं बोध्यम्—नैयायिकैः

१ अत्र आत्मानं देहमिन्द्रियादिकं क्षेत्रज्ञं वा अधिकृत्येति व्युत्पत्तिः ।

शब्दाध्याहार एव स्वीक्रियते न त्वर्थाध्याहारः । मीमांसकैस्त्वर्थाध्याहारः स्वीक्रियत इति । २ तर्कः । ३ अपूर्वोत्प्रेक्षणमित्यपि केचित् (वाच०)।

**अभ्यूहनम्**—भस्मनाङ्गारैश्चाग्नेरुपर्याच्छादनम् ( जै० न्या० अ० १० पा० १ अधि० ११ ) ।

**अभ्येषणा**—( लिङर्थः विधिः ) [ क ] या श्रोतरि पूजा संमानव्यञ्जिका सा ( कु० ५ ) । [ ख ] अभ्येषणीये प्रयोक्तुरनुग्रहद्योतिका इच्छा ( वै० सा० द० ) । [ ग ] इच्छाविशेषः । यथा पाकं कुर्यामित्यादावुत्तमपुरुषार्थः ( दि०गु० ) । [ घ ] सत्कारपूर्वकमाचार्यादेः प्रेरणमिति केचित् ( वै० सा० द० ) ।

**अनङ्गत्रयोदशी**—मार्गशीर्षशुक्लत्रयोदशी ( पु० चि० पृ० २२३ ) ।

**अनतिरिक्तत्वम्**—स्वान्यूनवृत्ति ( यत् ) तत्कत्वम् ( दीधि० २ ) । यथाभिधेयत्वानतिरिक्तत्वं प्रमेयत्वस्येति ।

**अनतिरिक्तविषयकत्वम्**—[ क ] प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यविषयताविलक्षणविषयताशून्यत्वम् ( दीधि० २ ) । यथा पर्वते धूमेन वह्निसाधने पर्वतो वह्निमानिति प्रतिज्ञावाक्यजन्यशाब्दबोधस्य पर्वतो वह्निमान् इत्यनुमित्यन्यूनानतिरिक्तविषयकत्वम् । अत्रान्यूनविषयकत्वं च पक्षे साध्यवैशिष्ट्यावगाहित्वम् (दीधि० २) । [ ख ] प्रकृतहेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्त्यविषयकत्वमिति केचित् ( दीधि० २ ) ।

**अनतिरिक्तवृत्तित्वम्**—( अवच्छेदकत्वम् ) १ [ क ] स्वव्यापकं (यत्) तत्कत्वम् । यथा ह्रदो वह्न्यभाववान् इति निश्चयविषयितायाः ह्रदो वह्निमान् इत्यनुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वम् ( ग० सामा० ) । अत्र स्वं विषयिता । तस्याः व्यापिका प्रतिबन्धकता । तत्कत्वं स्वस्मिन्निति बोध्यम् । [ ख ] तच्छून्यावृत्तित्वमिति केचित् ।

२[ क ]तदवच्छिन्नप्रतियोगिताकाभाववदसंबद्धस्वविशिष्टसामान्यकत्वम् । [ ख ] स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वम् । [ग]

१ इदमनतिरिक्तविषयकत्वं दीधितिग्रन्थस्थप्रतिज्ञालक्षणशरीर एव नान्यत्रेति ज्ञेयम् ।

स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वम् ( दीधि० २ )। यथा पर्वतो वह्निमान् धूमादित्यादौ वह्नित्वात्मकस्य साध्यतावच्छेदकस्य हेतु—( धूम ) समानाधिकरणाभावप्रतियोगितानवच्छेदकत्वमित्यादौ ( ग० च० २ )।

**अनद्यतनत्वम्**—[ क ] प्रकृतशब्दप्रयोगाधिकरणदिनावृत्तित्वम् । यथा तण्डुलमपचदित्यादौ लङर्थः (ग० व्यु० ल०)। [ ख ] अद्यतनभिन्नः कालोनद्यतन इति शाब्दिका वदन्ति (ल० म०)।

**अनध्यवसायः**—१ विपर्ययः । यथा इदं किंचित् इति ज्ञानम् । अयं विशेषादर्शनेन जन्यत इति विज्ञेयम् ( सि० च० ४ ) । २ यस्तु ज्ञानविशेषः स्यादसाधारणधर्मजः । जिज्ञासाजनकः सोनध्यवसाय इहोच्यते ॥ भवति हि नित्यानित्यव्यावृत्तं शब्दत्वं शब्दे उपलभमानस्य शब्दः किं नित्यः आहोस्विदनित्यः इति जिज्ञासा । अयं च वैशेषिकमते अविद्याप्रभेदः ( त० व० २१८ ) । ३ अविद्याविशेषः । अनध्यवसायोपि प्रत्यक्षानुमानविषये एव संजायते । तत्र प्रत्यक्षविषये तावत्—प्रसिद्धार्थेष्वप्रसिद्धार्थेषु वा व्यासङ्गादनर्थित्वाद्वा किमिदम् इत्यालोचनामात्रमनध्यवसायः । यथा—वाहीकस्य पनसादिष्वनध्यवसायो भवति । अनुमानविषयेपि नारिकेलद्वीपवासिनः सास्नामात्रदर्शनात् को नु खल्वयं प्राणी स्यात् इत्यनध्यवसायो भवति ( प्रशस्त० २ पृ० ४८ ) । ४ वेदान्तिनस्तु—किंसंज्ञकोयं वृक्षः इति संज्ञाविषयकं जिज्ञासामात्रमित्याहुः ( प्र० प० पृ० ५ ) । ५ हेतुदोषविशेषः ।

**अनध्यवसितः**—(हेत्वाभासः) यश्चानुमेये विद्यमानस्तत्समानासमानजातीययोरसन्नेव सोन्यतरत्रासिद्धः अनध्यवसायहेतुत्वादनध्यवसितः । यथा—सत् कार्यमुत्पत्तेः इति ( प्रशस्त० २ पृ० २९–३० ) । तथा च—अनध्यवसितत्वं पक्षमात्रवृत्तित्वम् । यथा—पर्वतो वह्निमान्पर्वतत्वात् इत्यादौ पर्वतत्वहेतावनध्यवसितत्वम् ।

**अननुभाषणम्**—( निग्रहस्थानम् ) [ क ] विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ( गौ० ५।२।१६ ) ( नील० )। विज्ञा-

तस्य वाक्यार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदप्रत्युच्चारणं ( अननुवादः ) तदननुभाषणं नाम निग्रहस्थानमिति । अप्रत्युच्चारयन्किमाश्रयं परपक्षप्रतिषेधं ब्रूयात् ( वात्स्या० ५ । २ । १६ ) । [ ख ] त्रिरभिधानेपि यत्रानुभाषणविरोधी व्यापारस्तत्राननुभाषणं नाम निग्रहस्थानम् । तदिदं चतुर्धा । एकदेशानुवादात् विपरीतानुवादात् केवलदूषणोक्त्या स्तम्भेन वेति । सर्वनामपदेनानुवादात्पञ्चममित्याचार्याः ( गौ० वृ० ५।२।१६ ) ।

**अनपदेशः**—हेत्वाभासवदस्यार्थोनुसंधेयः ( त० व० ) ।

**अनभ्यासदशापन्नज्ञानम्**—१ विशेषदर्शनाजन्यं ज्ञानम् । यथा स्थाणुर्वा पुरुषो वा इति संशयः ( सि० च० ४ ) । अत्रेदं बोध्यम् । अत्रोदाहरणद्वयम् । स्थाणुर्वेत्येकं पुरुषो वेति द्वितीयम् । तथा हि आद्यस्य स्थाणुत्ववान्वा तदभाववान्वेत्यर्थः । द्वितीयस्यापि पुरुषत्ववान्वा तदभाववान्वेति चार्थः । स्थाणुत्वव्याप्यवक्रकोटरादिमानयमिति पुरुषत्वव्याप्यकरादिमानयमिति वा विशेषदर्शने सति स्थाणुत्वस्य पुरुषत्वस्य वा निश्चय एव भवति न तु संशय इति । २ प्राथमिकं ज्ञानम् । यथा इदं जलज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात् इत्यत्र प्राथमिकं जलज्ञानम् ( त० कौ० ४ ) ।

**अनवधारणम्**—अनिश्चयात्मकं ज्ञानम् ।

**अनवसरग्रहणम्**—( निग्रहस्थानम् ) १ अकाल एवोद्भावनम् । यथा त्यक्ष्यसि चेत्प्रतिज्ञाहानिः विशेषयसि चेद्धेत्वन्तरमिति । २ अवसरमतीत्य कथनम् । यथा उच्यमानग्राह्यस्यापशब्दादेः परिसमाप्तौ । एवमनुक्तग्राह्याज्ञानाद्यननुभाषणावसरेनुद्भाव्यबोधाविष्करणानुभाषणप्रवृत्ते वादिनि तदुद्भावनमित्यादिकमूह्यम् ( गौ० वृ० ५।२।२२ ) । इदं निग्रहस्थानं च गौतमोक्तनिग्रहस्थानस्य निरनुयोज्यानुयोगस्य प्रभेद इति वृत्तिकारेणाङ्गीकृतमिति विज्ञेयम् ।

**अनवसादः**—दैन्यविपर्ययोनवसादः ( सर्वद० पृ० १२४ ) ।

**अनवस्था**—१ ( तर्कः ) [ क ] प्रसक्तवस्तुसजातीयवस्तुपरंपराकल्पनस्य

विरामाभावः । यथा जातौ जात्यन्तरं तत्रापि जात्यन्तरमित्येवं तत्र तत्र जात्यन्तरस्वीकारेनवस्था । [ ख ] अव्यवस्थितपरंपरोपाचीनोनिष्टप्रसङ्गः । यथा—यदि घटत्वं घटजन्यत्वव्याप्यं स्यात्कपालसमवेतत्वव्याप्यं न स्यात् इति (गौ० वृ० १।१।४०) । २ प्राचां संकेत इति केचित् ।

**अनवस्थितत्वम्**—लब्धायामपि समाधिभूमौ चित्तस्याप्रतिष्ठानवस्थितत्वम् ( सर्वद० सं० पृ० ३५५ ) ।

**अनवस्थितिः**—अनवस्थावदस्यार्थोनुसंधेयः ।

**अनाकाङ्क्षम्**—जनितान्वयबोधत्वेन निराकाङ्क्षम् ( कु० ३ ) । यथा घटो घटः इति वाक्यमनाकाङ्क्षं भवति । इदं च शाब्दबोधविघटकं भवति । अत्र प्रथमघटशब्देन बोधित एवार्थो द्वितीयघटशब्देन बोध्यते । तादृशबोधन आकाङ्क्षाविरहेण तद्वाक्यं निराकाङ्क्षमिति ज्ञेयम् ।

**अनागतत्वम्**—भविष्यत्ववदस्यार्थोनुसंधेयः ।

**अनादित्वम्**—१ उत्पत्तिशून्यत्वम् ( वाक्य० ) । यथा प्रागभावस्यानादित्वम् । २ सजातीयप्रयोगपूर्वकत्वम् । यथा शब्दस्यानादित्वमिति शाब्दिका वदन्ति ( चि० ४ ) ।

**अनादिषट्कम्**—जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा । अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥ इति मायावेदान्तिनो मन्यन्ते ।

**अनायतिः**—गत्यन्तराभावः । यथा अनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यत इत्यादौ । अत्र च सिद्धान्ते प्रवृत्तिं प्रतीष्टसाधनत्वज्ञानस्य कारणत्वस्वीकारात्तादृशकारणाभावेन बालकानां स्तनपानप्रवृत्त्यनुपपत्त्या जन्मान्तरानुभूतेष्टसाधनत्वस्मरणकल्पने जन्मान्तरानुभूतानामन्येषामपि पदार्थानां स्मरणापत्तिः । तद्वारणाय अनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यत इत्यवधेयम् ।

**अनारभ्याधीतः**—( मन्त्रः ) कंचित्कर्मविशेषमप्रकृत्यैव पठितः ।

**अनित्यः**—उत्पत्तिमान्ध्वंसप्रतियोगी च । यथा—नैयायिकमते शब्दः अनित्यः ( त० प्र० ख० ४ पृ० १२४ ) ।

**अनित्यत्वम्**—[क] प्रतियोगितासंबन्धेन ध्वंसवत्त्वम् (मु० म०)। ध्वंसप्रतियोगित्वमित्यर्थः (त० दी०)। यस्य ध्वंसः संभवति तत्त्वमिति फलितम्। इदं लक्षणं च प्रागभावानङ्गीकारपक्षे ध्वंसस्य नित्यत्वपक्षेपि च संगच्छत इति विज्ञेयम्। [ख] प्रागभावप्रतियोगित्वध्वंसप्रतियोगित्वान्यतरवत्त्वम् (वाक्य० १) (त० प्र० १)। यथा ध्वंसप्रागभावयोः घटपटादेश्चानित्यत्वम्।

**अनित्यसमः**—(जातिः) [क] साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः (गौ० ५। १। ३२)। अनित्येन घटेन साधर्म्यादनित्यः शब्द इति ब्रुवतोस्ति घटेनानित्येन सर्वभावानां साधर्म्यमिति सर्वस्यानित्यत्वमनिष्टं संपद्यते। सोयमनित्यत्वेन प्रत्यवस्थानादनित्यसम इति (वात्स्या० ५। १। ३२)। प्रतिकूलतर्कदेशनाभासोयमिति ज्ञेयम् (गौ० वृ० ५।१।३२)। [ख] व्याप्तिमपुरस्कृत्य यत्किंचिद्दृष्टान्तसाधर्म्येण सर्वस्य साध्यवत्त्वापादनम्। यथा—यदि दृष्टान्तघटसाधर्म्यात्कृतकत्वात्तेन सह तुल्यधर्मतोपपद्यत इत्यतः शब्दे अनित्यत्वं साध्यते तदा सर्वस्यैवानित्यत्वं स्यात्। सत्त्वादिरूपसाधर्म्यसंभवात् (गौ० वृ० ५।१।३२)। [ग] अनित्यदृष्टान्तसाधर्म्यात्सर्वानित्यत्वप्रसङ्गोद्भावनम्। यथा यद्यनित्येन घटेन सादृश्यादनित्यः शब्द इत्युच्यते तदा येन केनचिद्धर्मेण सर्वस्यैव तत्सदृशत्वात्सर्वस्यानित्यत्वप्रसङ्ग इति (नील० ४५)। [घ] साधर्म्यादिविवक्षायां सपक्षत्वप्रसञ्जनम्। साधनं त्वप्रतिवदन्स ह्यनित्यसमोदयः (ता० र० प० २ श्लो० १२४)।

**अनित्यसमासः**—(समासः) स्वान्तर्गतनामसु विभक्तिमात्रप्रक्षेपेण यल्लभ्यस्यार्थस्य बोधः सः। यथा राजपुरुषपूर्वकायादिः। अत्र तल्लभ्यार्थस्य राज्ञः पुरुषः पूर्वं कायस्य इत्यादिवाक्यादपि प्रतीतेः (श० प्र० ४०)।

**अनिर्वाच्यम्**—प्रत्येकं सदसत्त्वाभ्यां विचारपदवी न यत्। गाहते तदनिर्वाच्यमाहुर्वेदान्तवादिनः॥ (सर्वद० सं० पृ० ४४७)।

**अनिष्टप्रसङ्गः**—अनभिमतार्थापादनम्। यथा पर्वते धूमेन वह्निसाधने वादिना अप्रयोजकशङ्कायां कृतायां पर्वते यदि वह्निर्न स्यात्तर्हि धूमोपि न

स्यात् धूमो वह्निजन्यो न स्याद्वा इत्यापादनम् । अत्राप्रयोजकशङ्का च पक्षे हेतुरस्तु साध्यं मास्तु इति पर्यवसिता । तत्रानिष्टप्रसङ्गश्च सिद्धव्याप्तिकयोर्धर्मयोर्व्याप्याङ्गीकारेणानिष्टव्यापकप्रसञ्जनम् ( त० भा० ४३ ) ।

**अनुकरणम्**—सदृशक्रियादिकरणम् । तच्च गुणक्रियावयवादिभिः सदृशीकरणम् । यथा चटचट इत्यनुकरणम् ( वाच० ) । अत्रेदं ज्ञेयम् । अनुकरणत्वं च शब्दमात्रतात्पर्यकोच्चारणविषयकत्वम् । यथा इतिशब्दसमभिव्याहारे गौरित्याह इत्यादौ । इदं चानुकरणं पदार्थविपर्यासकृद्भवति । अर्थबोधकं न भवतीत्यर्थः ( ल० म० ) ।

**अनुकल्पः**—१ गौणकल्पः । यथा भार्याः कार्याः सजातीयाः सर्वेषां श्रेयस्यः स्युरिति मुख्यः कल्पः । ततोनुकल्पस्तु चतस्रो ब्राह्मणस्येत्यादिः ( पैठीनसिस्मृतिः ) । २ प्रतिनिधिः । यथा यवाद्यभावे गोधूमाः मध्वाद्यभावे गुडादयः ( वाच० ) ।

**अनुकूलत्वम्**—१ प्रयोजकत्वम् । यथा फलानुकूलव्यापार इत्यादौ । २ इच्छाविषयत्वम् । यथा निरुपाध्यनुकूलवेद्यं सुखमित्यादौ ( प० च० ) ।

**अनुकूलवेदनीयम्**—[ क ] इष्टसाधनताज्ञानानधीनेच्छाविषयः । [ ख ] इतरेच्छानधीनेच्छाविषयः ( न्या०बो० ४ ) । यथा सुखम् । अत्रेदं बोध्यम् । सुखानन्तरमिष्टफलान्तरस्याभावेन सुखेच्छा ( यागेच्छावत् ) नेष्टसाधनत्वप्रकारकज्ञानेनोत्पद्यते अपि तु सुखत्वप्रकारकज्ञानेनैवोत्पद्यते इति ( न्या० बो० ४ ) ।

**अनुकृतिः**—लक्षणम् । यथा कारणान्तरानुकृतिवैधर्म्याच्चेत्यादौ ( वै० २। १। २२ ) ।

**अनुगमः**—अनुगतप्रवृत्तिनिमित्तम् ( ग० अव० ) । यथा सर्वेषां घटानामनुगमो घटत्वम् ।

**अनुग्रहः**—[ क ] अभीष्टसंपादनेच्छारूपः प्रसादः । [ ख ] अनिष्टनिवारणपूर्वकेष्टसाधनेच्छारूपाभ्युपपत्तिः । यथा निग्रहानुग्रहे शक्तः प्रभुरित्यभिधीयत इत्यादौ ( वाच० ) ।

**अनुज्ञा**—( लिङर्थो विधिः ) [ क ] या निवारणाभावव्यञ्जिका पुजा इच्छा वा सा ( कु० व्या० ५ ) । [ ख ] निषेधाभावव्यञ्जिकेच्छा ( वै० सा० द० ) । [ ग ] कर्तुरिष्टत्वे सति वक्त्रनुमतत्वम् । यथा पत्नी पचत्वित्यादौ लोडर्थोनुज्ञा ( श० प्र० १४५ ) ।

**अनुतन्त्रम्**—वार्तिकम् । नित्याः शब्दार्थसंबन्धाः समाम्नाता महर्षिभिः । सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः ॥ ( हरिः-वाक्यपदीये १।२३। )

**अनुत्पत्तिसमः**—( जातिः ) ( क ) प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ( गौ० ५।१।१२ ) । अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदित्युक्ते अपर आह । प्रागुत्पत्तेरनुत्पन्ने शब्दे प्रयत्नानन्तरीयकत्वमनित्यत्वकारणं नास्ति । तदभावान्नित्यत्वं प्राप्तम् । नित्यस्य चोत्पत्तिर्नास्ति । अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः ( वात्स्या० ५।१।१२ ) । यथा वा घटो न नित्यो जन्यैकत्वादित्यादौ कश्चिदाह । यदि जन्यैकत्वमनित्यत्वे प्रमाणं तदा घटे एकत्वोत्पत्तेः पूर्वं तदभावान्नित्यत्वम् । नित्यश्चेत्तर्ह्यनुत्पन्न एवेति ( नील० ४४ ) । असिद्ध्यादिदेशनाभासोयमिति बोध्यम् ( गौ० वृ०५।१।१२ ) । [ ख ] साधनाङ्गपक्षहेतुदृष्टान्तानामुत्पत्तेः प्राग्घेत्वभाव इति अनुत्पत्त्या प्रत्यवस्थानम् । यथा घटो रूपवान्गन्धात्पटवदित्युक्ते घटोत्पत्तेर्गन्धोत्पत्तेश्च पूर्वं हेत्वभावादसिद्धिः । पटे च गन्धोत्पत्तेः पूर्वं हेत्वभावेन दृष्टान्तासिद्धिः । एवमाद्यक्षणे रूपाभावाद्बाधश्च । अनुत्पत्त्या प्रत्यवस्थानस्य तत्रापि सत्त्वात् । उत्पत्तेः पूर्वं हेत्वाद्यभावेन प्रत्यवस्थानस्यैव लक्षणत्वात् ( गौ० वृ० ५।१।१२ ) । [ ग ] अनुत्पन्ने साधनांशे हेतुवृत्तेरभावतः । भागासिद्धिप्रसङ्गः स्यादनुत्पत्तिसमो मतः ॥ ( ता० र० २ श्लो० ११५ ) ।

**अनुद्धर्षः**—देशकालानुकूल्येन प्रियवस्त्वनुस्मरणेन वा जायमानं मनःशैथिल्यं तुष्टिः । अयमेवोद्धर्षः । तद्विपर्ययोनुद्धर्षः (सर्वद०सं० पृ०१२४) ।

**अनुद्भूतत्वम्**—शुक्लत्वादिव्याप्यो धर्मः ( सि० च० १ पृ०४ ) ( मु० १ पृ०११९ ) । शिष्टं तु उद्भूतत्वशब्दव्याख्याने द्रष्टव्यम् ।

**अनुपकारसमः**—( जातिः ) कार्यकारणभावस्योपकारनियतत्वेनवस्था । असिद्धदेशनाभासोयम् ( गौ० सू० ५।१।३७ ) । इयं जातिः सूत्रानुक्ता वृत्तिकारेण वृत्तावुच्यते कार्यसम इत्यनेनोपलक्ष्यते चेति बोध्यम् ।

**अनुपधा**—श्रद्धामनःप्रसादादयः । एते धर्मजनकाः ( त० व० १३२ ) ।

**अनुपपत्तिः**—उपपत्त्यभावः । यथा पीनत्वान्यथानुपपत्तिरित्यादौ ।

**अनुपलब्धिः**—ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम् । अस्यार्थः—ज्ञानरूपं यत्करणं तदजन्यो योभावानुभवो नामाभावज्ञानं तस्य यदसाधारणं कारणं तदनुपलब्धिरूपं प्रमाणं बोध्यमिति । अनुमानादिना जन्योत एवातीन्द्रियो योभावानुभवस्तस्य हेतुभूतेनुमानादावतिव्याप्तिवारणायाजन्यान्तम् । अदृष्टादौ साधारणकारणेतिव्याप्तिवारणायासाधारणेति । अभावस्मृत्यसाधारणहेतौ संस्कारेतिव्याप्तिवारणायानुभवेति विशेषणम् । एवं च घटादिज्ञानाभावो घटाद्यभावज्ञाने कारणमिति फलितोर्थः । तथा च घटाभाववति भूतले घटज्ञानाभावाद्घटाभावस्य ज्ञानं भवति । आत्मनि धर्माधर्माद्यनुपलब्धिसत्त्वेपि तदभावानिश्चयेन योग्यानुपलब्धेरेवाभावग्राहकत्वं बोध्यम् । अनुपलब्धेर्योग्यता च तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वरूपा । अस्यार्थः—तर्कितं यत्प्रतियोगिसत्त्वं तेन प्रसञ्जित आपादितः प्रतियोगी यस्य तस्य भावस्तत्त्वमिति । तथा च स्फीतालोकवति भूतले यदि घटः स्यात्तदा घटोपलम्भः स्यादित्यापादनसंभवात्तादृशभूतले घटाभावोनुपलब्धिगम्यः । अन्धकारे तु तादृशापादनासंभवान्नानुपलब्धिगम्यता । अत एव स्तम्भे तादात्म्येन पिशाचसत्त्वे स्तम्भवत्प्रत्यक्षतापत्त्या तदभावोनुपलब्धिगम्यः स्तम्भः पिशाचो नेति । आत्मनि धर्माधर्मादिसत्त्वेपि तस्यातीन्द्रियतया निरुक्तोपलम्भापादनासंभवान्न धर्माद्यभावस्यानुपलब्धिगम्यत्वम् । ननूक्तरीत्याधिकरण इन्द्रियसंनिकर्षस्थले अभावस्यानुपलब्धिगम्यत्वं तवानुमतम् । तत्र च क्लृप्तेन्द्रियमेवाभावाकारवृत्तावपि कारणम् । इन्द्रियान्वयव्यतिरेकानुरोधादिति चेत् न । प्रतियोग्यनुपलब्धेरभावग्रहे हेतुत्वेन क्लृप्तत्वात्करणत्वमात्रस्य कल्पनात् । इन्द्रियस्य चाभावेन समं संनिक-

र्षाभावेनाभावज्ञाने हेतुत्वाभावात् । इन्द्रियान्वयव्यतिरेकयोरधिकरणज्ञानार्थमुपक्षीणत्वेनान्यथासिद्धेः (वेदान्तपरि०) इति मायावादिनो वेदान्तिनः। अत्र नैयायिकाः तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्धिसहकृतेनेन्द्रियेणैवाभावज्ञानोपपत्तावनुपलब्धेः प्रमाणान्तरत्वासंभव इत्याहुः (त०दी० १८)। तदर्थश्च—तर्किता आपादिता प्रतियोगिनो घटादेः सत्त्वस्य सत्त्वप्रसक्तेर्विरोधिनी या उपलब्धिस्तत्प्रतियोगिकः अभावोनुपलब्धिस्तत्सहकृतेनेति (नील० १८)। तथा हि। घटोपलब्धौ घटाभावाग्रहात् प्रतियोग्यनुपलब्धिरभावप्रत्यक्षे इन्द्रियस्यैव सहकारिणी। न तु प्रमाणान्तरम्। इन्द्रियेणैवाभावप्रत्यक्षोपपत्तेः। अन्यथा अभावप्रत्यक्षस्येन्द्रियजन्यत्वानङ्गीकारे इह घटो नास्ति इति निर्णयानन्तरं इह घटाभावं साक्षात्करोमि इति साक्षात्कारविषयकप्रतीत्यनुपपत्तेः (त० कौ०१७–१८)। तद्गु च अनुपलब्धिसहकृतेन्द्रियग्राह्यत्वात् अनुपलब्धिग्राह्यः इत्युपचर्यते (गौ० वृ० ५।१।३०)। अनुपलब्धिर्द्विविधा। अज्ञाता ज्ञाता च। अज्ञातानुपलब्धिस्थले इन्द्रियेणैवाभावग्रहः। तावत्पर्यन्तमिन्द्रियव्यापारस्य विद्यमानत्वात्। अनुपलब्धिस्तु सहकारिमात्रम्। ज्ञातानुपलब्धिस्थले त्वनुमानम् इति नानुपलब्धिर्मानान्तरम् (त० व० ९.९)। यत्र त्वज्ञाता अनुपलब्धिः कारणं तत्प्रत्यक्षम्। ज्ञातानुपलब्धिजन्याभावज्ञानस्यानुमानत्वम् (कु० व्या० ३।२९)।

**अनुपलब्धिसमः**—(जातिः) [क] तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः (गौ० ५।१।२९)। प्रतिकूलतर्कदेशनाभासोयमिति ज्ञेयम् (गौ० वृ० ५।१।२९)। [ख] अनुपलब्धेरप्यनुपलब्धिस्तस्या अप्यनुपलब्धिरित्येवंरूपेण प्रत्यवस्थानमनुपलब्धिसमः। नैयायिकैस्तावच्छब्दानित्यत्वमेव साध्यते। यदि शब्दो नित्यः स्यादुच्चारणात्प्राक् कुतो नोपलभ्यते। न हि घटाद्यावरणकुड्यादिवत् शब्दस्यावरणमस्ति तदनुपलब्धेरिति। तत्रैवं जातिवादी प्रत्यवतिष्ठते। यथावरणानुपलब्धेरावरणाभावः सिध्यति तदा आवरणानुपलब्धेरप्यनुपलम्भादावरणानुपलब्धेरप्यभावः सिध्येत्। तथा चावरणानुपलब्धिप्रमाणक आव-

रणाभावो न स्यात् अपि त्वावरणोपपत्तिरेव स्यादिति शब्दनित्यत्वे नोक्तं बाधकं युक्तम् ( गौ० सू० ५।१।२९ )। [ ग ] वादिनानुपलब्धिवशात्कस्यचित्पदार्थस्यानङ्गीकारेनुपलब्धिवशादेव वाद्यभिमतस्यापि यत्किंचित्पदार्थस्याभावसाधनम् । यथा जलादेर्विद्यमानस्याप्यावरणवशादनुपलब्धिः तद्वत् उच्चारणात्पूर्वं शब्दस्य विद्यमानस्याप्यावरणवशादनुपलब्धिः । इत्येतन्मतं वादिना दूष्यते । यद्यावरणवशाच्छब्दो नोपलभ्यते तदा जलाद्यावरणमिव शब्दाद्यावरणमप्युपलभ्येतेति । तत्रोत्तरम् । यदि भवद्भिरनुपलब्धित आवरणं न स्वीक्रियते तदानुपलब्धेरप्यनुपलब्ध्या अभावे सिद्धे तदभावादावरणाभावासिद्धावावरणसिद्धिरिति ( नील० ४४–४५ ) । [ घ ] स्वस्मिन्विषयिधर्माणां तदतद्रूपकल्पनात् । विपर्ययप्रसङ्गः स्याज्जातिश्चानुपलब्धितः ( ता० र० प० २ श्लो० १२३ )।

**अनुपसंहारित्वम्**—( हेतुदोषः ) [ क ] विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्यतिरेकव्याप्तिग्रहविरोधितावच्छेदकरूपवत्त्वम् । तादृशं रूपं च साध्यादिनिष्ठमत्यन्ताभावाप्रतियोगित्वादिकम् । साध्यसाधनयोरप्रसिद्धेरसिद्धिभेदस्य वारणायाविरोधिन इत्यन्तम् । यस्य साध्यादेरत्यन्ताभावः अप्रसिद्धस्तन्निष्ठमप्रतियोगित्वमित्यर्थः । इदं लक्षणोदाहरणादिकं च नव्यमतानुसारेणेति बोध्यम् (दीधि० २।२०४) (नील० २५) । यथा इदं वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वादिनिष्ठमत्यन्ताभावाप्रतियोगित्वादिकमनुपसंहारित्वम् । अत्रेदमाकूतम् । इदं वाच्यं ज्ञेयत्वादित्यादौ ज्ञेयत्वे वाच्यत्वात्यन्ताभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञाने ( भ्रमात्मके) अत्यन्ताभावांशे वाच्यत्वप्रतियोगिकत्वस्य भासने तुल्यवित्तिवेद्यतया वाच्यत्वांशे अत्यन्ताभावप्रतियोगित्वमपि भासते । तथा च वाच्यत्वांशे अत्यन्ताभावप्रतियोगित्वविषयकं व्यतिरेकव्याप्तिग्रहं प्रति वाच्यत्वांशे अत्यन्ताभावाप्रतियोगित्वरूपानुपसंहारित्वनिश्चयस्य तदभाववत्ताज्ञानमुद्रया विरोधित्वाल्लक्षणसमन्वय इति । [ ख ] अवृत्तिसाध्यहेत्वन्यतरत्वम् अवृत्तिसाध्यकत्वं वा । यथा आकाशवान्धूमादित्यादौ (न्या० म० २।२०)। वस्तुतस्तु केवलान्वयिधर्मावच्छिन्नपक्षकत्वमनुपसंहारित्वम् । पक्षः संदि-

ग्धसाध्यवान् । उदाहरणं च सर्वमनित्यं प्रमेयत्वादित्यादि । अत्र केवलान्वयी धर्मः सर्वत्वमिति बोध्यम् । एवमन्यत्रापि प्रमेयत्वाभिधेयत्वादिकं केवलान्वयी धर्म इति ज्ञेयम् । न च सर्वमभिधेयं प्रमेयत्वादित्यत्राव्याप्तिः । विशेषादर्शनदशायां तस्यापि लक्ष्यत्वात् । अतएव तस्यानित्यदोषत्वम् । व्यतिरेकव्याप्तिग्रहप्रतिबन्धश्चास्य दूषकताबीजमिति तत्त्वम् (म० प्र० २६)। एतदादीनि लक्षणानि प्राचीनमताभिप्रेतानीति ज्ञेयम् । [ ग ] केवलान्वयिधर्मावच्छिन्नसाध्यसंदेहविषयवृत्तित्वम् । [ घ ] साध्यवत्तानिश्चयसामान्यविरोधिसंशयविषयवृत्तित्वमिति कश्चिदाह ( दीधि० २।२०२ ) । [ ङ ] केवलान्वयिधर्मव्यापकीभूतं यत्स्वप्रतिबन्धकतावच्छेदकीभूतसाध्यवत्तानिश्चयविशेष्यतासमानाधिकरणसाध्यसंशयविषयत्वं तद्वद्वृत्तित्वम् ( ग० ) । [ च ] किंचिद्विशेष्यकनिश्चयाविषयसाध्यकत्वे सति किंचिद्विशेष्यकनिश्चयाविषयसाध्याभावकत्वमिति प्राञ्चो वदन्ति ( नील० २५ ) ।

**अनुपसंहारी**—( हेत्वाभासः ) [ क ] व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र स हेत्वभिमतः । स चान्वयेन व्यतिरेकेण वा सर्वस्य पक्षत्वे दृष्टान्ताभावात् । अनित्यो घटो घटाकाशोभयवृत्तिद्वित्वाश्रयत्वादित्यादौ च हेतुः । अत्र साध्यसाधनसाहचर्याज्ञानात्तस्य विरुद्धत्वाज्ञानदशायामनुपसंहारित्वेनेष्टत्वात् ( चि० ९० ) । अयमनैकान्तिकप्रभेद इति विज्ञेयम् । अनुपसंहारिणो लक्षणं तु पूर्वोक्तानुपसंहारित्वमेव । तद्धेतुकतत्साध्यकसाध्यसिद्ध्यौपयिकव्याप्तिग्रहानुकूलोपसंहाराभावस्तस्यानुपसंहारित्वमित्यर्थो लभ्यते ( दीधि० २।२००–२०१ ) । [ ख ] केवलान्वयिधर्मावच्छिन्नपक्षको हेतुः ( चि० २।९० ) ( भा० प० ७५ ) ( गौ० वृ० १।२।५ )। अत्र पक्ष इत्यस्य साध्यनिश्चयविरोधिनः साध्यवान्न वा इत्यादेः संदेहस्य विषय इत्यर्थः ( दीधि० २।२०१ ) । सर्वमभिधेयं प्रमेयत्वादिति सद्धेतौ न केवलान्वयी पक्षतावच्छेदको वा । निश्चितसाध्यवद्वृत्तित्वात् । विप्रतिपत्त्या साध्यानिश्चयदशायां पक्षत्वे तदनुपसंहार्येव । व्यतिरेकिसाध्यके साध्याभाववद्वृत्तित्वाज्ञानदशायामिदं दूषणम् । तदवगमेपि साधारणसंकर एव ( चि० २।९० ) । [ ग ] वस्तु-

मात्रपक्षको हेतुः ( त० कौ० १४) । यथा सर्वं नित्यं प्रमेयत्वादित्यादि ( गौ० वृ० १।२।५ ) ( त० कौ० १४ ) । [ घ ] अन्वयव्यतिरेकदृष्टान्तरहितो हेतुः । यथा सर्वमनित्यं प्रमेयत्वादिति ( त० सं० ) । इदं लक्षणचतुष्टयं प्राचीनमताभिप्रायेण । अत्र च साध्यसंदेहाद्व्याप्तिग्रहो न भवतीत्याशयः ( गौ० वृ० १।२।५ ) । सर्वमनित्यं प्रमेयत्वादित्यत्र सर्वस्यैव पक्षत्वात् दृष्टान्तो नास्तीति प्रमेयत्वं हेतुरनुपसंहारी । एतज्ज्ञानं च व्याप्तिग्रहे प्रतिबन्धकम् । तथा हि । सर्वस्य पक्षत्वे व्याप्तिग्राहकसहचारदर्शनस्थलाभावेन सहचारनिश्चयाभावे सति व्याप्तेरनिश्चयादिति ( त० कौ० ) । हेतावनुपसंहारित्वज्ञानदशायां हेतुसाध्ययोः सामानाधिकरण्यनिश्चयासंभवेन पक्षान्तर्भावेन च साध्यसंशयसत्त्वेन व्याप्तिसंशयसंभवादिति ( नील० २।२७ ) । [ ङ ] केवलान्वयिधर्मसाध्यको हेतुः । स च अत्यन्ताभावाप्रतियोगिसाध्यकादिः ( मु० १६८ ) । यथा घटोभिधेयः पटत्वादित्यादौ पटत्वं हेतुरनुपसंहारी । इदं च नवीनमतम् । तस्य चात्यन्ताभावाप्रतियोगिसाध्यकत्वरूपस्य ज्ञानाद्व्यतिरेकव्याप्तिग्रहप्रतिबन्धो दूषकताबीजम् ।

**अनुबन्धः**—१ इच्छापूर्वकदोषविशेषाभ्यासः । यथा अनुबन्धादिकं दृष्ट्वा सर्वं कार्यं यथाक्रमम् इत्यादौ । २ विषयप्रयोजनाधिकारिसंबन्धा एतच्चतुष्टयमिति वेदान्तिनः । ३ वातपित्तादिदोषाणामप्राधान्यमिति भिषजः। ४ प्रकृतिप्रत्ययागमादेशानां विकरणागमगुणवृद्ध्यादिकार्यविशेषार्थमनुबन्धनीयः परिनिष्पन्नपदकालेषु अश्रूयमाणतया नश्वरः इत्संज्ञतया कृतलोपो वर्ण इति शाब्दिकाः । ५ फलसाधनं पुनःपुनरनुष्ठानाभ्यास इति धर्मशास्त्रविदः । ६ बन्ध इति कोशकाराः । ७ आरम्भ इति केचिदाहुः ( वाच० ) ।

**अनुभवः**—( बुद्धिः ) १ [ क ] स्मृतिभिन्नं ज्ञानम् ( त० सं० ) ( त० भा० २ ) ( न्या० म० १।२ ) ( त० कौ० ६ ) । यथा अयं घटः इति चाक्षुषप्रत्यक्षमनुभवः । [ ख ] अनुभवामि इत्यनुगतप्रतीतिसिद्धानुभवत्वजातिमान् ( न्या० म० १।२ ) ( त० कौ० ६ ) । स

द्विविधः । यथार्थः अयथार्थः । आद्यः तद्वति तत्प्रकारकानुभवः । स एव प्रमेत्युच्यते । द्वितीयः तदभाववति तत्प्रकारकानुभवः । सोप्रमेत्युच्यते । यथार्थश्चतुर्विधः । प्रत्यक्षम् अनुमितिः उपमितिः शाब्दः । यथार्थानुभवकरणमपि चतुर्विधम् । प्रत्यक्षम् अनुमानम् उपमानम् शब्दः इति ( त० सं० ) (भा० प० ५३ ) । एवमेवायथार्थानुभवोपि चतुर्विध इति तत्करणमपि चतुर्विधमिति च विज्ञेयम् । वैशेषिकमतेनुभवो द्विविधः । प्रमा अप्रमा चेति । तत्राप्रमारूपोनुभवो द्विविधः । भ्रमः संशयश्चेति ( त० कौ० ६ ) । २ विषयानुरूपा बुद्धिवृत्तिरनुभव इति पातञ्जलाः सांख्याः केचिद्वेदान्तिनश्चाहुः । विषयानुरूपत्वं च चित्तवृत्तेः वृत्तिसारूप्यमितरत्र ( पा० सू० १।४ ) इति पातञ्जलसूत्रेभिहितम् । तथा हि । यथा पयः प्रणाल्या क्षेत्रादिकं प्राप्य चतुरस्राद्याकारेण परिणमते एवमेवेन्द्रियादिप्रणाल्यान्तःकरणं बहिर्निःसृत्य विषयाकारेण परिणमते । तादृशपरिणामरूपवृत्त्या च विषयगतमज्ञानं निवारयतीति अन्तःकरणस्य विषयानुरूपभवनादनुभवत्वम् । स्मृतौ तु विषयसंनिकर्षाभावात् न विषयाकारताप्राप्तिरिति तद्भिन्ने ज्ञाने एवान्तःकरणस्यानुभवत्वम् ।

**अनुभावः**—१ अनुभववदस्यार्थोनुसंधेयः । २ कोषदण्डादिजातो राज्ञां तेजोविशेष इति नीतिशास्त्रज्ञाः । ३ रसव्यञ्जको भ्रूभङ्गादिरित्यालंकारिकाः । तत्रोक्तम्—भावं मनोगतं साक्षात्स्वगतं व्यञ्जयन्ति ये । तेनुभावा इति ख्याताः इति । उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् । लोके यः कार्यरूपः सोनुभावः काव्यनाट्ययोः ॥ इति च ( वाच० ) । ४ [ क ] सामर्थ्यमिति केचिदाहुः (वाच०) । [ ख ] कर्मपुद्गलानां स्वकार्यकरणे सामर्थ्यविशेषोनुभावः ( सर्व० सं० पृ० ७८ आर्हत० ) ।

**अनुभूतिः**—[ क ] अनुभववदस्यार्थोनुसंधेयः ( भा० प० ५२ ) । अनुभूतिः प्रत्यक्षात्मिकैवेति चार्वाका आहुः । अनुमितिरपीति काणादसौगतौ । उपमितिरपीति केचिन्नैयायिकैकदेशिनः । अर्थापत्तिरपीति प्राभाकराः । अनुपलब्धिरपीति भट्टवेदान्तिनः । संभवरूपा ऐतिह्यरूपा चापीति पौराणिकाः ( दि० १।३ ) । चेष्टापीति तान्त्रिकाः ( सि०

च० २० )। [ ख ] अनुभूतिर्हि स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुणत्वापादनस्वभावो ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोनुभवितुरात्मनो धर्मविशेषः ( सर्वद० सं० पृ० ९८ रामानु० )।

**अनुमतिः**—१ अनुज्ञा। यथा अनुमत्या व्यपेयादित्यादौ। २ कलाहीनचन्द्रवती शुक्लचतुर्दशीयुक्ता पूर्णिमातिथिरिति याज्ञिका आहुः (वाच०)।

**अनुमा**—अनुमितिः ( मु० २ )। यथा—अनुमायां ज्ञायमानं लिङ्गं तु करणं न हि ( भा० प० श्लो० ६८ ) इत्यादौ—अनुमा शब्दस्यार्थः।

**अनुमानम्**—( प्रमाज्ञानविशेषः ) यथा धूमेन प्रत्यक्षेणाप्रत्यक्षस्य वह्नेर्ग्रहणमनुमानम् ( वात्स्या० २।१।४६ )। अत्र मितेन लिङ्गेनार्थस्य पश्चान्मानमनुमानमिति व्युत्पत्तिः ( वात्स्या० १।१।३ )। अनुमानस्य द्वे अङ्गे। व्याप्तिः पक्षधर्मता चेति। तत्र व्याप्त्या साध्यसामान्यसिद्धिः। हेतोः पक्षधर्मताबलात् साध्यस्य पक्षधर्मत्वविशेषः सिध्यति। पक्षधर्मेण धूमवत्त्वेनाग्निरपि पर्वतसंबद्ध एवानुमीयते ( त० भा० १४ )।

**अनुमानम्**—( प्रमाणम् ) १ अनुमितिकरणम् (त० स०)। अनुमितिकरणं द्विविधम्। तत्र प्रथमं व्याप्तिज्ञानम् (गौ० वृ० १।१।५)। यथा पर्वतो वह्निमान् धूमादित्यादौ धूमो वह्निव्याप्यः इति व्याप्तिज्ञानमनुमितिकरणं भवति ( त० कौ० १० )। अनुमानं च लिङ्गलिङ्गिनोः संबन्धदर्शनम् ( वात्स्या० १।१।५ )। तच्च सहचारप्रत्यक्षेण जन्यते ( गौ० वृ० १।१।५ )। एतस्य करणत्वाभिधानं च व्यापारवदसाधारणं कारणं करणमिति प्राचीनमतानुसारेण। अस्मिन् मतेनुमितिकरणपदस्य जनकतयानुमितित्वावच्छिन्नजनकवत्त्वे सत्यनुमितित्वावच्छिन्नजनकम् इत्यर्थः ( वाक्य० )। अत्र व्यापारस्तृतीयलिङ्गपरामर्शो ज्ञेयः ( त० कौ० )। द्वितीयमनुमितिकरणं तु लिङ्गपरामर्शः। यथा वह्निव्याप्यधूमवानयम् इति ज्ञानमनुमितेः करणं भवति (चि० २) (त० भा०) ( त० सं० )। अत्र च फलायोगव्यवच्छिन्नं कारणं करणमिति नवीनमतानुसारेणैतस्य करणत्वाभिधानम्। अनुमानं द्विविधम्। स्वार्थम् परार्थम्। स्वस्यैवार्थः प्रयोजनं ( अनुमितिः ) यस्मात्तत् स्वार्थम्। परस्य प्रतिवादिनो मध्यस्थस्य वा अर्थोनुमित्यात्मकं प्रयोजनं संशयनिवृत्तिर्वा यस्मात्तत् परार्थम्। आद्यं स्वानुमितिहेतुः। द्वितीयं परानुमितिहेतुः। तथा

हि । यत्र स्वयमेव भूयोदर्शनेन यत्र धूमस्तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ संदिहानः पर्वते धूमं पश्यन् यत्र धूमस्तत्राग्निः इति व्याप्तिं स्मरति । तदनन्तरं वह्निव्याप्यधूमवान्पर्वतः इति ज्ञानमुत्पद्यते । अयं लिङ्गपरामर्श इत्युच्यते । तस्मात् पर्वतो वह्निमान् इति ज्ञानम् अनुमितिरुत्पद्यते । तदेतत्स्वार्थानुमानम् । यत्तु स्वयमेव धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयवोपेतं वाक्यं प्रयुङ्क्ते तत्परार्थानुमानम् (त० सं० ) । प्रकारान्तरेणानुमानं त्रिविधम् । पूर्ववत् शेषवत् सामान्यतो दृष्टम् । अत्र व्युत्पत्तिः पूर्वं कारणं तद्वत् इति । तदर्थस्तु [ क ] कारणलिङ्गकम् । यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानम् ( गौ०वृ० १।१।५ ) । [ ख ] यत्र कारणेन कार्यमनुमीयते यथा मेघोन्नत्या भविष्यति वृष्टिः इति ( वात्स्या० १।१।५ ) । शेषवच्छब्दव्युत्पत्तिस्तु शेषः कार्यं तद्वत् इति । तदर्थस्तु [ क ] कार्यलिङ्गकम् । यथा नदीवृद्ध्या वृष्ट्यनुमानम् ( गौ० वृ० १।१।५ ) । [ ख ] यत्र कार्येण कारणमनुमीयते । पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा स्रोतसोनुमीयते भूता वृष्टिः इति ( वात्स्या० १।१।५ ) । सामान्यतो दृष्टं च कार्यकारणभिन्नलिङ्गकम् । यथा पृथिवीत्वेन द्रव्यत्वानुमानम् (गौ० वृ० १।१।५) । यथा वा इच्छादिभिरात्मानुमानम् । इच्छादयो गुणाः । गुणाश्च द्रव्यसंस्थानाः । तद्यदेषां स्थानं स आत्मेति ( वात्स्या० १।१।५ ) । एवं केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकि इत्यपि त्रिविधमनुमानं बोध्यम् ( गौ० १।१।५ ) । वीतमवीतमिति भेदेन द्विविधमनुमानमिति सांख्याः । मीमांसकास्तु अन्वयव्यतिरेक्याख्यमेकमेवानुमानमस्ति । केवलान्वयि केवलव्यतिरेकि वानुमानं नास्तीत्याहुः ( म० प्र० १८ ) । अनुमानस्य द्वे अङ्गे । व्याप्तिः पक्षधर्मता चेति ( म० प्र० २।२३ ) । अनुमानप्रमाणम् इत्यस्यार्थस्तु—अनुमितिप्रमायोगव्यवच्छिन्नमनुमानम् । तच्च व्याप्तिपक्षधर्मताविशिष्टलिङ्गज्ञानम् । अत्रेदमवधेयम्—अनुमानप्रयोगे कर्तव्ये पक्षः साध्यम् हेतुः दृष्टान्तश्च एतच्चतुष्टयं प्रायशः प्रयोक्तव्यम् । तत्र सद्धेतुस्थले व्यापकं साध्यम् । व्याप्यं हि लिङ्गम् ( हेतुः ) भवति । प्रकारान्त-

१ अयोगेति पदच्छेदः ।

रेणानुमानं द्विविधम् । तथा चोक्तम्—दृष्टं सामान्यतो दृष्टमिति चास्य विधाद्वयम् । पूर्वं प्रत्यक्षयोग्यार्थं तदयोग्यार्थमुत्तरम् ॥ इति ( ता० र० श्लो० २१ ) ( प्रशस्त० २ ) । मायावादिनस्तु—अनुमानं न त्रिविधं किंतु अन्वयिरूपमेकमेवेत्याहुः ( वेदान्तप० पृ० ३४ ) । २ लिङ्गम् ( चि० २ )

**अनुमितिः**—( अनुभवः ) [ क ] व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानम् ( चि० २ ) । अत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानेन जन्यमिति विग्रहः । तदर्थश्च व्याप्तिविशिष्टपक्षधर्मत्वविषयताशालिनिश्चयत्वावच्छिन्नकारणतानिरूपितकार्यत्वे सति ज्ञानम् ( वाक्य० ) । व्याप्तिनिष्ठप्रकारतानिरूपिता या हेतुनिष्ठा प्रकारता तन्निरूपिता या पक्षतावच्छेदकावच्छिन्नविशेष्यता तच्छालिज्ञानजन्यं ज्ञानमिति निर्गलितोर्थः ( दि० २।१३८ ) । व्याप्तिविशिष्टपक्षधर्मताज्ञानं च परामर्शशब्दव्याख्यानावसरे निरूपयिष्यामः । अत्रेदं बोध्यम्—ज्ञानलक्षणसंनिकर्षसत्त्वेपि तस्य दुर्बलत्वेन परामर्शानन्तरं पर्वते वह्न्यनुमितिरेव न तु प्रत्यक्षमिति ( म० प्र० ७३ ) । अनुमितेर्लक्षणं च अनुमितित्वमेव । तच्च अनुमिनोमि इत्यनुभवसिद्धो जातिविशेषः । जन्यशब्दधीजन्यत्वव्यभिचारिणी या जन्यज्ञानजन्यत्वाव्यभिचारिणी च जातिः ( अनुमितित्वं ) तद्वदनुभवत्वम् ( न्या० म० २।१४)(त० प्र०) । पदप्रयोजनादिकं तु तत एव ज्ञेयम् । [ ख ] परामर्शजन्यं ज्ञानम् ( त० सं० ) । [ ग ] लिङ्गज्ञानजन्यं लिङ्गिज्ञानम् ( त० कौ० ) । [ घ ] व्याप्तिज्ञानकरणकं ज्ञानम् ( मु० ) । यथा पर्वते धूमेन वह्निसाधने पर्वते धूमज्ञानानन्तरं पर्वतो वह्निमान् इति ज्ञानम् ( त० कौ० ) ( त० सं० ) । अनुमितिर्द्वेधा । पक्षतावच्छेदकसाध्ययोः सामानाधिकरण्यमात्रावगाहिनी तयोरवच्छेद्यावच्छेदकभावावगाहिनी च ( ग० पक्ष० ) । अत्रेदमवधेयम् । पर्वतो वह्निमान् इत्याद्यनुमितौ यदा वह्निपर्वतत्वयोः सामानाधिकरण्यमात्रं विवक्षितं तदा सानुमितिः सामानाधिकरण्यमात्रावगाहिनी । यदा तु तयोर्व्याप्यव्यापकभावो विवक्षितस्तदावच्छेद्यावच्छेदकभावावगाहिनी भव-

तीति । प्रकारान्तरेणानुमितिर्द्विविधा । लाघवज्ञानसहकृतानुमितिः इतरबाधग्रहसहकृतानुमितिश्चेति । अत्रेदं बोध्यम्—अन्वयव्यतिरेकव्याप्त्योरन्यतरनिश्चयेनाप्यनुमितिर्जन्यते इत्यनुभवो न तु युगपदुभयव्याप्त्युपस्थित्यैव जन्यत इति नियमः ( चि० २ ) ।

**अनुमित्सा**—सिषाधयिषाशब्दवदस्यार्थोनुसंधेयः ।

**अनुमेयः**—१ पक्षः । यथा—यस्तु सन्ननुमेये तत्समानासमानजातीययोः साधारणः स सन्नेव संदेहजनकत्वात्संदिग्धः (सव्यभिचारः) ( प्रशस्त० २ पृ० ४७ ) इत्यादौ—अनुमेयशब्दस्यार्थः । २ साध्यम् । यथा—पर्वतो वह्निमान्धूमादित्यत्र वह्निरनुमेयः ।

**अनुयोगिता**—१ स्वरूपसंबन्धविशेषः । यथा भूतले घटसत्त्वदशायां भूतलनिष्ठा भूतलस्वरूपा संयोगसंबन्धस्यानुयोगिता । २ अभावत्वात्मिका ( ग० सि० ) । यथा घटो नास्ति इति प्रतीतिविषये अभावे घटनिष्ठप्रतियोगितानिरूपितानुयोगिता । इयमपि स्वरूपसंबन्धविशेष एवेति केचिन्नैयायिका वदन्ति । अखण्डोपाधिरित्यन्ये वदन्ति ।

**अनुवत्सरः**—प्रभवादिषष्टिसंख्यानां वत्सराणामादितः पञ्चानां पञ्चानां युगसंज्ञकानां यथासंख्यं संवत्सर—परिवत्सर—इदावत्सर—अनुवत्सर—इद्वत्सर इति पञ्च संज्ञाः । संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः । इदावत्सरस्तृतीयस्तु चतुर्थश्चानुवत्सरः । इद्वत्सरः पञ्चमस्तु तत्संघो युगसंज्ञकः ( पु० चि० पृ० ११ ) ।

**अनुवादः**—( अर्थवादः ) [ क ] विधिविहितस्यानुवचनमनुवादः ( गौ० २।१।६४ ) । प्राप्तस्यानु पश्चात्कथनं सप्रयोजनमनुवाद इति सामान्यलक्षणम् ( गौ० वृ० २।१।६५ ) । विध्यनुवचनं चानुवादो विहितानुवचनं च । पूर्वः शब्दानुवादो परोर्थानुवादः । किमर्थं पुनर्विहितमनूद्यते । अधिकारार्थम् । विहितमधिकृत्य स्तुतिर्बोध्यते निन्दा वा विधिशेषो वाभिधीयते । विहितानन्तरार्थोपि चानुवादो भवति । लोकेपि चानुवादः । पचतु पचतु भवानित्यभ्यासः । क्षिप्रं पच्यता-

मिति वा । अत्र पश्यतामित्यन्वेषणार्थम् । पश्यतामेवेति वावधारणार्थम् ( वात्स्या० २।१।६५ ) । [ ख ] प्रमाणान्तरेणावधृतस्यार्थस्य प्रतिपादकः । यथा अग्निर्हिमस्य भेषजमित्यादिः ( सि० च० ३३ ) ( म० प्र० ६४ ) । भेषजं विरोधीत्यर्थः । अत्र हिमविरोधित्वस्याग्नौ प्रत्यक्षावगतत्वादेतद्वाक्यस्यानुवादकत्वमिति बोध्यम् ( लौ० भा० ) । अन्यरीत्यानुवादस्त्रिविधः । भूतार्थानुवादः स्तुत्यर्थानुवादः गुणानुवादश्चेति । आद्यो यथा सदेव सौम्य इदमग्र आसीदित्यादिः वज्रहस्तः पुरंदर इत्यादिश्च । अयं च विधिसमभिव्याहाराभावेप्यनुवादोस्तीति वृत्तिग्रन्थाल्लभ्यते ( गौ० वृ० २।१।६५ ) । द्वितीयः वायुर्वै क्षेपिष्ठेत्यादिः । तृतीयः अग्निहोत्रं जुहोतीति वाक्येन प्राप्तस्याग्निहोत्रहोमस्य दध्ना जुहोति इत्यादिवाक्ये अनुवादः ( वाच० ) । अत्र तादृशहोमे दधिकरणकत्वमात्रं गुणो विधीयत इति बोध्यम् । तर्कप्रकाशेनुवादोदाहरणं यथा—यन्न दुःखेन संभिन्नम् ·····तत्सुखं स्वःपदास्पदमित्यादि वाक्यम् । यथा वा—परिणतिसुरसमाम्रफलम् परिणतिविरसं पनसफलम् इत्यादि वाक्यं चानुवादः । प्रत्यक्षप्रमाणादिना तत्तदर्थनिर्णयात् ( त० प्र० ख० ४ पृ० १२ ) । [ ग ] ज्ञातस्य कथनमनुवादः ( जै० न्या० अ० १ पा० ४ अधि० ६ ) ।

**अनुवादकत्वम्**—गृहीतग्राह्यनुभवमात्रजनकत्वम् । स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्तिस्वसमानाकारनिश्चयविषयविषयकतद्वद्विशेष्यकतत्प्रकारकानुभवमात्रजनकत्वमिति यावत् । अत्र स्वपदमनुभवादिपरम् ( कु० व्या० ३ ) ।

**अनुवाद्यता**—प्रमाणान्तरसिद्धस्य किंचिद्धर्मविधानार्थं पुनरुपन्यास्यता । यथा पर्वतो वह्निमानित्यादौ पर्वतरूपोद्देश्यस्य सिद्धत्वेपि वह्निमत्त्वरूपधर्मविधानार्थमुपन्यासः ( वाच० ) ।

**अनुवृत्तत्वम्**—१ सामानाधिकरण्यम् ( ग० सव्य० ) । यथा धूमानुवृत्तो वह्निरित्यादौ वह्नौ धूमानुवृत्तत्वम् । २ धारातः प्राप्तत्वम् । यथा विज्ञानवादिबौद्धमते विज्ञानसंतानस्यानुवृत्तत्वम् ।

**अनुवृत्तिः**—दवीयःस्थानान्तरस्थितस्य ( पदस्य ) सर्वत्रानुसंधानम् ( दि० ४।

१८८ )। तत्र व्याकरणादौ पूर्वसूत्रस्थपदस्योत्तरसूत्रे आकाङ्क्षापूरणार्थमनुसंधानम्। यथा इको यणचि इत्यतः अचीति सप्तम्यन्तपदस्य आद्गुणः इत्यादावनुवृत्तिः। अनुवृत्तिस्त्रिधा। सिंहावलोकितवत् मण्डूकप्लुतिवत् गङ्गास्रोतोवत् इति ( दि० ४। १८८ )।

**अनुव्यवसायः**—व्यवसायगोचरं प्रत्यक्षम् ( म० प्र० ६९ )। यथा घटज्ञानानन्तरं घटमहं जानामि इति मानसं ज्ञानम्। २ ज्ञाततावभासकं ब्रह्मचैतन्यमिति मायावादिनः (पञ्च० कूट० )।

**अनुशासनम्**—१ गमकम्। ज्ञापकं शास्त्रम्। यथा अथ शब्दानुशासनमित्यादौ। अनुशासनमिति हि शास्त्रमाह। अनुशिष्यते व्याख्यायते लक्षणभेदोपायफलसहितो योगो येन तदनुशासनमिति व्युत्पत्तेः ( सर्व० सं० पृ० ३३७ पात० )। २ यथार्थज्ञापनम्। यथा ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति। अपह्नुते तद्द्विगुणं तन्मनोरनुशासनमित्यादौ। ३ दण्डनम्। यथा एष स्तेनानुशासी राजेत्यादौ ( विक्रमोर्वशी )। ४ देशनया प्रवर्तना। यथा पुत्रं धर्ममनुशास्तीत्यादौ धात्वर्थः ( श० प्र० ९९ )। अत्र पुत्रनिष्ठस्य देशनया प्रवर्तनस्यानुकूलव्यापारवानित्यर्थः। तथाविधो व्यापारः संध्यां विधेहि समिधमाधेहि इत्याद्युपदेशरूपः ( श० प्र० ९९ )।

**अनुषङ्गः**—१ अविनाभावः। यथा सुखं दुःखानुषङ्गाद्दुःखमेवेत्यादौ ( त० भा० ४१ )। २ नेदीयःस्थानान्तरस्थितस्य ( पदस्य ) क्वचिदनुसंधानम् ( दि० ४।१८८ )। यथा पञ्चावयववाक्येषूपनयवाक्यस्थस्य अयम् इति पदस्य तस्माद्वह्निमान् इति निगमनवाक्येनुषङ्गः। ३ [ क ] प्रसङ्गः। स चान्योद्देशेन प्रवृत्तस्य तन्नान्तरीयकविधयान्यसिद्धिः। यथा—क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते। अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते। नित्यक्रियां तथा चान्ये ह्यनुषङ्गफलां श्रुतिमित्यादौ ( वाच० )। नान्तरीयकविधयान्यसिद्धिश्च यथा—विप्रवधप्रायश्चित्तेन तन्नान्तरीयकविधया अवगोरणदण्डनिपातनप्रायश्चित्तसिद्धिः।

नान्तरीयकत्वं च तत्सत्त्वानियतसत्ताकत्वम् । [ ख ] अन्यार्थं प्रवृत्तस्य नान्तरीयकफलजनकत्वमित्यपि केचिद्वदन्ति ।

**अनुसंधानम्**—उपनयशब्दवदस्यार्थोनुसंधेयः ( प्रशस्त० २ पृ० २८ ) ।

**अनेकत्वम्**–१ एकत्वभिन्नसंख्याविशिष्टत्वम् ( दि० गु० १९२ ) । यथा–अनेके ब्राह्मणाः सन्तीत्यादौ ब्राह्मणानामनेकत्वम् । २ अपेक्षाबुद्धिविशेषविषयत्वम् । यथा–अस्मिन्द्रव्येनेके गुणाः सन्तीत्यादावनेकत्वम् ।

**अनेकद्रव्यत्वम्**—अत्र अनेकं द्रव्यमाश्रयो यस्य तदनेकद्रव्यम् । तस्य भावः इति विग्रहः ( वै० उ० ४।१।६ ) । [ क ] अनेकद्रव्याश्रिताश्रितत्वम् । स्वसमवेतसमवेतत्वसंबन्धेन नानाद्रव्यवत्त्वमित्यर्थः ( राम० १ ) । तद्यथा स्वशब्देन परमाणवो गृह्यन्ते । तत्समवेतं द्व्यणुकम् । तत्समवेतत्वं त्र्यणुके वर्तत इति अनेन संबन्धेन परमाण्वात्मकनानाद्रव्यवत्त्वं त्र्यणुकेस्तीति त्र्यणुकादीनामनेकद्रव्यत्वं विज्ञेयम् । [ ख ] अवयवबहुत्वाधीनमहत्त्वाश्रयत्वम् ( वै० उ० ४।१।६ ) । [ ग ] अनेकसमवेतसमवेतत्वम् ( वै० वि० ४।१।६ ) । [ घ ] पारिमाण्डल्याभावविशिष्टद्रव्यत्वम् ( सि० च० २० ) । [ ङ ] अणुभिन्नद्रव्यत्वम् ( दि० १।५४ ) । यथा प्रत्यक्षे महत्त्वं कारणम् । अनेकद्रव्यत्वमन्यथासिद्धम् ( मुक्ता० १।५४ ) इत्यादौ त्र्यणुकादिघटपर्यन्तानामनेकद्रव्यत्वम् ।

**अनेकाश्रितगुणत्वम्**—[ क ] एकत्वभिन्नसंख्याविशिष्टधर्मिवृत्तिगुणत्वम् । अनेकाश्रितगुणाश्च संयोगो विभागो द्वित्वादिकाः संख्या द्विपृथक्त्वादयः ( भा० प० गु० ) । [ ख ] स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणगुणत्वमिति केचिद्वदन्ति (दि० गु० १९२) । घटः पटेन संयुक्तः इति व्यवहारात्संयोगस्य द्विष्ठत्वं प्रतीयते । तथा च स्वं संयोगस्तदाश्रयो घटस्तत्प्रतियोगिको योन्योन्याभावः ( घटभेदः ) तत्समानाधिकरणत्वं ( तदाश्रयः पटस्तद्वृत्तित्वं ) संयोगे वर्तत इति संयोगादीनामनेकाश्रितत्वं ( अनेकवृत्तित्वम् ) संभवतीति बोध्यम् ( कि० टी० ) । [ ग ] एकत्वानवच्छिन्नवृत्तिकगुणत्वमित्यपि कश्चित् ( ल० व० ३६ ) ।

**अनैकान्तिकः**—(हेत्वाभासः) अत्र व्युत्पत्तिः । एकस्य साध्यस्य तदभावस्य

वा योन्तः सहचारः अव्यभिचरितसहचार एकान्तः । तद्वानैकान्तिकः (गौ० सू० १।२।४६) । अनैकान्तिकः सव्यभिचारशब्देन व्यवह्रियते । वैशेषिकमते तु संदिग्ध इत्युच्यते च इति बोध्यम् । अनैकान्तिकलक्षणं च साधारणाद्यन्यतमत्वम् ( मु० ) ( वाक्य० ) । अथवा सव्यभिचारत्वात्मकदोषवत्त्वम् । शिष्टं सर्वं तु सव्यभिचारलक्षणव्याख्यानावसरे संपादयिष्यते । एकमात्रव्याप्तिग्राहकसहचारवानैकान्तिकः । तदन्योनैकान्तिकः ( गौ० सू० १।२।४६ ) । निदर्शनम् [ क ] नित्यः शब्दः अस्पर्शत्वादित्यत्रास्पर्शत्वादित्यनैकान्तिको हेतुर्बोध्यः । तथा हि—यत्र नित्यत्वाभावो नामानित्यत्वं तत्रास्पर्शत्वाभावो नाम स्पर्शवत्त्वम् । यथा कुम्भः । तत्र हि स्पर्शवत्त्वमनित्यत्वं च । तथा यत्रास्पर्शत्वं तत्र नित्यत्वं यथा आत्मा । एवं द्विविधदृष्टान्तसंभवेपि उभयोरपि बुद्धौ व्यभिचारः । तथा हि—बुद्धावनित्यत्वेपि स्पर्शवत्त्वं नास्ति तथा अस्पर्शत्वेपि नित्यत्वं नास्तीति सव्यभिचारत्वादनैकान्तिकः । एवं चात्र नित्यत्वमप्येकोन्तः । अनित्यत्वमप्येकोन्तः । एकस्मिन्नन्ते नियत इत्यैकान्तिकः । विपर्ययादनैकान्तिकः । उभयान्तव्यापकत्वादिति वात्स्यायनभाष्ये ( १।२।४६ ) स्पष्टम् । [ ख ] यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम् ( वै० ३।१।१७ ) । [ ग ] यथा वा धूमवान्वह्नेरित्यत्र वह्निरनैकान्तिकः ( त० सं ) । साध्यसंदेहजनकपक्षधर्मताज्ञानविषयोनैकान्तिकः ( वै० वि० ३।१।१५ ) ( त० क० ) । इदं लक्षणं पूर्वं च प्राचीनमतानुसारेणोक्तमिति ज्ञेयम् । नवीनमतानुसारेण लक्षणं तु सव्यभिचारत्वशब्दव्याख्यानावसरे संपादयिष्यते । साध्यसंदेहश्च त्रिविधः । पक्षे सहचरत्वाद्वा साध्यतद्रहितत्वयोः । सामान्याद्वा विशेषाद्वा संशयो भवति त्रिधा । तदर्थश्च—साध्यतदभावयोः पक्ष एव हेतुसाहचर्यदर्शनात् संशयो भवति । यथा सर्वमनित्यं प्रमेयत्वादित्यादौ । ( अयमनुपसंहारी ) । सामान्यधर्मदर्शनादपि संशयो भवति । यथा घटः क्षितित्ववान् द्रव्यत्वादित्यादौ । द्रव्यत्वं हि क्षितित्ववति घटादौ तदभाववति जलादौ च वर्तत इति साधारणधर्मदर्शनादेवात्र संशय इति । ( अयं साधारणानैकान्तिकः ) । विशेषधर्मदर्शनादपि संशयो भवति । यथा

शब्दः अनित्यः शब्दत्वादित्यादौ । ( अयमसाधारणो हेतुः ) ( त० व० २।३।४९ ) ( वै० उ० ३।१।१५ ) । साध्यसंशयहेतुरनैकान्तिकः । स द्विविधः । साधारणः असाधारणः ( त० भा० ४८ ) । प्रकारान्तरेणानैकान्तिकस्त्रिविधः साधारणः असाधारणः अनुपसंहारी ( गौ० वृ० १।२।५ ) ( भा० प० ७३ ) ( त० सं० ) ।

**अनैकान्तिकत्वम्**—सव्यभिचारत्ववदस्यार्थोनुसंधेयः ।

**अन्तः**—१ संबन्धः । यथा ते विभक्त्यन्ताः पदम् (गौ० सू० २।२।६०) इत्यत्र । विभक्तिर्नाम वृत्तिः । अन्तो नाम संबन्धः । तेन वृत्तिमत्त्वं पदत्वमित्यर्थः । एतच्च गौतमसूत्रवृत्तावत्रैव स्पष्टम् । २ ध्वंसः । यथा सादिरनन्तः प्रध्वंसः ( त० सं० ) इत्यादावन्तः । ३ चरमावयव इति शाब्दिकाः । ४ निर्णय इति वेदान्तिनो वदन्ति । ५ स्वरूपम् । ६ स्वभावः । ७ सीमा । ८ निकटम् । ९ मनोहर इति काव्यज्ञाः ।

**अन्तःकरणम्**—१ मनोवदस्यार्थोनुसंधेयः ( प० भा० ) । २ ज्ञानसुखादिसाधनमाभ्यन्तरं मनोबुद्ध्यहंकारचित्तादिपदाभिलप्यमानमिन्द्रियमिति मायावादिन आहुः । तन्मते अन्तःकरणं चतुर्विधम् । तदुक्तम्—मनो बुद्धिरहंकारश्चित्तं करणमान्तरम् । संशयो निश्चयो गर्वः स्मरणं विषया इमे इत्युक्तकार्यभेदात् । अन्यत्र व्यक्तमुक्तम्—यदा तु संकल्पविकल्पकृत्यं तदा भवेत्तन्मन इत्यभिख्यम् । स्याद्बुद्धिसंज्ञं च यदा तु वेत्ति सुनिश्चितं संशयरूपहीनम् । अनुसंधानरूपं तच्चित्तं च परिकीर्तितम् । अहंकृत्यात्मवृत्त्या तु तदहंकारतां गतम् इति ( वाच० ) ।

**अन्तरम्**—१ मनः । २ अवकाशः । ३ अवधिः । ४ परिधानांशुकम् । ५ अन्तर्धानम् । ६ भेदः । ७ परस्परवैलक्षण्यरूपविशेषः । ८ तादर्थ्यम् । ९ छिद्रम् । १० आत्मीयम् । ११ विनार्थः । १२ बहिरर्थः । १३ व्यवधानम् । १४ मध्यम् । १५ सदृशम् । १६ आसनं च ( वाच० ) ।

**अन्तर्धानम्**—स्वनिष्ठो योन्यकर्तृकदर्शनविषयताविरहस्तदुद्देश्यको व्यापारः । स्वविषयकप्रत्यक्षविरोधिव्यापार इति यावत् । यथोपाध्यायादन्तर्धत्ते छात्र

इत्यादौ धात्वर्थः । अत्र पञ्चम्यर्थः कर्तृत्वनिरूपकत्वम् । तस्य अन्तर्धिघटकदर्शनेन्वयः । एवं च उपाध्यायकर्तृकदर्शनविषयतायाः यः स्वनिष्ठः अभावस्तदुद्देश्यकव्यापारकर्ता छात्र इत्यन्वयबोधः ( ग० व्यु० ५ ) । छात्रो हि मामुपाध्यायो न पश्यतु इतीच्छया दर्शनाभावप्रयोजकं व्यापारं करोतीति फलितार्थः । अथवा अत्र—पञ्चम्या वृत्तित्वमर्थः । तस्य धात्वर्थतावच्छेदके प्रत्यक्षेन्वयः । आख्यातस्य कृतिरर्थः । तथा च उपाध्यायसंबन्धिस्वविषयकप्रत्यक्षविरोधिव्यापारानुकूलकृतिमाञ्छिष्यः इति वाक्यार्थः ( का० व्या० पृ० १०।११ ) ।

**अन्तर्यामी**—सकलजीवनियामकः । य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति इति श्रुतिः ।

**अन्तिकत्वम्**—दैशिकमपरत्वम् ( मु० ९३ ) । यथा दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ( भा० प० ४७ ) इत्यादौ । तद्धि प्रयागस्य जनस्यानमपेक्ष्य वाराणस्यन्तिकत्वम् ।

**अन्त्यः**—१ अवसाने वर्तमानः । यथा विशेषः ( मु० १।२७ ) । इदमत्राकूतम् । परमाण्वादिनित्यपदार्थव्यावर्तकत्वेन परमाण्वादौ विशेषाख्यः पदार्थः सिद्धान्ते स्वीकृतोस्ति । तथा च तत्तद्विशेषव्यावृत्त्यर्थमपि विशेषान्तरस्वीकारेनवस्था स्यात् । अतः परमाण्वादिवृत्तितत्तद्विशेषः स्वस्य स्वयमेव व्यावर्तकः । तदपेक्षया विशेषान्तरं नास्तीति विशेषोन्त्यो भवतीति । २ पूर्वस्मिन्सति यस्मात्परो नास्ति सोन्त्य इति शाब्दिका वदन्ति ।

**अन्त्यावयवित्वम्**—[ क ] द्रव्यानारम्भकद्रव्यत्वम् ( दि० १।७१ ) । [ ख ] द्रव्यानारम्भकत्वे सति कार्यद्रव्यत्वम् ( त० कौ० ३ ) । [ ग ] अवयवजन्यत्वे सत्यवयव्यजनकत्वम् ( सि० च० ६ ) । यथा घटादेरन्त्यावयवित्वम् । इदमत्राकूतम् । परमाण्वादिकपालपर्यन्ता अवयवा द्रव्यान्तरमारभन्ते । घटस्तु न किंचिद्द्रव्यान्तरमुत्पादयितुं क्षमत इति घटस्यान्त्यावयवित्वमिति ।

**अन्यतमम्**—[ क ] तत्तदवृत्तिशून्यम् ( ग० कूट० ) । [ ख ] भेदकूटावच्छिन्नप्रतियोगिताकभेदवत् । यथा घटो घटपटस्तम्भान्यतमो भवति ।

तत्तद्भिन्नभिन्न इति स्पष्टार्थः । इत्थं च घटपटसम्भेतद्भेदवान् यः पाषाणादिः तद्भेदो घटे वर्तत इति विज्ञेयम् । [ ग ] बहूनां मध्ये निर्धारितमेकं वस्तु इति शाब्दिका वदन्ति ।

**अन्यतरत्**—[ क ] भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत् । यथा घटो घटपटान्यतरो भवति । [ ख ] द्वयोर्मध्ये निर्धारितमेकं वस्तु इति शाब्दिका वदन्ति ।

**अन्यत्वम्**—१ भेदः । यथा—उत्थितं ददृशेन्यच्च कबन्धेभ्यो न किंचने-त्यादौ । यथा वा घटः पटादन्य इत्यादौ । एवमितरत्वं भिन्नत्वमित्यादि बोध्यम् । २ सादृश्यम् । यथा नान्वये सति सर्वस्वं यथान्यस्मै प्रति-श्रुतम् इत्यादौ ( वाच० ) ।

**अन्यथा**—१ अभावः । यथा अन्यथानुपपत्तिरित्यादौ । २ अन्यप्रकारः । यथा यदभावि न तद्भावि भावि चेन्न तदन्यथा इत्यादौ ( वाच० ) ।

**अन्यथाख्यातिः**— [ क ] ( ख्यातिः ) अयथार्थानुभवः ( नील० ३७ ) ( सि० च० १९ ) । अत्रेदं बोध्यम् । अन्यथाख्यातिर्भ्रमः । स च यस्य यद्धर्मवत्त्वेन ज्ञानमुचितं तस्य तद्भिन्नधर्मेण ज्ञानम् । यथा ह्रदो वह्निमान् इति ज्ञानम् । तच्च विशिष्टमेकं ज्ञानम् प्रवर्तकत्वादिति नैयायिकाः । मीमांसकादयस्तु—तत्र ज्ञानद्वयम् । वह्निज्ञानं ह्रदज्ञानं च । असंसर्गाग्र-हवशाच्च तयोः विशिष्टज्ञानकार्यकारिता । सति च ह्रदे वह्नेरसंसर्गज्ञाने तत्र न प्रवृत्तिरित्यतः असंसर्गाग्रह एव तत्प्रवर्तकः । अप्रवृत्तिस्तु तदभावे इत्याहुः । केचिद्वेदान्तिनस्तु धर्मिणः असंनिकर्षस्थले नान्यथाख्यातिः । किं तु अलौकिकपदार्थान्तरोत्पत्त्या तस्य लौकिकं प्रत्यक्षं जायते । यथा इदं रजतमिति ज्ञानमित्याहुः ( वाच० ) । [ ख ] भ्रमात्मकज्ञानीयप्रकारता । यथा इदं रजतम् इति ज्ञाने रजतत्वस्य तादृशप्रकारता । तत्र रजतत्वप्रकार-कत्वावच्छेदेन शुक्तिविशेष्यकत्वमन्यथाख्यातिरिति केचित् (मु० म० १) । वाचस्पतिमिश्रास्तु शुक्तौ इदं रजतम् इति ज्ञाने प्रसिद्धशुक्तिरजतत्वयो-रलीक एव समवायो भासत इत्यसत्ख्यातिमङ्गीचक्रुः ( सि० च० १९) ।

**अन्यथानुपपत्तिः**—साध्याभावप्रयोज्यासंभवः । यथा पीनो देवदत्तो दिवा

न भुङ्क्ते इत्यादौ रात्रिभोजनानङ्गीकारे रात्रिभोजनाभावप्रयोज्यपीनत्वासंभवात्मिका पीनत्वान्यथानुपपत्तिः । अत्र दिवा अभोक्तुर्देवदत्तस्य पीनत्वं रात्रिभोजनं विनानुपपन्नम् ( असंभवि ) इति ज्ञानाद्दिवा भोजनाकर्तृवृत्तिपीनत्वेन रात्रिभोजनं कल्प्यते । तथा च भोजनस्य ( साध्यस्य ) पीनत्वव्यापकतया व्यापकाभावस्य च व्याप्याभावव्याप्यतया साध्याभाव-( रात्रिभोजनाभाव–) व्यापकीभूताभाव-( दिवा भोजनाकर्तृवृत्तिपीनत्वाभाव–) प्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानात् देवदत्तो रात्रिभोजी इत्यनुमितिरूपार्थापत्तिरुदेति ( वाच० ) । इदं चार्थापत्तिप्रमाणमनुमान एवान्तर्भवतीति विज्ञेयम् । अत्रानुमानं च देवदत्तो रात्रिभोजी दिवा अभुञ्जानत्वे सति पीनत्वात् इति बोध्यम् ।

**अन्यथासिद्धः**—अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतः । यथा अवश्यक्लृप्तनियतपूर्ववर्तिभिर्दण्डादिभिरेव घटरूपकार्यसंभवे तत्सहभूतं दण्डत्वं घटं प्रति अन्यथासिद्धम् ( सि० च० २० ) ( प्र० प्र० ) । अन्यथासिद्धस्त्रिविधः । तत्र प्रथमः—येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तेन तं प्रति सोन्यथासिद्धः । यथा तन्तुना तन्तुरूपं तन्तुत्वं च पटं प्रति अन्यथासिद्धम् । यथा वा घटं प्रति दण्डेन दण्डरूपं दण्डत्वं चान्यथासिद्धम् । दण्डेन सहैव दण्डरूपस्य दण्डत्वस्य च घटं प्रति पूर्वभावग्रहात् । अत्र सहितत्वमेकज्ञानविषयत्वमिति बोध्यम् । किं च येनेत्यस्य स्वतन्त्रान्वयव्यतिरेकशालिना इति यस्येत्यस्य तु स्वतन्त्रान्वयव्यतिरेकशून्यस्य इति च विशेषणं बोध्यम् । तेन नातन्त्राभूतेन तन्तुत्वेन तन्तोरन्यथासिद्धिः । न वा तन्तुसंयोगस्य तन्तुना सहान्यथासिद्धिरिति । परे तु इतरान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालि यत्तदन्यथासिद्धमित्याहुः ( नील० १६ ) । द्वितीयः—अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति सोन्यथासिद्धः । यथा शब्दं प्रति पूर्ववृत्तित्वे ज्ञात एव घटं प्रत्याकाशस्य पूर्ववृत्तित्वग्रहात् घटं प्रत्याकाशोन्यथासिद्धः । एवं कुलालपितापि पुत्रकृतघटं प्रत्यन्यथासिद्धः । अत्राद्योदाहरणे आकाशस्याकाशत्वेन घटं प्रति पूर्ववृत्तित्वं

ग्राह्यम् । आकाशत्वं च शब्दसमवायिकारणत्वम् । तच्च शब्दनियतपूर्ववृत्तित्वघटितमिति भावः । द्वितीयोदाहरणे कुलालं ( पुत्रं ) प्रति पूर्ववृत्तित्वे ज्ञाते एव घटं प्रति कुलालपितुः पूर्ववृत्तित्वग्रहाद्घटं प्रति कुलालपितान्यथासिद्ध इति भावः ( त० कौ० ७ ) । तृतीयः—अन्यत्र क्लृप्तनियतपूर्ववृत्तिनैव कार्यसंभवे तत्सहभूतोन्यथासिद्धः । यथा पाकजस्थले गन्धं प्रति रूपप्रागभावः । यथा वा घटविशेषं प्रति दैवादागतो रासभः (त० कौ० ७) ( त० दी० १६ ) । आद्ये अपाकजस्थले गन्धं प्रति क्लृप्तनियतपूर्ववर्तिना गन्धप्रागभावेनैव पाकजस्थलेपि गन्धात्मककार्यसंभवे रूपप्रागभावोन्यथासिद्धः ( नील० १६ ) । द्वितीये घटविशेषादन्यत्र घटान्तरे क्लृप्तनियतपूर्ववृत्तिदण्डचक्रादेरेव घटविशेषस्यापि संभवे दण्डचक्रादिसहभूतो दैवादागतो रासभोन्यथासिद्धः ( त० कौ० ७ ) । प्रकारान्तरेणान्यथासिद्धं पञ्चविधम् । यत्कार्यं प्रति कारणस्य पूर्ववृत्तित्वं येन रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धम् । यथा घटं प्रति दण्डत्वम् । अत्र घटं प्रति दण्डस्य कारणत्वं दण्डत्वेनैव गृह्यत इति दण्डत्वमन्यथासिद्धमिति बोध्यम् ( १ ) । यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः किं तु स्वकारणमादायान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम् । यथा घटं प्रति दण्डरूपम् । अत्र दण्डरूपस्य स्वातन्त्र्येणान्वयव्यतिरेकौ दण्डरूपसत्त्वे घटसत्त्वम् दण्डरूपाभावे घटाभाव इति न स्तः । किंतु दण्डरूपस्य कारणं दण्डमादायैवान्वयव्यतिरेकौ दण्डसत्त्वे घटसत्त्वम् दण्डाभावे घटाभाव इति गृह्येते इति घटं प्रति दण्डरूपमन्यथासिद्धमिति बोध्यम् (२) । अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा घटादिकं प्रत्याकाशस्य ( ३ ) । यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा घटं प्रति कुलालपितुः ( ४ ) । [ क ] अवश्यक्लृप्तनियतपूर्ववृत्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धम् । यथा घटादिकं प्रति रासभादीति ( भा० प० श्लो० १९–२२ ) ( मु० १।५४ ) । [ ख ] यस्यानुकूलतर्काभावः सोन्य-

थासिद्धः ( ता० र० श्लो० ८८ ) । यथा घटं प्रति रासभोन्यथासिद्धः ( ५ ) । परे तु अत्र अवश्यक्लृप्तत्वं लघुनियतपूर्ववर्तित्वं बोध्यम् । तेन पाकजगन्धोत्पत्तिं प्रति अवश्यक्लृप्तपूर्ववर्तिनः पाकजरूपप्रागभावस्य कारणत्वनिरासः गन्धप्रागभावस्यान्यथासिद्धत्वनिरासश्चेत्याहुः ( दि० १।५४ ) । एतेषु पञ्चस्वन्यथासिद्धेषु पञ्चममावश्यकम् । अन्येषां चतुर्णां ( दण्डत्व दण्डरूप आकाश कुलालपितॄणाम् ) अनेन पञ्चमान्यथासिद्धेनैव संग्रहादिति बोध्यम् ( भा० प० श्लो० २२ ) ( मु० ५४ ) ( दि० ) ( राम० १।५४ ) । अन्यथासिद्धस्त्रिविध इति मणिकारमतम् । नवीनास्तु लघुनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धम् । एवमनुगतैकलक्षणेनैकविधमेवान्यथासिद्धम् । एवं च त्रिधा पञ्चधेति प्रकारौ शिष्यबुद्धिवैशद्यायेत्याहुः । अत्र लघुत्वं च त्रिविधम् । शरीरकृतम् उपस्थितिकृतम् संबन्धकृतं चेति । तत्र प्रथमम्—प्रत्यक्षं प्रत्यनेकद्रव्यत्वापेक्षया महत्त्वस्य कारणत्वे लघुत्वमस्ति । द्वितीयम्—गन्धं प्रति रूपप्रागभावापेक्षया गन्धप्रागभावस्य कारणत्वे लघुत्वम् । गन्धस्य प्रतियोगिन उपस्थितत्वेन शीघ्रं तदुपस्थितेः । तृतीयम्—घटं प्रति दण्डत्वदण्डरूपाद्यपेक्षया दण्डादेः कारणत्वे लघुत्वम् । स्वाश्रयदण्डसंयोगादिरूपपरंपराया गुरुत्वात् ( नील० १७ ) ।

**अन्यथासिद्धिः**—पूर्वोक्तेष्वन्यथासिद्धेषु वर्तमानस्तत्तद्धर्मविशेषः । इयं च कारणत्वसंपादिका न भवति अपि तु कारणत्वविघटिका भवतीति ज्ञेयम् ।

**अन्योन्यम्**—क्रियाव्यतिहारविषयत्वम् । व्यतिहारश्च विनिमयः । परस्परकरणमिति यावत् ( ल० म० ) । यथा अन्योन्येषां पुष्पैरामृशन्त इति माघः ( सि० कौ० त० ) ।

**अन्योन्याभावः**—( अभावः ) [ क ] नित्यत्वे सत्यत्यन्ताभावभिन्नत्वे सत्यभावः ( ग० सि० ) । [ ख ] अत्यन्ताभावव्यतिरिक्तत्वे सत्यनवधिरभावः ( सर्व० औलु० पृ० २३२ ) । [ ग ] अधिकरणे प्रतियोगितावच्छेदकारोपहेतुकनिषेधधीविषयः ( प० च० ) । स च तादात्म्या-

भावः । यथा असंबन्धो गवात्मना । अघटः पट इति ( प० च० ) ( वै० उ० ९।१।४ ) । यथा वा घटः पटात्मा न भवतीति ( सर्व० औलु० पृ० २३३ ) । [ घ ] तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकः अभावः ( त० सं० ) ( ग० सि० ) (त० कौ० २१)। घटः पटो न भवतीत्यादितो घटात्मा पटो न भवति इत्यर्थो बोध्यते । एवं च घटतादात्म्यस्याभावः घटतादात्म्येनावच्छिन्ना या घटनिष्ठा प्रतियोगिता तन्निरूपको भेदो वा पटे वर्तते इत्यवधेयम् । [ ङ ] इदमिदं न भवति इदमेतद्भिन्नम् इति प्रतीतिसाक्षिकः अभावः ( न्या० म० १।११ ) । यथा घटः पटो न भवति इति प्रतीतिसाक्षिको भेदः ( ग० सि० ) ( प्र० प्र० ) । अन्योन्याभावो धर्मिस्वरूप एव न तु पृथगिति मध्वाचार्यानुयायिन आहुः । अन्योन्याभावशब्दे व्युत्पत्तिस्तु अन्योन्यस्मिन् तादात्म्येनाभावः अभवनम् इति ( वै० सा० द० ३३४ ) । स च ( अन्योन्याभावः ) भेदः । भेदो हि घटे पटस्य पटे घटस्य च सदास्तीति नित्यः । प्रतियोगिसमानाधिकरणश्चायमभावो भवति । घटो न भूतलम् इति प्रतीत्या घटाधिकरणेपि भूतले घटभेदस्य विद्यमानत्वात् । अत्रेदमवधेयम्—न हि कंचिदभावं प्रति येन केनापि संबन्धेन प्रतियोगिनो विरोधिता । किंतु प्रतियोगितावच्छेदकसंबन्धेनैव प्रतियोगी अभावस्य विरोधी । तथा च अन्योन्याभावस्य प्रतियोगितावच्छेदकः संबन्धस्तादात्म्याख्य एव । अत एवायमभावः तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकः इत्युच्यते । तेन संबन्धेन च घटस्य स्वस्मिन्नेव सत्त्वेन भूतलादावसत्त्वात्तत्र घटान्योन्याभावो वर्तत इति ( वै० वि० ९।१।४ ) । अन्योन्याभावग्रहेधिकरणयोग्यतामात्रं तन्त्रम् ( वै० उ० ९।१।४ ) ( ९।१।८ ) । यथा पिशाचभेदाधिकरणे स्तम्भे योग्यतायाः सत्त्वेन स्तम्भः पिशाचो न इति ग्रहः ( चाक्षुषग्रहः ) उपपद्यते ( मु० १।१२७ ) । नव्यास्तु ध्वंसप्रागभावयोरिवान्योन्याभावस्यापि प्रतियोगितावच्छेदकसंबन्धे मानाभावः । अत्यन्ताभावस्य तु प्रतियोगितावच्छेदकसंबन्धः स्वीक्रियते । संयोगेन

समवायेन वा घटो नास्ति इति प्रतीतेः । इत्थं चान्योन्याभावत्वमखण्डोपाधिरित्याहुः ( म० प्र० १२ ) ( ख० व० ) ( ग० सि० २।५५ ) ।

**अन्योन्याश्रयः**–तर्कविशेषः । अयमितरेतराश्रयशब्देन सर्वदर्शनसंग्रहे अक्षपाददर्शने उक्तः ( सर्वद० पृ० २३९ ) । अत्र अन्योन्यपदस्य तज्ज्ञाने तदुत्पत्तौ तत्स्थितौ च लक्षणा । तदाश्रयोन्योन्याश्रय इति त्रितयसाधारणो विग्रहः । एवं चान्योन्यसंबन्धिनो ज्ञानोत्पत्तिस्थित्येतदन्यतमस्याश्रय इत्यर्थः ( वाच० ) । स च स्वापेक्षापेक्षितत्वनिमित्तकोनिष्टप्रसङ्गः । अपेक्षा च ज्ञप्तौ उत्पत्तौ स्थितौ च ग्राह्या । तत्र ज्ञप्तौ यथा घटोयं यद्येतद्घटज्ञानजन्यज्ञानविषयः स्यात् तदैतद्घटभिन्नः स्यादिति । तत्र स्वज्ञानस्य स्वज्ञानजन्यत्वेनानिष्टं प्रसज्येत । स्वापेक्षापेक्षितज्ञानत्वात् स्वापेक्षितघटज्ञानविषयस्य तज्जनकज्ञानविषयाद्भेदरूपमनिष्टं च प्रसज्येत । अतो घटस्य घटभेदप्रसङ्गोनिष्टः । उत्पत्तौ यथा घटोयं यद्येतद्घटजन्यः स्यात् तदैतद्घटानधिकरणक्षणोत्तरवर्ती न स्यादित्यादि । एतद्घटस्योत्पत्तौ एतद्घटसापेक्षत्वे कारणस्य कार्याद्भेदनियततया एतद्घटस्य एतद्घटभेदरूपोनिष्टः प्रसङ्गः । स्थितौ यथा घटोयं यद्येतद्घटवृत्तिः स्यात्तदा तथात्वेनोपलभ्येत । न च तथोपलभ्यते । तथात्वे च घटस्य घटवृत्तित्वापत्तिरनिष्टा प्रसज्येतेति । एतेषु ज्ञप्तिविषयतयैव प्रायशोनिष्टप्रसङ्गः सर्वत्र दृश्यते । तन्मूलकमेव स्वग्रहसापेक्षग्रहकत्वमन्योन्याश्रयत्वं तत्र तत्र व्यवह्रियते । अत एव परस्परज्ञानसापेक्षज्ञानाश्रयोन्योन्याश्रय इति स्मार्तैरुक्तम् ( वाच० ) ।

**अन्वयः**–१ साध्यम् । यथा अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि इत्यादौ ( त० सं० ) । २ अन्वयव्याप्तिः ( वाक्य० ) । यथा यत्र यत्र धूमस्तत्राग्निः इति साहचर्यनियमः ( त० सं० ) । यथा वा हेतुव्यापकसाध्यसामानाधिकरण्यम् ( न्या० बो० १५ ) । ३ कोटिद्वयसहचरितत्वज्ञानम् ( ग०सत्प्र० २१ ) । यथा धूमवान्वह्नेरित्यादौ अयं धूमधूमाभावसमानाधिकरणवह्निमान् इति ( भ्रमात्मकं ) ज्ञानम् । इदं ज्ञानं

च साधारणधर्मवत्ताज्ञानविधया संशये प्रयोजकमिति प्राचीनमते साधारणानैकान्तिकलक्षणे ह्युपयुज्यते इति च विज्ञेयम् (चि० सव्य० २।१०) । ४ [ क ] कारणाधिकरणे कार्यस्य सत्त्वम् ( राम०५२) । यथा यत्सत्त्वे ( कारणसत्त्वे ) यत्सत्त्वम् ( कार्यसत्त्वम् ) इत्यन्वयः । [ ख ] कार्यकारणयोः साध्यसाधनयोर्वा साहचर्यम् ( सि० च० २।२६ ) । तत्र कार्यकारणयोः साहचर्यं च स्वस्वव्याप्येतरयावत्कारणसत्त्वे यत्सत्त्वेवश्यं यत्सत्त्वमिति ( त० प्र० ) । यथा चक्रादिघटितसामग्रीसमवहितदण्डादिसत्त्वे घटसत्त्वमिति । साध्यसाधनयोर्यथा पर्वतो वह्निमान्धूमात् इत्यादौ धूमवह्न्योः साहचर्यम् यत्र धूमस्तत्राग्निः इति । [ ग ] केचित्तु कार्ये कारणस्यानुसरणम् । [ घ ] कार्यसत्तापादकस्वसत्ताकस्य कारणस्य कार्ये स्थितिः । [ ङ ] स्वसत्तानियतसत्तावत्कार्यसंबन्ध इत्याहुः । ५ हेत्वभाववति कार्यान्वयज्ञानम् । व्यभिचारज्ञानमिति यावत् इति नव्या आहुः (मू० म० १) । ६ शाब्दबोधीयसंसर्गताख्यविषयतावान् । यथा घटमानय इति वाक्यजन्यशाब्दबोधे घटानयनादीनां पदार्थानां परस्परं संबन्धः । अयं चान्वयो द्विविधः । भेदान्वयः अभेदान्वयः । आद्यो राज्ञः पुरुषः इत्यादौ राजपदार्थपुरुषपदार्थयोः । द्वितीयो नीलो घटः इत्यादौ नीलपदार्थघटपदार्थयोः (ग० व्यु० का० १) । ७ वृत्तिः । ८ आनुकूल्यम् । ९ संततिरिति काव्यज्ञा वदन्ति ( वाच० ) ।

**अन्वयदृष्टान्तः**—( दृष्टान्तः ) [ क ] निश्चितसाध्यवान् ( वाक्य० २ )। [ ख ] पक्षे हेतुप्रत्यक्षानन्तरं यदन्तर्भावेण साध्यनिरूपितव्याप्तिः स्मर्यते सः । यथा पर्वते धूमेन वह्निसाधने महानसोन्वयदृष्टान्तः ।

**अन्वयबोधः**—शाब्दबोध–शब्दवदस्यार्थोनुसंधेयः । अत्रेयं व्युत्पत्तिः। अव्ययनिपातातिरिक्तनामार्थयोः क्रियाप्रातिपदिकार्थयोश्च साक्षाद्भेदेनान्वयबोधः अव्युत्पन्नः इति । यथा—नैयायिकमते राजपुरुषः इत्यादौ राजपदार्थस्य पुरुषपदार्थे स्वस्वामिभावसंबन्धेनान्वयो वाच्यः । तथाविधान्वयस्य पूर्वोक्तव्युत्पत्तिविरुद्धत्वेन तं परित्यज्य राजपदस्य राजसंबन्धिनि लक्षणां स्वीकृत्य तादृशराजपदार्थस्याभेदेन पुरुषपदार्थेन्वयः । वैयाकरण-

मते तु राजपुरुषः इत्यादौ लुप्तषष्ठ्यादिविभक्त्या स्मृतया प्रतिपाद्येनैव स्वस्वामिभावसंबन्धेन ( न तु साक्षात् ) राजपदार्थस्य पुरुषादावन्वयः स्वीकृत इति ( मु० ४ पृ० १८२ )। उक्तव्युत्पत्तावव्ययनिपातातिरिक्तेतिपदप्रयोजनमुच्यते। घटो न पटः इत्यादौ घटपटाभ्यां नञः साक्षादेवान्वयात् निपातातिरिक्त इति पदं दत्तम्। चन्द्र इव मुखम् इत्यादौ इवार्थसादृश्ये चन्द्रस्य प्रतियोगितया भेदेनान्वयात् अव्ययातिरिक्त इति च पदं दत्तम्। नीलो घटः इत्यादौ नामार्थयोः स्तोकं पचति इत्यादौ क्रियाप्रातिपदिकार्थयोश्चाभेदेनान्वयात् भेदेन इत्युक्तम्। भूतले घटः इत्यादौ आधेयतासंसर्गेणापि घटभूतलयोरन्वयात् साक्षात् इति पदम्। प्रत्ययार्थमद्वारीकृत्य इति साक्षात् इत्यस्यार्थः ( मु० ४ पृ० १८२ ) ( दि० )। भेदेन इत्यस्य तु तादात्म्यातिरिक्तेन इत्यर्थो बोध्यः। राजा पुरुषः इत्यादौ स्वत्वरूपभेदसंबन्धेन राजपदार्थस्य पुरुषादावन्वयमादाय राजसंबन्धी पुरुषः इति बोधवारणायास्या व्युत्पत्तेरावश्यकत्वम्। कर्मतानिरूपकत्वसंबन्धेनापि ( भेदसंबन्धेन ) तण्डुलादिपदार्थस्य पचनक्रियायामन्वयमादाय तण्डुलकर्मकः पाकः इत्याकारकबोधमादाय तण्डुलः पचति इति प्रयोगवारणाय चेयं व्युत्पत्तिरवश्यं स्वीकार्या इति ( मु० १।४ पृ० १८२ ) ( ग० अवय० हेतु० )। अत्रेदमवधेयम्—पचिक्रियायां तण्डुलादिकर्मकत्वप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति द्वितीयान्ततण्डुलपदसमभिव्याहृतपचतिपदसमभिव्याहाररूपाकाङ्क्षाज्ञानं कारणम् इत्यावश्यककार्यकारणभावेनैव तण्डुलः पचति इत्यादिप्रयोगवारणोपपत्तावलमेतादृश्या व्युत्पत्त्येति ( ग० अवय० हेतुप्र० ) ( ग० व्यु० कार० २ )।

**अन्वयव्यतिरेकि**—( लिङ्गम् ) [ क ] गृहीतान्वयव्यतिरेकिसाध्यकम् ( दीधि० २।१५६ )। अन्वयव्यतिरेकि तु पञ्चरूपोपपन्नं भवति। पञ्च रूपाणि च पक्षधर्मत्वम् सपक्षे सत्त्वम् विपक्षाद्व्यावृत्तिः अबाधितविषयत्वम् असत्प्रतिपक्षत्वं चेति ( सि० च० २।२६ ) ( त० कौ० २।१२ )। एतानि पञ्च रूपाणि च वह्निसाध्यकधूमादावन्वयव्यतिरेकिण्येव

विद्यन्ते । केवलान्वयिनि विपक्षाद्व्यावृत्तिर्नास्ति । विपक्षाप्रसिद्धेः । केवलव्यतिरेकिणि तु सपक्षसत्त्वं नास्ति । सपक्षाप्रसिद्धेः ( त० कौ० १२ )। अबाधितविषयत्वमित्यत्र व्युत्पत्तिः अबाधितो विषयः साध्यं यस्येत्यबाधितविषयः । तस्य भावः अबाधितविषयत्वम् इति । अत्राबाधितविषयत्वं च प्रमाणान्तरेणाप्रमितसाध्याभावकत्वं बोध्यम् ( त० कौ० १२ ) ( सि० च० २।२६ ) । असत्प्रतिपक्षत्वं च साध्याभावसाधकहेत्वन्तरशून्यत्वं बोध्यम् ( त० कौ० १२ ) ( सि० च० २।२७) । [ ख ] सत्सपक्षविपक्षो हेतुः । यथा वह्निमान् धूमादित्यादौ (मु० २१९)। अत्र सपक्षस्य महानसादेः विपक्षस्य जलहृदादेश्च सत्त्वात् इति ( मु० २१९ ) । [ ग ] अन्वयेन व्यतिरेकेण च व्याप्तिमत् ( त० सं० )। अन्वयसहचारग्रहग्राह्यव्याप्तिमत्त्वे सति व्यतिरेकसहचारग्रहग्राह्यव्याप्तिमदित्यर्थः ( नील० २।२३ )। [ घ ] यत्रान्वयव्याप्तिर्व्यतिरेकव्याप्तिश्च विद्यते तत् । यथा वह्निमान्धूमादित्यादौ निरुक्तपञ्चरूपोपपन्नो धूमः ( प्र० प्र०) ( त० कौ० १२ ) । अत्र पर्वतः पक्षः । तस्य वह्निमत्त्वं साध्यम् । धूमात् इति हेतुः । तस्मिन् हेतौ यत्र यत्र धूमस्तत्र तत्र वह्निर्यथा महानसादौ इत्यन्वयव्याप्तिः । यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभावः यथा जलहृदादौ इति व्यतिरेकव्याप्तिश्चास्तीति ज्ञेयम् ( त० कौ० १२ ) ।

**अन्वयव्यतिरेकी**—( अवयवः ) [ क ] प्रतीतान्वयव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवः ( गौ० वृ० १।१।३४ ) । [ ख ] अन्वयव्यतिरेकोदाहरणाकाङ्क्षाप्रयोजकहेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवः । [ ग ] पक्षसपक्षसतो विपक्षासतो हेतोर्वचनम् ( चि० अव० २।७९ ) । यथा पर्वतो वह्निमान्धूमादित्यत्र धूमात् इति पदम् ।

**अन्वयव्यभिचारः**—( व्यभिचारः ) । कारणसमवधानाव्यवहितोत्तरक्षणावच्छेदेन कारणतावच्छेदकावच्छिन्नयत्किंचिद्व्यक्त्यधिकरणे कार्याभाववत्त्वम् । कारणसत्त्वे कार्याभाव इति संक्षिप्तार्थः । यथा समाप्तिं प्रति मङ्गलस्य कारणत्वे वक्तव्ये कादम्बर्यादावाशङ्कितोऽन्वयव्यभिचारः ( त० दी० १।१ ) ।

**अन्वयव्याप्तिः**—( व्याप्तिः ) प्रकृतहेतुनिष्ठा प्रकृतसाध्यनिरूपिता व्याप्तिः । अन्वयनिरूपिता व्याप्तिरित्यर्थः ( ग० सामा० ) । अन्वयव्याप्तावयं नियमः—अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते । साध्याभावोन्यथा व्याप्यो व्यापकः साधनात्ययः ॥ इति ( त० कौ० १२ ) ( सि० च० २।२६ ) । हेतुसाध्ययोर्व्याप्तिः ( त० दी० २।२३ ) । यथा यत्र धूमस्तत्राग्निः इति साहचर्यनियमः ( त० सं० ) । धूमव्यापकवह्निसामानाधिकरण्यमित्यर्थः ( न्या० बो० २।१४ ) । व्याप्तिश्चात्यन्ताभावान्योन्याभावभेदेन भिन्ना अव्यभिचरितसामानाधिकरण्यव्यापकसामानाधिकरण्यरूपा ( ग० सामा० २३ ) । साध्यवदन्यावृत्तित्वहेतुव्यापकसाध्यसामानाधिकरण्यादिरूपेत्यर्थः ( न्या० बो० २।१४ ) । तद्भेदतत्स्वरूपतल्लक्षणप्रपञ्चश्च व्याप्तिशब्दव्याख्यानावसरे सविस्तरं संपादयिष्यते इत्यत्रैव विरम्यते ।

**अन्वयिहेतुः**—( अवयवः ) [ क ] उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ( गौ० १।१।३४ ) । उदाहरणेन सामान्यात्साध्यस्य धर्मस्य साधनं प्रज्ञापनं हेतुः । साध्ये प्रतिसंधाय धर्ममुदाहरणे च प्रतिसंधाय तस्य साधनतावचनं हेतुः । उत्पत्तिधर्मकत्वादिति उत्पत्तिधर्मकमनित्यं दृष्टमिति ( वात्स्या० १।१।३४ ) । उदाहरणसाधर्म्यमुदाहरणबोध्यान्वयव्याप्तिः । ततोन्वयी हेतुर्ज्ञातव्यः ( गौ० वृ० १।१।३४ ) । अन्वयिहेतुलक्षणं चान्वयिहेतुत्वमेव । तच्च अनुमितिकारणीभूतपरामर्शप्रयोजकशाब्दज्ञानकारणसाध्याविषयकशाब्दधीजनकप्रतीतान्वयसाध्यसाधनवाचकहेतुविभक्तिमच्छब्दत्वम् । अस्यार्थप्रयोजनादिकं च हेतुशब्दव्याख्यानावसरे संपादयिष्यते । अन्वयव्याप्त्यभिधायकावयवाभिधानप्रयोजकज्ञानजनकहेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वम् (चि० २।७९ ) । [ ख ] ज्ञातान्वयव्याप्तिकहेतुबोधको हेत्ववयवः ( गौ० वृ० १।१।३४ ) । यथा पर्वतो वह्निमान्धूमान्महानसवदित्यादौ धूमात् इति शब्दः ।

**अन्वय्युदाहरणम्**—( उदाहरणम् ) तल्लक्षणं चान्वय्युदाहरणत्वमेव । तच्च साध्यसाधनसंबन्धबोधजनकत्वम् ( चि० अव० २।८० ) । अन्वयव्याप्तिबोधकत्वम् ( दीधि० २।१७७ ) । तच्च एतद्यो यो धूमवान्स सोग्निमानिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम् ( न्या० म० २।२३–२४ ) । [ क ] साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्तः ( गौ० १।१।३६ ) । साध्येन साधर्म्यं समानधर्मता । साध्यसाधर्म्यात्कारणात्तद्धर्मभावी दृष्टान्त इति । तस्य धर्मस्तद्धर्मः । तस्य साध्यस्य । साध्यं च द्विविधम्—धर्मिविशिष्टो वा धर्मः शब्दस्यानित्यत्वम् । धर्मविशिष्टो वा धर्मी अनित्यः शब्दः इति । इहोत्तरं तद्ग्रहणेन गृह्यत इति । कस्मात् । पृथग्धर्मवचनात् । तस्य धर्मस्तद्धर्मः । तस्य भावस्तद्धर्मभावः । स यस्मिन्दृष्टान्ते वर्तते स दृष्टान्तः साध्यसाधर्म्यात्तद्धर्मभावी भवति । इहोत्तरं तद्ग्रहणेन गृह्यत इत्यत्र इह तद्ग्रहणेनोत्तरं गृह्यत इत्यन्वयः । अयमर्थः—इह नाम तद्धर्मभावीत्यत्र तद्ग्रहणेन नाम तच्छब्देन उत्तरं नाम द्विविधसाध्यमध्ये द्वितीयं धर्मविशिष्टो धर्मीत्याकारकं गृह्यत इति । स चोदाहरणमिष्यते । तत्र यदुत्पद्यते तदुत्पत्तिधर्मकम् । तच्च भूत्वा न भवत्यात्मानं जहाति निरुध्यत इत्यनित्यम् । एवमुत्पत्तिधर्मकत्वं साधनम् । अनित्यत्वं साध्यम् । सोयमेकस्मिन् द्वयोर्धर्मयोः साध्यसाधनभावः साधर्म्याद्व्यवस्थित उपलभ्यते । तं दृष्टान्ते उपलभमानः शब्देप्यनुमिनोति । शब्दोप्युत्पत्तिधर्मकत्वादनित्यः स्थाल्यादिवदित्युदाह्रियते । तेन धर्मयोः साध्यसाधनभाव इत्युदाहरणम् ( वात्स्या० १।१।३६ ) । [ ख ] साधनवत्ताप्रयुक्तसाध्यवत्तानुभावकोवयवः । साध्यसाधनव्याप्त्युपदर्शकोदाहरणमिति यावत् ( गौ० वृ० १।१।३६ ) । [ ग ] प्रकृतहेतुमति प्रकृतहेतुव्यापकत्वविशिष्टसाध्यबोधकवाक्यम् ( नील० २२ ) । यथा पर्वतो वह्निमान्धूमान्महानसवदित्यादौ यो यो धूमवान्स स वह्निमान्यथा महानसः इति वाक्यम् ( त० सं० २ ) ।

**अन्वय्युपनयः**—[ क ] उदाहरणापेक्षस्तथेत्युपसंहारः साध्यस्योपनयः ( गौ० १।१।३८ ) । उदाहरणापेक्ष उदाहरणतन्त्रः । साध्यसाधर्म्य-

युक्ते उदाहरणे स्थाल्यादि द्रव्यमुत्पत्तिधर्मकमनित्यं दृष्टं तथा शब्द उत्पत्तिधर्मक इति साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमुपसंह्रियते । उपसंह्रियतेनेनेति चोपसंहारो वेदितव्यः ( वात्स्या० १।१।३८ ) । [ ख ] तथेति साध्यस्योपसंहारः । यथा पर्वतो वह्निमान्धूमादित्यत्र वह्निव्याप्यधूमवानयम् इति वा तथा चायम् इति वोपन्यासः ( गौ० वृ० १।१।३८ ) । अन्वय्युपनयलक्षणं चान्वय्युपनयत्वमेव । तच्च साध्यव्याप्यविशिष्टपक्षबोधकावयवत्वम् ( चि० अव० ) ।

**अन्ववसर्गः**—कामचारानुज्ञानम् । यथेष्टं क्रियताम् इत्येवंरूपानुज्ञेत्यर्थः । यथा अपि सिञ्च अपि स्तुहीत्यादौ यथेष्टं कुर्याः इत्याद्यर्थोपिना द्योत्यते न तु कुत्राप्यनुज्ञया प्रतिरोधः क्रियत इति ( वाच० ) ।

**अन्वाख्यानम्**—तात्पर्यावधारणार्थं प्रतिपादनम् । यथा वस्त्वन्वाख्यानं क्रियान्वाख्यानमित्यादौ ( वा० च० ) ।

**अन्वाचयः**—उद्देश्यसिद्ध्यानुद्देश्यसिद्ध्यर्थोपदेशः । यथा भिक्षां गच्छ यदि गां पश्येस्तां चानयेत्यादौ । अत्र भिक्षायामेवोद्देशः न तु गवानयने । तत्सिद्ध्युत्तरं गवानयनमनुद्दिष्टमपि साध्यतया निर्दिष्टम् इति ( वाच० ) । प्रधानगुणभावेन यत्र क्रियान्वयतात्पर्यं सोन्वाचयः ( त० प्र० ख० ४ पृ० ५२ ) । क्रियाभेदे त्वन्वाचयः । यथा एधानाहर्तुं वनं व्रज शाकमप्यानेष्यसि इति ।

**अन्वादेशः**—[ क ] पूर्वोपात्तस्य किंचित्कार्यान्तरं विधातुं पुनरुपदेशः । यथा अनेन व्याकरणमधीतम् न्यायमेनं पाठय इति न्यायपाठनार्थं पुनरुपदेशः ( सि० कौ० ) ( वाच० ) । [ ख ] कथितकथनम् ( वाच० ) ।

**अन्वाधानम्**—इध्माबर्हिःसंपादनम् अग्निपरिग्रहः उपस्तरणं चेत्येवमादि ( पु० चि० पृ० ३१८ ) ।

**अन्वाधेयम्**—विवाहात्परतो यच्च लब्धं भर्तृकुलात्स्त्रिया । अन्वाधेयं तु तद्द्रव्यं लब्धं पितृकुलात्तथा ॥ ( मिताक्षरा अ० २ श्लो० १४४ ) ।

**अन्वाहितम्**—यदेकस्य हस्ते निहितं द्रव्यं तेनापि अनु पश्चादन्यहस्ते स्वामिने देहीति निहितं तदन्वाहितम् ( मिताक्षरा अ० २ श्लो० ६७ )।

**अन्विताभिधानवादः**—शक्तिज्ञानाविषयस्य शाब्दबोधाविषयत्वनियम इति वादः ( कृष्ण० शक्ति० ) । भट्टमते च इतरान्वितघटो घटपदशक्य इत्येतादृशमेव शक्तिज्ञानं शाब्दबोधप्रयोजकम् । एवं च शाब्दबोधे पदार्थसंसर्गस्यापि पदशक्यत्वमङ्गीकुर्वन्ति ( ग० शक्ति० ५ ) । एवमेतन्मते वाक्येपि शक्तिं स्वीकुर्वन्ति इति विज्ञेयम् । इदं च प्राभाकरमतम् न तु भट्टमतमिति बहवो ग्रन्थकारा वदन्ति ।

**अन्वीक्षा**—प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणम् । यथा आन्वीक्षिकी न्यायविद्येत्यादावन्वीक्षा ( वात्स्या० १।१।१ ) । अत्र व्युत्पत्तिः—श्रवणात् अनु ( पश्चात् ) ईक्षा अन्वीक्षा उन्नयनम् ( गौ० वृ० १।१।१ ) ।

**अपकर्षः**—१ विद्यमानधर्मापचयः । तथा च साध्यसाधनान्यतरस्याभावप्रसञ्जनम् । यथा अपकर्षसमो जातिरित्यादौ ( गौ० वृ० ५।१।४ ) । २ गुणनिष्ठजातिविशेषः । यथा महत्त्वत्वं चापकर्षानाश्रयपरिमाणत्वम् इत्यत्रापकर्षः ( राम० १।५८ ) । ३ उचितधर्मापेक्षातो हीनता । यथा—उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः इत्यादौ ( मनु० १०।४२ ) । ४ स्वकर्तव्यकालात्पूर्वकाले करणम् । यथा—मरणोत्तरं मृताहे मासि मासि कर्तव्यानां मृताहनिमित्तकमासिकादीनां द्वादशाहेषु एकाहेषु च कर्तव्यत्वोक्तेः सर्वापकर्षः । तदुक्तम्—मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं प्रति । द्वादशाहेन वा कुर्यादेकाहे द्वादशेथ वा इति ( स्मृतिः ) । ५ परसूत्रपदानामन्वयार्थं पूर्वसूत्र आकर्षणमिति शाब्दिका वदन्ति ( वाच० ) ।

**अपकर्षसमः**—( जातिः ) [ क ] साध्ये धर्माभावं दृष्टान्तात् प्रसञ्जयतोऽपकर्षसमः । लोष्टः खलु क्रियावानविभुर्दृष्टः काममात्मापि क्रियावानविभुरस्तु । विपर्यये वा विशेषो वक्तव्य इति ( वात्स्या० ५।१।४ ) । [ ख ] पक्षदृष्टान्तान्यतरस्मिन्व्याप्तिमपुरस्कृत्य सहचरितधर्माभावेन हेतु-

साध्यान्यतराभावप्रसञ्जनम् । यथा शब्दः अनित्यः कृतकत्वादित्यत्र यद्यनित्यत्वसहचरितघटधर्मात्कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचरितघटधर्मरूपवस्त्वव्यावृत्त्या शब्दे कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यात् । आद्ये असिद्धिदेशना । द्वितीये बाधदेशना । एवं शब्दे कृतकत्वसहचरितश्रावणत्वस्य संयोगादावनित्यत्वकृतकत्वसहचरितगुणत्वस्य च व्यावृत्त्या घटे अनित्यत्वं कृतकत्वं च व्यावर्तेत इति दृष्टान्ते साध्यसाधनविकल्पदेशनाभासापीयम् ( गौ० सू० ५।१।४ ) । अत्र लक्षणे व्याप्तिमपुरस्कृत्य सहचरितधर्माभावेन पक्षदृष्टान्तान्यतरस्मिन्हेतुसाध्यान्यतराभावप्रसञ्जनमित्यन्वयः । अयमर्थः—व्याप्तिं मनसि अगृहीत्वैव हेतुसाध्याभ्यां सहचरितो योन्यः कश्चिद्धर्मस्तस्य प्रकृतपक्षे दृष्टान्ते वा अभावं दृष्ट्वा तत्साहचर्यात्साध्यस्य वा हेतोरपि वा अभावकल्पनमपकर्षसमः । यथा शब्दः अनित्य इत्यादेः स्पष्ट एवार्थः । आद्ये असिद्धीत्यत्र आद्ये नाम कृतकत्वरूपहेतोरभावकल्पनपक्षे । असिद्धिदेशना नाम स्वरूपासिद्धिरूपोक्तिः । दोष इति यावत् । प्राप्नोतीत्यर्थः । एवं च स हेतुः स्वरूपासिद्धो भवति । द्वितीये बाधदेशनेतीत्यत्र अनित्यत्वरूपसाध्यस्याभावकल्पनपक्षे बाधरूपोक्तिः । दोष इति यावत् । प्राप्नोतीत्यर्थः । एवमित्यस्य पूर्वं यथा पक्षे हेतुसाध्यान्यतराभाव उक्तस्तथेत्यर्थः । शब्दे कृतकत्वेत्यस्य शब्दे कृतकत्वेन सह सहचरितस्य श्रावणत्वस्येत्यर्थः । अस्य व्यावृत्त्या सहान्वयः । संयोगादावित्यादेः संयोगादावनित्यत्वेन कृतकत्वेन च सह सहचरितस्य गुणत्वस्येत्यर्थः । अस्यापि व्यावृत्त्या सहैवान्वयः । व्यावृत्त्येत्यस्य श्रावणत्वस्य गुणत्वस्य च घटे व्यावृत्त्येत्यर्थः । घटे अनित्यत्वमित्यादेः घटे श्रावणत्वस्य गुणत्वस्य व्यावृत्त्या अनित्यत्वं कृतकत्वं च व्यावर्तेतेत्यर्थः । दृष्टान्ते इत्यादेः । एवं च घटरूपे दृष्टान्ते साध्यस्य साधनस्य चाभावकल्पनया साध्यसाधनविकल्पदेशनाभासापीयमित्यर्थः । [ग] परोक्तदृष्टान्तसाधर्म्येण पक्षे पराभिमतधर्मान्तरस्याभावसाधनम् । यथा शब्दः अनित्यः कृतकत्वाद्घटवदित्यादौ यदि कृतकत्वेन शब्दो घटवदनित्यः स्यात्तर्हि तेनैव शब्दो घटवदश्रावणोपि स्यादिति ( नील० ४२ ) ।

**अपक्षेपणम्**—( कर्म ) [ क ] अधोदेशसंयोगहेतुः कर्म ( त० सं० ) ( त० कौ० २० ) । [ ख ] तद्विपर्ययेण ( उत्क्षेपणविपर्ययेण ) संयोगविभागकारणं कर्म ( प्रशस्त० पृ० ३७ ) । तल्लक्षणं च अधोदेशसंयोगजनकक्रियानुकूलक्रियात्वम् ( ल० व० १८ ) ।

**अपगमः**—स्पन्दः ( ग० हेतु० ) । यथा वृक्षादपैतीत्यादौ धात्वर्थः ।

**अपचिकीर्षा**—( द्रोहः ) अहितेच्छा ( ग० व्यु० ४ ) ।

**अपदेशः**— १ कथनम् ( गौ० सू० ३।२।२३ ) । यथा नोत्पत्तिकारणानपदेशात् ( गौ० ३।२।२३ ) इत्यादौ । २ हेतुः । यथा सोनपदेशः इत्यादौ ( वै० ३।१।३ ) ।

**अपरत्वम्**—१ व्याप्यत्वम् । यथा सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ( भा० प० श्लो० ८ ) इत्यादौ अपरत्वशब्दस्यार्थः । अल्पदेशवृत्तित्वम् ( मु० १।३४ ) । यथा घटत्वजातेर्द्रव्यत्वपृथिवीत्वे अपेक्ष्याल्पदेशवृत्तित्वम् । २ ( गुणः ) अपरव्यवहारे असाधारणं कारणम् ( त० सं० ) ( त० कौ० ६ ) । अपरव्यवहारजनकतावच्छेदकताद्दशप्रकारताश्रयत्वं लक्षणमित्यर्थः ( वाक्य० ) । यथा अयं कनिष्ठः अयं समीप इत्यादौ कनिष्ठसमीपयोरपरत्वम् ( वाक्य० ) । तद्द्विविधम् । दिक्कृतम् कालकृतम् । समीपस्थे दिक्कृतमपरत्वम् । कनिष्ठे कालकृतमपरत्वम् ( त० सं० ) । पर्यायान्तरेणाप्यपरत्वप्रपञ्चः कथ्यते । तद्यथा यो यदपेक्षया संनिहितस्तत्र तदवधिकमपरत्वं दिक्कृतम् । अत्र दिक्पिण्डसंयोगोसमवायिकारणम् । संनिहितत्वज्ञानं निमित्तम् । तन्नाशश्च तन्नाशनिमित्तम् । दिक्कृतमपरत्वं मूर्तद्रव्यमात्रवृत्ति भवति । यो यदपेक्षया कनिष्ठस्तत्र तदवधिकमपरत्वं कालकृतम् । अत्र कालपिण्डसंयोगोसमवायिकारणम् । कनिष्ठत्वज्ञानं निमित्तम् । तन्नाशश्च तन्नाशनिमित्तम् । कालकृतमपरत्वं तु जन्यद्रव्यमात्रवृत्ति भवति ( त० कौ० ६ ) ( सि० च० १।१८ ) । अत्र दिक्कृतत्वं च ज्ञायमानदिग्जन्यत्वम् ( वाक्य० ) । अल्पतरमूर्तसंयोगविशिष्टशरीरज्ञानादपरत्वमुत्पद्यत इति ( सि० च० १।१८ ) । यथा प्रकाशमानस्तो-

त्रापुरापेक्षया भीमानदी स्वसमवायिसंयुक्तसंयोगेनाल्पतरदेशसंयोगवती इति ज्ञानेन दैशिकमपरत्वमुत्पद्यते। अधिकं तु अन्यत्र ( वै० उ० ७।२।२१ ) द्रष्टव्यम्। कालकृतत्वं च स्वसमवायिसंयुक्तसंयोगसंबन्धेन रविक्रियाप्रकारककालविषयकज्ञानजन्यत्वम् ( वाक्य० )। अल्पतरदिवाकरक्रियाविशिष्टशरीरज्ञानात् अपरत्वोत्पत्तिः ( सि० च० ११।१८ )। दिक्कृतमपरत्वमिदमस्मात्संनिकृष्टम् इत्यपेक्षाबुद्ध्या जन्यते ( दि० १ )। अवलोकनीयात्र दिक्शब्दव्याख्या। कालकृतमपरत्वं तु अयमस्मादल्पतरकालसंबद्धः इत्यपेक्षाबुद्ध्या जन्यते ( दि० १ )। अवलोकनीयात्र कालशब्दव्याख्या। अत्र नव्या आहुः-अल्पतरसूर्यपरिस्पन्दान्तरितजन्यत्वरूपकनिष्ठत्व-अल्पसंयोगान्तरितत्वरूपसंनिकृष्टत्वाभ्यां कालिकदैशिकापरत्वव्यवहारोपपत्तेर्नापरत्वस्य गुणान्तरत्वम् इति ( दि० गु० पृ० २०९ )।

**अपराजिता**—मासि भाद्रपदे शुक्ला सप्तमी या गणाधिप। अपराजितेति विख्याता महापातकनाशिनी॥ ( पु० चि० पृ० १०४ )।

**अपराह्णः**—पञ्चधा विभक्तेऽहनि चतुर्थो भागः। २ द्विधा विभक्तेऽहन्युत्तरो भागः ( मिताक्षरा अ० २ श्लो० ९७ )।

**अपरिग्रहः**— ( व्रतम् ) सर्वभावेषु मूर्छायास्त्यागः स्यादपरिग्रहः ( सर्व० सं० पृ० ६६ आर्हत० )।

**अपवर्गः**—१ अस्यार्थो निःश्रेयसवदनुसंधेयः। आत्यन्तिकी दुःखनिवृत्तिरपवर्गः। निवृत्तेरात्यन्तिकत्वं नाम निवर्त्यसजातीयस्य पुनस्तत्रानुत्पादः ( सर्व० सं० पृ० २४६ अक्षपा० )। २ फलप्राप्तिः। यथा अपवर्गे तृतीया ( पाणि० सू० २।३।६ ) इत्यादौ।

**अपवादः**—१ बाधनसाधनं वस्तुमात्रम्। २ विशेषशास्त्रम्। यथा मा हिंस्यात्सर्वा भूतानीत्युत्सर्गस्य वायव्यं श्वेतमालभेत इति शास्त्रमपवादः। ३ मिथ्याभूतपदार्थनिवारणार्थमुपदेशविशेष इति मायावादिन आहुः। ४ मिथ्यावाद इति सांख्याः। ५ निन्दा निरासनं वेति काव्यज्ञाः। ( वाच० )।

**अपशब्दः**—शक्तिवैकल्यप्रमादादिना साधुशब्दस्यान्यथोच्चारणसाध्योपभ्रंशशब्दः । यथा म्लेच्छो ह वा नाम यदपशब्दः ( पा० म० भा० १।१।१ )। हरिणाप्युक्तम्—त एव शक्तिवैकल्यप्रमादालसतादिभिः । अन्यथोच्चारिताः शब्दा अपशब्दा इतीरिताः ॥ इति ।

**अपसिद्धान्तः**—( निग्रहस्थानम् ) [ क ] सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गः ( गौ० ५।२।२४ ) । कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययादनियमात्कथां प्रसञ्जयतोपसिद्धान्तो वेदितव्यः । यथा न सदात्मानं जहाति न सतो विनाशो नासदात्मानं लभते नासदुत्पद्यत इति सिद्धान्तमभ्युपेत्य स्वपक्षं व्यवस्थापयति—एकप्रकृतीदं व्यक्तम् । विकाराणामन्वयदर्शनात् । मृदन्वितानां शरावादीनां दृष्टमेकप्रकृतित्वम् । तथा चायं व्यक्तभेदः सुखदुःखमोहान्वितो दृश्यते । तस्मात्समन्वयदर्शनात्सुखादिभिरेकप्रकृतीदं शरीरमिति । एवमुक्तवाननुयुज्यते । अथ प्रकृतिर्विकार इति कथं लक्षितव्यमिति । यस्यावस्थितस्य धर्मान्तरनिवृत्तौ धर्मान्तरं प्रवर्तते सा प्रकृतिः । यच्च धर्मान्तरं प्रवर्तते स विकार इति । सोयं प्रतिज्ञातार्थविपर्यासादनियमात्कथां प्रसञ्जयति । प्रतिज्ञातं खल्वनेन नासदाविर्भवति न सत्तिरो भवतीति । सदसतोश्च तिरोभावाविर्भावमन्तरेण न कस्यचित्प्रवृत्तिः प्रवृत्त्युपरमश्च भवति । मृदि खल्ववस्थितायां भविष्यति शरावादिलक्षणं धर्मान्तरमिति प्रवृत्तिर्भवति । अभूदिति च प्रवृत्त्युपरमः । तदेतन्मृद्धर्माणामपि न स्यात् । एवं प्रत्यवस्थितो यदि सतश्चात्महानम् असतश्चात्मलाभमभ्युपैति तदस्यापसिद्धान्तो निग्रहस्थानं भवति । अथ नाभ्युपैति पक्षोस्य न सिध्यति । ( वात्स्या० ५।२।२४ ) । [ ख ] कथायां स्वीकृतसिद्धान्तप्रच्यवः । तथा च सांख्यमतेन अहं वदिष्यामीत्यभ्युपेत्यारब्धायां कथायामाविर्भावस्याविर्भावाभ्युपगमेनवस्थेति दूषणोद्धारायाविर्भावस्यासत उत्पत्तिं यद्यभ्युपैति तदापसिद्धान्तः ( गौ० वृ० ५।२।२४ ) ( दि० १ ) । [ ग ] एकसिद्धान्तमतमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमतमालम्ब्योत्तरदानम् ( नील० ४६ ) । सिद्धान्तादपध्वंसोपसिद्धान्त इत्यर्थः

( त० भा० ५१ ) । सौगतास्त्वपसिद्धान्तं दूषणं न मन्यन्ते ( गौ० वृ० ५।२।२३ ) ।

**अपह्नवः**—[ क ] अबाधितपरोक्तविपरीतबोधनाय तदुपपादकाभावप्रतिपादनेच्छा । यथा कलिङ्गेषु दृष्टोसि । नाहं कलिङ्गानगमेत्यादावत्यन्तापह्नवः ( ग० व्यु० ल० ) । अत्र च कलिङ्गाधिकरणकदर्शनादेरुपपादकं कलिङ्गगमनादिकम् । तेन विना तदसंभवात् । अत्यन्तापह्नवः स्वरूपसन्नेव ( न तु ज्ञातः ) लिट्साधुतानियामकः ( ग० व्यु० ल० ) । [ ख ] सत्त्वेन ज्ञातस्यापि वस्तुनः असत्त्वेन कथनम् । स द्विविधः शब्दतोर्थतश्चेति । तत्र मिथ्यैव तत् इति शब्दतः । अर्थतस्तु नाभिजानाम्यहम् । तत्र तदा न मम स्थितिः इति ( वाच० ) ।

**अपादानत्वम्**—( कारकम् ) यद्धातूपस्थाप्ययादृशार्थे विग्रहवाक्यस्थपञ्चम्या यः स्वार्थोनुभावयितुं शक्यः तस्य तद्धातूपस्थाप्यतादृशक्रियायामपादानत्वमुच्यते । यथा वृक्षात्पतित इत्यादौ वृक्षादेरपादानत्वम् ( श० प्र० ७९ ) । अपगमाय आदीयते अवधित्वेनेति व्युत्पत्तिः ( वाच० ) । अपादानशब्दस्तु तत्तत्कर्मानधिकरणीभूते तत्तत्कर्मजन्यविभागाश्रये शक्त इत्यवधेयम् । वृक्षात्पतित इत्यस्माद्वाक्यात् वृक्षावधिकविभागानुकूलपतनकर्ता इत्यन्वयबुद्धौ धातूपस्थाप्यपतने पञ्चम्युपस्थाप्यो विभागः स्वानुकूलत्वसंबन्धेन प्रकार इति स विभाग एव तत्रापादानत्वमिति विज्ञेयम् ( श० प्र० ७९ ) । अत्रावधित्वं च स्वरूपसंबन्धप्रभेदः पदार्थान्तरं वेत्यन्यदेतत् । अपादानत्वं च [ क ] क्रियानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वम् ( ग० अव० ) । परसमवेतक्रियाजन्यविभागाश्रयत्वमित्यर्थः । यथा भूभृतो गङ्गावतरतीत्यादौ भूभृतो गङ्गासमवेतक्रियाजन्यविभागाश्रयत्वादपादानत्वम् । गङ्गायामतिव्याप्तिवारणाय परसमवेतेति क्रियायां विशेषणम् (श० प्र० ६) । वृक्षात्पर्णं पततीत्यादौ पर्णक्रियया वृक्षपर्णयोर्विभागो जायते । तत्र क्रिया पर्णमात्रनिष्ठा विभागस्तूभयनिष्ठ इति वृक्षस्य क्रियानाश्रयत्वं विभागाश्रयत्वं च संगच्छत इत्यवधेयम् । [ख] स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभागाश्रयत्वम्

( ग० व्यु० ५।२१ ) । अत्र स्वं विभागाश्रयो वृक्षः । तन्निष्ठः क्रियावतः पर्णात्सकाशात् भेदः । तत्प्रतियोगितायाः पर्णनिष्ठाया अवच्छेदिका पतनक्रिया । तज्जन्यविभागाश्रयत्वं वृक्षस्येति । अत्र क्रियायां स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वविशेषणेन पर्णादेः स्वनिष्ठवृक्षादिविभागजनकपतनापादानत्वनिरास इति ज्ञेयम् (ग० व्यु० ५।२१) । [ ग ] परकीयक्रियाजन्यविभागाश्रयत्वम् ( का० व्या० ९ ) । यथा वृक्षात्पर्णं पततीत्यादौ वृक्षादेरपादानता । अत्र पञ्चम्या अन्योन्याभावप्रतियोगितावच्छेदकत्वं विभागजनकत्वं चार्थः । विभागे अन्योन्याभावे च वृक्षोन्वेति ( का० व्या० ९ ) । तथा च वृक्षनिष्ठभेदप्रतियोगितावच्छेदकं तन्निष्ठविभागजनकं च यत् पतनं तदाश्रयः पर्णमित्याकारको बोधः ( ग० व्यु० ५।२१ )। [ घ ] अवधित्वम् । यथा वृक्षाद्विभजत इत्यादौ वृक्षादेरपादानता ( ग० व्यु० ५।२१ ) । अत्र वृक्षाद्यवधिकत्वविशिष्टविभागनिरूपितमेवाश्रयत्वमाख्यातेन बोध्यते । अतो वृक्षः स्वस्माद्विभजते इति न प्रयोगः ( ग० व्यु० ५।२१ ) । विशेषस्तु पञ्चमीशब्दव्याख्याने व्यक्तीभविष्यति । शाब्दिकमते अपादानं च [ ङ ] ध्रुवमपायेपादानम् ( पाणिनिसूत्रम् १।४।२४ ) । अपाये विभागे ध्रुवं निश्चलम् प्रकृतपञ्चम्यर्थविभागजनकत्वान्वयिक्रियाशून्यमित्यर्थः ( का० व्या० ९ ) । तत्रोक्तं हरिणा—अपाये यदुदासीनं चलं वा यदि वाचलम् । ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥ पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ । तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते ॥ उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे । विभागे प्रविभक्ते तु क्रिये तत्र व्यवस्थिते ॥ मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् । मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक् ॥ इति । अपाये गतिविशेषे सति यद्ध्रुवम् अवधिभावोपगमाश्रयत्वे सति तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रयं तदपादानमिति सूत्रार्थः । अस्य पदकृत्यं शब्देन्दुशेखरे स्पष्टम् । [ च ] विश्लेषाश्रयत्वे सति विश्लेषजनकधात्वर्थतत्क्रियानाश्रयः ( वै० सा० ) । [ छ ] अवधिभावोपगमव्यापारम् ( ल० म० ) । अपादानं त्रिविधम् । निर्दिष्ट-

विषयम् उपात्तविषयम् अपेक्षितक्रियं चेति । तत्राद्यम्—यत्र साक्षात् ( मुख्यवृत्त्या ) धातुना गतिः ( विभागजनकक्रिया ) निर्दिश्यते तन्निर्दिष्टविषयम् । यथा अश्वात्पतति । द्वितीयम्—यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्तविषयम् । समभिव्याहृतधातुनोपात्तो लक्षितो गतिरूपो विषयो यत्रेति व्युत्पत्तिः (वै० सा० द० १९२) । स्वविषयक्रियाघटितश्रूयमाणक्रियान्तरमित्यर्थः । यथा बलाहकाद्विद्योतते विद्युदित्यादौ । अत्र निःसृत्य इत्यध्याहार्यम् । तथा च निःसरणाङ्गे विद्योतने द्युतिः ( द्युत्धातुः ) वर्तते । द्युतिश्च लक्षणया निःसरणपूर्वकविद्योतनबोधक इति यावत् ( वै० सा० ) । एवं च बलाहकाद्विद्योतते विद्युत् इत्यादिवाक्यात् बलाहकावधिकनिःसरणोत्तरकालिकं विद्युत्कर्तृकं विद्योतनम् इति बोधः ( वै० सा० द० १९२ ) ( ल० म० १०८ ) । तृतीयम्—अपेक्षिता क्रिया यत्र तदपेक्षितक्रियम् । अनुपात्तधात्वर्थक्रियासाकाङ्क्षमित्यर्थः ( वै० सा० द० १९२ ) । यथा कुतो भवान् पाटलिपुत्रादित्यादौ । अत्रागमनमर्थगम्याहृत्य आगतः इति पदं वाध्याहृत्यान्वयः कार्यः ( वै० सा० द० १९२ ) । नैयायिकास्त्वित्थं व्याचक्षते—यत्र विभागस्तज्जनकक्रिया चोभयं धातुनाभिधीयते तदाद्यम् । यत्र विभागोऽध्याहृतधातुनाभिधीयते तद्द्वितीयम् । यत्र तूभयमध्याहृतधात्वभिधेयम् तत्तृतीयम् इति ( वै० सा० द० १९२–१९३ ) ।

**अपानः**—( वायुः ) [ क ] गुदादीनामध उन्नयनादपानः ( दि० १।८५ ) । [ ख ] मलादेरधो नयनादपानः ( सि० च० १।८ ) ।

**अपार्थकम्**—( निग्रहस्थानम् ) [ क ] पौर्वापर्यायोगादप्रतिसंबद्धार्थम् । ( गौ० ५।२।१० ) । यत्रानेकस्य पदस्य वाक्यस्य वा पौर्वापर्येणान्वययोगो नास्तीत्यसंबन्धार्थत्वं गृह्यते तत्समुदायोर्थस्यापायादपार्थकम् । यथा दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः अधरोरुकमेतत्कुमार्याः स्फैय्यकृतस्य पिता प्रतिशीन इति ( वात्स्या० ५।२।१० ) । [ ख ] अभिमतवाक्यार्थबोधानुकूलाकाङ्क्षादिशून्यबोधजनकपदम् । उदाहरणं तु अयोग्यानासन्नानाकाङ्क्षवाक्यम् ( गौ० वृ० ५।२।१० )

( दि० १ ) । [ ग ] परस्परानन्वितार्थकपदसमूहः । यथा शब्दो घटः पटो नित्यमनित्यं च प्रमेयत्वात् इत्यादि ( नील० पृ० ४५ )। [ घ ] यादृशशाब्दबोधत्वावच्छेदेनापार्थत्वं तादृशबुद्ध्यर्थं प्रयुक्तः पदसमूहः ( श० प्र० ) ।

**अपि**—( अव्ययम् ) १ संभावना । २ संदेहः । ३ निन्दा । ४ प्रश्नः । ५ समुच्चयः । ६ अल्पपदार्थः । ७ कामचारानुज्ञा । ८ अवधारणम् । ९ पुनरर्थः ( वाच० ) ।

**अपूर्वम्**—[ क ] यागादिकर्मणः काचिदुत्तरावस्था फलैकनाश्या ( ल० म० )। [ ख ] यागादिजन्यः स्वर्गादिजनकः कश्चन गुणविशेषः । तं गुणविशेषमपूर्वमिति मीमांसका वदन्ति । प्रारब्धकर्मेति वेदान्तिनः । धर्माधर्माविति नैयायिकाः । अदृष्टमिति वैशेषिकाः । पुण्यपापे इति पौराणिकाः । अपूर्वं दर्शपूर्णमासयोर्द्विविधम् । परमापूर्वम् कलिकापूर्वं चेति ( दि० गु० २३५ ) । प्रकारान्तरेणाप्यपूर्वं मीमांसकमते त्रिविधम् । प्रधानापूर्वम् अङ्गापूर्वम् कलिकापूर्वं चेति । तत्र दर्शपूर्णमासाद्यपूर्वं प्रधानापूर्वम् । तदेव परमापूर्वम् । प्रयाजाद्यङ्गजन्यापूर्वमङ्गापूर्वम् । तदवान्तरक्रियाकूटजन्यमपूर्वं कलिकापूर्वम् । तच्च व्रीहिप्रोक्षणाभ्युक्षणादिजन्यं द्रव्यनिष्ठमिति मीमांसकाः । तज्जन्यसंस्कारविशेष एव कलिकापूर्वतया व्यवह्रियते स चात्मनिष्ठ इति नैयायिकाः । कलिकापूर्वं च परमापूर्वं जनयित्वा नश्यति । अङ्गापूर्वैस्तु परमापूर्वे विशेष आधीयत इति भेदः । तथा चाङ्गापूर्वसहितं परमापूर्वं विशिष्टफलं जनयति । तद्विहीनं तु स्वल्पं फलम् । अत्रेदमवधेयम्—परमापूर्वं च नित्यकर्मणि पण्डापूर्वत्वेन मीमांसकैर्व्यवह्रियते । संध्यावन्दनस्य किंचित्फलाजनकत्वात् । नैयायिकास्तु अर्थवादोपस्थापितब्रह्मलोकादिप्राप्तिरूपफलजननात्तत्राप्यपूर्वस्य फलाजनकत्वेन पण्डत्वमित्याहुः ( वाच० ) । विस्तरस्तु चिन्तामणिशब्दखण्डे कुसुमाञ्जलिप्रथमस्तबके चावलोकनीयः । अत्रेदं बोध्यम्—परमापूर्वं वाच्यम् । कलिकापूर्वाणि तु कल्प्यानीति मीमांसकसिद्धान्त इति ( त०प्र०ख० ४ पृ० ११४ ) ।

**अपूर्वविधिः**—( विधिः ) [ क ] अप्राप्तप्रापको विधिः । स च यागादीनामिष्टसाधनत्वस्य कृतिसाध्यत्वस्य वा बोधको लिङादिशब्दः । यथा स्वर्गकामो यजेतेत्यादौ ( सि० च० ३३ ) ( वाच० )। अप्राप्तप्रापकत्वं च प्राथमिकप्रवृत्तिजनकप्रतीतिजनकत्वम् प्रमाणान्तरजन्यप्रतीत्यविषयविषयकप्रतीतिजनकत्वं वा । इदं यजनं तु केनापि प्रमाणान्तरेण न बोधितम् ( सि० च० ३३ ) । अत्रेदं बोध्यम्—लिङा यागादाविष्टसाधनत्वं बोध्यत इति नैयायिकाः । कार्यत्वेनापूर्वं बोध्यत इति प्राभाकरा मन्यन्ते ( वाच० ) । [ ख ] प्रमाणान्तरेणाप्राप्तप्रापको लिङादिपदवेदनीयः शब्दविशेषः । यथा स्वर्गकामो यजेतेति लिङादियुक्तं वाक्यम् । अपूर्वविधिश्चतुर्विधः । कर्मविधिः गुणविधिः विनियोगविधिः प्रयोगविधिश्चेति । तत्राग्निहोत्रं जुहोतीत्यादौ यागरूपे कर्मणि इष्टसाधनतायाः कृतिसाध्यतायाः भावनाया वा मतभेदेन बोधनात् कर्मविधित्वम् । द्रव्यदेवतादिविधायकविधिर्गुणविधिः । यथा दध्ना जुहोतीत्यादिवाक्यम् । प्राप्तस्याग्निहोत्रस्यानुवादेनाप्राप्तगुणरूपद्रव्यादेः ( दध्यादेः ) विधानात् । विनियोजनाद्विनियोगविधिः । यथा ऐन्द्र्या गार्हपत्यमुपतिष्ठते इत्यादि । अत्र ऐन्द्र्या ऋचः गार्हपत्योपस्थाने विनियोजनात् विनियोगविधिः । एवं कृत्वा एवं कुर्यात् इत्यादिप्रयोगज्ञापको विधिः प्रयोगविधिः । यथा अधीत्य स्नायादित्यादि उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोतीत्यादि च । अयं च विशिष्टविधिरिति भेदः ( वाच० ) । [ ग ] यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोपूर्वविधिः । यदाहुः— विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥ ( मी० न्या० पृ० ४६ ) । विस्तरस्तु विधिशब्दे द्रष्टव्यः ।

**अपेक्षा**—१ आकाङ्क्षा । सा च शाब्दबोधप्रयोजनिका । २ असामर्थ्यम् । अस्यामपेक्षायां च प्रायशो वृत्तिर्नेष्यते । यथा प्रवीरं पुत्रकाम्यति ऋद्धस्य राजमातङ्ग इत्यादौ प्रत्ययसमासौ न स्तः । तत्रोक्तम्—सापेक्षे प्रत्ययो न स्यात्समासो वा कथंचन । सापेक्षं तद्विजानीयादसमस्तविशेषणम् ॥ इति । ३ प्रयोजकत्वम् । तच ज्ञाने स्थितौ उत्पत्तौ वा इतरस्यानु-

रोधित्वम् । ज्ञानादिकार्ये च यस्य यत्पदार्थान्तरज्ञानाद्यनुरोधस्तस्य तदपेक्षा । अत एव तर्कग्रन्थे जगदीशेन स्वापेक्षापादकः प्रसङ्ग आत्माश्रयः । अपेक्षा च ज्ञप्तौ उत्पत्तौ स्थितौ च ग्राह्या इत्याद्युक्तम् । अधिकं तु अन्योन्याश्रयशब्दव्याख्याने द्रष्टव्यम् । ४ अपेक्षाबुद्धिवदस्यार्थोनुसंधेयः । ५ अनुरोधः । यथा सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिरित्यादौ इति धर्मज्ञाः । ६ स्पृहा । यथा समुपोढेषु कामेषु निरपेक्षः परिव्रजेदित्यादौ ( मनुः ६।४१ ) इति काव्यज्ञाः ।"

**अपेक्षाबुद्धिः**—( बुद्धिः ) [ क ] नानैकत्वसमूहालम्बनरूपा बुद्धिः ( वै० उ० ४।१।११ ) । अपेक्षाबुद्धिः क्षणत्रयावस्थायिनी इति सिद्धान्तः । द्वित्वादिकं त्वपेक्षाबुद्धिजन्यम् ( वै० उ० ४।१।११ ) । अपेक्षाबुद्धेरिच्छादिजनकत्वं नास्तीत्यवश्यं मन्तव्यम् । अन्यथा तेनैव तस्या नाशात्क्षणत्रयावस्थायित्वमेव न स्यादिति केचित् ( भवा० २९० ) । विस्तरस्तु अन्यत्र ( वै० उ० ७।२।८ ) द्रष्टव्यः । अत्रेदं बोध्यम्—द्वित्वादिकं परार्धान्तमपेक्षात्मकबुद्ध्या जन्यते तन्नाशेन नश्यति च । अपेक्षाबुद्धेर्द्वित्वादेश्चोत्पत्तिनाशादिप्रपञ्चस्तु द्वित्वशब्दव्याख्यानावसरे व्यक्तीभविष्यति । अत्रेदं विचार्यते—यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावस्ति तथापि एको द्वौ इति ज्ञानाभावात् एको न द्वौ इति ज्ञानाच्च द्वित्वादीनां पर्याप्तिस्वरूपः कश्चित्संबन्धोनेकाश्रयोङ्गीक्रियते । पर्याप्तिसंबन्धेन च प्रत्येकं घटादौ न द्वित्वादि । तादृशसंबन्धश्चापेक्षाबुद्धिसापेक्षः । तेन तत्सत्त्वे तथा ज्ञानम् तदसत्त्वे न तथा ज्ञानम् इति ( वाच० ) । वस्तुतस्तु द्वित्वादिकं तु न संख्या किं त्वपेक्षाबुद्धिविशेषविषयत्वमेव । तच्चापेक्षाबुद्ध्यधीनमिति न कोपि दोष इति तु वयम् । [ ख ] अनेकैकत्वबुद्धिः ( भा० प० गु० श्लो० ११० ) । अनेकानि यान्येकत्वानि तेषां बुद्धिः । सा च अयमेकः अयमेकः इत्याकारिका बुद्धिः ( मु० गु० २०४ ) । यथा सेनावनादिबुद्धिः ( त० व० ) । अश्वाश्वादिसमूहः सेना । वृक्षसमूहो वनम् । तथा च सेना वनम् इत्यादिबुद्धिविशेषविषयत्वं सेनात्ववनत्वादि ( म० प्र० ४।४६ ) । [ ग ] अपेक्षाबुद्धिर्नाम विनाशकविनाशप्रतियोगिनी बुद्धिः ( सर्व० सं० पृ० २२४ औलू० ) ।

**अपोहः**—१ अतद्व्यावृत्तिः। यथा विज्ञानवादिबौद्धमते नीलत्वादिर्धर्मः अनीलव्यावृत्तिरूपः ( दि० १ )। तन्मतेयं धर्मोऽपारमार्थिक एवेति सर्वस्यापि विज्ञानरूपत्वं क्षणिकत्वं चेति च ज्ञेयम्। २ अपरतर्कनिरासाय कृतो विपरीततर्कः। यथा शुश्रूषा श्रवणं चैव ग्रहणं धारणा तथा। ऊहोपोहोर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः॥ इति हेमचन्द्रोक्तो बुद्धिगुणभेदः। यथा वा स्वयमूहापोहसमर्थ इत्यादौ। ३ त्याग इति काव्यज्ञा वदन्ति ( वाच० )।

**अप्त्वम्**—( जातिः ) सरित्सागरसमवेतत्वे सति ज्वलनासमवेतं सामान्यम् ( सर्वद० सं० पृ० २१८ औलु० )।

**अप्रतिपत्तिः**—[ क ] आरम्भविषये अनारम्भः। परेण स्थापितं वा न प्रतिषेधति। प्रतिषेधं वा नोद्धरति ( वात्स्या० १।२।६० )। इयं चाननुभाषणाज्ञानादिनिग्रहस्थानप्रयोज्या ( वात्स्या० १।२।६१ )। [ ख ] प्रकृताज्ञानम् ( गौ० वृ० १।२।६० )।

**अप्रतिभा**—( निग्रहस्थानम् ) [ क ] उत्तरस्याप्रतिपत्तिरप्रतिभा ( गौ० ५।२।१९ )। परपक्षप्रतिषेध उत्तरम्। तद्यदा न प्रतिपद्यते तदा निगृहीतो भवति ( वात्स्या० ५।२।१९ )। [ ख ] उत्तरार्हं परोक्तं बुध्वापि यत्रोत्तरसमय उत्तरं न प्रतिपद्यते तत्राप्रतिभा ( गौ० वृ० ५।२।१९ ) ( दि० १ )। [ ग ] उत्तरापरिस्फूर्तिः ( त० भा० ५१ )। [ घ ] उत्तरार्हं परोक्तं बुध्वाप्युत्तरस्यास्फूर्तिवशात्तूष्णींभावः ( नील० ४५–४६ )।

**अप्रतिष्ठितः**—१ निर्धनः ( मिताक्षरा० अ० २ श्लो० ११७ )। २ अनपत्यः ( मिताक्षरा० अ० २ श्लो० १४५ )।

**अप्रधानकर्मत्वम्**—( कर्मत्वम् ) परंपरया धात्वर्थतावच्छेदकफलशालित्वम् ( ग० व्यु० २ ) ( श० प्र० ९६ )। यथा गां दोग्धि पय इत्यादौ गवादेरप्रधानकर्मत्वम् ( ग० व्यु० २ )। अत्र विभागावच्छिन्नक्षरणानुकूलो व्यापारो दुहधात्वर्थः। तथा च धात्वर्थव्यापारांशे साक्षाद्विशेषणस्य ( साक्षाद्धात्वर्थतावच्छेदकस्य ) क्षरणस्याश्रयः पय एव। गौस्तु

तादृशक्षरणांशे विशेषणीभूतस्य ( परंपरया धात्वर्थतावच्छेदकस्य ) विभागस्याश्रय इति गोरप्रधानकर्मत्वं बोध्यम् ( ग० व्यु० २ )। शब्दशक्तिप्रकाशकारास्तु मोचनानुकूलव्यापारो दुहेरर्थः । मोचनं च बहिःक्षरणानुकूला क्रिया । तादृशक्रियायाः साक्षाद्धात्वर्थतावच्छेदकीभूताया आश्रयो गौरिति गोः प्रधानकर्मत्वम् । पयसस्तु परंपरया धात्वर्थतावच्छेदकीभूतबहिःक्षरणात्मकफलाश्रयत्वेन गौणकर्मत्वमित्याहुः ( श० प्र० ९८ ) । अत एव पयःप्रभृतेर्गौणकर्मत्वसंपत्तये अकथितं च ( पा० १।४।५१ ) इति सूत्रान्तरम् ( श० प्र० ९६ ) ।

**अप्रधानत्वम्**—१ गौणत्ववदस्यार्थोनुसंधेयः । २ कर्मणः अप्रधानत्वं च अप्रधानक्रियाफलाश्रयत्वम् । ३ प्राधान्यं हि विधेर्यत्र प्रतिषेधेप्रधानतेति[1] प्राहुः ( वाच० ) ।

**अप्रमा**—( बुद्धिः ) [ क ] तच्छून्ये तन्मतिः ( भा० प० गु० श्लो० १२८ ) । इयं च दोषाज्जन्यते । दोषास्तु पित्तमण्डूकवसाञ्जनादयो नानाविधाः । तथा हि क्वचित्पित्तभ्रमे पित्तं दोषः । क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः । क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनम् । एवंरूपा दोषा अननुगता एव भ्रान्तिजनका इति ( भा० प० श्लो० १३२ ) ( मु० गु० २११ ) । अधिकं तु भ्रमशब्दव्याख्यानावसरे संपादयिष्यते । [ ख ] प्रमाणाभासजन्यः अयथार्थानुभवः ( त० कौ० ६ ) । [ ग ] यत्र यन्नास्ति तत्र तस्य ज्ञानम् । [ घ ] तदभाववति तत्प्रकारकानुभवः ( चि० १।१० ) । यथा पुरोवर्तिन्येवारजते शुक्त्यादौ इदं रजतम् इति रजतारोपः ( त० भा० ४० ) । अप्रमा त्रिविधा । संशयः विपर्ययः तर्कश्चेति ( त० सं० ) (त० भा० ४०) । प्रकारान्तरेणाप्रमा द्वेधा । भ्रमः संशयश्च । तत्र भ्रमो विपर्ययतर्काविल्युच्यते ( त० कौ० ६ ) ( भा० प० श्लो० १२८–१२९ ) ( मु० गु० २०९ ) ।

**अप्राप्तकालम्**—( निग्रहस्थानम् ) [ क ] अवयवविपर्यासवचनमप्राप्तकालम् ( गौ० ५।२।११ ) । प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशा-

[1] अप्रधानतेति पदच्छेदः ।

क्रमः । तत्रावयवविपर्यासेन वचनमप्राप्तकालमसंबद्धार्थकत्वं निग्रहस्थानमिति ( वात्स्या० ५।२।११ ) । [ ख ] समयबन्धविषयीभूतकथाक्रमविपरीतक्रमेणाभिधानम् ( गौ० वृ० ५।२।११ ) ( दि० १।२२ ) । तत्रायं क्रमः—वादिना साधनमुक्त्वा सामान्यतो हेत्वाभासा उद्धरणीया इत्येकः पादः । प्रतिवादिनश्च तत्रोपालम्भो द्वितीयः पादः । प्रतिवादिनः स्वपक्षसाधनम् तत्र हेत्वाभासोद्धरणं चेति तृतीयः पादः । जयपराजयव्यवस्था चतुर्थः पादः । एवं प्रतिज्ञाहेत्वादीनां क्रमः । तत्र सभाक्षोभव्यामोहादिना व्यस्ताभिधानमप्राप्तकालमिति ( गौ० वृ० ५।२।११ ) । [ ग ] अवयवानां व्युत्क्रमेण कथनम् । यथा शब्दत्वाच्छब्दः अनित्य इत्यादि ( नील० ४५ ) ।

अप्राप्तिसमः—(जाति.) [ क ] प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्या अविशिष्टत्वादप्राप्त्या असाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ( गौ० ५।१।७ ) । हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा । अप्राप्य साधकं न भवति । नाप्राप्तः प्रदीपः प्रकाशयतीति । अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः ( वात्स्या० ५।१।७ ) (नील० ४४ ) । [ ख ] अप्राप्त्या असाधकत्वादनिष्टापादनम् । यदि चाप्राप्तं लिङ्गं साध्यबुद्धिं जनयति साध्याभावबुद्धिमेव किं तन्न जनयेत् । अप्राप्तत्वाविशेषात् इति । अयं चाप्राप्तिसमः प्रतिकूलतर्कदेशनाभास इति बोध्यम् (गौ० वृ० ५।१।७) । यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यादौ क्रियाहेतुगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते किमिति क्रियावत्त्वेन तादृशगुणवत्त्वं न साध्यते । उभयोरविशेषात् । इति दोषादप्राप्तस्य हेतोः साध्यसाधकत्वं बाध्यम् । तथा चाप्राप्तत्वाविशेषात्सर्वः सर्वं साधयेदिति । अयमेव हेतुः साध्याभावं किमिति न साधयेत् इत्यत्र विनिगमकाभावादिति ( नील० ४४ ) । [ ग ] अप्राप्य साधयेत्साध्यं हेतुः सर्वत्र साधयेत् । अप्राप्तेरविशिष्टत्वादित्यप्राप्तिसमे स्थितिः ( ता० र० परि० २ श्लो० ११२ ) ।

अफलत्वम्—गुरुफलाजनकत्वम् ( मू० म० १ ) । यथा सर्गादिजेन कृतस्य चैत्यवन्दनादेरफलत्वम् ।

अभावः—१ ( पदार्थः ) [ क ] असमवायत्वे सत्यसमवायः ( सर्व० पृ० २३२ औलु० ) । समवायभिन्नत्वे सति समवायशून्य इत्यर्थः । [ ख ] भावभिन्नः प्रतियोगिज्ञानाधीनज्ञानविषयः । [ ग ] भाट्टास्तु प्रथमप्रतीतौ यः नास्ति इति प्रमाविषयः सः अभावः इत्याहुः (प्र० च० परि० पृ०४९)। अभावश्चतुर्विधः । प्रागभावः प्रध्वंसः अत्यन्ताभावः अन्योन्याभावश्चेति ( त० सं० ) । अभावपदार्थस्योपयोगमाह न्यायलीलावतीकारः अभावो वक्तव्यो निःश्रेयसोपयोगित्वाद्भावप्रपञ्चवत् इति । कारणाभावे कार्याभावस्य सर्वमतसिद्धत्वादुपयोगित्वसिद्धिः ( न्या० ली० पृ० १-२ )। अन्ये तु अभावो द्विधा—संसर्गाभावः अन्योन्याभावः । आद्यस्त्रिविधः प्रागभावः प्रध्वंसः अत्यन्ताभावः इति ( भा० प० श्लो० १२ ) ( त० कौ० २१ ) । द्वितीयस्त्वेकविध एवेति ( मु० १।४१ ) । अत्र संसर्गाभावत्वं च तादात्म्येतरसंसर्गावच्छिन्नप्रतियोगिताकाभावत्वमिति संप्रदायः । भेदेतराभावत्वमिति नव्याः ( प० मा० ) । अत्रेदं बोध्यम्—अभावश्च भावभिन्नः पदार्थः । तत्र भावत्वं च द्रव्यादिषट्कान्यतमत्वम् । अथ वा समवाय एकार्थसमवाय एतदन्यतरसंबन्धेन सत्तावत्त्वम् ( ल० व० २-३ ) । अभावलक्षणं चाभावत्वमेवेति बोध्यम् । अभावविषये केचन नियमाः संभवन्ति । तत्र प्रथमः—अवच्छेदकभेदः अभावभेदनियामक इति । द्वितीयः—विशेषाभावकूटानां सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं स्वीक्रियत इति ( दीधि० २ ) । तृतीयः—अभावप्रत्यक्षं प्रति योग्यानुपलब्धिः कारणम् । तथा हि यद्यत्र घटः स्यात्तर्ह्युपलभ्येत इति तर्किततया घटसत्त्वस्य प्रसक्त्या आपादिताया घटविषयकोपलब्धेरभावो घटाभावप्रत्यक्ष इन्द्रियस्य सहकारीति । भट्टास्तु अभावो नेन्द्रियग्राह्यः कृतसंनिकर्षाणामभावात् । किं तु अनुपलब्धिरूपप्रमाणगम्य इत्याहुः । चतुर्थः—एकप्रतियोगिकयोरप्यत्यन्ताभावान्योन्याभावयोः प्रतियोगितावच्छेदकधर्मप्रतियोगितावच्छेदकसंसर्गभेदाद्बहुत्वम् । तत्र प्रतियोगितावच्छेदकधर्मसंसर्गभेदादत्यन्ताभावबहुत्वम् प्रतियोगितावच्छेदकधर्मभेदादन्योन्याभावबहुत्वम् इति

योजना । तदेव दर्शयामः—केवलदेवदत्ताभावाद्दण्डविशिष्टदेवदत्ताभावो-तिरिक्तः । एकसत्त्वेपि द्वौ न स्तः इति प्रतीत्या द्वित्वावच्छिन्नाभावः संयोगेन घटवति भूतले समवायसंबन्धेन घटाभावः तत्तद्घटाभावा-द्घटत्वावच्छिन्नप्रतियोगिताकसामान्याभावश्चातिरिक्तः । एवमन्योन्याभाव-भेदोपि बोध्यः । अत्यन्ताभावाभावः ध्वंसप्रागभावः प्रागभाव-ध्वंसश्च नातिरिक्तः । अपि तु प्रतियोगिस्वरूप एवेति प्राञ्चः । नव्यास्तु तत्रात्यन्ताभावाभावोतिरिक्त एव । तृतीयाभावश्च प्रथमाभावरूप इति नानवस्थेति प्राहुः । अन्योन्याभावाभावस्तु स्वप्रतियोगिभेदप्रतियो-गितावच्छेदकरूप इति बोध्यम् । सौन्दडोपाध्यायः घटत्वेन पटो नास्ति इति प्रतीत्या व्यधिकरणधर्मावच्छिन्नाभावं स्वीकरोति । इतरे नैयायिकास्तु तं न स्वीकुर्वन्ति । किं तु घटत्वेन पटो नास्ति इति प्रतीतौ पट-वृत्तिघटत्वाभावमेव विषयं केवलान्वयिनं मन्यन्ते । यस्मिन्भूतलात्मके-धिकरणे घटो नास्तीत्यादिप्रत्ययस्तस्मात् केवलाधिकरणादेव नास्ति इति व्यवहारोपपत्तावभावो न पदार्थान्तरम् किं त्वधिकरणात्मक एवेति प्राभाकरा आहुः ( त० दी० ) ( मु० ) ( सि० च० ) ( न्या० म० ) । अत्रेदं बोध्यम्—प्रागभावस्योत्तरावधिकत्वम् । प्रध्वंसस्य पूर्वावधिकत्वम् । अन्योन्याभावस्य प्रतियोगिसमानाधिकरणत्वम् । अत्यन्ताभावस्य तु त्रितयवैधर्म्यम् । अतश्चतुर्थोयमभावः (वै० उ० ९।१।५) । अत्यन्ताभा-वोन्योन्याभावश्च प्रत्येकं द्विविधः । एकमात्रपर्याप्तवृत्तिकधर्मावच्छिन्नप्रतियो-गिताकः व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकश्च । तत्राद्यो यथा घट-त्वावच्छिन्नाभावः । घटत्वादेः प्रत्येकमपि पर्याप्तत्वात् । एकत्रापि अयं घटः इति घटत्वप्रतीतेः ( म०प्र० १३ ) । द्वितीयः एकघटवति द्वित्वावच्छिन्नाभावः ( न्या० म० १।१२ ) । घटवति घटपटौ न स्तः एकघटवति न घटौ घटो न घटपटौ एको न द्वौ इति प्रतीतिभ्य एकघटवति द्वित्वावच्छिन्नोभयात्यन्ताभावस्य एकस्मिन्नुभयान्योन्याभावस्य च सत्त्वात् ( न्या० म० १।१२ ) ( म० प्र० १३ ) । अन्येपि केचि-

इत्यन्ताभावभेदाः प्रदर्श्यन्ते । सामान्याभावश्च—स्वान्यूनानतिरिक्तवृत्तित्वस्वनिष्ठावच्छेदकतानिरूपितत्वोभयसंबन्धेन सामान्यधर्मविशिष्टप्रतियोगिताकाभावः । विशेषाभावश्च—उक्तोभयसंबन्धेन विशेषधर्मविशिष्टप्रतियोगिताकाभावः । व्यधिकरणधर्मावच्छिन्नाभावश्च स्वाश्रयावृत्तित्वस्वनिष्ठावच्छेदकतानिरूपितत्वोभयसंबन्धेन किंचिद्धर्मविशिष्टप्रतियोगिताकाभावः । विशेषरूपेण सामान्याभावश्च स्वसामानाधिकरण्यस्वाधिकरणवृत्त्यभावप्रतियोगित्वोभयसंबन्धेन प्रतियोगित्वविशिष्टधर्मावच्छिन्नप्रतियोगिताकाभावः । सामान्यरूपेण विशेषाभावश्च स्वसामानाधिकरण्यस्वाधिकरणवृत्त्यभावाप्रतियोगित्वोभयसंबन्धेन प्रतियोगित्वविशिष्टधर्मावच्छिन्नप्रतियोगिताकाभावः (ल० व० ३८–३९)। २ प्रमाणविशेषः । व्याप्तिसापेक्षोनुमानम् । तच्च विरोध्यभावज्ञानाधीनं विरोध्यन्तरकल्पनम् । यथा नकुलाभावज्ञाने नकुलविरोधिनो व्यालस्य कल्पनम् । कारणाभावादिना कार्याभावविज्ञानम् ( गौ० वृ० २।२।१ )। अत्रायमाशयः—न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात् ( गौ० २।२।१ ) इत्यत्राभावस्य प्रमाणान्तरत्वं केचिदाशशङ्किरे । तन्न । अभावनिष्ठव्याप्तेरनुमानाङ्गत्वे विरोधाभावात् । तेनाभावस्यानुमानान्तर्गतत्वमेव न तु प्रमाणान्तरत्वमिति ( गौ० वृ० २।२।२ )।

**अभावत्वम्**—[ क ] इदमिह नास्ति इदमिदं न भवति इत्यादिप्रतीतिनियामको भावाभावसाधारणः स्वरूपसंबन्धविशेषः ( दीधि० २ )। [ ख ] प्रतियोगिज्ञानाधीनज्ञानविषयत्वम् ( सि० च० ४ ) ( त० व० ४ )। [ ग ] द्रव्यादिषट्कान्योन्याभाववत्त्वम् ( मु० १।४१ )। [ घ ] भावभिन्नत्वम् ( वाक्य० १ ) ( सि० च० १।४ )। [ ङ ] समवाय—एकार्थसमवाय ( सामानाधिकरण्य ) एतदन्यतरसंबन्धावच्छिन्नप्रतियोगिताकसत्ताभाव इति नव्याः ( दि० १।४१ )। [ च ] भावव्यावृत्तोऽखण्डोपाधिः अनुयोगिताविशेषो वेति संप्रदायः ( मू० म० १ ) ( सि० च० ४ ) ( दि० १।४१ )।

**अभिगमनम्**—( उपासनम् ) देवतास्थानमार्गस्य संमार्जनोपलेपनादि ( सर्व० सं० पृ० ११७ रामानु० ) ।

**अभिघातः**—( संयोगः ) [ क ] यः संयोगः शब्दनिमित्तकारणं भवति यज्जनितं कर्म संयोगिनोः परस्परविभागहेतुश्च भवति स संयोगविशेषोऽभिघातः ( वै० उ० ५।२।१ ) । यथा कुठाराद्यभिघातः ( वै० वि० ५।२।१ ) । [ ख ] स्थिरस्य वेगवद्द्रव्यसंयोगविशेषः ।

**अभिचारः**—[ क ] मारणम् । शत्रुवध इत्यर्थः । यथा श्येनेनाभिचरन्यजेतेत्यादावभिचारः । [ ख ] वैरिवधाद्युत्कटकामना ( त० प्र० ख० ४ पृ० १० ) । अत्र विप्रतिपद्यन्ते । हिंसा च मरणोद्देश्यकः अदृष्टाद्वारकमरणानुकूलव्यापारः । तेन श्येनस्य न हिंसात्वम् । अदृष्टद्वारकत्वात् । एवं च श्येनेनाभिचरन्यजेतेत्यादौ बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वादेर्विशिष्टस्य विध्यर्थत्वेपि तादृशविध्यर्थान्वयबोधो भवत्येवेति प्राञ्चो नैयायिका आहुः । अत्रायमभिप्रायः—प्रथमं श्येनः ततो वधः ततः अपूर्वम् ततो मरणमिति स्थितिः । तथा च श्येनो न स्वरूपतो निषिद्धः किं तु फलत इति बलवदनिष्टाननुबन्धित्वमप्यक्षतम् । तथापि वधाच्च नरक इति न तत्रास्तिकानां प्रवृत्तिरिति ( न्या० म० ४।२७ ) ( म० प्र० ६० ) । नव्यास्तु—श्येनस्याभिचारतया पापजनकत्वस्मरणान्मरणोद्देश्यकं मरणप्रयोजकव्यापारमात्रं हिंसेति निर्वचनीयम् । न त्वदृष्टाद्वारकत्वविशेषणेनापि घटितम् । तेन च श्येनस्य हिंसात्वमस्त्येव । तथा च विधिप्रत्ययस्य बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यत्व एका शक्तिर्युक्ता । किं तु बलवदनिष्टाननुबन्धित्वम् इष्टसाधनत्वम् कृतिसाध्यत्वं चेतेषु पृथक् शक्तित्रयं स्वीकृत्य क्वचित्कस्यचित् क्वचित्कस्यचिदर्थस्य बोध इत्यङ्गीकरणीयम् । एवं च श्येनेनेत्यादौ बलवदनिष्टाननुबन्धित्वस्य अविवक्षितत्वात् बोधो न भवत्येवेत्याहुः । केचित्तु श्येनो हि न हिंसा किं तु श्येनस्य फलं हिंसा । सा च साक्षा-[illegible]व्यापारः । स च व्यापारः श्येनजन्यः [illegible] ।

स एवाभिचारपदार्थः । तस्य पापजनकत्वम् । एवं च श्येनेनाभिचरन् यजेतेत्यादौ श्येनस्य हिंसात्वाभावेन बलवदनिष्टाननुबन्धित्वमपि विधिप्रत्ययेन बोध्यत इत्याहुः । अत्रेदमाकूतम्—प्रथमं श्येनः । ततस्तज्जन्यमपूर्वम् । ततः खड्गाघातादिरूपा हिंसा । तदव्यवहितोत्तरमेव मरणमिति । अत्र श्येनस्य वैधत्वात्पापाजनकत्वेपि अग्रिमपापं प्रतिसंधाय सन्तो न प्रवर्तन्त इति (दि० ) (राम० २२९) ।

**अभिजनः**—यत्र पूर्वैरुषितं सोभिजनः (सिद्धान्तकौ० पृ० १३८ तद्धित० ) ।

**अभिधा**—१ संकेतवदस्यार्थोनुसंधेयः (दि० १) । २ संकेतग्राह्यः शक्तिरूपः अतिरिक्तः पदार्थ इति मीमांसका आहुः (न्या० म० ४।३) ।

**अभिधाभावना**—[क] फलजनकव्यापारानुकूलव्यापाररूपा शब्दनिष्ठा भावनेति भट्टाः । [ख] प्रेरणापरपर्याया पुरुषप्रवृत्तिरूपार्थभावनाभाव्या भावना (सर्व० सं० पृ० २६४ जै०) ।

**अभिधेयत्वम्**—[क] भगवदिच्छारूपशब्दशक्तिविषयत्वम् । तच्च सर्वत्रैव वर्तते । सर्वस्यैव भगवदिच्छाविषयत्वात् । वस्तुपदशक्यत्वात् (न्या० म० २।१९) । [ख] शब्दशक्तिविषयत्वम् (त० प्र० २) (दि० १) । [ग] शब्दशक्यत्वम् (दीधि० २) । यथा घटपटादेः सर्वस्याभिधेयत्वम् ।

**अभिनयः**—१ साक्षादिवार्थाकारादिप्रदर्शिका हस्तादिक्रिया । यथा हस्तचेष्टादिना बदरघटाद्याकारेण अल्पस्तनी स्थूलस्तनी इति प्रदर्शनम् (काव्य० टी० २) । २ अभिलापकशब्दोच्चारणम् । यथा—यत्र धूमस्तत्र वह्निः इति व्याप्तेरभिनयः इत्यादौ ग्रन्थे अभिनयशब्दस्यार्थः (त० दी० २ पृ० २०) । यथा वा पर्वतो वह्निमान् इत्यनुमितेरभिनयः इत्यादौ ग्रन्थे अभिनयशब्दस्यार्थः (सि० च० २ पृ० २३) ।

**अभिनिवेशः**—(क्लेशः) पूर्वजन्मानुभूतमरणदुःखानुभववासनाबलात्सर्वस्य प्राणभृन्मात्रस्य कृमेरा विदुषः संजायमानः शरीरविषयादिभिर्मम वियोगो मा

मूदिति प्रत्यहं निमित्तं विना प्रवर्तमानो भयरूपोभिनिवेशः ( सर्व० सं० पृ० ३६४ पातञ्ज० ) ।

अभिप्रायः—इच्छावदस्यार्थोनुसंधेयः ( दि० गु० ) ।

अभिभवः—१ [ क ] बलवत्सजातीयसंबन्धः । यथा सुवर्णे तेजोरूपस्याभिभवः । तदुक्तम्—भूसंसर्गवशाद्यान्यरूपं नैव प्रकाशते इति ( वै० उ० २।१।७ ) ( दि० १।२ ) ( प० मा० ) । [ ख ] बलवत्सजातीयग्रहणकृतमग्रहणम् । यथा सुवर्णगतरूपवृत्तिशुक्लत्वभास्वरत्वयोरभिभवः । सुवर्णगतरूपस्याप्यभिभव इत्येके ( वै० उ० ४।१।९ ) । २ पराजयप्राप्तिरभिभव इति काव्यज्ञा वदन्ति ।

अभिमानः—१ ( दोषः ) अपकारिण्यकिंचित्करस्यात्मनि द्वेषः ( गौ० वृ० ४।१।३ ) । २ भ्रम इत्यस्मद्गुरुचरणाः ( भिकुशास्त्रिणः ) प्राहुः ।

अभियोगः—परेण कृतस्यापराधस्य राज्ञे प्राड्विवाकाय वा आवेदनम् । ( फिर्याद इति महाराष्ट्रभाषायां प्र० ) । स चाभियोगो द्विविधः । तदुक्तं नारदेन—अभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः । शङ्कासतां तु संसर्गात्तत्त्वं होढाभिदर्शनात् ॥ ( मिताक्षरा० अ० २ श्लो० ५ ) । होढाशब्देन लिङ्गमुच्यते ।

अभिलाषः—१ विषयतासंबन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिव्यधिकरणो व्यापारः । यथा हरिर्भक्तिमभिलषतीत्यादावभिलषतेरर्थः (ल० म० १०२)। २ ( गुणः ) अभ्यवहारेच्छा ( भोजनेच्छा ) ( प्रशस्त० २ पृ० ३३ )।

अभिविधिः—१ अभिव्याप्तिवदस्यार्थोनुसंधेयः ( श० प्र० ११७ ) । २ व्यापकत्वम् । यथा—आ सकलाद्ब्रह्मेत्यादावाङ्घोत्योभिविधिरूपः संबन्धः पञ्चम्यर्थः । सकलव्यापकं ब्रह्म इति बोधः । अभिविधिर्द्विविधः । कालिकः दैशिकश्च । तत्राद्यो यथा—कार्तिक्याश्चैत्रं यावच्छीतमित्यादौ । अत्र चैत्रपदं तदन्त्यकालपरम् । एवं च कार्तिकीप्रभृतिचैत्रान्तकालव्यापकं शीतमिति बोधः । अत्र—कार्तिकपूर्वकालोत्तर—चैत्रोत्तरकाल-

१ भवताम् इति पाठच्छेदः ।

पूर्व—कालव्यापकत्वं चैत्रोत्तरकालावृत्तित्वसहितं शीतभावने यावच्छब्देन प्रत्याय्यते ( ग० व्यु० का० २ ख० २ पृ० ७६ ) । द्वितीयं यथा— काशीतः पाटलिपुत्रं यावद्वृष्टो देव इत्यादौ । अत्र काशीप्रभृतिपाटलिपुत्रान्तदेशव्यापकत्वं वृष्टौ प्रतीयते । अत्र काशीपश्चिमदेशपूर्व—पाटलिपुत्रपूर्वदेशपश्चिम—देशव्यापकत्वं पाटलिपुत्रपूर्वदेशावृत्तित्वसहितं वृष्टौ यावच्छब्देन प्रत्याय्यते । विशेषः पूर्ववत् ( मर्यादाशब्दव्याख्यानोक्तरीत्या ) द्रष्टव्यः ( ग० व्यु० का० २ ख० २ पृ० ७६ ) । अनयोः दैशिककालिकयोरभिविध्योः तात्पर्यवशात्कदाचिद्व्यापकत्वं तद्भिन्नकालावृत्तित्वविशिष्टं तद्भिन्नदेशावृत्तित्वविशिष्टं च प्रतीयत इति बोध्यम् ( ल० म० ११३ ) ।

अभिव्याप्तिः—१ अभिविधिः । स च तदारम्भकयावदवयवावच्छेदेन तत्संयुक्तत्वम् । यथा—गृहं यावद्वनं तवेत्यत्र यावदित्यस्यार्थः । अत्र गृहाभिव्याप्तं त्वद्वनम् इत्याकारो बोधः ( श० प्र० ११७ ) । २ तद्वृत्यधिकरणता—( मासवृत्त्यधिकरणता— ) वच्छेदकीभूतयावत्त्वपर्याप्त्यधिकरणकालवृत्तित्वम् तथाविधयत्किंचिद्यावत्त्वव्यापकं वा । यथा मासं सुप्यत इत्यादौ मासादेरभिव्याप्तिर्द्वितीयार्थः । अत्र कालाध्वनोरत्यन्तसंयोगे ( पा० सू० २।३।५ ) इत्यनेन द्वितीया । मासाभिव्याप्तः स्वापः इति बोधः ( श० प्र० ११७ ) । देशविषये तु तद्वृत्त्यधिकरणता—( क्रोशगम्यदेशवृत्त्यधिकरणता— ) वच्छेदकीभूतयावत्त्वपर्याप्त्यधिकरणदेशवृत्तित्वम् तथाविधयत्किंचिद्यावत्त्वव्यापकं वा । यथा क्रोशं गम्यत इत्यादौ क्रोशादेरभिव्याप्तिर्द्वितीयार्थः । अत्र क्रोशाभिव्याप्तगतेः कर्मत्वम् इति बोधः ( श० प्र० ११७ ) ।

अभिहितान्वयवादः—शाब्दबोधविषयस्य शक्तिज्ञानाविषयत्वनियम इति वादः । यथा तात्पर्यार्थोपि केषुचित् ( काव्यप्र० उ० २ ) इत्यादौ । अत्र अभिहितानां पदोपस्थितानामर्थानामन्वयः संसर्गः संसर्गमर्यादया वाक्यार्थबोधे विषयो भवतीति वादः कथनम् इति व्युत्पत्तिः । मह-

तार्किकाणां मतमेतत् । तन्मते प्रत्येकं तत्तदर्थेषु गृहीतशक्तिकान्येव पदान्याकाङ्क्षादिसहकृततया तत्तत्पदवृत्त्यैव (शक्त्या लक्षणया वा) परस्परान्वितं विशिष्टमेकमर्थं बोधयन्ति । विशिष्टार्थबोधने अतिरिक्ताया वाक्यशक्तेरपेक्षा नास्तीति भावः । अयमेव वाक्यार्थबोध इति शाब्दबोध इति चोच्यते । किं च ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ तप्रत्ययः प्रकृत्यर्थोपरक्तां भावनामभिधत्त इति सिद्धे व्युत्पत्तिमभ्युपगच्छतां भट्टाचार्याणां सिद्धान्त इति विज्ञेयम् (सर्व० पृ० २८६ जैमि०)।

**अभीष्टत्वम्**—स्वकर्तव्यताप्रयोजकेच्छाविषयत्वम् (मू० म० १)। यथा सुखस्याभीष्टत्वम् ।

**अभेदः**—तादात्म्यम् । तच्च स्ववृत्त्यसाधारणधर्मः । यथा नीलो घटः इत्यादौ घटे तन्नीलत्वरूपं तादात्म्यम् (ग० व्यु० १)।

**अभ्यर्थना**—अधीष्टवदस्यार्थोनुसंधेयः (वै० सा० द० १३१)। अधीष्टशब्दस्तु लिङ्शब्दव्याख्यानावसरे व्याख्यास्यते ।

**अभ्यासः**—१ [क] पुनःपुनः संशीलनम् (सर्व० पृ० १२४ रामा०)। [ख] स्थितौ यत्नोभ्यासः । प्रकाशप्रवृत्तिरूपवृत्तिरहितस्य चित्तस्य स्वरूपनिष्ठः परिणामविशेषः स्थितिः । तन्निमित्तीकृत्य यत्नः पुनः पुनस्तथात्वेन चेतसि निवेशनमभ्यासः (सर्व० सं० पृ० ३६६ पातञ्ज०)। [ग] पौनःपुन्यम् । यथा समाधिविशेषाभ्यासात् (गौ० सू० ४।२।३६) इत्यादौ विषयान्तरानभिष्वङ्गस्याभ्यासः (गौ० वृ० ४।२।३६)। [घ] संस्कारबाहुल्यम् । [ङ] दृढतरसंस्कार इति केचित् (गौ० वृ० ३।२।४२)। [च] एकप्रकारा असकृदुक्तिरभ्यास इति भट्टाचार्यानुयायिनो वेदान्तिनः । [छ] समाने विषये ज्ञानानामभ्यावृत्तिः (वात्स्या० ३।२।४२)। [ज] एकविषयानेकविज्ञानोत्पादोभ्यासः (न्या० वा०)। २ विहितयोर्द्वयोः पूर्वोभ्यास इति शाब्दिका वदन्ति ।

**अभ्यासदशा**—[क] विशेषदर्शनाधिकरणकालः । [ख] प्राथमिकज्ञानसमानाकारज्ञानान्तराधिकरणकालः । यथा द्वितीयादिजलज्ञानकालः ।

**अभ्युपगमः**—१ निश्चयविशेषः (मू० म० १)। २ स्वीकारः । यथा—

अस्तु द्रव्यं शब्द इति ( वात्स्या० १।१।३१ ) । यथा वा सूत्रकृताभ्युपगतमित्यादावभ्युपगमः ( गौ० वृ० १।१।३१ ) ।

**अभ्युपगमसिद्धान्तः**—( सिद्धान्तः ) [ क ] अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ( गौ० १।१।३१ ) । यत्र किंचिदर्थजातमभ्युपगम्यते—अस्तु द्रव्यं शब्दः स तु नित्योथानित्य इति द्रव्यस्य सतो नित्यता अनित्यता वा तद्विशेषः परीक्ष्यते सोभ्युपगमसिद्धान्तः स्वबुद्ध्यतिशयचिख्यापयिषया परबुद्ध्यवज्ञानाच्च प्रवर्तत इति ( वात्स्या० १।१।३१ ) । [ ख ] साक्षादसूत्रिताभ्युपगमः । यथा मनस इन्द्रियत्वमिति ( गौ० वृ० १।१।३१ ) । [ ग ] तन्त्रान्तरसिद्धः स्वयमभ्युपगतः । यथा वैशेषिकाभ्युपगतस्य मनसीन्द्रियत्वस्य नैयायिकेनाभ्युपगम इति ।

**अमर्षः**—( दोषः ) कृतापराधे असमर्थस्य द्वेषः ( गौ० वृ० ४।१।३ ) ।

**अमावास्या**—सूर्याचन्द्रमसोर्यः परः संनिकर्षः सा तिथिः ( पु० चि० ३३ ) ।

**अमूर्तगुणत्वम्**—[ क ] मूर्तगुणवृत्तिः संस्कारत्वान्या गुणत्वव्याप्या च या जातिस्तच्छून्यगुणत्वम् । अत्र तादृशी जातिः रूपत्वरसत्वादिर्भवति । तच्छून्यत्वं बुद्ध्यादौ वर्तत इति लक्षणसमन्वयः । अमूर्तगुणाश्च बुद्धिः सुखम् दुःखम् इच्छा द्वेषः प्रयत्नः धर्मः अधर्मः भावना शब्दश्चेति दश सन्ति ( भा० प० गु० १९२ ) । [ ख ] मूर्तताभावव्याप्यतावच्छेदिका परिमाणावृत्तिश्च या जातिस्तद्वत्त्वम् ( दि० गु० १९२ ) । यत्र यत्र बुद्ध्यादयः अमूर्तगुणास्तत्र तत्र मूर्तत्वाभाव इति नियमेन बुद्धित्वसुखत्वादिजातिर्मूर्तत्वाभावस्य व्याप्यतावच्छेदिका भवतीति बोध्यम् । [ ग ] मूर्तावृत्तिः संख्यादिपञ्चकभिन्नो यो गुणस्तत्त्वम् (ल० व०३६)।

**अयथार्थबुद्धिः**—( बुद्धिः ) [ क ] अर्थव्यभिचारिप्रमाणजन्यं ज्ञानम् ( त० भा० ) । अत्रायथार्थत्वं च तदभाववति तत्प्रकारकत्वम् । [ ख ] प्रमाणाभासजन्यं ज्ञानम् ( त० कौ० ६ ) । [ ग ] तच्छून्ये तन्मतिः ( भा० प० गु० श्लो० १२८ ) । [ घ ] यत्र यन्नास्ति तत्र तस्य ज्ञानम् । [ ङ ] तदभाववति तत्प्रकारकं ज्ञानम् ( चि० १।१० ) ।

यथा शुक्तौ इदं रजतम् इति ज्ञानम् । एतानि च पूर्वोक्तानि लक्षणानि स्मृतिसाधारणान्यपि भवन्ति इति बोध्यम् । शुक्तौ इदं रजतम् इति ज्ञाने प्रसिद्धशुक्तिरजतत्वयोरलीक एव समवायो भासत इत्यसत्ख्यातिं वाचस्पतिमिश्रा अङ्गीचक्रुः ( सि० च० १।१९ ) । मीमांसकास्तु अयथार्थज्ञानमेवाप्रसिद्धम् । पुरोवर्तिज्ञानरजतस्मरणाभ्यामेव रजतानयने प्रवृत्त्युपपत्तेरिति वदन्ति ( सि० च० १।१९ ) ।

**अयथार्थानुभवः**—अप्रमावदस्यार्थोनुसंधेयः ( मु० ) ( सि० च० ) ।

**अयनम्**—ऋतुत्रयं चायनं स्यात् ( विष्णुध० ) ( पु० चि० पृ० ९ ) ।

**अयाचितम्**—[ क ] संकल्पोत्तरं याच्ञां विना लब्धस्य दिने रात्रौ वा भोजनयोग्यकाले सकृद्भोजनम् । अयाचितालाभे उपवासः । एतदन्यतरदयाचितस्वरूपम् । [ ख ] याचनां विना अन्येन दत्तस्य भोजनमयाचितम् ( पु० चि० पृ० ४९ ) ।

**अयुतसिद्धम्**—ययोर्द्वयोर्मध्य एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । नाशपूर्वक्षणपर्यन्तमित्यर्थः । अत्रेदं बोध्यम्—न घटाद्यवयवी कपालाद्यवयवासंबद्धः सन् तिष्ठति ( वै० वि० ७।२।१३ ) । अवयव्यादयो हि अविनश्यन्तोवयवाद्याश्रिता एवावतिष्ठन्ते । अवयवादिनाशानन्तरं विनश्यन्तस्तु क्षणमात्रं निराश्रिता एवावतिष्ठन्त इति ( त० कौ० २० ) । अयुतसिद्धौ च पञ्चविधौ । यथा—अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति ( त० सं० ) ( त० कौ० २० ) ( त० भा० पृ० ३ ) ।

**अर्कदैवत्यम्**—( नक्षत्रम् ) हस्तः ( पु० चि० पृ० ३५७ ) ।

**अर्चा**—प्रतिमादयः ( सर्व० सं० पृ० ११५ रामानु० ) ।

**अर्जनम्**—स्वत्वजनकव्यापारः । यथा याजनाध्यापनप्रतिग्रहैर्द्विजो धनमर्जयेदिति श्रुतौ धात्वर्थः ( श० प्र० ८५ ) ।

**अर्थः**—१ अर्थ इति द्रव्यगुणकर्मसु ( वै० ८।२।३ ) । एतस्य व्याख्या—[ क ] एतेषां द्रव्यगुणकर्मणामर्थ्यमानत्वं तेन तेन विधिनोक्तम् । तेन तेषु त्रिषु वैशेषिकाणामर्थ इति परिभाषा । अर्थपदेन त्रयाणामुपस्थितेः ।

तदुक्तं प्रशस्तदेवाचार्यैः—त्रयाणामर्थशब्दाभिधेयत्वं च इति (वै० उ० ८।२।३)। [ख] अर्थ इति शब्दो द्रव्यगुणकर्मसु वर्तते। स च तत्र पारिभाषिकः। गौतमीये तु गन्धरसरूपस्पर्शाः पृथिव्यादिगुणास्तदर्थाः (गौ० १।१।१४) इत्युक्तम्। अतः पञ्चेन्द्रियग्राह्येषु पञ्चसु गुणेष्वपि अर्थशब्दस्य परिभाषान्तरं समानतन्त्रसिद्धम् (वै० वि० ८।२।३)। २ यत्परः शब्दः सः (वि०)। यथा षट् पदार्थाः। ते च द्रव्यगुणकर्मसामान्यविशेषसमवायाः (त० भा० २७) (वै० १।१।४)। प्रमाणादयोऽर्था गौतमसूत्रपठिताः षट्स्वेवान्तर्भवन्ति। प्रयोजनवशात्तु भेदेन निरूपिता इति बोध्यम् (त० भा० २७)। अयं च शब्दार्थ इत्युच्यते (वि० ४) (ग० शक्ति०)। अयमर्थो नैयायिकमते द्विविधः। वाच्यः लक्ष्य इति। व्यङ्ग्योऽपि तृतीयोऽर्थ इत्यालङ्कारिका आहुः (काव्य० २)। वृत्त्या पदप्रतिपाद्यः अर्थ इत्युच्यते (ग० शक्ति०)। यथा घटशब्दस्यार्थः कम्बुग्रीवादिमान्। ३ प्रकारः (वाक्य०)। यथा अर्थाबाधो योग्यतेत्यादावर्थः प्रकारः। अत्र जलेन सिञ्चतीत्यादौ जलकरणकत्वरूपप्रकारस्य सेचनक्रियायामबाध इति बोध्यम्। ४ निवृत्तिः। यथा—अनुमानं परार्थमित्यादौ (चि० अव० २।७६)। अत्र परस्य मध्यस्थस्यार्थः संशयस्य निवृत्तिर्यस्मादिति व्युत्पत्त्यानुमानस्य संशयनिवृत्तिफलकत्वरूपं परार्थत्वं युज्यत इति बोध्यम्। ५ यदाकाङ्क्षया यत्प्रवर्तते स (फलम्) तस्यार्थः (मू० म० १)। ६ विधिजन्यबोधविषयः (धर्मः) अर्थ इति मीमांसका आहुः। ७ धनमर्थ इति लौकिकजना वदन्ति। ८ विषयः। तथा चोक्तम्—अर्थाः स्युरिन्द्रियग्राह्याः इति (ता० र० श्लो० २९)।

**अर्थनिश्चयप्रसङ्गः**—तत्कार्यनिष्कम्पप्रवृत्त्यादिप्रसङ्गः (ग० बाध०)।

**अर्थपुनरुक्तम्**—(निग्रहस्थानम्) एतस्य प्रमादादिना संभवः (गौ० वृ० ५।२।१४)। [क] अर्थस्य पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् (गौ० ५।२।१४)। समानार्थकभिन्नानुपूर्वीकशब्दस्य निष्प्रयोजनं पुनरभिधानम्। यथा घटः कलश इति (गौ० वृ० ५।२।१४)। यथा

था—अनित्यः शब्दो निरोधधर्मको ध्वान इति ( वात्स्या० ५।२।१४ )। [ ख ] अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् ( गौ० ५।२।१५ )। पुनरुक्तमिति प्रकृतम् । निदर्शनम् । उत्पत्तिधर्मकत्वादनित्यमित्युक्त्वा अर्थादापन्नस्य योभिधायकः शब्दस्तेन स्वशब्देन ब्रूयादनुत्पत्तिधर्मकं नित्यमिति । तच्च पुनरुक्तं वेदितव्यम् । अर्थसंप्रत्ययार्थे शब्दप्रयोगे प्रतीतः सोर्थोर्थापत्त्येति ( वात्स्या० ५।२।१५ )। [ ग ] यस्मिन्नुक्ते यस्यार्थस्यौत्सर्गिकी प्रतिपत्तिर्भवति तस्य तेन रूपेण पुनरभिधानं पुनरुक्तम् । इदमेव चार्थपुनरुक्तमिति गीयते । यथा वह्निरुष्ण इति । पूर्वपदाक्षिप्तोक्तिरियम् । उष्णो वह्निरिति उत्तरपदाक्षिप्तोक्तिः । एवं वह्निरस्ति गेहे नास्ति इति विध्याक्षिप्तोक्तिः । जीवन्गेहे नास्ति बहिरस्ति इति निषेधाक्षिप्तोक्तिः ( गौ० वृ० ५।२।१५ )।

**अर्थवादः**—( शब्दः ) अर्थस्य प्रयोजनस्य वादो वादनम् । विध्यर्थप्रशंसापरं वचनमित्यर्थः । अर्थवादो हि स्तुत्यादिद्वारा विध्यर्थे शीघ्रं प्रवृत्तये प्रशंसति ( गौ० वृ० २।१।६३ )। निषिद्धार्थे शीघ्रं निवृत्तये निन्दति च । स चायं अर्थवादः लोके वेदे च समानः ( त० कौ० ४।१७ )। तत्र लौकिकः—ओदनकामस्तण्डुलं पचेत तृप्तिकामस्तण्डुलौदनं भुञ्जीतेत्यादौ विध्यर्थस्य तण्डुलपाककरणस्य तण्डुलौदनभोजनरूपस्य च स्तावकं तण्डुलपाक ऋषिभिः पूर्वं स्वर्गाद्यर्थं कृतः ओदनममृतम् इत्यादि वाक्यम् । एवं कफज्वरपीडितो दुग्धं न पिबेदित्यादिनिषेधविधिस्थलेपि दुग्धपानस्य निन्दकं पशुभिर्भक्षितेनापथ्यतृणादिना दुग्धं जन्यते तच्च विषरूपमित्यादिकं वाक्यम् । वैदिकोदाहरणानि त्वनुपदं प्रदर्श्यन्ते । अर्थवादश्च विधिनिषेधभिन्नः शब्दः । यथा—आदित्यो यूपः अग्निर्हिमस्य भेषजम् वज्रहस्तः पुरंदर इत्यादि ( त० कौ० ४ पृ० १७ )। अत्राद्यं गुणवादोदाहरणम् । द्वितीयमनुवादोदाहरणम् । तृतीयं भूतार्थवादोदाहरणम् । प्राशस्त्यनिन्दान्यतरपरं वाक्यं चार्थवादः ( कौ० भा० )। यथा वायुर्वै क्षेपिष्ठा देवतेत्यादिः । सोरोदीदित्यादिर्वा । अत्र च वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता

*वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति* ( कृष्णयजुः-संहिता २।१।१ ) इत्यादौ वायुर्वै क्षेपिष्ठेत्याद्यर्थवादो हि वायव्यं श्वेतमालभेतेत्यादिविधिविहितं श्वेतपश्वालम्भनं श्वेतपशुकरणको यागः प्रशस्तः इति प्रशंसतीति विज्ञेयम् । सोरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम् ( कृष्णयजुः० १।५।१ ) इति वाक्यं तु कृताकृत्विग्भ्यो रजतं न देयम् इति निषिद्धं रजतदक्षिणादानं निन्दतीति बोध्यम् । अर्थवादश्चतुर्विधः । स्तुतिः निन्दा परकृतिः पुराकल्पः ( गौ० २।१।६४ ) । प्रकारान्तरेण स त्रिविधः । गुणवादः अनुवादः भूतार्थवादश्चेति ( न्या० म० ४ पृ० ३० ) । तदुक्तम्—विरोधे गुणवादः स्यादनुवादोवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ इति ( न्या० म० ४ पृ० ३१ ) । मीमांसकास्तु विधिशेषः निषेधशेषश्चेत्यर्थवादं द्वैविध्येन विभेजिरे ( लौ० भा० ) ।

**अर्थान्तरम्**—( निग्रहस्थानम् ) [ क ] प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरम् ( गौ० ५।२।७ ) । यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां ब्रूयात् । नित्यः शब्दः अस्पर्शत्वादिति हेतुः । हेतुर्नाम हिनोतेर्धातोस्तुनि प्रत्यये कृदन्तपदम् । पदं च नामाख्यातोपसर्गनिपाताः । अभिधेयस्य क्रियान्तरयोगाद्विशिष्यमाणरूपः शब्दो नाम । क्रियाकारकसमुदायः । कारकसंख्याविशिष्टक्रियाकालयोगाभिधाय्याख्यातम् । धात्वर्थमात्रं च कालाभिधानविशिष्टम् । प्रयोगेष्वर्थादभिद्यमानरूपा निपाताः । उपसृज्यमानाः क्रियावद्योतका उपसर्गाः इत्येवमादि । तदर्थान्तरं वेदितव्यम् ( वात्स्या० ५।२।७ ) ( नील० पृ० ४५ ) । [ ख ] प्रकृतोपयुक्तमर्थमुपेक्ष्यासंबद्धार्थाभिधानम् । प्रकृतानाकाङ्क्षिताभिधानमिति फलितार्थः । यथा अनित्यः शब्दः कृतकत्वादित्युक्त्वा शब्दो गुणः स चाकाशस्येत्यादि ( गौ० वृ० ५।२।७ ) ( त० भा० पृ० ५१ ) ( दि० १ पृ० २२ ) ।

**अर्थापत्तिः**—( अनुमानम् ) [ क ] वाक्यार्थसंप्रत्ययेनानभिहितस्यार्थस्य प्रत्यनीकभावाद्ग्रहणमर्थापत्तिः ( वात्स्या० २।२।२ ) । [ ख ] अनु-

पपद्यमानेनार्थेनोपपादककल्पनम् । यथा वृष्ट्या मेघज्ञानम् ( गौ० वृ० २।२।१ ) । [ ग ] यत्राभिधीयमानेर्थे योन्योर्थः प्रसज्यते सोर्थापत्तिः । यथा मेघेष्वसत्सु वृष्टिर्न भवतीति । किमत्र प्रसज्यते । सत्सु भवतीति ( वात्स्या० २।२।१ ) । [ घ ] पुनरनुसंधीयमानशब्दासहकृतमनुपपत्तिज्ञानमिति गदाधरभट्टाचार्याः । [ ङ ] उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः । तत्र उपपाद्यज्ञानं करणम् । उपपादकज्ञानं फलम् । येन विना यदनुपपन्नं तत्तत्रोपपाद्यम् । यस्याभावे यस्यानुपपत्तिस्तत्तत्रोपपादकम् । यथा रात्रिभोजनेन विना दिवा अभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृशपीनत्वमुपपाद्यम् । यथा वा रात्रिभोजनस्याभावे तादृशपीनत्वस्यानुपपत्तिरिति रात्रिभोजनमुपपादकम् । अत्र अर्थस्य आपत्तिर्नाम कल्पनेति षष्ठीसमासेन रात्रिभोजनकल्पनारूपायां प्रमितावर्थापत्तिशब्दो वर्तते । अर्थस्य आपत्तिर्नाम कल्पना यस्मादिति बहुव्रीहिसमासेन कल्पनायाः करणभूते पीनत्वादिज्ञानेपि वर्तते । एवं च फलकरणयोरुभयोरर्थापत्तिपदप्रयोगो भवति । सा चार्थापत्तिर्द्विविधा—दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति । तत्र दृष्टार्थापत्तिर्यथा इदं रजतमिति पुरोवर्तिनि प्रतिपन्नस्य रजतस्य नेदं रजतमिति तत्रैव निषिध्यमानत्वं सत्यत्वे सति अनुपपन्नमिति रजतस्य मिथ्यात्वं कल्पयति । श्रुतार्थापत्तिर्यथा यत्र श्रूयमाणवाक्यस्य स्वार्थानुपपत्तिमुखेनार्थान्तरकल्पनं सा । यथा तरति शोकमात्मविदित्यत्र श्रुतस्य शोकशब्दवाच्यबन्धजातस्य ज्ञाननिवर्त्यस्यानुपपत्त्या बन्धस्य मिथ्यात्वं कल्प्यते । श्रुतार्थापत्तिश्च द्विविधा—अभिधानानुपपत्तिरभिहितानुपपत्तिश्च । तत्र यत्र वाक्यैकदेशश्रवणे अन्वयाभिधानानुपपत्त्या अन्वयाभिधानोपयोगि पदान्तरं कल्प्यते तत्राभिधानानुपपत्तिः । यथा द्वारमित्यत्र पिधेहीत्यध्याहारः । अभिहितानुपपत्तिस्तु—यत्र वाक्यावगतोर्थोनुपपन्नत्वेन ज्ञातः सन्नर्थान्तरं कल्पयति तत्र द्रष्टव्या । यथा स्वर्गकामो ज्योतिष्टोमेन यजेतेत्यत्र क्षणिकतया अवगतज्योतिष्टोमस्य स्वर्गसाधनत्वानुपपत्त्या मध्यवर्त्यपूर्वं कल्प्यते । अत्र नैयायिकाः—अर्थापत्तिर्न प्रमाणान्तरम् । किंतु व्यतिरेकव्याप्त्या अनुमाने अन्तर्भावादिति । वेदान्तिनां मते तु व्यतिरेकव्याप्तिर्नाम यत्र

साध्याभावस्तत्र साधनाभावः । तथा च साध्याभावेन साधनाभावस्य सिद्धावपि साध्यसिद्धौ न तस्योपयोगः । कथं तर्हि धूमादावन्वयव्याप्तिमविदुषोपि व्यतिरेकव्याप्तिज्ञानादनुमितिरिति चेत् । अर्थापत्तिप्रमाणादिति बोध्यम् । वेदान्तपरिभाषायां स्पष्टमेतत् ।

**अर्थापत्तिसमः**—( जातिः ) [ क ] अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ( गौ० ५।१।२१ ) । अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदिति स्थापिते पक्षे अर्थापत्त्या प्रतिपक्षं साधयतोर्थापत्तिसमः । यदि प्रयत्नानन्तरीयकत्वादनित्यसाधर्म्यादनित्यः शब्द इति अर्थादापद्यते नित्यसाधर्म्यान्नित्यः इति । अस्ति त्वस्य नित्येन साधर्म्यमस्पर्शत्वमिति (वात्स्या० ५।१।२१ ) । [ ख ] अर्थापत्त्याभासेन प्रतिपक्षसाधनाय प्रत्यवस्थानम् । अयमाशयः—अर्थापत्तिर्ह्युक्तेनानुक्तमाक्षिपति । यथा—अनित्यः शब्द इत्युक्तेर्थादापद्यतेन्यन्नित्यम् । तथा च दृष्टान्तासिद्धिर्विरोधश्च । कृतकत्वादनित्य इत्युक्तेर्थादापन्नम् अन्यस्माद्धेतोर्बाधः सत्प्रतिपक्षो वा । अनुमानादनित्य इत्युक्ते प्रत्यक्षान्नित्य इति च बाधः ( गौ० वृ० ५।१।२१ ) । [ ग ] अर्थापत्तिपुरस्कारेण साध्याभावोद्भावनम् । यथा अनित्यः शब्दः कार्यत्वादित्यादौ शब्दस्यानित्यसाधर्म्यादनित्यत्वं यदि तदा अर्थापत्त्या सिद्धं नित्यसाधर्म्यान्नित्यत्वमपि । एकतरावधारणे नियामकाभावादिति ( नील० पृ० ४४ ) । [ घ ] व्याप्तिं विना वादिवाक्यादर्थापेक्षाभिमानतः । विपरीतसमारोपमर्थापत्तिसमं विदुः ॥ ( ता० र० २ श्लो० १२० ) ।

**अर्थी**—साध्यस्यार्थस्य निर्देष्टा ( मिताक्षरा० अ० २ श्लो० ८० ) ।

**अर्धोदयः**—अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः । अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ॥ ( पु० चि० पृ० ३१६ ) ।

**अर्हन्**—सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः । यथास्थितार्थवादी च देवोर्हन्परमेश्वरः ( सर्व० सं० पृ० ५६ आर्हत० ) ।

**अलंकारः**—१ शब्दार्थभूषणमनुप्रासोपमादिः । स च बहुविधः । अत्रालंकारत्वं च रसादिभिन्नं यद्व्यङ्ग्यं तद्भिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयतासंबन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम् इति । अत्र अनुप्रासादिविशिष्टशब्दज्ञानात् उपमादिविशिष्टार्थज्ञानाच्च चमत्कृतिर्जायत इति लक्षणसमन्वयो बोध्यः (अलंकारचन्द्रिका)। अलंकाराणां च शोभातिशायित्वमुक्तम्—शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः । रसादीनुपकुर्वन्तोलंकारास्तेङ्गदादिवत् ॥ इति । २ हारादिभूषणमलंकार इति काव्यज्ञा वदन्ति ।

**अलब्धभूमिकत्वम्**—कुतश्चिन्निमित्तात्समाधिभूमेरलाभः ( सर्व० सं० पृ० ३५५ पातञ्ज० ) ।

**अलम्**—१ समर्थम् । यथा सुखायालं भोजनमित्यादौ । अत्र अलमादिपदार्थैकदेशे सामर्थ्ये सुखादिनिरूपितत्वं चतुर्थ्या बोध्यते । २ वैफल्यम् । यथा अलमनेनेत्यादौ ( श० प्र० पृ० १२६ ) ।

**अलीकत्वम्**—१ ज्ञानाविषयत्वम् । यथा शशशृङ्गादेरलीकत्वम् । अत्र वेदान्तिनस्तु शशशृङ्गकूर्मरोमादीनि तुच्छशब्देन व्यवहरन्तीति बोध्यम् । २ अन्यव्यावृत्तिः । यथा नास्तिकमते अयं घटः इति ज्ञाने विषयीभूतस्य घटत्वादेरलीकत्वमित्यत्र । अयं भावः। अघटव्यावृत्तिरेव घटे घटत्वम् न तु भावरूपम् । अभावस्तु तुच्छ एवेति नास्तिकैरभ्युपगम्यते इति ( म० प्र० १ पृ० ९ ) । अत्र नैयायिकाः नास्तिकमते शशशृङ्गाद्यलीकमसत्ख्यात्या सिध्यति । सा चासत्ख्यातिर्नोपपद्यते । ज्ञानविषयत्वस्यास्तित्वव्याप्यतया असत्ख्यातिविषयत्वस्य संनिकृष्टभेदप्रतियोगितावच्छेदकत्वासिद्धेरित्याहुः ( म० प्र० पृ० १७ ) ।

**अलौकिकत्वम्**—[ क ] लोकावगतेष्टसाधनताश्रयान्यत्वम् । अत्र लोकशब्दार्थश्च वेदतदुपजीविप्रमाणातिरिक्तप्रमाणम् । यथा नमस्कारादिकं मङ्गलं वेदबोधितसमाप्तिसाधनताकम् समाप्त्युद्देश्यकालौकिकाविगीत-

शिष्टाचारविषयत्वात् दर्शादिवत् ( मू० म० मङ्ग० १ पृ० १६ ) इत्यादावाचारस्य मङ्गलस्य वा अलौकिकत्वम् । [ ख ] उपाध्यायास्तु लोकावगतबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताश्रयान्यत्वम् इत्याहुः ( मू० म० मङ्ग० १ पृ० १७ ) । [ ग ] रागतोप्राप्तत्वमित्यस्मद्गुरुचरणाः प्राहुः । [ घ ] वेदबोधितेष्टसाधनताकत्वमिति मीमांसकाः ( मू० म० १ ) ।

**अलौकिकप्रत्यक्षम्**—( प्रत्यक्षम् ) अलौकिकसंनिकर्षजन्यं प्रत्यक्षम् । अत्र संनिकर्षे अलौकिकत्वं च सामान्यलक्षणज्ञानलक्षणयोगज एतदन्यतमत्वम् । विषयताविशेषो वा । यथा धूमत्वज्ञानानन्तरं सामान्यलक्षणप्रत्यासत्त्या जायमानं सर्वे धूमा धूमत्ववन्तः इति धूमत्वाश्रयसकलधूमविषयकं प्रत्यक्षम् ( मु० १ पृ० १२७ ) ।

**अवकीर्णी**—ब्रह्मचारी सन् स्त्रीरतः ( जै० सू० वृ० ६।८।२४ ) ।

**अवक्षेपणम्**—( कर्म ) अपक्षेपणवदस्यार्थोनुसंधेयः ।

**अवगाहः**—अन्यवस्तुप्रदेशमध्ये अन्यस्य वस्तुनः प्रवेशोवगाहः ( सर्व० सं० पृ० ७१ आर्ह० ) ।

**अवगाहनम्**—[ क ] विषयिता । यथा घटवद्भूतलम् इति ज्ञानं घटाद्यवगाहीत्यादाववगाहनं विषयिता भवति । [ ख ] विषयीकरणमित्यपि केचिद्वदन्ति ।

**अवचरः**—साधनम् ( जै० सू० वृ० ३।१।२१ ) ।

**अवच्छिन्नत्वम्**—१ व्यापकत्वम् ( मू० म० १ ) । यथा ह्रदे वह्निमत्ताबुद्धिनिरूपितप्रतिबन्धकतायां ह्रदो न वह्निमान् इति निश्चयीयविषयिताया अवच्छिन्नत्वम् ( ग० सामा० ) । अवच्छिन्नत्वावच्छेदकत्वयोः ( स्वरूपसंबन्धरूपयोः ) तुल्यवित्तिवेद्यत्वेन साकाङ्क्षत्वेन च परस्परं निरूप्यनिरूपकभावो बोध्यः । तथा चावच्छेदकतानिरूपकताकत्वमेवावच्छिन्नत्वमित्युक्त्यैव निर्वाहेवच्छिन्नत्वनिरुक्तिः शिष्यबुद्धिवैशद्यायेति सर्वं

समञ्जसम् । २ सामानाधिकरण्यम् । यथा वह्निव्याप्यधूमवान्पर्वतः इति परामर्शनिरूपितयोर्धूमनिष्ठविषयतयोरवच्छेद्यावच्छेदकभावः । अत्रेदं बोध्यम्—मध्यवृत्तिविषयतयोर्भेदपक्षे पर्वतत्वावच्छिन्नविशेष्यतानिरूपितधूमनिष्ठप्रकारत्वस्य व्याप्तिनिष्ठप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यत्वस्य च परस्परमवच्छेद्यावच्छेदकभावः सामानाधिकरण्यात्मकः स्वीकृत इति । ३ स्वरूपसंबन्धविशेषः । यथा अग्रे वृक्षः कपिसंयोगी न मूले इत्यादौ कपिसंयोगस्याग्रावच्छिन्नत्वम् । वृक्षसंबन्ध्यग्रभागवृत्तित्वमित्यर्थः । ४ विशिष्टत्वम् । यथा घटत्वावच्छिन्नो घट इत्यादौ घटस्य घटत्वावच्छिन्नत्वम् । ५ साहित्यम् । यथा शरीरावच्छिन्न आत्मनि भोगो जायत इत्यादौ आत्मनः शरीरावच्छिन्नत्वम् । ६ अनुकूलत्वम् प्रयोजकत्वं वा । *यथा फलावच्छिन्नव्यापारो धात्वर्थ इत्यादौ व्यापारस्य फलावच्छिन्नत्वम् ।* ७ संबन्ध इति शाब्दिका वदन्ति ( वै० सा० द० )। ८ इयत्ताकरणम् । यथा द्रोणावच्छिन्नो व्रीहिरित्यादौ । ९ सीमाकरणम् । यथा गृहावच्छिन्न आकाशः कर्णशष्कुल्यवच्छिन्न आकाश इत्यादौ । एवमन्तःकरणावच्छिन्नं चैतन्यं जीव इति मायावादिमतेपि ज्ञेयम् ( वाच० ) ।

**अवच्छेदः**—१ प्रतियोगी । यथा अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनादित्यादौ ( कु० ३ श्लो० २२ टी० ) । २ व्याप्तिः । यथा पक्षतावच्छेदकावच्छेदेन साध्यसिद्धावित्यादौ साध्यनिरूपिता पक्षतावच्छेदकनिष्ठा व्याप्तिः । अत्र व्यापकत्वमप्यवच्छेदशब्दस्यार्थः संभवति । तथा च पक्षतावच्छेदकव्यापकत्वविशिष्टसाध्यसिद्धौ इति बोधः । ३ इयत्ताकरणम् । यथा अग्रावच्छेदेन कपिसंयोगः मूलावच्छेदेन कपिसंयोगाभाव इत्यादौ । ४ अवधारणम् । यथा शब्दार्थानामवच्छेदे ( शब्दार्थस्यानवच्छेदे ) विशेषस्मृतिहेतव इत्यादौ । ५ इयत्ताकरणसाधनम् । यथा अग्रे वृक्षः कपिसंयोगी न मूल इत्यादौ संयोगादेरव्याप्यवृत्तित्वनियामको वृक्षैकावयवो मूलाग्रादिप्रदेशः ( वाच० ) । यथा वा इदानीं चत्वरे गौर्नास्तीत्यादावेतत्कालोप्यवच्छेदो भवति । अत्रार्थे अवच्छिद्यतेनेनेति करणे घञ् । तेनावच्छेदकशब्दार्थः संपन्न इति ज्ञेयम् । ६ संकोचः ।

**अवच्छेदकत्वम्**—१ स्वरूपसंबन्धविशेषः । स च क्वचित् [ क ] प्रतियोग्यंशप्रकारीभूतधर्मत्वम् । यथा प्रमेयधूमाभावप्रतियोगिताया अवच्छेदकत्वं धूमत्वे । अत्रायं नियमः—संभवति लघौ गुरौ तदभाव इति । तेन गुरुभूते प्रमेयत्वविशिष्टधूमत्वेवच्छेदकत्वमनादृत्य शुद्धधूमत्व एवावच्छेदकत्वं स्वीकृतमिति ज्ञेयम् । समानाधिकरणयोरेव धर्मयोरवच्छेद्यावच्छेदकभाव इति सामान्यनियमो बाहुल्येन प्रवर्तत इत्येतत्सुधीभिश्चिन्त्यम् । क्वचित् [ ख ] अनतिरिक्तवृत्तित्वम् । तच्च द्विविधम् । तत्राद्यम्—तच्छून्यावृत्तित्वे सति तदधिकरणवृत्त्यभावाप्रतियोगित्वम् । यथा घटाभावप्रतियोगिताया अवच्छेदकत्वं घटत्वे । अत्रायं नियमः—अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकत्वम् इति । तेनातिरिक्तवृत्तिद्रव्यत्वादौ घटाभावीयप्रतियोगिताया अवच्छेदकत्वनिरासः । अनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं च यद्यपि न स्वरूपसंबन्धरूपावच्छेदकत्वेन्तर्भवेत्तथाप्युदाहरणानुरोधेन तत् अन्तर्निवेशितम् । वस्तुतस्तु तत्तन्निष्ठमवच्छेदकत्वं च तत्तद्वित्तिवेद्यमेवेति नैवानुगमय्य निर्वक्तुं शक्यमिति तु वयम् । द्वितीयं तु व्यावर्तकत्व—सामानाधिकरण्य—स्वनिष्ठावच्छेद्यताकत्व—एतत्रितयसंबन्धेन यत्किंचिद्धर्मविशिष्टत्वम् । यथा घटकारणताया अवच्छेदकत्वं दण्डत्वे । अत्र च इतरभेदानुमितिजनकज्ञानविषयत्वात्मकव्यावर्तकतायामवच्छेदकस्तु परंपरासंबन्धो बोध्यः । क्वचित् [ ग ] तदधिकरणस्य तन्निष्ठधर्मावच्छेदकत्वम् । यथा मूले वृक्षे न कपिसंयोगः किं तु शाखायामित्यादौ वृक्षाधिकरणस्य मूलस्य वृक्षनिष्ठकपिसंयोगाभावावच्छेदकत्वम् वृक्षाधिकरणस्य शाखादेर्वृक्षनिष्ठकपिसंयोगावच्छेदकत्वं च ( ल० व० पृ० २२ ) । अत्रावच्छेदकत्वं च स्वाश्रयसंबन्धित्वम् । स्वम् अवच्छेद्यत्वेनाभिमतः कपिसंयोगाभावादिः । यथा वा इह पर्वते नितम्बे हुताशनः न शिखर इत्यत्र नितम्बरूपदेशस्य हुताशनावच्छेदकत्वम् शिखरस्य तु हुताशनाभावावच्छेदकत्वं च । अत्रायं विशेषः—संयोगेन द्रव्यस्याव्याप्यवृत्तित्वमिति मत एतस्यावच्छेदकत्वम् इति । *यथा वा इदानीं चत्वरे गौर्नास्तीत्यादावेतत्कालेपि गवाभावस्यावच्छेदक-*

त्वम् । अत्रेदं बोध्यम् । देशे वृत्तौ कालस्यावच्छेदकत्वम् काले वृत्तौ देशस्यावच्छेदकत्वम् इति नियमेन गवाभावावच्छेदकत्वं कदाचिद्देशस्य कदाचित्तु कालस्यापि संभवति इति । किंचात्र अवच्छेद्याधिकरणत्वं यस्य संभवति तस्यैवावच्छेदकत्वम् इति नियमोप्यङ्गीकर्तव्यः । तेन प्रलयस्य गवावच्छेदकत्वापत्त्यसंभवः ( ग० च० १ स्वलक्षण० ) । देशकालयोरवच्छेदकत्वं तु स्वरूपसंबन्धरूपमेवेति नियमोत्र ज्ञेयः । २ अवच्छेदकत्वाख्यो विषयतात्मकः स्वरूपसंबन्धविशेषः । यथा पर्वते वह्निसाधने पर्वतत्वस्य पर्वतो वह्निमान् इत्यनुमित्यात्मकज्ञानीयवह्निनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकत्वम् । ३ स्वाश्रयजन्यत्वम् स्वाश्रयविशेषणत्वं वा । यथा धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमित्यादौ फले धात्वर्थताया अवच्छेदकत्वम् । स्वं धात्वर्थता । तदाश्रयो व्यापाररूपो धात्वर्थः । तज्जन्यत्वं फले । शाब्दिकास्तु फलावच्छिन्नव्यापार इत्यादौ फलसंबन्धिव्यापारः इति बोधोदयात् संबन्ध एवात्रावच्छेदकत्वमित्याहुः ( वै० सा० द० मु० ) । ४ व्यापकत्वम् । यथा पर्वतत्वावच्छेदेन वह्नौ साध्ये पर्वतो वह्निमानित्यादौ पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगत्वस्यावगाह्यमानं संसर्गतावच्छेदकत्वम् ( ल० व० पृ० २२ ) । अत्र पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगस्याप्रसिद्ध्या तादृशसंयोगत्वे संसर्गताया अवच्छेदकत्वं न भासते अपितु केवलसंयोग एव पर्वतत्वव्यापकत्वं संसर्गतावच्छेदकत्वेन ( अवच्छेदककोटिप्रविष्टानामप्यवच्छेदकत्वमिति पक्षे ) भासते इति तु वयम् । ५ व्याप्यत्वम् । यथा यद्रूपावच्छिन्नविषयतानिरूपितविषयिता अनुमितिप्रतिबन्धकतावच्छेदिका तद्रूपावच्छिन्नत्वमिति हेत्वाभाससामान्यलक्षणे ह्रदो न वह्निमान् इति निश्चयीयविषयितायां ह्रदो वह्निमान् इत्यनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताया अवच्छेदकत्वम् । व्याप्यत्वमित्यस्य स्वव्यापकतत्कत्वमित्यर्थः ( ग० सामा० प० ९ ) । क्वचिच्च स्वव्यापकतत्कान्यत्व—तत्सामानाधिकरण्य—एतदुभयाभाववत्त्वम् । तेन व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वं संगच्छते ( ग० च० द्वितीयस्वलक्षण०

प० १७ ) । ६ तदधिकरणावृत्तित्वेन ज्ञायमानत्वम् ( वै० उ० ९।१।८ ) । ज्ञायमानत्वमित्यत्र ज्ञानपदं प्रमापरम् । तेन घटत्वादेः समानाधिकरणधर्मस्य घटाद्यभावीयप्रतियोगितावच्छेदकत्वनिरासः । यथा घटत्वेन पटो नास्तीत्यादौ घटत्वे पटनिष्ठप्रतियोगिताया अवच्छेदकत्वम् । अत्र तृतीयान्तोल्लिख्यस्यावच्छेदकत्वम् इति नियममनुसृत्य केवलान्वयी व्यधिकरणधर्मावच्छिन्नाभावः सौन्दडोपाध्यायेन स्वीकृतः । गङ्गेशोपाध्यायादयो नैयायिकास्तु नेमं व्यधिकरणधर्मावच्छिन्नाभावं स्वीचक्रुरिति विज्ञेयम् । यद्यप्येतस्यार्थान्तराभिप्रायेणोच्चारितस्यात्र ग्रहणं नोपस्कारसंदर्भमनुसरति तथाप्यत्रार्थेपि नियोक्तुं युज्यत इति मयायं शब्दोत्र गृहीत इति बोध्यम् । ७ विशेषणत्वम् । यथा वक्तृज्ञानावच्छेदकतयेत्यादौ ( कु० २ श्लो० १४ व्या० ता० पृ० ३४ ) । ८ नियामकत्वमेवावच्छेदकत्वमिति केचिद्वदन्ति ( वाच० ) । सामान्यतोवच्छेद्यावच्छेदकभावो द्विविधः । स्वरूपसंबन्धरूपः व्याप्यव्यापकभावश्च । तत्राद्यो यथा इदानीं चत्वरे गौर्नास्तीत्यादावेतत्कालगवाभावयोरवच्छेद्यावच्छेदकभावः । अत्र एतत्कालावच्छेदेन ( एतत्काले ) गवाभावः इति शाब्दबोधो भवतीति बोध्यम् । यथा वा मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादौ मूलादिसंयोगाद्योरवच्छेद्यावच्छेदकभावः । द्वितीयो यथा पृथिवी रूपवतीत्यादौ रूपपृथिवीत्वयोरवच्छेद्यावच्छेदकभावः ( ग० पक्ष० पृ० २० ) । अत्र पृथिवीत्वव्यापकं रूपम् इति शाब्दो बोधो भवतीति बोध्यम् ।

**अवच्छेद्यत्वम्**—अवच्छिन्नत्ववदस्यार्थोनुसंधेयः ।

**अवच्छेद्यावच्छेदकभावावगाहिनी**—( अनुमितिः ) [ क ] पक्षतावच्छेदकाक्रान्तयावद्व्यक्तिविषयकानुमितिरिति प्राञ्चो नैयायिका वदन्ति । इयं च देशकालभिन्नानां यत्र पक्षतावच्छेदकता तादृशस्थलीयेति ज्ञेयम् । एवमुत्तरत्रापि । [ ख ] पक्षतावच्छेदकव्यापकत्वविशिष्टसाध्यतावच्छेदकसंबन्धावच्छिन्ना साध्यतावच्छेदकावच्छिन्ना या विधेयता तच्छालिन्यनुमितिरिति नवीननैयायिकाः प्राहुः । यथा पर्वतत्वावच्छेदेन वह्नौ साध्ये

पर्वतो वह्निमान् इत्यनुमितिः ।* अत्र नवीनमते पक्षतावच्छेदकव्यापकत्वं साध्ये साध्यसंबन्धे वा संसर्गतया संसर्गतावच्छेदकतया च यथाक्रमं भासते । अतोवच्छेदकावच्छेदेनानुमितेर्न पर्वतत्वाद्यवच्छिन्नवह्निमान् पर्वतः इत्याकारकता इति बोध्यम् । अत्रेदमवधेयम् । यत्र देशकालयोः पक्षतावच्छेदकता यथा मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादौ उत्पत्तिकालावच्छिन्नो घटो गन्धवानित्यादौ च तत्र स्वरूपसंबन्धरूपावच्छेद्यावच्छेदकभावावगाहिन्येवानुमितिर्भवति । यत्र तु देशकालभिन्नानां पक्षतावच्छेदकता यथा पर्वतो वह्निमानित्यादौ पृथिवी रूपवतीत्यादौ च तत्र व्याप्यव्यापकभावरूपावच्छेद्यावच्छेदकभावावगाहिन्यनुमितिर्भवतीति (ग० पक्ष० पृ० २० ) ।

**अवदानम्**—हविष्ट्वप्रयोजकः संस्कारः ( जैमि० न्या०१०।७ अधि०१ ) ।

**अवधानम्**—चित्तस्य विलक्षणः संबन्धविशेषः । तद्द्विविधम् । अनुपेक्षणीयत्वं विषयान्तरसंचारराहित्यं च ( त० प्र० २ ) । यथा शिष्यावधानाय चिकीर्षितं प्रतिजानीते इत्यादौ ( म० प्र० १ प० ३ ) ।

**अवधारणत्वम्**—एकाकारावगाहिज्ञानत्वम् इति वेदान्तिन आहुः ( प्र० प० टी० वेदेश० पृ० ६ ) ।

**अवधारणम्**—तदभावाप्रकारकं तत्प्रकारकं ज्ञानम् ( गौ० वृ० १।१।४० ) । यथा घटे अयं घट इति घटत्वाभावाप्रकारकं घटत्वप्रकारकं ज्ञानं निर्णयात्मकम् अर्थस्यावधारणम् । अत्रावधारणत्वं च [ १ ] निश्चयनिष्ठो विषयताविशेषः ( मू० म० १ ) । [ २ ] अवधारणत्वं न निर्णयत्वम् किं तूत्कटनिश्चयत्वम् । औत्कट्यं च विषयताविशेष इति मिश्राः ( ग० सत्प्र० पृ० १७—१८ ) । अयं भावः—तन्मते व्याप्यदर्शनाधीनज्ञानानन्तरमेव अवधारयामि इत्यनुव्यवसायोदयेन व्याप्यदर्शनात्मकविशेषदर्शनजन्य एव प्रत्यक्षेनुमित्यात्मके च ज्ञाने अवधारणत्वं स्वीक्रियते न तु निश्चयसामान्य इति ।

**अवधिः**—सम्यग्दर्शनादिगुणजनितक्षयोपशमनिमित्तमवच्छिन्नविषयं ज्ञानमवधिः ( सर्व० सं० पृ० ६२ आर्हत० ) ।

**अवधित्वम्**—१ [ क ] संबन्धविशेषः । यथा वृक्षाद्विभजत इत्यादौ द्रव्यनिष्ठमवधित्वं पञ्चम्यर्थः ( दीधि० २ अव० पृ० १७५ ) । [ ख ] स्वरूपसंबन्धविशेषः । यथा वृक्षाद्विभजत इत्यादौ वृक्षादेरवधित्वात्मकमपादानत्वम् ( ग० व्यु० ५ ) । २ सीमात्वम् । तच्च स्वाभिधेयापेक्षया विभागाश्रयत्वम् । सीमा च त्रिविधा । कालकृता देशकृता बुद्धिकृता च । तत्र प्रथमा मासात्पूर्वं घट इत्यादौ । द्वितीया नद्या वनमित्यादौ । वनस्य नद्यपेक्षविभागाश्रयत्वात्तथात्वम् । तृतीया तु माथुराः पाटलिपुत्रेभ्य आढ्यतरा इत्यादौ ( वाच० ) ।

**अवधिमत्त्वम्**—संबन्धविशेषः । यथा वृक्षाद्विभजते इत्यादौ धात्वर्थविभागे अवधिमत्त्वं पञ्चम्यर्थः । वृक्षात्पर्णं पततीत्यादौ च विभागे अवधिमत्त्वं संबन्धः ( दीधि० २ अव० पृ० १७५ ) ।

**अवयवः**—(द्रव्यावयवः) द्रव्यस्य समवायिकारणम् ( त० दी० पृ० ४० ) । यथा अवयवावयविनोः संबन्धः समवाय इत्यादौ कपालं घटस्यावयवः तन्तुश्च पटस्यावयवः । स चावयवः परमाणूनारभ्य कपालपर्यन्तं तन्तुपर्यन्तं चानेकधा ।

**अवयवः**—( न्यायावयवः ) [ क ] साधनीयस्यार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते तस्य पञ्चावयवाः प्रतिज्ञादयः समूहमपेक्ष्यावयवा उच्यन्ते । तेषु प्रमाणसमवाय आगमः प्रतिज्ञा । हेतुरनुमानम् । उदाहरणं प्रत्यक्षम् । उपनयनमुपमानम् । सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनमिति । सोयं परमो न्याय इति ( वात्स्या० १।१।१ ) । [ ख ] अर्थसाधकभावात्तु प्रतिज्ञादयः साधकवाक्यस्य भागा एकदेशा अवयवा इति ( वात्स्या० १।१।३२ ) । [ ग ] परार्थानुमानवाक्यैकदेशः ( सर्व० सं० पृ० २३८ अक्ष० ) । ते चावयवाः पञ्च । प्रतिज्ञा हेतुः उदाहरणम् उपनयः निगमनं चेति ( गौ० १।१।३२ )

( त० भा० पृ० ४३ ) ( त० सं० ) । वाक्यैकदेश इत्य-स्यार्थस्तु पूर्वस्मृत्यपेक्षोन्त्यपदप्रत्ययः स्मृत्यनुग्रहेण प्रतिसंधीयमानो विशेषप्रतिपत्तिहेतुर्वाक्यं तस्य भाग एकदेश इति ( न्या० बो० )। प्रतिज्ञादिभेदादवयवाः पञ्चेति न्यायमकरन्दे ( न्या० म० २।२४ ) उक्तम् । एते प्रतिज्ञादयः पञ्चानुमानस्यावयवा इव अवयवाः। न तु सम-वायिकारणम् । शब्दस्याकाशसमवेतत्वात् ( त० भा० पृ० ४३ )। केचित्तु ( मीमांसकाः ) उदाहरणान्तास्त्रय एवावयवा इत्याहुः । तन्न । तृतीयलिङ्गपरामर्शस्य व्याप्तिपक्षधर्मतावगाहिनोवयवान्तराल्लाभात् । तदनभ्युपगमेपि पक्षधर्मताया अलाभात् । न च हेतुवचनादेव तदव-गमः। तस्य को हेतुः इत्याकाङ्क्षायां प्रवृत्तत्वेन हेतुत्वस्वरूपोत्थापकस्यात-त्परत्वात् ( चि० २ पृ० ८१ )। हेतूदाहरणोपनयनानि एते त्रयोवयवा इति केचित् मन्यन्ते (वाच०)। उदाहरणोपनयौ द्वाववयवाविति बौद्धा आहुः ( म० प्र० २ पृ० ३३ )। रामानुजीयास्तु वदन्ति अस्माकं तु अनियमः। क्वचित्पञ्चावयवो न्यायः। क्वचित्त्र्यवयवः। क्वचिद्द्व्य-वयवः। उदाहरणोपनयाभ्यामेव व्याप्तिपक्षधर्मतयोः सिद्धत्वात् । तावतै-वानुमित्युपपत्तेश्च । मृदुमध्यमकठोरधियां विस्तरसंग्रहाभ्यां व्यवहार उपपद्यत इत्यनियम एवेति ( यतीन्द्र० दी० द्वि० अ० पृ० २१ )। जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदासश्चेति एते प्रतिज्ञादिसहिता दशावयवा इत्यतिप्राचीननैयायिका आहुः ( म० प्र० २ पृ० ३३ ) ( चि० प्र० पृ० ५२ ) ( गौ० सू० १।१।३२ ) (वात्स्या० १।१।३२ )। जिज्ञासादीनामर्थश्च तात्पर्यटीकाया-मुक्तः। प्रयोजनं हानोपादानोपेक्षाबुद्धयः। तत्प्रवर्तिका जिज्ञासा। तज्जनकः संशयः । प्रमाणानां जननसामर्थ्यं शक्यप्राप्तिः। संशयव्युदासस्तर्कः ( गौ० सू० १।१।३२ ) ( वात्स्या० १।१।३२ ) । तत्र विप्रतिपत्ति-र्जिज्ञासेति कश्चित् । मञ्जरीप्रकाशकारास्तु पदवाक्यप्रमाणानां ज्ञानजनन-प्रयोजकत्वं शक्यप्राप्तिः। कथायां यदुद्देश्यं तत्प्रयोजनमित्याहुः ( म० प्र० २ पृ० ३३ )। एते जिज्ञासादयः पञ्च न न्यायावयवाः। अवयव-

लक्षणाभावात् । न्यायाघटकत्वाच्च । किं तु न्यायाङ्गतयोपयुज्यन्ते (चि० २ पृ० ८३)(गौ० सू० १।१।३२)(वात्स्या० १।१।३२)। अवयवप्रयोगे विशेषो ज्ञेयः—केवलव्यतिरेकिण्यनुमाने प्रतिज्ञाहेतू तुल्यावेव । अन्वयव्यतिरेक्यनुमाने केवलान्वय्यनुमाने च यादृशाकारौ प्रतिज्ञाहेतू भवतस्तादृशाकारावेवेति यावत् । उदाहरणोपनयनिगमनानि तु भिद्यन्ते । यथा जीवच्छरीरं सात्मकं प्राणादिमत्त्वादित्यत्र यत् सात्मकं न भवति तत् प्राणादिमन्न भवति यथा घटः इत्युदाहरणम् । न चेदं जीवच्छरीरं प्राणादिमन्न भवति इत्युपनयः । तस्मान्न तथा इति निगमनम् इति (त० कौ० २ पृ० १३)।

**अवयवत्वम्**—(न्यायावयवत्वम्) [क] प्रतिज्ञाद्यन्यतमत्वम् (गौ० सू० १।१।३२) (न्या० म० २ पृ० २४) (न्या० बो० पृ० १५) (म० प्र० २ पृ० ३३)। प्रतिज्ञाद्यन्यतमत्वं प्रतिज्ञादिभेदपञ्चकाभाववत्त्वमित्यर्थः । प्रतिज्ञायां हेत्वादिभेदचतुष्टयसत्त्वेपि स्वभेदाभावाद्भेदपञ्चकाभाववत्त्वं संपद्यते। एवं हेतावपीति लक्षणसमन्वयः (म० प्र० २ पृ० ३३)। [ख] अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानजनकवाक्यत्वम् (चि०अव० पृ०७६)। तदर्थश्च—अनुमितेश्चरमं कारणं यः परामर्शः तस्य प्रयोजकं शाब्दज्ञानम् न्यायात्मकप्रतिज्ञादिपञ्चवाक्यजन्यं तावदर्थविषयकं विशिष्टवैशिष्ट्यावगाहिज्ञानम् समूहालम्बनात्मकं वा । तस्य जनकं शाब्दज्ञानम् प्रत्येकावयवजन्यज्ञानम् । तस्य जनकं वाक्यम् तत्त्वम् इति । [ग] न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम् । न्यायान्तर्गतत्वं च स्वाविषयकप्रतीत्यविषयन्यायकत्वम् । न्यायत्वाश्रयत्वं वा । प्रतिज्ञोत्तरहेत्वादिघटितवाक्यपञ्चकानुपूर्वीविशेषावच्छिन्नभेदप्रतियोगितावच्छेदकत्वं वा । तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकविषयिताकत्वं वा । प्रतिज्ञाद्यन्यतमत्वं च प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकं यद्यत्तदवच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदको यः प्रतिज्ञादिभेदपञ्चकानुयोगितावच्छेदकं यद्रूपं तदवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकीभूतो धर्मस्तत्त्वम्

(ग० अव०)। [ च ] प्रतिज्ञाघटकत्वे सत्युभयघटकभागद्वयाघटितत्वम् ( दीधि० २ पृ० १६६ )। प्रतिज्ञाघटकत्वं च मिलितभेदपञ्चकानुयोगितावच्छेदकभिन्नधर्मवत्त्वम् (ग० अव०)। उभयं च प्रतिज्ञाहेतू हेतूदाहरणे उदाहरणोपनयौ उपनयनिगमने इति विशिष्य वक्तव्यम् ( दीधि० २ पृ० १६६ )। यथा पर्वतस्य पक्षत्वे वह्नेः साध्यत्वे धूमस्य हेतुत्वे पर्वतो वह्निमान् इति प्रतिज्ञावाक्यस्य धूमात् इति हेतुवाक्यस्य चावयवत्वम्। एवमुदाहरणादेरप्यवयवत्वं ज्ञेयम्। [ छ ] प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थविषयकज्ञानपञ्चकान्यतमज्ञानजनकवाक्यत्वमित्यपि केचित् ( दीधि० अव० पृ० १६६ )।

**अवयवि**—जन्यद्रव्यम् ( त० दी० पृ० ४० )। यथा घटपटादि।

**अवरुद्धा**—( दासी ) दास्य एव स्वामिना शुश्रूषाहानिव्युदासार्थं गृह एव स्वातन्त्र्यमित्येवं पुरुषान्तरोपभोगतो निरुद्धा अवरुद्धाः ( मिताक्षरा २।२९ )।

**अवरोधः**—गतिप्रतिरोधहेत्वावरणम्। यथा गामवरुणद्धि व्रजमित्यत्रावरुधेरर्थः (श० प्र० पृ० ९९)। अत्र गोगतिप्रतिरोधस्यानुकूलं यद्व्रजस्यावरणं तत्कृतिमानित्यन्वयः ( श० प्र० पृ० ९९ )।

**अवर्ण्यसमः**—( जातिः) [ क ] स्थापनीयो वर्ण्यः। विपर्ययादवर्ण्यः। तावेतौ साध्यदृष्टान्तधर्मौ विपर्यस्यतो वर्ण्यावर्ण्यसमौ भवतः (वात्स्या० ५।१।४)। अत्रावर्ण्यत्वेन समः अवर्ण्यसम इति व्युत्पत्तिः। असिद्धिदेशनाभासोयम्। [ ख ] अवर्ण्यत्वं संदिग्धसाध्यकत्वाभावः ( गौ० वृ० ५।१।४ )। पक्षे असंदिग्धसाध्यकत्वापादनम्। दृष्टान्ते हेतोर्यादृशत्वं तादृशो हेतुरेव गमक इत्यभिमानेनैवमापादनम्। दृष्टान्ते यो हेतुः सिद्धसाध्यकवृत्तिः स चेन्न पक्षे तदा गमकहेत्वभावात्स्वरूपासिद्धिः स्यादतस्तादृशो हेतुरवश्यं पक्षत्वाभिमते स्वीकार्यः। तथा च संदिग्धसाध्यकत्वलक्षणपक्षत्वाभावादाश्रयासिद्धिः ( गौ० वृ० ५।१।४ )। [ ग ] साध्यहेत्वोर्धर्मयोरपि पक्षे तुल्यतया साधनम्[1]। यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टव-

[1] तुल्यतासाधनमिति पाठान्तरम् ( नील० पृ० ४३ )।

हिंस्रादौ लोष्टादिगतनोदनादिरूपक्रियाहेतुगुणवत्त्वमात्मन्यसिद्धम् । तथा च तुल्यतया यथा असिद्धेन क्रियाहेतुगुणेनात्मनि क्रियावत्त्वं साध्यते तथा तादृशेन क्रियावत्त्वेन तज्जनकगुणवत्त्वमपि किमिति न साध्यते । नियामकाभावादिति ( नील० पृ० ४३ ) ।

**अवश्यक्लृप्तत्वम्**—लघूपस्थितिकत्वम् । यथा पाकजस्थले गन्धं प्रति जनकत्वे गन्धप्रागभावस्य ( गन्धं प्रति रूपप्रागभावस्य जनकत्वमपेक्ष्य ) अवश्यक्लृप्तत्वम् ।

**अवश्यम्**—१ अप्राप्त्यभावः । यथा एतेष्वावश्यकस्त्वसौ ( भा० प० श्लो० २२ ) इत्यादौ । २ अशक्यनिवारणम् । ३ निश्चय इत्यपि केचित् ( वाच० ) ।

**अवसरः**—( संगतिः ) [ क ] प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्या अनन्तरवक्तव्यत्वम् । यथा प्रत्यक्षनिरूपणानन्तरं तत्कार्यत्वेनानुमानोपमानयोरुभयोर्निरूपणप्राप्तौ बहुवादिसंमतत्वेन प्रथममनुमान एव जिज्ञासोदयेनानुमाननिरूपणेन प्रतिबन्धकजिज्ञासानिवृत्ताववसरसंगत्योपमाननिरूपणम् ( राम० २ पृ० १७० ) । [ ख ] प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिकालावच्छिन्नावश्यवक्तव्यत्वम् ( वै० सा० द० ) । [ ग ] प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तौ सत्यामवश्यवक्तव्यत्वम् । यथा अनुमाननिरूपणानन्तरं तादृशजिज्ञासानिवृत्तावश्यवक्तव्यत्वज्ञानात् किं वक्तव्यम् इति श्रोतुर्जिज्ञासानन्तरमुपमाननिरूपणम् इति । [ घ ] जिज्ञासितार्थसिद्धत्वमिति केचित् ( भवा० ) ।

**अवस्था**—१ कालकृतः परिणामः । सा चावस्था जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यति इति भावविकारः षड्विध इति यास्को वक्ति । अविद्यास्मितारागद्वेषाभिनिवेशभेदेन पञ्चविधेति योगिनः । अनागतावस्था अभिव्यक्त्यवस्था तिरोहितावस्थेति त्रिविधेति सांख्याः । जाग्रत्स्वप्नसुषुप्तिरूपास्तिस्रोवस्थाः चतुर्थी मोक्षावस्था चेति चतुर्विधेति वेदान्तिनः । जाग्रदवस्था नाम इन्द्रियद्वारा बुद्धेर्विषयाकारः परिणामः । स्वप्नावस्था

---

१ अस्मिता इति पदच्छेदः ।

च संस्कारमात्रजन्यो बुद्धेर्विषयाकारः परिणामः । सुषुप्त्यवस्था तु द्विविधा अर्धलयसमग्रलयभेदात् । तत्रार्धलये स्वगतसुखदुःखमोहाकारैव बुद्धिवृत्तिर्भवति न तु विषयाकारा वृत्तिर्भवति । समग्रलये तु बुद्धिवृत्तिसामान्याभावरूपा मरणादाविव भवति । पुरुषस्तदा तत्साक्षी न भवतीति विज्ञेयम् । सिद्धान्तबिन्दौ ( पृ० १८८ ) जाग्रदादीनां लक्षणान्युक्तानि । इन्द्रियवृत्तिकालीनार्थोपलम्भो जागरणम् । इन्द्रियवृत्त्यभावकालीनार्थोपलम्भः स्वप्नः । न किंचिदवेदिषमिति कारणमात्रोपलम्भः सुषुप्तिः इति । कौमारपौगण्डकैशोरयौवनबाल्यतारुण्यवृद्धत्ववर्षीयस्त्वभेदेनाष्टविधेति पौराणिकाः । बाल्यकौमारयौवनवृद्धत्वभेदेन चतुर्विधेति भिषजः । अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसंलापाः । उन्मादोथ व्याधिर्जडता मृतिरिति दशैव कामदशाः ॥ इति भेदेन दशविधेत्यालंकारिका आहुः ( वाच० ) । ५ आ लाभप्राप्तेरेकमर्यादावस्थितस्य यदवस्थानं सा अवस्था ( सर्व० सं० पृ० १६३ नकुली० ) ।

**अवाची**—( दिक् ) दक्षिणावदस्यार्थोनुसंधेयः ।

**अवान्तरप्रलयः**—( प्रलयः ) खण्डप्रलयवदस्यार्थोनुसंधेयः ( त० दी० १ पृ० १० ) ।

**अविज्ञातार्थम्**—( निग्रहस्थानम् ) [ क ] परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ( गौ० ५।२।९ ) । यद्वाक्यं त्रिरभिहितमपि परिषदा प्रतिवादिना च न विज्ञायते श्लिष्टशब्दमप्रतीतप्रयोगमतिद्रुतोच्चारितमित्येवमादिना कारणेन तदविज्ञातमविज्ञातार्थमसामर्थ्यसंवरणाय प्रयुक्तमिति निग्रहस्थानमिति ( वात्स्या० ५।२।९ ) । एतस्य त्रेधा संभवः । असाधारणतन्त्रमात्रप्रसिद्धम् अतिप्रसक्तयोगमनपेक्षितरूढिकम् श्लिष्टं चेति । तत्राद्यं यथा पञ्च स्कन्धादयो बौद्धानाम् । तत्र रूपादयः पञ्चेन्द्रियाणि च रूपस्कन्धः । सविकल्पकं संज्ञास्कन्धः । रागद्वेषाभिनिवेशाः संस्कारस्कन्धः । सुखदुःखे वेदनास्कन्धः । निर्विकल्पकं ज्ञानस्कन्ध इति । द्वितीयं यथा कश्यपतनयाधृतिहेतुरयं ( भूधरोयम् ) त्रिनयनसमान-

नामधेयवान् ( अग्निमान् ) तत्केतुमत्त्वात् ( तस्य अग्नेः केतुर्धूमस्तद्वत्त्वात् ) इत्यादीति । धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिरिति कोशात् कश्यपतनया भूरिति भावः । पर्वतो वह्निमान् धूमवत्त्वादिति यावत् । तृतीयं यथा श्वेतो धावति ( श्वा इतो धावति ) इत्यादि । एवम् अतिद्रुतोच्चारितादिकमपीति ( गौ० वृ० ५।२।९ ) । [ ख ] अवहिताविकलव्युत्पन्नपरिषत्प्रतिवादिबोधानुकूलोपस्थित्यजनकवाचकवाक्यप्रयोगः ( गौ० वृ० ५।२।९ ) ( दि० १ पृ० २१ ) । अत्र च पराज्ञानापादनेन मम जयो भविष्यति इति भ्रमादुक्तिसंभवः ( गौ० वृ० ५।२।९ ) । [ ग ] परिषत्प्रतिवादिबोधप्रयोजकपदप्रयोगः । तच्च क्लिष्टान्वयमप्रसिद्धार्थकं त्वरितोच्चारितमित्यादिरूपम् ( नील० पृ० ४५ ) ।

**अवितत्करणम्**—कार्याकार्यविवेकविकलस्येव लोकनिन्दितकर्मकरणम् ( सर्व० सं० पृ० १७० नकुली० ) ।

**अवितद्भाषणम्**—व्याहतापार्थकादिशब्दोच्चारणम् ( सर्व० सं० पृ० १७० नकुली० ) ।

**अविद्या**—[ क ] ज्ञानाभावः । अत्र मतभेदेन बहुप्रकाराः सन्ति । विस्तरभयान्नोच्यन्ते । [ ख ] अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ( पात० यो० सू० २।५ ) । [ ग ] अनात्मनि च देहादावात्मबुद्धिस्तु देहिनाम् । अविद्या (सर्व० सं० पृ० ३६२ पातञ्ज०)। [ घ ] यदेव पररूपादर्शनं सैवाविद्या (सर्व० सं० पृ० ४५८ शांकर०) । [ ङ ] असत्प्रकाशनशक्तिरविद्या (सर्व० सं० पृ० ४३९ शांकर०) । अविद्या च ( वैशेषिकमते ) दूरत्वपित्तदोषेत्यादीन्द्रियदोषजन्यो बुद्धिविशेषः ( अयथार्थबुद्धिः ) ( प्रशस्त० गु० पृ० २३ ) ।

**अविनाभावः**—१ व्याप्तिः । यथा कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमोऽदर्शनान्न न दर्शनात् ( सर्व० बौद्ध० पृ० १६ ) इत्यादौ ग्रन्थे अविनाभावशब्दार्थो व्याप्तिः । २ संबन्ध-

१ अदर्शनादिति पदच्छेदः ।

मात्रम्। यथा मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे। अभिधेयावि-नाभूतप्रतीतिर्लक्षणोच्यते॥ (भट्टवार्तिके) इत्यादौ अविनाभावशब्दार्थः (काव्यप्र० उ० २ पृ० २०)। २ मीमांसकमते तु स्वदेशवृत्तित्वं तादात्म्यं च अविनाभावः। यथा व्यक्त्यविनाभावात्तु जात्या व्यक्तिरा-क्षिप्यते (काव्यप्र० २ पृ० १७) इत्यादौ अविनाभावशब्दार्थः। अविनाभावो गुरुमते जातेर्व्यक्तिदेशत्वम्। भट्टमते तु तादात्म्यम् इति (काव्यप्र० टी० कमला० पृ० १७)।

**अविरतिः**—[क] पृथिव्यादिषट्कोपादानं षडिन्द्रियासंयमनं चाविरतिः (सर्व० सं० पृ० ७५ आर्हत०)। [ख] विषयाभिलाषः (सर्व० सं० पृ० ३५५ पातञ्ज०)।

**अविवेकः**—१ विवेकाभावः। २ अन्योन्यतादात्म्यारोपरूपं मिथ्याज्ञा-नमिति सांख्याः।

**अविशेषसमः**—(जातिः) [क] एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्र-सङ्गात्सद्भावोपपत्तेरविशेषसमः (गौ० ५।१।२३)। एको धर्मः प्रयत्ना-नन्तरीयकत्वं शब्दघटयोरुपपद्यत इत्यविशेष उभयोरनित्यत्वे सर्वस्या-विशेषः प्रसज्यते। कथम्। सद्भावोपपत्तेः। एको धर्मः सद्भावः सर्व-स्योपपद्यते। सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गात्प्रत्यवस्थानमविशेषसमः (वात्स्या० ५।१।२३)। अविशेषेण समः अविशेषसमः इति व्युत्पत्तिः। [ख] सन्मात्रवृत्तिधर्मेणाविशेषापादनम्। प्रतिकूलतर्कदेशनाभासोयम् (गौ० वृ० ५।१।२३)। [ग] सर्वाविशेषप्रसङ्गोद्भावनम्। यथा शब्दः अनित्यः कृतकत्वादित्यादौ यदि कृतकत्वादिना अनित्यघटादिसा-धर्म्येण शब्दस्यानित्यत्वं तदा प्रमेयत्वादिरूपेण तत्साधर्म्येण सर्वस्यैवा-नित्यत्वं स्यात्। मदुक्तसाधर्म्येण तत्सिध्यति न तु त्वदुक्तेनेत्यत्र विनिग-मकाभावादिति (नील० पृ० ४४)।

**अवेष्टिः**—राजसूये अवेष्टिसंज्ञकाः पञ्च यागाः। ते च यथा आग्नेयमष्टा-कपालं निर्वपति हिरण्यं दक्षिणा। ऐन्द्रमेकादशकपालमृषभो दक्षिणा।

वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा । मैत्रावरुणीमामिक्षां वशा दक्षिणा । बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा ( जै० सू० वृ० २।३।२ ) ।

**अव्यभिचारः**—साध्याभाववद्वृत्तित्वं व्यभिचारः । तस्याभावः ।

**अव्ययम्**—[ क ] संकेतसंबन्धेनाव्ययपदवत् । यथा स्वः इत्याद्यव्ययम् । तत्र कानिचिदव्ययानि सार्थमुदाह्रियन्ते । लक्षणवीप्सेत्थंभावेष्वभिर्भागे परिप्रती । अनुरेषु सहार्थे च हीने उपश्च कथ्यते । समया निकषा चाव्ययं सामीप्यार्थकम् । तेन तद्योगे समया ग्राममित्यादौ ग्रामस्य समीपम् इत्यन्वये ग्रामावधिकत्वं तत्प्रतियोगिकत्वं वा द्वितीयया बोध्यते । विनाऋते अन्तरेणान्तरा विना वा नरः शोच्य इत्यादावृतेप्रभृत्यव्ययानामत्यन्ताभावस्तद्वैशिष्ट्यं चार्थ इति विद्यात्यन्ताभाववान् नरः शोच्य इत्यन्वये अत्यन्ताभावेन्वितं प्रतियोगित्वम् । गगनमृते द्रव्यं न शब्दवदित्यादौ तूक्ताव्ययानां भेदोप्यर्थः । तेन गगनभिन्नद्रव्यं न शब्दवत् इत्याकारकस्तत्र बोधः । हा पुत्रमित्यत्र हाव्ययस्यार्थे कष्टे द्वितीयान्तेन पुत्रसमवेतत्वं बोध्यते । धिक् पुत्रमित्यत्र धिगर्थगर्हायां पुत्रविषयित्वम् । उपर्युपरि गृहं पताकेत्यत्र द्विरुक्तस्योपरिनिपातस्य संनिकृष्टोर्ध्वभागार्थकत्वेन गृहस्य संनिकृष्टोर्ध्वभागे पताका इत्यर्थः । अधोधो मेघमम्भः अध्यधि शिखरं वन इत्यत्राप्युक्तदिशैवान्वयः । द्विरुपर्यधोधीनां सामीप्यवाचितायां तद्योगे द्वितीयानुशिष्टेः ( श० प्र० पृ० ११७ ) । अत्र प्रमाणम्—उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोन्यत्रापि दृश्यते ॥ इति । नदीं यावन्मम पुरम् गृहं यावद्वनं तवेत्यत्र यावदित्यव्ययस्य मर्यादा अभिविधिश्च क्रमेणार्थः । तेन नदीपर्यन्तं मत्पुरम् गृहाभिव्याप्तं त्वद्वनम् इत्याकारस्तत्र बोधः ( श० प्र० पृ० ११६–११७ ) इत्यादि तत्तद्ग्रन्थाज्ज्ञेयम् विस्तरभयान्नोच्यत इति । [ ख ] सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ इति शाब्दिका आहुः । अत्रायं नियमः—नियताः प्रयोगा हि केषांचिदव्ययानामिति ( न्या० म० ख० ४ पृ० १४ ) । अत्राधिकं तु नञ्शब्दव्याख्यानावसरे द्रष्टव्यम् ।

**अव्ययीभावः**—(समासः) अव्ययीभावाधिकारपठितत्वमव्ययीभावत्वम् । पूर्वपदार्थप्रधानोऽव्ययीभाव इति लक्षणं तु प्रायिकं बोध्यम् । तथा हि उन्मत्तगङ्गमित्यव्ययीभावे पूर्वपदार्थप्राधान्याभावादव्याप्तिः । सूपप्रतीत्यव्ययीभाव उत्तरपदार्थप्राधान्यादव्याप्तिश्च । अतो नेदं सिद्धान्तभूतं लक्षणमिति ( वैयाकरणभू० ) ( श० पृ० ३१ ) । अर्धपिप्पलीत्यादौ तत्पुरुषे पूर्वपदार्थप्राधान्यादतिव्याप्तिरप्यस्मिन् लक्षणे बोध्या । अनव्ययमव्ययं भवतीत्यव्ययीभावः । अव्ययीभावस्याव्ययत्वम् अव्ययीभावश्च ( पाणि० सू० १।१।४१) इति सूत्रेण बोध्यते ।

**अव्यवधानम्**—तदधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वम् । यथा क्रमिकपदार्थोपस्थितीनामव्यवधानम् । अथ वा तद्ध्वंसाधिकरणक्षणोत्पत्तिकत्वम् ।

**अव्यवहितत्वम्**—तत्पूर्वकालीनध्वंसाप्रतियोगित्वम् ( ग० २ पक्ष० पृ० ३८ ) । यथा अनुमित्यव्यवहितपूर्ववृत्तिसिद्धिमिन्नसिद्ध्यभावः पक्षता ( दीधि० ) इत्यत्रानुमित्यव्यवहितपूर्वक्षणे सिद्धावेव वा विशेषणीभूतमव्यवहितत्वम् ।

**अव्यवहितपूर्वत्वम्**—[क] तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम् (दीधि० पक्ष० पृ० १२९ ) । अत्र तत्पदेन क्षणद्वयावस्थायि ज्ञानादिकं ग्राह्यम् । विग्रहस्तु तस्य ज्ञानादेः उत्पत्तिक्षणे उत्पत्तिर्यस्य स तदुत्पत्तिक्षणोत्पत्तिकः । सचासौ ध्वंसश्च । तस्य प्रतियोगि । तस्य भावः इति । ज्ञानाद्युत्पत्तिक्षणे यस्य ध्वंस उत्पद्यते तत्त्वमिति विग्रहार्थः । इदं लक्षणं प्रागभावानभ्युपगन्तृनयेपि संगच्छते इति विज्ञेयम् ( ग० पक्ष० पृ० ४४ ) । [ ख ] तत्प्रागभावाधिकरणकालप्रागभावानधिकरणत्वे सति तत्प्रागभाववत्त्वम् ( ग० पक्ष० पृ० ४१ ) । अत्र सत्यन्तदलेन अव्यवधानम् विशेष्यदलेन तु पूर्वत्वं बोध्यत इति विज्ञेयम् । इदमव्यवहितपूर्वत्वं च प्रागभावाङ्गीकर्तृपक्ष एव संगच्छत इत्यवधेयम् । यथा विशेषणज्ञानस्य विशिष्टज्ञानाव्यवहितपूर्वत्वम् । यथा वा परामर्शस्यानुमित्यव्यवहितपूर्वत्वम् ।

**अव्यवहितोत्तरत्वम्**—स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणत्वसामान्याभाववत्त्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वम् । यथा विशिष्टज्ञानस्य विशेषणज्ञानाव्यवहितोत्तरत्वम् । यथा वा अनुमितेः परामर्शाव्यवहितोत्तरत्वम् । अत्र सत्यन्तेन दलेन अव्यवधानम् विशेष्यदलेन तूत्तरत्वं गम्यते इति ज्ञेयम् । इदं विशिष्टलक्षणं च ज्ञानाद्युत्पत्तिद्वितीयक्षणसाधारणम् ( ग० पक्ष० पृ० ४२ ) । तृतीयक्षणसाधारणं तु ज्ञानादेस्तृतीयक्षणे विनाशेन स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपं ज्ञानाद्यव्यवहितोत्तरत्वम् ( दीधि० २ पृ० १२७ ) ।

**अव्यापकविषयिताशून्यत्वम्**—यद्रूपावच्छिन्ननिरूपितविषयितात्वं विशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्ननिरूपितविषयिताशून्यत्वम् । यथा ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ध्रदरूपबाधविषयकस्य ह्रदो न वह्निमान् इति निश्चयस्य अव्यापकीभूतजातित्वाद्यवच्छिन्ननिरूपितविषयिताशून्यत्वम् ( ग० सामा० २ लक्षणे ) । स्वभिन्नत्व—स्वनिरूपितसंसर्गतान्यविषयतानिरूपितत्व—एतदुभयसंबन्धेन यद्रूपावच्छिन्नविषयताविशिष्टयद्रूपावच्छिन्नविषयतानिरूपितविषयितात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयतानिरूपितविषयिताशून्यत्वं निष्कृष्टार्थ इत्यस्मद्गुरुचरणाः प्राहुः । अधिकं तु कोशपत्रादितो ज्ञेयम् ।

**अव्याप्तिः**—( लक्षणदोषः ) १ [क] लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् ( न्या० बो० १ पृ० ३ ) । अत्र गोः कपिलत्वं लक्षणमित्युक्तौ *गौर्लक्ष्या* भवति । *लक्ष्यतावच्छेदकं* गोत्वम् । तस्य समानाधिकरणः गोत्वस्याधिकरणे शुक्लगवि वर्तमानः कपिलत्वस्यात्यन्ताभावः । तस्य प्रतियोगि कपिलत्वं भवति । तथा च प्रतियोगित्वं

---

१ इदं च निश्चयस्य विशेषणं मदाशयो हेत्वाभावसामान्यनिरुक्तौ द्वितीयलक्षणे ह्युपयुज्यते । उपयोगस्तु ह्रदो वह्निमान् धूमादित्यादौ जातित्वेन ह्रदत्वाद्यवगाहिनो जातिमान् वह्न्यभाववान् इति निश्चयस्य प्रतिबन्धकत्ववारणरूप इति बोध्यम् ।

कपिलत्वे वर्तत इति द्रष्टव्यम्। [ख] लक्ष्यैकदेशावृत्तित्वम्। यथा गोः कपिलत्वस्य लक्षणत्वाङ्गीकारे शुक्लगवि कपिलत्वस्याभावेन अव्याप्तिः (त० दी० १ पृ० ४)। लक्षणतावच्छेदकत्वाभिमतसंबन्धेन किंचिल्लक्ष्यावृत्तित्वमित्यर्थः (नील० १ पृ० ४)। [ग] लक्ष्यैकदेशे लक्षणस्यावर्तनम्। यथा शिखासूत्रवान् ब्राह्मणः इत्यस्य लक्षणस्य संन्यासिन्यव्याप्तिः। संन्यासिनः शिखासूत्रवत्त्वाभावादिति भावः (त० कौ० पृ० २१)। २ भागासिद्धत्वम्। यथा गोर्लक्षणस्य शबलत्वस्य भागासिद्धिः (त० भा० पृ० ५०) (नील० १ पृ० ४)। इदं च लक्षणस्य व्यावर्तकत्वाभिप्रायेण। विस्तरस्तु लक्षणशब्दव्याख्यानावसरे संपादयिष्यते। ३ हेत्वाभासविशेषः। हेत्वाभासशब्दव्याख्याने दृश्यम्।

**अव्याप्यवृत्तिगुणत्वम्**—अव्याप्यवृत्तिवृत्तिर्गुणत्वव्याप्या च या जातिस्तादृशजातिमत्त्वम् (दि० गु० पृ० १९४)। तादृशी जातिस्तु बुद्धित्वशब्दत्वादिः। अव्याप्यवृत्तिगुणा द्विविधाः दैशिकाव्याप्यवृत्तयः कालिकाव्याप्यवृत्तयश्चेति। तत्र दैशिकाव्याप्यवृत्तयो बुद्ध्यादयोष्टौ शब्दः भावना संयोगः विभागश्चेति। एते गुणाः प्रादेशिकगुणा इत्यपि व्यवह्रियन्त इति बोध्यम्। कालिकाव्याप्यवृत्तिगुणास्तु रूपादयः इति विज्ञेयम्।

**अव्याप्यवृत्तित्वम्**—स्वात्यन्ताभावसमानाधिकरणत्वम् (त० दी० १ पृ० १३) (मू० म०) (ग०)। यथा वृक्षे कपिसंयोगतदत्यन्ताभावयोरव्याप्यवृत्तित्वम्। यथा वा संयोगेन द्रव्यस्याव्याप्यवृत्तित्वमते पर्वते वह्नितदभावयोरव्याप्यवृत्तित्वम्। स्वात्यन्ताभावसमानाधिकरणत्वमित्यस्य स्वस्यात्यन्ताभावेन सहैकाधिकरणे वर्तमानत्वमित्यर्थः। स्वप्रतियोगित्व—स्वसामानाधिकरण्य—एतदुभयसंबन्धेनाभाववत्त्वमिति निष्कर्षः (नील० १ पृ० १३)। तदर्थश्च स्वशब्देन कपिसंयोगाभावो गृह्यते। स्वस्य प्रतियोगी कपिसंयोगस्तत्त्वं कपिसंयोगे वर्तते। तथा स्वसामानाधिकरण्यमपि वर्तते। स्वस्य कपिसंयोगाभावस्य सामानाधिकरण्यमेकाधिकरणे वर्तमानत्वम्। तथा चैतादृशोभयसंबन्धेन कपिसंयोगाभाववत्त्वं कपिसंयोगे वर्तत इति कपिसंयोगः अव्याप्यवृत्तिर्भवति। एवं कपिसंयोगाभावेप्यव्याप्यवृत्तित्वं

स्वयमूह्यम् । अत्रायमाशयः । अग्रे वृक्षः कपिसंयोगी न मूले इति प्रतीत्यैकस्मिन्नप्यधिकरणे वृक्षे कपिसंयोगकपिसंयोगाभावयोरग्रमूलात्मकप्रदेशविशेषावच्छेदेन विद्यमानत्वात्तयोरव्याप्यवृत्तित्वं संगच्छत इति।

**अशिष्टः**—यो यदा वेदनिषिद्धकर्ता स तदा अशिष्टः । यथा बौद्धपाषण्डादिरशिष्टः ( चि० १ पृ० १०८–१०९ ) ।

**अश्रुमुखाः**—पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्तिताः ॥ तेभ्यः पूर्वे त्रयो ये तु ते तु नान्दीमुखाः स्मृताः ( पु० चि० पृ० २९९ ) ।

**अस्**—( धातुः ) [ क ] कालसंबन्धविशेषः । यथा चैत्रोस्तीत्यादौ धात्वर्थः । [ ख ] शाब्दिकास्तु स्वधारणानुकूलो व्यापारः अस्धात्वर्थ इत्याहुः ( वै० सा० धा० पृ० ९० ) । यदाह वाक्यपदीये—आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते । अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः ॥ इति । अत्रायमाशयः । आत्मा द्विविधः । शरीरात्मा अन्तरात्मा चेति । शरीरात्मा शरीरावच्छिन्नात्मा । अन्तरात्मा अन्तःकरणावच्छिन्नात्मा । तत्रान्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवतीति हेतोः अन्तरात्मना शरीरात्मनो धारणं भवति । तत्र धारणानुकूलव्यापारस्य धात्वर्थत्वेपि फलव्यापारयोः सामानाधिकरण्येन अकर्मकत्वमुपपद्यत इति ।

**असंगतिः**—१ संगत्यभावः ( संदर्भाभावः ) । २ वेदान्तिनस्तु आकाङ्क्षाविरहः ( हेत्वाभासः ) इत्याहुः ( प्र० च० पृ० ३० ) ।

**असंप्रज्ञातः**—१ यथार्थज्ञानाविषयः । २ ज्ञेयज्ञानज्ञातृभेदशून्यो निर्विकल्पकरूपः समाधिरिति योगशास्त्रविद आहुः ( वाच० ) । सर्ववृत्तिनिरोधे त्वसंप्रज्ञातः ( सर्व० सं० पृ० ३५७ पातञ्ज० ) ।

**असंबन्धः**—१ असमवेतत्वम् । यथा समवाये अभावे चासंबन्धः ( नील० १ पृ० ६ ) । असमवेतत्वं च प्रतियोगित्व—अनुयोगित्व—एतदन्यतरसंबन्धेन समवायाभावः ( नील० १ पृ० ६) ( दि० १ पृ० १६)। अथवा प्रतियोगित्व—अनुयोगित्व—एतदन्यतरसंबन्धावच्छिन्नावच्छेदकतानिरूपितप्रतियोगिताकभेद इति ( ल० व० पृ० ३ ) । अयमाशयः ।

यस्मिन् किंचिदपि वस्तु समवायेन संबन्धेन न वर्तते' यश्च कस्मिंश्चिदपि वस्तुनि समवायेन संबन्धेन न वर्तते तत्रायमसंबन्धः । यथा समवाये अभावे च न किंचिद्वस्तु समवायेन वर्तते सोपि समवायः अभावश्च न कस्मिंश्चिदपि वस्तुनि समवायेन संबन्धेन वर्तत इति समवाये अभावे चायमसंबन्धोस्ति । स च असंबन्धः समवायत्वस्य अभावत्वस्य च जातित्वे बाधक इति न्यायसिद्धान्तः । २ परस्परावच्छेद्यावच्छेदकभावापन्नविषयितानिरूपकत्वशून्यत्वम् ( ग० अव० ) । अयं चैकवाक्यत्वविघटको गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात् इति जैमिनिसूत्रघटकासंबन्धपदस्यार्थ इति विज्ञेयम् । यथा सुन्दरः पुरुषो दण्डी इति वाक्यजन्यशाब्दबोधे पुरुषांशे दण्डसौन्दर्ययोर्विशेषणतया युगपज्ज्ञानस्वीकारे तयोः परस्परमसंबन्धः । वस्तुतस्त्वेतादृशवाक्यस्वरसात्सौन्दर्यस्य विशेष्यतावच्छेदकत्वेन दण्डस्य विशेषणत्वेन भानाङ्गीकारे नायमसंबन्धदोषः । अपि तु पुरुषः सुन्दरो दण्डीत्यादावेव तादृशदोष इति ज्ञेयम् ।

असंभवः—( लक्षणदोषः ) १ [ क ] लक्ष्यमात्रावृत्तित्वम् । यथा गोरेकशफत्वरूपलक्षणस्यासंभवः ( त० दी० १ पृ० ४ ) । संबन्धविशेषावच्छिन्नलक्ष्यवृत्तित्वसामान्याभाव इत्यर्थः (नील० १ पृ० ४) । [ ख ] लक्ष्यतावच्छेदकव्यापकीभूतो यः अभावस्तत्प्रतियोगित्वम् ( न्या० बो० १ पृ० ३ ) । यत्र यत्र लक्ष्यतावच्छेदकं गोत्वम् तत्र तत्रैकशफत्वस्याभाव इति व्याप्तेरेकशफत्वाभावो लक्ष्यतावच्छेदकस्य व्यापको भवतीति तत्प्रतियोगित्वमेकशफत्वे वर्तत इति बोध्यम् । [ ग ] लक्ष्ये क्वापि लक्षणस्यावर्तनम् । यथा शुण्डदण्डवान् ब्राह्मण इति लक्षणस्यासंभवः । कस्यापि ब्राह्मणस्य शुण्डदण्डाभावादसंभव इति भावः (त० कौ० पृ० २१) । २ स्वरूपासिद्धिः । यथा गोरेकशफत्वस्य लक्षणत्वे स्वरूपासिद्ध्यात्मको हेत्वाभासः ( त० भा० पृ० ५० ) । इदं च लक्षणस्य व्यावर्तकत्वाभिप्रायेणेति विज्ञेयम् ( नील० १ पृ० ४ ) । तथाहि । गौरितरेभ्यो भिद्यत एकशफत्वादित्यत्रैकशफत्वात्मकहेतोः स्वरूपासिद्धिः । एतत्प्रपञ्चस्तु लक्षणशब्दव्याख्यानावसरे संपादयिष्यते ।

**असंसर्गाग्रहः**—[क] बाधग्रहः प्रतिबन्धकग्रहो वा असंसर्गः । तस्याभावः । यथा प्राभाकरमते कार्यतावाचकलिङादिपदासममिव्याहारस्थले व्यवहारस्त्वसंसर्गाग्रहादेवेत्यत्र ( म० प्र० ४) । [ख] भेदाज्ञानम् । यथा सांख्यमते बुद्धिपुरुषयोरसंसर्गाग्रहात्कर्तृत्वाद्यभिमान इत्यत्र ( दि० १ आत्म० पृ० १०५ ) । केचित्तु असंसर्गस्य परस्परसंबन्धाभावस्याग्रहः अबोधः । यथा मीमांसकमते इदं रजतमित्यादौ इदम् इति रजतम् इति च ज्ञानद्वयस्यापि प्रवृत्तिजनकताप्रयोजकत्वेन परस्परसंबन्धाभावस्याबोध इत्याहुः (वाच०) ।

**असत्**—१ सत्तावद्भिन्नम् । यथा प्राचीननैयायिकमते सामान्यादिचतुष्टयमसत् । २ तत्कालीनस्वजनकाभावप्रतियोगि । यथा घटपटादिकार्यं स्वस्योत्पत्तेः प्रागसत् ( वै० उ० ९।१।१ ) । ३ यत् कालसामान्यासंबन्धि तत् । यथा शशशृङ्गकूर्मरोमादि इति मध्वाचार्यानुयायिनो वेदान्तिनः । ४ नामरूपाभ्यामव्याकृतं कारणात्मना स्थितं सूक्ष्मरूपमव्यक्तमिति मायावादिनः । ५ अर्थक्रियाकारि । अकिंचित्करम् अभावादिकमिति बौद्धा आहुः ( वाच० ) ।

**असदर्थविषयकत्वम्**—विशेष्यावृत्तिप्रकारकत्वम् । यथा शुक्तौ इदं रजतम् इति ज्ञानस्य विशेष्यभूतशुक्तौ रजतत्वस्यावृत्तित्वेन असदर्थविषयकत्वम् ।

**असद्धेतुः**—( हेतुः ) हेत्वाभासवदस्यार्थोऽनुसंधेयः ।

**असमर्थविशेषणः**—( स्वरूपासिद्धः ) यद्धेतुघटकं यत् विशेषणं साध्यसाधने अप्रयोजकं भवति तद्विशेषणविशिष्टः स हेतुः । यथा शब्दो नित्यो गुणत्वे सत्यकारणत्वादिति । अत्र च गुणत्वविशिष्टमकारणत्वं हेतुः । तत्र विशेषणं गुणत्वं तु न साध्यसाधने प्रयोजकं भवति । विशेष्याकारणत्वस्यैव नित्यत्वसाधनसामर्थ्यात् ( त० मा० पृ० ४६ ) ।

**असमर्थविशेष्यः**—(स्वरूपासिद्धः) यद्धेतुघटकं यत् विशेष्यं साध्यसाधने अप्रयोजकं भवति तद्विशेष्यघटितः स हेतुः । यथा शब्दो नित्यः अकारणत्वे सति गुणत्वादिति । अत्र चाकारणत्वविशिष्टं गुणत्वं हेतुः । तत्र विशेष्यं

---

१ अकारीति पदच्छेदः ।

गुणत्वं तु न प्रकृतसाध्यसाधने प्रयोजकम् । विशेषणमात्रस्यैव अकारणत्वस्य नित्यत्वसाधने समर्थत्वात् ( त० मा० पृ० ४६—४७ ) ।

**असमवायिकारणम्**—( कारणम् ) [ क ] समवायिकारणे प्रत्यासन्नं कारणम् (प्र० प्र०) (भा० प० श्लो० १८) (त० कौ० १ पृ० ८)। कार्यैकार्थ—कारणैकार्थ—एतदन्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं ज्ञानादिभिन्नं यत् कारणं तदसमवायिकारणम् इति पर्यवसितोर्थः ( मु० १ पृ० ५१ ) । कार्यैकार्थप्रत्यासत्तिरत्र समवायसंबन्धेन कार्यसामानाधिकरण्यम् । कारणैकार्थप्रत्यासत्तिश्चात्र स्वसमवायिसमवायसंबन्धेन कार्यसामानाधिकरण्यम् ( सि० च० १ पृ० २१ ) । अत्रायं सिद्धान्तः । आत्मविशेषगुणानां ज्ञानादीनां कुत्राप्यसमवायिकारणत्वं नास्ति इति ( दि० १ पृ० ५१ ) ( मु० १ पृ० ५०।५१ ) ( राम० १ पृ० ५० ) । तेन असमवायिकारणत्वनिरासाय ज्ञानादीनां पर्युदासः । असमवायिकारणं च कार्यस्थितौ नियामकं भवतीति बोध्यम् । [ ख ] कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति कारणं यत्तत् । यथा तन्तुसंयोगः पटस्यासमवायिकारणम् । तन्तुरूपं च पटगतरूपस्यासमवायिकारणम् ( त० सं० ) । अत्र तन्तुसंयोगस्य पटसमवायिकारणेषु तन्तुषु प्रत्यासन्नत्वात् कारणत्वाच्च तन्तुसंयोगः पटस्यासमवायिकारणमिति ज्ञेयम् । तथा तन्तुरूपस्य परंपरया पटादौ प्रत्यासन्नत्वात् ( तन्तुरूपस्य पटरूपादिसमवायिकारणे पटे स्वाश्रयसमवेतत्वेन प्रत्यासन्नत्वात् ) कारणत्वाच्च लक्षणसमन्वयो बोध्यः ( त० कौ० १ पृ० ८ ) । अत्रेदं बोध्यम् । असमवायिकारणता च गुणकर्ममात्रवृत्तिर्भवति (भा०प०श्लो०२३) इति । गुणकर्मातिरिक्ते न वर्तत इत्येव तत्तात्पर्यं न तु यावद्गुणवृत्तिरिति । तेन ज्ञानादीनामसमवायिकारणत्वविरहेपि नोक्तिविरोधः । एवं चासमवायिकारणता द्विविधा । कार्यैकार्थसमवायात् कारणैकार्थसमवायात् । तत्र प्रथमा यथा आत्ममनःसंयोगस्य ज्ञानादिकं प्रति कारणता । तन्तुसंयोगस्य च पटं प्रति । तत्र कार्येण पटेन सह कारणस्य

तन्तुसंयोगस्य एकस्मिन् तन्तौ प्रत्यासत्तिरस्ति इति लक्षणसमन्वयो बोध्यः ( मु० १ पृ० ५० ) । इयं च असमवायिकारणता लघ्वी इति संज्ञां लभते । लघुप्रतिपत्तिकत्वात् ( वै० उ० २।१।२२ ) । द्वितीया यथा तन्तुरूपाणां पटरूपं प्रति कारणता (वै० उ० २।१।२२ )(५।२।२४) ( त० भा० पृ० ४ )। तथाहि स्वगतरूपादिकं प्रति समवायिकारणं पटः । तेन सह तन्तु रूपस्यैकस्मिन्तन्तौ प्रत्यासत्तिरस्तीत्यसमवायिकारणता संगच्छते ( मु० १ पृ० ५० ) । इयं च असमवायिकारणता महती इति संज्ञां लभते । गुरुप्रतिपत्तिकत्वात् ( वै० उ० २।१।२२ ) ।

**असमवायिगुणत्वम्**—ज्ञानाद्यतिरिक्तभावकार्यासमवायिकारणगुणत्वम् (ल० व० पृ० ३७ ) । असमवायिकारणगुणाश्च रूपम् रसः गन्धः स्पर्शः एकत्वम् परिमाणम् एकपृथक्त्वम् स्नेहः शब्दः स्थितिस्थापकश्चेति ( भा० प० गु० श्लो० ८८ ) ( मु० दि० गु० पृ० १९४ ) । आत्मविशेषगुणानां कुत्राप्यसमवायिकारणत्वं नास्तीति नियमेन तेषामसमवायिकारणत्ववारणाय ज्ञानाद्यतिरिक्तेति गुणविशेषणम् ( मुक्ता० १ पृ० ५०—५१ ) ।

**असाधारणः**—१ ( हेत्वाभासः ) [ क ] सपक्षविपक्षव्यावृत्तो हेतुः ( गौ० वृ० १।२।४ ) ( भा० प० २ श्लो० ७४ ) ( त० सं० ) ( चि० २ पृ० ८७ ) । [ ख ] सपक्षविपक्षव्यावृत्तत्वे सति पक्षवृत्तिः । यथा शब्दो नित्यः शब्दत्वादिति । अयं चानैकान्तिकप्रभेद इति ज्ञेयम् । लक्षणं तु वक्ष्यमाणमसाधारणत्वमेव । अत्र सपक्षो निश्चितसाध्यवान् । विपक्षो निश्चितसाध्याभाववान् । पक्षः संदिग्धसाध्यवान् इत्यर्थो बोध्यः ( गौ० वृ० १।४५ )। इदं लक्षणद्वयं च ( क—ख—इत्यत्र विद्यमानम् ) प्राचीनमतानुसारेणेति विज्ञेयम् । तन्मते पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यम् । विरोधस्तु हेत्वाभासदोषः साध्यासामानाधिकरण्यरूपोन्वयव्याप्तिग्रहविरोधी । इदं च साक्षादनुमितिविरोधि ( दीधि० २ पृ० १९७ ) । तद्विरोधित्वं च असाधारणत्वग्रन्थव्याख्यानावसरे प्रदर्शयिष्यते । अत्र शब्दत्वं हि सपक्षाद्गगनादे-

विपक्षाच्च घटादेर्व्यावृत्तम् पक्षे शब्दे च वर्तत इत्यसाधारणम् ( दि० २ पृ० ८८ )। अत्र प्राचीनमते असाधारणत्वज्ञानं हि साक्षादनुमितिप्रतिबन्धकम्। तथाहि शब्दत्वं हि नान्वयी हेतुः। दृष्टान्ताभावात्। किंतु व्यतिरेकी। तथाच यो हेतुः यद्धर्मवतो व्यावृत्तः स स्वाश्रये तद्धर्माभावं साधयति। यथा धूमो वह्न्यभाववतो जलह्रदादेर्व्यावृत्तः स्वाश्रये पर्वतादौ वह्न्यभावाभावं ( वह्निम् ) साधयति। तथा शब्दत्वं नित्यत्ववतो गगनादेः सपक्षाद्व्यावृत्तमिति स्वाश्रये शब्दे नित्यत्वाभावं ( अनित्यत्वम् ) साधयेत्। एवं नित्यत्वाभाववतो घटादेर्विपक्षात् व्यावृत्तमिति स्वाश्रये शब्दे नित्यत्वाभावाभावं ( नित्यत्वम् ) अपि साधयेत्। परंतु नैवैकत्र शब्दे नित्यत्वानित्यत्वयोः संभवः। तयोर्विरोधात्। तस्माच्छब्दत्वे असाधारणत्वज्ञाने सति न साध्यानुमितिरिति ( त० कौ० २ पृ० १३–१४ ) ( दि० २ पृ० ८८ ) ( दीधि० २ पृ० १९६–१९७ )। [ ग ] साध्यासमानाधिकरणो हेतुः। यथा शब्दो नित्यः शब्दत्वादित्यादौ नित्यत्वासमानाधिकरणं शब्दत्वमसाधारणो हेतुः ( मु० २ पृ० १५९ ) ( गौ० वृ० १।२।५ )। इदं लक्षणं च नवीनमतानुसारेणोक्तम्। प्राचीनमते त्वयं हेतुर्विरुद्ध एवेति मन्तव्यम्। नवीनमते असाधारण्यं साध्यासामानाधिकरण्यम्। एतस्य साध्यसहचारग्रहप्रतिबन्धेन व्याप्तिग्रहप्रतिबन्धो दूषकताबीजम् ( गौ० वृ० १।२।५ )। २ ( जातिः ) नित्यसमविशेषः। स च त्रिविधः युक्ताङ्गहीनत्वम् अयुक्ताङ्गाधिकत्वम् अविषयवृत्तित्वं चेति ( सर्व० पृ० १५३ पूर्ण० )।

**असाधारणकारणत्वम्**—[ क ] कार्यत्वानवच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम् ( त० प्र० ) ( वाक्य० १ पृ० १० )। [ ख ] कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्। यथा घटत्वावच्छिन्नं प्रति दण्डस्यासाधारणकारणत्वम् ( न्या० बो० १ पृ० ८ )। अत्रेदं बोध्यम्। कार्यमात्रं प्रति कारणं कालादि इत्येव व्यवहारात्कालादीनां साधारणकारणत्वम्। दण्डादिकं कार्यमात्रं प्रति कारणम् इति न व्यवहारः। अपि तु घटादिकं प्रति कारणं दण्डादि इत्येव व्यवहारा-

दण्डादीनां कार्यत्वातिरिक्तो यो धर्मः घटत्वादिः तदवच्छिन्ना या घटनिष्ठा कार्यता तन्निरूपितकारणतावत्त्वादसाधारणकारणत्वमिति । [ ग ] साधारणकारणभिन्नकारणत्वम् ( म० प्र० १ पृ० ५ ) ।

**असाधारणत्वम्**—१ ( हेतुदोषः ) सर्वसपक्षव्यावृत्तत्वम् ( चि० २ सव्य० पृ० ८९ ) ( मु० २ पृ० १५९ ) । अयं चासाधारणानैकान्तिकहेत्वाभास-निष्ठो दोष इति विज्ञेयम् । यथा शब्दो नित्यः शब्दत्वादित्यादौ शब्दत्वस्य असाधारणत्वम् ( न्या० म० २ पृ० २० ) । एतज्ज्ञानं चानुमितेः साक्षात्प्रतिबन्धकम् । नित्येष्वनित्येषु च क्वापि शब्दत्वस्य हेतोरदर्शनेन हेतुज्ञानेपि शब्दे नित्यत्वसंशयस्यानिरासात् । २ असाधारणकारणत्ववदर्थो द्रष्टव्यः ।

**असाधारणधर्मः**—लक्ष्यतावच्छेदकसमनियतो धर्मः । यथा गोर्लक्षणं हि सास्नादिमत्त्वम् । स एवासाधारणधर्म इत्युच्यते ( त० दी० १ पृ० ४ ) । अत्र धर्मे असाधारणत्वं च तदितरावृत्तित्वे सति सकलतद्वृत्तित्वम् ( त० प्र० १ ) । अथवा लक्ष्यतावच्छेदकसमनियतत्वम् ( त० दी० पृ० ४ ) । लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वमित्यर्थः ( नील० १ पृ० ४ ) । भवति हि सास्नादिमत्त्वं लक्ष्यतावच्छेदकीभूत-गोत्वस्य व्यापकं व्याप्यं चेति । स चासाधारणधर्मो द्विविधः । व्यावर्तकः अव्यावर्तकश्च । आद्यो गोः सास्नादिमत्त्वम् । द्वितीयः सप्तपदार्थानाम-भिधेयत्वम् ( सि० च० १ पृ० ५ ) । अयमाशयः । सप्तपदार्थातिरिक्त-पदार्थाप्रसिद्ध्या तद्भेदासंभवेनाभिधेयत्वस्य व्यावर्तकत्वं न संभवतीति ।

**असाधारण्यम्**—असाधारणत्ववदस्यार्थोनुसंधेयः ।

**असाधुत्वम्**—महाजनपरिगृहीतव्याकरणस्मृतिनिषिद्धत्वम् ( चि० ४ ) । *यथा अचीक्रमतेत्यादिप्रयोगस्य स्वर्णस्तेयादेश्च यथाक्रममसाधुत्वम् ।*

**असामर्थ्यम्**—वृत्त्यघटकपदार्थान्वितस्वार्थबोधकत्वे सति वृत्तिजन्यबोधीय-प्रकारताश्रयस्वार्थबोधकत्वम् । यथा ऋद्धस्य राजमातङ्ग इत्यादौ ऋद्ध-पदार्थस्य राजपदार्थेनान्वये विवक्षिते राजपदस्यासामर्थ्यम् ( ग० व्यु० का० १ ) । इदमसामर्थ्यमेव सापेक्षत्वम् *अपेक्षा वेत्युच्यते समासाद्य-साधुत्वे प्रयोजकं च भवतीति बोध्यम् । वृत्तिशब्देनात्र वैयाकरणसंमताः*

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयो गृह्यन्ते । स्वार्थबोधकत्वे सतीत्यत्र स्वार्थश्च स्वीयशक्तिग्रहे विशेष्य इति विवक्षणीयः । अत एव शरैः शातितपत्रः चैत्रस्य दासभार्येत्यादौ न समस्यमानस्य शातितदासपदादेः सापेक्षता । पदार्थैकदेशशातनदासत्वादावेव शरकरणकत्वचैत्रनिरूपितत्वादीनामन्वयात् (ग० व्यु० का० १)। ऋद्धस्य राजमातङ्ग इत्यादौ वृत्तिः राजमातङ्ग इति समासवृत्तिः । तद्घटकं पदं ऋद्धस्येति पदम् । तदर्थान्वितः स्वार्थः राजपदार्थः । तद्बोधकत्वे सति वृत्तिजन्यो बोधः राज्ञो मातङ्गः इति बोधः । तादृशबोधे प्रकारताश्रयः विशेषणम् राजा । तद्बोधकत्वं राजपदेस्ति इति लक्षणसमन्वयः । अत्र ऋद्धपदार्थस्य राजपदार्थेन्वयो न भवति । सामर्थ्याभावात् । तत्तदर्थविशेष्यकान्वयबोधं प्रति तत्तत्सामर्थ्यस्य प्रयोजकत्वात् । समर्थः पदविधिः ( पा० सू० २।१।१ ) इति सूत्रव्याख्यानावसरे तथैवोक्तत्वादिति । एवं च ऋद्धस्य राजमातङ्ग इत्यत्र राजमातङ्ग इति समासः असाधुरेव । राजपदस्य समासाघटकऋद्धपदसापेक्षत्वादिति । वृत्त्यघटकेत्यादिलक्षणे ऋद्धो राजमातङ्ग इत्यादौ मातङ्गपदस्य सापेक्षत्ववारणाय विशेष्यदलम् ।

**असिद्धः**—( हेत्वाभासः ) [ क ] यत्र व्याप्तिः पक्षधर्मत्वं वा नास्ति सः असिद्धः ( वै० वि० ३।१।१५ )। असिद्धत्वं च लिङ्गत्वेनानिश्चितत्वम् । [ ख ] व्याप्तिपक्षधर्मतान्यतररहितो हेतुः ( प्र० प्र० )। यथा घटो द्रव्यं श्रावणत्वादित्यादौ श्रावणत्वादिर्हेतुरसिद्धः । असिद्धस्त्रिविधः । आश्रयासिद्धः स्वरूपासिद्धः व्याप्यत्वासिद्धश्चेति ( त० सं० ) ( त० कौ० २ पृ० १४ ) ( प्र० प्र० ) ( भा० प० श्लो० ७६ )। प्रकारान्तरेण असिद्धश्चतुर्विधः । उभयासिद्धः अन्यतरासिद्धः तद्भावासिद्धः अनुमेयासिद्धश्चेति । तत्र उभयासिद्धः उभयोर्वादिप्रतिवादिनोरसिद्धः हेतुः । यथा नित्यः शब्दः सावयवत्वात् इति । अन्यतरासिद्धः वादिप्रतिवाद्यन्यतरस्यासिद्धो हेतुः । यथा कार्यत्वादनित्यः शब्द इति । तद्भावासिद्धः स्वसद्भावासिद्धः । यथा धूमाभावेप्यनुमाने । अनुमेयासिद्धो यथा

पार्थिवं तमः कृष्णरूपवत्त्वात् इति । एवमाश्रयासिद्धिरप्युभयथा अन्यतरासिद्धिरुभयासिद्धिश्च ( प्रशस्त० २ पृ० २९ ) । असिद्धो हेतुश्च साध्यसम इत्युच्यते ( वात्स्या० १।२।८ ) ( गौ० वृ० १।२।८ ) ।

**असिद्धिः**—( हेतुदोषः ) [ क ] परामर्शप्रतिबन्धकज्ञानविषयो धर्मः ( त० कौ० २ पृ० १४ ) । अत्रेदं बोध्यम् । यत्र योसिद्धिस्तत्र तज्ज्ञाप्योप्यसिद्धिरेवेति ( वै० वि० ३।१।१५ ) । [ ख ] व्यभिचाराद्यन्यपरामर्शप्रतिबन्धकतावच्छेदकधर्मवत्त्वम् ( न्या० म० २ पृ० २१ ) । [ ग ] साधारण्यासाधारण्यानुपसंहारित्वभिन्नं ज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकं रूपमसिद्धिः ( दीधि० २ पृ० २१५—२१६ ) । सा चासिद्धिः आश्रयासिद्ध्याद्यन्यतमा ( मु० २ पृ० १६१ ) ( गौ० वृ० १।२।८ ) ( चि० २ पृ० १०२ ) । यथा काञ्चनमयह्रदः काञ्चनमयवह्निमान्काञ्चनमयधूमादित्यादौ काञ्चनमयत्वाभाववद्ध्रदादिः । आश्रयासिद्ध्याद्यन्यतमेत्यस्य आश्रयासिद्धिः स्वरूपासिद्धिः व्याप्यत्वासिद्धिश्चैतासामन्यतमेत्यर्थः । अत्र परामर्शविषयाभावत्वेनानुगतेन त्रयाणामसिद्धत्वेन संग्रहो महर्षिणा कृत इति न विभागविरोधः हेत्वाभासाधिक्यं वा । अत एव ये व्याप्तिविरहपक्षधर्मताविरहरूपास्ते असिद्धिभेदमध्यमध्यासते तदन्ये च यथायथं व्यभिचारादय इति सिद्धान्तप्रवादोपि ( चि० २ पृ० १०२ ) । उदयनाचार्यास्तु पक्षधर्मताज्ञानाभावः असिद्धिः । व्याप्तस्य पक्षधर्मतया प्रमितिः सिद्धिस्तदभावः असिद्धिरित्याहुः ( ग० बाध० ) । असिद्धिस्त्रिविधा । आश्रयासिद्धिः स्वरूपासिद्धिः व्याप्यत्वासिद्धिश्चेति ( चि० २ पृ० १०२ ) ( गौ० वृ० १।२।८ ) ( वै० वि० ३।१।१५ ) ( न्या० म० २ पृ० २१ ) । प्रकारान्तरेण असिद्धिश्चतुर्विधा व्याप्तेः पक्षस्य हेतोश्च तज्ज्ञानस्याप्यभावतः ( ता० र० श्लो० ८५ ) इति ।

**असूया**—[ क ] गुणिनि दोषाविष्करणम् । यथा शत्रवे असूयतीत्यादौ धात्वर्थः । अत्र विषयताविशेष एव चतुर्थ्यर्थः ( ग० व्यु० का० ४ ) ।

असूया च कोपमूलिका ( ल० म० पृ० १०२ )। [ ख ] शाब्दिकास्तु सौन्दर्यासदिगुणविषये दम्भादिकृतत्वरूपदोषारोपानुकूलश्चित्तवृत्तिविशेषः। यथा हरये असूयतीत्यादौ इत्याहुः ( ल० म० पृ० १०२ )। [ ग ] परगुणादौ द्वेषः ( गौ० वृ० ४।१।३ )। [ घ ] गुणद्वेषः। यथा पुत्रायासूयतीत्यत्र धात्वर्थः। अत्र पुत्रस्य गुणं द्वेष्टि इत्याकारको बोधः ( श० प्र० पृ० ८७ )।

**अस्तिकायः**—पदार्थः। स च पञ्चविधः। जीवाकाशधर्माधर्मपुद्गलास्तिकायभेदात्। अत्र जीवादीनां पुद्गलान्तानां पञ्चानां द्वंद्वः। ततश्चास्तिकायशब्देन कर्मधारयः समासः। एवं च जीवादीनां पञ्चानाम् अस्तिकाय इति संज्ञा बोध्या। एतेषु पञ्चसु तत्त्वेषु कालत्रयसंबन्धितया अस्तीति स्थितिव्यपदेशः। अनेकप्रदेशत्वेन शरीरवत्कायव्यपदेशः ( सर्व० सं० पृ० ६९ आर्हत० )।

**अस्तित्वम्**—[ क ] कालसंबन्धित्वम् ( दि० १ ) ( प० मा० )। यथा घटोस्तीत्यादौ घटादेरस्तित्वम्। [ ख ] अस्–शब्दवदस्यार्थोनुसंधेयः।

**अस्तेयव्रतम्**—अनादानमदत्तस्यास्तेयव्रतमुदीरितम् ( सर्व० सं० पृ० ६५ आर्ह० )।

**अस्मद्**—अहम्–शब्दवदस्यार्थोनुसंधेयः।

**अस्मिता**—सत्त्वपुरुषयोरहमस्मीत्येकताभिमानः अस्मिता। तदप्युक्तम् दृग्दर्शनशक्त्योरेकात्मत्वाभिमानोस्मिता इति ( सर्व० सं० पृ० ३६२ पातञ्ज० )।

**अहंकारः**—१ अहमित्यभिमानः। स च शरीरादिविषयको मिथ्याज्ञानविशेष उच्यते। स च दोषनिमित्तानां शरीरादीनां तत्त्वस्यानात्मत्वस्य ज्ञानान्निवर्तते। आत्मत्वेन हि शरीरादौ मुह्यन् रञ्जनीयेषु रज्यति कोपनीयेषु कुप्यति( गौ० वृ० ४।२।१ )। २ अभिमानाश्रयोन्तःकरणमहंकार इति मायावादिनः।

३ महत्तत्त्वजन्यः पञ्चतन्मात्रादीनां कारणीभूतस्तत्त्वविशेषोहंकार इति सांख्याः । तन्मते वैकारिकतामसभेदेन द्विविधोहंकार इति बोध्यम् । बादरायणाचार्यास्तु वैकारिकतैजसतामसभेदेन त्रिविधोहंकार इति प्राहुः ।

**अहः**—१ संपूर्णादित्यमण्डलदर्शनयोग्यः कालः ( वै० उ० ) । यथा अहो अहोभिर्महिमा हिमागमे ( नैषध० ) इत्यादौ । २ क्वचित् दिनरात्रिसमुदितः कालः । यथा मासैर्द्वादशभिर्वर्षं दिव्यं तदहरुच्यते ( सू० सि० ) । यथा वा विप्रः शुध्येद्दशाहेन द्वादशाहेन भूमिपः ( मनु० ५।८३ ) इत्यादौ । ३ अहोरात्रसाध्यः एकः सोमयागो वेदे अहःशब्देनोच्यते । तादृशानामहर्विशेषाणां गणः षडहः ( पु० चि० पृ० १० ) ।

**अहम्**—[ क ] तत्कालीनस्वातन्त्र्योच्चारयितृचैत्रत्वादिविशिष्टः । अत्र स्वातन्त्र्योक्त्या च वाच्यस्त्वया मद्वचनात्स राजा इत्यादौ न मत्पदात्कवेर्बोधः ( दि० ४ पृ० १७९ ) । अत्र स्वतन्त्रोच्चारणं च वाक्यान्तरस्थक्रियाकर्मतया स्वघटितवाक्यार्थप्रत्यायनेच्छानधीनस्वोच्चारणम् ( ग० शक्ति० पृ० २७ ) । [ ख ] स्वोच्चारणकर्तृतावच्छेदकधर्मावच्छिन्नः । यथा अहं गच्छामीत्यादावस्मदर्थः ( ग० शक्ति० पृ० २६–२७ ) । अत्र स्वोच्चारणकर्तृतावच्छेदकावच्छिन्नविषयकत्वस्वजन्यत्व-एतदुभयसंबन्धेन अस्मत्पदप्रकारकबोधविषयकः संकेतः अस्मत्पदस्थलेभ्युपेयते ।

**अहिंसाव्रतम्**—न यत्प्रमादयोगेन जीवितव्यपरोपणम् । चराणां स्थावराणां च तदहिंसाव्रतं मतम् ॥ ( सर्व० सं० पृ० ६५ आर्हत० ) ।

**अहीनः**—आवृत्तसोमयागरूपो द्विरात्रत्रिरात्रादिरहर्गणः ( जै० न्या० अ० ३ पा० ३ अधि० १३ ) ।

**अहेतुसमः**—( जातिः ) [ क ] त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ( गौ० ५।१।१८ ) । हेतुः साधनम् । तत् साध्यात्पूर्वम् पश्चात् सह वा

भवेत्। यदि पूर्वं साधनम् असति साध्ये कस्य साधनम्। अथ पश्चात् असति साधने कस्येदं साध्यम्। अथ युगपत्साध्यसाधने द्वयोर्विद्यमानयोः किं कस्य साधनं किं कस्य साध्यमिति हेतुना न विशिष्यते। अहेतुना साधर्म्यात्प्रत्यवस्थानमहेतुसमः (वात्स्या० ५।१।१८) (नील० पृ० ४४)। प्रतिकूलतर्कदेशनाभासोयम् इति बोध्यम् (गौ० वृ० ५।१।१८)। हेतुसमेति पाठे तु कालत्रयेपि हेतुत्वस्यासंभवकथनं हेतुसमेत्यर्थः (नील० पृ० ४४)। [ ख ] कालसंबन्धखण्डनेनाहेतुतया प्रत्यवस्थानम्। अयमर्थः। दण्डादिकं घटादेर्न पूर्ववर्तितया कारणम्। तदानीं घटादेरभावात् कस्य कारणं स्यात्। अत एव न घटाद्युत्तरकालवर्तितयापि। न वा समानकालवर्तितया। तुल्यकालवर्तिनोः सव्येतरविषाणयोरिवाविनिगमनापत्तेः। कारणमात्रखण्डनेन ज्ञप्तिहेतोरपि खण्डनान्न तदसंग्रहः (गौ० वृ० ५।१।१८)। [ ग ] कालत्रयेपि हेतुत्वासंभवेनाहेतुत्वकथनम् (नील० पृ० ४४)।

**अहोरात्रम्**—लघ्वक्षरसमा मात्रा निमेषः परिकीर्तितः। अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम॥ नोपलभ्यं यथा द्रव्यं सुसूक्ष्मं परमाणुतः। द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दशत्रुटिः स्मृतः॥ विनाडिका तु षट् प्राणास्तत्षष्ट्या नाडिका स्मृता। अहोरात्रं तु तत्षष्ट्या नित्यमेव प्रकीर्तितम्॥ त्रिंशन्मुहूर्ताश्च तथा अहोरात्रेण कीर्तिताः (पु० चि० पृ० २)।

## आ.

**आकर्षणम्**—गतिहेतुविकर्षणम्। यथा शाखां ग्राममाकर्षति देवदत्त इत्यत्र धात्वर्थः। अत्र ग्रामकर्मकं यच्छाखागमनं तदनुकूलविकर्षणवान् इति बोधः। विकर्षणं नम्रीकरणम् (श० प्र० पृ० ९९)।

**आकस्मिकम्**—यत्किंचित्कारणानियम्यम् (दि० १ प्र० ६३)। यथा अकस्मादेव भवति कार्यं न किंचिदपेक्ष्यमिति तदेतन्मतमित्यादौ।

**आकाङ्क्षा**—[ क ] अभिधानापर्यवसानम्। इयं च ज्ञाता सती शाब्दबोधे शब्दस्य सहकारिणी। अत एव गौरश्वः पुरुषो हस्तीत्यादौ नान्वयबोधः।

आकाङ्क्षाविरहात् (त० कौ० ४ पृ० १७) (त० सं०)। तदर्थस्तु यस्य येन विना स्वार्थान्वयाननुभावकत्वम् तस्य तत्पदसंनिधानम् इति (चि०)। [ख] स्वरूपयोग्यत्वे सत्यजनितान्वयबोधजनकत्वम् (तर्का० ४ पृ० १०)। तेन घटः कर्मत्वम् आनयनम् कृतिः इत्यत्र नान्वयबोधः। स्वरूपायोग्यत्वात्। तथा अयमेति पुत्रो राज्ञः। पुरुषोपसार्यताम्। इत्यत्र राज्ञः पुरुषः इति नान्वयबोधः। पुत्रेण जनितान्वयबोधकत्वात् (तर्का० ४ पृ० १०)। [ग] यत्पदं यत्पदेन सह यादृशानुभवजनकं भवेत् तत्पदस्य तत्पदसमभिव्याहारस्तादृशान्वयबोध आकाङ्क्षा। भवति हि नामपदम् उत्तरवर्तिविभक्तिपदेनैव सहान्वयबोधकम्। अतस्तत्समभिव्याहारस्तादृशान्वयबोध आकाङ्क्षा। अत एव घटः कर्मत्वम् आनयनम् कृतिः इति वाक्यात् घटमानय इतिवत् न घटकर्मकानयनानुकूलकृतिमान् इति बोधः। आकाङ्क्षाविरहात् (न्या० म० ४ पृ० २१)। [घ] पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वम् (त० सं० ४) (कु०) (मु० ४ पृ० १८८)। तदर्थश्च यत्पदस्य यत्पदाभावप्रयुक्तमन्वयबोधाजनकत्वं तत्पदसमभिव्याहृततत्पदत्वम् (नील० ४ पृ० ३२) (मु०)। [ङ] यस्य पदस्य येन पदेन विनान्वयबोधजनकत्वं नास्ति तस्य पदस्य तेन पदेन समभिव्याहार आकाङ्क्षा (त० कौ० २ पृ० १६) (प्र० प्र०)। यथा घटमानयेत्यादौ क्रियापदकारकपदयोराकाङ्क्षा। अत्र कारकपदस्य क्रियापदेन विना घटकर्मकमानयनम् इत्यन्वयबोधजनकत्वाभावात्कारकपदस्य क्रियापदेन सहाकाङ्क्षा। एवं क्रियापदस्य कारकपदेनापि सह बोध्या (प्र० प्र०) (त० कौ० पृ०१६-१७)। वस्तुतस्तु प्रत्यये प्रकृत्युत्तरत्वमेवाकाङ्क्षा (मु० ४ पृ० १८८)। एवं वैयाकरणमते विभक्तिवात्वाद्यात्तक्रियाकारकपदानां परस्परं विना परस्परस्य न स्वार्थान्वयानुभावकत्वम् (वाच०)। [च] प्रकृतान्वयबोधसमानाकारकान्यान्वयबोधविरहः (न्या० म० ४ पृ० २२)। अतो घटमानयति इति पदं एकदा

अन्वयबोधे जनिते नान्वयबोधान्तरं जनयति । स्वजन्यान्वयबोधवैधुर्यविरहात् । इतः सर्वे स्वरूपसन्तः शाब्दबोधे हेतवः न तु ज्ञाता इति ज्ञेयम् ( न्या० म० ४ पृ० २२ )। [ छ ] पदार्थसंसर्गावगमप्रागभावः ( कु० ३ )। [ ज ] समभिव्याहृतपदस्मारितपदार्थजिज्ञासा । यथा घटमित्युक्ते आनय पश्य इति आनयेत्युक्ते घटं पटं वा इति जिज्ञासा ( कु० टी० १३ ) । [ झ ] एकपदार्थज्ञाने तदर्थान्वययोग्यार्थस्य यज्ज्ञानं तद्विषयेच्छेति शाब्दिका वदन्ति । [ ञ ] पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षेति मायावादिनः ( वेदा० प० )। आकाङ्क्षा द्विविधा । उत्थाप्याकाङ्क्षा उत्थिताकाङ्क्षा चेति । अत्रेदं ज्ञेयम् । आकाङ्क्षा च शाब्दबोधगोचरेच्छा शब्देनैव विषयसिद्धिद्वारा निवर्त्यते । अत्रायं न्यायः । शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते इति । अनेन शब्दकल्पना आवश्यकी इति विज्ञेयम् । (त० प्र० ख० ४ पृ० २) ।

आकारः—१ विषयता निरूप्यनिरूपकभावापन्नतत्तद्विषयता वा । यथा अयं घटः इत्याकारकं ज्ञानमित्यादौ तादृशविषयता ( वाक्यार्थ० २ पृ० २० ) । २ अभेदः ( तादात्म्यम् )। यथा इत्याकारकं ज्ञानमित्यादौ ( वाक्यार्थ० ) । यथा वा तथा चायम् इत्याकार उपनय इत्यादौ ( दीधि० पृ० १७० ) । ३ अभिनयः । उदाहरणं तु पूर्वोक्तमेव इत्याकार उपनय इति । ४ अवयवसंस्थानविशेष इति काव्यज्ञा वदन्ति । ५ सांख्यास्तु अभेदस्थानीयः पदार्थविशेषः विषयिताविशेषो वा । यथा यत्संबद्धं सत् तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षमित्यादौ इत्याहुः ( सां० सू० ) । ६ वर्णविशेष आकार इति शाब्दिकाः । ७ अतथाभूतस्य तथाभूतेन सामान्यम् । तद्यथा स्थाण्वाकारः पुमान् इत्यत्र पुरुषस्य स्थाणोराकारः पुरुषेण यत् सामान्यम् सः ( न्या० वा० १।१।१३–१४ पृ० ७६ ) ।

आकारकत्वम्—विषयिताविशेषः । यथा घटपदात् घटत्वविशिष्टो बोद्धव्यः इत्याकारकत्वविशिष्टेच्छेत्यादौ ( म० प्र० ४ पृ० १७ ) ।

**आकाशम्**—( द्रव्यम् ) [ क ] संयोगाजन्यजन्यविशेषगुणसमानाधिकरणविशेषाधिकरणम् ( सर्व० औलू० पृ० २१८ ) । तद्यथा संयोगाजन्यो यो जन्यविशेषगुणः विभागजः शब्दः तत्समानाधिकरणो विशेषः पदार्थप्रभेदः तदधिकरणत्वमाकाशेऽस्तीति । अत्र जन्यविशेषगुणः पाकजरूपादिः तत्समानाधिकरणविशेषाधिकरणे पार्थिवपरमाणावतिव्याप्तिवारणाय संयोगाजन्येति । परमात्मन्यतिव्याप्तिवारणाय जन्येति । उभयं च विशेषगुणविशेषणम् इति बोध्यम् । आकाशत्वं च शब्दसमवायिकारणत्वम् ( त० कौ० १ पृ० ७ ) ( मु० १ पृ० ५२ ) । आकाशसत्त्वे प्रमाणमनुमानम् । तच्च शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति समवायिकारणवत्त्वात् यन्नैवं तन्नैवं यथा रूपमिति ( सि० च० १ पृ० ९ ) । यद्यप्याकाशोतीन्द्रियस्तथापि विलक्षणशब्दात्मककार्यान्यथानुपपत्त्या स स्वीकरणीयः ( प्र० प्र० ) । अथवा शब्दो गुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात्स्पर्शवत् शब्दो द्रव्यसमवेतो गुणत्वात्संयोगवत् इत्यनुमानाभ्यां शब्दस्य द्रव्यसमवेतत्वे सिद्धे पृथिव्याद्यष्टसु द्रव्येषु शब्दाधिकरणत्वस्य बाधात् शब्दाधिकरणं नवमं द्रव्यं गगननामकं सिध्यति ( मु० १ पृ० ८६–८७ ) ( वै० सू० २।१।२७ ) ( वै० उ० २।१।२७ ) । शाब्दिकास्तु इदं नक्षत्रचक्रमत्र तिष्ठति अत्रैतदभावः इति निर्दिष्टवस्तुविषये पृथिव्यादेराधारत्वासंभवेन तदाधारस्यैवाकाशसंज्ञकत्वम् इत्याहुः ( ल० म० ) । तत्रोक्तं हरिणा । आधारशक्तिः प्रथमा सर्वसंयोगिनामयम् । इदमत्रेति भावानामभावानां च कल्प्यते ॥ १ ॥ व्यपदेशस्तमाकाशनिमित्तं तु प्रचक्षते । कालात्क्रिया विभज्यन्ते आकाशात्सर्वमूर्तयः ॥ २ ॥ एतावानेव भेदोयमभेदोपनिबन्धनः इति ( वाक्यप० ) । सांख्यास्तु निष्क्रमणादिकं कर्म आकाशानुमापकम् इति आहुः ( वै० सू० २।१।२० ) ( त० व० पृ० १२८ ) । अयं भावः । निष्क्रमणप्रवेशनाद्युत्क्षेपणधर्मवत्त्वादाकाशसिद्धिरिति सांख्यादयो मन्यन्ते । एतदभिप्रायेण सुश्रुते उक्तम् अन्तरिक्षात्तु शब्दः शब्देन्द्रियं सर्वच्छिद्रसमूहो विविक्तता

चेति । वेदान्तिनोपि शब्दः श्रोत्रेन्द्रियं चापि छिद्राणि च विविक्तता । वियतो दर्शिता एते गुणा गुणविचारिभिः ॥ इत्याहुः (वाच०) । अत्रेदं बोध्यम् । प्रदेशवद्द्रव्यसंयोगात् अयमाकाशस्य प्रदेशः इति व्यवहारो भवति इति (त० व० पृ० १२८) । कारणद्रव्यं प्रदेशशब्देनाभिधीयते (गौ० २।२।१८) । [ख] शब्दसमवायिकारणम् । [ग] शब्दगुणकम् । तच्चैकं विभु नित्यं च । तच्च लाघवादेकम् । सर्वत्र कार्योपलम्भाद्विभु । विभुत्वाच्च नित्यम् । तथापि कर्णशष्कुल्यवच्छिन्नं सत् शब्दग्राहकश्रोत्रेन्द्रियात्मकम् (त० कौ० १ पृ० २) (भा० प० श्लो० ४५–४६) (वै० सू० २।१।२८–३०) । अत्र विभुत्वं च परममहत्परिमाणयोगः (वै० उ० ७।१।२२) (मु० १ पृ० १७) । अथवा सर्वमूर्तद्रव्यसंयोगित्वम् । इदमेव सर्वगतत्वमित्युच्यते (मु० १ पृ० ५७) । आकाशे षड्गुणास्तिष्ठन्ति । संख्या परममहत्परिमाणम् एकपृथक्त्वम् संयोगः विभागः शब्दश्चेति (वै० सू० २।१।३१) (भा० प० श्लो० ३३) (त० भा० पृ० ३०) (त० कौ० पृ० ३) (त० सं०) ।

**आकुञ्चनम्**—(कर्म) [क] शरीरसंनिकृष्टसंयोगहेतुः कर्म (त० सं०) (त० कौ० पृ० २०) । लक्षणं च स्वसंनिकृष्टदेशसंयोगजनकक्रियानुकूलक्रियात्वम् (ल० व० पृ० २८) । वक्रतासंपादकं कर्मेत्यर्थः (त० दी० पृ० २९) । [ख] सत्यारम्भकसंयोगेप्यन्यसंयोगकारणम् । अङ्गकौटिल्यजनकं कर्माकुञ्चनमुच्यते ॥ (त० व० पृ० २४१) । [ग] ऋजुनो द्रव्यस्याग्रावयवानां तद्देशैर्विभागः संयोगश्च मूलप्रदेशैः येन कर्मणा भवति अवयवी च कुटिलः संजायते तदाकुञ्चनम् (प्रशस्त० पृ० ५६) ।

**आकृतिः**—[क] आकृतिर्जातिलिङ्गाख्या (गौ० २।२।६७) । तदर्थश्च जातिलिङ्गमित्याख्या यस्याः । जातेर्गोत्वादेर्हि सास्नादिसंस्थानविशेषो लिङ्गम् । तस्य च परंपरया द्रव्यवृत्तित्वम् (गौ० वृ० २।२।६७) । यया जातिर्जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं विद्यात् । सा च

नान्या सत्त्वानां तदवयवानां च नियताद्व्यूहादिति । नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गम् । शिरसा पादेन गामनुमिन्वन्ति । नियते च सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायत इति (वात्स्या० २।२।६७)। [ ख ] अवयवसंस्थानविशेषः । यथा घटस्य कम्बुग्रीवादिराकृतिः ( दि० ४ पृ० १७८ ) । [ ग ] रूपक्रियादिविशिष्टमवयवसंस्थानं जातिलिङ्गमेवाकृतिरिति शाब्दिका वदन्ति । आकृतिश्च शक्यार्थ एवेति केचित् ( पतञ्जलिप्रभृतयः ) मन्यन्ते ( वाच० ) ।

**आक्षेपः**—१ अर्थापत्तिः ( न्या० म० ४ पृ० ६ ) ( नील० पृ० २८ ) । अर्थापत्तिरित्यस्यानुमितिरित्यर्थः ( म० प्र० ४ पृ० ३९ ) । २ समानवित्तिवेद्यत्वमाक्षेप इति गुरवः ( न्या० म० ४ पृ० ६ ) । ३ आक्षेपश्चानुमानमर्थापत्तिर्वेति भट्टाः ( ग० शक्ति० ) । अत्र बहूनां विप्रतिपत्तिरुदाह्रियते । गवादिपदानां गोत्व एव शक्तिः व्यक्तिलाभस्त्वाक्षेपादिति मीमांसकाः । तत्र गोत्वं हि स्वाश्रयं विनानुपपन्नमिति तमाक्षिपतीति भट्टाः ( न्या० म० ४ पृ० ६ ) ( मु० ४ पृ० १७० ) ( त० दी० ४ पृ० २८ ) ( ग० शक्ति० पृ० ४१ ) । जातिवाचकपदाज्जातिबोधः शाब्दः । व्यक्तिबोधस्त्वौपादानिक एवेति श्रीकरमतम् । अत्रौपादानिकत्वं च उपादानमर्थापत्तिस्तत्प्रयोज्यत्वम् जातिकारणत्वं वा ( ग० शक्ति० पृ० ४६ ) । व्यक्तेरपि बोधः शब्दादेव न त्वाक्षेपादितः । व्यक्तिशाब्दबोधे शक्तिविरहो नानुपपत्तिं प्रयोजयति । लक्षणात एव तदुपपत्तिरिति मण्डनाचार्यमतम् ( ग० शक्ति० पृ० ४६ ) ।

**आख्या**—संज्ञात्मकं नाम । यथा पश्चादुमाख्यां सुमुखी जगाम ( कुमा० ) इत्यादौ ।

**आख्यातम्**—तिङ्-प्रत्ययानाम् आख्यातम् इति संज्ञा । अतोऽत्राख्यातपदेन तिप् तस् झि इत्यादयोऽष्टादश प्रत्यया वैयाकरणसंमता गृह्यन्ते । तिङ्प्रत्ययार्थस्तु [ क ] कृतिः । यथा चैत्रस्तण्डुलं पचतीत्यादौ तिबर्थः ।

[ ख ] क्रियाजनकव्यापारमात्रमिति भट्टमीमांसकाः ( म० प्र० ) । [ ग ] उत्पादना । सा चोत्पादकतेति रत्नकोशकृत् ( चि० ४ ) । [ घ ] कर्ता कर्म चाख्यातार्थं इति शाब्दिका वदन्ति ( म० प्र० पृ० ५५ ) । आख्यातपदं वैयाकरणमतेपि तिङ्परमिति मत्वेदमुक्तम् । वस्तुतो वैयाकरणमत आख्यातं नाम तिङन्तम् (शब्दे० शे० समा० पृ० २३६ ) इति बोध्यम् । वर्तमानादिकालश्च तिङर्थः (म० प्र० पृ० ५५)। एकत्वादिसंख्या च तिङर्थः ( चि० ४ ) । आख्यातत्वं दशलकारसाधारणम् ( लौ० मा० ) । सर्वत्र आख्यातार्थो भावनेति मीमांसकाः । मणिकृतस्तु ( गङ्गेशोपाध्यायाः ) जानातीत्यादौ यत्नो नाख्यातस्यार्थः किं तु कालसंख्ये उभे एवेत्याहुः ( न्या० म० ४ पृ० १९ ) ।

आगमः—१ वेदशास्त्रमन्त्रादिः । यथा आगमः खल्वपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोध्येयो ज्ञेयश्चेत्यादौ ( म० भा० १।१।१ )। आगमलक्षणं च प्रामाणिकैरित्थमुच्यते सिद्धं सिद्धैः प्रमाणैस्तु हितं चात्र परत्र वा । आगमः शास्त्रमाप्तानामाप्तास्तत्त्वार्थवेदिनः ॥ इति । २ प्रत्ययादेशभिन्नत्वे सति साक्षाच्छब्दसंस्कारकतया शास्त्रविहितः प्रकृतिप्रत्ययानुपघातको यः अट् इट् इत्यादिः स आगम इति शाब्दिका वदन्ति । ३ साक्षिपूर्वकं लिखितपत्रम् ( दस्तऐवज इति प्र० ) । यथा आगमो निष्फलस्तत्र भुक्तिः स्तोकापि यत्र नो ( वीरमित्रो० २ दाय० ) इत्यादावागमशब्दस्यार्थ इति व्यवहारशास्त्रज्ञा आहुः । ४ स्वत्वहेतुः प्रतिग्रहक्रियादिरागमः ( मिताक्षरा अ० २ श्लो० २७ ) । ५ उत्पत्तिः । यथा आगमापायिनो नित्याः ( गीता० ) इत्यादौ ( वाच० ) ।

आगमनम्—१ [ क ] किंचिद्देशावधिकविभागजनकक्रिया । यथा संवत्सरे व्यतीते तु पुनरागमनाय चेत्यादौ । [ ख ] प्रयोक्तृसंनिकृष्टप्रदेशानुयोगिकसंयोगानुकूलव्यापारः । यथा अयं देवदत्तोत्रागच्छतीत्यादौ । २ प्राप्तिः । यथा एतत्ते सर्वमाख्यातं वैरस्यागमनं महदित्यादौ ( रामा० ) ।

**आग्नेयी**—( दिक् ) उदयगिरिसंनिहिता सुमेरुव्यवहिता च दिक् ( वै० वि० २।२।१० ) । यथा मुम्बापुरीत आग्नेय्यां दिशि मद्रासपुरी ।

**आङ्**—( अव्ययम् ) १ ईषदर्थः । यथा आताम्रः आपिङ्गल इत्यादौ । २ अभिव्याप्तिः । यथा आब्रह्मास्त्यासकलात् इत्यदौ । ३ सीमा । यथा आसमुद्रक्षितीशानामानाकरथवर्त्मनामित्यादौ । ४ अभ्यासः । आवृत्तिरित्यादौ ( वाच० ) । यावत् मर्यादा अभिविधिः एतेषामर्थवदस्यार्थोनुसंधेयः ( ग० व्यु० का० २ ख० २ पृ० ७६ ) ।

**आचारः**—१ प्रवृत्तिविषयत्वम् ( मू० म० १ पृ० १०१ ) । यथा तथैव शिष्टाचारात् ( शि० १ पृ० १०० ) इत्यादौ । सदाचारलक्षणमित्थम् । विद्वेषरागरहिता अनुतिष्ठन्ति यं द्विजाः । विद्वांसस्तं सदाचारं धर्ममूलं विदुर्बुधाः ॥ इति ( म० प्र० ३ ) । २ क्रिया । ३ कृतिः । यथा अलौकिकाविगीतशिष्टाचारविषयत्वमित्यादौ ( दि० १ पृ० ५ ) । ४ गुरूक्तस्यार्थस्याङ्गीकरणमाचार इति योगाचारबौद्धा वदन्ति ( सर्व० पृ० ३० बौद्ध० ) ।

**आचार्यः**—[ क ] उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते ॥ ( सर्व० सं० पृ० २६८ जै० ) । [ ख ] उपनीय ददद्वेदमाचार्यः स उदाहृतः ( मिताक्षरा अ० १ श्लो० ३४ ) ।

**आज्ञा**—१ [ क ] यस्या इच्छाया भङ्गे भयं सा ( कु० ५ ) । यथा गच्छतु भवान्देशान्तरमिति राजाज्ञा । [ ख ] वक्त्रनुमतत्वे सति कर्तुरनिष्टहेतुत्वम् । यथा शूलं विश विषं भुङ्क्ष्वेत्यादिराजवाक्यस्थलीयलोडर्थः । [ ग ] अभिप्रायः । यथा कुर्या इत्यादौ लिङर्थः ( कु० टी० ५ श्लो० १३ ) । [ घ ] भयजनकेच्छा लिङादिघटितं वाक्यं वा आज्ञेति शाब्दिकाः ( वै० सा० द० ख० पृ० १३१ ) । [ ङ ] निकृष्टस्य भृत्यादेः क्रियादौ प्रवृत्त्यर्थः व्यापारविशेषः । यथा

आज्ञया नरपतेर्द्विजन्मनां दारकर्ममृतसूतके तथेत्यादौ इत्यपि कश्चिदुक्तिः। २ लग्नावधिदशमभाव आज्ञेति ज्योतिःशास्त्रज्ञाः। ३ भ्रूमध्यस्थं सुषुम्ना-नाड्यन्तर्गतमाज्ञाचक्रमिति तान्त्रिकाः ( वाच० )।

**आज्यत्वम्**—यदाजिमीयुः तदाज्यानामाज्यत्वम् ( जै० न्या० अ० १ पा० ४ अधि० ३ )।

**आज्यस्तोत्रम्**—अग्न आयाहि वीतये। आनो मित्रावरुण। आयाहि सुषुमा हि ते। इन्द्राग्नी आगतं सुतम्। तान्येतानि प्रातःसवने गायत्रसाम्ना गीयमानानि चत्वार्याज्यस्तोत्राणीत्युच्यन्ते ( जै० न्या० अ० १ पा० ४ अधि० ३ )।

**आततायी**—अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारहरश्चैव षडेते आततायिनः॥ ( मिताक्षरा अ० २ श्लो० २१ )।

**आत्मनेपदम्**—तङानावात्मनेपदम् ( पाणिनिसू० १।४।१०० )। अस्यार्थः। तङ्प्रत्याहारः शानच्कानचौ चात्मनेपदसंज्ञाः स्युः। तङ्प्रत्याहारान्तर्गतप्रत्ययास्तु त आताम् झ थास् आथाम् ध्वम् इट् वहि महिङ् इति। लटः शतृशानचावप्रथमासमानाधिकरणे ( पाणिनिसू० ३।२।१२४ ) इति सूत्रेण लटः स्थाने विहितः शानच्। कानच्प्रत्ययस्तु लिटः कानज्वा ( पाणिनिसू० ३।२।१०६ ) इत्यनेन वेदे लिटः स्थाने विहितः। आत्मनेपदसंज्ञायाः प्रदेशस्तु अनुदात्तङित आत्मनेपदम् ( पाणिनिसू० १।३।१२ ) इत्यादिः। क्रमेणोदाहरणानि। एधते एधेते एधन्ते इत्यादीनि तङ्प्रत्याहारस्य। पचमानं चैत्रं पश्येति शानचः। चक्राणा वृष्णिमिति कानचः। विस्तरस्तु सिद्धान्तकौमुद्यादौ द्रष्टव्यः। अत्रेदं बोध्यम्। परस्मैपद आत्मनेपद एतदुभयपदिधातूनां यत्र क्रियाफलं कर्तृनिष्ठं तत्रात्मनेपदम्। यत्र च कर्तृभिन्ननिष्ठं तत्र परस्मैपदं साधु। तत्र सूत्रं प्रमाणम् स्वरितञितः कर्त्रभिप्राये क्रियाफले ( पाणिनिसू० १।३।७२ ) इति। तदर्थश्च कर्तारमभिप्रैति

संबध्नाति इति व्युत्पत्त्या कर्तृसंबन्धे क्रियाफल एवात्मनेपदम् इति । तदनुसृत्यैवं दानादिफले स्वगते फले ददे इत्येवम् परगते तु ददानि इत्येवं वाक्यं प्रयुञ्जते वृद्धाः । चिन्तामणिकृतस्तु ( गङ्गेशोपाध्यायाः ) यत्र क्रियाफले कर्तुरभिप्राय इच्छा तत्रैवात्मनेपदम् इति । तेन याजकाद्यैर्दक्षिणादिलाभेच्छयैव यागादिकरणे यजन्ति याजकाः पठन्ति पाठकाः इति परस्मैपदम् । परगतस्यापि यागादिफलस्येच्छया तत्करणे तु यजन्ते याजकाः इत्यादिकः साधुरेव प्रयोगः । अत एव पितृस्वर्गकामः पुष्करिण्या यजेत इत्यादावप्यात्मनेपदम् धनकामो गणपतिं मोक्षकामोर्चयेद्धरिम् इत्यादौ परस्मैपदं च संगच्छते इत्याहुः ( श० प्र० पृ० १४५ ) ।

**आत्मा**—( द्रव्यम् ) [ क ] आत्मत्वसामान्यवान् ( त० कौ० १ पृ० ३ )। आत्मत्वं नाम समवायेन ज्ञानेच्छादिमत्त्वम् ( वाक्य० पृ० ५ ) । अथवा अमूर्तसमवेतद्रव्यत्वापरजातिः ( सर्व० सं० पृ० २१९ औ० ) । [ ख ] ज्ञानाधिकरणम् ( त० सं० ) । यथा आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इत्यादिश्रुतौ । आत्मा द्विविधः । जीवात्मा परमात्मा चेति । तत्राद्यः प्रतिशरीरं भिन्नो विभुर्नित्यश्च कर्ता भोक्ता च । द्वितीयः ईश्वरः सर्वज्ञ एक एव ( त० सं० ) ( त० कौ० )। तत्र प्रमाणं श्रुतिः । सा च द्वे ब्रह्मणी वेदितव्ये परं चापरमेव च इति । तमेवं विदित्वातिमृत्युमेति इति च ( म० प्र० पृ० ३ ) । गुणविशिष्टमात्मान्तरमीश्वरः इति ( वात्स्या० ४।१।२१ )। आत्मा चाप्रत्यक्ष एवेति वैशेषिकाः ( वै० ८।१।२ ) । तन्मते आत्मानुमानगम्य एव । तत्रानुमानम् करणव्यापारः सकर्तृकः करणव्यापारत्वात् छिदिक्रियायां वास्यादिव्यापारवत् इति । करणव्यापारेण कर्तुरनुमानगम्यत्वे तत्साजात्यात् ज्ञानक्रियाकरणमपि सकर्तृकं करणत्वात् इति चक्षुरादिना ज्ञानसाधने नात्मनोनुमानम् ( वाच० ) । नैयायिकास्तु जीवात्मा मानसप्रत्यक्षविषय इति प्राहुः ( मा० प० श्लो० ५०-५१ ) । अन्यत्सर्वं जीवात्मपरमात्मशब्दव्याख्यानावसरे व्यक्तीभविष्यति । ज्ञानाद्भिन्नो न नाभिन्नो

भिन्नाभिन्नः कथंचन । ज्ञानं पूर्वापरीभूतं सोयमात्मेति कीर्तितः ॥ (सर्व० सं० पृ० ६९ आर्हत० ) । चैतन्यमात्मा (सर्व० सं० पृ० १९६ प्रत्यभि० )। चैतन्यविशिष्टं देहमात्मेति लोकायता मन्यन्ते । इन्द्रियाण्यात्मेत्यन्ये । अन्तःकरणमात्मेत्यपरे । मुख्यः प्राण एवात्मेति चान्ये । पुत्र एवात्मेति केचित् । क्षणभङ्गुरं संतन्यमानं विज्ञानमात्मेति बौद्धाः । देहातिरिक्तो देहपरिणाम आत्मेति जैना जनाः प्रतिजानते । कर्तृत्वादिविशिष्टः परमेश्वराद्भिन्नो जीवात्मेति नैयायिकाः । द्रव्यबोधस्वभावमात्मेत्याचार्याः परिचक्षते । भोक्तैव केवलं न कर्तेति साङ्ख्याः संगिरन्ते । चिद्रूपः कर्तृत्वादिरहितः परस्मादभिन्नः प्रत्यगात्मेत्यौपनिषदाः ( सर्व० सं० पृ० ४१४ शाक० ) ।

**आत्माश्रयः**—( तर्कः ) [ क ] स्वस्य स्वापेक्षापादकः प्रसङ्गः ( अन० तर्क० ) । यथा कार्यत्वावच्छिन्नकार्यतानिरूपितकारणत्वं साधारणकारणत्वमित्यादौ । अत्र एकं कार्यत्वमवच्छेदकम् । अपरं त्ववच्छेद्यम् । तथा चावच्छेदकज्ञानं विना अवच्छेद्यज्ञानं न भवति । अवच्छेद्यज्ञानं विनाप्यवच्छेदकज्ञानं च न भवति । परस्परसापेक्षत्वादित्यात्माश्रय इति बोध्यम् । [ ख ] स्वस्य स्वापेक्षितत्वे अनिष्टप्रसङ्गरूपो दोषः । स चोत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा । क्रमेण यथा यद्ययं घट एतद्घटजन्यः स्यात्तदैतद्घटानधिकरणक्षणोत्तरवर्ती न स्यात् । यद्ययं घट एतद्घटवृत्तिः स्यात् एतद्घटव्याप्यो न स्यात् । यद्ययं घट एतद्घटज्ञानाभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यात् । एतद्घटभिन्नः स्यादिति वा । एवं सर्वत्रापाद्यम् ( गौ० वृ० १।१।४० ) । [ ग ] स्वज्ञाने स्वज्ञानापेक्षया आत्माश्रयः ( कृष्ण० ) ।

**आदानम्**—यथेष्टविनियोगफलकः स्वीकारः । यथा विप्राद्धनमादत्ते इत्यादौ दाधात्वर्थः ( का० व्या० पृ० १० ) ।

**आदानसमितिः**—आसनादीनि संवीक्ष्य प्रतिलिख्य च यत्नतः । गृह्णीयान्निक्षिपेद्वा यत्सादानसमितिः स्मृता ॥ ( सर्व० सं० पृ० ७९ आर्ह० ) ।

**आदिः**—१ तत्प्रागभावाधिकरणकालः। यथा आदौ द्रव्यं स्वीकुरु इत्यादौ। यथा वा आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते इत्यादौ। २ कारणम्। यथा आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च (गौ० २।२।१४) इत्यादौ। अत्र आदीयते अस्मात् इति व्युत्पत्तिर्द्रष्टव्या (वात्स्या० २।२।१४)। ३ उत्पत्तिः। यथा अनादिः प्रागभाव इत्यादौ। ४ परस्मिन्सति यस्मात्पूर्वो नास्ति स आदिरिति शाब्दिका वदन्ति।

**आदेशः**—१ आज्ञा। २ स्थान्यर्थाभिधानसमर्थ इति शाब्दिका वदन्ति। ३ कथनम् उपदेशो वा। यथा अथात आदेशः इत्यादौ इति वेदान्तिन आहुः।

**आद्यत्वम्**—अनागन्तुकैश्वर्यसंबन्धित्वम् (सर्व० सं० पृ० १६८ नकु०)।

**आधारः**—अतद्रूपोपि तद्रूपेणारोप्य बुद्धौ सुखाधारः (सिद्धा० ले० पृ० १८६)।

**आधारता**—अधिकरणतावदस्यार्थोनुसंधेयः। अयं चाखण्डोपाधिः इति नैयायिका आहुः (वै० सा० सुबर्थ० पृ० ८६) (ग० व्यु० कार० ७ पृ० ११६)।

**आधिः**—आधीयते विश्वासार्थं स्थाप्यत इत्याधिः (गहाण इति प्र०)। गृहीतस्य द्रव्यस्योपरि विश्वासार्थमधमर्णेनोत्तमर्णे अधिक्रियत आधीयत इत्याधिः (मिताक्षरा अ० २।५७)।

**आधिक्यम्**—व्यतिरेकवदस्यार्थोनुसंधेयः (श० प्र० पृ० १२८)।

**आधिदैविकम्**—देवकृतम्। यथा वातादिनिबन्धनं दुःखम् (वाच०)। अत्र देवान् वातादीन् अधिकृत्य प्रवृत्तम् इति व्युत्पत्तिर्द्रष्टव्या।

**आधुनिकी**—(लक्षणा) पूर्वपूर्वं तात्पर्येणाप्रत्यायकत्वादाधुनिकी। यथा घटत्वादिना पटादिपदस्य लक्षणा (श० प्र० पृ० ३१)।

**आधेयता**—[क] आधेयम् इति प्रतीतिनियामको धर्मविशेषः (वृत्तित्वम्)। यथा भूतलं घटवदित्यादौ घटे भूतलाधेयता। [ख] प्रकारताविशेष इति केचिद्वदन्ति (ग० पक्ष०)। [ग] अखण्डोपाधिरित्यन्ये वदन्ति।

**आध्यात्मिकवायुः**—प्राणाख्यो वायुः । यथा वृक्षादीनां शरीरत्वे आध्यात्मिकवायुसंबन्धः प्रमाणमित्यादौ ( मु० १ पृ० ७१ ) । अत्र आत्मानं मनःशरीरादिकमधिकृत्य इति व्युत्पत्तिर्द्रष्टव्या । अयं च विषयवायावन्तर्भवति इति विज्ञेयम् ।

**आनतिः**—भृत्या परिक्रीय वशीकार आनतिः ( जै० न्या० अ० १० पा० २ अधि० ८ ) ।

**आनन्तर्यम्**—१ ध्वंसाधिकरणकालवृत्तित्वम् ( त० प्र० २ ) । यथा वैशाखमासस्य चैत्रानन्तर्यम् । यथा वा अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते इत्यादावथशब्दार्थोवयवान्तनिरूपणानन्तर्यं हेत्वाभासनिरूपणे बोध्यते । २ अव्यवधानम् । यथा आनन्तर्यात्स्वयोन्यास्तु तथा बाह्येष्वपि क्रमात् ( मनुः ) इत्यादौ ( वाच० ) ।

**आनन्दः**—१ सुखम् । यथा रसो वै सः । रस[१] ह्येवायं लब्ध्वानन्दी भवति ( तै० उ० २।७।१ ) इत्यादौ । २ दुःखाभावः । यथा परमात्मन्यानन्दानङ्गीकारपक्षेपि भारापगमे सुखी संवृत्तः इत्यादाविव दुःखाभावरूप आनन्दः ( मु० १ पृ० १०३ ) । अत्र आनन्दशब्दो लक्षणया दुःखाभावबोधक इति ज्ञेयम् ।

**आनुपूर्वी**—तदुत्तरत्वविशिष्टतदुत्तरत्वादिः । यथा घटमानयेत्यक्षराणामानुपूर्वी । यथा वा उचितानुपूर्वी प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वरूपेत्यादौ ( ग० अव० पत्र० ४ ) । आनुपूर्वी च घटः इत्यत्र स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसंबन्धेन घकारविशिष्टत्वम् इति चिन्त्या ( त० प्र० ख० ४ पृ० १२७ ) । एवमन्यत्राप्यूह्या ।

**आनुपूर्व्यम्**—क्रमः ( जै० सू० वृ० अ० ५ पा० १ सू० १ ) ।

**आनुषङ्गिकम्**—उद्देश्यान्तरप्रवृत्तस्य तत्कर्मनान्तरीयकतया प्राप्तः प्रासङ्गिकोनुद्देश्यः कार्यविशेषः । यथा भो बटो भिक्षामट यदि गां पश्येस्तां चानयेत्यादौ । अत्र भिक्षार्थं प्रवृत्तस्य दैवाद्गोदर्शनात्तस्या आनयनमानुषङ्गिकम् । तत्रोद्देश्यत्वाभावादिति बोध्यम् ( वाच० ) ।

**आन्वीक्षिकी**—प्रत्यक्षागमाश्रितमनुमानं सा अन्वीक्षा । प्रत्यक्षागमाभ्यामीक्षितस्यानु ईक्षणमन्वीक्षा । तया प्रवर्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम् ( वात्स्या० १।१।१ )। यथा महर्षिगौतमप्रणीतं न्यायदर्शनम् । श्रवणादनु पश्चात् ईक्षा अन्वीक्षा उन्नयनम् । तन्निर्वाहिकान्वीक्षिकी । उपनिषदर्थश्चान्वीक्षिक्यनुसारी ग्राह्यः ( गौ० वृ० १।१।१ ) । एतस्या विद्यायाः प्रमाणप्रयोजनादिकं तु न्यायशब्दव्याख्यानावसरे द्रष्टव्यम् ।

**आपः**—( द्रव्यम् ) [ क ] रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः ( वै० २।१।२ ) । [ ख ] अप्त्वसामान्ययुक्ताः ( त० भा० पृ० २७ ) ( त० कौ० १ पृ० २ ) । यथा आपः स्वभावतो मेध्याः किं पुनर्वह्नियोगत इत्यादौ । [ ग ] शीतस्पर्शवत्यः ( वै० २।२।५ ) ( त० सं० )। तल्लक्षणं च अभास्वरशुक्लेतररूपासमानाधिकरणा नैमित्तिकद्रवत्ववदवृत्तिर्वा रूपवद्वृत्तिः द्रव्यत्वसाक्षाद्व्याप्या च या जातिः तद्वत्त्वम् इत्यादि ( वै० उ० २।१।२ ) ( मु० १ पृ० ७४ ) । तादृशी जातिश्च जलत्वमेव । अथवा नीलासमानाधिकरणा भास्वरशुक्लासमानाधिकरणा रूपवद्वृत्तिर्द्रव्यत्वसाक्षाद्व्याप्या च या जातिः तद्वत्त्वम् ( वै० वि० २।१।२ )। यद्वा शीतस्पर्शसमानाधिकरणा द्रव्यत्वापरा च या जातिः तद्वत्त्वम् ( त० दी० १ पृ० ८ ) । अप्त्वसामान्यं च सरित्सागरसमवेतत्वे सति ज्वलनासमवेतं सामान्यम् ( सर्व० पृ० २१८ औलू० )। आपो द्विविधाः । नित्या अनित्याश्च । तत्र नित्याः परमाणुरूपाः । अनित्यास्तु कार्यरूपाः । अनित्यास्त्रिविधाः । शरीरम् इन्द्रियम् विषयश्च । तत्र शरीरमयोनिजं वरुणलोके प्रसिद्धम् । तस्य च शरीरस्य पार्थिवावयवोपष्टम्भेनोपभोगसमर्थत्वम् ( प्रशस्त० पृ० ४ ) । इन्द्रियम् रसग्राहकं रसनम् । तच्च जिह्वाग्रवर्ति । विषयः सरित्समुद्रादिर्हिमकरकादिश्च ( त० सं० ) ( भा० प० श्लो० ४१) (त० भा० पृ० २७) ( त० कौ० १ पृ० २ ) । अत्रेदं बोध्यम् । हिमकरकादीनां सांसिद्धिकं द्रवत्वमस्त्येव । परंतु तेषामदृष्टविशेषेण घनीभावात्सांसिद्धिकद्रवत्वप्रतिबन्धमात्रं कल्प्यत इति विज्ञेयम् ( मु० ) (सि० च०)।

दिव्यतेजःसंयोगात्तु तत्र द्रवत्वप्रतिरोधः । काठिन्यप्रतीतिस्तु तत्र भ्रान्तिरेव । केचित्तु दिव्यतेजःसंयोगाज्जलपरमाणुभ्यां द्व्यणुकम् । तैश्च त्रसरेण्वादिकं क्रमेण हिमादौ जायते । तादृशद्व्यणुकादिकं च द्रवत्वरहितं कठिनमेवेति हिमादौ काठिन्यप्रतीतिर्न भ्रान्तिरित्याहुः ( वै० वि० २।१।२ ) । तत्र करकाया उत्पत्तिकारणं तज्जन्यगुणाश्च भावप्रकाशे दर्शिताः । यथा दिव्यवाय्वग्निसंयोगात्संहताः खात्पतन्ति याः । पाषाणखण्डवच्चापस्ताः कारिक्योमृतोपमाः ॥ करकाजं जलं रूक्षं विशदं गुरु सुस्थिरम् । दारुणं शीतलं सान्द्रं पित्तहृत् कफवातकृत् ॥ इति ( वाच० ) । अप्सु चतुर्दश गुणा वर्तन्ते । अभास्वरं शुक्लरूपम् मधुरो रसः शीतः स्पर्शः संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः परत्वम् अपरत्वम् गुरुत्वम् सांसिद्धिकं द्रवत्वम् स्नेहः वेगश्चेति । स्थितिस्थापकाख्यसंस्कारोपि जले वर्तत इति केचित् ( त० कौ० १ पृ० २ ) ( त० भा० पृ० २७ ) ( भा० प० श्लो० ३१ ) । अत्राभास्वरं च पराप्रकाशकम् ( प० मा० ) । वियति विक्षेपे जले धवलिमोपलब्धेर्जले शुक्लरूपमेव ( मु० १ पृ० ७५ ) । यदि तु वियति विक्षिप्तजल उपलभ्यमानो धवलिमा तेजोगत एव तत्र भासत इत्युच्येत तदा घटगतरूपमपि तेजोगतमेव किं न स्यात् इति । कालिन्दीजलादौ नीलिमोपलब्धिस्त्वाश्रयौपाधिकी भ्रान्तिरेवेति ( मु० १ पत्र० ७५ ) । यद्यपि जले कोपि रसो नानुभूयते तथापि हरीतक्यादिकषायद्रव्यभक्षणानन्तरं जलमाधुर्यमनुभूयत एव । तस्य तद्व्यञ्जकत्वात् । न च जलसंयोगाद्धरीतक्यादावेव माधुर्योत्पत्तिरिति वाच्यम् । पात्रस्थहरीतक्यादावपि जलसंयोगेन मधुरिमोत्पत्त्यापत्तेः । हरीतक्यां चामलक्यामिव कषाय एव रसोनुभूयते । कर्कटीभक्षणानन्तरं जलस्य या तिक्ततोपलभ्यते सा कर्कट्या एव । जलमन्तरेणापि तद्ग्रहात् । जम्बीररसादावम्लोपलब्धिः करवेल्ल-( करवीर- ) रसादौ तिक्तत्वोपलब्धिश्चैतेन व्याख्याता । सूर्यकरादिसंयोगाज्जले य उष्णस्पर्शः प्रतीयते सोपि सूर्यकरादेरेव । स्नेहस्तु जल एव । घृतादावपि तदुपष्टम्भकजलस्यैव स्नेहः । स्नेहप्रकर्षाच्च

( तादृशस्नेहस्योत्कृष्टत्वेन ) घृतादेर्दहनानुकूलत्वम् । सक्तुसिकतादौ पिण्डीभावः संग्रहनामकः संयोगविशेषो द्रवत्वस्नेहकारित एव इति ( वै० वि० २।१।२ ) ( वै० उ० २।१।२ ) । आपो वायुविशेषसंयोगजन्या वायुविशेषरूपा एव न तु द्रव्यान्तरमित्याधुनिका द्रुणविद्याविशारदा वदन्ति । तन्न सह्यते नैयायिकैरित्यलं तदुपपत्तिदोषोपन्यासेन ।

**आप्तः**—[ क ] आप्तः खलु साक्षात्कृतधर्मा । ऋष्यार्यम्लेच्छानां समानं लक्षणम् । तथा च सर्वेषां व्यवहाराः प्रवर्तन्ते । साक्षात्करणमाप्तिस्तया प्रवर्तत इत्याप्त इत्यर्थः ( वात्स्या० १।१।७ ) । अत्राप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् ( न्या० बो० ४ पृ० १९ ) । [ ख ] प्रकृतवाक्यार्थयथार्थज्ञानवान् ( गौ० वृ० १।१।७ ) । यथा आप्तोपदेशः शब्दः ( गौ० १।१।७ ) इत्यादावाप्तः । [ ग ] यथाभूतस्याबाधितार्थस्योपदेष्टा पुरुषः ( त० भा० पृ० १७ ) ( प्र० प्र० ) ( सि० च० ४ पृ० ३० ) । [ घ ] यथार्थवक्ता ( त० सं० ४ ) । यथा सत्यवतीसुतव्यासगौतमादिराप्तः । [ ङ ] अनुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः स आप्तः इति चरके पतञ्जलिः ( ल० म० पत्र० २ ) ।

**आप्तोपदेशः**—( प्रमाणशब्दः ) [ क ] यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः शब्दः । [ ख ] प्रकृतवाक्यार्थयथार्थज्ञानप्रयुक्तः शब्दः । अथवा आप्तो यथार्थ उपदेशः शाब्दबोधो यस्मात् ( गौ० वृ० १।१।७ ) । यथा ब्रह्मसूत्रन्यायसूत्रादिराप्तोपदेशः ।

**आप्यम्**—( नक्षत्रम् ) पूर्वाषाढा ( पु० चि० पृ० ३५३ ) ।

**आप्यायनम्**—कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः । बारिबीजेन विधिवदेतदाप्यायनं मतम् ॥ ( सर्व० सं० पृ० ३७० पातञ्ज० ) ।

**आभासः**—१ ( निग्रहस्थानम् ) व्यभिचारादावसिद्ध्याद्युद्भावनम् ( गौ० वृ० ५।२।२२ ) । यथा पर्वतो धूमवान्वह्नेरित्यादौ वह्निः स्वरूपासिद्धः स्यादिति । निरनुयोज्यानुयोगप्रभेदोयमिति विज्ञेयम् (गौ० वृ० ५।२।२२) ।

२ अप्रमाज्ञानहेतुः ( ग० बाध० ५—६ )। यथा तत्प्रयुक्तं सामान्यतो दृष्टस्याप्याभासत्वमिति बाधस्यासांकर्यात् ( चि० २ पृ० १०५ ) इत्यादावाभासः । ३ प्रतिकूलः विरुद्धो वा । यथा तर्काभासः प्रमाणाभासः न्यायाभासः इत्यादौ ( कु० ५।३ ) ( वात्स्या० १।१।१ ) (त० कौ० पृ० ६)। ४ भ्रमः । यथा शुक्तौ रजताभास इत्यादौ । ५ ज्ञानविषयः । यथा हेत्वाभास इत्यादौ हेतुदोषः । अत्र हेतावाभासत इति व्युत्पत्त्या आभासपदं हेतुनिष्ठदोषपरम् इति ज्ञेयम् ( न्या० र० सामा० )। ६ उपाधितुल्यतया भासमानं प्रतिबिम्बम् आभास इति मायावादिन आहुः । तत्रोक्तम् । बुद्धितत्स्थचिदाभासौ द्वावेतौ व्याप्नुतो घटम् । तत्राज्ञानं धिया नश्येदाभासात्तु घटः स्फुरेत् ॥ ( पञ्चद० ७।९१ ) इति ( वाच० ) । ७ विकलः । यथा लिङ्गाभासः इत्यादौ आभासशब्दस्यार्थः ।

**आमन्त्रितत्वम्**—स्वकर्तव्यत्वप्रकारकधीजनकं प्रत्याख्यानार्हं यद्वाक्यं तत्प्रतिपाद्यत्वम् । यथा पुत्रोत्सवे भवान् भुञ्जीतेत्यादौ लिङर्थः । अत्र स्वपदं निरुक्तप्रतिपाद्यत्वाभिमतभवदादिपरम् । वाक्ये प्रत्याख्यानार्हत्वं च प्रत्यवायाजनकप्रत्याख्यानकत्वम् । यत्प्रत्याख्याने कामचारस्तत् वाक्यम् आमन्त्रणमिति स्मृतेः ( श० प्र० पृ० १५६ )। अत्र प्रत्यवायस्याजनकं प्रत्याख्यानं यस्येति बहुव्रीहिः । एवं च पुत्रोत्सवे भवान्भुञ्जीत इत्युक्तस्य भोजनस्य त्यागेपि न काचित्क्षतिः । इच्छा चेद्भोक्तव्यं नोचेन्न भोक्तव्यमिति तात्पर्यम् । तादृशं वाक्यं च भवतात्र भोक्तव्यम् इत्यामन्त्रणरूपम् । तत्प्रतिपाद्यो भवदादिः इति विज्ञेयम् । भवान् भुञ्जीतेत्यत्र लिङर्थामन्त्रितत्वैकदेशे स्वकर्तव्यत्वबोधे धात्वर्थो विशेष्यकत्वेनान्वेति । तथा च पुत्रोत्सवनिमित्तकभोजनधर्मिकस्वकर्तव्यत्वधीजनकवाक्यप्रतिपाद्यो भवान् इत्याकारो बोधः । एवम् बालं युद्धात्तारयेस्त्वम् जलाद्विप्रं समुद्धरेः इत्यादावप्युक्तरीत्यैवान्वयो द्रष्टव्यः ( श० प्र० १५६ ) । वैयाकरणास्तु आमन्त्रणं कामचारानुज्ञा । तदर्थश्च स्वेच्छया प्रवृत्तस्येतरत्र प्रवृत्तिप्रतिबन्धफलकस्वाभिलषितविषयकप्रवृत्त्यनुकूलो व्यापारः । अथवा

स्वामिलषिते कामचारेण प्रवृत्तस्येष्टसाधनताबोधनम् । यथा इहासीतेति । अत्र उपवेशनादिव्यापारे इष्टसाधनताज्ञानात्प्रवृत्तावितरत्राप्रवृत्तिरर्थतः फलति इति बोध्यम् । यद्वा अनुज्ञातुः प्रकृतप्रयोजनस्येतरप्रवृत्तिप्रतिबन्धेनैतत्प्रवृत्तिविषय इष्टसाधनताबोधनम् । यथा आरब्धं कुरुत तत्कुरुष्व यथाहितमित्यादावामन्त्रणं लोडर्थः इत्याहुः ( वै० सा० द० पृ० १३१–१३२ ) ।

**आमिक्षा**—तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम् इति श्रूयते । तत्र घनीभूतः पयःपिण्ड आमिक्षा जलं वाजिनम् ( जै० न्या० अ० २ पा० २ अधि० ९ ) ।

**आम्नायः**—१ सम्यगभ्यासः । अत्र सम्यक्त्वं च नियमधारणपूर्वकत्वम् गुरुमुखश्रवणपूर्वकत्वं चेति बोध्यम् ( वाच० ) । २ सम्यक् पाठः । ३ वेदः ।

**आयतनम्**—१ अवच्छेदकम् ( नील० पृ० ७ ) । यथा आत्मनो भोगायतनं शरीरमित्यादौ । २ प्रतिमेति वैदिका वदन्ति । यथा देवतायतनानि हसन्ति रुदन्तीत्याद्याथर्वणश्रुतौ । ३ आश्रयः स्थानं वेति बौद्धकाव्यज्ञा आहुः ।

**आयीभावः**—विद्यमान एव अकारस्योपरितन इकारः सामप्रसिद्धया प्रक्रियया वृद्धः सन्नैकारो भवति । तस्य संध्यक्षरत्वादकारः पूर्वभागः ईकार उत्तरभागः । तावुभौ विश्लेषेण गीयमानावायीभावं प्रतिपद्येते ( जै० न्या० अ० ९ पा० २ अधि० ९ ) ।

**आयोजनम्**—१ कर्म । यथा कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेरित्यादौ ( कु० ५।१ ) ( दि० १ पृ० १९ ) । २ व्याख्यानम् । यथा वेदास्तदर्थविदायोजिताः इत्यादौ । व्याख्याता इत्यर्थः ।

**आरब्धकर्म**—१ तत्सामग्रीसंपादनम् ( मू० म० १ पृ० २४ ) । घटादिस्थले दण्डचक्रादिरूपसामग्रीसंपादनम् । २ चरमवर्णसमूहो ग्रन्थः ( मू० म० १ पृ० २३ ) । यथा ग्रन्थस्थले तथेदम् माङ्गलम्

आरम्भकर्माङ्गम् कर्मार्थितया शिष्टैस्तत्पूर्वं क्रियमाणत्वात् प्रयाजादिवत् ( चि० १ पृ० १९ ) इत्यादावारम्भकर्म । चरमवर्णसमूहो नाम चरमवर्णपर्यन्तवर्णसमूहः । केचित्तु कण्ठताल्वाद्यभिघातदृष्टप्रतिबन्धकाभावाविरेवारम्भकर्मेत्याहुः । ३ वेदान्तिनस्तु फलदानाय संमुखः पुण्यपापान्यतरात्मकः अदृष्टविशेषः । यथा प्रारब्धकर्मणो भोगादेव परिक्षय इत्यादौ प्रारब्धकर्म इति वदन्ति ।

**आरम्भः**—१ आद्यप्रवृत्तिः । यथा अथेदमारभ्यत इत्यादौ आङुपसर्गपूर्वकरभधातोरर्थः । २ अप्रवृत्तस्याद्या प्रवृत्तिः । यथा सृष्ट्यारम्भः । ३ कर्तव्यकर्मचिकीर्षेति मीमांसकाः ( मू० म० १ ) । ४ औत्सुक्यमारम्भ इति नाटकालंकारज्ञा वदन्ति । तदुक्तं प्रतापरुद्रे औत्सुक्यमात्रमारम्भः परिरम्भाय भूयसे इति । ५ ज्ञातुः ईप्साप्रयुक्तस्य सुखसाधनावाप्तये समीहाविशेषः ( वात्स्या० १।१।१ प्रस्तावना ) ।

**आरादुपकारकम्**—द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म ( मी० न्या० पृ० ३६ ) ।

**आराधनम्**—[ क ] गौरवितवृत्तिनिष्ठप्रीतिहेतुभूता क्रिया ( त० प्र० २ ) ( ग० शक्ति० ) । अत्र गौरवितवृत्तित्वमुपलक्षणम् ( कृष्ण० श० ) । गौरवं त्वाराध्यत्वावगाही ज्ञानप्रभेदः । अयं ज्ञानप्रभेद एव भक्तिरित्युच्यते ( श० प्र० पृ० ९५ ) । [ ख ] गौरवितप्रीतिहेतुक्रिया ( कि० व० ४ ) । [ ग ] गौरवप्रयुक्तप्रीत्यवच्छिन्नक्रिया । यथा पितरमाराधयति उपास्ते पूजयतीत्यादौ धात्वर्थः । अत्रेदं बोध्यम् । परमात्मानमाराधयतीत्यादौ गौरवप्रयुक्तक्रियामात्रमाराधनम् । तदेव लक्षणया धात्वर्थः । तेन न परमात्मनः प्रीतिविरहाद्योग्यत्वापत्तिः । अत्रायं विशेषो ज्ञेयः । पित्रादिसेवायाश्च मन्त्रकरणकत्वाभावान्न तत्र पितरं यजते इत्यादिकः प्रयोगः । अत्र धात्वर्थनिविष्टयोर्गौरवप्रीत्योः क्रमेण विषयत्वाश्रयत्वाभ्यां पित्रादेरन्वयः । तेन पितृगोचरगौरवप्रयुक्ता या पितृनिष्ठप्रीतिहेतुक्रिया तद्वान् इत्येवं बुद्धिः ( श० प्र० पृ० ९५ ) ।

**आरामः**—पुष्पफलोपचयहेतुर्भूभागः ( मिताक्षरा व्य० श्लो० १५४ ) ।

**आरोपः**—भ्रमवदस्यार्थोऽनुसंधेयः ।

**आरोहणम्**—ऊर्ध्वदेशावच्छिन्नसंयोगानुकूलक्रिया । यथा आरूढवानरो वृक्षः इत्यादौ । अत्र आरूढो वानरो यम् इति व्यासे क्तप्रत्ययस्याश्रयोर्थः । द्वितीयाया आधेयत्वम् । तथा च वृक्षवृत्त्यूर्ध्वदेशावच्छिन्नसंयोगानुकूलक्रियाश्रयो वानरः इत्यन्वयबोधः । समासे तु आरोहणकर्तृवानरसंबन्धी वृक्षः इत्यन्वयबोधः । संबन्धश्च तत्र स्वकर्तृकारोहणकर्मत्वरूपः ( श० प्र० श्लो० ४ पृ० ४९ ) ।

**आर्थीभावना**—१ प्रयत्नविशेषः । २ अन्योत्पादनानुकूलव्यापारसामान्यम् ( मी० न्या० पृ० ७२ ) ।

**आर्षम्**—१ ( विद्या ) आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वर्थेष्वतीन्द्रियेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्ममनसोः संयोगविशेषाद्धर्मविशेषाच्च यत्प्रातिभं प्रतिभाजन्यं ज्ञानं यथात्मनिवेदनमुत्पद्यते तत् आर्षम् इत्याचक्षते । तच्च ज्ञानं बाहुल्येन देवर्षीणाम् । कदाचिदेव लौकिकानाम् । यथा कन्यका ब्रवीति श्वो मे भ्राता आगन्ता इति हृदयं मे कथयति इति । सिद्धदर्शनं न ज्ञानान्तरम् । कथम् । यत्सूक्ष्मव्यवहितविप्रकृष्टेष्वर्थेषु सिद्धानां द्रष्टॄणामञ्जनपादलेपगुटिकादिसिद्धीनां दर्शनं तत्प्रत्यक्षमेव । दिव्यान्तरिक्षभौमानां ग्रहनक्षत्रसंचारादि निमित्तमुपलभ्य प्राणिनां धर्माधर्मविपाकदर्शनं यत् तदनुमानमेव । अथ लिङ्गानपेक्षं धर्मादिदर्शनं तदार्षप्रत्यक्षयोरन्यतरस्मिन्नन्तर्भूतम् इति ( प्रशस्त० गुण० पृ० ३२ ) । २ विवाहभेदः । आदायार्षस्तु गोद्वयम् । यत्र पुनर्गोमिथुनमादाय कन्या दीयते स आर्षः ( मिताक्षरा आ० १ श्लो० ५९ ) ।

**आलम्बनम्**—यस्मिन्विज्ञाने यदवभासते तत्तदालम्बनम् ( सर्व० सं० पृ० ४२२ शां० ) ।

१ अत्र पाठान्तरम्-कथम् । प्रत्यक्षानुमानाभ्याम् । तत्र प्रत्यक्षेण विप्रकृष्टपदार्थदर्शनम् । अनुमानेन तु दिव्यान्तरिक्ष० इति ।

**आलस्यम्**—१ कृतेरभावः ( सि० च० १ पृ० ३ )। शरीरवाक्चित्तगुरुत्वादप्रवृत्तिरालस्यम् ( सर्व० सं० पृ० ३५५ पातञ्ज० )। २ आलस्यं गुणविशेष इति केचिदाहुः ।

**आलोकः**—१ सूर्यादितेजःप्रकाशः । यथा गृह्णाति चक्षुः संबन्धादालोकोद्भूतरूपयोः ( भा० प० श्लो० ५६ ) इत्यादौ । २ दर्शनम् । यथा यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलताम् ( शाकु० ) इत्यादौ ।

**आलोचनम्**—१ विशेषधर्मादिना विवेचनम् । २ चाक्षुषज्ञानम् । सांख्यास्तु सामान्यविशेषशून्यतयेन्द्रियजन्यो निर्विकल्पकस्थानीयोन्तःकरणवृत्तिविशेष इत्याहुः ( वाच० ) ।

**आवरणम्**—१ प्राप्तिप्रतिषेधः ( वात्स्या० १।२।८ )। २ अविद्येति मायावादिनो जगुः। ३ बाह्यं तम इति माध्वाः। ४ आच्छादनमिति काव्यज्ञाः।

**आवापः**—१ आनयनम् । २ आक्षेप इति केचित् । ३ संग्रहः । घटं नय गामानय इत्यावापोद्वापाभ्यामित्यादौ । ४ प्रधानहोम आवाप इति याज्ञिका आहुः ( वाच० )। ५ यस्यावृत्त्या बहूनुपकरोति स आवापः ( जै० सू० वृ० अ० ११ पा० १ सू० १ )।

**आविर्भावः**—१ उत्पत्तिः । यथा मृदो घटस्याविर्भावः । २ सांख्यास्तु प्रकाशात्मिका अभिव्यक्तिराविर्भावः । यथा कूर्मशरीरादङ्गानामाविर्भाव इत्याहुः ( वाच० )। इत्थं हि सांख्या मायावादिवेदान्तिनश्च वदन्ति । एकस्या मृदः सुवर्णस्य वा घटमुकुटादयो विशेषा निःसरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते । न पुनरसतामुत्पादः सतां वा निरोधः इति । नैयायिकास्तु बुद्धिशब्दकार्यकालाकारसंख्यादिभेदात्कार्यस्य कारणाद्भिन्नतया ( श्रीभाष्य० २।१।१५ ) कारणादुत्पत्तिरिति प्राहुः ।

**आवृत्तिः**—१ पुनः पुनरभ्यासः । भूय एकजातीयक्रियाकरणमिति यावत् । यथा आवृत्तिरसकृदुपदेशात् ( ब्र० सू० ४।१।१ ) इत्यादौ श्रोतव्यो मन्तव्य इति श्रवणादीनामावृत्तिः । यथा वा आवृत्तिः सर्वशास्त्राणां बोधादपि गरीयसी ( उद्भटः ) इत्यादौ । २ स्वस्थानस्थितस्य पदस्य पदसमूहस्य वा पुनरनुसंधानम् ( दि० ४ पृ० १८८ ) । यथा हलन्त्यम् ( १।३।३ ) इति पाणिनिसूत्रस्यान्योन्याश्रयदोषवारणाय पुनरनुसंधानम् ।

आशंसनम्—आशीर्वादवदस्यार्थोनुसंधेयः ।

आशयः—आ फलविपाकाच्चित्तभूमौ शेरत इत्याशयाः धर्माधर्मसंस्काराः ( सर्व० सं० पृ० ३६५ पातञ्ज० ) ।

आशा—अनिर्ज्ञातप्राप्येष्टार्थप्रार्थना ( काठ० १।८ भाष्यम् ) ।

आशीः—[ क ] वक्त्रिच्छाविषयत्वम् । यथा घटमानय इत्यादौ लोडर्थः । अत्र घटकर्मकमदिच्छाविषयानयनानुकूलकृतिमांस्त्वम् इत्यर्थः ( तर्का० ४ पृ० १४ ) । यथा वा आयुराशास्तेयं यजमानोसौ ( तैत्तिरीयब्राह्मणे ३।५।१० ) इत्यादावाङ्पूर्वकशास्धात्वर्थः । [ ख ] शाब्दिकास्तु हितविषयिका लोडाद्यन्तशब्दप्रयोक्त्रिच्छा । यथा भवतु ते शिवप्रसाद इत्यादौ लोडर्थः इत्याहुः । अत्र हितविषयकमदिच्छाविषयो यत्त्व-त्संबन्धिशिवप्रसादस्तत्कर्तृकं भवनम् इति बोधः ( वै० सा० द० पृ० १२९ ) । [ ग ] इष्टार्थाविष्करणमिति कश्चिद्वक्ति । यथा यां वै कांचन यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैव सा ( शत० ब्रा० १।३।१।२६ ) इत्यादौ ( वाच० ) ।

आशीर्लिङ्—( लिङ् ) य आशंसनस्य भावित्वस्य च बोधको लकारः स आशीर्लिङित्युच्यते । यथा भूयात् भूयास्तामित्यादावाशीर्लिङ् । जीवतु भवानित्यादौ तु लोडादिकं आशंसनीयत्वस्य बोधकमपि न भावित्वस्य । जीविष्यतीत्यादौ भावित्वस्य बोधकोपि लृडादिर्नाशंसनीयत्वस्य बोधकः । अतो न तत्र लोट्लृडादौ अतिप्रसङ्गः। आशीर्लिङ् प्रत्ययस्तु प्रकृत्यर्थस्याशंसां भावित्वं चानुभावयतीति लक्षणसमन्वयो बोध्यः ( श० प्र० पृ० १६२ ) ।

आशौचम्—न शुचिः अशुचिः । तस्य भाव आशौचम् । आशौचशब्देन च कालविशेषस्नानाद्यपनोद्यः पिण्डोदकदानादिविधेरध्ययनादिपर्युदासस्य च निमित्तभूतः पुरुषगतः कश्चनातिशयः कथ्यते ( मिताक्षरा अ० ३।१ ) ।

आश्रयत्वम्—अधिकरणतावदस्यार्थोनुसंधेयः ।

**आश्रयासिद्धः**—( हेत्वाभासः ) [ क ] यस्य हेतोराश्रयो नावगम्यते सः । [ ख ] यस्य हेतोः पक्षोप्रसिद्धः सः । स च आश्रयासिद्धः पक्षतावच्छेदकाभाववत्पक्षकः । यथा गगनारविन्दं सुरम्यरविन्दत्वात्सरोजारविन्दवदित्यत्रारविन्दत्वमाश्रयासिद्धम् ( त० सं० ) ( प्र० प्र० ) ( त० कौ० २ पृ० १४ ) ( त० भा० पृ० ४५ ) । आश्रयासिद्धशब्दार्थस्तु आश्रयस्य पक्षस्य असिद्धिः पक्षे पक्षतावच्छेदकस्याभावः तद्वान् इति । एतल्लक्षणं च वक्ष्यमाणाश्रयासिद्धिमत्त्वमेवेति बोध्यम् ( वाक्य० २ पृ० १७ ) । अनन्तरोदाहरणे गगनारविन्दमाश्रयः स च नास्त्येव ( त० भा० पृ० ४५ ) ( त० सं० ) । अत्र चारविन्दे पक्षे गगनीयत्वं पक्षतावच्छेदकं नास्तीत्यरविन्दत्वं हेतुराश्रयासिद्धः । आश्रयासिद्धस्य हेत्वाभासत्वं त्वित्थम् । आश्रयासिद्धत्वज्ञानं च परामर्शप्रतिबन्धकम् । अत्र आश्रयासिद्धत्वज्ञानस्य पक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहिग्रहप्रतिबन्धकत्वेन परामर्शप्रतिबन्धकत्वमिति ज्ञेयम् । अरविन्दे गगनीयत्वं नास्ति इति ज्ञाने सुरभित्वव्याप्यारविन्दत्ववद्गगनारविन्दम् इति परामर्शासंभवात् । एतस्य परामर्शस्य अरविन्दे गगनीयत्वसंबन्धावगाहित्वात् इति ( त० कौ० २ पृ० १४ ) । तथा च अरविन्दे गगनीयत्वाभावे निश्चिते गगनीयत्वविशिष्टारविन्दे सौरभानुमितिप्रतिबन्धः फलम् ( न्या० बो० २ पृ० १८ ) । आश्रयासिद्धो द्विविधः असदाश्रयासिद्धः असाधकश्चेति । तत्राद्यो यथा गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् इति । द्वितीयो यथा ईश्वरवादिनं प्रति क्षित्यादिकं सकर्तृकम् कार्यत्वाद्घटवत् इति । अत्र साध्यस्य निश्चितत्वेन पक्षे साध्यसंदेहानुपपत्तौ संदिग्धसाध्यवतः पक्षस्याभावादाश्रयासिद्धिर्बोध्या ( प्र० च० पृ० ३१ ) ।

**आश्रयासिद्धिः**—( हेतुदोषः ) ज्ञानस्य विषयतया विशिष्टपक्षग्रहविरोधितावच्छेदकं रूपम् ( दीधि० २ पृ० २१७ ) । तच्च रूपम् पक्षतावच्छेदकविशिष्टपक्षासिद्धिः । अथवा पक्षतावच्छेदकाभाववान् पक्षः । यद्वा पक्षे पक्षतावच्छेदकस्याभावः ( न्या० बो० २ पृ० १८ ) । यथा

गगनकमलं सुरभि कमलत्वादित्यत्र कमले पक्षे गगनीयत्वाभावः (न्या० म० २ पृ० २१)। यथा वा काञ्चनमयः पर्वतो वह्निमानित्यादौ पर्वते काञ्चनमयत्वस्याभावः (मु० २ पृ० १६१) (गौ० वृ० १।२।७)। अत्र पर्वतो न काञ्चनमयः इति ज्ञाने विद्यमाने काञ्चनमये पर्वते वह्निव्याप्यधूमवान्काञ्चनमयपर्वतः इति परामर्शप्रतिबन्धः फलम्। यथा वा अनित्यगगनं रूपवदित्यादौ गगनादेरनित्यत्वादिकम् आश्रयासिद्धिः (दीधि० २ पृ० २१७)।

आसत्तिः—१ [क] एकेनैव पुंसा पदानाम् अविलम्बेनोच्चारितत्वम् (त० भा० ४ पृ० १८)। एतस्य ज्ञानं च शाब्दबोधस्य जनकमिति विज्ञेयम्। अत एव एकैकशः प्रहरे प्रहरे असहोच्चारिते गामानयेत्यादौ नान्वयबोधः। संनिधेरभावात् इति (त० कौ० ४ पृ० १७) (त० सं०)। [ख] पदानामविलम्बेनोच्चारणम् (त० सं०)। तदर्थश्च अविलम्बेन पदार्थोपस्थितिः (त० दी० ४ पृ० ३२)। अथवा तत्पदे तत्पदाव्यवहितत्वम्। तथा च गोपदनिष्ठं अमूपदाव्यवहितत्वम् गोपदे अमूपदसंनिधिरित्यर्थः (वाक्य० पृ० १९)। यथा गामानय शुक्लां दण्डेनेति वाक्ये पदानामविलम्बेनोच्चारणात् संनिधिरूपा आसत्तिः (त० कौ० ४ पृ० १७) (भा० प० श्लो० ८४)। [ग] प्रकृतान्वयबोधानुकूलाव्यवधानाभाव आसत्तिरिति प्राञ्चः। अन्वयप्रतियोग्यनुयोग्यर्थोपस्थापकपदयोरव्यवधानमित्यर्थः। तेन गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ नासत्तिः (म० प्र० ४ पृ० ५७)। इदं लक्षणत्रयं (क ख ग इत्यत्र विद्यमानम्) प्राचीनमतमनुसृत्योक्तमिति बोध्यम्। नव्यास्तु नैतादृश्या आसत्तेर्ज्ञानं शाब्दबोधे कारणम्। किंतु अव्यवहितपदतात्पर्यमासत्तिः तज्ज्ञानं शाब्दबोधे कारणमित्याहुः (न्या० म० ४।२३–२४) (म० प्र० ४ पृ० ५७)। तत्तात्पर्यं च एतत्पदं एतत्पदाव्यवहितोत्तरमभिसंदधातु इत्यभिसंधापयितुरिच्छा। अत एव मौनिश्लोकेप्यासत्तिः। वक्तुरभावेप्यनुसंधातुः सत्त्वात्। शुकवाक्ये च भगवत्तात्पर्य-

मादायैव गतिः इति ( न्या० म० ४ पृ० २४ ) । [ घ ] अव्यवधाने-नान्वयप्रतियोग्यनुयोग्युपस्थितिः ( चि० ४ ) ( तर्को० ४ पृ० १३ ) । [ ङ ] यत्पदार्थेन सह यत्पदार्थस्यान्वयोपेक्षितस्तयोरव्यवधानेनोपस्थितिः ( मु० ४ पृ० १८५ ) । [ च ] वृत्त्या ( शक्तिलक्षणान्यतरसंबन्धेन ) पदजन्यपदार्थोपस्थितिः । सा च स्वरूपसती शाब्दबोधहेतुः न तु ज्ञाता इति बोध्यम् ( न्या० म० ४ पृ० २४ ) ( म० प्र० ४ पृ० ५७ ) । २ प्रत्यक्षजनकः संनिकर्षः । यथा आसत्तिराश्रयाणां तु सामान्यज्ञान-मिष्यते ( भा० प० श्लो० ६५ ) इत्यादौ ।

आसनम्—स्थिरसुखमासनम् । तच्च पद्मासनभद्रासनवीरासनस्वस्तिकासन-दण्डकासनसोपाश्रयपर्यङ्कक्रौञ्चनिषदनोष्ट्रनिषदनसमसंस्थानभेदाद्दशविधम् ( सर्व० सं० पृ० ३७६ पातञ्ज० ) ।

आसुरः—( विवाहभेदः ) आसुरो द्रविणादानात् ( याज्ञवल्क्य० अ० १ श्लो० ६१ ) ।

आसेधः—राजाज्ञया अवरोधः ( मिताक्षरा अ० २ श्लो० ५ ) ।

आस्तिकः—१ [ क ] परलोकाद्यस्तित्ववादी । यथा सत्यवतीसुतो व्यासः । [ ख ] नरकभीरुरास्तिकशब्दवाच्यः ( त० प्र० ख० ४ पृ० १०५ ) । आस्तिकास्तु वेदान्तिमीमांसकादयो बहवः नास्तिकेभ्यो विभिन्नमतिकाश्चेति बोध्यम् । २ जरत्कारुमुनिपुत्र ऋषिविशेषः ।

आस्रवः—[ क ] औदारिकादिकायादिचलनद्वारेणात्मनश्चलनं योगपद-वेदनीयम् ( सर्व० सं० पृ० ७३ आर्ह० ) । [ ख ] आस्रवः कर्मणां बन्धः ( सर्व० सं० पृ० ३६ आर्ह० ) । आस्रवो भवहेतुः स्यात्संवरो मोक्षकारणम् इति ( सर्व० सं० पृ० ८० आर्ह० ) ।

आहार्यम्—१ ( प्रत्यक्षम् ) [ क ] स्वविरोधिधर्मधर्मितावच्छेदकक-स्वप्रकारकं ज्ञानम् । यथा निर्वह्निः पर्वतो वह्निमान् इति ज्ञानम् ( ग० सामा० २ पृ० १९ ) । तथा हि स्वं वह्निः । तस्य विरोधी धर्मः वह्न्यभावः । स एव धर्मितावच्छेदको यस्मिन् ज्ञाने तत् । किंच स्वं

वह्निः स एव प्रकारो विशेषणं च यस्मिन् ज्ञाने तत् इति विग्रहार्थसमन्वया विज्ञेयाः । [ ख ] स्वविरुद्धधर्मावच्छिन्नधर्मितावच्छेदककं स्वावच्छिन्नप्रकारकं ज्ञानम् । यथा धूमव्यभिचारविशिष्टवह्न्यादिधर्मितावच्छेदकको धूमव्याप्यतया वह्न्यादिप्रकारको धूमव्यभिचारिवह्निमान् धूमव्याप्यवह्निमान् इत्याकारको ग्रहः ( ग० सामा० २ पृ० १४ ) । अत्र स्वं धूमव्याप्यत्वम् । तद्विरुद्धो धर्मः धूमव्यभिचारः । तदवच्छिन्नः वह्न्यादिः । स एव धर्मितावच्छेदको यत्र ग्रहे सः । किंच स्वं धूमव्याप्यत्वम् । तदवच्छिन्नः तेन रूपेण वह्न्यादिः । स एव प्रकारो यस्मिन् ग्रहे सः इति विग्रहार्थलक्षणसमन्वया विज्ञेयाः । [ ग ] स्वस्मिन्स्वावृत्तित्वावच्छिन्नप्रकारकं ज्ञानम् । यथा पर्वतः पर्वतावृत्तिमान् इति ज्ञानम् ( ग० सामा० २ पृ० १९ ) । अत्र स्वपदं पर्वतपरम् । तथा च एतज्ज्ञानस्य पर्वते पर्वतावृत्तित्वविशिष्टप्रकारकत्वेनाहार्यत्वं संपद्यते इति बोध्यम् । [ घ ] स्वविषयकेच्छाव्यवहितोत्तरक्षणोत्पन्नप्रत्यक्षम् । अत्र स्वमाहार्यम् । तथा च विषयतस्वाव्यवहितोत्तरत्व—एतदुभयसंबन्धेनेच्छावच्छिन्नप्रत्यक्षमित्यनुगमो बोध्यः ( ग० सत्प्र० पत्रे १७ ) । [ ङ ] बाधकालीनेच्छाजन्यं ज्ञानम् । यथा ह्रदो वह्निमान् इति ज्ञानम् । इदं त्ववधेयम् । आहार्यात्मकं ज्ञानं प्रत्यक्षमेवेति नैयायिकानां सिद्धान्तः । शाब्दबोधात्मकमपीत्यालंकारिका वदन्ति इति । २ व्याप्यम् । यथा कार्यं च तस्य दशधाहार्यं धार्यं प्रकाश्यं च ( सांख्यकारिका ३२ ) इत्यादौ । ३ लौकिक औपासनिकोग्निराहार्य इति याजका वदन्ति ( वाच० ) ।

**आहीनैबुकम्**—स्वस्वकुलागतं करञ्जार्कादिस्थावरदेवतापूजादिकम् ( जै० न्या० अ० १ पा० ३ अधि० ८ ) ।

**इच्छा**—[ क ] ( गुणः ) इच्छात्वसामान्यवती ( प्र० प्र० १७ ) ( त० कौ० पृ० १८ ) । सा च यथा इदं मे भूयात् इत्येवंरूपः कामोभिलाषो वा ( त० सं० ) । सा च मनोग्राह्या आत्ममात्रवृत्तिश्चेति विज्ञेयम् ( भा० प० श्लो० ५८ ) । इच्छालक्षणं च प्रवृत्तेः साक्षादनुकूलत्वम् ( वाक्य० पृ० २१ ) । अथवा यत्नोत्कार-

भिन्नत्वे सति संबन्धानवच्छिन्नप्रकारताकत्वम् ( ल० व० पृ० ३५ )। अत्रेदमुक्तम् । आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत्कृतिः । कृतिजन्या भवेच्चेष्टा चेष्टाजन्या भवेत्क्रिया ॥ इति । इच्छा चात्मधर्म इति नैयायिकसिद्धान्तः । कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव इति श्रुतेः स मनोधर्म इति सांख्या मायावादिनश्चाहुः । श्रुतौ कामपदेनेच्छोच्यते । इच्छा द्विविधा । फलविषयिणी तदुपायविषयिणी चेति । अत्र मुख्यं फलं सुखं दुःखाभावश्च । तत्र फलेच्छां प्रति फलज्ञानमात्रं कारणम् । अत एव फलस्य स्वतः पुरुषार्थत्वं संभवति इति बोध्यम् ( भा० प० श्लो० १४७ ) ( मु० गु० पृ० २२०–२२१ ) ( त० कौ० पृ० १८ )। अत्रेदं रहस्यम् । सुखस्यैव चरमफलत्वेन सुखाद्यात्मकफलानन्तरं फलान्तराभावात् सुखेच्छाया नेष्टसाधनत्वज्ञानापेक्षा । अपि तु सुखज्ञानेनैव सुखेच्छोत्पद्यते इति । उपायेच्छां प्रति त्विष्टसाधनताज्ञानं कारणम् ( भा० प० श्लो० १४७ ) ( मु० गु० पृ० २२१ ) ( त० कौ० पृ० १८ )। यथा स्वर्गात्मकफलस्य उपायो यागः । तद्विषयकेच्छां प्रति यागो मम इष्टस्य स्वर्गात्मकफलस्य साधनम् इति ज्ञानं कारणम् । इच्छां प्रति बलवदनिष्टाननुबन्धित्वज्ञानमपि कारणं भवति । पुनरपि नित्यानित्यभेदेनेच्छा द्विविधा । तत्र जीवेच्छा अनित्या । ईश्वरेच्छा तु नित्या सर्वं जगद्भूयात् इति समूहालम्बनात्मिका चेति । मायावादिनस्तु व्योमादिवत्सा अनित्येत्याहुः ( वाच० )। [ख] स्वार्थं परार्थं वा अप्राप्तप्रार्थना । सा चात्ममनसोः संयोगात्सुखाद्यपेक्षात्स्मृत्यपेक्षाद्वोत्पद्यते । प्रयत्नस्मृतिधर्माधर्महेतुः। कामः अभिलाषः रागः संकल्पः कारुण्यम् वैराग्यम् उपधा भावः इत्येवमादय इच्छाभेदाः । मैथुनेच्छा कामः । अभ्यवहरणेच्छा अभिलाषः । पुनः पुनर्विषयानुरञ्जनेच्छा रागः । अनासन्नक्रियेच्छा संकल्पः । स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा कारुण्यम् । दोषदर्शनाद्विषयत्यागेच्छा वैराग्यम् । परवञ्चनेच्छा उपधा । अन्तर्निगूढेच्छा भावः । चिकीर्षाजिहीर्षेत्यादिक्रियाभेदादिच्छाभेदा भवन्ति ( प्रशस्त० २ पृ० ३३ )।

**इज्या**—देवतापूजनम् ( सर्वद० पृ० ११७ रामानु० ) ।

**इतरबाधग्रहः**—साध्यतावच्छेदकव्याप्ययत्किंचिद्धर्मावच्छिन्नेतरसाध्यतावच्छेदकविशिष्टाभाववत्पक्षविषयकं ज्ञानम् । यथा पर्वतो वह्निमानित्यादौ महानसीयेतरवह्न्यभाववान्पर्वतः इति ज्ञानम् । तथा हि । साध्यतावच्छेदकमत्र वह्नित्वम् । तद्व्याप्यो यत्किंचिद्धर्मः महानसीयत्वम् । तदवच्छिन्नः महानसीयवह्निः । तस्मादितरः ( भिन्नः ) यः साध्यतावच्छेदकविशिष्टः चत्वरीयादिर्वह्निः । तदभाववान् पक्षः पर्वतः । तद्विषयकं ज्ञानम् इति । अस्य प्रयोजनं हि यथा पर्वतो वह्निमान् इत्यादिस्थले वह्निव्याप्यधूमवान् पर्वतः इति परामर्शादपि महानसीयवह्निभिन्नवह्न्यभाववान् इतीतरबाधग्रहबलात् महानसीयवह्नित्वादिनानुमितिः पर्वतो महानसीयवह्निमान् इति जायत इति ( त० प्र० ख० ४ ) ।

**इतरबाधग्रहसहकृतानुमितिः**—( अनुमितिः ) सामान्यधर्मावच्छिन्नस्य साध्यत्वे विशेषधर्मावच्छिन्नेतरबाधग्रहसत्त्वे जायमाना विशेषधर्मावच्छिन्नविधेयकानुमितिः । यथा पर्वते धूमेन शुद्धवह्नित्वावच्छिन्नस्य साधने पर्वतो वह्निमानित्यादौ पर्वतो महानसीयवह्निमान् इत्यनुमितिः । अत्र च तादृशबाधग्रहकाले सामान्यधर्मावच्छिन्नव्याप्यवत्तापरामर्शादपि विशेषधर्मावच्छिन्नविधेयकानुमितिः स्वीक्रियत इति नैयायिकसिद्धान्तो ज्ञेयः ।

**इतरेतरः**—( द्वंद्वसमासः ) एकवचनान्यसुबाकाङ्क्षः समासः । यथा धवखदिरौ छिन्धीत्यादावितरेतरद्वंद्वः । अत्र हि धवखदिरावगतौ द्विवचनादिः प्रमाणम् ( श० प्र० पृ० ६६ ) । अत्रेदं बोध्यम् । धवखदिराविति स्वरूपद्वयप्रतीतेर्न लक्षणा शक्तिर्वेति नैयायिकसिद्धान्तः । मीमांसकाश्च धवखदिरावित्यादावुत्तरपदे धवखदिरादिसाहित्याश्रये लक्षणामाहुः । वैयाकरणास्तु तादृशसाहित्याश्रये शक्तिमाहुः ( न्या० म० ४ पृ० १३ ) । शाब्दिकाश्च मिलितानामन्वय इतरेतरः इति वदन्ति ।

**इतरेतरत्**—अन्योन्यशब्दवदस्यार्थोनुसंधेयः ( छ० म० ) ।

**इति**—( अव्ययम् ) १ हेतुः । २ प्रकाशनम् । ३ निदर्शनम् । ४ प्रकारः । ५ अनुकर्षः । ६ समाप्तिः । ७ प्रकरणम् । ८ स्वरूपम् । ९ सांनि-

ध्यम् । १० विवक्षानियमः । ११ मतम् । १२ प्रत्यक्षम् । १३ अवधारणम् । १४ व्यवस्था । १५ परामर्शः । १६ मानम् । १७ इत्यमर्थः । १८ प्रकर्षः । १९ उपक्रमः । तत्र हेतौ उदाहरणम् इतीव धारामवधीर्य (नैष०) इति स्म सा कारुवरेण लेखितम् (नैष०)। प्रकाशार्थे यथा इतिहरि । प्रकारे यथा इति मदमदनाभ्यां रागिणः स्पष्टरागाः (माघ०)। प्रकरणे यथा इतिकृत्यम् इतिकर्तव्यम् इतिवृत्तम् । इदमर्थे यथा विरोधिसिद्धमिति कर्तुमुद्यतम् इत्यादि ( वाच० )। अत्रायं विशेषो ज्ञेयः । स्वरूपार्थद्योतकता त्रिधा । शब्दस्वरूपद्योतकता प्रातिपदिकार्थद्योतकता वाक्यार्थद्योतकता चेति । तत्र शब्दस्वरूपद्योतकत्वे तद्योगे न प्रथमा । यथा कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्तते इत्यादौ । प्रातिपदिकार्थद्योतकत्वे तु प्रथमा भवति । यथा चयस्त्विषामित्यवधारितं पुरस्ततः शरीरीति विभाविताकृतिम् । विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥ (माघः १) इत्यादौ । वाक्यार्थद्योतकत्वे च न प्रथमा । यथा अत एव गविल्याह भू सत्तायामितीदृशम् । न प्रातिपदिकं नापि पदं साधु तु तत्स्मृतम् ॥ (वैया० सि० का० २७)। श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात् । प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका ॥ (मीमांसा० का०) इत्यादौ (वाच०)।

**इतिकर्तव्यता**—इत्थंकर्तव्यता क्रमयुक्तकर्तव्यतेत्यर्थः । एवं सर्वं विधायेदमितिकर्तव्यमात्मनः । युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः ॥ (मनु० ७।१४२) इत्यादावितिकर्तव्यता । अत्र कर्तव्यस्य इति प्रकारः इतिकर्तव्यता इति व्युत्पत्तिर्द्रष्टव्या । तदर्थश्च कर्तव्यसामान्यस्य भेदकः कर्तव्यविशेषः । यथा मीमांसकमते प्राशस्त्यं शब्दभावनायामितिकर्तव्यतात्वेनान्वयं लभत इति (लौ० भा० टी० पृ० ८)। यथा वा तेषामेव मते स्वर्गकामो यजेतेत्यादौ लिङाख्यातबोध्याया अर्थभावनाया अपेक्ष्या प्रयाजाद्यङ्गजातात्मिका इतिकर्तव्यता भवति (लौ० भा० पृ० १०)। यथा वा ओदनकामः पचेदित्यत्र लिङा भावनाभिधीयते । तत्र किं भावयेत् कथं भावयेत् इति भाव्याद्याकाङ्क्षायां तृणफूत्कारादि-

मिरुपकारं संपाद्य पाकेनौदनं भावयेत् (संपादयेत्) इति भाष्याद्यन्वयेन वाक्यार्थः संपद्यते (लौ० भा० टी० पृ० १०)।

**इतिहासः**—पुरावृत्तप्रकाशको ग्रन्थविशेषः। यथा महाभारतादिः (वाच०)। तत्राम्नायते वाको वाक्येतिहासपुराणः पञ्चमो वेदानां वेदः (छान्दो०)। स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि। आख्यानानीतिहासांश्च पुराणानि खिलानि च ॥ (मनु० ३।२३२) इति। इतिहासलक्षणं च धर्मार्थकाममोक्षाणामुपदेशसमन्वितम्। पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते ॥ इति (वाच०)।

**इदम्**—प्रत्यक्षबुद्धिविषयः (दि० ४ पृ० १७९) (ग० शक्ति०)। यथा अयम् उदयति विततोर्ध्वरश्मिजालः (माघ०) इदं किलाव्याजमनोहरं वपुः (शाकु०) इत्यादाविदंपदार्थः। इदमर्थश्च लौकिकप्रत्यक्षविषयताविशिष्टम् (ग० शक्ति० टी० पृ० ११६)। चक्षुःसंनिकृष्टे व्यक्तिविशेषे अयं घटः इति प्रत्यक्षे घटस्येदमर्थता। अत्रेदं बोध्यम्। इदमः संनिकृष्टवाचित्वम्। तत्रोक्तम् अस्येति प्रत्यक्षादिसंनिधापितस्य जगत इदमा निर्देशः (शारी० भा०) इति। संनिकृष्टत्वं च बुद्धिमात्रेणापि। तच्च ज्ञानलक्षणया प्रत्यासत्त्या स्मरणादिना च भवति। यथा कौमुदीयं विरच्यते इत्यत्र भाविन्यपि कौमुदी बुद्ध्या संनिधापितत्वेन इदमा निर्दिश्यते (वाच०)।

**इन्द्रियम्**—[क] स्वविषयग्रहणलक्षणानीन्द्रियाणि (वात्स्या० १।१।१२)। [ख] शरीरसंयुक्तं ज्ञानकरणमतीन्द्रियम् (त० कौ० पृ० ३) (प्र० प्र० पृ० ११)। तच्च प्रत्यक्षप्रमाणमित्युच्यते (त० कौ० पृ० ८) (त० सं०)। अयमाशयः। यदा निर्विकल्पकरूपा प्रमा फलं तदा इन्द्रियं करणम्। तद्यथा आत्मा मनसा संयुज्यते। मन इन्द्रियेण। इन्द्रियमर्थेन। इन्द्रियाणां स्वसंबद्धवस्तुप्रकाशकारित्वम् इति नियमात्। ततोर्थसंनिकृष्टेनेन्द्रियेण निर्विकल्पकज्ञानं जन्यते। तस्य ज्ञानस्येन्द्रियं करणम् छिदाया इव परशुः। इन्द्रियार्थसंनिकर्षोवान्तरव्यापारः छिदाकरणस्य परशोरिव दारुसंयोगः। निर्विकल्पकं ज्ञानं

फलम् परशोरिव छिदा इति ( त० भा० पृ० ६ ) । इन्द्रियसत्त्वे प्रमाणं चानुमानम् । तच्च ज्ञानक्रिया सकरणिका क्रियात्वाच्छिदिक्रियावत् इति ( वाच० ) । लक्षणं चेन्द्रियत्वमेव । तच्च स्मृत्यजनकज्ञानजनकमनःसंयोगाश्रयत्वम् ( चि० ) ( प० मा० ) ( वै० उ० ४।२।१ ) । अथवा शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् ( त० प्र० १ ) ( वाक्य० पृ० ३ ) ( त० दी० १ पृ० ७ ) ( वै० उ० ४।२।१ ) ( वै० वि० ४।२।१ ) । तदर्थश्च शब्दादितरे ये उद्भूता विशेषसंज्ञकाश्च गुणास्तेषामनाश्रयत्वे सति ज्ञानस्य कारणीभूतो यो मनःसंयोगः इन्द्रियैर्मनसः संयोगः तदाश्रयत्वम् । आत्मव्यावृत्त्यर्थं सत्यन्तदलम् । शब्दभिन्न उद्भूतो विशेषसंज्ञकश्च गुणो न कोपि कस्मिंश्चिदपीन्द्रिये तिष्ठति । अनुद्भूतविशेषगुणस्तु अनुद्भूतरूपादिः वर्तत एवेति । नक्तंचरनयनरश्मिस्तु ( व्याघ्रादिनयनरश्मिः तेजोन्तरमेव । तस्य चक्षुष्ट्वे तु शब्दरूपैतदितरोद्भूतविशेषगुणानाश्रयत्वे सति इति विशेषणं देयम् ( वै० उ० ४।२।१ ) । उद्भूतत्वं चानुद्भूतत्वाभावकूटरूपम् । अनुद्भूतत्वं च शुक्लत्वादिव्याप्यं नानैव ( मु० १ पृ० ११९ ) । अथवा ज्ञानासमानाधिकरणो ज्ञानकारणीभूतो यो मनःसंयोगस्तदाश्रयत्वम् । चक्षुरादिमनःसंयोगमादायैव लक्षणसमन्वयः ( म० प्र० १ पृ० १३ ) । घ्राणाद्यन्यान्यत्वं वा । प्रत्यक्षजनकतावच्छेदकतयेन्द्रियत्वमखण्डोपाधिरित्यन्ये ( गौ० वृ० १।१।१२ ) । सांख्यास्तु इन्द्रियत्वं सात्त्विकाहंकारोपादानत्वम् ( न्या० म० १ पृ० ७ ) अहंकारकार्यत्वे सति कारणत्वं वेत्याहुः ( वाच० ) । [ ग ] साक्षात्कारमात्रवृत्तिधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयव्यापारवदतीन्द्रियम् ( प० च० ) । इन्द्रियं द्विविधम् । अन्तरिन्द्रियं बहिरिन्द्रियं च । तत्राद्यं मनः । द्वितीयं घ्राणादि । पञ्चविधम् घ्राणम् रसनम् चक्षुः श्रोत्रम् त्वक् चेति । तदुक्तम् घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ( गौ० १।१।१२ ) इति । अत्र भोगसाधनानीन्द्रियाणि ( वात्स्या० १।१।९ ) इति भाष्यकार आह । इन्द्रियविषयास्तु गन्ध-

रसरूपस्पर्शशब्दाः इति ( गौ० १।१।४ ) । एवं चेन्द्रियाणि षट् ( प्र० प्र० पृ० ११ ) ( गौ० वृ० १।१।१२ ) ( त० भा० पृ० २६ ) । केचित्तु इन्द्रियाणि दश ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च । तत्र ज्ञानेन्द्रियाणि घ्राणादीनि । कर्मेन्द्रियाणि तु वाक्पाणिपादपायूपस्थानि इत्याहुः ( वाच० ) । ज्ञानेन्द्रियार्थाः शब्दाद्याः स्मृताः कर्मेन्द्रियाण्यपि । वाक्पाणिपादपाय्वन्धुसंज्ञान्याहुर्मनीषिणः ॥ वचनादानगतयो विसर्गानन्दसंयुताः । कर्मेन्द्रियार्थाः संप्रोक्ताः इति ( शा० ति० ) । अन्धु लिङ्गम् ( राघवभट्टः ) । हस्तौ पादावुपस्थं च जिह्वा पायुस्तथैव च । कर्मेन्द्रियाणि पञ्चैव इति ( शङ्कु० ) ( वाच० ) । तत्र ज्ञानेन्द्रियाणां मध्ये घ्राणरसनश्रोत्राणि न द्रव्यग्राहकाणि । अपि तु गुणमात्रग्राहकाणि । चक्षुस्त्वङ्मनांसि तु द्रव्यग्राहकाणि गुणग्राहकाण्यपि ( प्र० प्र० पृ० १२ ) ( त० कौ० १ पृ० १० ) । अत्र केचित्तु मनो नेन्द्रियम् इत्याहुः । वैशेषिकैः साधितं मनस इन्द्रियत्वं नैयायिका अप्यभ्युपगच्छन्ति ( प्र० प्र० पृ० २१ ) ( त० भा० पृ० ४२—४३ ) । तच्च शरीरसंयोगे सत्येव साक्षात्प्रमितिसाधनम् इति ( ता० र० श्लो० २८ ) ।

**इन्द्रियार्थसंनिकर्षः**—प्रत्यक्षात्मकज्ञानहेतुरिन्द्रियस्य विषयेण संबन्धः ( राम० १ पृ० १२८ ) । अत्रेदमवधेयम् । यदा इदं किंचिदिति निर्विकल्पकं ज्ञानं जायते तदा तस्य ज्ञानस्येन्द्रियं करणम् । इन्द्रियार्थसंनिकर्षोऽवान्तरव्यापारः । निर्विकल्पकज्ञानं फलम् । यदा निर्विकल्पकज्ञानानन्तरं सविकल्पकं ज्ञानमुत्पद्यते तदेन्द्रियार्थसंनिकर्षः करणम् । निर्विकल्पकज्ञानमवान्तरव्यापारः । सविकल्पकज्ञानं फलम् इति ( त० भा० पृ० ६ ) । विस्तरस्तु अन्यत्र ( वै० उ० ८।१।४—५ ) अनुसंधेयः । स चेन्द्रियार्थसंनिकर्षो द्विविधः । लौकिकः अलौकिकश्च । तत्र लौकिको लौकिकप्रत्यक्षे कारणम् ( त० कौ० पृ० ८ ) षडिन्द्रियसहकारी इति । ( प्र० प्र० पृ० ३ ) ( न्या० म० १ पृ० ७ ) । वक्ष्यमाणमलौकिकसंनिकर्षत्रयं तु षडिन्द्रियसहकारीति संप्रदायविदः । मनस एव सहकारीति शूलपाणिमिश्राः ( त० कौ० १ पृ० ९ ) । तत्र लौकिकः षड्विधः

संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायः विशेषणविशेष्यभावश्चेति । तत्र चक्षुषा इह घटोस्ति इति घटोयम् इति वा घटप्रत्यक्षजनने संयोगः संनिकर्ष उपयुज्यते । द्रव्यचाक्षुषस्पार्शनमानसेष्विन्द्रियसंयोग एव संनिकर्षः ( न्या० म० १ पृ० ७ ) ( सि० च० १ पृ० २२ ) । चक्षुरादेर्घटादिना संयोगसत्त्वादिति भावः । एवं मनसा संयोगेनात्मग्रहः अहमस्मि इति ( त० कौ० १ पृ० ८ ) । अत्रायं नियमः । आत्मा मनसा संयुज्यते । मन इन्द्रियेण । इन्द्रियमर्थेन ( विषयेण ) । ततः संनिकृष्टेनेन्द्रियेण निर्विकल्पकप्रत्यक्षमुत्पद्यते ( त० भा० पृ० ६ ) ( प्र० प्र० ) । घटे रूपादिकमस्ति इति घटरूपादिप्रत्यक्षजनने संयुक्तसमवायः । द्रव्यसमवेतचाक्षुषरासनघ्राणजस्पार्शनमानसेष्विन्द्रियसंयुक्तसमवाय एव संनिकर्षः ( सि० च० १ पृ० २२ ) । चक्षुरादिसंयुक्ते घटे रूपादीनां समवायादिति भावः ( त० कौ० १ पृ० ९ ) । शब्देतरगुणाः कर्म द्रव्यगता जातिः संयुक्तसमवायेन गृह्यते ( न्या० म० १ पृ० ७ ) । घटगतरूपे रूपत्वाद्यस्ति इति रूपत्वादिसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः । शब्देतरगुणगता कर्मगता च जातिरित्यर्थः ( न्या० म० १ पृ० ७ ) । अत्रायं नियमः येनेन्द्रियेण यद्गृह्यते तेनेन्द्रियेण तद्गतं सामान्यम् तत्समवायः तदभावश्च गृह्यते इत्यनुसंधेयः (त० कौ० १ पृ० १०) । द्रव्यसमवेतसमवेतस्य चाक्षुषरासनघ्राणजस्पार्शनमानसेष्विन्द्रियसंयुक्तसमवेतसमवाय एव संनिकर्षः । चक्षुरादिसंयुक्ते घटे समवेतं रूपादि । तत्र रूपत्वादेः समवायादिति भावः ( सि० च० १ पृ० २२ ) । श्रोत्रेण कर्णे ध्वनिः पतति इति इह वीणाशब्दोस्ति इति वा शब्दसाक्षात्कारे समवायः । कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम् । तत्र ध्वनिशब्दस्य समवायस्य सत्त्वादिति भावः ( न्या० म० १ पृ० ८ ) ( प्र० प्र० पृ० ४ ) ( त० कौ० १ पृ० ९ ) । इह शब्दे शब्दत्वगुणत्वादिकमस्ति इत्येवं श्रोत्रेण शब्दत्वादिसामान्यप्रत्यक्षे समवेतसमवायः । अत्र श्रोत्रसमवेते शब्दे शब्दत्वादेः समवायादिति भावः ( त० कौ० १ पृ० ९ ) । समवायप्रत्यक्षे

इह भूतले घटो नास्ति इति अभावप्रत्यक्षे च विशेषणविशेष्यभावः (विशेषणता विशेष्यता च) इति (त० सं) (त० भा० पृ० ६–८) (सि० च० पृ० २२)। तथाहि। यदा चक्षुःसंयुक्ते भूतले घटाद्यभावो गृह्यते इह भूतले घटो नास्ति इति तदा चक्षुःसंयुक्तस्य भूतलस्य घटाद्यभावो विशेष्यम्। भूतलं विशेषणम्। अत्र चक्षुःसंयुक्तविशेष्यत्वं संनिकर्षः। यदा मनःसंयुक्त आत्मनि सुखाद्यभावो गृह्यते अहं सुखादिरहितः इति तदा मनःसंयुक्तस्यात्मनः सुखाद्यभावो विशेषणम्। अत्र मनःसंयुक्तविशेषणत्वं संनिकर्षः। यदा च श्रोत्रसमवेते गकारे घत्वाभावो गृह्यते गकारो घत्वाभाववान् इति तदा श्रोत्रसमवेतस्य गकारस्य घत्वाभावो विशेषणम्। अत्र श्रोत्रसमवेतविशेषणत्वं संनिकर्षो ज्ञेयः। तदेवं संक्षेपतः पञ्चविधान्यतमसंबन्धसंबद्धविशेषणविशेष्यभावलक्षणेनेन्द्रियार्थसंनिकर्षेणाभाव इन्द्रियेण गृह्यते। एवं समवायोपि चक्षुःसंबद्धस्य तन्तोर्विशेषणभूतः पटसमवायो गृह्यते इह तन्तुषु पटसमवायः इति (त० भा० १ पृ० ८)। तत्र विशेषणता नानाविधा। तथाहि भूतलादौ घटाभावः संयुक्तविशेषणतया गृह्यते। संख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया गृह्यते। संख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया गृह्यते। शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया गृह्यते। कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया गृह्यते। एवं कत्वाद्यवच्छिन्नाभावे खत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया गृह्यते। घटाभावादौ घटाभावश्चक्षुःसंयुक्तविशेषणविशेषणतया गृह्यते इति। एवमन्यत्राप्यूह्यम् (मु० १ पृ० १२२)। एवं विशेष्यताया नानाविधत्वम् पूर्वोक्तं तदुदाहरणादिकं च द्रष्टव्यम्। अत्र समवायस्य प्रत्यक्षवर्णनं न्यायमतेन। वैशेषिकमते तु समवायोतीन्द्रिय एवेति ज्ञेयम् (त० कौ० १ पृ० ९) (मु० १ पृ० १२२)। अत्रेदं बोध्यम्। विशेषणतया विशेष्यतया च समवायाभावयोर्ग्रह इत्युक्तम्। तत्र विशेषणता द्विविधा। इन्द्रियविशेषणता इन्द्रियसंबद्धविशेषणता च। तत्रेन्द्रियविशेषणतया अयं शब्दसमवायवान् इति शब्द-

समवायस्य अयं शब्दाभाववान् इति शब्दाभावस्य च ग्रहः। तत्र श्रोत्रेन्द्रिये शब्दसमवायस्य शब्दाभावस्य च विशेषणत्वादिति भावः (न्या० म० १ पृ० ८) (त० कौ० १ पृ० ९)। अभावस्य स्वोपरक्तबुद्धिजनकत्वं यत्स्वरूपं तदेव विशेषणत्वम् न तु तदर्थान्तरम् इति विज्ञेयम् (त० भा० पृ० २०)। इन्द्रियसंबद्धविशेषणतया तु इदं कपालं घटसमवायवत् इति घटादिसमवायस्य इदं भूतलं घटाभाववत् इति घटाभावस्य च ग्रहः (त० कौ० १ पृ० ९) (न्या० म० पृ० ८)। तत्र चक्षुरादिसंयुक्ते कपाले घटसमवायस्य चक्षुरादिसंबद्धे भूतले घटाभावस्य च विशेषणत्वादिति भावः (न्या० म० १ पृ० ८) (त० कौ० १ पृ० ९)। अत्र इन्द्रियसंनिकर्षस्य संयोगादेर्बहुविधस्य प्रवेशात्तादृशविशेषणतापि बहुविधा। तद्यथा इन्द्रियसंयुक्तविशेषणता इन्द्रियसंयुक्तसमवेतविशेषणता इन्द्रियसंयुक्तसमवेतसमवेतविशेषणता इन्द्रियसमवेतविशेषणता इन्द्रियसमवेतसमवेतविशेषणता इन्द्रियविशेषणविशेषणतेत्यादिः। तत्र आद्यया इन्द्रियसंयुक्तविशेषणतया भूतले घटाभावग्रहः। द्वितीयया घटरूपादौ रसत्वाभावग्रहः। तृतीयया रूपत्वादौ रसत्वाभावग्रहः। चतुर्थ्या श्रोत्रसमवेते ककारे खत्वाभावग्रहः। पञ्चम्या कत्वे खत्वाभावग्रहः। षष्ठ्या श्रोत्रे विशेषणीभूतककाराभावे खत्वाभावग्रहः इति बोध्यम् (म० प्र० १ पृ० १०—११)। एवं विशेष्यतापि द्विविधा। इन्द्रियविशेष्यता इन्द्रियसंबद्धविशेष्यता च। तत्रेन्द्रियविशेष्यतया इह शब्दसमवायोस्ति इति शब्दसमवायस्य इह शब्दो नास्ति इति शब्दाभावस्य च ग्रहः। तत्र श्रोत्रेन्द्रिये शब्दसमवायस्य शब्दाभावस्य च विशेष्यत्वादिति भावः। इन्द्रियसंबद्धविशेष्यतया तु इह कपाले घटसमवायोस्ति इति घटादिसमवायस्य इह भूतले घटो नास्ति इति घटाभावस्य च ग्रहो भवतीति। तत्र चक्षुरादिसंयुक्ते कपाले घटसमवायस्य तादृशे चक्षुरादिसंयुक्ते च भूतले घटाभावस्य च विशेष्यत्वादित्यवधेयम्। तत्र षड्विधसंनिकर्षमध्ये विशेषणविशेष्यभावो न विषयतारूपः। अपि तु स्वरूपसंबन्धावच्छिन्नाधाराधेयभाव एवेति विज्ञेयम् (नील० १

पृ० १८ )। द्वितीयः अलौकिकः संनिकर्षश्च त्रिविधः । सामान्यलक्षणः ज्ञानलक्षणः योगजधर्मश्चेति ( भा० प० १ श्लो० ६३-६५ ) ( मु० १ पृ० ११९-१२२ ) । स चालौकिकप्रत्यक्षे कारणम् । एतत्रितयसंनिकर्षः षडिन्द्रियसहकारीति संप्रदायविदः । मनस एव सहकारीति शूलपाणिमिश्राः ( त० कौ० १ पृ० ९ ) इत्युक्तमेव ।

इष्टत्वम्—[ क ] इच्छाविषयत्वम् । यथा इष्टदेवतानमस्कारलक्षणं मङ्गलं शिष्यशिक्षार्थं निबध्नन् ( त० दी० पृ० १ ) इत्यादाविष्टत्वम् । [ ख ] समभिव्याहृतपदोपस्थापितकामनाविषयत्वम् । यथा ओदनकामः पचेत स्वर्गकामो यजेतेत्यादावोदनस्वर्गरूपफलयोरिष्टत्वम् ( ग० व्यु० ल० पृ० १३९ ) ।

## ई.

ईर्या—( समितिः ) लोकातिवाहिते मार्गे चुम्बिते भास्वदंशुभिः । जन्तुरक्षार्थमालोक्य गतिरीर्या मता सताम् ॥ ( सर्व० सं० पृ० ७९ आर्ह० ) ।

ईर्ष्या—( दोषः ) १ अक्षान्तिः । सा च परोत्कर्षासहिष्णुता । यथा शत्रव ईर्ष्यतीत्यादौ धात्वर्थः ( ग० व्यु० का० ४ पृ० ९६ ) । अथवा साधारणे वस्तुनि परस्वत्वात्तद्गृहीतरि द्वेषः । यथा दुरन्तदायादानामीर्ष्या ( गौ० वृ० ४।१।३ ) । शाब्दिकास्तु उत्कर्षविरोधिधर्मारोपानुकूलव्यापारजनकश्चित्तवृत्तिविशेषः । यथा हरये ईर्ष्यतीत्यादौ इत्याहुः ( ल० म० सुब० का० पृ० १०३ ) । ईर्ष्या च कोपमूलिका । तत्रोक्तम् पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोपि गणोष्टकः ॥ ( मनु० ७।४८ ) इति । परोत्कर्षगोचरो द्वेष इति परमार्थः । तथा च तादृशद्वेषविषयस्य परस्य क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ( पा० सू० १।४।३७ ) इत्यनेन संप्रदानता ( ग० व्यु० का० ४ पृ० ९६ ) । २ अनिष्टानुपेक्षणम् । यथा शिष्यायेर्ष्यतीत्यत्र धात्वर्थः । अत्र शिष्यानिष्टं नोपेक्षत इति वाक्यार्थः ( श० प्र० पृ० ८७ ) ।

**ईश्वरः**—परमात्मवदस्यार्थोनुसंधेयः । ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः । ईश्वरश्चिदिति प्रोक्तो जीवो दृश्यमचित्पुनः ॥ ( सर्व० सं० पृ० ९२ रामानु० ) । अत्र हरिः ईश्वरः इति संबन्धः ।

**ईश्वरप्रणिधानम्**—अभिहितानामनभिहितानां च सर्वासां क्रियाणां परमेश्वरे परमगुरौ फलानपेक्षया समर्पणम् ( सर्व० सं० पृ० ३७१ पातञ्ज० ) ।

**ईषा**—शकटगतो लाङ्गलदण्डवद्दीर्घः काष्ठविशेषः ( जै० न्या० अ० २ पा० ३ अधि० ५ ) ।

## उ.

**उच्चरितत्वम्**—उच्चारणं च शब्दोत्पत्त्यनुकूलव्यापारः । तज्जन्यत्वमुच्चरितत्वम् । शाब्दिकास्तु ताल्वोष्ठसंयोगादिजन्याभिव्यक्तिविशिष्टत्वम् । यथा वर्णमुच्चारयतीत्यादौ वर्णस्योच्चरितत्वम् इत्याहुः ( वै० सा० स्फोट० पृ० ४४४ ) ।

**उच्चारणम्**—कण्ठताल्वाद्यभिघातेन शब्दजनकव्यापारः । यथा वेदोच्चारणकार्यार्थमयुक्तं तत्त्वया धृतम् ( भार० व० अ० २१४ ) इत्यादौ । तत्प्रकारस्तु आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णान् जनयते तेषां विभागः पञ्चधा मतः ॥ इति शिक्षोक्तदिशावसेयः ( वाच० ) । अधिकं तु अनुमानचिन्तामण्यादौ द्रष्टव्यम् ।

**उच्छ्वासः**—प्राणवायोर्व्यापारविशेषः ( गौ० वृ० ३।१।३० ) । यथा निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् ( गौ० ३।१।३० ) इत्यादावुच्छ्वासः ।

**उत्कर्षः**—१ अविद्यमानधर्मारोपः । यथा उत्कर्षसमो जातिरित्यादावुत्कर्षः ( गौ० वृ० ५।१।४ ) । २ गुणनिष्ठजातिविशेषः । स च रूपत्वादिव्याप्यो रूपादिनिष्ठः । एतन्मूलिकैव अयमस्मादुत्कृष्टः इति प्रतीतिः । कालस्यात्मदिशां साधर्म्ये परममहत्त्वे परममहत्त्वत्वं व्यापकर्षानाश्रयपरिमाणत्वमित्यत्रापकर्षोप्येवमेव । ३ उत्कृष्टः इति प्रतीतिसाक्षिको द्रव्यादिवृत्तिरेव ज्ञायमानो धर्मः । यथा उत्कर्षवत्तया

ज्ञापनं ( ज्ञानानुकूलः शब्दः ) स्तुतिरित्यादौ । स च धर्मः कश्चिज्जातिः काचिद्दया कश्चिच्च दानादीनि । यथा त्वं ब्राह्मणः त्वं दयाशीलः त्वं दाता पुत्री इत्यादौ दयादीनामभ्युत्कर्षत्वम् । अत्र दयादिष्वभ्युत्कर्षव्यवहारेण तेषामभ्युत्कर्षपदवाच्यत्वमिति बोध्यम् ( मू० म० १ पृ० १०३ ) । यथा वा त्वमेव राजा इत्यादौ । अत्र च कश्चिद्दरिद्रो याचक उदारं धनिकं ग्राम्यप्रभुं वाभ्येत्य त्वमेव राजेति अन्ययोगव्यवच्छेदेन राजभावमारोपयतीति लोकप्रसिद्धिर्द्रष्टव्या ।

**उत्कर्षसमः**—( जातिः ) [ क ] दृष्टान्तधर्मं साध्येन समासजन्नुत्कर्षसमः । यदि क्रियाहेतुगुणयोगाल्लोष्टवत्क्रियावानात्मा लोष्टवदेव स्पर्शवानपि प्राप्नोति । अथ न स्पर्शवान् लोष्टवत्क्रियावानपि न प्राप्नोति । विपर्यये वा विशेषो वक्तव्य इति ( वात्स्या० ५।१।४ ) । [ ख ] व्याप्तिमपुरस्कृत्य पक्षदृष्टान्तान्यतरस्मिन्साध्यसाधनान्यतरेणाविद्यमानधर्मप्रसञ्जनम् । यथा शब्दः अनित्यः कृतकत्वादिति स्थापनायामनित्यत्वं कृतकत्वं घटे रूपसहचरितम् । अतः शब्दोपि रूपवान्स्यात् । तथा च विवक्षितविपरीतसाधनाद्विशेषविरुद्धो हेतुः । विरुद्धदेशनाभासोयमिति बोध्यम् ( गौ० वृ० ५।१।४ ) । [ ग ] परोक्तसाधनादेव तदव्यापकधर्मस्य पक्ष आपादनम् । यथा शब्दः अनित्यः कृतकत्वाद्घटवदित्यादौ कश्चिदेवमाह यदि कृतकत्वेन हेतुना शब्दो घटवदनित्यः स्यात्तर्हि तेनैव हेतुना शब्दो घटवत्सावयवः स्यात् इति ( नील० पृ० ४३ ) ।

**उत्क्षेपणत्वम्**—उत्क्षेपणत्वं नामोर्ध्वदेशसंयोगासमवायिकारणसमवेतकर्मत्वापरजातिः ( सर्व० सं० पृ० २२० औलु० ) । अथ वा ऊर्ध्वदेशसंयोगजनकक्रियानुकूलक्रियात्वम् ( त० व० ) ।

**उत्क्षेपणम्**—( कर्म ) [ क ] ऊर्ध्वदेशसंयोगहेतुः कर्म ( त० सं० ) ( त० कौ० पृ० २० ) ( त० व० पृ० २४० ) । यथा हस्तेन मुसलमुत्क्षिपतीत्यादावुत्क्षेपणम् । आत्मनः संयोगप्रयत्नाभ्यां प्रथमतो हस्तकर्म भवति । तत्र हस्तः समवायिकारणम् । प्रयत्नवदात्मसंयोगोऽसमवायिकारणम् । प्रयत्नश्च निमित्तकारणम् ( त० व० परि० १६ पृ० २४१ ) । ततो मुसलोत्क्षेपणे मुसलं समवायिकारणम् । प्रयत्न-

यदात्मसंयुक्तोत्क्षेपणयद्धस्तसंयोगोसमवायिकारणम् । प्रयत्नहस्तोत्क्षेपणादिकं निमित्तकारणम् इत्यादिकमुन्नेयम् । अत्रेदं बोध्यम् । उत्क्षेपणकर्तुः प्रयत्नः तस्यैव हस्तनोदनम् उत्क्षेप्यलोष्टादीनां गुरुत्वम् एतत्त्रयं हि कारणमुत्क्षेपणादेः कर्मणः इति । उत्क्षेपणादिकर्मणः कार्याणि तु संयोगविभागवेगा भवन्ति । स्थितिस्थापकोपि कर्मकार्यमित्यन्ये वदन्ति ( त० व० )। [ ख ] ऊर्ध्वसंयोगफलकक्रियावच्छिन्नव्यापारः । यथा गगने लोष्टमुत्क्षिपतीत्यादौ धात्वर्थः ( श० प्र० पृ० ९६ )। [ ग ] शरीरावयवेषु तत्संबद्धेषु च यदूर्ध्वभाग्भिः प्रदेशैः संयोगकारणम् अधोभाग्भिश्च प्रदेशैर्विभागकारणं कर्मोत्पद्यते गुरुत्वप्रयत्नसंयोगेभ्यः तत् ( प्रशस्त० कर्मनि० पृ० ३७ )।

उत्तमसाहसः—वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने । तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः ॥ ( मिताक्षरा अ० २ श्लो० २६ )।

उत्तरत्वम्—१ स्वाधिकरणकालध्वंसाधिकरणत्वम् । यथा चैत्रोत्तरत्वं वैशाखमासस्य । अत्र च त्रिंशद्दिवसात्मकचैत्रमासस्याधिकरणं तावान् दण्डकालः । तद्ध्वंसाधिकरणत्वं वैशाखस्येति लक्षणसमन्वयः । यथा वा भुक्त्वा व्रजतीत्यादौ व्रजनस्य भोजनोत्तरत्वम् । २ मेरुसंनिहितदेशावच्छिन्नत्वम् । यथा झळकीग्रामादुत्तरस्यां दिशि सोलापुरग्राम इत्यादौ ततो वायव्यैशान्योर्मध्यदिश उत्तरत्वम् । ३ क्रियाजन्यसंयोगानुयोगित्वम् भाविक्रियाजन्यसंयोगाश्रयत्वं वा । यथा ग्रामं गच्छतीत्यादौ ग्रामात्मकप्रदेशस्य पूर्वदेशमपेक्ष्योत्तरत्वम् । ४ दक्षत्वम् उत्तरसंज्ञकत्वं वा । यथा उत्तराः कुरव इत्यादौ इति काव्यज्ञा वदन्ति ।

उत्तरपदः—( द्विगुः समासः ) यो द्विगुः स्वघटकनामभ्यां सह साकाङ्क्षनामान्तरेण समासस्यान्तर्गतः सः । यथा पञ्च गावो धनमस्येति विग्रहे पञ्चगवधनः पुरुषः इत्यादौ बहुव्रीह्यादिनिविष्टः पञ्चगवादिः ( श० प्र० पृ० ४७ )।

उत्तरम्—१ परपक्षप्रतिषेधः ( वात्स्या० ५।२।१९ )। यथा उत्तरस्याप्रतिपत्तिरप्रतिभा ( गौ० ५।२।१९ ) इत्यादौ । २ प्रश्ननिवर्तकं

वाक्यम्। यथा कोसि इति पृष्टे देवदत्तोहमस्मि इति वचनम्। तत्रोक्तम् प्रश्नबोधधिया पृच्छा तस्य खण्डनमुत्तरम् इति (वाच०)। जिज्ञासितविषयावेदकं वाक्यमुत्तरमिति केचित् (वाच०)। शाब्दिकास्तु यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नस्य संबन्धो यत्प्रश्नवाक्यात्प्रतीयते तद्धर्मावच्छिन्ने जिज्ञासिततद्धर्मावच्छिन्नसंबन्धबोधकवाक्यम्। यदाहुः जिज्ञासितपदार्थस्य संसर्गो येन गम्यते। तदुत्तरमिति प्रोक्तमन्यदाभासशब्दितम्॥ इति। यथा कस्माद्घटः इति प्रश्नस्य दण्डाद्घटः इत्युत्तरम्। अत्र घटत्वावच्छिन्ने जिज्ञासितधर्मावच्छिन्नसंबन्धबोधकस्य कस्माद्घटः इति प्रश्नवाक्यस्य घटत्वावच्छिन्ने जिज्ञासितदण्डत्वावच्छिन्नस्य हेतुहेतुमद्भावबोधकं दण्डाद्घटः इति वाक्यमुत्तरम् (वै० सा० द० पृ० ८७) इति वदन्ति। ३ सिद्धान्तानुकूलतर्कोपन्यासरूपोधिकरणविशेष इति मीमांसका वेदान्तिनश्चाहुः। ४ राजसमीपे वादिकृताभियोगापनोदकमुत्तराख्यं व्यवहाराङ्गमिति व्यवहारज्ञाः। पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम्। अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः॥ (मिताक्षरा अ० २ श्लो० ७)। ५ नक्षत्रविशेष इति ज्योतिर्विद आहुः।

**उत्तरमीमांसा**—(दर्शनम्) उत्तरस्य वेदशेषभागस्योपनिषद्रूपस्य मीमांसा पञ्चाङ्गन्यायोपेतवाक्यसमुदायात्मको विचारः। यथा अथातो ब्रह्मजिज्ञासा (ब्र० सू० १।१।१) इत्यारभ्य अनावृत्तिः शब्दात् (ब्र० सू० ४।४।२२) इत्येतावान् अध्यायचतुष्टयात्मको सत्यवतीसुतव्यासकृतो ब्रह्मविचारः (वाच०)।

**उत्तीर्णता**—१ निश्चयः (ग० सव्य०)। यथा असाधारण्योत्तीर्णतादशायामित्यादौ। २ नद्यादेः पारगमनकर्मत्वमुत्तीर्णत्वमिति काव्यज्ञा वदन्ति।

**उत्तेजकत्वम्**—१ प्रतिबन्धककोटिप्रविष्टाभावप्रतियोगित्वम्। यथा दाहं प्रति मणिविशेषस्योत्तेजकत्वम्। अत्र च दाहं प्रति मणिविशेषस्य प्रतिबन्धकत्वं लोकसिद्धम्। परंतु मणिविशेषान्तरस्य च समवधाने दाहोत्पत्त्या मणिविशेषान्तराभावविशिष्टमणिविशेषस्यैव प्रतिबन्धकत्वमवश्यं-

वतन्मतया मणिविशेषान्तरस्योत्तेजकत्वमुपपद्यत इति । २ प्रेरकत्वमिति काव्यज्ञाः । ३ उद्दीपकत्वं वर्धकत्वं वेत्याधुनिका लौकिकजना वदन्ति ।

**उत्थाप्याकाङ्क्षा**—( आकाङ्क्षा ) अनियताकाङ्क्षा ( राम० १ पृ० २ ) । यथा उदयति चन्द्रः कुमुदबान्धव इत्यादौ चन्द्रपदकुमुदबान्धवपदयोरनियताकाङ्क्षा । अत्र समासपुनरात्तत्वाख्यः काव्यदोषोस्तीति बोध्यम् ।

**उत्थिताकाङ्क्षा**—( आकाङ्क्षा ) नियताकाङ्क्षा । यथा क्रियाकारकपदानां परस्पराकाङ्क्षा । यथा वा पुत्रादिपदानां पित्रादिरूपप्रतियोगिवाचकपदाकाङ्क्षा नियता ( राम० १ पृ० २ ) । नियतत्वं चात्रावश्यंभावित्वम् । अत्र च पुत्र इत्युक्ते कस्येत्याकाङ्क्षोदयादेवदत्तस्येत्याद्यपेक्ष्यत इति देवदत्तस्येति षष्ठ्यन्तपदपुत्रपदयोर्नियताकाङ्क्षेति ज्ञेयम् ।

**उत्पत्तिः**—अत्र बहवो विप्रतिपद्यन्ते । असतः सदुत्पद्यते इति बौद्धाः । प्रागुत्पत्तेरसत् कारणव्यापारादुत्पद्यते इति नैयायिकाः । सत एव कारणात् असतः कार्यस्य कारणव्यापारात् उत्पत्तिरित्यर्थः । उत्पत्तेः प्रागसत् उत्पत्तिकाले च सदिति तद्भावः । प्रागुत्पत्तेः सदपि कारणव्यापारादभिव्यज्यते इति सांख्याः मायावादिवेदान्तिनश्च प्रतिपेदिरे । यथा पीडनेन तिलेषु तैलस्य अवघातेन धान्येषु तण्डुलानाम् दोहनेन सौरभेयीषु पयसः अभिव्यक्तिः तद्वत् । तत्र सतो विवर्त इति मायावादिनां मतम् । परिणाम इति सांख्यानां मतम् ( वाच० ) । उत्पत्तिशब्दार्थस्तु आद्यक्षणसंबन्धः । स च [ क ] स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगिक्षणसंबन्धः ( आत्मत० व्या० शिरोम० ) ( वाच० ) ( म० प्र० १ पृ० १२ ) ( त० प्र० १ ) । [ ख ] स्वाधिकरणक्षणध्वंसानधिकरणक्षणसंबन्धो वा ( म० प्र० १ पृ० १२ ) ( त० प्र० १ ) । यथा उत्पत्तिमानभावो ध्वंस इत्यादावुत्पत्तिः । यथा वा घटपटादेरुत्पत्तिः । स्वम् उत्पद्यमानत्वेनाभिमतं घटादि ( म० प्र० १ पृ० १२ ) । क्षणश्च स्वजन्यविभागप्रागभावावच्छिन्नं कर्म । अत्र स्वम् उत्पद्यमानं कर्म ( म० प्र० पृ० १२ ) । [ ग ] यो यत्कालवृत्तिर्ध्वंसयोग्यवृत्तिस्तस्य तद्वृत्तित्वमुत्पत्तिरित्यपि केचित् ( दीधि० २ ) । [ घ ] स्ववृत्ति-

ध्वंसप्रतियोगिकालावृत्तित्वविशिष्टत्ववृत्तित्वम् । इदं च महाप्रलये क्षणव्यवहारानङ्गीकारेपि महाप्रलयस्योत्पत्तिः संपद्यत इत्यभिप्रायेणोक्तमिति विज्ञेयम् ( दि० १ पृ० ९३ ) । [ ङ ] तदधिकरणक्षणावृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वम् । तत्पदमुत्पत्स्यमानपदार्थपरम् । तथा च यदधिकरणक्षणावृत्तित्वस्य व्याप्या यत्समयवृत्तिध्वंसप्रतियोगिता तस्य तत्समयवृत्तित्वम् इति ( राम० १।१।९२ ) । इदं च महाप्रलयस्यापि क्षणत्वं वर्तते इत्यभिप्रायेणोक्तमिति विज्ञेयम् ( दिन० १ पृ० ९२ ) । [ च ] यत्समयवृत्तिध्वंसप्रतियोगिताव्यापकं तत्कार्याधिकरणक्षणवृत्तित्वं तत्समयवृत्तित्वमिति केचित् ( दि० ) । सा द्विविधा । स्वत उत्पत्तिः परत उत्पत्तिश्च । तत्राद्या यथा मीमांसकनये स्वतः प्रमात्वस्योत्पत्तिः । द्वितीया यथा घटादीनामुत्पत्तिः । सकलकारणयौगपद्यमुत्पत्तिरिति केचित् । आत्मन उत्पत्तिस्तु देहसंगतिः ( ता० र० श्लो० २१ ) ।

**उत्पत्तिकालावच्छिन्नत्वम्**—स्वाधिकरणसमयध्वंसवदन्यकालसंबन्धः (ग० पक्ष० पृ० ३९ ) । यथा यदा यो घट उत्पद्यते तदा तस्य घटस्य तत्कालावच्छिन्नत्वम् । यथा वा द्वितीयक्षणपर्यन्तावस्थायिनोपि ज्ञानादेरुत्पत्तिकालावच्छिन्नत्वम् । अथ वा तत्तदधिकरणसमयध्वंसाधिकरणसमयसंबन्धानामभावकूटविशिष्टत्वम् ( ग० २ प० पृ० ४१ ) ।

**उत्पत्तिविधिः**—( विधिः ) कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः ( मी० न्या० पृ० ९ ) । तत्स्वरूपं द्विविधम् । द्रव्यं देवता चेति । यथा दर्शपूर्णमासे आग्नेयोष्टाकपालो भवति इत्यादि । ज्योतिष्टोमे सोमेन यजेत इति । क्वचित् अग्निहोत्रं जुहोतीत्यादौ रूपाश्रवणेप्युत्पत्तिविधित्वमस्त्येव ( म० प्र० ४ पृ० ६२ ) ।

**उत्पातः**—शुभाशुभसूचको भूतविकारः । यथा वाताय कपिला विद्युदित्यादौ । अत्र ज्ञाप्यज्ञापकभावश्चतुर्थ्यर्थः । तथा च वातरूपज्ञाप्यज्ञापिका कपिला विद्युत् इति बोधः ( श० म० शब्द० का० ४ पृ० १०५ ) ।

उत्पादः—[ क ] स्वाधिकरणसमयध्वंसानधिकरणसमयसंबन्धः । [ ख ] तत्तत्समयवृत्तिध्वंसप्रतियोगिसमयावृत्तित्वे सति तत्तत्समयसंबन्धः । यथा धर्मादुत्पद्यते सुखम् दण्डाज्जायते घट इत्यादौ धातोरर्थः । अत्र तादृश-संबन्धरूपधात्वर्थनिष्ठं जन्यत्वं पञ्चम्यर्थः । तथा च धर्मजन्यो यः स्वाधि-करणसमयध्वंसानधिकरणसमयसंबन्धस्तद्वत्सुखम् इत्याकारको बोधः । वृत्तिकृतस्तु उत्पद्यत इत्यादौ प्रागभावप्रतियोगित्वरूपमेवोत्पत्तिमत्त्वं धात्वर्थं इत्याहुः ( श० प्र० कार० पृ० ८१ ) ।

उत्पाद्यम्—१ कार्यवदस्यार्थोनुसंधेयः । २ निर्वर्त्य इत्याख्यः कर्मविशेषः । इदं च प्रकृतिकर्मासमभिव्याहारे संपद्यते । प्रकृतिकर्मसमभिव्याहारे तु विकार्यम् इत्युच्यत इति विवेकः । शिष्टं तु निर्वर्त्य विकार्य इत्यादिशब्द-व्याख्याने दृश्यम् ( ग० व्यु० का० २ पृ० ६५ ) ।

उत्सर्गः—१ उत्सर्जनवदस्यार्थोनुसंधेयः । २ सामान्यशास्त्रमिति मीमांस-कादयो वदन्ति । तल्लक्षणं तु बलवद्बाधकापोद्यत्वम् । अत्रायं नियमः अपवादाभावे उत्सर्गप्रवृत्तिः इति । यथा न हिंस्यात्सर्वा भूतानीति शास्त्रमुत्सर्गः । अस्य यागीयहिंसायां न प्रवृत्तिः । तत्र पशुमालभेत इत्यपवादसत्त्वात् ।

उत्सर्गसमितिः—कफमूत्रमलप्रायैर्निर्जन्तुजगतीतले । यत्नाद्यदुत्सृजेत्साधुः सोत्सर्गसमितिर्भवेत् ॥ ( सर्व० सं० पृ० ७९ आर्ह० ) ।

उत्सर्जनम्—१ [ क ] स्वानुयोगिकप्राप्तवस्तुप्रतियोगिकसंबन्धविरहेच्छा । यथा उत्सृजति धनं देवदत्त इत्यादौ धात्वर्थः । अत्र स्वपदार्थस्तु उत्सर्जनकर्ता देवदत्तादिः । [ ख ] त्यागः । २ कर्मविशेष इति श्रोत्रिया वदन्ति ।

उदानः—( वायुः ) [ क ] अन्नादेरूर्ध्वनयनादुदानः ( सि० च० १ पृ० ८ ) ( दि० १।२ पृ० ८५ ) । अत्रोक्तम् स्पन्दयत्यधरं वक्त्रं गात्रनेत्रप्रकोपनः । उद्वेजयति मर्माणि उदानो नाम मारुतः ॥ विद्युत्पावकवर्णः स्यादुत्थानासनकारकः । पादयोर्हस्तयोश्चापि सर्वसंधिषु

वर्तते ॥ इति ( पदार्थादर्शे ) ( वाच० ) । [ ख ] अथ योस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशः ( छान्दो० उ० ३।१३।५ ) ।

**उदारत्वम्**—सहकारिसंनिधिवशात्कार्यकारित्वम् ( सर्व० सं० पृ० ३६० पातञ्ज० ) ।

**उदासीनत्वम्**—विहित निषिद्ध एतदुभयविपरीतत्वम् । यथा उदासीनं वाक्यम् इत्यादावुदासीनशब्दस्यार्थः । शिष्टं तु तटस्थशब्दव्याख्यानादौ दृश्यम् ।

**उदाहरणम्**—( न्यायावयवः ) [ क ] साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ( गौ० १।१।३६ ) । दृष्टान्तो दृष्टान्तवचनम् । दृष्टान्तकथनयोग्यावयव इत्यर्थः ( गौ० वृ० १।१।३६ ) । हेतावुक्ते कथमस्य गमकत्वम् इत्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोः प्रदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् तत्प्रदर्शनायोदाहरणम् ( चि० २ पृ० ८० ) । व्याप्तिज्ञानमुदाहरणस्य प्रयोजनम् ( त० दी० २ पृ० २२ ) । उदाहरणत्वं च अनुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानजनकव्याप्यत्वाभिमतवन्निष्ठनियतव्यापकत्वाभिमतसंबन्धबोधजनकशब्दत्वम् ( चि० २ अव० पृ० ८० ) । यद्वा अवयवान्तरार्थानन्वितार्थकावयवत्वम् ( गौ० वृ० १।१।३६ ) । अथवा इतरार्थान्वितस्वार्थाबोधकन्यायावयवत्वम् ( दीधि० २ पृ० १७७ ) । तद्यथा यो यो धूमवान् स सोग्निमानिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम् ( न्या० म० २ पृ० २३–२४ ) । [ ख ] व्याप्तिप्रतिपादकं दृष्टान्तवचनम् ( त० दी० २ पृ० २२ ) । तदर्थश्च प्रकृतहेतुमति प्रकृतहेतुव्यापकत्वविशिष्टसाध्यबोधकवाक्यम् । उदाहरणघटकसाध्यपदान्निरूढलक्षणया हेतुव्यापकत्वविशिष्टस्य साध्यस्य बोधनात् उदाहरणस्य व्याप्तिप्रतिपत्तिपरत्वमक्षतमिति बोध्यम् ( नील० २ पृ० २२–२३ ) । यथा पर्वते धूमेन वह्निसाधने यो यो धूमवान्स सोग्निमान् यथा महानसः इति वाक्यमुदाहरणम् ( त० भा० २ पृ० ११ ) । [ ग ] उपनयाभिधानप्रयोजकजिज्ञासाजनकवाक्यमुदाहरणमित्यन्ये ( चि० २ अव० पृ० ८० ) । उदाहरणं द्विविधम् । अन्वय्युदाहरणम् व्यतिरेक्युदाहरण चेति ( गौ० वृ० १।१।३५ ) ( चि० २ पृ० ८० ) ।

**उदाहरणाभासः**—निदर्शनाभासशब्दवदस्यार्थोनुसंधेयः ।

**उदीची**—( दिक् ) [ क ] प्राच्यभिमुखपुरुषवामप्रदेशावच्छिन्ना दिगुदीची ( वै० उ० २।२।१० ) ( वै० २।२।१५ ) । अत्र वामत्वं तु शरीरावयववृत्तिजातिविशेषः ( वै० उ० २।२।१० ) । [ ख ] मेरुसंनिहितदेशावच्छिन्ना दिक् ( वाक्य० १ पृ० ५ ) ( न्या० बो० १ पृ० ३ ) । यथा झळकीग्रामादुदीच्यां सोलापुरग्रामः ।

**उद्देशः**—१ [ क ] नामधेयेन पदार्थमात्रस्याभिधानम् ( वात्स्या० १।१।२ ) ( त० भा० पृ० १ ) ( त० दी० १ पृ० ७ ) । यथा प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्त ( गौ० १।१।१ ) इत्याद्यभिधानम् ( त० भा० पृ० १ ) । यथा वा पृथिवीजलतेजस्वायुआकाशकालदिश्आत्ममनांसि इत्याद्यभिधानम् । [ ख ] वस्तुप्रतिपादकनाममात्रम् ( नील० १ पृ० ७ ) । [ ग ] लक्ष्यतावच्छेदकमात्रेण लक्ष्यसंकीर्तनम् ( त० कौ० पृ० २१ ) । यथा द्रव्यं गुणः कर्मेत्यादिकथनम् । [ घ ] संज्ञामात्रेण पदार्थानामभिधानम् । २ इच्छाविशेषः । ३ शाब्दिकास्तु उपदेशदेशः । तत्र देशश्चोच्चारणकालः । यथा यथोद्देशं संज्ञापरिभाषम् इत्यादावित्याहुः । ४ समासकथनमुद्देश इति सुश्रुतोक्तस्तन्त्राधिकरणभेदः । ५ काव्यज्ञास्तु उत्कृष्टप्रदेशः ६ संक्षेपश्चोद्देशशब्दार्थ इत्याहुः ( वाच० ) ।

**उद्देश्यत्वम्**—[ क ] विषयताविशेषः । यथा पर्वतो वह्निमान् इत्यनुमितौ पर्वतस्योद्देश्यत्वम् । विषयताविशेषश्चानुमितौ शाब्दबोधे च योजनीयः । प्रवृत्तौ तूद्देश्यत्वं स्वजनकेच्छाविषयत्वम् । यथा स्वर्गकामो यजेतेत्यादिवाक्यजनितेष्टसाधनताज्ञानतः स्वर्गफलोद्देशेनैव यागे प्रवृत्तिः इति स्वर्गस्य तत्रोद्देश्यता ( वाच० ) । अत्रेदं बोध्यम् । यमुद्दिश्य विधेयप्रवृत्तिः तदुद्देश्यमनुवाद्यम् । उद्देश्यविधेयभावस्थलेयं नियमः उद्देश्यवाचकपदस्य विधेयवाचकपदात्प्राक् प्रयोगः कर्तव्यः इति । तत्रोक्तम् अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् इति ( वाच० ) । यथा पर्वतो वह्निमानित्यत्र पर्वतः । [ ख ] इच्छाविशेष्यत्वमिति केचित् ( न्या० र० ) । [ ग ] इच्छाविषयत्वम् । यथा पर्वतत्वावच्छेदेन साध्यसिद्धेरुद्देश्यतायाम् ( दीधि०

२ पृ० १६८) इत्यादौ । यथा वा वैयाकरणमते विप्राय गां ददातीत्यादौ विप्रे गोस्वामित्वभागितयेच्छाविषयत्वमुद्देश्यत्वम् (वै० सा० द० सु० पृ० १९४)। [घ] प्रकृतत्वम् (दीधि० २ पृ० १६७)। यथा उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकेत्यादौ (चि० २ प्रतिज्ञाग्रन्थ०)। [ङ] शाब्दिकाश्च यच्छब्दप्रतिपाद्यत्वे सति सिद्धत्वेन प्रतीयमानत्वे सत्यनुवाद्यत्वमुद्देश्यत्वमिति वदन्ति। [च] मानान्तरप्राप्तत्वे सति विधेयान्वयित्वेन निवेश्यत्वमिति मीमांसकाः। [छ] मानसापेक्षो विषयत्वाकार उद्देश्यत्वम् (जै० न्या० अ० १ पा० ४ अधि० ६)।

**उद्बोधकत्वम्**—स्मृतिप्रयोजकत्वम्। यथा प्रणिधाननिबन्धादीनामुद्बोधकत्वम् (गौ० ३।२।४२)। उद्बोधकानि च प्रणिधानादीनि स्मृतिजनकस्य संस्कारस्य सहकारीणि भवन्ति। अत्रेदं बोध्यम्। उद्बुद्ध एव संस्कारः स्मृतिं जनयति। तत्रोद्बोधश्च सहकारिलाभः (त० भा० पृ० ३७)। स्मृतिजननाय संस्कारोद्दीपनम् (वाच०)। स्मृतिप्रयोजकत्वं च कारणकारणतावच्छेदकसाधारणं ज्ञेयम्। तेन प्रणिधानादिषु कस्यचित्स्वरूपसतः कस्यचिज्ज्ञातस्यापि स्मारकत्वेपि नासंग्रहः। उद्बोधने च एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम् इति प्रायिको नियमो द्रष्टव्यः।

**उद्भवः**—१ [क] बाह्यैकेन्द्रियग्रहणयोग्यगुणत्वात्मक उपाधिः। स च रूपादिविशेषगुणगतो जातिविशेष एव रूपत्वादिव्याप्यः। अयं च रूपप्रत्यक्षे प्रयोजक इति ज्ञेयम् (वै० उ० ४।१।८)। [ख] उद्भूतत्ववदस्यार्थोनुसंधेयः। [ग] अनुद्भवाभाव एवोद्भव इति केचित् (वै० उ० ४।१।८)। २ उत्पत्तिः (मिता० अ० ३ पृ० ३९)। यथा विष्णुपादोद्भवा गङ्गा इत्यत्र सैर्यं चतुर्थे त्वङ्गानां पञ्चमे शोणितोद्भवः (याज्ञ० स्मृ० अ० ३ श्लो० ८०) इत्यादौ च (वाच०)।

**उद्भूतत्वम्**—[क] प्रत्यक्षत्वप्रयोजको धर्मविशेषः (त० दी० १ पृ० १३)। स च रूपत्वव्याप्यजातिमत्त्वम् (चि० १)। इयं जातिश्च घटादिगतशुक्लादिवृत्तिरिति विज्ञेयम्। उद्भूतत्वं च केषुचित् रूपरसगन्ध-

स्पर्शेषु चतुर्षु वर्तते इति बहूनां मतम्। यथा उद्भूतरूपं नयनस्य गोचरः (भा० प० श्लो० ५४) उद्भूतस्पर्शवद्द्रव्यं गोचरः सोपि च त्वचः (भा० प० श्लो० ५६) इत्यादौ नीलत्वादिव्याप्यानुद्भूतत्वाभावकूटवत्त्वम्। [ख] प्रत्यक्षयोग्यरूपरसगन्धस्पर्शसंयोगाद्यन्यतमत्वम्। [ग] उद्भूतत्वं जातिस्तदभावोनुद्भूतत्वमिति जरन्नैयायिकाः। तदयुक्तम्। यथाहि अनुद्भूतत्वं जातिर्न भवति शुक्लत्वादिना संकरात्। एवमुद्भूतत्वमपि जातिर्न भवतीति विज्ञेयम् (सि० च० १ पृ० ४)। अत्र नव्याः उद्भूतत्वं जातिः। न च शुक्लत्वादिना सांकर्यम्। गुणसांकर्यं न बाधकमित्याहुः (नी० १ पृ० १३)। [घ] अनुद्भूतत्वं जातिस्तदभाव उद्भूतत्वमिति गङ्गेशोपाध्यायः (सि० च० १ पृ० ४–५)। केचित्तु शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना। तत्तदभावकूटवत्त्वमेवोद्भूतत्वमित्याहुः (नील० १ पृ० १३)।

उद्वापः—१ श्रूयमाणपदपरित्यागः पश्चात्। यथा घटं नय गामानय इत्यादिवाक्यादावावापोद्वापाभ्यामित्यादौ (मुक्ता० ४ पृ० १७६)। २ उद्धरणम् (वाच०)।

उद्वृषभयज्ञः—ज्येष्ठमासे पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयन्तीत्याचारः। सोयमुद्वृषभयज्ञः (जैमि० न्या० अ० १ पा० ३ अधि० ८)।

उन्नयनम्—१ अनुमानम्। २ वितर्कः। ३ यज्ञीयः पूतभृदाख्यः पात्रविशेष इति याज्ञिका आहुः। ४ ऊर्ध्वप्रापणमिति काव्यज्ञाः (वाच०)। ५ संस्कारविशेष इति मौहूर्तिकाः।

उन्नायकत्वम्—ज्ञापकत्वम्। अत्र ज्ञापकत्वं जनकज्ञानविषयत्वम्। यथा पर्वते धूमेन वह्निसाधने वह्निमत्पर्वतोन्नायकत्वं वह्निव्याप्यवत्पर्वतस्य।

उन्नेयत्वम्—ज्ञाप्यत्वम्। अत्र ज्ञाप्यत्वं जन्यज्ञानविषयत्वमिति बोध्यम्। यथा पर्वते धूमेन वह्निसाधने वह्निव्याप्यवत्पर्वतोन्नेयत्वं वह्निमत्पर्वतस्य।

उन्मत्तः—उन्मादेन पञ्चविधेन वातपित्तश्लेष्मसंनिपातग्रहसंभवेनोपसृष्टः (मिताक्षरा अ० २ श्लो० ३२)।

उपकारः—[क] सहकारिलाभः। यथा घटाद्युत्पत्तौ दण्डाद्युपकारः।

यथा वा स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ( भा० प० श्लो० १०४ ) इत्यादौ स्पार्शनप्रत्यक्षे कारणात्मकस्य स्पर्शस्योपकारः ( मुक्ता० गु० पृ० १९७ ) । [ ख ] सहकारिभिः कारणस्य कार्योत्पादनार्थमानुगुण्यम् । यथा मीमांसकमते दर्शादियागस्य प्रधानापूर्वसाधने प्रयाजादीनामङ्गानां कलिकापूर्वसाधनद्वारा तदानुगुण्यम् । यथा वा बौद्धमते कुर्वद्रूपतारूपस्य बीजादेरुच्छूनत्वस्य संपादनरूपातिशयाधानमुपकार इति ( वाच० ) ।

**उपक्रमः**—१ आरम्भः । उपायज्ञानपूर्वकारम्भो वा । यथा ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ( ब्र० सू० १।४।१० ) इत्यादौ । २ तात्पर्यनिर्णायको हेतुविशेषः । यथा वेदान्तिनां मते उपक्रमोपसंहारावभ्यासोपूर्वता फलम् । अर्थवादोपपत्ती च हेतुस्तात्पर्यनिर्णये ॥ इत्यादौ ( वाच० ) ।

**उपगतम्**—द्रव्यादिस्वीकारद्योतकं पत्रम् ( पावती ) इति प्रसिद्धम् ।

**उपचयः**—१ वृद्धिः । यथा अवयवोपचय इत्यादौ । २ उन्नतिः । यथा स्वशक्त्युपचये केचित् परस्य व्यसने परे ( माघः स० २ श्लो० ५७ ) इत्यादौ ।

**उपचारः**—१ [ क ] सहचरणादिनिमित्तेनातद्भावे तद्वदभिधानम् ( वास्या० १।२।१४ ) । [ ख ] शक्यार्थत्यागेन लक्षणयान्यार्थबोधनम् । यथा मञ्चाः क्रोशन्ति अग्निर्माणवक इत्यादौ । अत्र तु अन्वयानुपपत्तिरेवोपचारबीजम् । यथा आत्मकर्म हस्तसंयोगाच्च ( वै० ५।१।६ ) इत्यादावात्मशब्दः शरीरावयवपर उपचारात् इति ( वै० उ० ५।१।६ )। तात्पर्यानुपपत्तिरेवोपचारे बीजमिति तु युक्तम् । २ ज्ञानम् । यथा तदर्थे व्यक्त्याकृतिजातिसंनिधावुपचारात्संशयः ( गौ० २।२।६१ ) इत्यादावुपचारो ज्ञानम् ( गौ० वृ० २।२।६१ ) । ३ व्यवहारः । यथा स्मृतेरुपचारादन्यार्थदर्शनाच्च ( शब० भा० ) इत्यादौ । ४ चिकित्सेति भिषजो वदन्ति । ५ पूजा सेवा धर्मानुष्ठानं चेति काव्यज्ञाः । ६ सादृश्यमित्यालंकारिका आहुः ( वाच० ) ।

**उपचारच्छलम्**—( छलम् ) [ क ] धर्मविकल्पनिर्देशेर्थसद्भावप्रतिषेध उपचारच्छलम् ( गौ० १।२।१४ ) । अभिधानस्य धर्मो यथार्थप्रयोगः । धर्मविकल्पोन्यत्र दृष्टस्यान्यत्र प्रयोगः । तस्य निर्देशे धर्मविकल्पनिर्देशे । यथा मञ्चाः क्रोशन्तीति । अर्थसद्भावेन प्रतिषेधः मञ्चस्थाः पुरुषाः क्रोशन्ति न तु मञ्चाः क्रोशन्ति ( वात्स्या० १।२।१४ ) । [ ख ] शक्तिलक्षणयोरेकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या यः प्रतिषेधः स उपचारच्छलम् । यथा मञ्चाः क्रोशन्ति इत्यत्र मञ्चस्था एव क्रोशन्ति न तु मञ्चाः । एवम् नीलो घट इत्यत्र घटस्य कथं नीलरूपाभेदः । एवम् अहं नित्य इति शक्त्या प्रयुक्ते अमुकस्मादुत्पन्नस्त्वं कथं नित्य इति प्रतिषेधोप्युपचारच्छलम् । वाद्यभिप्रेतार्थस्यादूषणेन छलस्यासदुत्तरत्वम् ( गौ० वृ० १।२।१४ ) । [ ग ] उपचारप्रयोगेषु गौणलाक्षणिकेषु यः । मुख्यार्थासंभवाद्बाध उपचारच्छलं च तत् ।। इति । (ता० र० परि० १ श्लो० ९६–९७) ।

**उपजीवकत्वम्**—[ क ] कार्यत्वम् । यथा घटस्य दण्डोपजीवकत्वम् । यथा वा संगतिश्च प्रत्यक्षेणोपजीव्योपजीवकभाव इत्यादावनुमाने प्रत्यक्षकार्यत्वम् ( राम० २ पृ० १३४ ) । [ ख ] प्रयोज्यत्वम् । यथा शाब्दबोधस्योपमितिप्रयोजकत्वम् ( राम० १३४ ) इत्यत्रोपमितेः प्रयोज्यत्वम् ।

**उपजीवी**—प्रयोज्यः । यथा शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणगम्यार्थको दृष्टार्थकः शब्दः (गौ० वृ० १।१।८) इत्यादौ ग्रन्थे उपजीविन् शब्दस्यार्थः ।

**उपजीव्यत्वम्**—१ [ क ] कारणत्वम् । [ ख ] प्रयोजकत्वम् । उदाहरणं तु पूर्वोक्तमेवात्रानुसंधेयम् । उपजीव्यत्वं च द्विविधम् । स्वसत्ताप्रयोजकत्वम् स्वज्ञानप्रयोजकत्वं च । उपजीव्योपजीवकभावश्च ज्ञानसत्त्वयोः प्रयोज्यप्रयोजकभावः । यथा एकस्यान्यसत्ताप्रयोजकत्वम् अपरस्य च तत्प्रयोज्यसत्ताकत्वम् । एवम् अन्यज्ञानप्रयोजकत्वम् अन्याधीनज्ञानविषयत्वम् । २ काव्यज्ञास्तु उपजीवनोपायवान् । यथा सूचकाः सेतुभेत्तारः परवृत्त्युपजीवकाः । अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ॥ ( भा० आ० अ० २३ ) इत्यादौ इत्याहुः ( वाच० ) ।

**उपदेशः**—१ शब्दः ( गौ० वृ० २।१।५२ ) । यथा आप्तोपदेशसामर्थ्याच्छब्दार्थे संप्रत्ययः ( गौ० २।१।५२ ) इत्यादौ । २ प्रति-

पत्त्यनुकूलव्यापारः । यथा शिष्यं धर्मं वदति वक्ति ब्रूते उपदिशति आचष्टे इत्यादौ वदप्रभृतिधात्वर्थः । अत्र धात्वर्थघटकप्रतिपत्तौ शिष्यस्याधेयत्वेन धर्मस्य च विषयत्वेनान्वयात् धर्मविषयिणी या शिष्यनिष्ठा प्रतिपत्तिस्तदनुकूलव्यापारवान् इत्याकारको बोधः । अत्र तादृशव्यापारो धर्मः सेव्यताम् इत्यादिको गुर्वाद्यभिलापः ( श० प्र० पृ० ९८ ) । ३ अनुशासनम् । यथा आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ ( मनु० अ० १२ श्लो० २०६ ) इत्यादौ । ४ हितकथनं ५ प्रवर्तकवाक्यं वा । यथा धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः ( मनु० अ० ८ श्लो० २७२ ) इत्यादौ । ६ शिष्याय सविधानं मन्त्रकथनमुपदेश इति मान्त्रिकाः । ७ दीक्षाभेद इति तान्त्रिकाः ( वाच० ) । ८ आद्योच्चारणमुपदेश इति शाब्दिका वदन्ति । तदुक्तम् धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् । आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥ इति । ९ यत्रापेक्षितस्यार्थजातस्य प्रतिपादको ग्रन्थसंदर्भः पठ्यते स उपदेश इति मीमांसकाः ( जै० न्या० अ० ७ पा० १ अधि० १ ) ।

**उपधा**—१ कामक्रोधादयो भावदोषाः । एते अधर्मजनकाः ( त० व० ) । २ धर्मार्थकामाद्युपन्यासेनामात्यपरीक्षणम् । यथा चिन्तावन्तः कथां चक्रुरुपधाभेदमीरवः ( भट्टिः ) इत्यादौ इति नीतिशास्त्रज्ञाः । ३ छलम् । यथा उपधाभिश्च यः कश्चित्परद्रव्यं हरेन्नरः ( मनु० अ० ८ श्लो० १९३ ) इत्यादौ इति व्यवहारज्ञाः । ४ अलोन्त्यात्पूर्व उपधा ( पा० सू० १।१।६५ ) इति शाब्दिका वदन्ति ( वाच० ) । ५ परवञ्चनेच्छा ( प्रशस्त० गु० कामनि० पृ० ३३ ) ।

**उपधानम्**—१ उपधायकत्ववदस्यार्थोनुसंधेयः । २ व्रतविशेष इति धर्मज्ञाः । ३ विशेषः ४ प्रणयश्च इति काव्यज्ञा आहुः ( वाच० ) ।

**उपधायकत्वम्**—१ ( कारणत्वम् ) अव्यवहितपूर्ववृत्तित्वसंबन्धेन फलविशिष्टत्वम् । यथा परामर्शस्यानुमित्यात्मकफलोपधायकत्वम् । यथा वा विशेषणज्ञानस्य विशिष्टज्ञानात्मकफलोपधायकत्वम् ।

**उपधिः**—१ अन्यथा स्थितस्य वस्तुनः अन्यथाप्रकाशनरूपो व्यापारः। यथा योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यत्र वाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत्॥ (मनु० अ० ८ श्लो० १६५) इत्यादौ। २ छलमिति काव्यज्ञा वदन्ति (वाच०)।

**उपधेयः**—१ यत्किंचिद्धर्मविशिष्टो धर्मी। यथा उपधेयसंकरेप्युपाध्यसंकरादित्यादौ। अत्रेदमुदाह्रियते। वायुर्गन्धवान् स्नेहादित्यादावुपधेयस्य दोषाश्रयस्य धर्मिणः स्नेहादेर्हेतोः संकरेपि (ऐक्येपि) उपाधीनां व्यभिचारविरोधादिरूपदोषात्मकधर्माणामसांकर्यात् (भेदेन प्रतीयमानत्वात्) स्नेहादौ पृथक् तत्तद्दोषव्यवहार उपपद्यत इति। एवमन्यत्राप्यूह्यम्। २ मन्त्रविशेषेण स्थापनीय इष्टकादिरिति याज्ञिका आहुः (वाच०)।

**उपनयः**—१ (न्यायावयवः) [क] उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः (गौ० १।१।३८)। साध्यस्य पक्षस्योदाहरणापेक्ष उदाहरणानुसारी य उपसंहार उपन्यासः स इत्यर्थः (गौ० वृ० १।१।३८)। उदाहरणानन्तरं भवतु व्याप्तिस्तथापि व्याप्तं किं पक्षे वर्तते न वा इत्याकाङ्क्षायां व्याप्तस्य पक्षधर्मत्वप्रदर्शनायोपनयः। पक्षधर्मताज्ञानमुपनयस्य प्रयोजनम् (त० दी० २ पृ० २२)। उदाहरणान्त एव प्रयोग इति न वाच्यम्। तृतीयलिङ्गपरामर्शस्य व्याप्तिपक्षधर्मतावगाहिनोषयवान्तरादलाभात्। उपनयानभ्युपगमे पक्षधर्मताया अलाभात् (चि० २ पृ० ८१)। लक्षणं तूपनयत्वमेव। तच्च अनुमितिकारणतृतीयलिङ्गपरामर्शजनकावयवत्वम् (चि० २ अव० पृ० ८१)। इतरोपस्थापितार्थविशेषणकस्वार्थबोधजनकन्यायावयवत्वं वा। उपनयार्थे विशेष्ये निगमनार्थस्य विशेषणत्वेनान्वयाल्लक्षणसमन्वय इति बोध्यम्। एवमुत्तरत्रापि ज्ञेयम्। अथवा स्वार्थविशेष्यकेतरार्थान्वयबोधजनकन्यायावयवत्वम् (दीधि० २ पृ० १७७–१७८)। यद्वा वह्निव्याप्यधूमवानयमिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम् (न्या० म० २ पृ० २४)। [ख] प्रकृतोदाहरणोपदर्शितव्याप्तिविशिष्टहेतुविशिष्टपक्षबोधजनको न्यायावयवः (गौ० वृ० १।१।३८)। [ग] पक्षे व्याप्त-

लिङ्गोपसंहारः ( त० भा० पृ० ४३ ) । [ घ ] उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकं वचनम् ( सि० च० २ पृ० २५ ) । [ ङ ] परामर्शित्ववचनम् । [ च ] व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचनम् ( त० दी० २ पृ० २२ ) । यथा तथा चायम् तद्व्याप्यहेतुमान् तद्वान् वा इति वाक्यमुपनयः ( दीधि० २ अव० पृ० १७० ) । अत्रेदं बोध्यम् । तथा चायम् इत्याकारः प्राचामुपनयः । नव्यानां तु तद्व्याप्यहेतुमान् तद्वान् वेत्याकार उपनयः ( दीधि० पृ० १७० ) । एवं च पर्वते धूमेन वह्निसाधने वह्निव्याप्यधूमवानयम् इति वाक्यमुपनयः । तथा चायम् तद्वान् इत्यत्र तच्छब्देन वह्निव्याप्यधूमस्य तद्व्याप्यवान् इत्यत्र तु तच्छब्देन साध्यस्य परामर्शात् ( ग० २ अव० पृ० ३५ ) ( त० भा० पृ० ४३ ) ( त० सं० ) । केचित्तु पर्वतो वह्निमानित्यादौ तथा चायम् इत्याकारः वह्निमद्व्याप्यधूमवानयम् इत्याकारो वा उपनय इति प्राहुः ( दीधि० पृ० १७० ) । उपनयो द्विविधः अन्वय्युपनयः व्यतिरेक्युपनयश्चेति ( गौ० वृ० १।१।३८ ) । २ ज्ञानम् । यथा सुरभि चन्दनम् इत्यादिप्रत्यक्षस्य जनको ज्ञानलक्षणः संनिकर्ष उपनयः ( मु० म० १ ) । स्वविषये मनसः संनिकर्ष इत्यर्थः ( ग० बाध० पृ० २१ ) । अत्र व्युत्पत्तिः । नीयत उपस्थाप्यते ज्ञानविषयतामापाद्यतेनेन इति करणे अच् । अधिकं तु ज्ञानलक्षणः एतच्छब्दव्याख्याने सविस्तरं संपादयिष्यते । ३ उपनयनाख्यः संस्कारविशेष इति धर्मज्ञा वदन्ति ।

**उपनिक्षेपः**—रूपसंख्याप्रदर्शनेन रक्षणार्थं परस्य हस्ते निहितं द्रव्यम् । यथाह नारदः । स्वं द्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः । निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥ ( मिताक्षरा अ० २ श्लो० २५ ) ।

**उपनिधिः**—असंख्यातमविज्ञातं समुद्रं यन्निधीयते । तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः ॥ ( मिताक्षरा अ० २ श्लो० ६५ ) ।

**उपनिषत्**—१ ब्रह्मविद्या । २ ब्रह्मविद्याप्रतिपादकं वेदशिरोभागरूपं वेदान्तशास्त्रम् । यथा ऐतरेयकठवल्लीईशावास्यकेनप्रश्न इत्यादि ।

अत्र व्युत्पत्तिः। सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात्। उपनिपूर्वस्य सदेस्तदर्थत्वात्। तादर्थ्याद्ग्रन्थोप्युपनिषदुच्यते ( बृ० शं० भा० )।

**उपनीतभानम्**—१ उपनीततत्तादिविषयकत्वम्। यथा प्रत्यभिज्ञात्मके घटो नास्ति सुरभि चन्दनम् इत्यादौ प्रत्यक्ष उपनीतभानम्। अत्र उपनीतस्य ज्ञातस्य भानम् विषयिता इति विग्रहः। अत्रायं विशेषोवधार्यः। इदमुपनीतभानं प्रत्यक्ष एव तिष्ठति न त्वनुमित्यादावपीति ( ग० बाध० पृ० २१ ) ( दीधि० २ पृ० २२२ )। २ लौकिकालौकिकोभयसंनिकर्षजन्यं ज्ञानम्। यथा सुरभि चन्दनम् इति प्रत्यक्षमुपनीतभानं भवति। तच्च सौरभ्यांशे अलौकिकसंनिकर्षः चन्दनांशे लौकिकसंनिकर्षश्चैतदुभाभ्यां जन्यत इति बोध्यम्। अत्र उपनीतस्य भानं यत्र तत् इति व्युत्पत्तिर्द्रष्टव्या।

**उपनीतम्**—ज्ञानलक्षणसंनिकर्षेण ज्ञातम्। यथा उपनीतं विशेषणतयैव भासते मानसे तु नायं नियम इत्यादौ ( वाच० )।

**उपन्यासः**—१ वाक्योपक्रमः। २ वाक्यप्रयोगः। यथा तस्माद्ब्रह्मजिज्ञासोपन्यासमुखेन ( शा० भा० ) इत्यादौ। ३ विचारः ( कुल्लूकभट्टः ९।३१ )। यथा पुण्यमुपन्यासं निबोधत ( मनु० अ० ९ श्लो० ३१ ) इत्यादौ। ४ विश्वासेनान्यसमीपे द्रव्यन्यासः ( उपनिधिः ) इति व्यवहारज्ञा आहुः।

**उपपत्तिः**—१ ज्ञानम्। यथा समानानेकधर्मोपपत्तेः ( गौ० १।१।२३ ) इत्यादौ ज्ञानम् ( गौ० वृ० १।१।२३ )। यथा वा अविज्ञाततत्त्वेर्थे कारणोपपत्तितः ( गौ० १।१।४० ) इत्यादावारोपात्मकं ज्ञानम्। २ साधकप्रमाणोपन्यासरूपा युक्तिः ( वै० सा० द० )। यथा श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिरित्यादौ। ३ संगतिः। यथा उपपत्तिमदूर्जिताश्रयं वचनम् ( किरा० स० २ श्लो० १ ) इत्यादौ। ४ हेतुः ५ उपायः ६ प्राप्तिः ७ सिद्धिः इति काव्यज्ञा वदन्ति ( वाच० )।

**उपपत्तिसमः**—( जातिः ) [ क ] उभयकारणोपपत्तेरुपपत्तिसमः ( गौ० ५।१।२५ ) । यद्यनित्यत्वकारणमुपपद्यते शब्दस्येत्यनित्यः शब्दः तदा नित्यत्वकारणमप्युपपद्यतेस्यास्पर्शत्वमिति नित्यत्वमप्युपपद्यते । उभयस्यानित्यत्वस्य नित्यत्वस्य च कारणोपपत्त्या प्रत्यवस्थानमुपपत्तिसमः । ( वात्स्या० ५।१।२५ ) । बाधदेशनाभासः प्रतिरोधदेशनाभासो वायम् इति ज्ञेयम् ( गौ० वृ० ५।१।२५ ) । [ ख ] व्याप्तिमपुरस्कृत्य यत्किंचिद्धर्मेण परपक्षदृष्टान्तेन स्वपक्षसाधनेन प्रत्यवस्थानम् । यथा शब्दः अनित्यः कृतकत्वादित्युक्ते यथा त्वत्पक्षे अनित्यत्वे प्रमाणमस्ति तथा मत्पक्षोपि सप्रमाणकः त्वत्पक्षमत्पक्षान्यतरत्वात् त्वत्पक्षवत् । तथा च बाधः प्रतिरोधो वा ( गौ० वृ० ५।१।२५ ) । [ ग ] उभयपक्षसाधर्म्येण साधनोपपत्तिकथनम् । यथा यदि चानित्यत्वसाधनं कार्यत्वमुपपद्यत इति शब्दस्यानित्यत्वं तदा नित्यत्वसाधनमपि किंचिदुपपद्यत इति नित्यत्वं किं न स्यादिति ( नील० पृ० ४४ ) ।

**उपपदम्**—१ समीपोच्चारितः पूर्वमुच्चार्यः शब्दः । यथा तस्याः स राजोपपदं निशान्तम् ( रघु० स० १६ श्लो० ४० ) । फलन्ति कल्पोपपदास्तदेव ( माघ० स० ३ श्लो० ५९ ) इत्यादौ । २ नामोत्तरमुच्चारितः शर्मवर्मादिशब्दः । ३ शाब्दिकास्तु सप्तम्यन्तेन निर्दिश्यमानं पदम् । यथा कर्मण्यण् ( पा० सू० ३।२।१ ) इत्यादौ कर्मणि इति सप्तम्यन्तेन निर्दिश्यमानं कुम्भकार इत्यादौ कुम्भादिकं पदं अणूप्रत्ययविधाने उपपदम् इत्याहुः ( वाच० ) ।

**उपपदसमासः**—( यौगिकं नाम ) धातुकृद्भ्यां निष्पन्नं यस्योत्तरपदं शब्दान्तरानुत्तरं सद्यादृशार्थस्य बोधं प्रत्यसमर्थं तादृशार्थकान्यपदकः समासः स उपपदसंज्ञकः । यथा कुम्भकारः क्षीरपायीत्यादावुपपदसमासः । अत्रोत्तरपदशब्दः समासचरमावयवे रूढ इत्यनुसंधेयम् । अत्र तु समासे धातुकृद्भ्यां निष्पन्नं कर्त्राद्यर्थकं कारादिपदम् पदान्तरानुत्तरं सन्न कर्त्रादेरन्वयबोधक्षममिति लक्षणसमन्वयो बोध्यः ( श० प्र० पृ० ६६ ) । एवं क्षीरपायीत्यादावप्यूह्यम् । उपपदसमासश्च उपपदमतिङ् ( पा० सू० २।२।१९ ) इत्यनेन भवतीति ज्ञेयम् । उपपदसमासश्च

कर्मकर्त्राद्युपपदभेदाद्बहुविध एव । वैयाकरणास्तु कारकमात्रोपपदकत्वात् षड्विध एवेत्याहुः । अत्रेदमवधेयम् । ब्रह्मभूयमित्यादौ कारकभिन्नेनाप्युपपदेन समास इति न षड्विधत्वमात्रं तस्य किंत्वसावुपपदसमासोनेकविध एवेति । असूर्यंपश्या इत्यत्राप्युपपदसमास एव (श० प्र० पृ० ६७)।

**उपभोगः**—विषयसेवनजन्यसुखविशेषः । यथा स्त्रीणां स्वपतिदायस्तु उपभोगफलः स्मृतः ( महाभा० दान० वीरमित्रो० अ० २ पृ० ६२८ ) इत्यादावुपभोगः ।

**उपमर्दः**—१ [ क ] एकरूपनिवृत्तौ रूपान्तरोपजनः ( वात्स्या० २।२।५६ ) । [ ख ] धर्मिनिवृत्तौ धर्म्यन्तरप्रयोगः । यथा अस्तेर्भूः ( गौ० वृ० २।२।५६ ) । तथाहि व्याकरणशास्त्रे आर्धधातुकप्रत्ययविवक्षायामसूधातोर्भू इत्यादेशे ( पा० सू० २।४।५२ ) बभूवेत्यादि रूपं सिध्यतीति विज्ञेयम् । यथा वा ब्रूञो वचिः स्था इत्यस्य तिष्ठ इत्यादेशः ( वाच० )। २ नाश इति मायावादिनः । ३ निष्पीडनमिति काव्यज्ञा वदन्ति ।

**उपमा**—१ उपमानजन्यं शब्दशक्तिज्ञानम् । यथा गवयादिपदानां तु शक्तिधीरुपमा फलम् ( भाषा० ३ श्लो० ८१ ) इत्यादौ सादृश्यज्ञानजन्या गवयो गवयपदवाच्यः इत्युपमितिः । २ गवादिसादृश्यज्ञानम् उपमानमिति मायावादिनः । ३ अर्थालंकारविशेष इत्यालंकारिकाः । ४ सादृश्यम् । यथा स्फुटोपमं भूतिसितेन शंभुना ( माघः स० १ श्लो० ४ ) इत्यादौ इति काव्यज्ञा वदन्ति ।

**उपमानम्**—१ ( प्रमाणम् ) [ क ] प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम् । तदर्थश्च प्रसिद्धस्य पूर्वप्रमितस्य गवादेः साधर्म्यात्सादृश्यात् तज्ज्ञानात् साध्यस्य गवयादिपदवाच्यत्वस्य साधनं सिद्धिरुपमानमुपमितिः । यत इत्यध्याहारेण च करणलक्षणम् । अथवा साध्यसाधनमिति करणल्युटा करणलक्षणमेवेदम् ( गौ० वृ० १।१।६ ) । प्रज्ञातेन सामान्यात्प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति । यथा गौरेवं गवय इति । अत्र उपमीयतेनेनेति करणे ल्युट् ( ल० म० ) । उपमानस्य प्रमाणान्तरत्वमित्थम् । उपमितेः प्रत्यक्षादिप्रमितिभ्योतिरिक्तत्वात् विलक्ष-

णोपमितिकरणत्वेनोपमानमपि प्रमाणान्तरम् इति (म० प्र० ३ पृ० ३५)। लक्षणं तु उपमितिकरणत्वम् (चि० ३ पृ० १७)। शाब्दिकास्तु साधारणधर्मवत्त्वेनेषदितरपरिच्छेदकत्वम् इत्याहुः (ल० म०)। किं पुनरत्रोपमानेन क्रियते। यदा खल्वयं गवा समानधर्मं प्रतिपद्यते तदा प्रत्यक्षतस्तमर्थं प्रतिपद्यत इति। समाख्यासंबन्धप्रतिपत्तिरुपमानार्थं इत्याह। यथा गौरेवं गवय इत्युपमाने प्रयुक्ते गवा समानधर्ममर्थमिन्द्रियार्थसंनिकर्षादुपलभमानोस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसंबन्धं प्रतिपद्यत इति। यथा मुद्गस्तथा मुद्गपर्णी यथा माषस्तथा माषपर्णीत्युपमाने प्रयुक्त उपमानात्संज्ञासंज्ञिसंबन्धं प्रतिपद्यमानस्तामोषधीं भैषज्यायाहरति (वात्स्या० १।१।३)। [ख] सप्रतियोगिकपदार्थज्ञानेन तत्प्रतियोगिकपदार्थज्ञानम् (वि० ३ पृ० ८)। [ग] उपमितिकरणम्। तच्च सादृश्यज्ञानम्। यथा गोसदृशो गवयः इति ज्ञानमुपमानं भवति (त० सं० ३) (न्या० म० ३ पृ० २४)। अत्रेदं बोध्यम्। उपमितिकरणमुपमानमित्यत्रोपमानमित्यस्योपमानपदवाच्यमित्यर्थः। तथा चोपमानपदवाच्यमुपमितिकरणमिति वाक्यार्थः। यथाश्रुत उपमानशब्दस्य करणव्युत्पत्त्योपमितिकरणार्थकत्वेनानन्वयापातात्। दण्डवान् दण्डवानित्यत्रोद्देश्यतावच्छेदकविधेययोरैक्येऽनन्वयस्य सर्वसंमतत्वादिति (म० प्र० ३ पृ० ३४)। सादृश्यज्ञानमित्यस्य सादृश्यप्रकारकं ज्ञानमित्यर्थः (सि० च० ३ पृ० २९)। अत्र भाष्यम् उपमानं सारूप्यज्ञानम्। यथा गौरेवं गवय इति। सारूप्यं तु सामान्ययोगः (वात्स्या० १।१।३)। उपमानस्योपमितिकरणत्वं चेत्थम्। कश्चिद्गवयशब्दवाच्यमजानन्कुतश्चिदारण्यकपुरुषात् गोसदृशो गवयः इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन्गोसदृशं पिण्डं पश्यति। तदनन्तरं अयं गवयपदवाच्यः पिण्डः इति संज्ञासंज्ञिसंबन्धप्रतीतिरुपमितिरुत्पद्यते। सैव फलम् इति (त० सं०) (त० भा० पृ० १७) (सि० च० ३ पृ० ३०)। यद्वा अतिदेशवाक्यार्थज्ञानमुपमितिकरणम् (न्या० बो०)। अतिदेशवाक्यार्थस्य ज्ञानं (अनुभवः) करणम्। अतिदेशवाक्यार्थस्मरणं

व्यापारः । उपमितिः फलम् इति । प्राचीननैयायिकमतमेतत् । अथवा अतिदेशवाक्यार्थस्मरणसहकृतं सादृश्यविशिष्टज्ञानमुपमितिकरणम् । यथा गोसादृश्यविशिष्टपिण्डज्ञानम् ( त० भा० ३ पृ० १७ ) ( सि० च० ३ पृ० ३० ) । आगमस्मृतिसहितं सादृश्यज्ञानमुपमानमिति जरन्नैयायिका जयन्तप्रभृतयः ( चि० ३ पृ० १० ) । [ घ ] सादृश्यप्रमाकरणमिति मायावादिनः ( वेदान्तपरि० ) ( चि० ३ पृ० १ ) । [ ङ ] आगमाहितसंस्कारस्मृत्यपेक्षं सारूप्यज्ञानमुपमानम् ( न्या० वा० १ पृ० १६ ) । [ च ] अव्युत्पन्नपदोपेतवाक्यार्थस्य हि संस्मृतिनि । प्रत्यक्षप्रत्यभिज्ञानमुपमानमिहोच्यते ॥ इति ( ता० र० श्लो० २२ ) । वैशेषिकाः सांख्याश्च पदवाच्यत्वव्याप्यसादृश्यादिपरामर्शोत्पदवाच्यत्वस्यानुमितिरेव । अतो नोपमानं प्रमाणान्तरमित्याहुः ( सां० कौ० ) । तच्चिन्त्यम् । व्याप्तिज्ञानमन्तरेणापि पदवाच्यत्वप्रमितेः शब्दादितोनुभवसिद्धत्वात् ( नील० ३ पृ० २७ ) ( न्या० म० ३।२४ ) ( चि० ३ ) ( भा० प० श्लो० १४२ ) । अनुमिनोमि इत्यनुव्यवसायविषयीभूता अनुमितिर्यथा प्रमित्यन्तरं तथा उपमिनोमि इति विलक्षणानुव्यवसायविषयीभूतोपमितिरपि प्रमित्यन्तरम् इति तत्करणत्वेनोपमानं प्रमाणान्तरमिति नैयायिकाः प्राहुः (राम० ३ पृ० १७३)। वयं तु ब्रूमः । अयं गवयपदवाच्यः इत्याद्युपमितेः गवयादिशब्दवाच्यस्य गवयत्वविशिष्टपिण्डस्येव गवयादिशब्दस्यापि विषयत्वेन सकलप्रमितिवैलक्षण्येनोपमितेः सर्वैरप्यभ्युपगन्तव्यतया तत्करणत्वेनोपमानस्य प्रमाणान्तरत्वमावश्यकम् इति । उपमानं त्रिविधम् । सादृश्यविशिष्टपिण्डज्ञानम् असाधारणधर्मविशिष्टपिण्डज्ञानम् वैधर्म्यविशिष्टपिण्डज्ञानं चेति । तत्राद्यम् गोसादृश्यविशिष्टपिण्डज्ञानम् । द्वितीयम् खड्गमृगज्ञानम् । तृतीयम् उष्ट्रज्ञानम् ( सि० च० ३ पृ० ३० ) । खड्गमृगे असाधारणधर्मश्च नासिकालसदेकशृङ्गत्वम् इति ज्ञेयम् । उष्ट्रे वैधर्म्यं तून्नतपृष्ठदीर्घग्रीवादि ऊह्यम् । प्रकारान्तरेणोपमानं त्रिविधम् । साधर्म्योपमानम् वैधर्म्योपमानम् धर्ममात्रोपमानं चेति ( म० प्र० ३ पृ० ३४ ) । तत्राद्यम् गोसदृशपिण्डानुभवः । द्वितीयम् इयं ( पृथिवी ) जलादि-

विधर्मगुणवती इत्यनुभवः । तृतीयम् गन्धवती पृथिवी इत्यनुभवः इति। ( न्या० म० पृ० २४—२५ ) ( म० प्र० ३ पृ० ३५ ) ( दिन० ३ पृ० १७२ ) । अत्र अयं ( गवयः ) गवयपदवाच्यः इति इयं ( पृथिवी ) पृथिवीपदवाच्या इति इयं पृथिवीपदवाच्या इति च क्रमेणोपमितय उत्पद्यन्ते इति विज्ञेयम् ( न्या० म० ३ पृ० २४—२५ ) ( म० प्र० ३ पृ० ३५ ) ( दि० ३ पृ० १७२ ) । एवम् कीदृक् करभपदवाच्यः लम्बग्रीवः प्रलम्बोष्ठः कठोरकण्टकाशी इति प्रश्नोत्तरेपि धर्ममात्रोपमानं ज्ञेयम् ( म० प्र० ३ पृ० ३५ ) । २ उपमितिः । ३ आलंकारिकास्तु सादृश्यप्रतियोगि उपमानम् । यथा चन्द्र इव मुखमित्यादौ चन्द्र उपमानम् इत्याहुः ।

**उपमितिः**—( अनुभवः ) [ क ] नियतधर्मसमानाधिकरणप्रवृत्तिनिमित्तज्ञानम् । प्रवृत्तिनिमित्तत्वं च प्रकारतया शक्तिग्रहविषयत्वम् । [ ख ] अगृहीतसमयसंज्ञाया वाक्यार्थसामानाधिकरण्येन संज्ञानिमित्तपरिच्छेदः । [ ग ] किंचिद्वाक्यार्थसामानाधिकरण्येन संज्ञानिमित्तपरिच्छेदः । यथा गवयत्वविशिष्टो धर्मी गवयशब्दवाच्यः इति प्रवृत्तिनिमित्तविशेषपरिच्छित्तिरुपमितिः ( चि० ३ पृ० १५—१७ ) । [ घ ] लिङ्गत्वादिलक्षणातिदेशवाक्यार्थज्ञानजन्यज्ञानम् ( दीधि० ) । [ ङ ] सादृश्यज्ञानकरणकं ज्ञानम् ( मु० १ पृ० १११ ) ( न्या० म० ३ पृ० २४ ) ( त० प्र० ) ( त० सं० ) । तच्च ( उपमित्यात्मकं ज्ञानम् ) संज्ञासंज्ञिसंबन्धज्ञानम् ( त० सं० ) ( न्या० बो० ३ पृ० १९ ) । यथा अयं गवयपदवाच्यः इति ज्ञानम् उपमितिरिति प्राहुः ( त० सं० ३ )। शब्दशक्तिग्रहविशेष इत्यर्थः ( भा० प० ३ श्लो० ८१ ) । तथाहि संज्ञा पदम् । संज्ञी पदार्थः । तयोः संबन्धः शक्तिः । तज्ज्ञानमित्यर्थः ( न्या० बो० ३ पृ० १९ ) ( नील० ३ पृ० २७ ) । तयोः संबन्धो वाच्यवाचकभावः ( वाक्य० ३ पृ० १८ ) । अत्रेदं बोध्यम् । अयं गवयपदवाच्यः इत्याकारिकायामुपमितौ गवयत्वावच्छेदेन गवयपदवाच्यत्वमवगाहते न तु गोसादृश्यावच्छेदेन । तस्य गौरवेणानवच्छेदक-

स्यात् इति (न्या० म० ३ पृ० २५) । गवयो गवयपदवाच्यः इत्याकारिका उपमितिरिति नवीननैयायिकाः प्राहुः (मु० ३ पृ० १७१)। [ च ] शक्तिपरिच्छित्तिः (त० प्र० ख०-४ पृ० १) । यथा गवयो गवयपदवाच्यः इति । उपमितित्वं च उपमिनोमीत्यनुभवसिद्धो जाति-विशेषः । अथवा शब्दविषयकत्वाव्यभिचारिजातिमत्परोक्षत्वम् (न्या० म० ३ पृ० २४) (नील० ३ पृ० २७) । अत्र अनुमित्यादिवारणाय जातिमदन्तम् । श्रवणवारणाय परोक्षपदम् प्रत्यक्षान्यपरम् (न्या० म० ३ पृ० ४) । यद्वा सादृश्यविशिष्टे पदवाच्यत्वप्रकारकस्मृतित्वावच्छि-न्नकारणतानिरूपितकार्यत्वम् (वाक्य० ३ पृ० १८) । अत्रेदं बोध्यम् । उपमितिर्हि पदवाच्यत्वविषयिका । पदं च शब्दात्मकम् इत्युपमितेः शब्द-विषयकत्वनियम इति (न्या० म० ३ पृ० २४) । सा च प्रत्यक्षादि-भ्योतिरिक्तैव । इयं प्रमितिः प्रत्यक्षादिप्रमितिभ्यो भिद्यते तद्विरुद्धधर्मत्वा-दित्यनुमानस्य प्रमाणत्वात् । उपमिनोमीति विलक्षणप्रमितित्वाच्चोपमितिरति-रिक्तेति सिध्यति (त० प्र० ३) । कणादमते गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेनैवात्रापि निर्वाहः । उक्तानुमाने च पक्षधर्मताबलाद्ग-वयत्वप्रवृत्तिनिमित्तकत्वं पर्यवस्यतीत्यनुसंधेयम् (त० व० पृ० ९८) । उपमितेरुत्पत्तिप्रकारस्त्वित्थम् । गवयशब्दार्थमजानन् कश्चिन्नागरिकः कंचिद्वनेचरं कीदृशो गवयपदवाच्यः इति पृच्छति । ततस्तेन गोसदृशो गवयपदवाच्यः इत्युत्तरितः स कदाचिद्वनं गतो गोसदृशं पिण्डं पश्यन् प्रागुक्तातिदेशवाक्यार्थं स्मृत्वा असौ गवयपदवाच्यः इति प्रतिपद्यते । सा उपमितिः (त० कौ० ३ पृ० १६) (न्या० म० ३ पृ० २४) (त० भा० पृ० १७) । अत्रेदमवधेयम् । अतिदेशवाक्यार्थज्ञानं शाब्दबोधरूपं करणम् । अतिदेशवाक्यार्थस्मृतिर्व्यापारः । सादृश्य-विशिष्टपिण्डदर्शनं सहकारि । उपमितिः फलम् । इति प्राचीननैयायिक-मतम् । सादृश्यप्रत्यक्षं करणम् । अतिदेशवाक्यार्थस्मृतिः व्यापारः । अत्र सादृश्यविशिष्टपिण्डदर्शनस्योद्बोधकविधया तादृशवाक्यार्थस्मारकत्वात् । उपमितिः फलम् । इति नवीननैयायिकमतम् (न्या० म० ३ पृ० २५)

( त० प्र० १ ) ( दि० ३।१७०–१७१ ) ( म० प्र० ३।३४ ) ( न्या० बो० ३ पृ० १९ ) । अत्रातिदेशवाक्यार्थस्त्रिविधः प्रतिगृह्यते। साधर्म्यं धर्ममात्रं च वैधर्म्यं चेति भेदतः॥ इति ( ता० र० श्लो० २१ )।

**उपमेयत्वम्**—सादृश्यानुयोगित्वम् । यथा चन्द्रवन्मुखमित्यादौ मुखस्योपमेयत्वम् । शाब्दिकास्तु साधारणधर्मवत्तया परिच्छेद्यत्वमुपमेयत्वम् इत्याहुः ( ल० म० ) ।

**उपयोगः**—१ [ क ] इष्टसाधनत्वम् । यथा यागः स्वर्गोपयोगीत्यादौ यागस्य स्वर्गात्मकेष्टसाधनत्वम् । [ ख ] आनुकूल्यम् । यथा अथवा कार्यनिर्वृत्तेरुपयोगो यथाक्रमम् ( सुश्रु० ) इत्यादौ । यथा वा अनङ्गलेखक्रिययोपयोगम् ( कुमार० स० १ श्लो० ७ ) इत्यादौ ( वाच० )। २ सहजचिद्रूपपरिणतिं स्वीकुर्वाणे ज्ञानदर्शने उपयोगः ( सर्व० सं० पृ० ६७ आर्ह० ) । ३ विवक्षितार्थपरिच्छित्तिलक्षणोर्थग्रहणव्यापार उपयोग इति बृहद्द्रव्यसंग्रहे ।

**उपरवः**—ज्योतिष्टोमे हविर्धानमण्डपे सोमाभिषवाधारयोः फलकयोरधस्तादवस्थिताश्चत्वारो गर्ता अरत्निमात्रखाता अधोभागे परस्परं मिलिता ऊर्ध्वभागे परस्परं प्रादेशमात्रव्यवहिता उपरवनामकाः ( जै० न्या० अ० ३ पा० ८ अधि० १६ ) ।

**उपलक्षणम्**—( व्यावर्तकम् प्रकारो वा ) [ क ] प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकान्यत् व्यावर्तकम् । प्रत्याय्यव्यावृत्तिकारणतावच्छेदकान्यत् इति पाठान्तरम् । अत्र विशेषः । उपलक्षणं स्वानधिकरणेपि व्यावृत्तिं बोधयति इति ( चि० १ पृ० ३४ ) । अत्रेदं बोध्यम् । उपलक्षणस्य शाब्दबोधे भानं नास्तीति सिद्धान्तः । अत्रोपलक्षणत्वं च तत्पदजन्यबोधविषयत्वेन शक्त्यविषयत्वम् ( दि० ४ पृ० १७९ ) । भगवदिच्छायां बोधविषयत्वेनाभासमानत्वे सति भासमानविषयांशे प्रकारत्वमिति मिश्राः । शाब्दिकास्तु तत्पदजन्यबोधविषयत्वेन शक्त्यविषयत्वे सति शक्तिविषयत्वम् । यथा धातूनां व्यापारमात्रवाचकत्ववादिनां प्राचीननैयायिकानां मते फलस्योपलक्षणत्वम् इत्याहुः ( वै० सा० द० ) ।

विषयित्वाविशेषणतया विषयविशेषणतया पदजन्यतावच्छेदकनिष्ठत्वमिति गुरवः (कृष्ण० श० २०)। [ख] विवक्षितान्वयप्रतियोगितानवच्छेदकं व्यवच्छेदकम् । यथा काकेन देवदत्तगृहमित्यादौ काको न गृहस्य देवदत्तान्वयप्रतियोगितावच्छेदकः । अत्रायं भावः । प्रयोगकाले गृहे काकासत्त्वेपि यदाकदाचित्काकसमवधानेपि पूर्वोपस्थितकाकस्मरणेन देवदत्तगृहं विज्ञायत इति काकस्योपलक्षणत्वमिति बोध्यम् । [ग] यदन्विततया ज्ञात एव विशेष्ये तात्पर्यविषयीभूतेतरान्वयधीस्तदनवच्छेदकं यत् तद्भिन्नम् (चि० १ पृ० ३४)। [घ] अविद्यमानं सत् व्यावर्तकम् । यथा जटाभिस्तापस इत्यादौ तापसादेः कालान्तरीणजटादिकम् (ग० व्यु० का० ३ पृ० ९१)। यथा वा यदा तु देवदत्तगृह उपरि भ्रमन्नसन् काकः तदोपलक्षणम् (वै० उ० ७।२।८)। जटाभिरित्यत्राविद्यमानजटादेः संबन्धविवक्षया मतुबाद्यनवकाशात् इत्थंभूतलक्षणे (पा० सू० २।३।२१) इत्यनेन तृतीया ज्ञेया। अयमाशयः। विशेषणस्य संबन्धो मतुबादिभिः प्रत्याय्यते। अस्ति इत्यर्थे तदस्यास्त्यस्मिन्निति मतुप् (पा० सू० ५।२।९४) इत्यनेन विहितानां वर्तमानसंबन्धार्थकत्वात् । अतो जटाभिस्तापस इत्यादावविद्यमानजटादेः संबन्धविवक्षया मतुबाद्यनवकाशात् तृतीया । अत्रायं विशेषः । क्वचित् विद्यमानमपि अतद्व्यावृत्ति–( तद्भिन्नव्यावृत्ति–)न्यूनाधिकवृत्तितया न तत्र विशेषणमित्युच्यते किंतूपलक्षणम् । यथा विद्यमानापि जटा तापसे उपलक्षणम् । न तूपलक्ष्यतावच्छेदकशमदमादिवद्विशेषणम् (ग० व्यु० का० ३ पृ० ९२)। [ङ] सदसद्वा समानाधिकरणं व्यावर्तकं विशेषणम् व्यधिकरणमुपलक्षणमित्युदयनाचार्याः (चि० १ पृ० ३४)। [च] क्वचित् विधेयान्तरसमानकालीनमपि विशेषणं तदनन्वयितया तदन्वयिन्युपलक्षणमित्युच्यते। यथा रूपवान् रसवानित्यादौ रूपादिकं रसान्वयिनि। सास्नावान्गोपदवाच्य इत्यादौ सास्नादिकं गवादिपदवाच्ये। क्वचित् धर्मिसंबद्धधर्मान्तरसंबन्धितानवच्छेदकतया धर्मान्तरसंबन्धिन्युपलक्षणम्। अतः दण्डपुरुषौ इत्यादिसमूहालम्बनबोधो दण्डाद्युपलक्षित-

पुरुषादिविषयकः न तु विशिष्टविषयक इत्युच्यते ( ग० व्यु० का० ३ पृ० ९२ ) । २ अजहत्स्वार्थलक्षणया अन्यग्राहकम् ( म० प्र० ३ पृ० ३५ ) । यथा अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् ( चि० २ ) इत्यत्रानुमितिपदं परामर्शस्यापि ग्राहकम् ( दीधि० सामा० ) ( ग० २ सामा० पृ० २ ) । यथा वा साधर्म्योपमानं वैधर्म्याद्युपस्थापकम् ( म० प्र० ३।३५ ) । यथा वा काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदं दध्युपघातकत्वेन रूपेण काकाकाकोभयबोधकम् ( वाच० ) । अत्र उपलक्ष्यते स्वं स्वेतरच्चानेन इति व्युत्पत्तिः । करणे ल्युट् । लक्षणं तु लक्ष्यतावच्छेदकरूपेण स्वस्वेतरबोधकपदत्वम् ( वाच० ) ।

उपलब्धिः—१ बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ( गौ० १।१।१५ ) । २ ज्ञानेन पुरुषस्य यः अतात्त्विकः संबन्धः स इति सांख्याः ( मु० १।२ आत्म० ) । अयं भावः । स्वच्छायां बुद्धौ वर्तमानेन ज्ञानेन चैतन्यस्य पुरुषस्य भेदाग्रहात् अहं जानामि इति योभिमानविशेषः सैवोपलब्धिः इति ( वै० उ० ८।१।१ ) । चेतनोहं करोमि इत्याकारेण बुद्ध्यारोपितस्य पुरुषस्य ज्ञानेन सह इदं ज्ञानम् इति प्रतीयमानोतात्त्विकसंबन्धो यः स उपलब्धिः इति ( दि० १।२ ) ( राम० १।२ पृ० १०५ ) । ३ प्राप्तिरिति काव्यज्ञा वदन्ति ।

उपलब्धिसमः—( जातिः ) [ क ] निर्दिष्टकारणाभावेप्युपलम्भादुपलब्धिसमः ( गौ० ५।१।२७ ) । प्रतिकूलतर्कदेशनाभासः बाधदेशनाभासश्चायम् ( गौ० वृ० ५।१।२७ ) । निर्दिष्टप्रयत्नानन्तरीयकत्वस्यानित्यत्वकारणस्याभावेपि वायुनोदनाद्वृक्षशाखाभङ्गजस्य शब्दस्यानित्यत्वमुपलभ्यते । निर्दिष्टस्य साधनस्याभावेपि साध्यधर्मोपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः ( वात्स्या० ५।१।२७ ) । [ ख ] वादिना निर्दिष्टस्य कारणस्य साधनस्याभावेपि साध्यस्योपलम्भात्प्रत्यवस्थानम् । तथा हि पर्वतो वह्निमान्धूमादित्यादिकं वह्न्यवधारणार्थमुच्यते । न च तत्संभवति । धूमं विना आलोकादितोपि वह्निसिद्धेः । तथा च न तस्य साधकत्वमिति

प्रतिकूलतर्कः । न वा धूमाद्वह्निमानेवेत्यवधारणम् । द्रव्यत्वादेरपि धूमेन साधनात् । न वा पर्वत एव वह्निमानित्यादिकमवधारयितुं शक्यते । महानसादेरपि वह्निमत्त्वात् । अन्यथा दृष्टान्तासिद्धिः स्यात् । एवं वह्निशून्यपर्वतस्यापि सत्त्वाद्बाध इत्यादि ( गौ० वृ० ५।१।२७ ) । [ ग ] वाद्युपदर्शितसाधनाभावेपि साध्यस्योपलब्धिकथनम् । यथा शब्दः अनित्यः प्रयत्नानुविधायित्वाद्घटवदित्यत्र प्रयत्नं विनापि वायुनोदनवशाद्वृक्षशाखाभङ्गजन्यस्य शब्दस्योपलब्धेर्न प्रयत्नानुविधायित्वं शब्देस्तीति ( नील० पृ० ४४ ) । [ घ ] अवधारणतात्पर्यं वादिवाक्ये विकल्पयत् । तद्बाधात्प्रत्यवस्थानमुपलब्धिसमो मतः ॥ इति ( ता० र० प० २ श्लो० १२३ ) ।

**उपवासः**—उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्वभोगविवर्जितः ॥ ( पु० चि० पृ० १९८ ) ।

**उपवासविधिः**—उपवासे सप्तमी तु वेधाद्धन्त्युत्तरं दिनम् । पक्षयोरुभयोरेष उपवासविधिः स्मृतः ॥ ( पु० चि० पृ० १०७ ) ।

**उपवेषः**—येयं पलाशशाखा छित्वा वृक्षादाहृता तां पुनश्छित्वा मूलभागः प्रादेशपरिमित उपवेषः ( जै० न्या० अ० ४ पा० २ अधि० ३ ) ।

**उपष्टम्भः**—१ आलम्बनम् ( वाच० ) । २ संयोगविशेषो वा । यथा जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भादुपभोगक्षमत्वम् ( मु० १ पृ० ८४ ) इत्यादौ । यथा वा सुवर्णस्य उष्णस्पर्शभास्वररूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धादनुपलब्धिरित्यादावुपष्टम्भः ( त० दी० १ पृ० ९ ) । ३ पतनप्रतिरोध इति काव्यज्ञा वदन्ति ( वाच० ) ।

**उपसंख्यानम्**—तत्रानुक्तार्थस्य ग्रन्थान्तरेण कथनम् । यथा व्याकरणशास्त्रे अक्षाद्रूहिन्यामुपसंख्यानम् प्रकृत्यादिभ्य उपसंख्यानम् ( वार्ति० ) इत्यादौ ।

**उपसंहारः**—१ सहचारः ( दीधि० २ ) । यथा अनुपसंहारी हेतुरित्यत्र साध्यहेत्वोरुपसंहारस्याभावः । २ उपन्यासः ( गौ० वृ० १।१।३८ ) ।

यथा उपनयलक्षणे उदाहरणापेक्षस्तथेत्युपसंहारः ( गौ० १।१।३८ ) इत्यत्रोपसंहारः । ३ निश्चयः ( दीधि० २ ) । ४ विस्तरेण निरूपितस्य पदार्थस्य सारांशकथनेन तन्निरूपणसमापनम् । यथा तदेतत्त्रिविधकारण-मध्ये यदसाधारणं कारणं तदेव करणम् ( त० सं० ) इति करण-लक्षणस्योपसंहारः ( त० दी० १ पृ० १७ ) । ५ ग्रन्थतात्पर्यावधा-रकलिङ्गविशेषः । यथा उपक्रमोपसंहारौ····हेतुस्तात्पर्यनिर्णये इत्यादौ । ६ एकत्र श्रुतार्थस्यान्यत्रान्वयार्थमुपक्षेपः । यथा गुणोपसंहार इत्यादौ । ७ साकल्येन संबन्धः । यथा सर्वोपसंहारवत्या व्याप्तेर्दुर्ज्ञानत्वात् इत्यादौ ( वाच० ) । ८ मीमांसकास्तु सामान्यप्राप्तस्य विशेषे नियमनम् इत्याहुः ( लौ० भा० टी० पृ० २३ ) ।

**उपसदः**—दीक्षादिवसादूर्ध्वं सोमाभिषवदिवसात्पूर्वं कर्तव्याः होमाः ( जै० न्या० अ० ३ पा० ३ अधि० १३ ) ।

**उपसर्गः**—१ [ क ] जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राथन्यतमः । यथा प्रहरति विहरतीत्यादौ प्रादिरुपसर्गः । प्रादय उपसर्गा द्वाविंशतिधा प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप । [ ख ] उपसर्गाः क्रियायोगे ( पा० सू० १।४।५९ ) इति शाब्दिकाः । उपसर्गस्य त्रिधा प्रवृत्तिः धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते । तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा ॥ इति । क्रमेणोदाहरणानि यथा आदत्ते प्रसूते प्रणमति इत्यादीनि ( वाच० ) । प्रादयो द्योतका इति नैयायिका वैयाकरणाश्चाहुः । अत्र द्योतकत्वं च तात्पर्यग्राहकत्वम् ( वै० सा० ) । अत्रेयं व्यवस्था । उपसर्गाणां मध्ये यत्र यस्योपसर्गस्य किंचिदर्थे शक्तिर्न प्रामाणिकी तस्य तत्र द्योतकत्वमेव । यथा प्रसूते इत्यादौ । यस्य च शक्तिः प्रामाणिकी तस्य वाचकत्वमेव । यथा उपकुम्भम् इत्यादौ । अन्यथा तत्राव्ययीभावसमासानुपपत्तेः । तस्य निरर्थकत्वेन निराकाङ्क्षत्वात् । पूर्वं वाच्यं भवेद्यस्य सोऽव्ययीभाव इष्यते इत्यनुशासनात् । अन्ये तु प्रादेश्च निरर्थकत्वेपि साधुत्वमिह नामेष्टम् इत्यनुशासनेन साधुत्वेन तस्यापि

नामत्वात् नाम्नामेव समासविधानाच्चादेः समास उपपद्यते ( स० प्र० ख० ४ पृ० ७० ) इत्याहुः । वैयाकरणास्तु सर्वेषां द्योतकत्वमेवाहुः । २ उत्पात इति काव्यज्ञाः ।

**उपसर्जनम्**—१ गौणम् । २ अप्रधानम् । यथा धनवान्देवदत्त इत्यादौ विशेषणीभूतं धनमुपसर्जनम् । अत्रोपसर्जनत्वं च वृत्तिजन्यबोधीयप्रकारताश्रयत्वम् । वृत्तिशब्देनात्र वैयाकरणसंमताः कृत्तद्धितसमासैकशेषसनाद्यन्ताः पञ्च वृत्तयो गृह्यन्ते । ३ शाब्दिकास्तु विग्रहवाक्ये यन्नियतविभक्तिकं तदुपसर्जनसंज्ञम् स्वार्थविशिष्टार्थान्तरबोधकमुपसर्जनम् इति च वदन्ति ।

**उपस्थितिः**—१ बुद्धिवदस्यार्थोनुसंधेयः । २ स्मृतिरित्याधुनिका वदन्ति ।

**उपहारः**—नियमः । स च षडङ्गः । तदुक्तं सूत्रकारेण हसितगीतनृत्यहुडुक्कारनमस्कारजप्यषडङ्गोपहारेणोपतिष्ठेतेति ( सर्व० सं० पृ० १६९ नकुली० ) ।

**उपहितत्वम्**—१ उपधायकत्ववदस्यार्थोनुसंधेयः । २ मायावादिनस्तु उपाधिसंगतत्वम् । उपाध्युपलक्षितत्वं वोपहितत्वम् । यथा अन्तःकरणोपहितं चैतन्यं जीवः अज्ञानोपहितं चैतन्यमीश्वरः इत्यादावित्याहुः ( वाच० ) ।

**उपहितिः**—अङ्गारेषु कपालस्थापनम् ( जै० न्या० मा० १०।१ अधि० ११ ) ।

**उपाकरणम्**—स्तोत्रं प्रति प्रेरणम् । यथा उपावर्तध्वमिति मन्त्रबर्हिर्भ्यां स्तोत्रमुपाकरोति ( जै० न्या० मा० १०।४ अधि० २ ) ।

**उपादानत्वम्**—( कारणत्वम् ) मायावादिमते [ १ ] जगदध्यासाधिष्ठानत्वम् । यथा ब्रह्मणो जगदुपादानत्वम् । [ २ ] जगदाकारेण परिणामित्वम् । यथा मायाया जगदुपादानत्वम् ( वे० प० पृ० ६५ ) ।

**उपादानम्**—१ समवायिकारणम् । यथा उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ( भा० प० श्लो० १५३ ) इत्यादौ इति प्राचीननैयायिकाः । २ अधिष्ठानमात्रम् । यथा यागादेर्हविः शब्दस्य मूर्धन्यादिः प्राणसंचारादेश्च प्राणवहनाड्यादिरुपादानमिति नवीननैयायिकाः ( दि०

पृ० २३१ )। ३ स्वेष्टसाधनताप्रकारकं ज्ञानम् (प० च० )। सुखसाधनत्वज्ञानं चोपादानम् । यथा स्रक्चन्दनवनितादिकं मत्सुखसाधनम् इति ज्ञानम् ( सि० च० १ पृ० २ )। ४ आध्यात्मिकतुष्टिविशेष इति सांख्याः ( वाच० ) । ५ विज्ञानवादिनो बौद्धास्तु असहकृतं कारणमुपादानम् । यथा उत्तरोत्तरविज्ञानव्यक्तौ पूर्वपूर्वविज्ञानव्यक्तिरुपादानम् इति वदन्ति ( राम० आत्म० पृ० १०० )। ६ अनुसंधीयमानशब्दसहकृतानुपपत्तिज्ञानम् ( ग० नियोज्यान्वयग्रन्थे )। प्राभाकरास्तु अनुपपत्तिज्ञानम्। यथा औपादानिको बोधः इत्यादौ उपादानशब्दस्यार्थः इत्याहुः ( त० प्र० ख० ४ पृ० ११२ ) । अत्रायमर्थः । अपूर्वे कृतिसाध्यत्वं यागे कृतिसाध्यत्वं विनानुपपन्नम् इत्यनुपपत्तिज्ञानसहकारेण स्वर्गसाधनं स्वर्गकामनियोज्यको यागः स्वर्गकामकृतिसाध्यः इत्यौपादानिको यागविशेष्यकः पञ्चमो बोधः स एव च प्रवर्तकः ( त० प्र० ख० पृ० ११२ )। ७ गन्धपुष्पादिपूजासाधनसंपादनात्मक उपासनविशेषः ( सर्व० सं० पृ० ११७ रामानु० )। ८ अननुष्ठितस्यानुष्ठानमुपादानम् ( जै० न्या० मा० २।२ अधि० १३ )।

**उपादेयत्वम्**—अनुष्ठीयमानताकारः ( जै० न्या० मा० १।४ अधि० ६ )।

**उपादेयम्**—१ समवेतवदस्यार्थोनुसंधेयः । यथा यद्द्रव्यं यद्द्रव्यध्वंसजन्यम् तत् तदुपादानोपादेयम् ( मु० १ पृ० ६५ ) इत्यादौ । २ ग्रहणकर्म ( ग्राह्यं वस्तु ) । यथा हेयोपादेयरहित आत्मा इत्यादाविति काव्यज्ञा वेदान्तिनश्चाहुः ।

**उपाधिः**—१ निमित्तम् । तदर्थश्च [ क ] प्रयोजकम् ( त० मा० )। [ ख ] कारणम् । यथा वायोः प्राणापानादिसंज्ञायां हृदादिस्थानं मुखनिर्गमादिक्रिया चोपाधिः ( मु० १ पृ० ८५ )। २ धर्ममात्रम् । स च धर्मः कचिज्जात्यादिः । कचित्तद्भिन्नोपि भवति । यथा पदार्थविभाजकोपाधिमत्त्वमित्यादौ । पदार्थविभाजकोपाधयस्तावत् द्रव्यत्वगुणत्वकर्मत्वसामान्यत्वविशेषत्वसमवायत्वअभावत्वरूपाः सन्ति । तत्र द्रव्यत्वादयो

जातिरूपाः । सामान्यत्वादयस्तु तद्भिन्नाः । जातिभिन्नो धर्मोपि द्विविधः सखण्डोपाधिः अखण्डोपाधिश्चेति । तत्राद्यः आकाशत्वादिः ( सि० च० पृ० ३ ) । द्वितीयः प्रमेयत्वकुण्डलित्वप्रतियोगित्वादिः ( त० कौ० पृ० २० ) । ३ वृत्तिमत् । यथा उपधेयसंकरेप्युपाध्यसंकरः ( चि० २ पृ० ८७ ) इत्यादौ धर्ममात्रमुपाधिः । यथा वा जन्यमात्रं क्रियामात्रं वा कालोपाधिरित्यादौ । ४ स्वरूपम् । ५ मायावादिनस्तु स्वसामीप्यादिना अन्यस्मिन् स्वधर्मारोपसाधनं विशेषणविशेषः । यथा उपाधिभेदेप्येकस्य नानायोग आकाशस्येव घटादिना । गतिश्रुतिरप्युपाधियोगादाकाशवत् ( सां० सू० ) उपाधिना क्रियते भिन्नरूपः ( श्रुतिः ) कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः इत्यादावुपाधिः इत्याहुः ( वाच० ) । ६ शक्तिरिच्छा चेति वेदान्तिनः । ७ हेत्वाभासविशेषप्रयोजकीभूतोर्थः । [ क ] यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं सः । उदयनाचार्यमते उपाधिपदं योगरूढम् । अत्र व्युत्पत्तिः । उप समीपवर्तिनि आदधाति संक्रामयति स्वीयं धर्ममित्युपाधिः इति । यद्धर्मबोधकशब्दसमभिव्याहारेण चोपाधिपदं प्रयुज्यते तद्धर्मसंक्रामकत्वं तद्बोधयति । यथा स्फटिकलौहित्ये जपाकुसुममुपाधिरित्यत्र लौहित्यसंक्रामकत्वम् । प्रयुज्यते च शास्त्रे व्याप्यत्वबोधकशब्दसमभिव्याहारेण तत् अत्र साधने असावुपाधिरिति । अतो व्याप्तिसंक्रामकत्वलाभः ( दीधि० २ पृ० ९६ ) । इत्थं च धूमवान्वह्नेरित्यादौ धूमसामग्र्यादिकमुपाधिः । स्फटिकलौहित्ये जपाकुसुममिव धूमसामग्र्यादेः स्वसमवहितवह्नौ स्वनिष्ठधूमव्याप्त्याधायकत्वात् ( म० प्र० २ पृ० २८ ) । [ ख ] यः साधनव्यभिचारी साध्यव्यभिचारोन्नायकः सः ( चि० २ पृ० २६ ) । साध्यव्यभिचारोन्नायकत्वं च साध्यव्यभिचारानुमापकत्वम् । उपाधेर्दूषकताबीजं तु स्वव्यभिचारेण साधने साध्यव्यभिचारोन्नायकत्वम् । तथाहि धूमवान्वह्नेरित्यत्र आर्द्रेन्धनमुपाधिरित्युपन्यासानन्तरं वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनव्यभिचारित्वात् यो यद्व्यापकव्यभिचारी स तद्व्यभिचारी यथा द्रव्यत्वव्यापकगुणवत्त्वव्यभिचारि प्रमेयत्वं द्रव्यत्वस्यापि व्यभिचारि इति

सामान्यव्याप्तेः यत् आर्द्रेन्धनव्यभिचारि तत् धूमव्यभिचारि यथा घटः इति विशेषव्याप्तेरेवोपाधिव्यभिचारेण शुद्धसाध्यव्यभिचारानुमानम् । यद्वा स्वव्यतिरेकेण साधनवति साध्यव्यतिरेकोन्नायकत्वमुपाधेर्दूषकताबीजम् । धूमसाध्यकवह्निहेतुकार्द्रेन्धनाद्युपाधिना वह्निमति क्वचित् स्वव्यतिरेकेण धूमव्यतिरेकानुमानात् । यत् आर्द्रेन्धनाभाववत् तत् धूमाभाववत् यथा जलम् इति व्याप्तेः । व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वात् (म० प्र० २ पृ० ३०–३१) (त० प्र० २) । [ग] स्वानधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकः । अत्र स्वं उपाधित्वेनाभिमतं ग्राह्यम् । उपाध्यनधिकरणं यत् साधनाधिकरणम् तद्वृत्तिर्धर्मः क्वचित् साधनं मित्रातनयत्वादि । क्वचित् पक्षधर्मो बहिर्द्रव्यत्वादिः । क्वचिदुदासीनोपि । यथा घटरूपं प्रत्यक्षं मेयत्वात् इत्यादौ बहिर्द्रव्यत्वमेव । तदवच्छिन्नप्रत्यक्षत्वव्यापकत्वं चोद्भूतरूपोपाधाविति नाव्याप्तिः । इत्थं चोपाधेश्चतुर्विधत्वमिति मन्तव्यम् । शुद्धसाध्यव्यापकार्द्रेन्धनादौ तु केवलं लक्षणममन्वयाय स्वानधिकरणसाधनाधिकरणतप्तायःपिण्डवृत्तिधर्मो द्रव्यत्वादिर्ग्राह्यः । तदवच्छिन्नधूमव्यापकत्वस्य तत्र सत्त्वात् इति बोध्यम् (म० प्र० २ पृ० २९–३०) (त० प्र० २) । ननु द्रव्यं जातेरित्यादौ विशिष्टसत्त्वात्मकोपाधावव्याप्तिः । विशिष्टसत्तायाः शुद्धसत्तानतिरेकेण तदनधिकरणजात्यधिकरणाप्रसिद्धेः । अतो लक्षणान्तरमन्यत्रोक्तम् । तथाहि । [घ] स्वावच्छिन्नानधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकतावच्छेदकवत्त्वे सति साधनाव्यापकः (न्या० म० २ पृ० २२) (दीधि० २ पृ० १०५) । अन्वयश्चास्य स्वावच्छिन्नानधिकरणं यत् साधनाधिकरणम् तद्वृत्तिर्यो धर्मः तदवच्छिन्नं यत्साध्यम् तद्व्यापकतेत्यादि । अत्र स्वं उपाधितावच्छेदकत्वेनाभिमतं आर्द्रेन्धनत्वादि ग्राह्यम् । यथा (१) धूमवान्वह्नेरित्यादावार्द्रेन्धनम् धूमसामग्र्यादिकम् उपाधिः । भवति हि आर्द्रेन्धनत्वावच्छिन्नानधिकरणं यद्वह्निमत् अयोगोलकम् तन्निष्ठो यत्किंचिद्धर्मः द्रव्यत्वम् तदवच्छिन्नो धूमः तद-

धिकरणनिष्ठा यावन्तो धर्मा आर्द्रेन्धनत्वावच्छिन्नसमानाधिकरणा भवन्ति। अतस्तद्वदार्द्रेन्धनमुपाधिः ( न्या० म० २ पृ० २३ )। यथा वा ( २ ) वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वमुपाधिः। भवति हि उद्भूतरूपत्वावच्छिन्नानधिकरणं यत् प्रत्यक्षस्पर्शाश्रयत्वावच्छिन्नम् वायुः तन्निष्ठो धर्मः बहिर्द्रव्यत्वम् तदवच्छिन्नं साध्यम् प्रत्यक्षत्वम्। तदधिकरणं यत् घटपटाद्येव तन्निष्ठा यावन्तो धर्मा उद्भूतरूपत्वावच्छिन्नसमानाधिकरणा भवन्ति। अत उद्भूतरूपवत्त्वमुपाधिः ( न्या० म० २ पृ० २३ )। यथा वा ( ३ ) स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वमुपाधिः। भवति हि शाकपाकजत्वत्वावच्छिन्नानधिकरणं यन्मित्रातनयत्ववत् अन्यः अश्यामो मित्रातनयः तन्निष्ठं यत् मित्रातनयत्वम् तदवच्छिन्नं श्यामत्वम्। तदधिकरणं यत् श्यामो मित्रातनयः तन्निष्ठा यावन्तो धर्माः शाकपाकजत्वत्वावच्छिन्नसमानाधिकरणा भवन्ति। अतस्तद्वच्छाकपाकजत्वमुपाधिः। ( न्या० म० २ पृ० २३ )। यथा वा ( ४ ) घटरूपं प्रत्यक्षं प्रमेयत्वादित्यादौ उद्भूतरूपमुपाधिः। भवति हि उद्भूतरूपत्वावच्छिन्नानधिकरणं यत् प्रमेयत्ववत् चक्षुरादि तन्निष्ठो यत्किंचिद्धर्मः बहिर्द्रव्यत्वम् उदासीनधर्मः तदवच्छिन्नं प्रत्यक्षत्वम् तदधिकरणं यत् घटपटादि तन्निष्ठा यावन्तो धर्मा उद्भूतरूपत्वावच्छिन्नसमानाधिकरणा भवन्ति। अत उद्भूतरूपमुपाधिः ( म० प्र० २ पृ० २९–३० )। एवं च वक्ष्यमाणचतुर्विधविभागविभक्तस्योपाधिचतुष्टयस्य यथाक्रममुदाहरणचतुष्टयमेतदिति विज्ञेयम्। [ ख ] साध्यव्यापकत्वे सति साधनाव्यापक उपाधिरित्युदयनाचार्याः ( न्या० म० २ पृ० २१ ) ( त० कौ० २ पृ० १५ ) ( त० सं० ) ( दीधि० २ पृ० १७५ )। यो यद्व्यापकत्वे सति यदव्यापकः स तत्रोपाधिरिति निर्गलितोर्थः ( दीधि० २ पृ० ९२ )। यस्य यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वं च स तत्साध्यकतद्धेतावुपाधिरित्यर्थः। भवति च तत् आर्द्रेन्धनम् साध्यस्य धूमस्य व्यापकम्। यत्र यत्र धूमस्तत्रार्द्रेन्धनम् इति नियमसत्त्वात्।

भवति च साधनस्य वह्नेः अव्यापकम् । यत्र यत्र वह्निस्तत्रार्द्रेन्धनम् इति नियमासत्त्वात् । तप्तायःपिण्डे वह्निसत्त्वेप्यार्द्रेन्धनाभावादिति ( त० कौ० २ पृ० १५ ) । [ च ] यदभावेन यद्वदन्यत्वेन वा साधनवति साध्याभाव उन्नीयते स उपाधिरिति नव्या वदन्ति ( दि० पृ० २१७ ) । [ छ ] अन्ये तु यद्व्यावृत्त्या यस्य साधनस्य साध्यं निवर्तते स धर्मस्तत्र हेतावुपाधिरित्याहुः ( चि० २ पृ० २८ ) ( दीधि० २ पृ० १०२ ) । स च धर्मः यस्याभावात् पक्षे साध्यसाधनसंबन्धाभावः । यथा आर्द्रेन्धनवत्त्वम् । व्यावर्तते हि तद्व्यावृत्त्या धूमवत्त्वमयोगोलके । एवं भावत्वव्यावृत्त्या ध्वंसे जन्यत्वानित्यत्वयोः संबन्धो निवर्तमानः पक्षधर्मताबलादनित्यत्वाभावमादाय सिध्यति । यथा वा वायावुद्भूतरूपवत्त्वं निवर्तमानं बहिर्द्रव्यत्वे सति प्रत्यक्षत्वं निवर्तयत् प्रत्यक्षत्वाभावमादाय सिध्यति इत्यादि ( चि० २ पृ० २८ ) । [ ज ] अव्याप्तसाधनो यः साध्यसमव्याप्तिरुच्यते स उपाधिः ( सर्व० सं० पृ० ११ बौ० ) । उपाधिश्चतुर्विधः । केवलसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः साधनावच्छिन्नसाध्यव्यापकः उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति । तत्राद्यः धूमसाध्यकवह्निहेतुकस्थल आर्द्रेन्धनसंयोग । द्वितीयः वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वमुपाधिः । तृतीयः ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं भावत्वम् । स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वं वा । चतुर्थस्तु प्रागभावो विनाशी प्रमेयत्वादित्यत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं भावत्वम् ( त० दी० २ पृ० २६ ) । घटरूपं प्रत्यक्षं प्रमेयत्वादित्यादावुद्भूतरूपं वा उपाधिः ( म० प्र० २ पृ० ३० ) ( न्या० म० २ पृ० २३ ) । पुनरप्युपाधिर्द्विविधः । निश्चितः संदिग्धश्च । तत्र साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चितो व्यभिचारनिश्चयाधायकत्वेन निश्चितोपाधिः । यथा वह्निमत्त्वेन धूमवत्त्वे साध्य आर्द्रेन्धनप्रभववह्निमत्त्वम् । यत्र साधनाव्यापकत्वसंदेहः साध्यव्यापकत्वसंशयो वा तदुभयसंदेहो वा तत्र हेतौ साध्यव्यभिचारसंश-

याधायकत्वेन संदिग्धोपाधिः। यथा मित्रातनयत्वेन श्यामत्वे साध्ये शाकाद्याहारपरिणतिजन्यत्वम् (चि० २ पृ० २९) (म० प्र० २ पृ० ३१)। अत्र कार्यकारणभावादीनां व्याप्तिग्राहकाणामभावात् संदेहः इति। प्रथमत उपाधिर्द्विविधः निश्चितः शङ्कितश्चेति (ता० र० श्लो० १५)।

**उपाध्यायः**—एकदेशमुपाध्यायः। अस्यार्थः वेदस्यैकदेशं मन्त्रब्राह्मणयोरेकम् अङ्गानि वा योध्यापयति स उपाध्यायः (मिताक्षरा अ० १।३५)।

**उपायः**—[क] साक्षात् परंपरया वा यत्किंचित्कार्यजनने समर्थः। उपायो द्विविधः। लौकिकः अलौकिकश्च। तत्र घटादिकं प्रति दण्डादिर्लौकिकोपायः। स्वर्गं प्रति यागादिरलौकिकोपायः। नीतिशास्त्रज्ञास्तु साम दानम् भेदः दण्डश्चेत्येते चत्वार उपाया इत्याहुः। [ख] साधकस्य शुद्धिहेतुरुपायः। स च वासचर्यादिभेदात्पञ्चविधः। तदप्याह वासचर्या जपो ध्यानं सदा रुद्रस्मृतिस्तथा। प्रपत्तिश्चेति लाभानामुपायाः पञ्च निश्चिताः॥ (सर्व० सं० पृ० १६३ नकुली०)।

**उपालम्भः**—१ [क] परपक्षदूषणम् (गौ० वृ० १।१।४१)। [ख] प्रतिषेधः (वात्स्या० १।१।४१)। यथा प्रमाणतर्कसाधनोपालम्भः (गौ० १।२।१) इत्यादौ। २ स्पर्श इति वैष्णवयाज्ञिका आहुः। ३ हिंसेति स्मार्तयाज्ञिकाः। ४ अहितेच्छेति काव्यज्ञा वदन्ति।

**उपासना**—१ मुक्तिप्रयोजकविद्या (कु० १)। २ आराधनवदस्यार्थोनुसंधेयः (श० प्र० पृ० ९५)। ३ समानप्रत्ययप्रवाहकरणमुपासनमिति मायावादिन आहुः (शा० भा०)। अभिगमनमुपादानमिज्या स्वाध्यायो योग इति पञ्चविधमुपासनं श्रीपञ्चरात्रेभिहितम् (सर्व० सं० पृ० ११७ रामानु०)।

**उपेक्षा**—१ सुखदुःखोभयासाधनत्वज्ञानम्। यथा तृणं सुखदुःखासाधनम् इति ज्ञानम् (सि० च० १ पृ० २१)। २ उभयाप्रकारकं ज्ञानम् (प० च०)। ३ भावनाविशेष इति योगशास्त्रविदः। ४ परस्वत्वान-

मिसंधानपूर्वकस्वत्वप्रागभावासमानकालीनस्वत्वाविषयकेच्छेति व्यवहारज्ञा आहुः ( वाच० ) । स्वत्वध्वंसमात्रजनकस्त्याग इति मैथिला आहुः । यथा धनस्योपेक्षा इत्यादौ ( श० प्र० श्लो० ७० टी० पृ० ८५ ) ।

**उपोद्घातः**—( संगतिः ) [ क ] प्रकृतोपपादकत्वम् ( दि० २ ) । [ ख ] प्रकृतोपसाधकत्वम् । यथा परामर्शजन्यज्ञानत्वरूपेनुमितिलक्षणे वक्तव्ये विशिष्टपरामर्शस्यानुमितिहेतुत्वमुपोद्घातसंगत्या व्यवस्थाप्यते ( राम० २ पृ० १३४ ) । यथा वा प्रमाकरणरूपे प्रमाणे निरूपणीये सत्युपोद्घातसंगत्या करणनिरूपणम् ( वाक्य० १ पृ० १० ) । [ ग ] चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः ( सर्व० सं० पृ० २६७ जैमि० ) ( भवा० ) ( जग० ) । तदर्थश्च प्रकृतसिद्ध्यनुकूलचिन्ताकालावच्छेदेन प्रकृतानुकूलत्वम् । चिन्ता च वक्तुर्ग्राह्या । अत्रानुकूलत्वं च कचिद्घटकत्वम् कचिज्ज्ञापकत्वम् । तत्र घटकत्वं यथा व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानमित्यत्राज्ञातव्याप्तिकस्य व्याप्तिपदवाच्यत्वेन ज्ञाने का व्याप्तिः इत्याकारिकायां जिज्ञासायां व्याप्तिनिरूपणम् । ज्ञापकत्वं यथा विशिष्टज्ञानस्यानुमितिहेतुत्वे किं ज्ञापकम् इत्याकाङ्क्षायां परामर्शस्यानुमितिहेतुत्वव्यवस्थापनम् ( भवा० ) । [ घ ] निर्दिष्टोपपादकत्वम् ( जग० ) । [ ङ ] शाब्दिकास्तु प्रकृतसिद्ध्यनुकूलचिन्ताकालावच्छिन्नप्रकृतानुकूलत्वम् इत्याहुः ( वै० सा० द० ) । अनुकूलत्वं चात्र घटकत्वज्ञापकत्वादिरूपं यथायथं ग्राह्यम् । तत्रावच्छेदकांशः चिन्ताकालपर्यन्तः स्वरूपसन् इतरांशश्च ज्ञातः सन्नुपयोगी भवति इति ज्ञेयम् ( वै० सा० द० ) ।

**उभयत्वम्**—[ क ] उभयव्यवहारविषयतावच्छेदको धर्मः ( ग० सिद्धा० ) । यथा घटपटोभयमित्यादौ घटपटोभयपर्याप्तमुभयत्वम् । [ ख ] अपेक्षाबुद्धिविशेषविषयत्वमिति केचिदाहुः । अयं च धर्मो व्यासज्यवृत्तिर्भवतीति विज्ञेयम् । एवं बहुत्वादयोपि धर्माः स्वयमूह्याः ।

**उमामाहेश्वरी**—( तिथिः ) अष्टमी नवमीविद्धा नवमी चाष्टमीयुता । अर्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥ ( पु० चि० पृ० १०६ ) ।

**उरूकः**—१ उलूकनामा पक्षिविशेषः । २ मेदस्विनी वपा । उरु विस्तीर्णमूको मेदो यत्र इत्यवयवार्थः ( जै० न्या० अ० ९ पा० ४ अधि० ४ ) ।

**उष्णत्वम्**—स्पर्शनिष्ठो जातिविशेषः । यथा स्पर्श उष्णस्तेजसस्तु ( भा० प० श्लो ४२ ) इत्यादौ । उष्णस्पर्शवत्तेजः ( मु० १ पृ० ७७ ) इत्यादौ च । सूतके मृतके चैव न स्नायादुष्णवारिणा इत्यादौ उष्णशब्दस्य उष्णस्पर्शवदित्यर्थो बोध्यः ।

ऊ.

**ऊर्ध्वा**—( दिक् ) अदृष्टवदात्मसंयोगजन्याग्निक्रियाजन्यसंयोगाश्रयो दिक् ( वै० उ० २।२।१० ) । यथा ऊर्ध्वं गत इत्यादौ । एवं च इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशाननागब्रह्माधिष्ठानोपलक्षिता दश दिश इति व्यपदेशान्तरम् प्राच्यादिव्यपदेशात् ( वै० उ० २।२।१० ) ।

**ऊष्मा**—१ उष्णस्पर्शः ( राम० १ पृ० ७० ) । यथा चक्षुरूष्मादिसंततेः ( मु० १ प० ६८ ) इत्यादौ । २ तेजोद्रव्यस्य सूक्ष्मावयवः ( भा० ) ( वाच० ) । यथा यथाग्नेर्धूम उदयते एवमेषामूष्मोदयते ( शत० ब्रा० १।६।२।१।५ ) इत्यादौ । ३ श ष स ह एते वर्णा ऊष्माण इति शाब्दिका आहुः ( वाच० ) ।

**ऊहः**—१ तर्कः । स च [ क ] परीक्षणम् । [ ख ] अनुमानम् । यथा ऊहः ( जै० सू० १।२।५२ ) इत्यादौ । न पिता वर्धते न माता इत्युक्ते अन्ये वर्धन्त इति गम्यते ( शाबरभा० १।२।५२ ) । [ ग ] अध्याहारः । [ घ ] कल्पनम् । अन्वययोग्यविभक्त्यादिकल्पनमित्यर्थः । यथा पार्वणे सौम्यास इति बहुवचनसमन्वितमपि एकोद्दिष्टे अनन्वितत्वात् सौम्यः इत्येकवचनान्ततया कल्प्यते । यथा वा अग्नये जुष्टं निर्वपामि इत्यस्य सौर्ये चरौ सूर्याय जुष्टं निर्वपामि इत्येवं पदान्तरप्रक्षेप ऊहः ( जै० न्या० अ० २ पा० १ अधि० ९ ) । [ ङ ] प्राकृतस्थानपतितपदार्थान्तरकार्यतः । ऊहः प्रयोगो विकृत ऊह्यमानतयोदितः ॥

( जै० न्या० अ० ९ पा० १ अधि० १ ) । २ ताराख्यः सिद्धिविशेष ऊह इति तन्त्रवेत्तार आहुः ( वाच० ) ।

ऋ.

ऋक्—[ क ] पादेनार्धेन चोपेता वृत्तबद्धा मन्त्रा ऋचः ( जै० न्या० अ० २ पा० १ अधि० १२ ) । [ ख ] तेषामृग्यत्रार्थवशेन पादव्यवस्था । अस्यार्थः यत्र वाक्ये अर्थवशेन छन्दोविशेषवशेन पादव्यवस्था सा ऋक् ( अ० २ पा० १ अधि० १० सू० ३५ ) ।

ऋणम्—[ क ] पश्चाच्छोध्यत्वेनाङ्गीकृत्य गृहीतं द्रव्यम् ( श० प्र० पृ० ८६ ) । यथा ऋणानि पित्रादिभिः कृतानि अस्माभिर्देयानि । अथ मत्कृतानि ऋणानि इत्यादौ ( भा० ) ( वाच० ) । [ ख ] उत्तमर्णाय दातव्यत्वेन स्वीकृतं धनम् । [ ग ] शाब्दिकास्तु सजातीयद्रव्यान्तरदानमङ्गीकृत्य परदत्तपरकीयद्रव्यादानम् । तज्जन्योधमर्णनिष्ठः परिशोधननाश्यः अदृष्टविशेषो वा इत्याहुः ( ल० म० ) ।

ऋतम्—ऋतशब्दः कर्मवचनः । ऋतं पिबन्तौ इति वचनात् ( सर्व० सं० पृ० १०० रामानु० ) ।

ऋतुः—[ क ] सौरं मासद्वयं राम ऋतुरित्यभिधीयते ( पु० चि० पृ० ८ ) । [ ख ] द्वंद्वमुपददाति तस्माद्द्वंद्वं ऋतवः (अग्निचयने पु० चि० पृ० ७)। [ ग ] ऋतौ चन्द्रनिमित्तत्वं ऋतूनन्यो विदधज्जायते पुनरित्यतः मन्त्रवर्णात्प्रतीयते । पुनः पुनर्यो जायते स एव विदधदृतून् । चन्द्रः पुनः पुनर्जन्यः तस्माच्चन्द्रवशादृतुः ( त्रिका० म० पु० चि० पृ० ८ ) ।

ऋते—अभावः । यथा ऋते कृष्णान्नोत्पद्यते सुखमित्यादौ । अत्र प्रतियोगित्वं पञ्चम्यर्थः । कृष्णशब्दस्तद्भक्तिलाक्षणिकः । एवं च कृष्णभक्तिप्रतियोगिकाभावप्रयोज्यः सुखकर्तृकोत्पत्त्यभावः इति बोधः ( ल० म० ) । यथा वा अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते ( याज्ञ० २।१३९ ) इत्यादौ ।

ऋत्विक्—ऋत्विग्यज्ञकृदुच्यते । यः पाकयज्ञादिकं वृतः करोति स ऋत्विक् ( मिता० १।३५ ) ।

## ए.

**एकः**—[ क ] सजातीयनिष्ठभेदाप्रतियोगी । यथा अत्रायमेको भुङ्क्त इत्यादावेकपदार्थः । अत्र एतद्देशाधिकरणकभोजनकर्तृनिष्ठभेदाप्रतियोगी भुङ्क्ते इत्याकारकबोधः ( ग० श० पृ० १२४ ) । [ ख ] केवलः । कैवल्यं च द्वितीयरहितत्वम् । एवं च तत्तत्क्रियाकर्तृत्वादिविशिष्टसजातीयराहित्यम् । यथा अयमेकोत्र भुङ्क्त इत्यादाविति शाब्दिका आहुः । अत्र एतद्देशाधिकरणकभोजनकर्तृसजातीयरहितो भुङ्क्ते इति बोधः । द्वितीयशब्दश्च सजातीये सहाये रूढः ( ल० म० ) । अत्र गदाधरः कैवल्यं च सजातीयद्वितीयरहितत्वम् इत्याह ।

**एककार्यकारित्वम्**—एककार्यत्ववदस्यार्थोनुसंधेयः ।

**एककार्यत्वम्**—( संगतिः ) १ एककार्यानुकूलत्वम् ( म० प्र० पृ० १५ ) । अत्रार्थे एकं कार्यं ययोः कारणयोः तयोर्भावः इति व्युत्पत्तिः ( जग० ) । बहुव्रीहेरनन्तरं त्वप्रत्ययः । यथा गुणागुणमनासक्तमेककार्यमनन्तरम् । एतत्तु ब्रह्मणो वृत्तमाहुरेकपदं द्वयम् ॥ ( भा० व० अ० २१२ ) ( वाच० ) । इदं तु कार्यैक्यमित्यप्युच्यते । २ एकस्य ( कारणस्य ) कार्यता ( प्रयोज्यता कार्ययोः ) । सा च जन्यता जन्यज्ञानविषयता च ( भवा० ) ( वै० सा० द० ) । यथा ईश्वरशक्त्योरनुमानाजन्यत्वेपि तज्जन्यज्ञानविषयत्वलक्षणैककार्यत्वसंगत्या ईश्वरवादानन्तरं मीमांसकेन शक्तिराशङ्किता । नैयायिकेन च ईश्वरसिद्ध्यनन्तरं शक्तिं निरस्य परमप्रयोजनं त्वनुमानस्यापवर्गः इत्यनेन ईश्वरसिद्ध्यपवर्गयोरनुमानजन्यत्वलक्षणैककार्यत्वं संगतिः सूचिता ( भवा० ) ।

**एकत्र द्वयम् इति रीत्या जायमानं ज्ञानम्**—उभयप्रकारतानिरूपितैकविशेष्यताशालिज्ञानम् ( ल० व० पृ० ९ ) । यथा सुन्दरः पुरुषो दण्डी इत्याकारकं ज्ञानम् । अत्र सौन्दर्यदण्डयोः पुरुषे युगपद्विशेषणत्वेनान्वयविवक्षायां ज्ञानं तादृशं भवति । सौन्दर्यविशिष्टपुरुषे दण्डमात्रस्य दण्डविशिष्टपुरुषे वा सौन्दर्यमात्रस्य विशेषणत्वेनान्वयविवक्षायां तु विशिष्टे वैशिष्ट्यम् इति रीत्या ज्ञानं जायते इति ज्ञेयम् ।

**एकत्वम्**—( संख्या ) [ क ] एकम् इति प्रतीतिविषयो गुणविशेषः यथा गगनमेकम् काल एक इत्यादावेकत्वम् । रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ( वै० ७।२।१ ) इत्येवमेकत्वस्य सूत्रकृता अर्थान्तरत्वमुक्तम् । [ ख ] धीविशेषविषयत्वम् । यथा एकः समवायः एकः अभाव इत्यादौ समवायादीनामेकत्वम् ( वै० वि० ७।२।१ ) । [ ग ] स्वरूपाभेद इति भूषणमतम् ( वै० उ० ) ( वै० वि० ७।२।१ ) । यथा घटगतमेकत्वं घटस्वरूपमेव । [ घ ] स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वम् । यथा संपन्नो व्रीहिरित्यादौ व्रीह्यादिगतमेकत्वं सुबर्थः ( ग० व्यु० का० १ पृ० २ ) । तथा च स्वप्रकृत्यर्थसजातीयः स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टश्च यः तन्निष्ठभेदप्रतियोगितानवच्छेदकैकत्वमिति समुदितार्थः । साजात्यं च स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकरूपेण बोध्यम् ( ग० व्यु० का० १ पृ० २ )। स्वसजातीयेत्यत्र स्वं व्रीह्यादिनिष्ठमेकत्वमिति बङ्गदेशीया आहुः । परे तु स्वम् एकवचनप्रकृत्यर्थः । स्वसमभिव्याहृतेत्यत्र स्वं तु एकवचनमित्याहुः। वयं तु उभयस्वपदाभ्यामेकवचनमेव ग्राह्यमिति ब्रूमः । इदं च पारिभाषिकं सजातीयद्वितीयरहितत्वरूपमेकत्वमिति बोध्यम् । अत एव पशुना यजेतेत्यादौ पशुनिष्ठतादृशैकत्वस्य विवक्षितत्वादनेकपशुकरणकयागाज्ञादृष्टसिद्धिः ( ग० व्यु० का० १ पृ० २ ) । अत्राहुः । पशुना रुद्रं यजेतेत्यादौ स्वप्रकृत्यर्थसजातीयः ( स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकरूपविशिष्टः ) यागीयपशुरेव । तन्निष्ठभेदप्रतियोगितानवच्छेदकम् एतत्पशुनिष्ठमेकत्वमेव बोध्यत इति नानेकपशुकरणकयागादृष्टसिद्धिः इति । संपन्नो व्रीहिरित्यत्र लक्षणसमन्वयस्त्वित्थम् । स्वं व्रीहिपदोत्तरमेकवचनम् सुप्रत्ययः । स्वस्य समभिव्याहृतं संपन्नः इति पदम् । तदर्थप्रतियोगिकसंसर्गित्वविशिष्टं प्रकृत्यर्थतावच्छेदकं व्रीहित्वम् । एतादृशरूपेण स्वसजातीय एतद्व्रीहिरेव । तन्निष्ठो भेदोऽन्यनिष्ठैकत्वावच्छेद एव ( न त्वेतद्व्रीहिनिष्ठैकत्वावच्छेदः ) । तत्प्रतियोगितानवच्छेदकम् एतद्व्रीहिगतमेकत्वं भवति इति ।

**एकदेशान्वयः**—समस्तादसमस्ताद्वा पदादुपस्थितस्यार्थस्य घटको योर्थः तेन सह तादृशपदार्थाघटकपदार्थान्वयः । यथा चैत्रस्य पितेत्यादौ । अत्र समस्तादित्यत्र समासः वैयाकरणसंमतानां कृत्तद्धितैकशेषसनाद्यन्तानामवशिष्टानां चतसृणां वृत्तीनामुपलक्षणम् इति ज्ञेयम् । चैत्रस्य पितेत्यत्र जनकत्वविशिष्टपुंसः पितृपदार्थत्वेन तदेकदेशेन जनकत्वेन सह चैत्रपदार्थस्य निरूपितत्वसंबन्धेनान्वयादेकदेशान्वयो ज्ञेयः । अत्रेदं बोध्यम् । पदार्थः पदार्थेनैवान्वेति न तु पदार्थैकदेशेन इति नियमोस्ति । परंतु ससंबन्धिकस्थल एकदेशेप्यन्वयस्वीकारात्तादृशनियमोपवाद्य एवेति । एकस्मिन् दृष्टे श्रुते वा अपरसंबन्धिनः स्मरणं ससंबन्धिकपदार्थः । यथा हस्तिहस्तिपकादिरिति ( म० प्र० ४ पृ० ४८ ) । अथवा नित्यसाकाङ्क्षः ससंबन्धिकपदार्थः । यथा चैत्रस्य गुरुकुलम् मैत्रस्य दासभार्येत्यादौ गुरुत्वदासत्वादौ चैत्रमैत्रपदार्थयोरन्वयस्य नित्यसाकाङ्क्षत्वेनैकदेशान्वयः सह्यत एव इति । तथा च चैत्रस्य पितेत्यादावेकदेशान्वयो युक्त एव ( न्या० म० ४ पृ० १४ ) ।

**एकपदत्वम्**—[ क ] एकार्थविषयकशक्तिनिरूपकत्वम् । यथा राम इति पदस्यैकपदत्वम् । अत्र व्युत्पत्तिः एकं पदं पदोच्चारणयोग्यकालो यत्र तस्य भाव इति ( वाच० ) । अत्रार्थनिष्ठमेकत्वं च तदितरावृत्तिस्तद्व्यक्तित्वादिरूपोसाधारणधर्म एवेति न काचिदनुपपत्तिरिति । [ ख ] शक्तिनिरूपकाभाववदुत्तरत्वे सति शक्तिनिरूपकत्वम् । यथा घट इत्यस्यैकपदत्वम् । [ ग ] अखण्डपदत्वमिति शाब्दिका वदन्ति । अत्राखण्डत्वं च पदत्वाभाववदुत्तरखण्डकत्वम् ।

**एकप्रसरताभङ्गः**—(दोषः) एकस्यां वृत्तौ या प्रसरता घटकतया प्रविष्टता । अत्र चोद्देश्यविधेयभावाप्रतीतिः ( मी० न्या० पृ० ३७ ) ।

**एकभक्तम्**—दिनार्धसमयेतीते भुज्यते नियमेन यत् । एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि ॥ ( पु० चि० हे० स्का० पृ० ४३ ) । न्यूनं ग्रासत्रयेण तु इति चतुर्थचरणे पाठान्तरम् । तदहोरात्रावयवान्तरा-

धिकरणभोजनाभावे सति अष्टममुहूर्तोत्तरार्धादिसार्धमुहूर्तात्मकावयवाधिकरणं भोजनमेकभक्तमिति निष्कर्षः ।

**एकमात्रवृत्तिगुणत्वम्**—एकत्वावच्छिन्नवृत्तिकगुणत्वम् ( ल० व० पृ० ३६ )। इदं चैकैकवृत्तिगुणत्वमित्यप्युच्यते ।

**एकमात्रवृत्तित्वम्**—स्वाश्रयनिष्ठभेदाप्रतियोग्याश्रयकत्वम् ( राम० १ प० ३५ )। यथा आकाशत्वस्यैकमात्रवृत्तित्वम् । अत्र भेदश्च व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेन विशेषणीयः ( राम० १ प० ३५ )। स्वप्रतियोगिवृत्तित्वस्वासमानाधिकरण्यएतदुभयसंबन्धेन भेदविशिष्टान्यत्वमिति निष्कर्षः । इदं च आकाशत्वादेर्जातित्वे बाधकम् ।

**एकवाक्यत्वम्**—१ [ क ] विशिष्टैकार्थप्रतिपादकत्वम् ( ग० २ अव० पृ० २ )। निरूप्यनिरूपकभावापन्नविषयताशालिबोधजनकत्वमित्यर्थः । यथा देवदत्तो ग्रामं गच्छतीति वाक्यस्यैकवाक्यत्वम् । [ ख ] तत्प्रयोज्यविषयतया साक्षात्परंपरया वा निरूपिता या विषयता तत्प्रयोजकत्वम् ( ग० व्यु० का० १ पृ० २७ )। अत्र तत्पदजन्यज्ञाननिरूपितत्वेन तत्पदप्रयोज्यत्वव्यवहारो विषयतायामिति बोध्यम् । अत्र विशेष्यताद्वयनिरूपितैकप्रकारताशालिज्ञानजनकवाक्ययोरेव एकवाक्यत्वम् इति नियमो ज्ञेयः ( कृष्ण० ) । [ ग ] तदुत्थाप्याकाङ्क्षानिवर्तकत्वतन्निवर्तनीयाकाङ्क्षोत्थापकत्वएतदन्यतरवत्त्वम् ( ग० २ अव० पृ० २ ) । यथा प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते ( चि० २ अव० पृ० ७६ ) इत्यादौ प्रतिज्ञादीनां पञ्चानामवयवानामेकवाक्यत्वम् । तदुत्थाप्याकाङ्क्षानिवर्तकत्वं च तत्प्रतिपाद्यार्थविषयकज्ञानजन्या या आकाङ्क्षा तत्प्रतियोगिकनिवृत्तिजनकज्ञानजनकत्वम् । इदं च हेतूदाहरणादीनामेकवाक्यत्वम् । अत्र तत्पदं प्रतिज्ञापरम् । तन्निवर्तनीयाकाङ्क्षोत्थापकत्वं च तत्प्रतिपाद्यार्थविषयकज्ञानजन्या या निवृत्तिः तत्प्रतियोग्याकाङ्क्षाजनकज्ञानजनकत्वम् । इदं च प्रतिज्ञादीनामेकवाक्यत्वमित्यवधेयम् । अत्र तु तत्पदं हेत्वादिपरम् । [ घ ] स्वभिन्नत्वस्वानवच्छिन्नत्वस्वसामानाधिकरण्यएतत्त्रितयसंबन्धेन विषयताविशिष्टविषयताशून्यबोधजनकवाक्यत्वमित्यस्मद्गुरुभिकुशास्त्रिचरणाः प्राहुः । एकवाक्यं द्विविधम् । पदैकवाक्यम्

वाक्यैकवाक्यं चेति । तत्राद्यं यथा सोरोदीदित्याद्यर्थवादसमुदायस्य पदस्थानीयतया विधिपदेनैकवाक्यता । द्वितीयं यथा यत्र प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकाङ्क्षावशेन महावाक्यार्थबोधकत्वम् तत् । यथा दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत इत्यादिवाक्यानां समिधो यजति इत्यादिवाक्यानां च परस्पराङ्गाङ्गिभावबोधकतयैकवाक्यता ( वाच० ) । [ ङ ] अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् । अस्यार्थः । विभागे वाक्यघटकपदानां विभागे साकाङ्क्षमेकपदरहितस्यापरपदस्य शाब्दबोधाजनकत्वं तयोरेवार्थैकत्वम् एकफलप्रतिपादकत्वम् । विभागे साकाङ्क्षत्वे सत्येकफलप्रतिपादकं यत्तदेकं वाक्यमित्यर्थः ( जै० सू० वृ० २।१।४४ ) । २ अविसंवादिवाक्यत्वमेकवाक्यत्वम् । यथा श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ( रघु० ६।८५ ) इत्यादौ इति काव्यज्ञा वदन्ति ।

**एकविशेषबाधः**—इतरबाधग्रहवदस्यार्थोनुसंधेयः ।

**एकशेषः**—( वृत्तिः ) व्याकरणशास्त्रसिद्धो वृत्तिविशेषः । एकशेषो द्विविधः सरूपैकशेषः विरूपैकशेषश्च । तत्र सरूपैकशेषो घटौ घटाः इत्यादौ । विरूपैकशेषस्तु वक्रदण्डौ पितरौ श्वशुरौ भ्रातरौ पुत्रौ शिवौ इत्यादौ । अत्रायं वैयाकरणानां नियमः यः शिष्यते स लुप्यमानार्थाभिधायी इति विज्ञेयः । अत्र सरूपाणामेकशेष एकविभक्तौ ( पाणि० १।२।६४ ) इत्यनेन सूत्रेण घटश्च घटश्च घटौ इत्येकशेषो बोध्यः । वक्रदण्डावित्यत्र विरूपाणामपि समानार्थानामित्येकशेषः । अत्र लक्षणया वक्रदण्डश्च कुटिलदण्डश्च इति बोधः । विग्रहोप्येवमेव । पितरौ इत्यत्र जनकशरीरत्वेन मातापित्रोरवगमाच्छक्त्या पितुर्बोधः । लक्षणया च जनकस्त्रीत्वेन रूपेण मातुर्बोधः । विभक्त्युपनीतं पुंस्त्वं तु पितर्येवान्वेति इति प्राञ्च आहुः । नव्यास्तु एकयैव लक्षणया पितृत्वमातृत्वाभ्यां बोधकं पितृपदम् इत्याहुः ( त० प्र० ख० ४ पृ० ५३ ) । अत्र माता च पिता च पितरौ इति विग्रहः । पिता मात्रा ( पाणि० १।२।७० ) इत्यनेन सूत्रेणैकशेषो बोध्यः । श्वशुरौ इत्यत्र श्वशुरः श्वश्र्वा ( पाणि० १।२।७१ ) इत्यनेन सूत्रेणैकशेषो बोध्यः । श्वश्रूश्च श्वशुरश्च इति विग्रहः । अत्र च

श्वशुरपदे स्त्रीजनकदंपत्योर्भर्तृजनकदंपत्योर्वा लक्षणा ( दि० ४ )। जनक-शरीरत्वेन प्रातिस्विकरूपेण वा बोधः ( त० प्र० ख० ४ पृ० ५३ )। भ्रातरौ पुत्रौ च इत्यादौ स्वसा च भ्राता च भ्रातरौ दुहिता च पुत्रश्च पुत्रौ इति विग्रहौ। भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ( पाणि० १।२।६८ )। इत्यनेन सूत्रेणैकशेषौ च बोध्यौ । शिवौ इत्यत्र शिवा च शिवश्च इति विग्रहः। पुमान्स्त्रिया ( पाणि० १।२।६७ ) इत्यनेन सूत्रेणैकशेषश्च बोध्यः। भ्रातरावित्यत्र भ्रातृपदेन भ्रातृस्वसारौ सोदरत्वेन पुत्रावित्यत्र पुत्रपदेन च स्वापत्यत्वेन पुत्रदुहितरौ लक्ष्येते ( त० प्र० ख० ४ पृ० ५३ )। शिवावित्यत्र शिवपदं शिवदुर्गान्यतरत्वेन बोधकम् इति प्राञ्च आहुः। शक्त्या शिवत्वेन लक्षणया च शिवाया बोधकम् इति तु नव्या आहुः ( त० प्र० ख० ४ पृ० ५३ )।

**एकान्तः**—१ अव्यभिचारः। यथा अनैकान्तिक इत्यादावेकान्तः। २ नियमः। यथा न तावदयमेकान्तेनाविषयः ( शारी० भा० ) इत्यादौ।

**एकार्थसमवायः**—[ क ] स्वसमवायिसमवेतत्वम् ( सि० च०)। [ ख ] एकस्मिन्नर्थे समवायेन सत्त्वम् ( नील० १ पृ० ६ )। यथा एकं रूपमित्यादावेकत्वरूपयोरेकार्थसमवायः ( त० दी० १ पृ० ६ )।

**एकेन्द्रियग्राह्यगुणत्वम्**—एकेन्द्रियग्राह्यजातिमद्गुणत्वम् ( ल० व० पृ० ३६ )। एकमात्रेन्द्रियग्राह्यगुणास्तु रूपम् रसः गन्धः स्पर्शः शब्दः बुद्धिः सुखम् दुःखम् इच्छा द्वेषः प्रयत्नः वेगश्चेति।

**एकैकवृत्तिगुणत्वम्**—[ क ] स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वकत्वे सति गुणत्वम्। एकैकवृत्तिगुणाश्च रूपादिचतुष्टयम् एकत्वम् परिमाणम् एकपृथक्त्वम् परत्वादिसंस्कारान्ताः पञ्चदश चेति द्वाविंशतिर्गुणाः ( मु० गु० पृ० १९२ )। [ ख ] स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगिगुणत्वम् ( दि० गु० पृ० १९२ )। तदर्थश्च स्वम् रूपादिव्यक्तिः। तस्याश्रयः तद्घटः। तत्प्रतियोगिकोन्योन्याभावः तद्घटभेदः। तस्य व्यापकोत्यन्ताभावः तादृशरूपादिव्यक्त्यत्यन्ता

भावः । तत्प्रतियोगित्वं रूपादिव्यक्तीनामिति लक्षणसमन्वयो बोध्यः । अत्र तद्घटाद्यतिरिक्ते तद्रूपव्यक्तीनामसत्त्वेन यत्र यत्र तद्घटादिभेदस्तत्र तत्र तद्रूपव्यक्त्याद्यत्यन्ताभावः इति व्याप्तेः सत्त्वात्तादृशरूपादिव्यक्त्यत्यन्ताभावस्य तादृशान्योन्याभावव्यापकत्वं संभवतीति बोध्यम् । एवं रसादावपि लक्षणसमन्वयः स्वयमूह्यः ।

एतत्—[ क ] प्रत्यक्षबुद्धिविषयः ( दि० ४ प० १७९ ) ( ग० शक्ति० पृ० ११६ ) । यथा एतत् जलमस्ति इति प्रत्यक्षे विषयो जलम् । [ ख ] समीपतरवर्ति वस्तु इति केचिद्वदन्ति ( दि० ४ प० १७९ ) । [ ग ] एतदोर्थश्च लौकिकप्रत्यक्षविषयताविशिष्टम् ( ग० शक्ति० टी० पृ० ११६ ) । यथा एषोर्थः इति प्रत्यक्षेर्थस्यैतदर्थता ।

एव—१ एवकारार्थस्तु त्रिविध इति प्राञ्चः । तथाहि । विशेषणसंगतः विशेष्यसंगतः क्रियासंगतश्चेति त्रिविध एवकारः । तत्राद्ये एवकारार्थः अयोगव्यवच्छेदः । यथा शङ्खः पाण्डुर एवेत्यादौ । अत्र शङ्खत्वावच्छेदेन पाण्डुरत्वायोगव्यवच्छेदो बुध्यते । अथवा विशेष्ये शङ्खे पाण्डुरत्वायोगव्यवच्छेदो बोध्यते ( म० प्र० १ पृ० ७ ) । केचित्तु पाण्डुरत्वादौ शङ्खादिनिष्ठात्यन्ताभावप्रतियोगित्वव्यवच्छेदो बोध्यत इत्याहुः (प० मा०)। द्वितीये अन्ययोगव्यवच्छेदः । यथा पार्थ एव धनुर्धर इत्यादौ ( नील० पृ० ४९ ) ( म० प्र० १ पृ० ७ ) । अत्र धनुर्धरे पार्थान्यतादात्म्यव्यवच्छेदो बुध्यते । अथवा विशेषणे धनुर्धरे पार्थान्ययोगव्यवच्छेदो बोध्यते । धनुर्धरपदस्योत्कृष्टधनुर्धरे लक्षणा । तथैव तात्पर्यात् । पार्थान्ययोगस्तत्तादात्म्यम् ( म० प्र० १ पृ० ७ ) । केचित्तु धनुर्धरादिनिष्ठान्योन्याभावप्रतियोगित्वव्यवच्छेदः पार्थादौ प्रतीयत इत्याहुः ( प० मा० ) । यद्वा पार्थान्यस्मिन् प्रशस्तधनुर्धरत्वं व्यवच्छिद्यते ( वाच० ) । तृतीये अत्यन्तायोगव्यवच्छेदः । यथा नीलं सरोजं भवत्येवेत्यादौ । अत्र अन्वयितावच्छेदकसरोजत्वसामानाधिकरण्येन सरोजनीलभवनकर्तृत्वात्यन्तायोगव्यवच्छेदो बुध्यते । अथवा संभवाभिप्रायके नीलं सरोजं भवत्येव इत्यादौ अन्वयितावच्छेदकसरोजत्वसामाना-

धिकरण्येन सरोजे नीलभवनकर्तृत्वात्यन्तायोगव्यवच्छेदो बोध्यते ( म० प्र० पृ० ७ ) । यद्वा सरोजे नीलत्वात्यन्तायोगो व्यवच्छिद्यते ( वाच० ) । केचित्तु यावत्सरोजनिष्ठात्यन्ताभावप्रतियोगित्वव्यवच्छेदो नीलभवनकर्तृत्वादौ प्रतीयत इत्याहुः ( प० मा० ) । नव्याः शिरोमणिभट्टाचार्यप्रभृतयस्तु सर्वत्रान्ययोगव्यवच्छेदेनैवोपपत्तावयोगव्यवच्छेदात्यन्तायोगव्यवच्छेदौ न स्वीकार्यावित्यवीवदन् ( म० प्र० १ पृ० ७–८ ) । परमप्राचीनमते तु एवकारार्थो द्विविधः । अयोगव्यवच्छेदः अन्ययोगव्यवच्छेदश्चेति । तत्रायोगव्यवच्छेदो द्विविधः केवलायोगव्यवच्छेदः अत्यन्तायोगव्यवच्छेदश्च । यत्रान्वयितावच्छेदकसामानाधिकरण्यमात्रेणायोगव्यवच्छेदः प्रतीयते यथा नीलं सरोजं भवत्येव इत्यादौ तत्रात्यन्तायोगव्यवच्छेदपरिभाषा । यत्र चान्वयितावच्छेदकावच्छेदेनायोगव्यवच्छेदः प्रतीयते यथा शङ्खः पाण्डुर एव इत्यादौ तत्र केवलायोगव्यवच्छेदपरिभाषा । अन्ययोगव्यवच्छेदस्तु पार्थ एव धनुर्धरः इत्यादावेवकारार्थः । एवम् अन्यान्यपि अन्ययोगव्यवच्छेदस्योदाहरणान्यूह्यानि । तत्र जातिमत्येव सत्ता इत्यादौ सत्तापदेन लक्षणया तदधिकरणत्वमर्थः । तथा च सत्ताधिकरणत्वे जातिमदन्यवृत्तित्वव्यवच्छेदः प्रतीयते । अथवा जातिमत्येव सत्ता इत्यादौ सप्तम्या निरूपितत्वमर्थः । तथा च सत्ता जातिमन्निरूपितसमवायप्रतियोगिनी सत्तासमवाये जातिमदन्यानुयोगिकत्वव्यवच्छेदश्च इत्युभयान्वयविषयकसमूहालम्बनबोधः । एवकारस्य अयोगव्यवच्छेदार्थकत्वे त्वन्यान्युदाहरणानि । ज्ञानमर्थं गृह्णात्येव इत्यादौ ग्रहधातोर्विषयित्वमर्थः । आख्यातस्याश्रयत्वमर्थः । निरूपितत्वं द्वितीयार्थः । तथा च ज्ञानम् अर्थनिरूपितविषयित्वाश्रयत्ववत् अर्थनिरूपितविषयित्वाश्रयत्वायोगव्यवच्छेदवच्च इत्यन्वयबोधः । अत्र अयोगव्यवच्छेदोन्वयितावच्छेदकज्ञानत्वावच्छेदेन प्रतीयते न तु सामानाधिकरण्यमात्रेण इति विज्ञेयम् । द्विजो वेदानधीत एव इत्यादौ द्विजत्वावच्छेदेन वेदकर्मकाध्ययनकर्तृत्वायोगव्यवच्छेदो बोध्यते । अत एव नरो वेदानधीत एव इत्यादिप्रयोगवारणम् । चक्षू रूपं गृह्णात्येव

इत्यादौ ग्रहधातोर्ज्ञानमर्थः। द्वितीयाया विषयत्वमर्थः। आख्यातस्य जनकत्वमर्थः। तथा च रूपविषयकज्ञानजनकं चक्षुः इत्यन्वयबोधः। ज्ञानं रजतं गृह्णात्येव इत्यादिप्रयोगो भवत्येव। यदि च न भवति तदा ज्ञानेनार्थो गृह्यत एव इत्यादौ ज्ञानत्वावच्छेदेनार्थग्राहकत्वायोगव्यवच्छेदोर्थो वाच्यः इति ज्ञानेन रजतं गृह्यत एव इत्यादौ ज्ञानत्वावच्छेदेन रजतत्वप्रकारकत्वायोगव्यवच्छेदबोधस्यासंभवेन तथाविधप्रयोगो न भवति इति बोध्यम्। रूपं पृथिव्यां वर्तत एव इत्यादौ सप्तम्या निरूपितत्वमर्थः। धातोर्वृत्तिरर्थः। आख्यातस्याश्रयत्वमर्थः। तथा च पृथिवीनिरूपितवृत्त्याश्रयत्वायोगव्यवच्छेदवद्रूपम् इत्यन्वयबोधः। अत्र च रूपत्वसामानाधिकरण्यमात्रेणान्वयः इति विज्ञेयम्। रूपेण पृथिवी व्यावर्त्यत एव इत्यादौ रूपे पृथिवीनिरूपितधात्वर्थव्यावृत्त्ययोगव्यवच्छेदः प्रतीयते। आत्मनैव ज्ञायते इष्यते क्रियते इत्यादौ आत्मवृत्तित्वायोगव्यवच्छेदः प्रतीयते। अत्र आत्मपदोत्तरतृतीयाया वृत्तित्वमर्थः। ऋतौ स्वदारान् गच्छेदेव इत्यादौ सप्तम्या अवच्छेद्यत्वमर्थः। एवार्थश्चायोगव्यवच्छेदः। विध्यर्थश्चेष्टसाधनत्वम्। इष्टं च प्रत्यवायाभावरूपम्। द्वितीयार्थः कर्मत्वम्। तथा च ऋतुकालावच्छिन्नस्वदारकर्मकाभिगमनायोगव्यवच्छेदः प्रत्यवायाभावसाधनम् इत्यन्वयबोधः। अत्र यस्यायोगव्यवच्छेदः प्रत्यवायाभावहेतुत्वेन विधिबोधितः स प्रत्यवायजनकाभावप्रतियोगी इति व्याप्तिस्वीकारेण तादृशाभिगमनाभावस्य प्रत्यवायहेतुत्वसिद्धिः। ननु च ऋतुकालावच्छिन्नस्वदारकर्मकाभिगमनाभावस्य सामानाधिकरण्येन प्रत्यवायहेतुत्वं वाच्यम्। तथा च यस्यां कस्यामपि निशि ऋतावभिगन्तुः पुरुषस्य ऋत्वन्तराभिगमनाभावेपि प्रत्यवायो न स्यात्। एवं नानादारवतः प्रभोः दारान्तराभिगमनाभावेपि प्रत्यवायो न स्यात् इति चेत् अत्र वदन्ति। तत्तदृतुकालावच्छिन्नतत्तद्दारकर्मकत्वतत्तत्पुरुषकर्तृकत्वएतदुभयाभाववदभिगमनसामान्यस्य तत्तत्पुरुषीयतादृशप्रत्यवायं प्रति हेतुता इति विशिष्य पुरुषभेदेनैव कार्यकारणभावः कल्प्यते इति। इह भवने मैत्रेणैव पक्ष्यते तेमनम् इत्यादौ भवनपदोत्तरसप्तम्या उत्पत्तिरर्थः। तथा च एतद्भवनो-

त्पत्तिकतेमनत्वावच्छेदेन मैत्रपक्ष्यमाणत्वायोगव्यवच्छेदः प्रतीयते । चैत्रो जलमेव भुङ्क्ते इत्यादौ चैत्रो जलान्यभोजनकर्तृत्वव्यवच्छेदवान् जलकर्मकभोजनकर्तृत्ववांश्च इति बोधः । अत्र नव्यास्त्वेवमाहुः । एवकारस्य अन्ययोगव्यवच्छेद एक एवार्थः । पृथिव्यामेव गन्धः इत्यादौ सप्तम्या वृत्तित्वमर्थः । अन्ययोगश्चान्यसमवेतत्वादिः । तेन पृथिवीसमवेतत्वम् पृथिव्यन्यसमवेतत्वव्यवच्छेदश्चार्थो बोध्यते । वह्निमत्येव धूमः इत्यादौ धूमे वह्निमत्संयुक्तत्वम् वह्निमदन्यसंयुक्तत्वव्यवच्छेदश्च प्रतीयते । घटत्वाभाववत्येव द्रव्यत्वाभावः इत्यादौ द्रव्यत्वाभावे घटत्वाभाववद्भिन्नवृत्तित्वव्यवच्छेदः घटत्वाभाववद्वृत्तित्वं च प्रतीयते । पक्षधरमिश्रास्त्वेवमाहुः । व्यवच्छेदमात्रं एवकारार्थः । पृथिव्यन्यसमवेतत्वादौ सप्तम्यादीनामेव लक्षणा इति । वस्तुतस्तु अन्ययोगव्यवच्छेद एवकारार्थः । व्यवच्छेदश्चात्यन्ताभावः अन्योन्याभावश्च । पृथिव्यामेव गन्धः इत्यादौ पृथिव्यां गन्धः पृथिव्यन्यस्मिन्गन्धाभावश्च इति बोधः । शङ्खः पाण्डुर एव इत्यादौ शङ्खतादात्म्यवान् पाण्डुरः पाण्डुरान्यस्मिन् शङ्खान्योन्याभावश्च इति बोधः । पार्थ एव धनुर्धरः इत्यादौ पार्थतादात्म्यवान् धनुर्धरः पार्थान्यस्मिन्धनुर्धरत्वव्यवच्छेदश्च प्रतीयते इति । स्वतन्त्रास्त्वेवमाहुः । एवकारो न कुत्रापि शक्तः । किंतु तात्पर्यग्राहकः । पृथिव्यामेव इत्यादौ च कुत्रचित्पदे लक्षणया पृथिव्यन्यसमवेतत्वव्यवच्छेदः प्रतीयते इति । २ सादृश्यम् । ३ अनियोगः । ४ आचारनियोगः । ५ विनिग्रहः । ६ परिभवः । ७ ईषदर्थः इत्यादि काव्यज्ञा आहुः ।

**एषणासमितिः**—द्विचत्वारिंशता भिक्षादोषैर्नित्यमदूषितम् । मुनिर्यदन्नमादत्ते सैषणासमितिर्मता ॥ ( सर्व० सं० पृ० ७९ आई० ) ।

## ऐ.

**ऐकाधिकरण्यम्**—सामानाधिकरण्यम् । यथा साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ( भा० प० २ श्लो० ७० ) इत्यादौ साध्यहेत्वोः सामानाधिकरण्यम् ।

१ तेमनं व्यञ्जने क्लेदे इति विश्वलोचनकोशः ( नान्तवर्गे ७१ ) ।

**ऐकान्तिकः**—१ एकमात्रव्याप्तिग्राहकसहचारो यत्र सः ( गौ० वृ० १।२।५ ) । यथा अनैकान्तिक इत्यादावैकान्तिकः । यथा वा वह्निमान् धूमादित्यादौ धूम ऐकान्तिकः । अत्र व्युत्पत्तिः एकस्य साध्यस्य तदभावस्य वा योन्तः सहचारः अव्यभिचरितसहचारः तस्यायमित्यैकान्तिकः इति । २ अवश्यंभावीति सांख्यवेदान्तिनः ( वाच० ) ।

**ऐतिह्यम्**—[ क ] इति होचुः इत्यनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यम् ( वात्स्या० २।२।१ ) । [ ख ] अनिर्दिष्टप्रवक्तृकं परंपरागतं वाक्यम् । यथा वटे वटे यक्षः इत्यादि । तद्धि इति होचुरित्यनेन प्रकारेण उच्यते ( गौ० वृ० २।२।१ ) । [ ग ] अज्ञातमूलवक्तृकः शब्दः । विशिष्यानिश्चितप्रथमवक्तृकः शब्द इत्यर्थः ( नील० पृ० ३४ ) । यथा इह वटे यक्षस्तिष्ठति इति ( त० दी० पृ० ३४ ) । ऐतिह्यं प्रमाणान्तरमिति अष्टप्रमाणवादिनः पौराणिकाः ( म० प्र० पृ० ६५ ) ( नील० पृ० ३४ ) । तत् प्रमाणान्तरं नेति नैयायिकसांख्यादयः प्राहुः । अत्रेदं बोध्यम् । तदेतदैतिह्यमाप्तोक्तं चेच्छब्दान्तर्भावादनुमानमेव । न चेत् प्रमाणमेव न भवतीति ( त० व० पृ० १०० ) ( न्या० म० २ पृ० ३२ ) ( नील० पृ० ३४ ) ।

**ऐन्द्राग्नम्**—( नक्षत्रम् ) विशाखा ( पुरु० चि० पृ० ३५३ ) । विशाखानक्षत्रस्येन्द्राग्निदेवताकत्वादैन्द्राग्नमिति संज्ञा ।

**ऐशानी**—( दिक् ) सुमेरुसंनिहिता उदयगिरिसंनिहिता च दिक् ( वै० वि० २।२।१० ) । यथा झळकीग्रामत ऐशान्यामकलकोटग्रामः ।

## ओ.

**ओषधिः**—फलपाकावसानाः शालिप्रभृतयः ( मिता० २।२२९ ) ।

## औ.

**औग्र्यम्**—आत्मन्युत्कर्षप्रत्ययः ( न्या० वा० पृ० १ ) ।

**औदयिकः**—कर्मोदये सति भवन्भाव औदयिकः ( सर्व० सं० पृ० ६८ आई० ) ।

**औदार्यम्**—सन्मार्गवर्तिनी बुद्धिः ( न्यायक० पृ० १० )। दानशीलत्वम् इति काव्यज्ञा आहुः।

**औपनिधिकम्**—वासनस्थमनाख्याय हस्ते न्यस्य यदर्प्यते। द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत्॥ ( याज्ञ० २।६५ )।

**औपशमिकः**—अनुदयप्राप्तिरूपे कर्मण उपशमे सति जीवस्योत्पद्यमानो भावः। यथा पङ्के कलुषतां कुर्वेति कतकादिद्रव्यसंबन्धादधः पतिते जलस्य स्वच्छता ( सर्व० सं० पृ० ६८ आर्ह० )।

**औपादानिकः**—अनुपपत्तिज्ञानसहकृतशब्दजनितो बोधः। अत्र व्युत्पत्तिः। उपादानम् अनुपपत्तिज्ञानम्। तत्सहकृतशब्देन जनितो बोधः औपादानिकः इति ( तर्कप्र० ख० ४ पृ० ११२ )। यथा प्राभाकराणां मते स्वर्गकामो यजेत इत्यादिवाक्यात् स्वर्गसाधनं स्वर्गकामनियोज्यको यागः स्वर्गकामकृतिसाध्यः इत्यौपादानिको बोध उत्पद्यते इत्यादौ ग्रन्थे औपादानिकशब्दस्यार्थः। केचित्तु अनुमित्यात्मको बोध औपादानिक इत्याहुः ( तर्कप्र० ख० ४ पृ० ११२ )।

**औपाधिकः**—उपाधिकृत औपाधिकः। यथा न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ( सां० सू० ) इत्यादौ जीवस्य बन्ध औपाधिकः न नैमित्तिकः नापि तात्त्विक इत्यत्र ( वाच० )। यदुपाध्यवच्छिन्नशक्तिमन्नाम तदौपाधिकम्। यथा आकाशपश्वादि ( श० प्र० पृ० २५–२६ )।

**औपाधिकी**—( संज्ञा ) या अनुगतोपाध्यवच्छिन्नसंकेतवती संज्ञा सा। यथा भूतदूतादिः। अत्र सा हि संज्ञा सचेतनावृत्तिविशेषगुणवत्त्वम् वार्ताहारकत्वम् इत्याद्यनुगतोपाधिपुरस्कारेणैव प्रवर्तते ( श० प्र० पृ० २५ )।

**औलूक्यः**—वैशेषिकसूत्रकारः कणादः। अत्र व्युत्पत्तिः उलूकस्य तन्नामकस्य ऋषेरपत्यमौलूक्यः इति ( वाच० )। विस्तरस्तु कणादशब्दे द्रष्टव्यः।

**औष्ण्यम्**—उष्णस्पर्शः ( राम० १ पृ० ७० )।

## क.

**कक्षः**—शिक्यतलम् ( मिताक्षरा २।१०२ ) ।

**कठिनत्वम्**—१ अवयवसंयोगविशेषः ( त० दी० १ पृ० ६ ) ( त० मा० पृ० २७ ) । यथा गण्डाभोगात्कठिनविषमामेकवेणीं करेण ( मेघ० उ० ३१ ) इत्यादौ । २ स्पर्शविशेषः ( सि० च० ) । यथा काठिन्यादि क्षितावेव ( भा० प० श्लो० १०५ ) इत्यादौ पृथिवीमात्रवृत्ती कठिनसुकुमारस्पर्शौ ( मु० गु० पृ० १९७ ) । द्रव्यस्यारम्भकसंयोगविशेषात्स्पर्शविशेष इति केचित् । गुणान्तरमिति केचिदाहुः । अकठिनैरपि तन्तुभिरारचय इति ( न्या० ली० पृ० ५० ) । ३ शब्दादेस्तु दुर्बोधत्वमेव काठिन्यम् । ४ हृदयादेश्च काठिन्यं तु अवच्छेदकतासंबन्धेन दयाया अभाव एव इत्यादिकं स्वयमूह्यम् ।

**कणादः**—१ वैशेषिकसूत्रकारः कश्यपगोत्रजः ऋषिविशेषः । स च अथातो धर्मं व्याख्यास्यामः इत्यारभ्य तद्वचनादाम्नायस्य प्रामाण्यम् इत्यन्तं दशाध्यायात्मकं वैशेषिकदर्शनाख्यं तर्कशास्त्रं प्रणिनाय । तन्मते सप्त पदार्था इत्याद्यस्मिन् कोशे संपादितमेव । अधिकं तु दर्शनशब्दव्याख्याने द्रष्टव्यम् । २ स्वर्णकार इति काव्यज्ञाः ( वाच० ) ।

**कथा**—१ [ क ] नानावक्तृकः पूर्वोत्तरपक्षप्रतिपादकवाक्यसंदर्भः ( त० भा० पृ० ४४ ) ( त० दी० पृ० ४३ ) । एकेन पूर्वपक्षः क्रियते । अन्येन समाधानम् । एवं क्रमेण नानाकर्तृकत्वं वाक्यसमूहस्यावसेयम् ( नील० पृ० ४३ ) । कथाधिकारिणस्तु तत्त्वनिर्णयविजयएतदन्यतराभिलाषिणः सर्वजनसिद्धानुभवानपलापिनः श्रवणादिपटवः अकलहकारिणः कथौपयिकव्यापारसमर्थाः ( गौ० वृ० १।२।१ प्रस्तावना ) । कथकस्य कथायां नियमविशेषः खण्डने दर्शितः । यथा अथ कथायां वादिनो नियममेतादृशं मन्यन्ते प्रमाणादयः सर्वतन्त्रसिद्धान्ततया सिद्धाः पदार्थाः सन्तीति कथकाभ्यामभ्युपेयम् इति । तदपरे न क्षमन्ते । तथाहि प्रमाणादीनां सत्त्वं यदभ्युपेयं कथकेन तत् कस्य हेतोः । किं

तदनभ्युपगच्छद्भ्यां वादिप्रतिवादिभ्यां तदभ्युपगमसाहित्यनियतस्य तस्य प्रवर्तयितुमशक्यत्वात् उत कथकाभ्यां प्रवर्तनीयवाग्व्यवहारं प्रति हेतुभावात् उत लोकसिद्धत्वात् अथवा तदनभ्युपगमस्य तत्त्वनिर्णयविजयातिप्रसञ्जकत्वात् । न तावदाद्यः । तदनभ्युपगच्छतोपि चार्वाकमाध्यमिकादेर्वाग्व्यवहाराणां सविस्तराणां प्रतीयमानत्वात् । तस्यैव वा अनिष्पत्तौ भवतस्तन्निरासप्रयासानुपपत्तेः इत्यादि ( वाच० ) । [ ख ] तत्त्वनिर्णयविजयएतदन्यतरस्वरूपयोग्यो न्यायानुगतवचनसंदर्भः ( गौ० वृ० १।२।१ प्रस्तावना ) । [ ग ] वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः ( सर्व० पृ० २३९ अक्ष० ) । [ घ ] विचारसमयः ( ग० अव० ) । तिस्रः कथा भवन्ति वादः जल्पः वितण्डा चेति ( वात्स्या० १।२।४२ ) ( गौ० वृ० १।२।४२ ) । २ प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः इति काव्यज्ञा आहुः ( वाच० ) ।

**कथाभासः**—( जातिः ) यत्र वादिप्रतिवादिभ्यां परस्परमसद्दूषणमुद्भाव्यते सः । यथा प्रतिषेधेपि समानो दोषः ( गौ० ५।१।३९ ) । शब्दः अनित्यः प्रयत्नानन्तरीयकत्वादित्यत्र प्रयत्नानन्तरीयकत्वं न शब्दानित्यत्वं साधयति अनैकान्तिकत्वादिति यो दोषः स स्वपक्षेपि तुल्यः प्रयत्नाभिव्यङ्ग्यत्वस्याप्यसाधकत्वादिति ( गौ० वृ० ५।१।३९ ) । अत्र षट् पक्षाः प्रवर्तन्ते । तथाहि शब्दः अनित्यः प्रयत्नानन्तरीयकत्वादिति स्थापनावादिनः प्रथमः पक्षः । प्रयत्नकार्यानेकत्वात्कार्यसम इति प्रतिवादिनो द्वितीयः पक्षः । प्रतिषेधाप्रतिषेधेप्यनैकान्तिकत्वं तुल्यमिति वादिनस्तृतीयः पक्षः । विप्रतिषेधस्तत्रापि तथैवानैकान्तिकत्वं तत्समानदोषोद्भावनं वा चतुर्थः पक्षः ( गौ० वृ० ५।१।४१ ) । प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानप्रसङ्गो मतानुज्ञा ( गौ० ५।१।४२ ) इति पञ्चमः पक्षः । स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः ( गौ० ५।१।४३ ) इति षष्ठः पक्षः ( गौ० वृ० ५।१।४१–४३ ) । अत्र त्रयः पक्षा अपि संभवेयुः ( गौ० वृ० ५।१।४० ) । कथा तस्याः पञ्चाङ्गानि प्राहुश्चत्वारि केचन ( ता० र० ) ।

**कनिष्ठत्वम्**—अल्पतरस्पन्दान्तरितजन्मत्वम् ( दि० गु० ) इति वैशेषिकाः । कालकृतं संनिकृष्टत्वमित्यर्थः । कालकृतमपरत्वम् ( सि० च० ) इति नैयायिकाः । यथा दशरथपुत्रस्य लक्ष्मणस्य राममपेक्ष्य कनिष्ठत्वम् ।

**कनिष्ठा**—परिणीतत्वे सति मर्तृन्यूनस्नेहा कनिष्ठेति रसिका आहुः ( रसम० ) ( वाच० ) ।

**कपालवेधः**—अर्धरात्रेपि केषांचिद्दशम्या वेध इष्यते । अरुणोदयवेलायां नावकाशो विचारणे ॥ कपालवेध इत्याहुराचार्या ये हरिप्रियाः ( पु० चि० पृ० १४९ ) ।

**कपिला**—नमस्ये कृष्णपक्षे या रोहिणीपातभूसुतैः । युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्तिता ॥ ( पु० चि० पृ० १०२ ) ।

**करणम्**—( कारकम् ) [ क ] स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकम् । इदमेव साधकतमम् ( ल० मञ्जु० पृ० ३२ ) । साधकतमं करणम् ( पाणि० १।४।४२ ) । अस्यार्थः । क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् । यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिस्तत्प्रकृष्टं बोध्यम् । यथा रामेण बाणेन हतो वाली । अत्र हि बाणनिष्ठव्यापाराव्यवधानेन प्राणवियोगरूपक्रियानिष्पत्तेस्तस्य करणसंज्ञा । तदुक्तं हरिणा क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥ इति । क्रियाया इत्यस्य फलात्मिकाया इत्यर्थः । विवक्ष्यत इत्यनेन स्थाल्यादीनामपि वैवक्षिकं करणत्वं सूचयति । तदप्युक्तम् वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् । स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥ इति । [ ख ] सविकरणस्य यद्धातोरुपस्थाप्ययादृशार्थे तृतीयया यादृशः स्वार्थोनुभाव्यते स तद्धातूपस्थाप्यतादृशक्रियायाः करणसंज्ञकं कारकमुच्यते । यथा दात्रेण छिनत्ति घटत्वेन जानातीत्यादौ ( श० प्र० पृ० ८८ ) । [ ग ] यस्मिन्सति क्रिया भवत्येव तत् ( चि० ४ ) । हेतुकरणयोरयं विशेषः सव्यापारं निर्व्यापारं वा द्रव्योत्पादकं यत्स हेतुरेव । तादृशमेव गुणोत्पादकं यत्सोपि हेतुरेव ।

निर्व्यापारं क्रियोत्पादकं यत्सोपि हेतुरेव । सव्यापारं क्रियोत्पादकं तु करणमेवेति । [ घ ] प्राचीननैयायिकमते व्यापारवदसाधारणं कारणम् ( न्या० म० १ पृ० २ ) ( न्या० बो० १ पृ० ८ ) ( मु० १ पृ० ११८ ) ( त० सं० ) । यथा अनुमितिं प्रति व्याप्तिज्ञानं करणम् ( सि० च० २ पृ० २५ ) ( त० दी० २ प० २३ ) । यथा वा इन्द्रियं करणं मतम् ( भा० प० श्लो० ५९ ) इत्यादौ प्रत्यक्षं प्रतीन्द्रियं करणम् । यथा वा छिदिक्रियां प्रति कुठारः ( त० कौ० १ पृ० ७ ) । अत्र लक्षणे घटं प्रति कपालसंयोगवारणाय व्यापारवदिति । ईश्वरज्ञानवारणायासाधारणेति ( न्या० म० १ पृ० २ ) । अत्रासाधारणत्वं च कार्यत्वानवच्छिन्नकार्यतानिरूपितकारणताशालित्वम् ( वाक्य० १ पृ० १० ) । अथवा कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् ( न्या० बो० १ पृ० ८ ) । अत्र प्राचीनाः व्यापारवत्त्वे सति इति वक्तव्यम् । अतश्चक्षुःसंयोगादौ नातिव्याप्तिः । श्रोत्रमनःसंयोगः शब्दो वा व्यापारः संभवत्येवेति न श्रोत्रेन्द्रिये करणलक्षणाव्याप्तिः इति वदन्ति । नव्यास्तु असाधारणमेव कारणं करणम् । यद्विलम्बात्प्रकृतकार्यानुत्पादस्तत्कारणत्वस्यासाधारणत्वात्मकतया कालादिषु तादृशकारणत्वाभावान्नातिव्याप्तिः । व्यापारत्वेनाभिमतेन्द्रियसंयोगादिकमेव प्रत्यक्षे करणम् इत्याहुः ( नील० १ पृ० १६ ) । वाक्यवृत्तौ ( १ पृ० १० ) तु व्यापारवदिति लक्षणस्य जनकतासंबन्धेन स्वजनकवत्त्वे सति स्वासाधारणकारणमित्यर्थ उक्तः । कुठारस्य छिदिक्रियाकरणत्वे कुठारदारुसंयोगो व्यापारो बोध्यः ( त० कौ० पृ० ७ ) । [ ङ ] नवीननैयायिकमते फलायोगव्यवच्छिन्नं कारणम् ( प० च० ) ( नील० २ प० २३ ) ( सि० च० २ पृ० २३ ) ( वै० सा० द० ) । यथा अनुमितिं प्रति परामर्शः करणम् ( त० सं० ) ( नील० ) ( भवा० ) । यथा वा प्रत्यक्ष इन्द्रियार्थसंनिकर्षः करणम् ( नील० १ पृ० १६ ) । फलायोगव्यवच्छिन्नमित्यस्यार्थश्च फलव्याप्तम् ( प० च० ) इति । तस्य करणतायां सामानाधिकरण्यं प्रत्यासत्तिः ( भवा० ) । यद्विलम्बात्प्रकृत-

कार्यानुत्पादस्तत् ( नील० १ पृ० १६ ) । शाब्दिकास्तु स्वव्याप्येतरयावत्कारणसमवधाने सति यदव्यवहितोत्तरक्षणे फलनिष्पत्तिस्तदित्याहुः ( वै० सा० द० सुब० पृ० १७९ ) । फलायोगव्यवच्छिन्नं फलोपधायकं वा कारणमेव करणम् । ज्ञानादावात्मापि करणमिष्टमेव ( श० प्र० पृ० ८८ ) ( न्या० म० १ पृ० २ ) । आभ्यन्तरम् बाह्यम् इति द्विविधः कारणविशेषः करणम् इति सांख्या आहुः । सांख्यानामयं सिद्धान्तः कारणविशेषः करणम् । करणं त्रयोदशविधम् । यदाह करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् । ( सां० का० ३२ ) । करणं त्रयोदशविधम् । इन्द्रियाण्येकादश बुद्धिरहंकारश्चेति त्रयोदशप्रकारं करणम् ( वाच० ) । तत्रेन्द्रियरूपं करणमाहारकम् । बुद्धिरूपं प्रकाशकम् । अभिमानरूपं धारकमिति बोध्यम् ।

**करणी**— वैश्याच्छूद्रायामुत्पन्ना ( रथकारशब्दे दृश्यम् ) ।

**कर्कटः**—कर्कटौ तुलान्तयोः शिक्याधारावीषद्वक्रावायसकीलकौ कर्कटशृङ्गसंनिभौ ( मिताक्षरा अ० २ श्लो० १०२ ) ।

**कर्ता**—क्रियानुकूलकृतिमान् । यथा चैत्रस्तण्डुलं पचतीत्यादौ चैत्रादिर्मुख्यः कर्ता । स्वतन्त्रः कर्ता ( पा० १।४।५४ ) इति सूत्रे स्वातन्त्र्यमपि क्रियानुकूलकृतिमत्त्वमेवेति न तद्विरोधः ( म० प्र० पृ० ६ ) । शाब्दिकास्तु स्वातन्त्र्यं च समभिव्याहृतकारकान्तरानधीनत्वे सति कारकत्वम् ( वै० सा० द० ) । धात्वर्थव्यापाराश्रयत्वं वा ( ल० म० सुब० पृ० ९५ ) ( वै० सा० पृ० १७३ ) । अत्रोक्तं हरिणा धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते । प्राधान्यतः शक्तिलाभात्प्रागभावापादनादपि ॥ तदधीनप्रवृत्तित्वात्प्रवृत्तानां निवर्तनात् । अदृष्टत्वात्प्रतिनिधेः प्रविवेके च दर्शनात् ॥ आरादप्युपकारत्वात्स्वातन्त्र्यं कर्तुरिष्यते इति । नागेशभट्टादयस्तु कर्तृप्रत्ययसमभिव्याहारे व्यापारतावच्छेदकसंबन्धेन धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयतद्धात्वर्थाश्रयत्वम् ( ल० म० सुब० पृ० ९५ ) ( वै० सा० द० सुब० पृ० १७३ ) इत्याहुः । घटो भवति पटो नश्य-

तीत्यादावचेतनकर्तृप्रयोगे तु घटपटादिर्गौण एव कर्ता । घटो भवनाश्रयः पटो नाशप्रतियोगी इति बोधात् ( म० प्र० पृ० ६ ) । कर्तुः कारकान्तर-प्रवर्तनं व्यापारः इति शाब्दिकाः ( मञ्जू० ) । केचिच्छाब्दिकास्तु साधनान्तरनियोगव्यापारवान् कर्तेत्याहुः ( ल० म० सुब० पृ० ८४ ) । अन्ये तु शाब्दिकाः धात्वर्थव्यापाराश्रयः कर्ता । अत एव यदा यदीयो व्यापारो धातुनाभिधीयते तदा स कर्तेति स्थाली पचति अग्निः पचति एधांसि पचन्ति तण्डुलः पच्यते स्वयमेव इत्यादि संगच्छते इत्याहुः ( वै० सा० सुब० पृ० १७३–१७४ ) । न्याये व्याकरणे च शास्त्रे कर्ता त्रिविधः । शुद्धः प्रयोजकहेतुः कर्मकर्ता चेति । तत्राद्यस्यो-दाहरणम् मया हरिः सेव्यते । द्वितीयस्योदाहरणं च कार्यते हरिणा । तृतीयस्योदाहरणं तु गमयति कृष्णं गोकुलं गोप इति बोध्यम् ( वै० सा० सुबर्थ० पृ० १७८ ) । शुद्धत्वं च हेतुत्वकर्मकर्तृत्वएतदन-धिकरणत्वम् । प्रेरणार्थकणिजप्रकृतिधातूपात्तव्यापाराश्रयत्वमिति यावत् । प्रयोजकहेतुत्वं च णिजर्थप्रेरणाश्रयत्वम् । कर्मकर्तृत्वं च धातूपात्त-व्यापाराश्रयत्वे सति णिजर्थव्यापारेणाप्यमानत्वेन विवक्षितत्वम् । मया हरिः सेव्यते इत्यत्र मदभिन्नाश्रयको हरिकर्मकसेवनानुकूलो व्यापारः इति बोधः । कार्यते हरिणेत्यत्र हर्यभिन्नाश्रयक उत्पादनानुकूलो व्यापारः इति बोधः ( वै० सा० सुब० पृ० १७९ ) । गमयति कृष्णमित्यत्र कृष्णः कर्मकर्ता । तथा च गोपाभिन्नकर्तृको गोकुलकर्मकगमनानुकूल-कृष्णाश्रयकव्यापारानुकूलो व्यापारः इति बोधः । किंच यदा सौकर्याति-शयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते ( सिद्धान्तकौ० तिङ० कर्मकर्तृप्र० ) इत्युक्तरीत्या कर्मणः कर्तृत्वविवक्षायां कर्मकर्ता भवति । तदुक्तम् क्रियमाणं तु यत्कर्म स्वय-मेव प्रसिध्यति । सुकरैः स्वैर्गुणैः कर्तुः कर्मकर्तेति तद्विदुः ॥ इति ( व्या० का० ) ( वाच० ) । इदं च *निर्वर्त्यविकार्ययोरेव न तु प्राप्ये इति ज्ञेयम् । केचित्तु क्रियामुख्यो भवेत्कर्ता हेतुकर्ता प्रयोजकः । अनुमन्ता ग्रहीता च कर्ता पञ्चविधः स्मृतः ॥* इत्याहुः । षड्विधो

घातकर्तेति मनुः । अष्टविधः कर्तेत्यन्ये । तथाहि अनुमन्ता विशसिता नियन्ता क्रयविक्रयी । संस्कर्ता चोपहर्ता च षडेते घातकाः स्मृताः ॥ इति । अत्र चतुर्थचरणे खादको घातकस्तथा इति पाठादष्टानां कर्तृत्वं बोध्यम् । त्रिधैव ज्ञायते कर्ता विशेषेण क्रियां प्रति । योग्यत्वप्रतिषिद्धत्वविशेषणपदान्वयैः ॥ इति त्रिविधः कर्तेति भट्टमीमांसकाः । सात्त्विकराजसतामसभेदेन त्रिविधः कर्तेति वेदान्तिनः ( गीता १८।२६-२८ ) ( वाच० ) ।

**कर्तृत्वम्**—( कारकम् ) । कर्तृशब्दोवयववृत्तिलभ्ये कृत्याश्रये यौगिकः । [ क ] सविकरणेन यद्धातुनोपस्थाप्यो यादृशार्थस्तदुत्तरतिङा स्वोपस्थाप्ययादृशार्थेनुभावयितुं शक्यः तद्धातूपस्थाप्यस्य तस्य तदेव कर्तृत्वम् । यथा पचति जानातीत्यादौ । अत्र स्वोपस्थाप्यकृत्याश्रयत्वादौ धातूपस्थाप्यस्य पाकबुद्ध्यादेरन्वयः पचाद्युत्तरतिङा बोध्यत इति पाकस्य यत्नवत्त्वं ज्ञानस्याश्रयत्वं च कर्तृत्वम् । एवं नश्यतीत्यत्र नाशस्य प्रतियोगित्वम् । प्रतिबिम्बत इत्यत्र भ्रमात्मनः प्रतिबिम्बस्य प्रकारत्वमेव कर्तृत्वम् । कर्मत्वादौ धातुनोपस्थाप्योर्थस्तिङानुभाव्योपि न विकरणात्तेन इति न तत्र प्रसङ्गः । इदं कर्तृत्वं च अस्ति जुहोतीत्यादावप्यदाद्युत्तरं श्लुतस्यैव विकरणस्य प्रतिसंधाने भोजनकर्तृत्वादेरवगम इति मताभिप्रायेण बोध्यम् ( श० प्र० पृ० १०३ ) । [ ख ] यगन्तभिन्नधातूपस्थाप्ययादृशार्थप्रकारकयदर्थधर्मिकान्वयबोधं प्रति लटः सामर्थ्यम् । स एवार्थो धातूपस्थाप्यतदर्थस्य कर्तृत्वम् । इदं कर्तृत्वं चास्ति जुहोतीत्यादौ श्लुतस्य विकरणस्याप्रतिसंधानेपि भवति इति मताभिप्रायेण बोध्यम् । पच्यते तण्डुलः इत्यादौ धातोरर्थवत्तया स्वार्थकर्मत्वं लटानुभाव्यमपि न यगन्तभिन्नस्य । पक्ष्यते तण्डुल इत्यादौ तु तादृशस्य धातोरर्थवत्तया तिङैव स्वार्थः कर्मत्वमनुभाव्यते न तद्विशेषेण लटा इति तद्व्युदासः ( श० प्र० पृ० १०४ ) । [ ग ] क्रियायाः कृतेर्वा समवायित्वम् ( चि० १,४ ) । इदं नैयायिकमतानुसारि मुख्यं कर्तृत्वम् । तन्मते अचेतने काष्ठादौ कर्तृपदप्रयोगस्तु गौणः । क्रियाश्रयत्वं कर्तृत्वमिति वैयाकरणाः ( का०

व्या० पृ० २)। तन्मते अचेतनकाष्ठादीनामपि मुख्यं कर्तृत्वमिष्टमेव इति विज्ञेयम्। इदमत्रावधेयम्। कारककर्मादिपदवत्कर्तृपदेपि कृधातुः क्रियार्थक एव अचेतनसाधारण्याय ग्राह्यः। आश्रयत्वमिह तत्तदाख्यातार्थद्वारा। तथा च यगाद्यसमभिव्याहृताख्यातेन यद्धात्वर्थान्वितयद्धर्मवत्त्वं बोध्यते तद्धात्वर्थनिरूपितधर्मवत्त्वं तद्धात्वर्थकर्तृत्वम्। यथा पचतीत्यादौ पाकाद्यनुकूलव्यापारवत्त्वम् जानातीत्यादौ ज्ञानाद्याश्रयत्वम् नश्यतीत्यादौ नाशप्रतियोगित्वम् इति। चैत्रेण पच्यत इत्यादौ पाकजन्यफलाश्रयत्ववारणाय यगाद्यसमभिव्याहृतेति। अत्र चैत्रादेः कर्तृत्वं पचतीत्याख्यातबोध्यं धर्ममादायैवेति ज्ञेयम् (का० व्या० पृ० २)। [घ] उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम्। यथा ईश्वरस्य द्व्यणुकादिकर्तृत्वम् (त० दी० १ आत्म० पृ० ११)। यथा वा कुलालस्य घटकर्तृत्वम्। इदं च प्राचीननैयायिकमतानुसारि मुख्यं कर्तृत्वम्। [ङ] इतरकारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वम् (सर्व० सं० पृ० २५४ अक्ष०)। यथा चैत्रः ग्रामं गच्छतीत्यादौ चैत्रस्य कर्तृत्वम्। क्वचित् व्यापाराश्रयत्वम्। यथा रथो गच्छतीत्यादौ रथादेः कर्तृत्वम्। क्वचित् प्रतियोगित्वम्। यथा घटो नश्यतीत्यादौ घटस्य कर्तृत्वम्। क्वचित् कृत्यवच्छेदकत्वम्। यथा शरीरस्य कर्तृत्वम् (गौ० वृ० ३।१।६)। क्वचिदित्येवमुक्तानीमानि त्रीणि सर्वेषां मते गौणानि कर्तृत्वानि इति विज्ञेयम्। शाब्दिकास्तु कर्तृप्रत्यय-(शप्श्यनादिप्रत्यय-)समभिव्याहृतधातूपात्तप्रधानीभूतव्यापाराश्रयत्वम्। अथवा कर्तृसंज्ञाबोधितकर्तृत्वशक्तिमत्त्वम्। यथा चैत्रस्तण्डुलं पचतीत्यादौ चैत्रस्य कर्तृत्वम् (ल० म० सुबर्थ० पृ० ९५) इति वदन्ति। सा शक्तिश्च कर्तृप्रत्ययसमभिव्याहारे व्यापारतावच्छेदकसंबन्धेन तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयतद्धात्वर्थाश्रयत्वम् (ल० म० सुब० पृ० ९५)। अत्रेदं बोध्यम्। करणाधिकरणकर्मणामेव विवक्षया कर्तृत्वमिति नापादानसंप्रदानयोः कर्तृत्वमिति महाभाष्यकाराः। उत्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके। व्यापारभेदापेक्षायां करणत्वादिसंभवः॥ इत्यनया कारिकया विवक्षा-

वशात्सर्वेषां कर्तृत्वं हरिणोक्तम् इति (वाच०) (ल० म० सुब० पृ० ८४)। अनुकूलकृतिमदन्तःकरणप्रकृतित्वं कर्तृत्वमिति सांख्या आहुः। न्यायनये कर्तृत्वं द्विविधम् मुख्यं गौणं चेति। तत्राद्यं कृतिमत्त्वम्। द्वितीयम् आश्रयत्वप्रतियोगित्वादि।

**कर्म**—१ (पदार्थः) [क] एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् (वै० १।१।१७)। अत्र एकद्रव्यत्वं च एकमात्रमूर्तसमवायिकारणकत्वम् (वै० उ० २।१।२१)। मूर्तमात्रसमवेतत्वं वा (वै० वि० २।१।२१)। संयोगेत्यादेः संयोगविभागयोर्निरपेक्षकारणमित्यर्थः। संयोगविभागयोः प्रत्येकमेव कारणत्वम् न मिलितयोः (त० व० पृ० २४०)। कर्म च संयोगविभागयोः स्वानन्तरोत्पन्नभावनैरपेक्ष्येण कारणम् (वै० वि० १।१।१७) (मु० गु० पृ० १९८)। अत्र निरपेक्षत्वं च स्वोत्पत्त्यनन्तरोत्पत्तिकानपेक्षत्वम्। पूर्वसंयोगध्वंसस्तु स्वोत्पत्त्यनन्तरानुत्पत्तिक एव। अभावत्वेन तस्याद्यक्षणसंबन्धाभावात् (वै० उ० १।१।१७)। तच्च कर्म मूर्तद्रव्यमात्रसमवेतम् अनित्यमेव। उत्तरसंयोगात् कदाचिदाश्रयनाशाच्च नश्यति इति ज्ञेयम् (त० कौ० पृ० २०)। तथाहि प्रथमं द्रव्ये कर्मोत्पद्यते। ततो विभागः। ततः पूर्वसंयोगनाशः। तत उत्तरदेशसंयोगः द्रव्यनाशश्च। ततः कर्मनाशः इति। कर्म पञ्चविधम्। ऊर्ध्वं चाधश्चाभिमुखं तिर्यग्विष्वगिति क्रमात्। तानि पञ्चापि कर्माणि दश संयोगभेदतः॥ इति (ता० र० श्लो० ५२)। [ख] चलनात्मकम् (त० सं०)। संयोगविभागानुकूलमित्यर्थः (वाक्य० पृ० २२)। [ग] संयोगभिन्नत्वे सति संयोगासमवायिकारणम् (त० दी० १ पृ० ६)। [घ] कर्मत्वजातिमत् (त० दी० १ पृ० ६) (त० कौ० १ पृ० १)। तल्लक्षणं तु विभागासमवायिकारणत्वे सति संयोगहेतुत्वम् (दि० गु० पृ० १९८)। नित्यावृत्तिसत्तासाक्षाद्व्याप्यजातिरूपं कर्मत्वम् (वै० उ० १।१।१७)। नित्यावृत्तिपदार्थविभाजकोपाधिमत्त्वम् (ल० व०)। अनेकाश्रितावृत्तिसत्तासाक्षाद्व्याप्यजाति-

मत्त्वम् ( त० व० परि० १६ पृ० २४० ) ( वै० उ० १।१।१७ ) इत्यादि बोध्यम् । संयोग एव कर्मेति भूषणमतम् ( प्र० प्र० ) । भूषणमते संयोगापेक्षया कर्मणोतिरिक्तत्वं नास्तीति विज्ञेयम् ( दि० १ पृ० १९ ) । न्यायवैशेषिकनये कर्म पञ्चविधम् । उत्क्षेपणम् अपक्षेपणम् आकुञ्चनम् प्रसारणम् गमनं चेति ( वै० १।१।७ ) ( त० कौ० १ पृ० १ ) ( त० सं० ) ( भा० प० श्लो० ६ ) । गमनलक्षणं चोत्क्षेपणादिचतुष्टयभिन्नत्वे सति कर्मत्वव्याप्यजातिमत्त्वम् ( वै० उ० १।१।७ ) । तच्च गमनं बहुविधम् भ्रमणम् रेचनम् स्पन्दनम् ऊर्ध्वज्वलनम् तिर्यग्गमनम् इति ( भा० प० १ श्लो० ७ ) । भ्रमणादिप्रकारः शिक्षिताश्वगत्यादौ प्रसिद्ध इति श्रूयते । भ्रमणादिषु गमनत्वजातेस्त्वनियतदिग्देशसंयोगविभागासमवायिकारणत्वमेव व्यञ्जकम् इति ज्ञेयम् ( वै० उ० १।१।७ ) ( वै० वि० १।१।७ ) । उत्क्षेपणादीनां पञ्चानामपि कर्मत्वसंबन्धः एकद्रव्यवृत्तित्वम् क्षणिकत्वम् मूर्तद्रव्यवृत्तित्वम् अगुणवत्त्वम् गुरुत्वद्रवत्वप्रयत्नसंयोगजन्यत्वम् स्वकार्यसंयोगविरोधित्वम् संयोगविभागनिरपेक्षकारणत्वम् असमवायिकारणत्वम् स्वपराश्रयसमवेतकार्यारम्भकत्वं च । वस्तुतः कर्मैकविधमेव निष्क्रमणत्वप्रवेशनत्वादिवदुत्क्षेपणत्वादेर्जातित्वाभावेन भेदकत्वाभावात् इति विज्ञेयम् ( प० मा० ) । २ क्रियते फलार्थिभिरिति कर्म धर्माधर्मात्मकं बीजाङ्कुरवत्प्रवाहरूपेणानादि ( सर्व० सं० पृ० १८८ शैव० ) । यथा कर्मणैव हि संसिद्धिमास्थिता जनकादयः ( गीता ३।२० ) इत्यादौ । कर्माणि षट् शान्तिकरणम् वशीकरणम् स्तम्भनम् विद्वेषः उच्चाटनम् मारणं चेति । एते षट् प्रयोगास्तन्त्राद्युक्ताः । यजनम् याजनम् अध्ययनम् अध्यापनम् दानम् प्रतिग्रहश्चेति एतानि ब्राह्मणस्य षट् कर्माणि । धौतिर्बस्तिस्तथा नेतिर्नौलिकी त्राटकस्तथा । कपालभातिश्चैतानि षट् कर्माणि समाचरेत् ॥ इत्यनेनोक्तानि शुद्धिकराणि षट् कर्माणि हठयोगाङ्गानि ( वाच० ) । केचित्तु कर्म त्रिविधम् नित्यं काम्यं नित्यकाम्यं चेति । तत्र केवलं नित्यं संध्यावन्दनादि । केवलं काम्यं यागादि । नित्यकाम्यं तु एकादशीव्रतादीत्याहुः । एतत्कृतस्याकरणे

प्रत्यवायश्रवणान्नित्यत्वम् । पुत्रादिकामनाश्रवणात्काम्यत्वमपि संगच्छते (त० प्र० ख० ४ पृ० १०३ ) । मीमांसकनये नित्यम् नैमित्तिकम् काम्यं चेति त्रिविधं कर्म ( व्यासस्मृ० ) । तत्र यदकरणे प्रत्यवायस्तन्नित्यम् । यथा संध्योपासनादि । अनियतनिमित्तकं नैमित्तिकम् । यथा ग्रहणश्राद्धादि । तत्र राहूपरागस्यानियतस्यैव निमित्तत्वात् । अत्र नित्यत्वं च प्रत्यवायसाधनीभूताभावप्रतियोगित्वम् । नियतनिमित्तकत्वमिति यावत् । संध्योपासनादौ प्रातरादिसमयस्य नियतस्यैव निमित्तत्वात् ( म० प्र० ४ पृ० ६० ) । अथवा फलकामनानधीनकर्तृकत्वम् ( त० प्र० ख० ४ पृ० १०३ ) । नैमित्तिकत्वं च निमित्तनिश्चयाधीनकर्तव्यताकत्वम् । यथा वा जातेष्ट्यादौ ( वाच० ) । काम्यं तु फलकामनाधीनकर्तव्यताकं कर्म । यथा स्वर्गोद्देशेन कृतं अश्वमेधयागादि ( म० प्र० ४ पृ० ६० ) ( वाच० ) । सात्त्विकराजसतामसभेदेन त्रिविधं कर्मेति वेदान्तिनः ( गीता १८।२३–२५ ) । वेदान्तिनां मते कर्म पुण्यपापजनकम् । तच्च द्विविधम् संचितम् प्रारब्धं चेति । तत्र अनारब्धविपाकः कर्माशयः संचितम् । तच्च ज्ञानाग्निना दह्यते । आरब्धविपाकश्च कर्माशयः प्रारब्धम् । तच्चोपभोगेनैव नश्यति इति बोध्यम् । इदं च शुक्लकृष्णाकृष्णशुक्लभेदेनापि त्रिविधम् । तत्राद्यम् हिंसाद्यनपेक्षं पुण्यजनकं स्वाध्यायादि । द्वितीयम् शास्त्रनिषिद्धं पापजनकं ब्रह्महत्यादि । तृतीयम् हिंसादिसहितं वेदविहितं पुण्यापुण्यजनकं पशुयागादि (वाच०) । २ [ क ] कर्तुरीप्सिततमं कर्म ( १।४।४९ पाणि० ) इत्यादिभिः सूत्रैर्यस्य कर्मसंज्ञा विधीयते तत् । [ ख ] परसमवेतक्रियाफलशालि ( चि० १ ) । यथा देवदत्तो ग्रामं गच्छतीत्यादौ ग्रामः कर्म । यथा वा भूमिं प्रयाति विहगो विजहाति महीरुहमित्यादौ भूमिमहीरुहौ कर्मणी ( का० व्या० पृ० ३ ) । यथा वा अन्नवद्विषं भुङ्क्ते इत्यादौ विषम् । अत्रेदं बोध्यम् । ग्रामं गच्छति देवदत्तः भूमिं प्रयाति विहग इत्यादौ संयोगानुकूलस्पन्दात्मकव्यापारो गम्धातोर्याधातोश्चार्थः । तथा च संयोगात्मकफलस्य द्विष्ठत्वेन देवदत्तविहगात्मककर्त्रादावपि वृत्ति-

स्वात् देवदत्तो विहगश्च स्वात्मानं गच्छति प्रयाति च इति प्रयोगापत्तिः । तद्वारणाय परसमवेतक्रियाजन्यत्वम् क्रियाजन्यफले ( मतभेदेन धात्वर्थतावच्छेदकफले वा ) विशेषणत्वेन निवेश्यम् । इत्थं च द्वितीयादेः क्रियान्वयि परसमवेतत्वमप्यर्थः । परत्वं च स्वप्रकृत्यर्थापेक्षया । स्वपदेन द्वितीया गृह्यते । इदं च कर्मसामान्यलक्षणम् इति ज्ञेयम् । अत्र प्राञ्चो नैयायिकाः क्रियाजन्यफलशालि कर्मेत्याहुः । नव्यास्तु धात्वर्थतावच्छेदकफलशालि कर्मेति प्राहुः ( ग० व्यु० का० २ पृ० ३६—३८, का० ४ पृ० ९३ ) । फलशालित्वं च फलानुयोगित्वम् । [ ग ] फलाश्रयतयेष्टम् ( ग० व्यु० का० ४ पृ० ९३ ) [ घ ] शशधरादयस्तु कारणव्यापारविषयः कर्मेत्याहुः ( चि० १ ) ( का० व्या० पृ० ३ ) । यथा व्रीहीन्प्रोक्षतीत्यादौ व्रीहिः कर्म ( न्या० सि० दी० पृ० १९ ) । यथा वा चक्षुषा घटं जानातीत्यादौ घटः कर्म । क्वचित् विषयः कर्म ( त० प्र० ) । यथा भाविनं घटं जानातीत्यादौ घटः कर्म ( गौणम् ) । यथा वा मातुः स्मरतीत्यादौ माता कर्म ( म० प्र० पृ० ४, ६ ) । अत्रेदं बोध्यम् । नैयायिकमते सविषयार्थकधातुसमभिव्याहारे विषयत्वात्मकं गौणं कर्मत्वम् कर्तुरीप्सिततमं कर्म ( पा० सू० १।४।४९ ) इत्यनेन बोध्यते । तथा च घटविषयताशालिज्ञानाश्रयतावान् मातृविषयकस्मरणवान् इति बोधः । वैयाकरणमते तु अत्रापि ज्ञानानुकूलव्यापारस्य स्मरणानुकूलव्यापारस्य च धात्वर्थत्वेन मुख्यमेव कर्मत्वं बोध्यते नतु गौणम् । तथा च व्यापारमुख्यविशेष्यक एव सर्वत्र बोधः इति । दिवाकरस्तु संस्कारावच्छिन्नमेव ज्ञानं जानात्यर्थ इति उक्तस्थले मुख्यमेव कर्मत्वम् इत्याह ( श० प्र० पृ० १०१ ) । क्वचित् प्रतियोगि कर्म । यथा घटं नाशयतीत्यादौ घटः कर्मेति ( का० व्या० पृ० ३ ) । कर्म द्विविधम् । प्रधानकर्म अप्रधानकर्म चेति । तत्राद्यम् गां दोग्धि पय इत्यादौ पयः । द्वितीयं तु तत्रैव गौः इति ( ल० म० सुब० पृ० ९१ ) । अत्र गोरपादानत्वाविवक्षायां अकथितं च ( पा० सू० १।४।५१ ) इत्यनेन कर्मत्वम् ।

अत्र गौणकर्मणि गवादौ लादयः ( ल० म० सुब० पृ० ९१ ) । शब्द-शक्तिप्रकाशिकाकृतस्तु गां दोग्धि पय इत्यादौ प्रधानकर्म गौः पयस्त्वप्रधानकर्म इत्याहुः ( श० प्र० पृ० ९८ ) । एतत्तु पूर्वं ( ६४ पृष्ठे ) प्रपञ्चितम् तत्र द्रष्टव्यम् । प्रकारान्तरेण ईप्सिततमं कर्म त्रिविधं भवति । प्राप्यम् प्रकृतिविकृती च । तत्राद्यम् क्रियाजन्यफलशालि । यथा ग्रामं गच्छतीत्यादौ गम्यादेर्ग्रामादि । घटं जानातीत्यादौ ज्ञानादेर्विषयश्च । द्वितीयं च क्रियया वस्त्वन्तरनिष्पत्तये पूर्वभावविशिष्टस्य यस्यासत्त्वरूपो विकारो निर्वाह्यते तत् । यथा तण्डुलानोदनं पचतीत्यादौ पाकादेस्तण्डुलादि । पुष्पाणि माल्यं करोति काष्ठान्कटं करोति इत्यादौ कृतेश्च पुष्पकाष्ठादि । तृतीयं च क्रियया निष्पाद्यं यत् तत् । यथा पाकादेरोदनादि । यथा वा कृतेः माल्यादि कटादि चेति । तत्र विकृतिरूपं कर्म प्रकृतेरसमभिव्याहारस्थले ओदनं पचतीत्यादौ निर्वर्त्यमित्युच्यते । तत्रोक्तम् सती वाविद्यमाना वा[1] प्रकृतिः परिणामिनी । यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥ इति । तदर्थश्च यस्य विकृतिकर्मणः नाश्रीयते न प्रयुज्यते इति । तण्डुलानोदनमित्यत्र तण्डुलादिरूपधर्मिनाशादेव पूर्वभावविशिष्टतदसत्त्वम् ओदनादिरूपकर्मान्तरनिष्पादकं क्रियातो निर्वहति इति बोध्यम् । अत्रेत्थमन्वयः । तण्डुलानोदनं पचतीत्यादौ प्रकृतिकर्मोत्तरद्वितीयायाः तण्डुलान् इत्यत्रत्यायाः नाशकत्वमर्थः । तण्डुलाद्यन्वितं नाशकत्वं च पाकेन्वेति । विकृतिकर्मोत्तरद्वितीयायाश्च ओदनम् इत्यत्रत्यायाः उत्पादकत्वमर्थः । ओदनाद्यन्वितस्य तस्य नाशकत्वविशिष्टे पाकेन्वयः । नाशे चोत्पत्तेः प्रयोजकत्वम् उद्देश्यतावच्छेदकविधेयभावमहिम्ना नियमतो भासते । तथा च ओदनोत्पादको यस्तण्डुलनाशकः पाकः तदनुकूलकृतिमान् इति तण्डुलानोदनं पचतीति वाक्याद्बोधः । एवं तण्डुलमोदनं करोति काष्ठं भस्म करोति दुग्धं दधि करोति इत्यादावपि प्रकृतिकर्मोत्तरद्वितीयया तन्नाशकत्वं कृतौ प्रत्याय्यते । विकृतिकर्मोत्तरद्वितीयया च विषयताविशेष उत्पादकत्वं वा मिलितं वा कृतौ बोध्यते । अत्र तण्डुलना-

1 अविद्यमाना इति पदच्छेदः ।

शिका या ओदनोत्पादिका ओदनविषयिका च कृतिः तदाश्रयः इति शाब्दबोधः । एवमन्यत्राप्यूह्यम् । काशान्कटं करोति पुष्पाणि माल्यं करोतीत्यादौ धर्मिणः काशकुसुमादेः सत्त्वेपि कटसंदर्भविरहरूपपूर्वभावासत्त्वेन तद्विशिष्टस्यासत्त्वं कटसंदर्भादिनिष्पादकं क्रियातो निर्वहति इति ज्ञेयम् । अत्रेत्थमन्वयः । काशान् कटं करोति कुसुमानि मौक्तिकानि वा स्रजं करोतीत्यादौ काशादिपदोत्तरद्वितीया कृतौ विषयताविशेषमेव बोधयति । काशाद्युच्छेदकतायास्तत्र बाधात् । कटमित्यादौ द्वितीयार्थः पूर्ववत् । स्रजमित्यादिद्वितीयान्तस्य विशिष्टसत्त्वनिर्वाहकत्वमर्थः । विन्यासात्मकविशेषोत्पादकस्यापि स्वरूपसंबन्धविशेषरूपविशिष्टसत्त्वनिर्वाहकत्वमक्षतमेव । ओदनं पचतीत्यत्र तण्डुलादिरूपपूर्वद्रव्यं विनाश्यौदनादेर्निर्वर्तनं क्रियया । पुष्पाणि माल्यमित्यत्र पुष्पादिरूपपूर्वद्रव्यमविनाश्य तत्रैव संदर्भादिरूपविशेषनिष्पादनेन तद्विशिष्टस्य माल्यादेर्निर्वर्तनं क्रियया । काशान् कटं करोतीत्यादौ काशादिरूपपूर्वधर्मिणमविनाश्य तत्रैव कटादिरूपधर्मिनिष्पादनं क्रियया (ग० व्यु० का० २ पृ० ६५)। अत्र काशादिनिष्ठविलक्षणविषयतानिरूपितविषयितावती या कटादिविषयिका तदुत्पादिका च कृतिः तदाश्रयः इति बोधः । एवमन्यत्रापि बोध ऊह्यः । प्रकारान्तरेण व्याकरणशास्त्रोक्तरीत्या कर्म सप्तविधं भवति । तथाहि निर्वर्त्यम् विकार्यम् प्राप्यम् उदासीनम् द्वेष्यम् संज्ञान्तरैरनाख्यातम् अन्यपूर्वकं चेति । तत्राद्यत्रयम् ईप्सिततमं कर्म कर्तुः क्रिययेप्सिततमव्यापारं भवति (ल० म० सुब० पृ० ८४)। तदन्यदवशिष्टचतुष्टयम् इति विवेकः । तेषां सप्तानां मध्ये आद्यं यथा घटं करोतीत्यादौ घटः कर्म । द्वितीयम् सोमं सुनोतीत्यादौ सोमः । काष्ठं भस्म करोतीत्यादौ काष्ठादि विकार्यं भस्मादि च निर्वर्त्यं कर्म । तृतीयम् ग्रामं गच्छति घटं जानातीत्यादौ ग्रामघटादि । चतुर्थं यथा ग्रामं गच्छन् घटं पश्यतीत्यादौ घटः । पञ्चमं यथा विषं भुङ्क्ते इत्यादौ विषम् । अत्रेदं बोध्यम् । ताडनादिना पराधीनतया विषभोजनादिकं भवति । तत्र विषादि तादृशफलाश्रयत्वेनोद्देश्यमेव । अत

एवार्तस्य विषमीप्सितं यत्तद्भक्षयतीति भाष्यं संगच्छते । तस्कराञ्चोरा-न्पश्यतीति द्वेष्योदाहरणम् । विषयेन्द्रियसंबन्धाद्दृश्यमाना अपि न दर्शनोद्देश्या इति । षष्ठं यथा गां दोग्धीत्यादौ गौः । सप्तमं यथा क्रूरमभिक्रुध्यतीत्यादौ क्रूरः कर्म इति । तत्रोक्तं हरिणा निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् । तच्चेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम् ॥ औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् । संज्ञान्तरैरनाख्यातं यद्यच्चा-प्यन्यपूर्वकम् ॥ इति । तत्र विकार्यमपि द्विविधम् । कचित् प्रकृत्युच्छेदः कचित्तु गुणान्तरोत्पत्तिमात्रम् इति । तत्राद्यम् काष्ठं भस्म करोति इति । द्वितीयं तु सुवर्णं कुण्डलं करोति इति ( वै० सा० पृ० १६९ )। तच्चोक्तं हरिणा विकार्यं तु कर्म द्वेधा व्यवस्थितम् । प्रकृत्युच्छेदसंभूतं किंचित्काष्ठादि भस्मवत् । किंचिद्गुणान्तरोत्पत्त्या सुवर्णादि विकारवत् ॥ इति ( ग० व्यु० का० २ पृ० ६५ ) । अत्र प्राप्यत्वं च क्रियाकृत-विशेषानुपलभ्यमानत्वम् । निर्वर्त्यविकार्ययोस्तु क्रियाजन्योत्पत्त्यादिफलस्य कर्ममात्रनिष्ठतया असाधारण्येन तद्वत्त्वान्नातिप्रसङ्ग इति बोध्यम् (वाच०) । अथवा क्रियाप्रयोज्यासाधारणधर्मप्रकारकप्रतीतिविषयतानाश्रयत्वे सति फलाश्रयत्वम् । निर्वर्त्यादावतिव्याप्तिवारणाय सत्यन्तम् ( वै० सा० द० सुब० पृ० १६८ ) । औदासीन्यत्वं च कर्तुरनुद्देश्यत्वे सति क्रियाजन्यफलवत्त्वम् । यथा ग्रामं गच्छन् तृणं स्पृशतीत्यादौ तृणादेर-नुद्देश्यत्वेपि क्रियाजन्यसंयोगरूपफलवत्त्वेनोदासीनकर्मता ( वाच० ) । द्वेष्यत्वं च द्विष्टसाधनत्वे सति क्रियाजन्यफलवत्त्वम् । संज्ञान्तरैरना-ख्यातं तु अपादानत्वादितत्तद्रूपविशेषैरविवक्षितम् ( वै० सा० द० सुब० पृ० १६९ ) । अथवा कारकविशेषसंज्ञान्तरेणाविवक्षितत्वे सति कर्मोपकारकम् । यथा गां पयो दोग्धीत्यादौ गवादेः कारकान्तरसंज्ञाया अपादानत्वादेः अविवक्षया पयोरूपकर्मोपयोगितया कर्मत्वम् ( वाच० )। अत्रेदं बोध्यम् पूर्वविधिप्रसक्तिपूर्वकं तदविवक्षायां सर्वथा पूर्वविधे-रप्रसक्तौ च अकथितं च ( पा० सू० १।४।५१ ) इत्यस्य प्रवृत्तिः इति ( वै० सा० पृ० १६९ ) । अन्यपूर्वकं च अन्यसंज्ञाबाधनपूर्वं

शास्त्रबोधितम् । यथा क्रूरमभिक्रुध्यतीत्यत्र क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ( पा० सू० १।४।३७ ) इत्यनेन प्रसक्तायाः संप्रदानसंज्ञायाः क्रुधद्रुहोरुपसृष्टयोः कर्म ( पा० सू० १।४।३८ ) इत्यनेन बाधनात् कर्मसंज्ञाविधानाच्च क्रूरस्य कर्मत्वम् । एवम् वैकुण्ठमधिशेते इत्यादावपि बोध्यम् ( वै० सा० द० सुब० पृ० १७० ) । अथवा कारकान्तरसंज्ञापूर्वकम् । यथा जलधिमधिशेते इत्यादौ जलधेराधारत्वेनाधिकरणसंज्ञायाः प्राप्तत्वेपि अधिशीङ्स्थासां कर्म ( पा० सू० १।४।४६ ) इत्यादिना कर्मसंज्ञया कर्मत्वम् ( वाच० ) । अत्र निर्वर्त्यविकार्यप्राप्याणां कर्मत्वं च कर्तृगतप्रकृतधात्वर्थव्यापारप्रयोज्यव्यापारव्यधिकरणफलाश्रयत्वेन कर्तुरुद्देश्यत्वम् । यथा तण्डुलं पचतीत्यादौ विक्लित्त्याश्रयत्वात्तण्डुलस्य कर्मत्वम् । चैत्रं ग्रामं गमयतीत्यादौ ग्रामस्य कर्मत्वाय प्रयोज्यत्वनिवेशः । अत्र प्रयोज्यान्तेन फलविशेषणीभूतेन अग्नेर्माणवकं वारयति इत्यादावग्न्यादेः कर्मत्वं निवारितम् इति ज्ञेयम् ( ल० म० सु० पृ० ८५–८६ ) ।

**कर्मजन्यगुणत्वम्**—कर्मजन्यवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वम् ( मु० गु० पृ० १९४ ) । यथा संयोगः विभागः वेगश्च एतत्त्रयस्य कर्मजन्यगुणत्वम् ( भा० प० गु० श्लो० ८७ ) ।

**कर्मत्वम्**—१ पदार्थविभाजको जातिविशेषः ( वै० वि० १।१।७ ) । यथा उत्क्षेपणत्वादिकाः कर्मत्वसाक्षाद्व्याप्याः पञ्च जातयः ( वै० उ० १।१।७ ) इत्यादौ कर्मत्वं जातिः । कर्मत्वं नाम नित्यासमवेतत्वसहितसत्तासाक्षाद्व्याप्यजातिः ( सर्व० सं० पृ० २१६ औ० ) । २ ( कारकम् ) [ क ] परसमवेतक्रियाजन्यफलशालित्वम् । यथा चैत्रस्तण्डुलं पचतीत्यादौ पाकजन्यविक्लित्तिमत्त्वात्तण्डुलस्य कर्मत्वम् । घटं जानातीत्यादौ तु घटादेर्ज्ञानविषयत्वं कर्मत्वं गौणम् ( म० प्र० पृ० ६ ) । [ ख ] परसमवेतक्रियाजन्यधात्वर्थफलाश्रयत्वम् । यथा ग्रामं गच्छतीत्यादौ ग्रामस्य संयोगरूपफलाश्रयत्वं कर्मत्वम् । अत्र परसमवेतेति विशेषणाच्चैत्रश्चैत्रं गच्छतीति न प्रयोगः ( ल० म० सुब० पृ० ९० ) । किंच ग्रामं गच्छति चैत्र इत्यादौ चैत्रादावतिव्याप्तिवारणाय पर-

समवेतेति क्रियाविशेषणम् ( म० प्र० पृ० ६ )। ग्रामं गच्छतीतिवत् स्वं गच्छतीति प्रयोगवारणाय परसमवेतत्वमपि द्वितीयार्थं इष्यते ( ग० व्यु० का २ पृ० ४९ )। गमिपत्योः पूर्वदेशे त्यजेरुत्तरदेशे सन्देश्च पूर्वोत्तरयोः कर्मत्ववारणाय धात्वर्थेति ( ल० म० सु० पृ० ९० )। [ग] शाब्दिकास्तु कर्तृगतप्रकृतधात्वर्थव्यापारप्रयोज्य-तदनधिकरणवृत्तिप्रकृतधात्वर्थफलाश्रयत्वम् ( वै० सा० द० पृ० १५३ )। [घ] व्याकरणशास्त्रबोधितकर्मसंज्ञकत्वं कर्मत्वम् ( ल० म० सुब० पृ० ८५ )। तेन अधिशय्यते प्रासादः इत्यादौ कर्मणि लकारोपपत्तिः। अधिशेतेः कर्मसंज्ञाविशिष्टान्वितस्वार्थबोधकत्वादित्याहुः ( वाच० ) [ङ] प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम्। इदमेव कर्तुरीप्सिततमं कर्म ( पाणि० १।४।४९ ) इत्यत्र ईप्सिततमत्वं बोध्यम्। गां पयो दोग्धीत्यादौ पयोवृत्तिर्यो विभागस्तदनुकूलो व्यापारो गोवृत्तिः। तदनुकूलश्च गोपवृत्तिः। अत्र पयसः कर्मत्वसिद्धये प्रयोज्यत्वनिवेशः। जन्यत्वनिवेशे तु तन्न स्यात्। जन्यत्वं हि साक्षादेव। प्रयोज्यत्वं तु साक्षात्परंपरासाधारणम्। प्रयागात्काशीं गच्छतीत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलेति। न हि विभागः प्रकृतधात्वर्थः। किंतु नान्तरीयकतया गमने सति उत्पद्यते। प्रयागस्य फलाश्रयत्वेनानुद्देश्यत्वाच्च। ननु प्रकृतधात्वर्थस्य ग्रहणेनैवात्र वारणादुद्देश्यत्वनिवेशः किमर्थं इति चेन्न। तस्यासाधारणं प्रयोजनं काशीं गच्छन्पथि मृत इति। अत्र हि काश्याः फलाश्रयत्वाभावेपि फलाश्रयत्वेनोद्देश्यत्वात्कर्मत्वम्। ननु काशीं गच्छति चैत्रे चैत्रः काशीं गच्छति न प्रयागम् इति प्रयोगानुपपत्तिः। प्रयागस्य फलाश्रयत्वेनोद्देश्यत्वाभावादिति चेत् उच्यते। कर्मलक्षण ईप्सिततमपदस्य स्वार्थविशिष्टयोग्यताविशेषे लक्षणा। तथा च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वयोग्यताविशेषशालित्वं कर्मत्वम्। तच्च प्रयागस्याप्यस्तीति कर्मत्वं सुलभम्। [च] न्यायसिद्धान्तदीपिकायां तु करणव्यापारविषयकारणत्वं कर्मत्वम्। यथा

व्रीहीन् प्रोक्षतीत्यादौ व्रीहेः कर्मत्वम् । तेन व्रीहीन् प्रोक्षतीत्यादौ व्रीहेः प्रोक्षणफलीभूतातिशयानाश्रयत्वेपि न कर्मत्वानुपपत्तिः ( न्या० सि० दी० पृ० १९ ) । एवमात्मनात्मानं जानातीत्यादावप्यूह्यम् ।

**कर्मधारयः**—( समासः ) [ क ] तत्पुरुषः समानाधिकरणः कर्मधारयः ( पाणि० १।२।४२ ) । अत्रेदं बोध्यम् । कर्मधारये विशिष्टार्थे न शक्तिर्न वा लक्षणा । ताभ्यां विनापि विवक्षितान्वयबोधोपपत्तेः इति ( चि० ४ ) । शाब्दिकास्तु समासमात्रे विशिष्टार्थेतिरिक्तां शक्तिं कल्पयन्ति । [ख] क्रमिकम् अव्यवहितम् यन्नामद्वयम् एकस्य नाम्नोर्थे धर्मिणि तादात्म्येनापरनाम्नोर्थस्यान्वयबोधं प्रति समर्थम् तादृशनामद्वयं कर्मधारयः । यथा नीलोत्पलमित्यादावुत्पलादिपदस्यार्थे नीलादिपदार्थस्य तादात्म्येनान्वयः । तथा पुरुषसिंह इत्यादावपि पुरुषादावुत्तरपदलक्ष्यस्य सिंहादिसदृशस्य तादात्म्येनान्वयः । कुम्भस्य समीपम् इत्यर्थकस्तु उपकुम्भादिः न तादात्म्येनान्वयबोधकः इति तत्र नातिप्रसङ्गः ( श० प्र० पृ० ४१ ) । पुरुषसिंह इत्यादौ पुरुषः सिंह इव इत्यादिविग्रहे प्रायेणोपमेयस्योपमानैः उपमानानि सामान्यवचनैः ( पा० सू० २।३।५५ ) इत्यनेन कर्मधारयोनुशिष्यते ( श० प्र० पृ० ४१ ) । [ ग ] समासप्रयुक्तलक्षणाशून्यतुल्यार्थकोभयनामकसमासः । यथा नीलोत्पलमित्यादौ कर्मधारयः । अत्र पञ्चमूलीत्यादावपि तुल्यार्थकोभयनामकत्वसत्त्वात्तद्वारणाय समासप्रयुक्तलक्षणाशून्येति नामविशेषणम् । धवखदिराविति द्वंद्ववारणाय तुल्यार्थकेति नामविशेषणम् । नीलोत्पलमित्यत्र यद्यपि नीलपदे नीलगुणाश्रये निरूढलक्षणा तथापि तस्याः समासप्रयुक्तत्वाभावात् नाव्याप्तिः । नामद्वयस्य तुल्यार्थत्वाच्च लक्षणसमन्वयः संभवति इति ज्ञेयम् ( म० प्र० ४ पृ० ४४ ) । स्तोकपक्ता इत्यादौ क्रियाविशेषणैः कर्मधारय एव । महाकविर्महाविज्ञः इत्यादौ कवित्वादाविव प्रकृतेप्यनेकनामार्थैकदेशे पचनादावपरनामार्थस्याभेदान्वयबोधकतया कर्मधारयत्वस्य संभवात् । स्तोकं पक्ता इत्यादौ अमस्तादात्म्यवाचित्वे तु तत्पुरुषः संभवत्येव । क्रियाविशेषणैः समास एवाव्युत्पन्नः इति तु न द्वेष्यम् ।

स्तोकनम्रा स्तनाभ्याम् इत्यादेः कालिदासाद्यैः प्रयुक्तत्वात् ( श० प्र० श्लो० ३९ टी० पृ० ५५ ) । कर्मधारये समासे नीलोत्पलम् इत्यादौ न शक्तिर्न वा लक्षणा । नीलपदार्थस्योत्पलपदार्थे अभेदसंबन्धेनैवान्वयोपपत्तौ शक्तिलक्षणानङ्गीकारात् । अत एव तत्पुरुषात्कर्मधारयो लघीयान् भवति ( न्या० प्र० ४ पृ० १३ ) । तथाहि निषादस्थपतिं याजयेत् इति श्रुतौ बहुव्रीहितत्पुरुषसमासावपेक्ष्य कर्मधारय एव लक्षणाद्यभावाल्लघीयान् इति ( त० प्र० ख० ४ पृ० ५३–५४ ) । अत्रेदं बोध्यम् । निषादस्य संकरजातिविशेषस्य शूद्रान्तर्गततया स्त्रीशूद्रौ नाधीयाताम् इत्यनेन निषिद्धत्वाद्वेदसामान्यानधिकारेपि निषादस्थपतिं याजयेत् इति विशेषश्रुतिबोधितयाजनान्यथानुपपत्त्यैव यागमात्रोपयुक्तमध्ययनं निषादस्य कल्प्यते । तथा च स्त्रीशूद्राविति सामान्यशास्त्रघटकाध्ययनपदस्य विशेषतः प्राप्ताध्ययनेतराध्ययनपरत्वं वाच्यम् । तेन निषादस्य यागोपयुक्ताध्ययनेतराध्ययननिषेधः शूद्रान्तरस्य त्वध्ययनमात्रनिषेधः सिध्यति इति ( मु० ४ ) ( दि० ४ पृ० १८४ ) ।

**कर्मप्रवचनीयः**—( अव्ययम् ) [ क ] क्रियानुयोगिकसंबन्धविशेषद्योतकत्वे सत्यन्वाद्यन्यतमः । यथा अनु उप इत्यादिः । तदुक्तं हरिणा क्रियाया द्योतको नायं संबन्धस्य न वाचकः । नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः ॥ इति । कर्मप्रवचनीया एकादश सन्ति अनु उप अप परि आङ् प्रति अभि अधि सु अति अपि । [ ख ] क्रियाविशेषोपजनितसंबन्धावच्छेदहेतवः ( सर्व० सं० पृ० २९९ पाणि० ) । एकादशानां मध्ये केषांचिदर्थः सोदाहरणं कथ्यते । तथाहि । यज्ञमनुप्रावर्षदित्यत्रायमर्थः । कारकत्वरूपहेतुत्वं अनुशब्दार्थः । अनुर्लक्षणे ( पाणि० १।४।८४ ) इति कर्मप्रवचनीयसंज्ञाविधायकसूत्रे लक्षणपदस्य कारकहेतुपरत्वात् । तथा च यज्ञमनु प्रावर्षत् इत्यादौ आधेयत्वं द्वितीयार्थः । तत्र यज्ञस्यान्वयः । आधेयत्वस्य च अनुपदार्थे हेतुत्वेन्वयः । हेतुतायाश्च निरूपकत्वसंबन्धेन वृष्टावन्वयः । अथवा अन्यत्वम् अनुशब्दार्थः ।

द्वितीयार्थो निरूपितत्वम् । तस्य यद्धान्वितत्वस्यानुशब्दार्थे जन्यत्वेन्वयः । जन्यतायाश्चाश्रयत्वसंबन्धेन वृष्टावन्वयः ( ग० व्यु० का० २ ख० २ पृ० ७६ ) । अन्वर्जुनं योद्धारः । अत्र अनुशब्दार्थोपकर्षः ( हीनत्वम् ) । द्वितीयार्थोवधिकत्वम् । तत्रार्जुनस्यान्वयः । द्वितीयान्तार्थस्य अर्जुनावधिकत्वस्य चापकर्षेन्वयः इति । अवधित्वस्यापादानतारूपत्वेपि क्रियान्वयाभावान्न पञ्चमीप्रसक्तिः ( ग० व्यु० का० २ ख० २ पृ० ७६ ) । वृक्षं प्रति विद्योतते विद्युत् । अत्र लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ( पाणि० १।४।९० ) इत्यनेन सूत्रेण प्रति परि अनु एषां कर्मप्रवचनीयसंज्ञा अनुशिष्यते । तत्र प्रतिशब्दस्य लक्षण इत्थंभूताख्यान भाग वीप्सा एतदात्मकानां चतुर्णामर्थानां यथाक्रममुदाहरणानि कथ्यन्ते । तत्र प्रथमे लक्षणेर्थे वृक्षं प्रति विद्योतते विद्युत् इत्युदाहरणम् । अत्र परिचायकत्वरूपं लक्षणत्वं परिचेयत्वरूपं लक्ष्यत्वं वा प्रतिशब्दार्थः । वृक्षप्रकाशेन विद्युद्विद्योतनज्ञानाद्वृक्षस्य परिचायकता । द्वितीयार्थश्चाधेयत्वं निरूपितत्वं वा ( ग० व्यु० ख० २ कार० २ पृ० ७६ ) । मातरं प्रति साधुः । अत्र द्वितीये इत्थंभूताख्यानेर्थे संबन्धः प्रतिशब्दार्थः । साधुत्वं च प्रियकारित्वम् । द्वितीयार्थश्च प्रतियोगित्वं प्रतियोगित्वनिरूपकत्वं वा । तस्य पूर्वोक्तसंबन्धेन्वयः । तादृशसंबन्धस्य च साधुत्वघटकक्रियायामन्वयः । इत्थं च मातृसंबन्धिप्रियकारी इति बोधः । यो मां प्रति स्यात् । अत्र तृतीये भागेर्थे प्रतिशब्दस्यार्थो भागः । भागश्च स्वत्वाश्रयः । द्वितीयार्थश्च संबन्धः । तस्य पूर्वोक्तभागेन्वयः । इत्थं च मत्संबन्धी यो भागः स्यात् इति बोधः । वृक्षं प्रति सिञ्चति । अत्र चतुर्थे वीप्सार्थे वृक्षं प्रति सिञ्चति इत्यादौ द्वितीयार्थः कर्मत्वम् । अत्र चतुर्थेर्थे कर्मण्येव द्वितीया षत्वबाध एव संज्ञाफलम् प्रतिश्च निरर्थक इति ज्ञेयम् ( ग० व्यु० का० २ ख० २ पृ० ७६ ) । एवं परि अनु एतयोरर्थ ऊह्यः ।

**कर्मयोगः**—रसश्च पवनश्चेति कर्मयोगो द्विधा स्मृतः ( सर्व० सं० पृ० २०४ रसेश्व० ) ।

**कर्षणम्**—१ [ क ] गत्यवच्छिन्नविकर्षणम् । यथा शाखा ग्रामं कृष्यत इत्यादौ कृषेरर्थः । अत्र ग्रामकर्मकगत्यवच्छिन्नविकर्षणकर्मताश्रयः शाखा इत्याकारको बोधः ( श० प्र० पृ० १०५ ) । [ ख ] देशान्तरसंयोगानुकूलव्यापारानुकूलव्यापारः । यथा ग्राममजां कर्षतीत्यादौ कर्षणम् ( वाच० ) । अत्र अस्य कृषधातोः व्यापारद्वयबोधकतया कर्तुरीप्सिततमं कर्म ( पा० सू० १।४।४९ ) इत्यनेन द्विकर्मकत्वम् । एकव्यापारबोधकत्वे तु अकथितं च ( पा० सू० १।४।५१ ) इत्यनेन ग्रामादेः कर्मत्वम् । अत्र प्रधाने कर्मण्येव वाच्ये लकारादयः । यथा अजा ग्रामं कृष्यते इति । तत्रोक्तं हरिणा गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् इति । २ विलेखनम् । तदर्थश्च विदारणम् । अत्रार्थे कृषधातोर्न द्विकर्मकतेति भेदः ।

**कला**—( कार्यम् ) चेतनपरतन्त्रत्वे सत्यचेतना कला ( सर्व० सं० पृ० १६८ नकुली० ) ।

**कलिकापूर्वम्**—( अपूर्वम् ) परमापूर्वजनकः अङ्गजन्यः अपूर्वविशेषः । यथा उत्पत्त्यपूर्वाणि ( दि० गु० पृ० २३५ ) ( चि० ४ ) ( मू० म० ) । अत्र कलिकया अंशेन जन्यम् अपूर्वम् इति व्युत्पत्तिर्द्रष्टव्या ( वाच० ) । उत्पत्त्यपूर्वाणि च पञ्चभिर्वाक्यैर्विहितेभ्यः षड्भ्य आग्नेयादिभ्य उत्पन्नानि षट् सन्ति । तत्र पञ्च वाक्यानि तु यदाग्नेयोष्टाकपालोमावास्यायां च पौर्णमास्यां चाच्युतो भवति ( तै० सं० २।६।३।३ ) उपांशु याजमन्तरा यजति ( तै० सं० २।६।६।४ ) ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् ( तै० सं० २।५।२।३ ) ऐन्द्रं दध्यमावास्यायाम् ( तै० सं० २।५।४।१ ) ऐन्द्रं पयोमावास्यायाम् इति ( दि० गु० पृ० २३५ ) । अत्र आग्नेयाष्टाकपालयाग ऐन्द्रदधियाग ऐन्द्रपयोयाग एतत्त्रयं दर्शस्य । आग्नेयाष्टाकपालयाग उपांशुयाग अग्नीषोमीयैकादशकपालयाग एतत्त्रयं पौर्णमासस्य इति बोध्यम् ( मू० म० ४ ) ( वाच० ) ।

**कल्पनम्**—१ अनुमानवदस्यार्थोनुसंधेयः ( दि० १ ) ( नील० ) ।

२ अर्थापत्तिरिति मीमांसका वेदान्तिनश्चाहुः । ३ आरोप इति मायावादिनः । ४ रचना ५ विधानं चेति काव्यज्ञा आहुः ( वाच० ) ।

**कल्याणम्**—सत्यार्जवदयादानादीनि कल्याणानि ( सर्व० सं० पृ० १२४ रामा० ) ।

**कल्याणी**—चतुर्वर्षा कन्या । कुमारिका द्विवर्षा तु त्रिवर्षा च त्रिमूर्तिनी । चतुर्वर्षा तु कल्याणी पञ्चवर्षा तु रोहिणी ॥ षड्वर्षा तु भवेत्काली सप्तवर्षा तु चण्डिका । अष्टवर्षा शांभवी तु दुर्गा तु नवमी स्मृता ॥ दशवर्षा सुभद्रेति नामभिः परिकीर्तिताः ( पु० चि० पृ० ६८ ) ।

**कषायः**—कषति हिनस्त्यात्मानं कुगतिप्रापणादिति कषायः क्रोधो मानो माया लोभश्च ( सर्व० सं० पृ० ७४ आर्ह० ) ।

**काणः**—[ क ] चक्षुःशून्यगोलकवत्त्वे सति सचक्षुर्गोलकवान् । यथा अक्ष्णा काण इत्यादौ । अत्र गोलकार्थकाक्षिपदोत्तरतृतीयाया विकृतत्वं वृत्तिमत्त्वं चार्थः । तत्राद्यं विकृतत्वं संबोध्यत्वमिव प्रकृत्यर्थे विशेषणविधयान्वेति । चरमं वृत्तिमत्त्वं तु प्रकृत्यर्थनिरूपितं सत् काणत्वैकदेशे चक्षुःशून्यत्वेन्वेति । तथा च विकृतगोलकवृत्तित्वविशिष्टं यच्चक्षुःशून्यत्वं तद्वद्गोलकवान् सचक्षुष्कः इत्याकारस्तत्र बोधः ( श० प्र० पृ० ११८ )। [ ख ] स्वाधिष्ठानवृत्तित्वसंबन्धेन चक्षुःशून्यो यश्चक्षुर्विनाशः तद्वान् सचक्षुष्कः । अक्ष्णा काण इत्यादौ तादृशे विनाशे अक्षिपदस्यार्थस्य गोलकस्य विकारप्रयुक्तत्वं तृतीयया बोध्यते । तथा च गोलकविकारप्रयुक्तस्य निरुक्तसंबन्धेन चक्षुःशून्यस्य चक्षुर्नाशस्याश्रयः सचक्षुष्कः इत्याकारो बोधः ( श० प्र० पृ० ११८ ) । [ ग ] शाब्दिकास्तु चक्षुर्नाशवान् सचक्षुष्कः । यथा अक्ष्णा काण इत्यादौ इत्याहुः ( ल० म० सुब० पृ० १०० ) । अत्र येनाङ्गविकारः ( पा० सू० २।३।२० ) इत्यनेन तृतीया । विकारस्तु कनीनिकाद्यपगमः अयथासंस्थानवत्त्वं वा । तथाच अक्षिपदार्थो गोलकम् । गोलकविकारप्रयुक्तचक्षुर्नाशवान् सचक्षुष्कः इति बोधः ( ल० म० सुब० पृ० १०० ) । [ घ ] लेशतोपि दर्शनसामर्थ्यहीनः काणः ( श० शे० का० पृ० १८९) ।

**कादाचित्कत्वम्**—[ क ] सत्त्वे सति किंचित्कालवृत्त्यभावप्रतियोगित्वम् । ( आत्मत० शिरो० ) । यथा अनादिश्चेत्कार्यकारणप्रवाहः कादाचित्कत्वान्यथानुपपत्त्या कल्प्यः ( कु० टी० हरि० ) इत्यादौ । [ ख ] प्रागभावप्रतियोगित्व ध्वंसप्रतियोगित्व एतदन्यतरवत्त्वम् ( बौ० शि० ) ( वाच० ) । यथा घटपटादेरनित्यजातस्य कादाचित्कत्वम् । अत्र अन्यतरनिवेशेन च ध्वंसे प्रागभावप्रतियोगित्वस्य प्रागभावे च ध्वंसप्रतियोगित्वस्य सत्त्वान्नाव्याप्तिः । नित्ये तु तदुभयासत्त्वान्न प्रसङ्गः ( बौद्ध० शि० ) ।

**कामः**—त्रयोदशी । यथा नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः । कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासराः ॥ ( पुरु० चि० पृ० १०० ) इत्यादौ कामशब्दस्यार्थः ।

**कामरूपित्वम्**—कर्मादिनिरपेक्षस्य स्वेच्छयैवानन्तसलक्षणविलक्षणसरूपकरणाधिष्ठातृत्वम् ( सर्व० सं० पृ० १६७ नकुली० ) ।

**काम्यत्वम्**—[ क ] अभिलाषविषयत्वम ( मु० गु० पृ० २२० ) । यथा सुखं तु जगतामेकं काम्यं धर्मेण जन्यते ( भा० प० गु० श्लो० १४६ ) इत्यादौ सुखस्य काम्यत्वम् । [ ख ] फलेच्छाधीनेच्छाविषयत्वम् । [ ग ] फलकामनाधीनकर्तव्यताकत्वं वा । यथा भोजनादेर्ज्योतिष्टोमादेश्च काम्यत्वम् ( त० प्र० ४ पृ० १०३ ) । [ घ ] आरब्धकर्मोत्पत्तिकामनाधीनकामनाविषयत्वम् इति केचित् ( मू० म० १ ) ।

**कायिकः**—( नमस्कारः ) करशिरःसंयोगाद्यनुकूलचेष्टाविशेषः ( मू० म० १ मङ्ग० पृ० १०५ ) । यथा देवदत्तः कराभ्यां यज्ञदत्तं नमस्करोतीत्यादौ कायिको नमस्कारः ।

**कारकम्**— [ क ] यद्धातूपस्थाप्ययादृशार्थे अन्वयप्रकारीभूय भासते यः सुबर्थः स तद्धातूपस्थाप्यतादृशक्रियायां कारकम् । यथा वृक्षात्पतति व्याघ्राद्बिभेतीत्यादौ ब्राह्मणाय ददाति पुत्राय क्रुध्यतीत्यादौ दात्रेण छिनत्ति घटत्वेन जानातीत्यादौ स्थाल्यां पचति शुक्तौ भासत इत्यादौ

ग्रामं गच्छति घटं पश्यतीत्यादौ चैत्रेण पच्यते घटेन भूयत इत्यादौ च पतप्रभृतिधात्वर्थे पतनादौ पञ्चम्याद्युपस्थापितो विभागादिः प्रकारीभूय भासत इति तत्तद्धातूपस्थापिततत्तत्क्रियायां विभागादिकं प्रकृते कारकम् । [ ख ] यादृशेन नामार्थेनावच्छिन्नस्य सुबर्थस्य यादृशधात्वर्थेन्वयः स तादृशधात्वर्थे कारकतया व्यपदिश्यते । तेन वृक्षात्पततीत्यादौ वृक्षादेरपि पतनादिक्रियायामपादानत्वादिकारकव्यवहारः । [ ग ] क्रियाप्रकारीभूतोर्थः कारकम् इति शाब्दिकाः स्मरन्ति ( श० प्र० श्लो० ६६ पृ० ७७ ) । [ घ ] कारकत्वं च क्रियान्वितविभक्त्यर्थान्वितत्वम् । अस्ति च कर्मादौ क्रियान्वितसुब्विभक्त्यर्थान्वय इति लक्षणसमन्वयः । चैत्रस्य तण्डुलं पचतीत्यादौ तु संबन्धिनि चैत्रादौ षष्ठ्यर्थसंबन्धस्य तण्डुलादिनामार्थान्विततया क्रियानन्वितत्वान्नातिव्याप्तिः । चैत्रस्य पचतीत्यादावपि तण्डुलादिपदाध्याहारेणैव बोधः । षष्ठ्यर्थसंबन्धस्य नामार्थेनैव तथा क्रियायाः कर्मत्वादिनैव साकाङ्क्षतया परस्पराकाङ्क्षाविरहात् । ओदनस्य पक्ता मैत्रस्य पाकः इत्यादौ कर्मत्वकर्तृत्वार्थिका षष्ठी कारकविभक्तिरेव । कर्तृकर्मणोः कृति ( पा० सू० २।३।६५ ) इत्यनेन तद्विधानात् । अत एव संबन्धस्य न कारकत्वम् । क्रियायोगाभावात् । [ ङ ] क्रियाप्रकारीभूतोर्थः कारकं तच्च षड्विधम् । कर्तृकर्मादिभेदेन शेषः संबन्ध इष्यते ॥ इति शाब्दिकाः वदन्ति । अत एव गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैः इत्यादौ सा लक्ष्मीरुपकुरुते यथा परेषाम् इत्यादौ च रोगे विपत्तौ इत्यादिनाम्नोः यथाक्रमम् अध्याहारेणैव बोधः । अयं भावः । अत्र षष्ठ्यर्थसंबन्धस्याध्याहृतनामार्थेनैवान्वयः न तु क्रियया इति नात्र कारकषष्ठी इति ( का० व्या० पृ० १ ) । अत्र गदाधरभट्टाचार्यास्तु रोगे इति पदस्य नाध्याहारः कर्तव्यः । षष्ठ्यर्थसंबन्धस्य धात्वर्थेन्वयेपि नेयं कारकविभक्तिः किंतूपपदविभक्तिरेवेत्याहुः ( ग० व्यु० का० २ ख० २ पृ० ५६ ) । यदि अध्याहारमन्तरा क्रियायां षष्ठ्यर्थसंबन्धान्वयः प्रामाणिकः तदा [ च ] क्रियान्वितकर्तृत्वकर्मत्वादिषट्कान्यतमान्वयित्वम् कारकत्वं बोध्यम् ।

अत एव च चर्मणि द्वीपिनं हन्तीत्यादौ निमित्तादेरपि न कारकत्वम् इति । एता उपपदविभक्तयः न तु कारकविभक्तयः इति ( का० व्या० पृ० १ ) ( श० प्र० पृ० ७७—७८ )। शाब्दिकास्तु [ छ ] क्रियाजनकत्वयोग्यताबुद्धिविषयत्वम् कारकत्वमित्याहुः ( ल० म० सुब० पृ० ७९ )। [ ज ] क्रियाहेतुः ( म० प्र० पृ० ६ )। यथा चैत्रो ग्रामं गच्छतीत्यादौ चैत्रः कारकम् । अत्र क्रियां कुर्वद्धि कारकम् इति योगो द्रष्टव्यः ( म० प्र० पृ० ५ )। [ झ ] कारकत्वं क्रियाजनकत्वम् । भाष्ये करोति क्रियां निर्वर्तयतीति व्युत्पत्तिप्रदर्शनात् । ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वम् । पुत्रेणान्यथासिद्ध्या तत्त्वाभावात् । अत एवैषां क्रियायामेवान्वयः । क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन क्रियाया जनकाकाङ्क्षया च तत्रैवान्वयस्यौचित्यात् । सर्वेषां च कारकाणां स्वस्वावान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वं बोध्यम् । असंनिहितसंप्रदानस्यापि दातृबुद्धिस्थत्वावश्यकत्वेन स्वज्ञानस्य पूर्वकालत्वेनैव जनकत्वम् । एवं स्तोकं पचतीत्यादौ फलस्यापि । घटं करोति स्मरतीत्यादौ बुद्धघटादेः पूर्वकालत्वेन स्मृत्यादिनिष्पादकत्वं बोध्यम् ( श० शेख० का० पृ० १७४ )। अत्र स्वज्ञानस्येत्यत्र स्वपदेनासंनिहितं संप्रदानं बोध्यम् । स्तोकं पचतीत्यत्र च फलस्य कथं कर्मत्वं तदुच्यते । पच्धात्वर्थो विक्लित्त्यनुकूलो व्यापारः । तत्र विक्लित्तिरूपफलस्य व्यपदेशिवद्भावेन फलाश्रयत्वात्कर्मत्वम् । तद्वाचकौ च द्वौ पच्धातुः स्तोकपदं चेति । तत्र धातोः प्रातिपदिकसंज्ञाया अभावात्तस्माद्द्वितीया न भवति । स्तोकशब्दस्य च तत्सत्त्वाद्द्वितीया भवति । कारकं षड्विधम् । अपादानत्वम् संप्रदानत्वम् करणत्वम् अधिकरणत्वम् कर्मत्वम् कर्तृत्वम् इति ( श० प्र० पृ० ७८ )। तदुक्तम् कर्ता कर्म च करणं संप्रदानं तथैव च । अपादानाधिकरणमित्याहुः कारकाणि षट् ॥ इति । कारकं प्रकारान्तरेणापि द्विविधम् । उक्तम् अनुक्तं चेति । तत्र धात्वर्थस्य विशेष्यतया तिङाद्यनुभाव्यत्वमेव कारकस्योक्तत्वम् । तद्विशेषणतया तदनुभाव्यत्वमेव चानुक्तत्वम् । तत्र उक्तं कारकं यथा पचति

पच्यते इत्यादौ तिङा पाचकः पच्यमान इत्यादौ च कृता कर्तृत्वं कर्मत्वं च धात्वर्थविशेष्यत्वेनानुभाव्यते । तथा पचनं काष्ठम् दानीयो द्विजः भीमो गजः शयनं गृहमित्यादौ यथाक्रमं करणत्वादि धात्वर्थविशेष्यत्वेनानुभाव्यते । व्युत्पत्तिवैचित्र्येण पदार्थैकदेशेपि पचति पच्यते इत्यादौ कर्तृत्वादौ धात्वर्थस्य पाकादेरन्वयात् । विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ( कुमारसं० २।५५ ) सेवितुं सांप्रतं विज्ञैर्गुरुः परुषवागपि इत्यादौ तु निपातेन क्वचित् कर्मत्वकारकस्योक्तत्वम् ( श० प्र० पृ० १०५ ) । अनुक्तं तु कारकं यथा रामेण हतो वालीत्यादौ रामनिष्ठं कर्तृत्वम् । ग्रामं गच्छतीत्यादौ ग्रामनिष्ठं कर्मत्वम् । शरैः शातितपत्र इत्यादौ शरनिष्ठम् काष्ठैः पचतीत्यादौ च काष्ठनिष्ठं करणत्वम् । विप्राय ददातीत्यादौ विप्रनिष्ठं संप्रदानत्वम् । एतादृशमनुक्तं कारकं भवति । [ ञ ] कर्तृत्वादिव्यपदेशकारिणी क्रिया कारकम् । यथा कारके ( १।४।२३ ) इति पाणिनिसूत्रे भाष्यं यावद्ब्रूयात्क्रियायामिति तावत्कारके इति । अधिकं तु ( श० प्र० पृ० ११४ ) तत्र द्रष्टव्यम् ।

**कारकविभक्तिः**—( सुप् ) धात्वर्थे प्रकारीभूतार्थबोधिका विभक्तिः । यथा ग्रामं गच्छति घटं पश्यति वृक्षात्पतति इत्यादौ द्वितीयापञ्चम्यादिः कारकविभक्तिरुच्यते । अत्र गच्छतिपश्यत्याद्यर्थे गमनदर्शनादौ द्वितीयाद्युपस्थापितकर्मत्वादि प्रकारीभूय भासत इति द्वितीयादिः कारकविभक्तिर्भवति इति विज्ञेयम् ( श० प्र० पृ० ७७ ) । कारकविभक्तित्वं च क्रियाजनकत्वसमानाधिकरणकर्त्रादिषट्कान्यतमार्थत्वम् ( ल० श० शे० पृ० १९३ ) ।

**कारकार्था**—वृत्त्या कारकस्य बोधिका सुब्विभक्तिः । यथा वृक्षात्पतति ग्रामं गच्छतीत्यादौ कारकार्था पञ्चम्यादिविभक्तिः ( श० प्र० पृ० ७७ ) ।

**कारकार्थान्यार्था**—[ क ] वृत्त्या कारकार्थबोधकान्या सुब्विभक्तिः ( श० प्र० श्लो० ६६ पृ० ७७ ) । यथा नीलो घट इत्यादौ मतविशेषे अभेदार्थबोधिका एकत्वबोधिका वा प्रथमा विभक्तिः । [ ख ] यत्सुपो यादृशार्थो न प्रकारीभूय भासते । धात्वर्थे यादृगर्थे सा कारकान्यार्थ-

सुब् भवेत् ॥ तथा हि । प्रथमादीनां सप्तानां विभक्तीनामेकत्वादयोर्था न धात्वर्थे प्रकारीभूय भासन्ते । किंतु प्रकृत्यर्थे । पाक इत्यादावपि सुबर्थसंख्या न धात्वर्थे प्रकारः । किंतु पचनादिस्वरूपे नामार्थे इति । अथवा [ ग ] समासनिविष्टस्य धातोरर्थे इति वक्तव्यम् । न हि ग्रामगत इत्यादौ धात्वर्थे कर्मत्वादिरिवैकत्वादिरपि सुबर्थः प्रकारः । अत एव प्रासादात्प्रेक्षत इत्यादौ ल्यबर्थस्य धात्वर्थे प्रकारत्वेपि तदर्थकपञ्चम्यां नाव्याप्तिः ( श० प्र० श्लो० ९२ पृ० ११४ ) । अत्रेदमवधेयम् । कारकविभक्तिभिन्नविभक्त्यर्थस्य क्रियायामनन्वयः इति न नियमः । तथा हि मणिकारमते तस्माज्जानाति इत्यादौ ज्ञानादिरूपधात्वर्थे हेतुविभक्त्यर्थस्यान्वयो दृष्टः । तस्मात् स्थीयते इत्यादौ च सर्वमत एव धात्वर्थस्थित्यादौ हेतुविभक्त्यर्थस्यान्वयो दृष्टः । गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैः इत्यादौ षष्ठ्यर्थसंबन्धस्यापि धात्वर्थेन्वयो दृष्टश्च इति न तादृशनियमोङ्गीकर्तव्यः ( ग० व्यु० का० २ ख० २ पृ० ५६ ) । अत्र रोगे इति पदमध्याहार्य तदर्थे षष्ठ्यर्थस्यान्वयः कार्यः इत्यपि केचिद्वदन्ति इति प्रागुक्तमेव ।

**कारणगुणपूर्वकत्वम्**—कारणगुणेन कार्ये ये गुणा उत्पद्यन्ते ते कारणगुणपूर्वका रूपादयो वक्ष्यन्ते ( मु० गु० पृ० १९३ ) । अग्रिमशब्दे दृश्यम् ।

**कारणगुणोत्पन्नगुणत्वम्**—स्वाश्रयसमवायिमात्रसमवेतस्वसजातीयगुणजन्यवृत्तिः पृथक्त्वसंख्यात्वातिरिक्ता भावनावृत्त्यन्या च या जातिः तादृशजातिमत्त्वे सत्यपाकजत्वम् ( दि० गु० पृ० १९४ ) । भवति हि घटादीनां रूपादिकं स्वाश्रयघटादिसमवायिकपालादिरूपादिमात्रासमवायिकारणकम् ( प० मा० ) । स्वम् घटादीनां रूपादिकम् । तस्याश्रयः घटादिः । तस्य समवायि कपालम् । तन्मात्रे तस्मिन्नेव समवेतः स्वसजातीयो गुणः कपालादिगतरूपादिः । तेन जन्यम् घटादिगतमपाकजं रूपादि । तत्र वर्तमाना जातिः अपाकजरूपत्वादिः । तद्वत्त्वे सति इत्यर्थः । स्वसजातीयगुणेत्यत्र साजात्यं च गुणत्वव्याप्यव्याप्यजात्या

विवक्षणीयम्। तेन अवयवावयविनोरेकत्वयोः संख्यात्वेनापि साजात्यमभ्युपगम्य तादृशैकत्वाभ्यां जनितेवयवावयविद्वित्वादौ नातिव्याप्तिः (दि० गु० प० १९४)। कारणगुणोत्पन्नगुणाश्च अपाकजा रूपरसगन्धानुष्णस्पर्शाः अपाकजं द्रवत्वम् स्नेहवेगगुरुत्वएकत्वानि एकपृथक्त्वम् परिमाणम् स्थितिस्थापकश्चेति (भा० प० गु० श्लो० ९६–९७)। अत्र पृथिवीमात्रवृत्तीनां केषांचित् पाकजरूपरसगन्धस्पर्शानाम् कारणगुणपूर्वकत्वाभावात् अपाकजाः इत्युक्तम् (मु० गु० पृ० १९४)। वेगोत्र कर्माजन्यो वेगजन्यः प्राह्यः (प० मा०)। करणगुणोत्पन्नत्वं च [क] स्वाश्रयसमवायिसमवेतगुणजन्यत्वम् (दि० गु० पृ० १९४)। अत्र स्वम् अवयविजलस्य रूपादि। तस्याश्रयः समवायि वा समवायेन संबन्धेनाश्रयः अवयविभूतं जलम्। तस्य समवायि अवयवभूतं जलम्। तत्र समवेतो गुणः अवयवभूतजलवृत्ती रूपादिः। तेन जन्यः तस्य भाव इति विग्रहादिकं ज्ञेयम्। [ख] स्वसमवायिसमवायिसमवेतगुणजन्यत्वम् (ल० व० पृ० ३६)। यथा कार्यजलसमवेतरूपस्य कारणगुणोत्पन्नत्वमेव। अत्र तादृशगुणजन्यत्वं च तादृशगुणनिष्ठासमवायिकारणतानिरूपितकार्यताशालित्वम् (ल० व० पृ० ३६)।

**कारणम्**—१ [क] कारणं हि तद्भवति यस्मिन् सति यद्भवति यस्मिन्नसति यन्न भवति (न्या० वा० १ पृ० २४)। अत्रेदं बोध्यम्। कारणत्वं द्विविधम्। वैदिकम् लौकिकं च। तत्र वैदिकम् अन्वयमात्रावगम्यम्। लौकिकं तु अन्वयव्यतिरेकोभयगम्यम् इति (त० व० परि० २ श्लो० ५० पृ० ४०)। पुनरपि न्यायमते कारणत्वं द्विविधम्। फलोपहितत्वम् स्वरूपयोग्यत्वं चेति। तत्राद्यं यथा अनुमितिं प्रति परामर्शस्य कारणत्वम्। फलोपहितत्वं च उपधायकत्वशब्देनापि व्यवह्रियते। द्वितीयं यथा अरण्यस्थदण्डादिसाधारणम् जनकतावच्छेदकलक्षणं दण्डत्वादिस्वरूपं घटकारणत्वम्। [ख] यस्य कार्यात्पूर्वभावो नियतोनन्यथासिद्धश्च तत् (त० भा० पृ० २)। [ग] अनन्यथासिद्धकार्यनियतपूर्ववृत्ति। यथा तन्तुवेमादिकं पटस्य कारणम्

( त० भा० पृ० २ ) ( त० सं० ) । यथा वा नवीनानां मणिकारादीनां मते प्रतिबन्धकसंसर्गाभावोपि कार्यमात्रं प्रति कारणम् । स च प्रतिबन्धकात्यन्ताभावः । अनन्यथासिद्धेत्यस्यार्थश्च अन्यथासिद्धभिन्नं अन्यथासिद्धिशून्यम् यत् कार्यनियतपूर्ववृत्ति तदिति । अत्र व्यापारेण व्यापारिणो नान्यथासिद्धिः इति नियमोङ्गीकर्तव्यः । तेन कुठारेण वृक्षं छिनत्तीत्यादौ कुठारादीनां परंपरया छेदनक्रियाजनककुठारदारुसंयोगजनकविधया कारणत्वेपि नान्यथासिद्धिः इति । कार्यनियतेत्यस्यार्थश्च कार्यान्नियता अवश्यंभाविनी पूर्ववृत्तिः पूर्वक्षणवृत्तिः यस्य तत्तथा इति ( सि० च० १ पृ० ५० ) । अत्र घटं प्रति रासभादेः कारणत्वनिरासाय नियतपदम् । यद्यपि अनियतरासभादेस्तृतीयान्यथासिद्धत्वेन ( तर्कदीपिकाद्युक्ततृतीयान्यथासिद्धलक्षणाक्रान्तत्वेन ) कारणलक्षणघटकेनैव अनन्यथासिद्धेति विशेषणेन रासभादेः कारणत्वनिरासान्नियतपदं व्यर्थमेव तथापि घटसामान्यं प्रति रासभसामान्यस्य कारणत्वनिरासाय नियतपदमावश्यकम् । यदि नियतपदं लक्षणे न निवेश्यते तदा तत्र पूर्वोक्ततृतीयान्यथासिद्धेरसंभवेनातिव्याप्तिः स्यात् इति । नियतपूर्ववृत्तित्वं चाव्यवहितपूर्वकालावच्छेदेन कार्यदेशे सत्त्वम् । न चेदं रासभसामान्येस्ति अतो नातिव्याप्तिः ( त० कौ० १ पृ० ८ ) ( नील० १ पृ० १६ )। अत्र प्राभाकरास्तु कारणमात्रं कार्यसहभावनिरूपकमेव सत् कार्यकारि इति प्रतिबन्धकाभावोपि कार्यसहभावेन कारणम् इति च वदन्ति । कार्यसहभावनिरूपकत्वं चात्र कार्योत्पत्तिक्षणावच्छिन्ना याधिकरणता तन्निरूपकत्वम् । स्वोत्पत्ति स्वाव्यवहितपूर्वत्व एतदन्यतरसंबन्धेन यदा कार्यं तदा प्रतिबन्धकाभावादिः इति प्रत्यासत्त्या कारणम् इति ( मू० म० १ ) । यथा दाहोत्पत्तिकाले मण्याद्यभावः । [ घ ] कार्योत्पादकम् । अत्रेयं व्याप्तिरनुसंधेया यद्विशेषयोः कार्यकारणभावः असति बाधके तत्सामान्ययोरपि इति । यथा घटविशेषदण्डविशेषयोः कार्यकारणभावे घटसामान्यदण्डसामान्ययोरपि कार्यकारणभावो निराबाध एव इति । अत्र घटविशेषं प्रति दैवादागतरासभस्य कारणत्वे घटसामान्य-

रासभसामान्ययोरपि कार्यकारणभावापत्तिः । तद्वारणाय असति बाधके इत्युक्तम् । तथा च तत्रान्यथासिद्धत्वरूपबाधकसत्त्वेन न तयोः कार्यकारणभावः इति । कारणं तावत् द्विविधम् । मुख्यम् अमुख्यं च । तत्र घटादिकं प्रति मृदादिकं कपालादिकं वा मुख्यम् । यथा वा अभावप्रत्यक्षे इन्द्रियम् अनुमितौ च परामर्शः इत्यादि मुख्यं कारणं भवति । मुख्यभिन्नं त्वमुख्यं कारणम् । तच्च सहकारिकारणमुच्यते । यथा अभावप्रत्यक्षे योग्यानुपलब्धिः अनुमितौ च सहचारज्ञानं कारणम् अमुख्यं भवति । मुख्यमपि न्यायमते त्रिविधम् । समवायि असमवायि निमित्तं चेति । तत्र घटादिकं प्रति कपालादिकं समवायिकारणम् । कपालद्वयसंयोगादि असमवायिकारणम् । दण्डादयो निमित्तकारणानि इति । अत्रेदं बोध्यम् । एतत् त्रिविधं कारणम् भावकार्याणामेवास्ति । न त्वभावस्य । ध्वंसस्य तु निमित्तकारणमात्रम् । ध्वंसस्य समवायाभावेन समवाय्यसमवायिनोरभावात् इति (प्र० प्र० १ पृ० २)। इदं च कारणत्रयम् भावकार्यस्यैव । अभावस्य तु निमित्तमात्रम् इति तर्कदीपिकायामप्युक्तम् । अत्रायं नियमः । समवायिकारणं द्रव्यमेव भवति । असमवायिकारणं तु गुणः कर्म च भवति । असमवायिकारणं गुणकर्मातिरिक्तं न भवतीत्यर्थः (वै० १०।२।१–६) (मु० १ पृ० ५६)। इदं च बोध्यम् । समवायिकारणासमवायिकारणे असाधारणे एव कारणे भवतः । निमित्तकारणं तु साधारणासाधारणभेदेन द्विविधमप्यस्ति । तत्र साधारणनिमित्तकारणानि चाष्टविधानि । ईश्वरः तज्ज्ञानेच्छाकृतयः दिक्कालौ अदृष्टम् (धर्माधर्मौ) प्रागभावश्चेति । प्रतिबन्धकसंसर्गाभावस्तु कार्यमात्रं प्रति साधारणं निमित्तकारणमेव । स च प्राचीननैयायिकानां मते प्रागभावप्रध्वंसअत्यन्ताभावएतत्त्रयम् । मणिकारादीनां नव्यनैयायिकानां मते तु अत्यन्ताभाव एव इति विवेकः (दि० १ मङ्ग० पृ० ११) । मायावादिवेदान्तिनस्तु अभावस्य कारणत्वं नेच्छन्ति । असाधारणनिमित्तकारणानि तु कार्यभेदेनानेकविधानि । अमुख्यं कारणं तु असाधारणं निमित्तमेव अनेकधा चेति

२ उद्देश्यम् । यथा तस्यागमनकारणम् इत्यादौ कारणमुद्देश्यम् । प्रयोजनं फलं वेत्यर्थः । फलस्य कारणत्वं चेच्छाद्वारा । उपायेच्छां प्रति फलेच्छायाः कारणत्वात् । सर्वो हि लोकः फलमिच्छन्नेव तदुपाये प्रवर्तमानो दृश्यते इति तस्य तथात्वं बोध्यम् ( वाच० ) । ३ समस्तसृष्टिसंहारानुग्रहकारि कारणम् ( सर्व० सं० पृ० १६८ नकुली० ) ।

**कारुण्यम्**—१ स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा । यथा परमेश्वरस्य जगन्निर्माणे करुणया प्रवृत्तिः ( सर्व० सं० पृ० २२५ अक्ष० ) । २ करुणाविषयत्वम् । यथा दयासमुद्रे स तदाशयेतिथीचकार कारुण्यरसापगा गिरः ( नैष० ) इत्यादौ ( वाच० ) ।

**कार्पण्यम्**—( दोषः ) उचितव्ययाकरणेनापि धनरक्षणेच्छा ( गौ० वृ० ४।१।३ ) । यथा कृपणो धनाढ्य इत्यादौ । कार्पण्यमपि तृष्णाप्रभेद एव ( गौ० वृ० ४।१।३ ) ।

**कार्मिकम्**—कर्मणा चित्रेण निर्मितम् । यत्र निष्पन्ने पटे चक्रस्वस्तिकादिकं चित्रं सूत्रैः क्रियते तत्कार्मिकमित्युच्यते ( मिताक्षरा २।१८० ) ।

**कार्यकारणभावः**—यत्किंचिन्निष्ठकार्यतानिरूपितकारणत्व यत्किंचिन्निष्ठकारणतानिरूपितकार्यत्व एतदन्यतरात्मको धर्मः । यथा कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमो दर्शनान्न न दर्शनात् ॥ इत्यादौ धूमधूमध्वजयोः कार्यकारणभावः ( सर्व० सं० पृ० १६ बौद्ध० ) । अत्र व्युत्पत्तिः कार्यं च कारणं च तयोर्भावः इति द्रष्टव्या । अयं च हेतुहेतुमद्भाव इत्यप्युच्यते । एकस्य स्वकारणापेक्षया कार्यत्वे तदपेक्षया चान्यस्य कारणत्वम् इति ( वाच० ) । अत्रेदं बोध्यम् । कार्योत्पत्तिनिश्चयेनाविनाभावो निश्चीयते । तदुत्पत्तिनिश्चयश्च कार्यहेत्वोः प्रत्यक्षोपलम्भानुपलम्भपञ्चकनिबन्धनः । तथाहि कार्यस्योत्पत्तेः प्रागनुपलम्भः कारणोपलम्भे सत्युपलम्भः उपलब्धस्य पश्चात् कारणानुपलम्भादनुपलम्भः इति पञ्चकारण्या धूमधूमध्वजयोः कार्यकारणभावो निश्चीयते ( सर्व० सं० पृ० १७ बौद्ध० ) इति ।

**कार्यम्**—१ [ क ] प्रागभावप्रतियोगि ( त० सं० ) । यथा घटपटादि सर्वम् प्रागभावभिन्नम् अनित्यजातं कार्यं भवति । अत्रायमाशयः । घटोत्पत्तेः पूर्वं इह घटो भविष्यति इति या प्रतीतिर्जायते तत्प्रतीतिविषयीभूतो यः अभावः स एव घटप्रागभावः तत्प्रतियोगि घटादिरूपं कार्यम् इति ( न्या० बो० १ पृ० ८ ) । [ ख ] कारणपश्चाद्भावि । तच्च द्व्यणुकत्र्यणुकादिभेदेनानन्तविधं भवति ( त० कौ० १ पृ० ३ ) । कार्यद्रव्यस्योत्पत्तिविनाशयोः क्रमस्तु सृष्टिशब्दप्रलयशब्दव्याख्यानावसरे संपादयिष्यते । अत्र कार्योत्पत्तिप्रकारो मतभेदेन प्रसरति । असतः सज्जायत इति सौगताः संगिरन्ते । सतोसज्जायत इति नैयायिकादयः । सतो विवर्त ( अधिष्ठानज्ञानेन निवर्त्यम् ) कार्यजातम् न वस्तुसदिति मायावादिनो वेदान्तिनः । सतः सज्जायत इति सांख्याः ( सर्व० सं० पृ० ३२१ सांख्य० ) । तस्यायमाशयः । अत्र कल्पचतुष्टयं भवति । असतः सत् असतोसत् सतः सत् सतोसत् इति । तत्र द्वितीयकल्पो नैव संभवति । तृतीयकल्पे पक्षद्वयं संभवति । सतः सकाशाद्व्यावहारिकं सत् सतः सकाशात्पारमार्थिकं सदिति । तत्राद्यः पक्षो मायावादिनां वेदान्तिनाम् । अन्यस्तु सांख्यानाम् । तत्र असतः सदिति वादिनां सौगतानामयमाशयः । असतः कारणात्सत्कार्यं जायत इति । सौगता बौद्धाः । उत्पत्तेः पूर्वमविद्यमानं कार्यं सतः कारणाज्जायत इति नैयायिकानामाशयः । मायावादिनां वेदान्तिनां सांख्यानां चाभिप्राय उक्त एव । विस्तरस्तु सर्वदर्शनसंग्रहटीकायां ( पृ० ३२१ ) द्रष्टव्यः । २ यागादिकृतिसाध्यमपूर्वं कार्यमिति प्राभाकराः । ३ आदिश्यमानो वर्णादिः कार्यमिति शाब्दिकाः । ४ आरोग्यं कार्यमिति भिषजः । ५ जन्मलग्नावधि दशमस्थानं कार्यमिति ज्योतिषज्ञाः । ६ उद्देश्यं कार्यमिति व्यवहारज्ञाः । ७ प्रयोजनमिति काव्यज्ञा वदन्ति ( वाच० ) ।

**कार्यसमः**—( जातिः ) [ क ] प्रयत्नकार्यानेकत्वात्कार्यसमः ( गौ ५।१।३७ ) । प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति । यस्य प्रयत्नानन्तर-

१ अत्र क्वचित् कारणसमेति पाठः । तस्याप्ययमेवार्थः ( नील० पृ० ४५ ) ।

मात्मलाभः तत् खल्वभूत्वा भवति । यथा घटादिकार्यमनित्यमिति च भूत्वा न भवतीत्येतद्विज्ञायते । एवमवस्थिते प्रयत्नकार्यानेकत्वादिति प्रतिषेध उच्यते । प्रयत्नानन्तरमात्मलाभश्च दृष्टो घटादीनाम् व्यवधानापोहाच्चाभिव्यक्तिर्व्यवहितानाम् । तत्किं प्रयत्नानन्तरमात्मलाभः शब्दस्याहो अभिव्यक्तिरिति विशेषो नास्ति । कार्याविशेषेण प्रत्यवस्थानं कार्यसमः ( वात्स्या० ५।१।३७ ) । [ ख ] सामान्यत उक्ते हेतोरनभिमतविशेषनिराकरणेन प्रत्यवस्थानम् । यथा शब्दः अनित्यः प्रयत्नानन्तरीयकत्वादित्युक्ते प्रयत्नानन्तरीयकत्वं प्रयत्नकार्ये घटादौ तथा व्यवधानापोहेन प्रयत्नानन्तरोपलभ्यमाने कीलकादावपि दृष्टम् । तत्र द्वितीयं न जन्यत्वसाधकम् । आद्ये त्वसिद्धम् ( गौ० वृ० ५।१।३७ ) । [ ग ] वाद्युक्तहेतोरन्यकार्येणापि संभवाभिधानम् । यथा शब्दः अनित्यः प्रयत्नानुविधायित्वादित्यत्र प्रयत्नानुविधायित्वमुभयथापि संभवति । घटादिवच्छब्दस्वरूपोत्पत्तौ जलादिवदावरकनिवृत्तौ च । उभयत्रापि प्रयत्नानुविधायित्वदर्शनात् । तथा च तस्यावरकनिवृत्तिरूपकार्यान्तरस्य संभवान्नानित्यत्वनियतत्वमिति ( नील० पृ० ४५ ) । [ घ ] असिद्धतां वादिहेतोरुक्त्वा तं साधयेत्स्वयम् । तद्दूषणान्मूलहेतुभङ्गः कार्यसमो मतः ॥ इति ( ता० र० परि० २ श्लो० १२७ ) । असिद्धदेशनाभासोयम् । अस्याकृतिगणत्वात्सूत्रानुपदर्शितानामपि परिग्रहः । यथा शाठीसमा अनुपकारसमेत्यादि ( गौ० वृ० ५।१।३७ ) ।

**कार्यान्वितत्वम्**—कार्यताबोधकपदप्रतिपाद्यार्थात्मककार्ययुक्तत्वम् । यथा प्राभाकरमीमांसकनये घटमानयेत्यादौ घटादिपदानामानयनादिरूपक्रियाविशिष्ट एव घटादौ शक्तिः इत्यत्र क्रियान्वितत्वम् । अन्विते शक्तिरिति तेषां मतम् । अयमभिप्रायः । कथंचिदुपस्थितपदार्थानां शाब्दबोधवारणाय तत्तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितित्वेन हेतुतायाः कल्पनीयतया अन्वयांशेपि शक्तिरपेक्षिता । अन्यथा तादृशसामान्यकार्यकारणभावभङ्गापत्तेः । एवं च अन्वितो घटपदवाच्यः इत्याकारकशक्तिज्ञानमेव शाब्दबोधप्रयोजकम् इति ( नील० ४ पृ० ३२) ।

प्राभाकरमते शक्तिग्रहप्रकारस्त्वित्थम् । प्रयोजकवृद्धेन घटमानय इत्युक्तम् । तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतः । तदवधार्य पार्श्वस्थो बालः घटानयनरूपं कार्यं घटमानयेति शब्दप्रयोज्यम् इत्यवधारयति । ततश्च घटं नय गामानय इत्यावापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति इति ( मुक्ता० ४ पृ० १७६ ) ( चि० ४ ) । अत्र नैयायिकास्तु चैत्र पुत्रस्ते जातः कन्या ते गर्भिणी इत्यादौ सिद्धार्थविषयकस्यापि शाब्दबोधस्योत्पत्तेर्न कार्यान्विते शक्तिः । अत एव यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपपन्नं च तत् सुखं स्वःपदास्पदम् ॥ इत्यर्थवादोपस्थिते सुखे वेदादेव स्वर्गपदस्य शक्तिग्रहः इति ( चि० ४ ) । अन्वयस्य वाक्यार्थतया भानसंभवादन्वयांशेपि शक्तिर्न कल्पनीया इति प्राहुः ( त० दी० ४ पृ० ३२ ) । अत्रायं निष्कर्षः । पदार्थसंसर्गस्य पदसमभिव्याहारबलादेव शाब्दबोधे भानसंभवात् तादृशसंसर्गांशेपि शक्तिर्न कल्पनीया इति ( नील० ४ पृ० ३२ ) ।

**कार्यैक्यम्**—( संगतिः ) एककार्यानुकूलत्वम् ( राम० २ पृ० १३४ ) । यथा अनुमितिलक्षणैककार्यानुकूलत्वसंगत्या पक्षधर्मतां निरूपयितुमाह ( दीधि० २ पृ० १२३ ) इत्यादौ व्याप्तिपक्षधर्मतयोरनुमितिलक्षणकार्यैक्यं संगतिः । इदं च एककार्यत्वमित्यप्युच्यते ।

**कालः**—१ ( द्रव्यम् ) [ क ] विभुत्वे सति दिगसमवेतपरत्वासमवायिकारणाधिकरणम् ( सर्व० सं० पृ० २१९ औलु० ) । तदर्थश्च दिश्यसमवेतं यत् परत्वस्यासमवायिकारणम् कालपिण्डसंयोगः तस्याधिकरणम् इति । दिशि अतिव्याप्तिवारणायदिगसमवेतेति । [ ख ] परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययकारणं द्रव्यम् ( वै० उ० ७।१।२५ ) ( भा० प० श्लो० ४७ ) । [ ग ] अतीतादिव्यवहारहेतुः ( त० सं० ) । तदर्थश्च अतीतः भविष्यद् वर्तमानः इति प्रतीतिप्रयोजकः व्यवहारस्तस्यासाधारणनिमित्तहेतुः । तेन व्यवहारस्य शब्दा-

त्मकत्वेन तस्याकाशे समवायसंबन्धेन सत्त्वेपि नाकाशेतिव्याप्तिः ( सि० च० १ पृ० १० )। [ घ ] सूर्यक्रियोपाधिवशादतीतानागतवर्तमानादिव्यवहारभाक् कालः ( प्र० प्र० )। [ ङ ] शाब्दिकास्तु शब्दतन्मात्रपरिणामः काल इत्याहुः ( ल० म० लका० प० २० )। [ च ] येन मूर्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते तं कालमित्याहुः। तस्यैव कयाचित्क्रियया युक्तस्याहरिति रात्रिरिति च भवति। कया क्रियया आदित्यगत्या। तयैवासकृदावृत्तया मास इति संवत्सर इति च भवति इति ( पात० म० भा० २।२।५ )। काललक्षणं तु कालिकसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितमधिकरणविधया निमित्तत्वम् ( दि० १।२ पृ० ८९ ) । कालिकसंबन्धावच्छिन्नाधिकरणत्वमेव कालत्वम् इति निष्कृष्टार्थः ( राम० १ काल० पृ० ८९ )। अथवा विभुत्वे सति कालिकपरत्वापरत्वासमवायिकारणसंयोगाश्रयत्वाद्युपाधिरूपं कालत्वम् ( प० मा० )। यद्वा अतीतादिव्यवहारजनकतावच्छेदकमुख्यविशेष्यत्वम् ( वाक्य० १ पृ० ५ )। कालसत्त्वे प्रमाणं चानुमानम्। तच्च परत्वापरत्वे सासमवायिकारणके भावकार्यत्वाद्घटवत् इति। अयं भावः। ज्येष्ठे परत्वप्रत्ययः कनिष्ठे अपरत्वप्रत्ययः। स च परत्वापरत्वगुणविशेषाधीनः। परत्वापरत्वे च सासमवायिकारणके भावकार्यत्वात्। असमवायिकारणं च तयोः कालपिण्डसंयोग एव। तदाश्रयः काल इति ( दि० १ पृ० ९१ )। तथा च ज्येष्ठत्वकनिष्ठत्वज्ञानाधीनपरत्वापरत्वानुमेयः कालः सिद्धः ( त० कौ० पृ० ३ )। अत्र सूत्रम् अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि ( वै० २।२।६ ) इति। अयमर्थः। इतिशब्दः प्रकारार्थः प्रत्येकमभिसंबध्यते। अपरं चिरमित्यादयः प्रत्ययाः काललिङ्गानीति। बहुतरदिवाकरक्रियाविशिष्टशरीरज्ञानात् कालिकपरत्वोत्पत्तिरिति सिद्धान्तः। तज्ज्ञानं विशेषणविशेष्योभयसंबन्धघटकसापेक्षं साक्षात्संबन्धाभावे सति विशिष्टज्ञानत्वात् लोहितः स्फटिकः इति ज्ञानवत् इत्यनुमानेन तादृशसंबन्धघटकविधया कालः सिध्यति। तादृशसंबन्धश्च स्वसमवायिसंयुक्तसंयोगः। स च कालः जगदाधारः कार्यमात्रे

निमित्तकारणं चेति ( सि० च० पृ० १० ) । किंच इदानीं घटः इति प्रतीतेः संभवेन सूर्यक्रियाया घटादेश्च संबन्धोवश्यं स्वीकर्तव्यः । स च स्व-(क्रिया-)-समवायि-(तपन-)-संयोगिसंयोग एव भवति । तद्धटकतया कालः सिध्यति इति ( दि० १ पृ० ९१ ) ( प० मा० ) । सांख्यास्तु काल आकाशेन्तर्भवतीति कालमतिरिक्तं न स्वीकुर्वन्ति ( सां० कौ० )। दिक्कालौ नेश्वरादतिरिच्येते इतीश्वरात्मक एव कालः इति दीधितिकृद्रघुनाथतार्किकशिरोमणिरघुदेवरामभद्रादय आहुः । एतन्मते काल ईश्वरान्नातिरिक्तः । किंतु क्षणा एवेश्वरादतिरिक्ता इदानीम् इत्यादिव्यवहारविषयाश्चेति ज्ञेयम् ( वाच० ) । स च कालः एकः विभुः नित्यश्च ( वै० २।२।६–९ ) ( ७।१।२५ ) ( त० सं० ) । काले पञ्च गुणा वर्तन्ते । एकत्वसंख्या परममहत्परिमाणम् पृथक्त्वम् संयोगः विभागश्चेति ( भा० प० श्लो ३३ ) ( त० भा० पृ० ३१ ) । अत्रेदमवधेयम् । कालस्त्वेकोपि उपाधिभेदात् अतीतानागतक्षणदिनवर्षादिव्यवहारविषयः ( मु० १ पृ० ९१ ) । काल एकोपि उपाधिभेदात्त्रिविधः । अतीतः अनागतः वर्तमानश्चेति ( त० कौ० १ पृ० ३ ) । तत्र भूतभविष्यत्कालावपि प्रत्येकमद्यतनानद्यतनभेदेन द्विविधौ इत्यादि ग्रन्थान्तरे द्रष्टव्यम् । कालोपाधिस्तु कालोपाधिशब्दव्याख्यानावसरे संग्रहीष्यते । कलनात्सर्वभूतानां स कालः परिकीर्तितः ( वि० ध० पु० चि० पृ० १ ) । कालः सर्वकार्याणां चोत्पत्तिस्थितिविनाशहेतुः । तद्व्यपदेशात् । क्षणलवनिमेषकाष्ठाकलामुहूर्तयामअहोरात्रअर्धमासमासऋतुअयनसंवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुश्च । काललिङ्गाविशेषादेकत्वं सिद्धम् । कारणे कालः ( वै० ७।१।२५ ) इति वचनात्परममहत्परिमाणम् । कारणपरत्वात् ( ७।२।२२ ) इति वचनात्संयोगः । तद्विनाशाद्विभागः ( प्रशस्त० पृ० ७–८ ) । सोयं क्षणलवादिः कालः कालिकवृत्तेरव्याप्यवृत्तिताया नियामकः जन्यमात्रे साधारणनिमित्तकारणं च । तत्र प्रमाणम् । पौरुषं दैवसंपत्त्या काले फलति पार्थिव । यत्र एतन्मनुष्यस्य पिण्डितं स्यात्कलावहम् ॥ इति । कृषेर्वृष्टिसमायोगे दृश्यन्ते फलसिद्धयः ।

तास्तु काले प्रदृश्यन्ते नैवाकाले कथंचन ॥ इति च द्रष्टव्यम् ( वाच० ) । कालोतीन्द्रिय इति नैयायिकसिद्धान्तः । तथा च दिग्विपरीतपरत्वापरत्वानुमेयः काल इति ( त० भा० पृ० ३१ ) । प्राभाकराश्च कालः षडिन्द्रियवेद्य इति अमन्यन्त ( म० प्र० पृ० ६५ ) । मायावादिनस्तु कालः साक्षिप्रत्ययभास्य इति अङ्गीचक्रुः । २ विवेकसाक्षात्कारान्तरायो मेघाख्यस्तुष्टिविशेषः काल इति सांख्या आहुः ( वाच० ) ।

**कालातीतः**—१ ( बाधितहेत्वाभासः ) [ क ] कालात्ययापदिष्टः कालातीतः ( गौ० १।२।९ ) । [ ख ] कालातीतो बलवता प्रमाणेन प्रबाधितः ( ता० र० श्लो० ८६ ) । २ कालातिक्रमः । यथा कालातीते वृथा संध्या वन्ध्यास्त्रीमैथुनं यथा इत्यादौ । अत्रार्थे कालातीतशब्दस्य कालस्यातीतमत्ययः इति व्युत्पत्तिर्द्रष्टव्या ( वाच० ) ।

**कालात्ययापदिष्टः**—( हेत्वाभासः ) [ क ] कालस्य साधनकालस्यात्यये अभावेपदिष्टः प्रयुक्तो हेतुः । एतेन साध्याभावप्रमा लक्षणार्थ इति सूचितम् । साध्याभावनिर्णये साधनासंभवात् । अयमेव बाधितसाध्यक इति गीयते । यथा वह्निरनुष्णः कृतकत्वादित्यादौ ( गौ० वृ० १।२।९ ) । कालात्ययापदिष्टः कालातीतः ( गौ० १।२।९ ) । कालात्ययेन प्रयुक्तो यस्यार्थस्यैकदेशोपदिश्यमानस्य स कालात्ययापदिष्टः कालातीत इत्युच्यते । निदर्शनम् नित्यः शब्दः संयोगव्यङ्ग्यत्वाद्रूपवत् ( वात्स्या० १।२।९ ) । [ ख ] यस्य बलवत्प्रत्यक्षादिप्रमाणेन पक्षे साध्याभावः परिच्छिन्नः सः । स एव बाधितविषय इत्युच्यते । यथा अग्निरनुष्णः पदार्थत्वात् कृतकत्वाद्वा जलवदिति । यथा वा घटः क्षणिकः सत्त्वादित्यादौ सत्त्वं हेतुः कालात्ययापदिष्टः । अग्निरनुष्ण इत्यत्र कृतकत्वं हेतुः । तस्य च यत् साध्यम् अनुष्णत्वम् तस्याभावः प्रत्यक्षेणैव परिच्छिन्नः ( परिज्ञातः ) । त्वगिन्द्रियेणाग्नेरुष्णत्वपरिच्छेदात् ( त० भा० पृ० ५० ) । घटः क्षणिक इत्यत्र हेतोः सत्त्वस्य यत् साध्यम् क्षणिकत्वम् तस्याभावः अक्षणिकत्वम् प्रत्यभिज्ञया पूर्वावस्थानुभवजनितसंस्कारसहकृतेन्द्रियप्रभवया पूर्वापरकालाकलनया घटस्य स्थायित्वं परिच्छिद्यत इति तस्य हेतो-

स्वथात्वं संभवति । [ ग ] बाधितवदस्यार्थोनुसंधेयः । यथा कालात्ययापदिष्टश्च हेत्वाभासाश्च पञ्चधा ( भा० प० श्लो० ७२ ) इत्यादौ ।

**कालिकविशेषणता**—( स्वरूपसंबन्धः ) कालिकसंबन्धवदस्यार्थोनुसंधेयः ।

**कालिकसंबन्धः**—कालेन कृतः संबन्धः ( वाच० ) । यथा काल्यान्वयोः संबन्धः । अयं च संबन्धः सर्वाधारताप्रयोजकसंबन्ध इति जेगीयते । तथाहि अनेन संबन्धेन सर्वेषु जन्यभावेषु जन्यभावानां वृत्तिमत्त्वम् । नित्येषु तु कालिकसंबन्धेन न कस्यापि सत्त्वम् । नित्यानुयोगिककालिकसंबन्धस्यानुपगमात् । कालस्य च नित्यत्वेपि कालानुयोगिकस्तादृशसंबन्धस्तु स्वीक्रियत इति नैयायिका मन्यन्ते । अत्र च कालातिरिक्ते नित्ये कालिकायोगः इति नैयायिकानां सिद्धान्तो द्रष्टव्यः । कालिकसंबन्धश्चायं स्वरूपादनतिरिक्त इत्यन्ये ( ग० सिद्धा० ) । महाकालजन्यपदार्थयोः एककालवृत्तिमतोर्जन्यपदार्थयोश्चायं संबन्धः । स च कालिकविशेषणताख्यः सर्वाधारताप्रयोजकः । यथा कालस्य गन्धादिसर्ववस्त्वाधारताप्रयोजकः कालिकाख्यः संबन्धः । एवं दिक्कृतविशेषणतापि बोध्या ( त० दी० १ पृ० ७ ) । अत्रायं विवेकः । गगनादिकं सर्वदैवास्ति इत्यादिव्यवहारात्कालिकविशेषणताख्यसंबन्धेनाकाशपरमाण्वादयो नित्या अपि काले वर्तन्ते । दिग्विशेषणताख्यया सर्वाधारतानियामिकया तु जन्यमात्रं दिशि तिष्ठति इति ( राम० १।१ पृ० ५६ ) ।

**काली**—( कल्याणीशब्दे दृश्यम् ) ।

**कालीनत्वम्**—कालवृत्तित्वम् । यथा घटकालीनः पट इत्यादौ पटस्य घटकालीनत्वम् । प्राक्कालीनोत्तरकालीनार्वाक्कालीनप्रभृतिप्रयोगेषु खप्रत्ययो दृश्यते । स चानुक्तोप्यवगन्तव्यः । अन्यथा बहुतरलक्ष्यक्षतिप्रसङ्गः स्यात् ( गण० ) । अत्र च कालाट्ठञ् ( ४।३।११ ) इति पाणिनिसूत्रे कालात् इति योगं विभज्य युष्मदस्मदोरिति सूत्रान्मण्डूकप्लुत्या खञनु-

कर्त्य विधेयः इत्याकूतम् । गौणाश्च समासप्रत्ययविधौ प्रतिषेधो वक्तव्यः ( पा० सू० १।१।७२ वार्ति० ) इत्युक्तेः तदन्तविधिपरिभाषाया अप्रवृत्तेः कालान्तशब्दान्नास्य प्रवृत्तिः । तेन तदन्तशब्दात् ख एव साधुः । समानकालीनः प्राक्कालीन इति भूरिप्रयोगात् इत्याहुः । वस्तुतस्तु तद्धिताः ( ४।१।७६ ) इति पाणिनिसूत्रस्थबहुवचनेनानुक्तस्थलेपि तद्धितप्रत्ययो बोध्यते । स चात्र खप्रत्ययः इति विशेषम् । वैयाकरणमते तु भाष्यानुक्तत्वादप्रमाणमेतत् । अत एव अपभ्रंशा एवैते इति प्रामाणिका इति सिद्धान्तकौमुद्यामुक्तम् ( कौ० ४।३।११ ) ।

**कालोपाधिः**—क्षणदिनादिव्यवहारविषयत्वनियामको धर्मः । स च जन्यमात्रं ( अनित्यमात्रं ) क्रियामात्रं वा कालोपाधिः । तथाहि स्वजन्यविभागप्रागभावावच्छिन्नं कर्म (१) पूर्वसंयोगावच्छिन्नविभागः (२) पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावः (३) उत्तरसंयोगावच्छिन्नं कर्म (४) च इत्यादि (मु० १ पृ० ९२)। स्वजन्येत्यस्यार्थश्च स्वम् रविक्रिया । तज्जन्यो विभागः रविपूर्वदेशयोर्विभागः । तस्य प्रागभावः । स तादृशक्रियोत्पत्तिकाले तिष्ठति । तदवच्छिन्नम् तदेव कर्म इति (सि० च० १ पृ० १०)। पूर्वसंयोगेत्यादेः स्वजन्यविभागनाश्यपूर्वसंयोगविशिष्टः स्वजन्यविभाग इत्यर्थः । पूर्वसंयोगनाशेत्यादेः स्वजन्यविभागजन्यपूर्वसंयोगनाशावच्छिन्नः स्वजन्योत्तरसंयोगप्रागभाव इत्यर्थः । उत्तरसंयोगेत्यादेः स्वनाशकोत्तरसंयोग इत्यर्थः ( दि० १ पृ० ९२ )। अनेनोपाधिचतुष्टयेन क्षणचतुष्टयव्यवहार उपपद्यते । एवम् क्षणान्तरव्यवहारनियामकं कर्मान्तरादि ऊह्यम् । महाप्रलये क्षणादिव्यवहारो यद्यस्ति तदा सोनायत्या ध्वंसेनैव उपपादनीयः इति ( मु० १ पृ० ९३ ) । स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयस्यैव तत्र क्षणव्यवहारविषयत्वमिति भावः ( दि० १ पृ० ९३ ) । अत्र प्रथमक्षणे क्रियोत्पद्यते । अनन्तरं क्रियातो विभागः । ततः पूर्वसंयोगनाशः । तत उत्तरदेशसंयोग उत्पद्यते । इति एकवारं नेत्रनिमीलने नैयायिकप्रक्रिया ज्ञेया । एत एव क्रियादयश्चत्वारः क्रमेण चत्वार उपाधयो बोध्याः ।

**काव्यम्**—नायकादिप्रतिपादको वाक्यसंदर्भः । यथा वाल्मीकिविरचितं रामायणं काव्यम् । आलंकारिकास्तु अदोषौ सगुणौ सालंकारौ शब्दार्थौ काव्यम् । दोषवर्जितं सगुणं सालंकारं शब्दविशिष्टार्थ अर्थविशिष्टशब्द एतदन्यतरत् काव्यम् इति समुदितार्थः । तदुक्तम् । गुणालंकारसहितौ शब्दार्थौ दोषवर्जितौ । गद्यपद्योभयमयं काव्यं काव्यविदो विदुः ॥ इति (प्रतापरु० पृ० १२) । तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि इति (काव्यप्र० उ० १ श्लो० ४) । पूर्वोक्तविशेषणविशिष्टः शब्द एव काव्यं नार्थः काव्यमिति रसगङ्गाधरकृदादय आहुः । काव्यसंपत्सामग्री तु शब्दार्थौ मूर्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम् । हारादिवदलंकारास्तत्र स्युरुपमादयः ॥ श्लेषादयो गुणास्तत्र शौर्यादय इव स्थिताः । आत्मोत्कर्षावहास्तत्र स्वभावा इव रीतयः ॥ शोभामाधुर्यकं प्राप्ता वृत्त्यो वृत्तयो यथा । पदानुगुण्यविश्रान्तिः शय्या शय्येव संमता ॥ रसास्वादप्रभेदाः स्युः पाकाः पाका इव स्थिताः । प्रख्याता लोकवदियं सामग्री काव्यसंपदः ॥ इति (प्रतापरु० पृ० १२)।

**कासराक्षः**—महिषाख्यो गुग्गुलः (पु० चि० पृ० ३०४) ।

**किंच**—(अव्ययसमुदायः) १ आरम्भः । २ समुच्चयः । ३ साकल्यम् । ४ संभावना । ५ अवान्तरम् (वाच०) ।

**किंचन**—(अव्ययसमुदायः) १ असाकल्यम् । २ अल्पम् (वाच०) ।

**किंचित्**—(अव्ययसमुदायः) १ असाकल्यम् । २ अल्पम् । यथा कम्पेन किंचित् प्रतिगृह्य मूर्ध्नः (रघु०) आवर्जिता किंचिदिव स्तनाभ्याम् (कुमार०) इत्यादौ (वाच०) ।

**किंतु**—(अव्ययसमुदायः) १ पूर्ववाक्यसंकोचज्ञापनम् । २ प्रागुक्तविरुद्धार्थः । ३ किंपुनरर्थः (वाच०) ।

**किंनु**—(अव्ययसमुदायः) १ प्रश्नः । २ वितर्कः । ३ सादृश्यम् । ४ स्थानम् (वाच०)।

**किम्**—१ [क] जिज्ञासितम् (ग० शक्ति० पृ० १०४) (दि० ४ पृ० १७९) (म० प्र० ३।३४) । यथा किं तव नामधेयमित्यादौ ।

[ ख ] अनिर्धारितविशेषविशिष्टम् । यथा कीदृशो गवयपदवाच्यः इत्यादौ ( म० प्र० ३ पृ० ३४ ) । यथा वा कस्मै नाथ समर्प्य कौरवकुलं व्योमान्तमालम्बसे ( उद्भटः ) इत्यादौ । २ ईषदर्थः । यथा न किमप्यस्यास्ति इत्यादौ । ३ अतिशयः । यथा किमप्येष प्रगल्भते इत्यादौ । अत्र अतिशयितं प्रगल्भते इति बोधः ( वाच० ) । ४ प्रश्नः । यथा किमिदं किंनरकण्ठि सुप्यते ( रघुः ) इत्यादौ ( वाच० ) । ५ वितर्कः । स च प्रयोक्तुः संभावनात्मकं ज्ञानम् । यथा किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखं किमब्जे किं मीनौ किमु मदनबाणौ किमु दृशौ । खगौ वा गुच्छौ वा कनककलशौ वा किमु कुचौ तडिद्वा तारा वा कनकलतिका वा किमबला ॥ इत्यादौ किंशब्दार्थः । ६ कुत्सा । यथा किंगौरित्यादौ ( ग० शक्ति० पृ० १०९–११० ) । यथा वा स किंसखा ( किरा० १।५ इत्यादौ) । एवम् वाशब्दस्याप्यर्थो ज्ञेयः ( ग० शक्ति० पृ० १०९ ) ।

**किमु**—( अव्ययम् ) १ प्रश्नः । २ निषेधः । ३ वितर्कः । ४ निन्दा । यथा किमु भीरु ररार्यसे ( भट्टिः ) इत्यादौ ( वाच० ) ।

**किमुत**—( अव्ययम् ) १ प्रश्नः । २ वितर्कः । तत्र प्रमाणम् आहो उताहो किमुत वितर्के किं किमूत च इति ( हेम० ) ( वाच० ) । ३ विकल्पः । ४ अतिशयः ( वाच० ) ।

**किल**—( अव्ययम् ) १ आगमप्रसिद्धिः । यथा कंसं जघान किल वासुदेवः इत्यादौ । अत्र कृष्णकर्तृकं कंसहननमागमसिद्धम् इति बोधः । २ अरुचिः । यथा एवं किल केचिद्वदन्ति इत्यादौ । अत्र केषांचिदेवं कथनं वक्तुररुचिविषयः इति बोधः । ३ न्यक्कारः । यथा स किल योत्स्यते इत्यादौ । अत्र तस्य योधनशक्तिराहित्यद्योतनात् तिरस्कारो गम्यते । ४ संभावना । यथा पार्थः किल विजेष्यते कुरून् इत्यादौ । अत्र पार्थकर्तृककुरुविजयः संभावनाविषयः इति बोधः । ५ हेतुः । यथा स किलैवमुक्तवान् इत्यादौ । अत्र तत्कथनस्यान्यत्र हेतुता द्योत्यते । ६ अलीकम् । यथा प्रसह्य सिंहः किल तां चकर्ष

(रघु० स० २) इत्यादौ (गणरत्न०)। अत्र सिंहकर्तृकं नन्दिनी-कर्षणमलीकम् इति बोधः (वाच०)। ७ वार्ता। ८ अनुशयः। ९ निश्चयः इत्यादि (वाच०)।

**कुतुपः**—अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा। तत्राष्टमो मुहूर्तो यः स कालः कुतुपः स्मृतः॥ (पु० चि० पृ० ३३९)।

**कुमारिका**—कुमारिका द्विवर्षा (कल्याणीशब्दे दृश्यम्)।

**कुम्भः**—विंशतिद्रोणकः कुम्भः (मिताक्षरा अ० २।२७५)।

**कुम्भकः**—अन्तःस्तम्भवृत्तिः (सर्व० सं० पृ० ३७७ पातञ्ज०)।

**कुर्वद्रूपत्वम्**—यत्किंचित्कार्यजनकतावच्छेदकतया सिद्धो जातिविशेषः। यथा विज्ञानवादिमते अङ्कुरोपधायकक्षणिकबीजव्यक्तिमात्रवृत्तिर्बीजत्व-व्याप्या जातिः (दि० १ आत्म० पृ० १०१) (राम०)। अत्र कुर्वत् फलोन्मुखं रूपं यस्य तस्य भावः इति विग्रहो द्रष्टव्यः (वाच०)। अत्र नैयायिकाः क्षेत्रादावुप्तबीजव्यक्तिविशेषेणैवाङ्कुरोत्पत्तिः न तु कुसूलस्थबीजव्यक्त्या। तथा च फलजननाय योग्ये धान्यादिबीजेतिशयः (उपकारः) सहकारिभिः धरणिसलिलसंयोगादिभिः आधीयत इत्यवश्यं वाच्यम्। तेनैवाङ्कुरादिनियमोपपत्तौ अलं कुर्वद्रूपत्वकल्पनेनेत्याहुः (दि० १ आत्म० पृ० १०१) (सर्व० पृ० २४ बौद्ध०) (वाच०)।

**कुलम्**—ज्ञातिसंबन्धिबन्धूनां समूहः (मिता० अ० २ श्लो० ३०)।

**कुसीदम्**—उपचयार्थं प्रयुक्तं द्रव्यम् (मिता० अ० २ श्लो० ४०)।

**कृञ्**—(धातुः) [क] यत्नः। यथा पाकं करोतीत्यादौ कृधात्वर्थः प्रयत्नः। आख्यातस्य यत्नवाचकत्वेप्यत्र लक्षणया आख्यातेन व्यापारो बोध्यत इति ज्ञेयम्। अत्रेदं बोध्यम्। कृञः फलावच्छिन्नव्यापारबोध-कतया पाकस्य गौणकर्मत्वम्। तच्च गौणकर्मत्वं अत्र साध्यताख्यकृति-विषयत्वम् (का० व्या० पृ० ६)। [ख] शाब्दिकास्तु कृञोर्थ उत्पादनम्। तच्चोत्पत्तिरूपफलसहितं यत्नादि। यथा घटं करोतीत्यादौ

कृञोर्थः इत्याहुः । अत एवास्य धातोः सकर्मकत्वमपि संगच्छते । तत्रोक्तम् व्यापारो भावना सैवोत्पादना सैव च क्रिया । कृञोकर्मकताप्तेर्नहि यत्नोर्थ इष्यते ॥ किंतूत्पादनमेवातः कर्मवत् स्यायगाद्यपि । कर्मकर्तर्यन्यथा तु न भवेत् तद्दृशेरिव ॥ इति ( वै० सा० धात्वर्थ० भर्तृ० श्लो० ५।६ पृ० ५०—६१ ) ।

**कृतिः**—१ प्रयत्नवदस्यार्थोनुसंधेयः ( त० सं० ) । २ प्रवृत्तिः ।

**कृत्यपञ्चकम्**—पञ्चविधं तत्कृत्यं सृष्टिस्थितिसंहारतिरोभावः । तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य ॥ ( सर्व० सं० पृ० १८० शै० ) ।

**कृदन्तम्**—( यौगिकं नाम ) यद्धात्वर्थान्वितस्वार्थान्वयबोधं प्रति यादृशानुपूर्व्यवच्छिन्नस्य यत्कृतो निश्चयः कारणम् तद्धातूत्तरगं तत् कृदेव तादृशानुपूर्व्यवच्छिन्नं सत् कृदन्तं नाम । यथा पाचकपाठ्यमानेत्यादि । तद्धि धात्वर्थेनान्वितस्य स्वार्थकर्त्रादेः कर्मत्वादावन्वयबोधं प्रति द्वितीयाद्यंशे तादृशानुपूर्वीकत्वेन निश्चीयमानं हेतुर्भवति इति लक्षणसमन्वयो बोध्यः ( श० प्र० श्लो० ५२ पृ० ६८ ) ।

**कृपा**—निरुपधिपरदुःखप्रहाणेच्छा । यथा मिथुने कृपावती ( कुमार० ) इत्यादौ ।

**कृषिः**—विलेखनम् । यथा मृतिभुजः कर्षन्ति हलैरित्यादौ धात्वर्थः । विलेखनं चात्र भूम्यवयवशैथिल्यानुकूलव्यापारः । क्वचित् प्रतिविधानम् । यथा पञ्चभिर्हलैः कर्षति गृहीत्यादौ धात्वर्थः ( ग० व्यु० का० ३ पृ० ८१ ) । प्रतिविधानं चात्र भूम्यवयवशैथिल्यानुकूलव्यापारानुकूलव्यापारः । स च प्रेरणादिरूपः ।

**कृष्णपक्षः**—कलाक्षयाधिकरणकालः ( पु० चि० पृ० ३१ ) ।

**कृष्णलम्**—सुवर्णशकलम् ( जै० न्या० अ० ८ पा० १ अधि० १८ ) ।

**कॢप्तत्वम्**—१ नियतत्वम् अवधारणेन कल्पितत्वं वा ( वाच० ) । यथा अवश्यकॢप्तनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धम् ( मु० १ )

इत्यादौ । २ छिन्नत्वम् । यथा क्लृप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः ( मनु० ) इत्यादौ इति धर्मज्ञा आहुः । ३ रचितत्वम् । यथा क्लृप्तेन सोपानपथेन मञ्चम् ( रघु० स० ६ ) इत्यादौ इति काव्यज्ञा आहुः ( वाच० ) ।

**केवलत्वम्**—१ इतरासहायत्वम् । यथा यथैव ताः पुरः केवलीरोषधीरश्नन्ति केवलीरपः पिबन्ति केवलमेव पयो दुह्रे ( शत० ब्रा० १।६। १७।१५ ) । तदर्थश्च यथा पुरा अमावास्यातः पूर्वदिवसे ता गावः केवलीश्चन्द्रानुप्रवेशरहिता ओषधीरपश्चाहारं कृत्वा केवलं चन्द्ररहितमेव पयो दुह्रे दुहते ( भा० ) ( वाच० ) इत्यादौ । २ अवधारणत्वम् । ३ ज्ञानविशेषनिष्ठं वैजात्यम् । यथा जयन्ति ते जिना येषां केवलज्ञानशालिनाम् इत्यादौ ।

**केवलम्**—( ज्ञानम् ) तपःक्रियाविशेषान्यदर्थं सेवन्ते तपस्विनस्तज्ज्ञानमन्यज्ञानासंस्पृष्टं केवलम् ( सर्व० सं० पृ० ६४ आर्ह० ) ।

**केवलव्यतिरेकि**—( लिङ्गम् अनुमानं वा ) [ क ] अगृहीतान्वयव्याप्तिकसाध्यकम् ( दीधि० २ पृ० १५६ ) । अत्र साध्याभावसाधनाभावयोः साहचर्यं व्यतिरेकः । तथा च व्यतिरेकेणैव व्याप्तिर्यस्मिंस्तत् इति समासो द्रष्टव्यः । केवलव्यतिरेकि तु चतूरूपोपपन्नं भवति । चत्वारि रूपाणि च पक्षधर्मत्वम् विपक्षाद्व्यावृत्तिः अबाधितविषयत्वम् असत्प्रतिपक्षत्वं चेति । अत्र सपक्षाभावेन सपक्षसत्त्वं नास्तीति चत्वारि रूपाण्येवेति भावः ( सि० च० २ पृ० २७ ) । तेन चतूरूपोपपन्नमेव तत्त्वसाध्यं साधयितुं क्षमते ( वै० उ० ३।१।१७ ) । केवलव्यतिरेकिणि प्रतिज्ञाहेतू तुल्यावेव । उदाहरणोपनयनिगमनानि तु भिद्यन्ते । यथा जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् इत्यत्र यत्सात्मकं न भवति तत्प्राणादिमन्न भवति यथा घटः न चेदं जीवच्छरीरं प्राणादिमन्न भवति तस्मान्न तथा इति ( त० कौ० २ पृ० १३ ) । [ ख ] असत्सपक्षम् ( मु० गु० पृ० २१९ ) ( न्या० म० २ पृ० १९ ) । असत्सपक्षत्वं च पक्षातिरिक्ते अनिश्चितसाध्यसाधनसहचारकत्वम् ( न्या० म० २

पृ० १९ ) । अथवा अगृहीतहेतुसहचारं यत् व्यतिरेकिसाध्यम् तत्कत्वम् ( दि० गु० पृ० २१९ ) । यद्वा यत्र निरुपाधिव्यतिरेक-सहचारेणान्वयव्याप्तिग्रहस्तत्त्वम् (चि० २ पृ० ४८–४९ ) । [ ग ] व्यतिरेकमात्रव्याप्तिकम् ( त० सं० ) ( न्या० म० २ ) । [ घ ] यत्र व्यतिरेकव्याप्तिरेवास्ति तत् ( त० कौ० २ पृ० ११ ) । यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यत्र गन्धवत्त्वं केवलव्यतिरेकि ( त० सं० ) (न्या० म० २ ) । अत्र जलादीनां त्रयोदशान्योन्याभावास्त्रयोदशसु प्रसिद्धाः पृथिव्यां साध्यन्ते इति तात्पर्यम् । अत्रानुगमश्च योभावो यस्याभावस्य व्यापकत्वेन गृहीतः तदभावाभावेन तस्य व्याप्यस्याभावः पक्षे साध्यत इति ( चि० २ पृ० ६३ ) । पृथिवीतरेभ्यो भिद्यते पृथिवीत्वात् इत्यादौ यन्नेतरेभ्यो भिद्यते तन्न पृथिवी यथा जलम् । न च नेयं पृथिवी तस्मादितरेभ्यो भिद्यत इति व्यतिरेकिणमुदाहरन्ति । न च पक्षातिरिक्ते जलादौ साध्यसाधनयोः सहचारोस्ति निश्चीयते वा ( न्या० म० २ पृ० १९ ) । यथा वा जीवच्छरीरं सात्मकं चेष्टावत्त्वात् प्राणादिमत्त्वाद्वेत्यादौ हेतुः केवलव्यतिरेकी ( चि० २ पृ० ५६–६३ ) ( त० कौ० २ पृ० ११ ) । अत्र सात्मकत्वं च चेष्टाया असमवायि-कारणसंयोगाश्रयत्वे सति शरीरत्वम् । तच्च जीवच्छरीरे साध्यम् । चेष्टा-वत्त्वादिति हेतुः । चेष्टाविरहश्च घटादौ प्रत्यक्षसिद्धः । चेष्टाविरहात्तद-समवायिकारणसंयोगविरहोपि सुग्रहः इत्यादि ( चि० २ पृ० ५८ ) । अत्र यत् सात्मकं न भवति तत् प्राणादिमन्न भवति यथा घटः इति व्यतिरेकव्याप्तिरेवास्ति । न तु यत् प्राणादिमत् तत् सात्मकम् इत्य-न्वयव्याप्तिरस्ति । जीवच्छरीरमात्रस्य पक्षीकरणेन दृष्टान्ताभावात् । पक्षातिरिक्ते हेतुसाध्ययोरेवासत्त्वादिति ( त० कौ० २ पृ० १२ ) ( प्र० प्र० पृ० ६ ) ।

**केवलसमासः**—( समासः ) अव्ययीभावादिषट्कान्यत्वे सति यः समासः सः । यथा पूर्वं भूतः इति विग्रहे भूतपूर्वः इत्यादिः ( म० प्र० ४ पृ० ४४ ) ।

**केवलान्वयि**—१ ( लिङ्गम् अनुमानं वा ) [ क ] अत्यन्ताभावाप्रतियोगिसाध्यकम् ( दीधि० २ पृ० १५६ ) ( न्या० बो० २ पृ० १५ ) । यथा न तावदव्यभिचरितत्वम् । तद्धि न साध्यवदन्यावृत्तित्वम् । केवलान्वयिन्यभावात् ( चि० २ पृ० २ ) इत्यादौ । केवलान्वयि तु चतूरूपोपपन्नमेव स्वसाध्यं साधयितुं क्षमते । चत्वारि रूपाणि च पक्षधर्मत्वम् सपक्षे सत्त्वम् अबाधितविषयत्वम् असत्प्रतिपक्षत्वं चेति ( सि० च० ) । तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्त्वम् ( मु० गु० पृ० २१९ ) । तस्य विपक्षाभावेन विपक्षव्यावृत्त्यभावादिति भावः ( सि० च० २ पृ० २७ ) । अत्यन्ताभावाप्रतियोगिसाध्यकमित्येतल्लक्षणं च हेतोर्व्यतिरेकित्वेपि संगच्छते ( न्या० बो० पृ० १५ ) । [ ख ] असद्विपक्षम् । तदर्थस्तु पक्षव्यापकम् सपक्षे वर्तमानम् विपक्षशून्यम् अबाधितविषयम् असत्प्रतिपक्षम् इति ( ता० र० श्लो० १६ ) । यथा ज्ञेयमभिधेयत्वादित्यादौ ( मु० गु० पृ० २१९ ) । अत्र केवलान्वयिनोभिधेयत्वस्य न विपक्षः । अभिधानेनभिधाने च विपक्षत्वव्याघातात् ( चि० २ पृ० ४६ ) । [ ग ] अन्वयमात्रव्याप्तिकम् ( त० सं० ) । तदर्थश्च व्यतिरेकाप्रतियोगिसाध्यकम् ( वाक्य० २ पृ० १५ ) । यद्वा व्यतिरेकव्याप्तिशून्यत्वे सत्यन्वयव्याप्तिमत् ( न्या० बो० २ पृ० १५ ) । अत्र अन्वयेनैव व्याप्तिर्यस्मिंस्तत्तथा इति समासो द्रष्टव्यः । [ घ ] यत्रान्वयव्याप्तिरेवास्ति तत् ( त० कौ० २ पृ० ११ ) । यथा घटोभिधेयः प्रमेयत्वादित्यत्र प्रमेयत्वं केवलान्वयि ( त० सं० ) । अत्र घटः पक्षः । तस्याभिधेयत्वं साध्यम् । प्रमेयत्वं हेतुः । तस्मिन् हेतौ यत्र यत्र प्रमेयत्वम् तत्र तत्राभिधेयत्वम् यथा पटः इत्यन्वयव्याप्तिरेवास्ति । न तु यत्र यत्र साध्याभावः तत्र तत्र हेत्वभावः इति व्यतिरेकव्याप्तिरस्ति । अभिधेयत्वस्य प्रमेयत्वस्य च सर्वत्र सत्त्वात् साध्याभावादेरेवाप्रसिद्धत्वात् ( त० कौ० २ पृ० ११ ) ( मु० गु० पृ० २१९ ) । २ यो धर्मः सर्वत्र वर्तते यस्य चात्यन्ताभावः अप्रसिद्धः सः धर्मः केवलान्वयी । लक्षणं च अत्यन्ताभावाप्रतियोगित्वम् ( चि० २ पृ० ४६ ) ( त० दी० )

(न्या० बो० पृ० १५) । यथा अभिधेयत्वम् ज्ञेयत्वम् प्रमेयत्वम् वाच्यत्वं च केवलान्वयि भवति (न्या० म० २ पृ० १९)। अत्राभिधेयत्वं भगवदिच्छारूपशब्दशक्तिविषयत्वम् । तच्च सर्वत्रैव वर्तते । तस्य न कुत्राप्यत्यन्ताभावोस्ति । सर्वस्यैव भगवदिच्छाविषयत्वात् । वस्तुपदशक्यत्वात् । एवं वाच्यत्वम् । ज्ञेयत्वं च ज्ञानविषयत्वम् । तच्च सर्वत्रैव वर्तते। सर्वस्यैव भगवज्ज्ञानविषयत्वात्। एवम् प्रमेयत्वं प्रमाविषयत्वम् । तच्च सर्वत्रैव वर्तते । सर्वस्यैव भगवत्प्रमाविषयत्वात् (न्या० म० २ पृ० १९)। प्रमाजातीयविषयत्वं वा प्रमेयत्वम् । अथवा प्रमात्वमेव हि परंपरासंबन्धात् स्वाश्रयप्रमाविषयत्वरूपात् घटादौ प्रमेयत्वमनुगतम् (चि० २ पृ० ४७)।

**केवलान्वयिहेतुः**—(अवयवः) अत्यन्ताभावाप्रतियोगिसाध्यसमानाधिकरणपक्षसपक्षसद्धेतुवचनम् (चि० २ अव० पृ० ७९)। यथा घटोभिधेयः प्रमेयत्वादित्यादौ प्रमेयत्वात् इति हेतुपदम् ।

**कैवल्यम्**—१ मोक्षः । स च आत्यन्तिकदुःखत्रयविगम इति सांख्याः (सां० भा०) । पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यम् स्वरूपप्रतिष्ठा चितिशक्तिः इति योगिन आहुः । पुरुषस्य निर्लेपस्य कैवल्येनावस्थानं कैवल्यम् (सर्व० सं० पृ० ३३६ पात०)। अद्वितीयब्रह्मभावापत्तिरिति मायावादिनः । २ एकत्वम् (ग० शक्ति०)।

**कोटिः**—१ संशयजनकज्ञानीयप्रकारतावान् । यथा वह्निमान्न वेत्यादिविप्रतिपत्तिवाक्यजन्यकोट्युपस्थितिः इत्यादौ वह्न्यादिः । २ पूर्वपक्षः । ३ त्रिकोणादिक्षेत्रावयवरेखाविशेषः कोटिरिति लीलावतीकारादयः । ४ राशिचक्रस्य तृतीयांश इति ज्योतिर्विदः । ५ संख्याविशेष इति गणकाः । ६ प्रकर्षः । ७ अग्रभाग इति काव्यज्ञा वदन्ति ।

**कोटिता**—प्रकारताविशेषः (ग० सत्प्र०)। यथा वह्निमान्न वा इति संशये वह्न्यादेः कोटिता ।

**कोपः**—१ उत्कटद्वेषः । यथा चैत्राय कुप्यति क्रुध्यतीत्यादौ धात्वर्थः । अत्र धात्वर्थद्वेषे विषयत्वलक्षणं संप्रदानत्वं चतुर्थ्या बोध्यते । तेन चैत्रविषयकोत्कटद्वेषवान् इत्याकारकस्तत्र बोधः ( श० प्र० श्लो० ६९ पृ० ८७ ) । चैत्राय कुप्यतीत्यादौ क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ( पा० १।४।३७ ) इति सूत्रेण संप्रदानसंज्ञा बोध्या । यथा वा क्रुध्यन् कुलं धक्ष्यति विप्रवह्निः ( भट्टिः ) इत्यादौ धात्वर्थः । शाब्दिकास्तु प्ररूढो वाक्चक्षुरादिविकारानुमेयश्चित्तवृत्तिविशेष इत्याहुः ( ल० म० ) । यथा इति क्रुधाक्रुध्यत तेन केतकम् ( नैष० ) इत्यादौ । कामव्याघातहेतुकश्चित्तवृत्तिविशेष इति कामशास्त्रज्ञाः । वधाद्यनुकूलश्चित्तवृत्तिविशेषः । यथा अपकारिणि चेत्कोपः कोपे कोपः कथं न हि । धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि ॥ इत्यादौ इति नीतिशास्त्रज्ञाः ( नीतिसा० ) । कामानवाप्तिजन्यश्चित्तवृत्तिविशेषः । यथा रिपौ बन्धौ स्वदेहे च समैकात्म्यं प्रपश्यतः । विवेकिनः कुतः कोपः स्वदेहावयवेष्विव ॥ इत्यादौ इति वेदान्तिनः । २ धातुवैषम्यकारिदोषाणां विकारविशेषः । यथा तत्र एते स्वभावत एव दोषाणां संचयप्रकोपशमप्रतीकारहेतवः ( सुश्रुते ) इत्यादौ इति भिषजः । ३ शृङ्गाराङ्गं मानः कोपः । यथा कोपात्कान्तं परित्यज्य पश्चात्तापसमन्विता ( प्रतापरु० ) इत्यादौ इत्यालंकारिका आहुः ( वाच० ) । अत्रोच्यते मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः । द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि ॥ प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना ( सा० द० ) इति ।

**कोमलत्वम्**—१ स्पर्शविशेषः । यथा निशा च शय्या च शशाङ्ककोमला ( नैषध० ) इत्यादौ । २ अवयवसंयोगविशेषः ( सि० च० ) । यथा काठिन्यकोमलत्वादिनानावयवसंयोगविशेषयुक्ता पृथिवी ( त० भा० पृ० २७ ) इत्यादौ । एवम् मृदुत्वादिकं व्याख्येयम् ।

**कौमारिकी**—आषाढे शुक्लषष्ठी तु तिथिः कौमारिकी स्मृता ( पु० चि० पृ० ९६ ) ।

कौमुदी—आश्विन्यां पौर्णमास्यां च अक्षैर्जागरणं निशि। कौमुदी सा समाख्याता कार्या लोकविभूतये ॥ ( पु० चि० पृ० ३०२ )।

क्त्वा—( प्रत्ययः ) पूर्वकालीनत्वम् कर्ता च ( तर्का० ४ पृ० ११ )। यथा भुक्त्वा व्रजतीत्यादौ भोजने व्रजनपूर्वकालीनत्वं क्त्वाप्रत्ययार्थः ( त० प्र० ४ पृ० ७०–७२ )। अत्र पूर्वत्वं च संनिहितक्रियापेक्षया बोध्यम्। क्रियापूर्वकालीनत्वं च क्रियाप्रागभावकालवृत्तित्वम् क्रियोत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वं वा । तेन भुक्त्वा व्रजतीत्यत्र गमनप्रागभावावच्छिन्नकालवृत्तिभोजनकर्त्रभिन्नो व्रजति इत्यर्थः। अत्र कालस्तात्पर्यवशात् व्यवहिताव्यवहितसाधारणो बोद्धव्यः । तेन पूर्वस्मिन्नब्दे गत्वास्मिन्नब्दे समागतः इत्यत्र तादृशप्रयोगावगमः ( तर्का० ४ पृ० ११ )। केचित्तु अव्यवहितपूर्वकालीनत्वमित्याहुः। अत्र अव्यवधानं च क्रियान्तरानुकूलविलम्बाभाववत्त्वम् । केचित्तु तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगिकालत्वमेव तदव्यवहितपूर्वकालत्वम् । कालश्चात्र यावता कालेन भोजनानन्तरं व्रजनं तावान् स्थूलकालोपाधिर्विशिष्य निवेशनीयः। तेन नासंभवः इत्याहुः ( त० प्र० ख० ४ पृ० ७० )। प्राभाकरास्तु समानकर्तृकत्वमेव क्त्वाप्रत्ययार्थ इत्याहुः । मणिकृतस्तु आनन्तर्यमेव तदर्थ इत्याहुः । अन्ये तु क्वचित् सामानाधिकरण्यविशिष्टव्याप्यत्वमपि क्त्वार्थ इत्याहुः । अधीत्य तिष्ठतीत्यत्र निरन्तराध्ययनशालिन्येव तथा प्रयोगात् अयमर्थ आवश्यकः। अत्र व्याप्तिश्च कालिकी। तथा च अध्ययनसामानाधिकरण्यविशिष्टाध्ययनव्याप्यस्थितिमान् इत्यन्वयधीः ( त० प्र० ख० ४ पृ० ७२ )। अपरे तु आश्रय एव क्त्वाप्रत्ययार्थ इत्याहुः। अयं भावः। क्त्वाप्रत्ययस्य कृत्प्रत्ययान्तर्गतत्वात् सामान्यशक्त्या आश्रयोपस्थितेः कृत्प्रत्ययेन संभवात् मुखं व्यादाय स्वपिति इत्यादौ स्वापपूर्वकालीनत्वस्य मुखव्यादाने असत्त्वेपि व्यादानाश्रये स्वापाश्रयत्वस्य विशिष्टे वैशिष्ट्यम् इति न्यायेनैव बोधः ( त० प्र० ख० ४ पृ० ७२ )। अन्ये त्वाहुः। स्वकर्तृकत्वस्वोत्तरत्व एतदुभयसंबन्धेन यत्किंचिद्विशिष्टं क्त्वाप्रत्ययार्थः । यथा ओदनं

पक्त्वा भुज्यत इत्यादिभावार्थकक्त्वाप्रत्ययस्थले पाकक्रियाविशिष्टा भुजिक्रिया ( कृष्ण० ) ।

**क्यच्**—( धात्वंशः प्रत्ययः ) इच्छा । यथा चैत्रः पुत्रीयतीत्यादौ पुत्रीयति माणवकमित्यादौ च । एवम् श्येनायते काक इत्यादौ क्यङर्थोपि बोध्यः । अयं च प्रत्ययो नामप्रकृतिको बोध्यः । अत्र क्यजर्थेच्छायां तत्प्रकृत्यर्थतावच्छेदकीभूतपुत्रत्वाद्यवच्छिन्नविषयतया प्रकृत्यर्थस्य पुत्रादेरन्वयः । तस्याश्च तिङर्थे आश्रयत्वे निरूपकत्वेनान्वयः । तथा च पुत्रत्वेन पुत्रगोचरेच्छाया आश्रयत्ववांश्चैत्रः इत्येवमन्वयधीः ( श० प्र० श्लो० १०७ पृ० १६५ ) । अत्र क्यजन्तस्याकर्मकत्वमेव विज्ञेयम् ( ग० व्यु० का० २ ख० २ पृ० ६५ ) । पुत्रीयति माणवकमित्यत्र च आचारसदृशाचारः क्यजर्थः । तत्र विशेषणीभूत आचारे कर्मत्वेन प्रकृत्यर्थस्यान्वयः । विशेष्यीभूते च माणवकादेः कर्मत्वेनान्वयः । तेन पुत्रकर्मकाचरणसदृशं यन्माणवककर्मकाचरणं तदनुकूलकृतिमान् इत्याकारकस्तत्र बोधः ( श० प्र० श्लो० १०७ पृ० १६५ ) । पुत्रकर्मकाचरणं चेह अन्नपानादिना संवर्धनतोषणादि ज्ञेयम् । अत्रार्थे क्यजन्तस्य सकर्मकत्वं बोध्यम् ( ग० व्यु० का० २ ख० २ पृ० ६५ ) । अधिकं तु द्वितीयाशब्दव्याख्यानावसरे संपादयिष्यते । श्येनायते काक इत्यत्रापि आचारसदृशाचारः क्यङर्थः । तत्र च प्रकृत्यर्थस्य श्येनादेः कर्तृत्वेनैव अन्वयः । श्येनकर्तृकाचारसदृशाचारवान्काकः इत्येवं तत्र बोधः । अत्र श्येनकर्तृकाचारश्च मांसहरणादिर्ग्राह्यः ( श० प्र० श्लो० १०७ पृ० १६६ ) ।

**क्रमः**—१ उद्दिष्टानामर्थवशाद्यथावद्ग्रहणम् । यथा द्रव्यनिरूपणानन्तरं क्रमेण गुणादिकं निरूप्यते इत्यादौ । २ अर्थानां नैयत्येन पूर्वापरावस्थानम् । यथा उद्देशक्रमेण द्रव्यादिनिरूपणम् इत्यादौ । ३ परिपाट्यां यथोचितसंनिवेशः ( वाच० ) । यथा शेषशेषिभावे अधिकृताधिकारे वा सत्येव वैदिककर्मणोनुष्ठाने पौर्वापर्यरूपक्रमग्रहणम् इत्यादौ । अत्र मीमांसकमते कर्मक्रमनियामकानि प्रमाणानि श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि षड्विधानि ज्ञेयानि ( मीमांसान्यायप्रकाश पृ० ७३ ) ।

**क्रयः**—मूल्यदानजन्यस्वत्वस्य जनकः स्वीकारः । स्वत्वजनकं मूल्यदानं वा । यथा ग्रामं क्रीणातीत्यत्र धात्वर्थः । अत्र क्रयफले स्वत्वे ग्रामस्याधेयत्वेनान्वयः । तेन ग्रामनिष्ठस्य मूल्यदानजन्यस्वत्वस्यानुकूलस्वीकारवान् ग्रामनिष्ठं यत् स्वत्वम् तदनुकूलमूल्यदाता वा इति तत्र क्रमेण बोधः ( श० प्र० श्लो० ७२ पृ० ९६ ) । क्रयस्य स्वत्वहेतुत्वमुक्तं मनुना सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः । प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥ ( मनु० १० श्लो० ११५ ) इति । गौतमेनाप्युक्तम् स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु इति । क्रयादिरूपागमसहितभोगस्यैव स्वत्वे प्रामाण्यम् ( वीरमित्रो० ) । अत्रेदं बोध्यम् । वैदिककर्माङ्गपरिक्रयादौ प्रायेण यजमानस्यैवाधिकारोस्ति इत्याह जैमिनिः ( जैमि० सू० ३।८।१ ) । अथवा क्रयो नाम मूल्यदानप्रयुक्तस्वसंबन्धिस्वत्वोत्पादकस्वीकारः । यथा गां क्रीणातीत्यादौ । अत्र गोवृत्तिमूल्यदानप्रयुक्तस्वस्वत्वानुकूलस्वीकारानुकूलकृतिमान् इत्यन्वयबोधः इति संप्रदायः ( का० व्या० पृ० ५ ) । शाब्दिकाः मूल्यदानपूर्वकस्वीकार इत्याहुः ( ल० म० ) । केचित्तु पणपूरणादिमूल्यदानेन विक्रेतुः स्वत्वापनयनेन स्वत्वोत्पादनव्यापारः क्रय इत्याहुः ( वाच० ) ।

**क्राथनम्**—असुप्तस्यैव सुप्तलिङ्गवद्दर्शनम् ( सर्व० सं० पृ० १७० नकुली० ) ।

**क्रिया**—१ धात्वर्थः । स च धातूपनीतफलानुकूलसजातीयविजातीयव्यापारप्रचयः ( त० प्र० ख० ४ पृ० ५० ) । यथा चैत्रस्तण्डुलं पचतीत्यादौ पचनादिक्रिया ( ल० म० ) । इयं च क्रिया मतभेदेन फलविशिष्टव्यापाररूपा फलव्यापारोभयरूपा वा इत्यन्यदेतत् । क्रिया च भावना उत्पादयितुर्व्यापाररूपा साध्यत्वेनाभिधीयमाना इति ( वाच० ) । तथा चोक्तं हरिणा व्यापारो भावना सैवोत्पादना सैव च क्रिया ( वाक्यप० ) इति । साध्यत्वसाधनत्वएतदन्यतररूपेण प्रतीय-

मानोर्थः क्रिया इति शाब्दिका वदन्ति । अत्रोच्यते । क्रिया द्विविधा साध्या सिद्धा च । तत्र धातुवाच्या क्रिया साध्या । सैवासत्त्वरूपेत्युच्यते । यथा पचति करोतीत्यादौ क्रिया साध्या । घञादिप्रत्ययप्रतिपाद्या तु क्रिया सिद्धा । यथा पाक इत्यादि । तदुक्तम् यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥ गुणीभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥ इति ( ल० म० ) ( वै० सा० ) । अत्र साध्यत्वं च निष्पाद्यत्वमेव । केचित्तु पूर्वापरीभूतावयवत्वसमानाधिकरणं कारकान्वयादियोग्यतावच्छेदकं क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं च यद्वैजात्यं तद्रूपं साध्यत्वम् । सिद्धत्वं तु क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकं यद्वैजात्यं तद्रूपम् । यथा पाक इत्युक्तेस्ति भवतीत्यादिक्रियान्तराकाङ्क्षोत्थानात्सिद्धत्वम् । पचतीत्युक्ते तु तदनुत्थानात्साध्यत्वम् इत्याहुः ( ल० म० ) । अथवा अत्र सिद्धत्वं च यद्धर्मवत्ताज्ञानात् क्रियान्तराकाङ्क्षोदयः तादृशज्ञाने प्रकारतयावच्छेदकं यत् तत् । तद्भिन्नत्वम् ज्ञाननिष्ठतादृशाकाङ्क्षोत्थापकत्वाभावावच्छेदकं वा साध्यत्वम् ( वै० सा० द० ) । तेन अपचत् पक्ष्यति पचति इत्यादौ सर्वत्र साध्यत्वेनासत्त्वरूपत्वेनाभिधीयमाना क्रियेति क्रियाशब्दस्य रूढिरनेन दर्शिता इति ज्ञेयम् । अथवा साध्यत्वं लिङ्गसंख्यानन्वयित्वम् । तद्विपरीतं सिद्धत्वम् ( वाच० ) । अत्रोक्तं हरिणा साध्यत्वेन क्रिया तत्र तिङ्पदैरभिधीयते इति ( वाक्यप० ) । तिङ्पदशब्देन तिङन्तं पदं गृह्यते । क्रियापदमिति यावत् । तथा च तिङ्पदैरित्यस्य क्रियापदघटितैर्धातुभिरित्यर्थः । अत्रायं विवेकः । पाक इत्यादौ धातुना साध्यत्वेनोपस्थाप्यायाः क्रियायाः सिद्धक्रियारूपे घञर्थे विशेषणत्वम् । पचत्यादौ तु नैवम् इति ( वाच० ) । प्रवृत्तिविषयः क्रियेति मीमांसकाः ( मू० म० १ ) । २ श्रौतस्मार्तकर्मानुष्ठानं शक्तितः क्रियेति रामानुजीयाः ( सर्व० सं० पृ० १२४ रामानु० ) । ३ चलनात्मकं कर्म । यथा परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ( भा० प० श्लो० २५ ) इत्यादौ क्रियाशब्दार्थः कर्म । ४ प्रयोगः ।

यथा तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः ( कुमा० २।४८ ) इत्यादौ । ५ अनुष्ठानम् । यथा यथाक्रमं पुंसवनादिकाः क्रियाः ( रघु० ३।१० ) । यथा वा आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ( जैमि० सू० १।२।१ ) इत्यादौ । ६ शिक्षा । यथा क्रिया हि वस्तूपहिता प्रसीदति ( रघु० ३।२९ ) इत्यादौ । ७ चिकित्सा । यथा क्रियाः सर्वा गतायुषः ( सुश्रुते० ) इत्यादौ । मोघा इति शेषः । ८ धात्वर्थो व्यापारमात्रम् । यथा तेन तुल्यं क्रिया चेद्वतिः ( पा० सू० ५।१।११५ ) क्रियासमभिहारे यङ् ( पा० सू० ३।१।२२ ) इत्यादौ । ९ धात्वर्थः फलमात्रम् । यथा कर्मवत् कर्मणा तुल्यक्रियः ( पा० सू० ३।१।८७ ) इत्यादौ । १० श्राद्धम् । यथा चतुर्दश्यां क्रियाः कार्या अन्येषां तु विगर्हिताः ( मरीचि० ) इत्यादौ ( वाच० ) । ११ प्रमाणदर्शनम् ( पुरावा इति प्र० ) ।

**क्रियायोगः**—तपःस्वाध्यायेश्वरप्रणिधानानि ( पात० सू० २।१ ) ( सर्व० सं० पृ० ३६७ पातञ्ज० ) ।

**क्रियाविशेषणम्**—धात्वर्थसाध्यात्मकक्रियायां शाब्दबोधे विशेषणत्वेन भासमानः पदार्थः । यथा स्तोकं पचति मृदु पचतीत्यादौ स्तोकमृद्वादि विक्लित्त्यादिरूपधात्वर्थविशेषणम् । अत्र विशेष्यतेऽनेनेति विशेषणम् इति व्युत्पत्त्या विशेषणपदं भेदाभेदान्यतरसंबन्धेनान्वयिविशेषणपरम् । तथा च आख्यातं सकारकविशेषणम् इति महाभाष्येण चैत्राभ्यां सुप्यते देवदत्त जानीहि इत्यादौ कारकादीनां चैत्रदेवदत्तादीनां भेदसंबन्धेन क्रियाविशेषणत्वम् । स्तोकं पचतीत्यादौ तु विक्लित्तिरूपे धात्वर्थफले द्रुतं गच्छति इत्यादा धात्वर्थव्यापारे अभेदेन स्तोकद्रुतादीनां विशेषणत्वम् इति ज्ञेयम् । अत्रेदं बोध्यम् । भेदसंबन्धेन क्रियायामन्वयिविशेषणे पौनःपुन्येन गच्छति अतिशयेन पचति समेनैति विषमेणैति इत्यादिषु प्रकृत्यादित्वेन तृतीयेति केचिदाहुः । अन्ये तु नाम्ना शिवः इत्यादिवदभेदे तृतीयेत्याहुः । अत्रायं विवेकः । क्रियायामभेदसंबन्धेनान्वयविवक्षायाम् क्रियाविशेषणानां कर्मत्वम् इत्यनुशासनेन द्वितीया । भेदप्रकारेणान्वयविवक्षायां तु तृतीया

इति । अत्र साध्यात्मकक्रियाया लिङ्गसंख्यान्वयित्वाभावेन तद्विशेषणस्तोकादिवाचकपदस्योत्सर्गत एकवचनक्लीबता । अत एव स्तोकं पच्यत इत्यादि साधु संगच्छते । घञाद्यन्ते साध्यसिद्धोभयक्रिययोर्धातुप्रत्ययाभ्यां बोधनस्थले तु कातन्त्रपरिशिष्टाद्युक्ते स्तोकं पाकः इत्यादौ धातुबोध्यसाध्यरूपक्रियाविशेषणत्वविवक्षायामेकवचनक्लीबता । घञ्वाच्यसिद्धक्रियान्वयविवक्षायां तु विशेषणस्य लिङ्गसंख्यान्वयित्वेन तद्विशेषणपदस्य द्विवचनपुंस्त्वादि । अत एव संचारो रतिमन्दिरावधि सखीकर्णावधि व्याहृतम् इति आगमो निष्फलस्तत्र भुक्तिः स्तोकापि यत्र नो इति च प्रयोगः संगच्छते इति शाब्दिकमतम् । अत्र केचिन्नैयायिकास्तु शुद्धधात्वर्थविशेषणत्वविवक्षायां द्वितीयैव । घञाद्यन्तसमुदायविशेषणत्वे तु न द्वितीयाक्लीबतानियमः । अत एव स्तोकं पाकः इति प्रयोगो न साधुः इत्याहुः । वस्तुतस्तु क्रियाविशेषणानां कर्मत्वम् इत्यत्र क्रियेति पदस्य सार्थकप्रत्ययान्तधातूपस्थाप्यार्थः इत्यर्थपरत्वेन न कुत्राप्यनुपपत्तिः इति विज्ञेयम् ( ग० व्यु० का० १ पृ० ६ ) । अत्रायं विशेषः । स्तोकपक्त्येत्यादौ क्रियाविशेषणैः कर्मधारय एव । महाकविर्महाविद्व इत्यादौ कवित्वादाविव प्रकृतेप्येकनामार्थैकदेशे पचनादावपरनामार्थस्याभेदान्वयबोधकतया कर्मधारयस्य संभवात् । स्तोकं पक्त्येत्यादावभस्तादात्म्यवाचित्वे तत्पुरुषः संभवत्येव । अयमाशयः । यत्राभेदेनान्वयबोधस्तत्र कर्मधारयः । यत्र च भेदेनान्वयबोधस्तत्र तत्पुरुषः इति मर्यादा । एवं च प्रकृते तादात्म्यस्याम्वाच्यत्वेन पदोपस्थापितत्वात् पदादुपस्थापितस्य प्रकारतयापि भानं संभवति इति नियमेनाम्वाच्यस्तोकतादात्म्यस्याश्रयतासंबन्धेन पचनक्रियायामन्वयो वाच्यः । तथा च तादृशसंबन्धस्य भेदसंबन्धत्वात्तत्पुरुषः इति । क्रियाविशेषणैः समास एवाव्युत्पन्नः इति तु न देश्यम् । स्तोकनम्रा स्तनाभ्याम् ( मेघदू० २।१९ ) इत्यादेः कालिदासाद्यैः प्रयुक्तत्वात् ( श० प्र० श्लो० ३८ पृ० ४८ ) ।

**क्रीतानुशयः**—क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते । क्रीतानुशय इत्येतद्विवादपदमुच्यते ॥ ( मिताक्षरा २।१७७ ) ।

**क्रोडपत्रम्**—[ क ] त्रुटितग्रन्थस्य परिपूरणाय ग्रन्थस्थपत्रयोर्मध्ये चिह्नविशेषेण लिखित्वा स्थापितं पत्रम् ( वाच० ) [ ख ] न्यायादिशास्त्रग्रन्थस्थलक्षणादिपरिष्काराणामूहापोहाभ्यां शङ्कोत्तररूपेण खण्डनमण्डनव्यवस्थापनपत्रम् । यथा न्यायशास्त्रे चन्द्रनारायणीदुलालीकालीशाङ्करीपत्राणि क्रोडपत्राणि सन्ति ।

**क्रोधः**—१ ( दोषः ) नेत्रलौहित्यादिहेतुर्दोषविशेषः ( गौ० वृ० ४।१।३ ) । ज्ञानविशेषो वा । यथा पुत्राय क्रुद्ध्यतीत्यादौ धात्वर्थः । अत्र क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ( पा० १।४।३७ ) इति सूत्रेण कर्मणः संप्रदानसंज्ञा । तथा च अत्र विषयित्वं चतुर्थ्यर्थः । तस्य कोपेन्वयः । एवम् पुष्पेभ्यः स्पृहयतीत्यादावप्यन्वयो बोध्यः ( ग० व्यु० का० ४ पृ० ९६ ) । शाब्दिकास्तु वधाद्यनुकूलव्यापारजनकश्चित्तवृत्तिविशेषः । यथा हरये क्रुध्यतीत्यादौ क्रुधेरर्थः । क्रोधश्च कोपमूलकः । अत्र हरिसंप्रदानकः क्रोधः इति बोधः ( ल० म० सुब० ४ पृ० १०३ ) । केचित्तु परानिष्टाभिलाषेणानिष्टविषयकद्वेषहेतुकश्चित्तवृत्तिविशेषः । यथा क्षमैव क्रोधविजये समर्थेति विवेकिनः । क्रोधः कार्यविभङ्गाय तस्मात्तं क्षमया जयेत् ( शकुनशा० ) इत्यादौ । यथा वा क्रोधं विभो संहर संहर ( कुमार० ३।७२ ) इत्यादौ इत्याहुः । दुःखे तत्साधने च इदं मे मा भूत् इति स्पृहाविरोधिनी चित्तवृत्तिः क्रोधः इति पातञ्जलभाष्ये उक्तम् । क्रोधोमर्ष इति मिताक्षरा ( अ० २ श्लो० १ ) । रौद्ररसस्य स्थायिभावः क्रोध इत्यालंकारिका आहुः । सांख्यास्तु काम एव कुतश्चित्पराहतः क्रोधरूपेण परिणमते । स च रजोगुणकार्यः । यथा सङ्गात्संजायते कामः कामात्क्रोधोभिजायते ( गीता २।६२ ) इत्यादौ इति मन्यन्ते । २ षष्टिवर्षान्तर्गतोष्टत्रिंशत्तमो वर्षविशेषः । यथा विषमस्थं जगत्सर्वं व्याकुलं समुदाहृतम् । जनानां जायते भद्रे । क्रोधे क्रोधः परस्परम् ॥ इति पौराणिका आहुः ( वाच० ) ।

**क्लेदः**—[ क ] जलविशेषः । जलविशिष्टपृथिवी वा ( गौ० वृ० ३।१।३१ ) । अत्रोक्तं याज्ञवल्क्येन रसात्तु रसनं शैत्यं स्नेहं क्लेदं समार्दवम् ( अ० ३ श्लो० ७७ ) इति । अत्रेदं बोध्यम् । देहस्थः क्लेदः श्लेष्मकार्यः ।

अत्रोक्तं भावप्रकाशे कफस्यैतानि नामानि क्लेदनश्चावलम्बनः । रसनः स्नेहनश्चापि श्लेष्मणः स्थानभेदतः ॥ इति ( वाच० ) । [ ख ] क्षरणम् । स्वेद इति यावत् ( दि० १ पृ० ७० ) । [ ग ] जलविकारविशेषः । यथा तदञ्जनक्लेदसमाकुलाक्षम् ( रघु० ७।२७ ) इत्यादौ ( वाच० ) ।

**क्लेशः**— क्लेशाः पुनः पञ्चधा प्रसिद्धा अविद्यास्मितारागद्वेषाभिनिवेशाः ( पात० सू० २।३) (सर्व० सं० पृ० ३५८ पात० ) । सांसारिकविविधदुःखोपहारहेतुत्वेन पुरुषं क्लिश्नन्तीति क्लेशाः ( सर्व० सं० पृ० ३६५ पात० ) ।

**क्षणः**—१ ( कालः ) [ क ] वर्तमानार्थग्राहित्वेन स्वोत्पत्त्याश्रयः क्षणः ( मू० म० १ ) । तल्लक्षणं तु क्षणत्वमेव । तच्च स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वम् स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयत्वम् स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वम् स्ववृत्तियावदभावविशिष्टसमयत्वम् स्वस्वपूर्ववर्तियावत्पदार्थविशिष्टसमयत्वं वा । स्वपूर्वत्वं च स्वाधिकरणयावत्कालवृत्तिध्वंसप्रतियोगित्वम् । जन्यमात्रस्य कालोपाधित्वाददोषः ( दीधि० २ ) ( प० म० ) । अथवा स्ववृत्तियावद्ध्वंसविशिष्टत्वम् ( ग० सार्वभौमपक्षता० ) । [ ख ] स्ववृत्तिध्वंसप्रतियोगिकालावृत्तित्वविशिष्टस्ववृत्तित्ववान् । अत्र स्वपदद्वयम् यत्समयवृत्तित्वमुत्पत्तित्वेनाभिमतं तत्समयव्यक्तिपरम् । कालावृत्तित्वं च तादृशकालवृत्तित्वसामान्याभावः ( राम० १ काल० पृ० ९२ ) । इदं च महाप्रलये क्षणव्यवहारो नास्ति इत्यभिप्रेत्योक्तम् । [ ग ] स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयः । तादृशसमयः चरमध्वंस एवेति भावः ( दि० १ काल० पृ० ९२ ) । अयं क्षणो महाप्रलयव्यवहारविषयो भवतीति ज्ञेयम् । [ घ ] स्वाधेयपदार्थप्रागभावानाधारः समयः ( आत्मत० शिरोम० ) । [ ङ ] निमेषक्रियावच्छिन्नकालस्य चतुर्थभागः क्षणः ( चि० ४ ) । यथा क्षणादिः स्यादुपाधितः ( भा० प० श्लो० ४७ ) इत्यादौ । [ च ] त्रिंशत्कलारूपः कालांशः । यथा स्थिताः क्षणं पक्ष्मसु ताडिताधराः ( कुमा० ५।२४ ) इत्यादौ । [ छ ] अवसरः । यथा स्थानं नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः । तेन नारद नारीणां सतीत्वमुपजायते ॥ इत्यादौ ।

[ ज ] प्रशस्तमुहूर्तः नाडीद्वयात्मको मुहूर्तरूपः कालांशश्च इति मौहूर्तिका आहुः । २ उत्सवः । यथा गार्हस्थ्यमुचितं त्वेकं शूद्रस्य क्षणमाचरेत् ( ब्रह्मपु० ) इत्यादौ । ३ मध्यभागः । ४ पराधीनत्वम् इति काश्यन्ना आहुः ( वाच० ) ।

**क्षणिकत्वम्**—तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् ( मु० १ पृ० ५९ ) । यथा अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ( भा० प० श्लो १७ ) इत्यादौ । योग्यविभुविशेषगुणानां ज्ञानादीनां अपेक्षाबुद्धिव्यतिरिक्तानां क्षणिकत्वम् ( मु० १ पृ० ५९ ) । अत्र च योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिविशेषगुणनाश्यत्वम् इति नियमोनुसंधेयः । अत्र स्वं नाश्यम् तदुत्तरवृत्तिः तद्द्वितीयक्षणवृत्तिरित्यर्थः ( दि० १ पृ० ५९ ) । तथा च प्रथमक्षण उत्पद्यते द्वितीयक्षणे तिष्ठति तृतीयक्षणे नश्यति इति तात्पर्यम् । अथवा स्वाधिकरणसमयप्रागभावाधिकरणक्षणानुत्पत्तिकत्वे सति कादाचित्कत्वम् उत्पत्तिमत्त्वं वा । स्वाधिकरणसमयप्रागभावाधिकरणक्षणावृत्तित्वम् इति न्यायः ( आत्मत० शिरो० ) ( वाच० ) । बौद्धास्तु द्वितीयक्षणोत्पन्नध्वंसप्रतियोगित्वम् क्षणिकत्वम् इत्याहुः । तन्मते सर्वेषां भावानां क्षणिकत्वम् । तच्च नीलादिक्षणानां सत्त्वेनानुमातव्यम् । तद्यथा यत् सत् तत् क्षणिकम् यथा जलधरपटलम् सन्तश्चामी भावाः इति । अत्र सत्त्वं चार्थक्रियाकारित्वम् इति ज्ञेयम् ( सर्व० पृ० २६ बौद्ध० ) ।

**क्षयः**—( मासः ) सूर्यसंक्रान्तिद्वययुतो मासः । असंक्रान्तमासोधिमासः स्फुटः स्यात् द्विसंक्रान्तमासः क्षयाख्यः कदाचित् । क्षयः कार्तिकादित्रये नान्यतः स्यात् तदा वर्षमध्येधिमासद्वयं च ॥ ( पुरु० चि० पृ० १४ ) ।

**क्षरः**—क्षरतीति क्षरः विनाशिपदार्थः । क्षरः सर्वाणि भूतानि ( गीता १५।१६ ) ।

**क्षरणम्**—द्रवद्रव्यविभागः । यथा पयः क्षरति गोस्तनात् इत्यादौ क्षरतेरर्थः ।

**क्षायिकः**—कर्मणः क्षये सति जायमानो भावः क्षायिकः ( सर्व० सं० पृ० ६८ आर्ह० ) ।

**क्षिप्तम्**—तेषु तेषु विषयेषु क्षिप्यमाणमस्थिरं चित्तम् ( सर्व० सं० पृ० ३५४ पात० ) ।

**क्षुद्रम्**—मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत् । शमीधान्यं कृतान्नं च क्षुद्रं द्रव्यमुदाहृतम् ॥ ( मिता० २।२७५ ) ।

**क्षुपः**—करवीरादयः सरलप्रायाः ( मिता० २।२२९ ) ।

**क्षेत्रम्**—शरीरम् । इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते । एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ ( गीता १३।१ ) ।

**क्षेत्रज्ञः**—जीवात्मा । शरीरसंबन्धेन ज्ञानवान् । यथा अहम् त्वम् इत्यादि । क्षेत्रं शरीरम् आत्मत्वेन जानातीति क्षेत्रज्ञ इति व्युत्पत्तिः ।

**क्षेमः**—१ [ क ] सिद्धस्य रक्षणम् ( दि० गु० ) । [ ख ] लब्धस्य रक्षणम् ( आ० त० ) । यथा उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये ( याज्ञ० ) इत्यादौ । २ विद्यमानसत्ताकस्य वस्तुनः स्वाधिकरणे स्वविशिष्टबुद्धिनियामकसंबन्धविशेषव्यवस्थापनम् । यथा दुःखात्यन्ताभावस्य मोक्षत्ववादिमते अत्यन्ताभावस्याजन्यत्वेपि स्वप्रतियोगिदुःखानुत्पादनद्वारा स्वाधिकरणे स्वविशिष्टबुद्धिनियामकदुःखाकालीनस्वरूपसंबन्धनिर्वाहकत्वं तत्त्वज्ञानस्येति दुःखात्यन्ताभावस्य क्षैमिकी ( क्षेमनिर्वाह्या ) तत्त्वज्ञानसाध्यता । यथा वा कृतिसाध्यत्वस्य विध्यर्थत्वमते एकादश्यामुपवसेत् इत्यादावहोरात्रभोजनाभावस्य क्षैमिकं ( क्षेमनिर्वाह्यम् ) कृतिसाध्यत्वम् इति ( वाच० ) । ३ कुशलमिति काव्यज्ञा वदन्ति ।

## ख.

**खञ्जः**—सहजसंस्थानशून्यचरणवान् । यथा पादेन खञ्ज इत्यत्र । अत्र विकृतपादवृत्तित्वविशिष्टं यत् सहजसंस्थानशून्यत्वं तद्वच्चरणवान् चरणविकारप्रयुक्तस्य यथोचितसंस्थानवैधुर्यस्याश्रयीभूतचरणवान् इति वा बोधः । एवम् श्रोत्रेण बधिरः कायेन वामनः इत्यादावप्युक्तैव रीतिः ( श० प्र० श्लो० ९२ पृ० ११८ ) । खञ्जलक्षणं च भावप्रकाश उक्तम् । यथा वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा । खञ्जस्तदा

भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥ इति । तदर्थश्च सक्थ्नः कट्यादिगुल्फस्य कण्डरां कक्षास्नायुम् आक्षिपेत् गमनादौ कम्पयेत् बधात् गमनादिक्रियाघातात् इति । तथा च एकपादविकलत्वे खञ्जः द्विपादविकलत्वे पङ्गुरिति भेदः । तस्यैव भेदः कलापखञ्जः इति । तल्लक्षणं च कम्पते गमनारम्भे खञ्जन्निव च लक्ष्यते । कपालखञ्जं तं विद्यान्मुक्तसंधिप्रबन्धनम् ॥ इति ( वाच० ) ।

**खण्डतिथिः**—उदयस्था तिथिर्या हि न भवेद्दिनमध्यगा । सा खण्डा न व्रतानां स्यात्तत्रारम्भसमापनम् ॥ (पु० चि० पृ० ५०) ।

**खण्डप्रलयः**—( प्रलयः ) [ क ] कार्यद्रव्यानधिकरणकार्याधिकरणकालः (न्या० म० ४) (दि० ४) । अयमेवावान्तरप्रलयः इत्युच्यते । खण्डप्रलयाङ्गीकारे प्रमाणं वेदः धाता यथापूर्वमकल्पयत् इति ( त० दी० १ पृ० १० ) ( त० प्र० ख० ४ पृ० १८ ) । खण्डप्रलयप्रकारस्तु दिव्यं द्वादशसाहस्रं यदेतद्युगमुच्यते । तदेकसप्ततिगुणं मन्वन्तरमिहोच्यते ॥ एतच्चतुर्दशगुणमहर्ब्राह्ममिहोच्यते ( हरिवंशे अध्या० १९८–१९९ ) इत्यादिनोक्तः । स च तस्मादेवावगन्तव्यः । [ ख ] जन्यद्रव्यानधिकरणद्रव्यप्रागभावाधिकरणकालः । [ ग ] सर्वकार्यद्रव्यध्वंसः ( त० दी० १ पृ० १० ) । यथा युगप्रलयः । [ घ ] चतुर्युगसहस्ररूपब्राह्मदिनावसाने भूम्यादिखण्डलयाधारः कालविशेषः ( वाच० ) । तदुक्तं सिद्धान्तशिरोमणौ वृद्धिर्विधेरह्नि भुवः समन्तात् स्याद्योजनं भूभवभूतपूर्वैः । ब्राह्मे लये योजनमात्रवृद्धेर्नाशो भुवः प्राकृतिकेखिलायाः ॥ इति ।

**खर्विका**—संमिश्रा या चतुर्दश्या अमावास्या भवेत्क्वचित् । खर्विकां तां विदुः केचिद्गताध्वामिति चापरे ॥ ( पु० चि० पृ० ३२१ ) ।

**खलेवाली**—खले बलीवर्दबन्धनाय निखातो मेढिः खलेवाली ( जै० न्या० अ० १० पा० १ अधि० ६ ) ।

**ख्यातिः**—१ ज्ञानम् ( मल्लि० मा० टी० ४।५५ ) । यथा ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम्

( माघ० स० ४ श्लो० ५५ ) इत्यादौ । यथा वा योगिनस्तु विवेकख्यातिरविप्लवा हानोपायः ( पात० सू० २।२६ ) । प्रसंख्यानेप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ( पात० सू० ४।२८ ) इत्यादौ पतञ्जलिना निर्दिष्टा विवेकख्यातिः । अत्र वदन्ति । आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा । तथानिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम् ॥ १ ॥ योगाचारा माध्यमिकास्तथा मीमांसका अपि । नैयायिका मायिनश्च पञ्च ख्यातीः क्रमाज्जगुः ॥ २ ॥ रामानुजीयास्तु सत्ख्यातिमाहुः । तत्रात्मख्यातिर्नाम आत्मनो बुद्धेः ख्यातिर्विषयरूपेण प्रतिभासः । इदं रजतमिति बुद्धिरेव रजतरूपेणावभासते । न तत्र विषयान्तरापेक्षा । अयं घट इत्यादिषु सर्वत्र बुद्धेरेव विषयाकारोल्लेखसंभवेनात्रापि तथैवौचित्यात् । प्रयोगश्च विमतं रजतं बुद्धिरूपं चक्षुरादिसंप्रयोगमन्तरेणापरोक्षत्वात्संमतबुद्धिवदिति विज्ञानवादिनो बौद्धाः । असत्ख्यातिर्नाम असतो रजतादेः ख्यातिः प्रतीतिरिति शून्यवादिनो बौद्धाः । वाचस्पतिमिश्रा अपि शुक्ताविदं रजतमिति ज्ञाने प्रसिद्धयोः शुक्तिरजतत्वयोरलीक एव समवायो भासत इत्यसत्ख्यातिमङ्गीचक्रुः । मीमांसकास्त्वख्यातिमाहुः । अख्यातिर्नाम न ख्यातिरख्यातिरप्रतीतिः । शुक्तिरजतस्थल इदं रजतमित्यत्रेदमंश एव प्रत्यक्षप्रतीतिविषयः । न रजतांशः । तस्य चक्षुराद्यसंनिकर्षात् । रजतमिति तु स्मृत्याकारदर्शनमिति । अन्यथाख्यातिर्नाम अन्यस्यान्यरूपेण प्रतीतिः । देशकालान्तरगतं रजतमेव शुक्तिसंप्रयुक्तेन दोषोपहतेनेन्द्रियेण शुक्त्यात्मना गृह्यते । न चैवमननुभूतस्यापि ग्रहणं स्यादिति वाच्यम् । सादृश्यादेर्नियामकत्वात् । प्रयोगश्च विवादपदं शुक्तिशकलं रजतज्ञानविषयो रजतोपायान्यत्वे सति रजतार्थिप्रवृत्तिविषयत्वात्सत्यरजतवत् । रजतस्योपायः कारणं खन्यादिः । तस्य रजतार्थिप्रवृत्तिविषयत्वेपि रजतज्ञानविषयत्वाभावाद्व्यभिचारः । तद्वारणाय सत्यन्तं विशेषणमुपात्तमिति नैयायिकाः । मायिनस्तु अनिर्वचनीयख्यातिमाहुः । अनिर्वचनीयख्यातिर्नाम सत्त्वेनासत्त्वेन चानिर्वचनीयस्य रजतादेः ख्यातिः प्रतीतिः ।

शुक्तिरजतस्थले च रजतं न सत्। भ्रान्तिबाधयोरसंभवात्। नाप्यसत्। ख्यातिबाधयोरसंभवात्। बाधस्य प्रतियोगिपूर्वकत्वेनासतस्तदसंभवात्। किंतु शुक्त्यज्ञानपरिणामभूतं सदसद्भ्यामनिर्वचनीयमपूर्वं रजतमुत्पद्यते। तदेव च तत्र रजतज्ञानविषयः। तदुक्तम् सत्त्वे न भ्रान्तिबाधौ स्तो नासत्त्वे ख्यातिबाधने। सदसद्भ्यामनिर्वाच्याविद्याविद्यैः सह भ्रमः॥ इति। आविद्यैरविद्यापरिणामभूतै रजतादिभिः। प्रपञ्चस्यापि अनाद्यविद्यापरिणामभूतत्वादनिर्वचनीयत्वमेवेति। रामानुजीयास्तु सत्ख्यातिमाहुः। सत्ख्यातिर्नाम ज्ञानविषयस्य सत्यत्वम्। तर्हि भ्रमत्वं कथमिति चेद्विषयव्यवहारबाधाद्भ्रमत्वम्। तदुपपादयामः। पञ्चीकरणप्रक्रियया पृथिव्यादिषु सर्वत्र सर्वभूतानां विद्यमानत्वम्। अत एव शुक्तिकादौ रजतांशस्य विद्यमानत्वाज्ज्ञानविषयस्य सत्यत्वम्। तत्र रजतांशस्य स्वल्पत्वात्तत्र न व्यवहार इति तज्ज्ञानं भ्रमः। विस्तरस्तु यतीन्द्रमतदीपिकायां तट्टीकायां च द्रष्टव्यः (पृ० ९–१२)। द्वैतवादिनां श्रीमध्वाचार्याणां सिद्धान्ते तु तत्र शुक्तिकादौ प्रतीतस्य रजतादेः असदेवेदं रजतं प्रत्यभात् इत्यादिना बाधोत्तरकालमसत्त्वानुभवादसता च संबन्धायोगात् न शुक्तिरूप्यादिना दृक्संबन्धः। किंतु शुक्तिकादिसंनिकृष्टमेवेन्द्रियं दोषवशाच्छुक्तिमत्यन्तासद्रजतात्मनावगाहते इति (मध्वविजयटीका स० ५ श्लो० ६)। २ प्रशंसा। ३ प्रसिद्धिः। ४ कथनम् इति काव्यज्ञा आहुः।

## ग.

**गणः**—चतुर्थी तिथिः (पु० चि० पृ० ८४)।

**गणेशः**—महेश्वरः (पु० चि० पृ० १२६)।

**गतिः**—१ गमनम्। यथा सूत्रस्येवास्ति मे गतिः (रघु० १।४) प्रणयातिभूमिमगमद्गतिभिः (माघः) इत्यादौ। अत्रार्थे गतित्वं चोत्क्षेपणादिभिन्नत्वे सति उत्तरदेशसंयोगानुकूलक्रियात्वम् (राम० १ पृ० ३४)। २ ज्ञानम्। यथा इत्यर्थो गम्यते मया इत्यादौ। अत्रार्थे ये गत्यर्थका

धातवः ते ज्ञानार्थकाः इति वैयाकरणानां नियमोनुसंधेयः । ३ परिणामः । ४ प्रमाणम् । ५ सरणिः । ६ स्थानम् । ७ स्वरूपम् । ८ विषयः । ९ अभ्युपायः इति काव्यज्ञा आहुः । १० नाडीव्रणमिति भिषजः । ११ प्रादयो निपाताः शब्दविशेषा इति शाब्दिका आहुः ( वाच० ) ।

**गन्धः**—( गुणः ) [ क ] घ्राणग्राह्यो योर्थः सः । स च पृथिवीमात्रवृत्तिः ( त० सं० ) बाह्यैकेन्द्रियग्राह्यश्च । यथा वर्जयेन्मधु मांसं च गन्धं माल्यं रसान् स्त्रियः ( मनु० ) इत्यादौ । यथा वा पृथिवी गन्धवतीत्यादौ ( त० सं० ) । गन्धलक्षणं च गन्धत्वमेव । तच्च घ्राणमात्रग्राह्यगुणत्वव्याप्यजातिमत्त्वम् । अथवा पृथिवीमात्रवृत्तिवृत्तिर्गुणत्वसाक्षाद्व्याप्या च या जातिः तादृशजातिमत्त्वम् ( वै० उ० ७।१।६ ) । तादृशजातिस्तु गन्धत्वम् । [ ख ] घ्राणमात्रग्राह्यो गुणः ( वै० उ० ७।१।६ ) । अत्र मात्रपदप्रयोजनं चिन्त्यम् । [ ग ] घ्राणमात्रग्राह्यजातिमान् ( त० कौ० १ पृ० ४ ) । स च गन्धो द्विविधः सुरभिः असुरभिश्च । द्विविधोपि गन्धः पृथिव्यामेवास्ति । स च पाकजः अनित्यश्च ( त० कौ० १ पृ० ४ ) । पाकजप्रक्रिया त्वन्यत्र ( वै० ७।१।६ ) द्रष्टव्या । जलादौ तूपाधिकृतो गन्धः । उत्कटानुत्कटभेदेनापि गन्धो द्विविधः । तत्र कस्तूर्यादावुत्कटः । पाषाणादौ त्वनुत्कटः । तत्रोत्कटगन्ध एवोपलभ्यते न त्वनुत्कटः इति । एवम् रसादयो ज्ञेयाः । शास्त्रान्तरे तु गन्धो दशविधः इत्युक्तम् । यथा इष्टश्चानिष्टगन्धश्च मधुरोम्लः कटुस्तथा । निर्हारी संहतः स्निग्धो रूक्षो विशद एव च ॥ एवं दशविधो ज्ञेयः पार्थिवो गन्ध इत्युत इति । तत्रेष्टः १ कस्तूरिकादौ । अनिष्टः २ विष्ठादौ । मधुरः ३ मधुपुष्पादौ । अम्लः ४ तिन्तिड्यादौ । कटुः ५ मरिचादौ । निर्हारी ६ हिङ्ग्वादौ । संहतः चित्रगन्धः ७ अनेककल्कद्रव्यादौ । स्निग्धः ८ सद्यस्तप्तघृतादौ । रूक्षः ९ सार्षपतैलादौ । विशदः १० शाल्यादौ इति ( आश्व० अ० ५० ) ( वाच० ) ।

**गमकत्वम्**—नित्यसाकाङ्क्षत्वम् । यथा चैत्रस्य गुरुकुलम् मैत्रस्य दासभार्येत्यादौ गमकत्वात्समासः इति । तदुक्तं महाभाष्ये सापेक्षत्वेपि गमकत्वा-

त्समासः इति। एकदेशान्वयस्य शास्त्रे निषिद्धत्वेप्यत्र नित्यसाकाङ्क्षत्वेन चैत्रपदार्थस्य गुरुत्वे मैत्रपदार्थस्य च दासत्वे निरूपितत्वसंबन्धेनान्वयः सर्वैरुपगम्यत इति समासः संपद्यत इति बोध्यम्। यथा वा काकतालीयमित्यत्र गमकत्वाद्वृत्तिः संपद्यते इति (कुवलया०)।

**गमकम्**—१ गतिप्रयोजकम् बोधकं वा। यथा यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः (मालतीमा०) इत्यादौ। २ स्वरविशेष इति गायका आहुः। तत्रोक्तम् गमकः स्वश्रुतिस्थानस्थानां श्रुत्यन्तराश्रयात्। स्वरो यो मूर्छनामेति गमकः स इहोच्यते॥ कम्पितः स्फुरितो लीनो भिन्नः स्थविर एव च। आहतान्दोलितौ चेति गमकाः सप्त कीर्तिताः॥ इति (संगी० दा०) (वाच०)।

**गमनम्**—(कर्म) [क] गमनत्वजातिमत् (वै० उ० १।१।७) (त० कौ०)। [ख] उत्क्षेपणादिचतुष्टयभिन्नत्वे सति कर्मत्ववत्। अत्रेदं बोध्यम्। उत्क्षेपणादिसर्वकर्मसु यदि गमनव्यवहारस्तदा गमनस्य पृथगभिधानं भ्रमणरेचनस्पन्दनोर्ध्वज्वलनोन्नमनादीनां भिन्नभिन्नबुद्धिव्यपदेशभाजामेकेन शब्देन संग्रहार्थम्। यद्वा गमनत्वमपि कर्मत्वव्याप्या पञ्चमी जातिरेव। तेन भ्रमणरेचनादिष्वेव गमनप्रयोगो मुख्यः। उत्क्षेपणापक्षेपणादिषु यदि गमनप्रयोगस्तदा भाक्तः। स्वाश्रयसंयोगविभागासमवायिकारणत्वमेव गौणमुख्यसाधारणो धर्मः। गमनत्वजातेस्तु अनियतदिग्देशसंयोगविभागासमवायिकारणत्वमेव व्यञ्जकम्। तच्च भ्रमणादिषु सर्वत्रेति गमनग्रहणेनैव तेषां ग्रहणमिति (वै० उ० १।१।७)। तच्च कर्म स्वाश्रयसंयोगविभागासमवायिकारणक्रियाविशेषः (वाच०)। अथवा उत्तरदेशसंयोगजनकक्रिया (ल० व०)। यथा ग्रामं गच्छतीत्यादौ संयोगावच्छिन्नस्पन्दो गच्छत्यर्थः (ग० व्यु० २)। विजिगीषोर्जिगमिषोर्वा प्रयाणं गमनमिति काव्यज्ञा वदन्ति।

**गर्तः**—रूपादिमद्भिः सावयवारब्धकार्यैर्मध्यशून्यैः संस्थानविशेषोपहितमाकाशम् (न्या० वा० १।१।१४ पृ० ८१)।

**गर्वः**—१ अभिमानः । २ अवज्ञाविशेषः । तत्रोक्तम् । ऐश्वर्यरूपतारुण्यकुलविद्याबलैरपि । इष्टलाभादिनान्येषामवज्ञा गर्व ईरितः ॥ इति । ३ मदः । तदुक्तम् गर्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः इति । व्यभिचारिभावः इत्यालंकारिका वदन्ति । स च अवज्ञासविलासाङ्गदर्शनाविनयादिकृत् इति ( वाच० ) ।

**गलग्रहः**—कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् । त्रयोदशीचतुष्कं च अष्टावेते गलग्रहाः ॥ ( पु० चि० पृ० ४३८ ) ।

**गवीधुकः**—अरण्यस्थो गोधूमः ( जै० न्या० अ० १० पा० ८ अधि० ४ ) ।

**गानम्**—[ क ] स्वरविशेषेण निष्पाद्यः परिणतः शब्दविशेषः । [ ख ] गीतिः । सा च आभ्यन्तरयत्नजनितस्वरविशेषाणामभिव्यञ्जिका क्रिया । यथा सामगानम् । गानं हि द्विविधम् । वैदिकं लौकिकं च । तत्र वैदिकलक्षणम् जैमिनिसूत्रभाष्ये ( ९।२।२९ ) प्रतिपादितम् तत् तत्र द्रष्टव्यम् । लौकिकं तु धातुमात्रासमायुक्तं गीतमित्युच्यते बुधैः । तत्र नादात्मको धातुर्मात्रा ह्यक्षरसंचयः ॥ गीतं च द्विविधं प्रोक्तं यन्त्रगात्रविभागतः । यन्त्रं स्याद्वेणुवीणादि गात्रं तु मुखजं मतम् ॥ पुनर्गीतं निबन्धानिबन्धभेदेन द्विविधम् । तत्र निबन्धं तालमानरसाश्रितम् । अनिबन्धं तु वर्णादिनियमशून्यम् इत्यादि ( संगीत० दा० ) ( वाच० ) ।

**गान्धर्वः**—( विवाहः ) गान्धर्वः समयान्मिथः ( याज्ञवल्क्य० अ० १ श्लो० ६१ ) ।

**गीतम्**—१ छान्दसहार्दएतदन्यतरस्वरेण गुणकीर्तनम् । यथा भुवकादि गानम् । २ गान्धर्वशास्त्रसमयानुसारेण महेश्वरसंबन्धिगुणधर्मादिनिमित्तानां चिन्तनमिति नकुलीशाचार्यो वक्ति ( सर्व० सं० पृ० १६९ नकु० ) । अधिकं तु गानशब्दव्याख्यानावसरे संपादितम् ।

**गुच्छः**—अवल्लीरूपाः असरलप्रायाः कुरण्टकादयः ( मिताक्ष० अ० २ श्लो० २२९ ) ।

गुणः—१ प्रमाया असाधारणकारणम् । यथा प्रमाया गुणजन्यत्वम् उत्पत्तौ परतस्त्वम् इत्यादौ । प्रत्यक्षे विशेषणवद्विशेष्यसंनिकर्षो गुणः ( भा० प० गु० श्लो० १३२—१३५ ) । अनुमितौ च व्यापकवति व्याप्यज्ञानं यथार्थपरामर्शः गुणः ( त० दी० प्रामा० प० ३७ ) ( चि० १ प्रामा० ) । प्रमाया असाधारणकारणमित्यस्य प्रमात्वाधिकदेशवृत्तिधर्मानवच्छिन्नप्रमानिष्ठकार्यतानिरूपितकारणताशालीत्यर्थः । तेन ज्ञानमात्रहेतुभूतात्ममनःसंयोगादेः भ्रमजनकपित्तादिदोषाणां च व्युदासः ( नील० प्रामा० पृ० ३४—३५ ) । २ अप्रधानम् । यथा षष्ठीं कुर्यात्तदा गुणे तद्गुणसंविज्ञानबहुव्रीहिः इत्यादौ इति । ३ वस्तुधर्मो गुण इति वैयाकरणादय आहुः । ४ अङ्गम् । यथा गुणवाद इत्यादौ । यथा वा दध्ना जुहोतीत्यादौ प्रधाने यागादौ आधेयविशेषो दध्यादिः गुण इति मीमांसकाः । ५ सत्त्वे निविशतेपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोसत्त्वप्रकृतिर्गुणः ॥ इति शाब्दिका आहुः । अस्यार्थस्तु सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्यां स्त्रीप्रत्ययप्रकरणे वोतो गुणवचनात् ( पाणिनिसू० ४।१।४४ ) इति सूत्रे उक्तः तत एव द्रष्टव्यः । ६ अकारः एकारः ओकारश्चैते त्रयो गुणा इत्यपि शाब्दिकाः संगिरन्ते । ७ सत्त्वम् रजः तमश्चैते द्रव्यात्मकाः त्रयो गुणा इति सांख्याः । ८ ज्ञानानन्दादयोपि गुणा इति वेदान्तिनः । ९ शमदमतितिक्षादयो गुणा इति योगिनः । १० शौर्यादयो गुणा इति व्यवहारज्ञाः । ११ संधिविग्रहादयः षड्गुणा इति नीतिशास्त्रज्ञाः । १२ श्लेषादयो दश माधुर्यौजःप्रसादा इति त्रयो वा गुणा इत्यालंकारिकाः । १३ अकार्पण्यास्पृहत्वादय इति धर्मज्ञाः । १४ देशकालज्ञतादयश्चतुर्दश गुणा इति पौराणिकाः । १५ उष्णाद्यष्टविधं वीर्यं गुण इति भिषजः । १६ विशेषणमिति भर्तृहरिः । १७ उत्कर्षः । १८ इन्द्रियम् इत्यपरे । १९ आवृत्तिरिति तान्त्रिकाः । २० रज्जुः । २१ सूपकारः । २२ त्याग इति काव्यज्ञाः । २३ दोषान्यधर्मो गुण इत्यन्ये आहुः ( वाच० ) । २४ कार्यस्य ज्ञाप्यस्य वा आश्रये य आश्रितः स गुणः । अयं च विभाषा

गुणेऽस्त्रियाम् ( पाणिनिसू० २।३।२५ ) इति तृतीयापञ्चमीविधायकसूत्रस्थगुणशब्दस्यार्थः । यथा वह्निमान् धूमात् इत्यत्र धूमो गुणः । जाड्यात् जाड्येन वा बद्धः इत्यादौ जाड्यादिर्गुणः । अत्र धूमस्य स्वज्ञाप्यवह्न्याश्रये आश्रितत्वाद्गुणत्वम् । जाड्यस्य च स्वप्रयोज्यबन्धनाश्रये आश्रितत्वाद्गुणत्वम् ( व्युत्प० का० ३ ) । २५ रूपादयश्चतुर्विंशतिर्गुणा इति वैशेषिका नैयायिकाश्चाहुः । तल्लक्षणं च [ क ] द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् ( वै० १।१।१६ ) । [ ख ] सामान्यवानसमवायिकारणमस्पन्दात्मा ( त० भा० अर्थनि० पृ० ३२ ) । [ ग ] द्रव्यकर्मभिन्नत्वे सति सामान्यवान् । [ घ ] गुणत्वरूपजातिमान् ( त० दी० १ पृ० ६ ) ( त० कौ० १ पृ० १ ) । गुणत्वं च समवायिकारणावृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वम् । कार्यासमानाधिकरणकर्मावृत्तिजातिमत्त्वं वा इत्यादि ( वै० उ० ७।१।१ पृ० २८१ ) । अथवा समवायिकारणासमवेतासमवायिकारणभिन्नसमवेतसत्तासाक्षाद्व्याप्यजातिः ( सर्व० पृ० २१५ औलू० ) । असमवायिकारणभिन्नाश्च आत्मविशेषगुणाः बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाः भवन्तीति विज्ञेयम् । एतेषामसमवायिकारणत्वं नैयायिका न स्वीकुर्वन्ति । यद्वा द्रव्येतरवृत्तितानवच्छेदकद्रव्यसामान्यवृत्तितावच्छेदकपदार्थविभाजकोपाधिमत्त्वम् (वाक्य० १ पृ० २ ) । अथवा द्रव्यावृत्तिनित्यवृत्तिजातिमत्त्वम् ( ल० व० पृ० ४ ) । अथवा द्रव्यत्वव्यापकतावच्छेदकसत्तान्यजातिमत्त्वम् ( मु० गु० पृ० १९१ ) । न्यायनये गुणाश्चतुर्विंशतिः । रूपम् रसः गन्धः स्पर्शः संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः परत्वम् अपरत्वम् गुरुत्वम् द्रवत्वम् स्नेहः शब्दः बुद्धिः सुखम् दुःखम् इच्छा द्वेषः प्रयत्नः धर्मः अधर्मः संस्कारः इति । रूपाद्यपरत्वान्ताः एकादश बुद्ध्यादिप्रयत्नान्ताः षट् चेति सप्तदश गुणा इति कणादसूत्रे ( वै० १।१।६ ) उक्तम् । सूत्रस्थचकारो गुरुत्वादीनवशिष्टान् सप्त समुच्चिनोतीत्येवं चतुर्विंशतिर्गुणा भवन्तीति प्रशस्तपादाचार्यादय आहुः । अत्रेदं बोध्यम् ।

रूपम् रसः गन्धः स्पर्शः परत्वम् अपरत्वम् गुरुत्वम् द्रवत्वम् स्नेहः वेगः स्थितिस्थापकः एते मूर्तगुणा इत्युच्यन्ते। बुद्धिः सुखम् दुःखम् इच्छा द्वेषः प्रयत्नः धर्मः अधर्मः भावना शब्दः एते अमूर्तगुणाः। संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः एते गुणाः मूर्तामूर्तगुणाः। संयोगः विभागः द्वित्वादिकाः संख्याः द्विपृथक्त्वादयः एते अनेकाश्रिता गुणाः। तद्भिन्नाः शिष्टास्त्वेकैकवृत्तयः। बुद्धिः सुखम् दुःखम् इच्छा द्वेषः प्रयत्नः धर्मः अधर्मः रूपम् रसः गन्धः स्पर्शः स्नेहः सांसिद्धिकद्रवत्वम् भावना शब्दः एते विशेषगुणाः। संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः परत्वम् अपरत्वम् नैमित्तिकद्रवत्वम् गुरुत्वम् वेगः एते सामान्यगुणाः। संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः परत्वम् अपरत्वम् द्रवत्वम् स्नेहः एते द्वीन्द्रियग्राह्यगुणाः। रूपम् रसः गन्धः स्पर्शः शब्दः एते बाह्यैकैकेन्द्रियग्राह्यगुणाः। गुरुत्वम् अदृष्टम् ( धर्माधर्मौ ) भावना एते अतीन्द्रियगुणाः। बुद्ध्याद्यष्टकम् भावना शब्दश्च एते अकारणगुणोत्पन्नाः। अपाकजा रूपरसगन्धाः अनुष्णः स्पर्शः अपाकजं द्रवत्वम् स्नेहवेगगुरुत्वैकत्वानि पृथक्त्वम् परिमाणम् स्थितिस्थापकः एते कारणगुणोत्पन्नाः। संयोगः विभागः वेगः एते कर्मजा गुणाः। रूपम् रसः गन्धः स्पर्शः एकत्वम् परिमाणम् एकपृथक्त्वम् स्नेहः शब्दः स्थितिस्थापकश्च एते असमवायिकारणान्येव भवन्ति। बुद्ध्यादयोऽष्टौ भावना एते आत्ममात्रवृत्तिविशेषगुणाः निमित्तकारणान्येव। न तु असमवायिकारणानि भवन्ति। उष्णस्पर्शः गुरुत्वम् वेगः द्रवत्वम् संयोगविभागौ एते गुणा असमवायिकारणानि निमित्तकारणानि च भवन्ति। बुद्ध्यादयोऽष्टौ शब्दः भावना संयोगः विभागः एते अव्याप्यवृत्तिगुणा उच्यन्ते (भा० प० गु० श्लो० ८७–१००)। सविकल्पकज्ञानम् इच्छा प्रयत्नः सुखम् दुःखम् द्वेषः जीवात्मगतमेकत्वम् परिमाणम् एते आत्मयोग्यगुणा भवन्ति। रूपादीनामेकैकेन्द्रियग्राह्यत्वम् संख्यादीनां द्वीन्द्रियग्राह्यत्वम् सुखादीनां मानसत्वम् सत्तागुणत्वयोः

सामान्ययोः सर्वेन्द्रियग्राह्यत्वम् (वै० उ० ४।१।१३)। परत्वापरत्वद्वित्वपृथक्त्वादयो बुद्ध्यपेक्षगुणाः । रूपरसगन्धस्पर्शशब्दपरिमाणैकत्वैकपृथक्त्वस्नेहाः सजातीयारम्भकगुणाः । सुखदुःखेच्छाद्वेषप्रयत्नाः स्वासमानजातीयारम्भका गुणा भवन्ति । संयोगविभागसंख्याः गुरुत्वद्रवत्वोष्णस्पर्शज्ञानधर्माधर्मसंस्काराः समानासमानजातीयारम्भका गुणाः । बुद्धिसुखदुःखेच्छाद्वेषभावनाशब्दाः स्वाश्रयसमवेतविशेषगुणारम्भकाः । रूपरसगन्धस्पर्शपरिमाणस्नेहप्रयत्नाः परत्रारम्भकाः। संयोगविभागसंख्यैकपृथक्त्वगुरुत्वद्रवत्ववेगस्नेहप्रयत्नधर्माधर्मास्तूभयत्रारम्भकाः । गुरुत्वद्रवत्ववेगस्थितिस्थापकप्रयत्नधर्माधर्मसंयोगविशेषाः क्रियाहेतवः । परत्वापरत्वद्वित्वद्विपृथक्त्वादयो गुणा अकारणानि भवन्ति । स्वध्वंसप्रत्यक्षातिरिक्तं प्रत्यकारणानीत्यर्थः (दि० गु०)। रूपादिसप्तकम् गुरुत्वद्रवत्वस्नेहवेगस्थितिस्थापकपरत्वापरत्वानि चाश्रयव्यापीनि भवन्ति । रूपरसगन्धस्नेहगुरुत्वद्रवत्वस्थितिस्थापका एते स्पर्शव्याप्या भवन्ति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावना एते गुणा आत्ममात्रवृत्तयो भवन्ति । बुद्धीच्छाद्वेषप्रयत्नभावनानामेव सविषयकत्वम् । अत्रेदं बोध्यम् । इच्छादीनां जनकज्ञानसविषयत्वेनैव सविषयत्वव्यवहार इति तु प्राञ्चः वाचस्पतिमिश्रादयः आहुः । व्यवहारबलेन ज्ञानवदिच्छादेरपि साक्षादेव सविषयतेति तु नव्या आहुः (प० मा०)। रूपद्रवत्वे पृथिव्यप्तेजोमात्रवृत्तिनी भवतः । संख्याप्रचयपरिमाणान्येव परिमाणासमवायिकारणानि भवन्ति । संयोगविभागशब्दा एव शब्दासमवायिकारणानि भवन्ति । स्पर्शगुरुत्वप्रयत्नवेगा एवाभिघातहेतवो भवन्ति । एकत्वैकपृथक्त्वसंयोगविभागाः एवानेकाश्रितगुणारम्भका भवन्ति । परत्वापरत्वे एव दिक्कालपिण्डसंयोगजन्ये भवतः । परत्वापरत्वचरमज्ञानद्वित्वद्विपृथक्त्वादय एव निमित्तनाशनाश्या भवन्ति । एतदन्य एव गुणा गुणान्तरविनाश्या भवन्ति । अपार्थिवपरमाणुगतरूपरसस्पर्शसांसिद्धिकद्रवत्वस्नेहगुरुत्वस्थितिस्थापकनित्यद्रव्यगतैकत्वपृथक्त्वपरिमाणेश्वरबुद्धीच्छाप्रयत्ना एते नित्या अकार्याश्च सन्ति । एतदन्ये गुणास्तु अनित्याः कार्याश्च

सन्ति इति (प० मा० ) । संख्यादयः पञ्च सर्वद्रव्यसाधारणा भवन्ति । परत्वापरत्वे तु मूर्तद्रव्य एव वर्तेते । भावना धर्माधर्मौ दुःखद्वेषौ एते जीवात्मन्येव वर्तन्ते । रूपरसस्पर्शैकत्वपरिमाणैकपृथक्त्वगुरुत्वसांसिद्धिकद्रवत्वस्नेहा नित्यगताः नित्याः अनित्यगतास्त्वनित्या भवन्ति । एतदन्ये गुणा नित्यानित्यगताः अनित्या एव भवन्ति ( प्र० प्र० ) । अत्रेदं बोध्यम् । रूपरसगन्धस्पर्शाः नित्येपि पृथिवीपरमाणौ वर्तमानाः सर्वे अनित्या एव पाकजत्वात् इति ज्ञेयम् । जीवात्मसमवेता बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः शब्दश्चैते द्विक्षणावस्थायिनस्तृतीयक्षणे नश्यन्ति इति ( त० कौ० ) । अत्रायं विवेकः । संनिकृष्टत्वविप्रकृष्टत्वाभ्यां परत्वापरत्वे उत्पद्येते इत्यतः परत्वापरत्वे संनिकृष्टत्वविप्रकृष्टत्वाभ्यामतिरिक्ते गुणावेवेति वैशेषिकमतम् । अत्र सूत्रं प्रमाणम् । एकदिक्कालाभ्यामेककालाभ्यां संनिकृष्टविप्रकृष्टाभ्यां परमपरं च ( वै० ७।२।२१ ) इति । नव्यास्तु संनिकृष्टत्वविप्रकृष्टत्वाभ्यां दैशिकपरत्वापरत्वव्यवहारस्य ज्येष्ठत्वकनिष्ठत्वाभ्यां कालिकपरत्वापरत्वव्यवहारस्य चोपपत्तेः न तयोर्गुणान्तरत्वमिति ( दि० गु० पृ० २०९ ) । पृथक्त्वं चान्योन्याभावान्नातिरिच्यते इति चाहुः । एते रूपादयो गुणाः समवायनिराकरणेन द्रव्याभिन्ना एवेति सांख्या वेदान्तिनश्च मन्यन्ते । तत्र वैशेषिकनैयायिकसिद्धान्तसिद्धेषु चतुर्विंशतौ गुणेषु मध्ये रूपरसगन्धस्पर्शाश्चत्वारः प्रत्येकमुद्भूतानुद्भूतभेदेन द्विविधाः । अनुद्भूतरूपादयो घ्राणरसनाचक्षुस्त्वगादौ तिष्ठन्ति । उद्भूतरूपादयस्तु घटपटादौ योग्यपृथिव्याद्यारम्भकपरमाणुद्व्यणुकत्र्यणुकादौ च तिष्ठन्ति ( त० कौ० ) । केचित्तु चित्राचित्रभेदेनापि ते द्विविधाः । तत्र नीलपीतादिभिर्मधुरतिक्तादिभिः सुरभ्यसुरभ्यादिभिः सुकुमारकठिनाद्यैश्चावयवैरारब्धपटादिषु चित्राः अन्यत्राचित्राः इति मन्यन्ते ( त० कौ० ) । सिद्धान्तिनस्तु रूपादिषु चतुर्षु रूपस्यैव चित्राचित्रभेदेन द्वैविध्यमवयविचाक्षुषप्रत्यक्षान्यथानुपपत्त्या कल्प्यते । न तु रसादीनां द्वैविध्यम् । तेषां चित्रविधत्वानङ्गीकारात् इति प्राहुः ( त० दी० १ ) । प्रकारान्तरेण च ते पुनश्चत्वारोपि पाक-

जापाकजभेदेन द्विविधाः । तत्र पाकजाः कस्यांचित्पृथिव्यामेव वर्तन्ते । घटादिषु पावकसंयोगात्पूर्वश्यामादिनिवृत्तौ रक्ताद्युत्पादात् । अपाकजास्तु पृथिव्यादिचतुष्टयेपि वर्तन्ते । पाकजा अपाकजाश्च ते सर्वे पृथिव्यामनित्या एव । अन्यत्र जलादिषु त्रिषु पाकासंभवेनापाकजा एव ते । ते तु अपाकजाः जलादिषु नित्येषु गता नित्याः । अनित्येषु गतास्त्वनित्या एव । अत्र प्रमाणानि सूत्राणि पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च । एतेन नित्येषु नित्यत्वमुक्तम् । अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् । अनित्येष्वनित्या द्रव्यानित्यत्वात् । कारणगुणपूर्वकाः पृथिव्यां पाकजाः ( वै० ७।१।२–६ ) इति । रूपादीनां गुणानां सर्वेषां गुणत्वाभिसंबन्धः द्रव्याश्रितत्वम् निर्गुणत्वम् निष्क्रियत्वं च । तत्र बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नास्त्वन्तःकरणग्राह्याः । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दतूलपरिमाणोत्तरसंयोगनैमित्तिकद्रवत्वपरत्वापरत्वपाकजाः संयोगजाः । शब्दोत्तरविभागौ विभागजौ । अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वसांसिद्धिकद्रवत्वस्नेहानां यावद्द्रव्यभावित्वम् । शेषाणामयावद्द्रव्यभावित्वं चेति ( प्रशस्त० ११।२४।२५ ) । रूपादीनां सर्वेषां गुणानां प्रत्येकमपरसामान्यसंबन्धाद्रूपादिसंज्ञा भवन्ति ( प्रशस्त० १२।२५ ) ।

**गुणवादः**—( अर्थवादः ) [ क ] विरोधे गुणवादः । विशेष्यतावच्छेदकविशेषणशब्दार्थयोर्विरोधे इति विरोधे इत्यस्यार्थः ( त० प्र० ख० ४ पृ० १२४ ) । [ ख ] प्रमाणान्तरविरोधे सत्यर्थवादः । यथा आदित्यो यूपो भवति । अत्र च यूप आदित्याभेदस्य प्रत्यक्षबाधितत्वात् आदित्यवदुज्ज्वलत्वरूपगुणोनेन लक्षणया प्रतिपाद्यते ( लौ० भा० पृ० ५५ ) । यूप आदित्याभेदस्य प्रत्यक्षादिविरुद्धत्वात् तद्गतो गुणविशेष उज्ज्वलत्वादिर्लक्ष्यते । आदित्यवदुज्ज्वलो यूपः इति बोधः ( म० प्र० पृ० ६४ ) । यथा वा यजमानः प्रस्तरः इत्यादिः ( सि० च० पृ० ३३ ) ( लौ० भा० पृ० ५५ ) ( म० प्र० प० ६४ ) ( त० प्र० ख० ४ पृ० १२४ ) । अत्र प्रस्तरो दर्भमुष्टिः । तस्य यजमाने अभेदा-

न्ययबाधात् यजमानस्य कुशमुष्टिधारणरूपाङ्गवादरूपत्वात् गुणवादः इति बोध्यम् । गुणवादशब्दव्युत्पत्तिस्तु गुणस्य अङ्गस्य वादः इति द्रष्टव्या ।

**गुणविधिः**—( विधिः ) प्राप्तस्याप्राप्तस्य वा कर्मणोऽङ्गद्रव्यविधानम् । तत्र प्राप्तस्य यथा दध्ना जुहोति इत्यादौ दधिद्रव्यविधानम् । गुणविधौ च धात्वर्थस्य साध्यत्वेनैवान्वयः । न तु साधनत्वेनाप्यन्वयः । अत्र होमस्य अग्निहोत्रं जुहुयात् इत्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानम् । दध्ना होमं भावयेत् इति वाक्यार्थः ( लौ० भा० ) । अग्निहोत्रं जुहोति स्वर्गकामः इति विधिना स्वर्गसाधनत्वेन प्राप्तस्याग्निहोत्रादेरङ्गम् दध्ना जुहोति इति वाक्येन दधिद्रव्यं विदधद्गुणविधिः ( वाच० ) । अप्राप्तस्य यथा सोमेन यजेत इत्यादौ सोमविशिष्टयागविधानम् । अत्र कर्म अङ्गं च मानान्तरेणाप्राप्तम् इति उभयविधानम् । यथा हि तस्य अङ्गरूपगुणविधानेन गुणविधित्वम् तथा कर्मस्वरूपप्रापकत्वेन उत्पत्तिविधित्वं चेत्युभयरूपत्वम् ( वाच० ) । अत्र सोमद्रव्यं यागश्चेत्युभयम् अप्राप्तम् इति सोमविशिष्टयागं विधत्ते । सोमपदे मत्वर्थलक्षणया सोमवता यागेन इष्टं भावयेत् इति वाक्यार्थबोधः ( लौ० भा० ) ।

**गुणान्तरापत्तिः**—धर्मिणि सत्येव धर्मान्तरापत्तिः । यथा शाब्दिकनये उदात्तत्वगुणमात्रनिवृत्त्या अनुदात्तत्वम् ( गौ० वृ० २।२।५६ ) ।

**गुप्**—( धातुः ) १ रक्षणम् । यथा आत्मानं सततं गोपायीत ( श्रुतिः ) इत्यादौ । २ गर्हापूर्वकनिवृत्तिः । यथा पापाज्जुगुप्सत इत्यादौ धात्वर्थः । अत्र सुपो विषयित्वमर्थः । तच्च गर्हानिवृत्त्योः क्रमेणान्वयि । तथा च पापविषयकगर्हाप्रयुक्तपापगोचरनिवृत्तिमान् इत्याकारको बोधः ( श० प्र० श्लो० ६८ पृ० ८१ ) । ३ भासनम् । ४ व्याकुलत्वम् । यथा गोपायति क्षितिमिमां चतुरब्धिसीमां पापाज्जुगुप्सत उदारमतिः सदैव । वित्तं न गोपयति यस्तु वनीयकेभ्यो धीरो न गुप्यति महत्यपि कार्यजाते ॥ ( कविरहस्ये ) इति चतुर्णां गुप्धात्वर्थानामुदाहरणानि ।

**गुप्तिः**—संचारकारणायोगादात्मनो गोपनम् ( सर्व० सं० पृ० ७८ आर्ह० ) ।

**गुरुः**—१ वक्ष्यमाणगुरुत्वविशिष्टपदार्थः । २ प्रभाकराख्यो मीमांसकविशेषः । अत्र प्रभाकरस्य गुरुनामप्राप्तौ आख्यायिका श्रूयते । अत्र तुनोक्तं तत्रापिनोक्तम् अतः पौनरुक्त्यम् इत्यत्र गुरोः संशये जाते तच्छिष्येण प्रभाकरेण तदसंनिधाने तत्पुस्तके तुना तुशब्देन अपिना अपिशब्देन इति पदच्छेदः कृतः । उत्तरकाले गुरुणा तदवलोकनेन केन ईदृशः पदच्छेदः कृतः इति पृष्टे अन्यशिष्यद्वारा प्रभाकरकृतत्वं निश्चित्य तस्य संशयापनोदकत्वात् गुरुः इति संज्ञा कृता इति ( वाच० )। ३ निषेकादिक्रियाकर्तेति धर्मज्ञा आहुः । ४ सच्छास्त्रोपदेशकः आचार्यादिः गुरुरिति मुमुक्षवः । ५ दीर्घाक्षरं गुर्विति वृत्तशास्त्रज्ञाः । ६ सुराचार्य इति पौराणिकाः । ७ बृहस्पत्याख्यो नक्षत्रविशेष इति ज्योतिःशास्त्रज्ञाः । ८ पित्रादिर्जनो गुरुरिति काव्यज्ञा आहुः । स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ( मिताक्षरा अ० १।३४ )। ९ पञ्चकास्त्वष्टविज्ञेया गणश्चैकस्त्रिकात्मकः । वेत्ता नवगणस्यास्य संस्कर्ता गुरुरुच्यते ॥ ( सर्व० सं० पृ० १६२ नकुली० )।

**गुरुत्वम्**—( गुणः ) आद्यपतनासमवायिकारणम् ( भा० प० श्लो० १५५ ) ( त० सं० ) ( त० व० पृ० २५० )। यथा रक्तिकमाषकतोलकत्वादि ( दि० १ ) । आद्यत्वमिह स्वसमानाधिकरणपतनप्रतियोगिकध्वंसासमानकालिकत्वम् । द्वितीयपतनादीनां प्राथमिकपतनध्वंससमानकालिकत्वान्निरास इति भावः ( नील० १ पृ० १४ )। पतनं नाम अधोदेशसंयोगानुकूलो व्यापारः । तच्च पतनं यथा वृक्षात्पर्णं पततीत्यादौ वृक्षविभागजनकव्यापारमारभ्य भूमिसंयोगजनकव्यापारपर्यन्तं सर्वाः क्रियाः । तत्र प्राथमिकव्यापारो गुरुत्वजन्यः । द्वितीयादिस्तु वेगजन्यः इति ( वाक्य० १ पृ० ९ ) ( वै० ५।१।७–१८ ) । इदं गुरुत्वम् पृथिवीजलवृत्ति अतीन्द्रियं च । नित्यगतं नित्यम् अनित्यगतमनित्यम् ( भा० प० श्लो० १५४–१५५ )। गुरुत्वं पतनानुमेयम् । अधोवच्छेदेन संयुक्तसमवायात् । अनुमानप्रयोगस्तु संयोगासमवधानकालीना क्रिया गुणासमवायिकारणिका क्रियात्वात् संयोगजन्यक्रियावत् इत्यनुमानेन

गुरुत्वसिद्धिः (दि० गु० पृ० २३२)। वल्लभाचार्यास्तु गुरुत्वं प्रत्यक्षम् (स्पार्शनविषयः) इत्याहुः (प० मा०) (वै० उ० ४।१।१०)। लीलावतीकारस्तु भस्मीभावदशायां गुरुत्वापकर्षदर्शनात्तदन्यथानुपपत्त्या गुरुत्वमपि पाकजं मेने। आचार्यास्तु कारणगुणपूर्वकमध्ये गुरुत्वे पाकजत्वविशेषणमप्रवेशयन्तो गुरुत्वं पाकजं नेत्याविश्चक्रुः (प० मा०)। सांख्यास्तु गुरुत्वं तमोगुणस्य धर्म इत्याहुः (वाच०)। अर्वाचीना ह्रूण-विद्याविशारदास्तु पृथिव्यादिगताकर्षणशक्तिविशेषेणैव पतनस्योपपत्तावलं गुरुत्वेन इति मेनिरे। गुरुत्वं जलभूम्योः पतनकारणम् अप्रत्यक्षम् पतनकर्मानुमेयम् संयोगप्रयत्नसंस्कारविरोधि। तस्य चाबादिपरमाणु-रूपादिवन्नित्यानित्यत्वनिष्पत्तयः इति (प्रशस्त० २ पृ० ५२)। अत्रेदं विज्ञेयम्। जन्यगुरुत्वमेव पतनं प्रति कारणम् इति कार्यकारणभाव-कल्पनात् आकाशादीनां गुरुत्वाभावो नैव। परमाण्वादीनां तु जन्य-गुरुत्वाभावेन पतनासंभवः। पार्थिवजलपरमाण्वोर्गुरुत्ववत्तया तस्य मालादि-देशसंयोगे पतनप्रतिबन्धकत्वाकल्पनेपि न परमाणुपतनापत्तिश्च इति (राम० १।१ पृ० ५६)। गुरुत्वं स्पर्शविशेषः प्रत्यक्षसिद्ध इति वल्लभाचार्याः (नैयायिकविशेषाः) आहुः।

**गुरुधर्मः**—[क] अव्यावर्तकपदार्थघटितो धर्मः। यथा प्रमेयघट इत्यादौ घटत्वमपेक्ष्य प्रमेयत्वविशिष्टं घटत्वं गुरुधर्मः। [ख] अवच्छेदकत्वाद्य-प्रयोजकपदार्थघटितो धर्मः। यथा पर्वतो वह्निमान्नीलधूमादित्यादौ नीलधूमत्वं गुरुधर्मः। अत्र नीलधूमत्वं शुद्धधूमत्वमपेक्ष्य गुरुधर्म इति व्याप्यतावच्छेदकं न भवतीति विज्ञेयम्। यथा वा कम्बुग्रीवादिमान्ना-स्तीत्यादौ कम्बुग्रीवादिमत्त्वं गुरुधर्मः। अत्र च न्यायः संभवति लघौ धर्मेवच्छेदकेतिप्रसङ्गानापादके गुरुधर्मो नावच्छेदकः इति। तेन च लघोर्घटत्वस्याभावीयप्रतियोगितायामवच्छेदकत्वसंभवे कम्बुग्रीवादिमत्त्वं गुरुतया नावच्छेदकम् इति बोध्यम्। [ग] बहुपदार्थोपस्थितिसापेक्षो धर्मः। यथा धूमत्वापेक्षया नीलधूमत्वं गुरुधर्मः इत्यादौ।

**गुरुभम्**—पुष्यनक्षत्रम् (पु० चि० पृ० ३५७)।

**गुल्मः**—अनतिदीर्घनिबिडलता मालत्यादिः ( मिताक्षरा २।२२९ ) ।

**गोचरत्वम्**—१ जन्यज्ञानविषयत्वम् । यथा घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ( भा० प० श्लो० ५४ ) इत्यादौ गन्धरूपरसादीनां गोचरत्वम् । २ मायावादिनस्तु ज्ञानमात्रविषयत्वम् । यथा अवाङ्मनसगोचरम् ( वेदान्तसा० ) इत्यादौ इत्याहुः ( वाच० ) । ३ ग्रहाणां गतिविशेष इति ज्योतिर्विद आहुः । ४ सूर्यादिग्रहगमननिमित्तशुभाशुभनिरूपणमिति मौहूर्तिका आहुः ( वाच० ) ।

**गोत्रम्**—१ ऋषीणां वंशपरंपरा ( मिता० १।५३ ) ( धर्मसि० ) । यथा मम ( न्यायकोशकर्तुः ) शालङ्कायनगोत्रम् । गोत्रकाराश्च मुख्यत्वेनाष्टा सुप्रसिद्धाः प्रवरमञ्जर्यामुक्ताः । यथाह बौधायनः विश्वामित्रो जमदग्निर्भरद्वाजोथ गौतमः । अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः इति । तदर्थश्च सप्तानामृषीणामगस्त्याष्टमानां यदपत्यम् तद्गोत्रम् इति ( निर्ण० सि० परि० ३ पृ० २७ ) । २ पर्वतादिरिति काव्यज्ञा आहुः ।

**गौणः**—१ गौण्या वृत्त्या प्रवृत्तः शब्दः । यथा ॐ गौणश्चेन्नात्मशब्दात् ॐ ( ब्रह्मसूत्र० १।१।६ ) इत्यादौ । यथा वा बहूनि मम नामानि कीर्तितानि महर्षिभिः । गौणानि तत्र नामानि कर्मजानि च कानिचित् ॥ ( भा० शान्ति० अ० ३४३ ) इत्यादौ । २ अमुख्यम् । यथा एवमागामियागीयमुख्यकालादधस्तनः । स्वकालादुत्तरो गौणः कालः सर्वस्य कर्मणः ॥ ( छन्दोग० ) इत्यादौ । ३ अप्रधानम् । यथा गां दोग्धि पय इत्यादौ गौरप्रधानं कर्म । गौर्दुह्यते पय इत्यत्राप्रधाने गोरूपकर्मणि लकारः । अत्रोक्तम् गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् इति । अधिकं तु अप्रधानकर्मत्वादिशब्दव्याख्यानावसरे संपादितम् ।

**गौणी**—( लक्षणा ) [ क ] शक्यसदृशत्वप्रकारेण बोधकतया गौणी । यथा अग्निर्माणवक इत्यादावग्निसदृशत्वादिनाग्न्यादिपदस्य गौणी वृत्तिः ( श० प्र० पृ० २९ ) । इयमेव गौणी वृत्तिः । यथा लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ( तन्त्रवा० १।४।२२ पृ० ३१८ ) ( काव्यप्र० उ० २ )

इत्यादौ । अत्रोक्तम् सादृश्यात्तु मता गौण्यस्ताश्च षोडश भेदिताः इति ( सा० द० ) ( वाच० ) । शक्तिलक्षणाभ्यामतिरिक्तैव गौणी वृत्तिरिति मीमांसकाः । सा च तदतिरिक्ता नेति नैयायिका आहुः ( म० प्र० ४ पृ० ४१ ) । अन्यत्र तु विशेष उक्तः सादृश्येतरसंबन्धेपि वृत्तेर्गौणत्वमिच्छन्ति शास्त्रकृतः इति । [ ख ] शक्यपरंपरासंबन्धः ( म० प्र० ४ पृ० ४१ ) । [ ग ] लक्ष्योपस्थितिनियामकः सादृश्यात्मकः संबन्धः । यथा गौर्वाहीक इत्यादौ ( वै० सा० द० ) ( त० प्र० ख० ४ पृ० ३६ ) । अत्रायमर्थः । वाहीको वाहीकदेशोद्भवः गौर्बलीवर्द इत्यर्थः । अत्र वाहीके गवाभेदस्य बाधाद्गोपदेन गोसदृशो लक्ष्यते । गोसादृश्यं च गोगतजाड्यमान्द्यादिकमेव । तथाच जडो मन्दश्च वाहीकः इति शाब्दबोधः । एवं सिंहो माणवक इत्यत्रापि गौणी लक्षणा बोध्या ( त० प्र० ख० ४ पृ० ३६ ) ।

**गौरवम्**—१ आराध्यत्वावगाही ज्ञानभेदः । येयं भक्तिरित्युच्यते ( श० प्र० श्लो० ७२ पृ० ९५ ) । यथा सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते ( मनुस्मृति० ) इत्यादौ । यथा वा प्रायश्चलं गौरवमाश्रितेषु ( कुमार० स० ३ श्लो० १ ) इत्यादौ । २ गुरुत्ववदस्यार्थोनुसंधेयः । ३ गौरवहेतुकमभ्युत्थानादिकं गौरवमिति काव्यज्ञाः पौराणिकाश्चाहुः ।

**गौरी**—तृतीया ( पु० चि० पृ० ८६ ) । यथा गौरी विनायकोपेता ।

**ग्रन्थः**—१ एकार्थको वाक्यसंदर्भः । यथा महाभारतरामायणादिः । चरमवर्णपर्यन्तवर्णसमूहो ग्रन्थ इति केचिद्वदन्ति । शास्त्रम् इत्यन्ये । यथा ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया ( नैष० ) ग्रथग्रन्थि तदा चित्रं मुनिर्गूढं कुतूहलात् ( भा० आ० अ० १ ) इत्यादौ । २ द्वात्रिंशद्वर्णमितानुष्टुप्छन्दस्कः श्लोको ग्रन्थ इति छन्दःशास्त्रज्ञा आहुः ( वाच० ) । ३ वर्णविशेषाणां ( अक्षरविशेषाणाम् ) ग्रन्थसंज्ञेति द्रविडदेशीया वदन्ति ।

**ग्रह**—( धातुः ) १ ज्ञानम् । यथा शिष्यं वेदं ग्राहयतीत्यादौ धात्वर्थः । यथा वा गृह्णाति चक्षुः संबन्धादालोकोद्भूतरूपयोः ( भा० प० श्लो० ५६ ) इत्यादौ । २ बुद्धिविशेषप्रयुक्तहस्तव्यापारः । यथा गृहाण शस्त्रं यदि

सर्ग एष ते ( रघु० ३।५१ ) तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ( रघु० १।५७ ) दश ग्रहान् ( यज्ञपात्राणि ) गृह्णाति ( श्रुतिः ) हंसं तनौ संनिहितं चरन्तं मुनेर्मनोवृत्तिरिव स्विकायाम्। ग्रहीतुकामा दरिणा शयेन यत्नादसौ निश्चलतां जगाहे ॥ ( नैष० ३।४ ) इत्यादौ। ३ स्वीकारः। स च द्विविधः। स्वत्वापादनव्यापारः सेवनादिना आयत्तीकरणं च। तत्राद्यो यथा तत्र किंचिन्न गृह्णीयात् प्राणैः कण्ठगतैरपि ( प्रा० त० गङ्गामाहा० ) इत्यादौ। द्वितीयो यथा शत्रोर्दं न गृह्णीयात् गृह्णीयान्मार्गपोषयोः ( नीति० )।

**ग्रहः**—सूर्यादयो नव ग्रहा इति ज्योतिर्विदो वदन्ति। बालारिष्टकाराः स्कन्दग्रहादय इति पौराणिका भिषजश्चाहुः ( वाच० )। ते च सुश्रुत उक्ता यथा स्कन्दग्रह १ स्तु प्रथमः स्कन्दापस्मार २ एव च। शकुनी ३ रेवती ४ चैव पूतना ५ चान्धपूतना ६ ॥ पूतना शीतनामा ७ च तथैव मुखमण्डिका ८। नवमो नैगमेयश्च ९ यः पितृग्रहसंज्ञितः ॥ इति।

**ग्रामः**—ब्राह्मणकर्षकपुरुषप्रधानो देशो ग्रामः ( कैयटः ७।३।१४ )। अत्र महाभाष्यकाराः। ग्रामशब्दोयं बह्वर्थः। अस्त्येव शालासमुदाये वर्तते। तद्यथा ग्रामो दग्ध इति। अस्ति वाटपरिक्षेपे वर्तते। तद्यथा ग्रामं प्रविष्ट इति। अस्ति मनुष्येषु वर्तते। तद्यथा ग्रामो गतो ग्राम आगत इति। अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते। तद्यथा ग्रामो लब्ध इति ( महाभाष्यम् १।१।७ )। वाटपारिक्षेपार्थस्तु वाटपरिक्षेपशब्दे द्रष्टव्यः।

**ग्राह्यः**—१ प्रतिबध्यज्ञाने प्रकारीभूतो धर्मः। यथा ह्रदो वह्निमान् इति ज्ञाने प्रकारभूतो वह्निर्ग्राह्यो भवति। तथाहि ह्रदो वह्न्यभाववान् इति निश्चयस्य प्रतिबध्ये ह्रदो वह्निमान् इति ज्ञाने प्रकारो वह्निरस्तीति वह्निर्ग्राह्यः इति विज्ञेयम्। २ ग्रहणविषयः। यथा चक्षुर्मात्रग्राह्यो गुणो रूपम् इत्यादौ रूपं ग्राह्यं भवति। ३ स्वीकार्यम् ( वस्तु ) इति काव्यज्ञा वदन्ति।

**ग्लहः**—परस्परसंप्रतिपत्त्या कितवपरिकल्पितः पणो ग्लह इत्युच्यते ( मिताक्षरा अ० २।१९९ )।

घ.

**घट—**( धातुः ) १ चेष्टा । यथा अङ्गदेन समं योद्धुमघटिष्ट नरान्तकः ( भट्टिः ) । २ हिंसा । ३ द्युतिः । यथा कमलवनोद्घाटनम् । ४ शब्दकरणम् । यथा घण्टयति घण्टा निघण्टुः इत्यादौ ( वाच० ) ।

**घटः—**१ कम्बुग्रीवादिमान् पृथुबुध्नोदराकृतियुक्तः पदार्थविशेषः । यथा घटं प्रति दण्डः कारणम् इत्यादौ घटः । २ कुम्भकाख्यः प्राणायामविशेष इति तान्त्रिकाः । ३ द्रोणविंशतिपरिमाणम् इति शाब्दिका आहुः । ४ कुम्भराशिरिति मौहूर्तिकाः । ५ हस्तिकुम्भस्थलमिति काव्यज्ञा आहुः ( वाच० ) ।

**घटकत्वम्—**१ तद्विषयताव्यापकविषयतावत्त्वम् । स्वभिन्नत्वस्वव्यापकत्व-एतदुभयसंबन्धेन विषयताविशिष्टविषयतावत्त्वमित्यर्थः । यथा वह्न्यभावज्ञानीयविषयताव्यापकत्वस्य वह्निविषयतायां सत्त्वेन वह्नेर्वह्न्यभावघटकत्वम् । २ अवच्छेदकत्वम् । यथा साध्याभावाधिकरणत्वं च साध्यवत्ताग्रहविरोधिताघटकसंबन्धेन विवक्षणीयम् साध्याभावप्रतियोगित्वं च साध्यताघटकसंबन्धेन विवक्षणीयम् इत्यादौ घटकत्वम् । ३ योजकत्वम् इति तान्त्रिका आहुः । तद्भेदाश्चोक्ताः । धावको भावकश्चैव योजकश्चांशकस्तथा । दूषकः स्तावकश्चैव षडेते घटकाः स्मृताः ॥ इति ।

**घटितत्वम्—**तद्विषयताव्याप्यविषयतावत्त्वम् । यथा वह्न्यभावविषयताया वह्निविषयताव्याप्यत्वेन वह्न्यभावस्य वह्निघटितत्वम् । यथा वा विशिष्टान्तराघटितत्वम् विशिष्टद्वयाघटितत्वम् प्रतियोगिवैयधिकरण्यघटितत्वम् इत्यादौ घटितत्वम् ।

**घोषः—**गोमहिष्यादियुक्तो देशः ( कैय० ७।३।१४ ) ।

**घ्रा—**( धातुः ) [ क ] गन्धविषयकलौकिकप्रत्यक्षम् । यथा पुष्पं जिघ्रतीत्यादौ घ्राधात्वर्थः । अत्र द्वितीयार्थ आधेयत्वम् । व्युत्पत्तिवैचित्र्येण तस्य घ्राधात्वर्थैकदेशे गन्धेन्वयः । एवं च पुष्पवृत्तिगन्धलौकिकप्रत्यक्षा-

अयतावान् इत्याकारकः शाब्दबोधः इति संक्षेपः ( ग० व्यु० का० २ पृ० ५१ ) । [ ख ] घ्राणजन्यप्रत्यक्षम् । यथा षाड्गिकं जिघ्रति षड्गुणेशः ( भा० १।३।६ ) इत्यादौ ( वाच० ) ।

**घ्राणम्**—( इन्द्रियम् ) [ क ] गन्धोपलब्धिसाधनमिन्द्रियम् ( त० भा० प्रमे० पृ० २६ ) । [ ख ] गन्धग्राहकं महदिन्द्रियम् ( न्या० म० १ पृ० १४ ) ( त० सं० ) । [ ग ] चन्दने सौरभम् इति गन्धप्रत्यक्षासाधारणं कारणम् । तच्च नासाग्रवृत्ति ( प्र० प्र० पृ० ११ ) ( त० सं० ) । तच्च घ्राणेन्द्रियं पार्थिवम् ( त० भा० पृ० २६ ) ( न्या० म० १ पृ० १४ ) । घ्राणस्य पार्थिवत्वे प्रमाणं चानुमानम् । तच्चानुमानम्—घ्राणं पार्थिवम् द्रव्यत्वे सति रूपादिपञ्चकमध्ये गन्धस्यैव व्यञ्जकत्वाद्वायूपनीतसुरभिभागवदिति कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत् इति वा ( मु० १ पृ० ७२ ) ( प्र० प्र० ) । अथवा यदिन्द्रियं रूपादिपञ्चकमध्ये यं गुणं गृह्णाति तदिन्द्रियं तद्गुणयुक्तम् । यथा चक्षू रूपग्राहकं रूपवत् । गन्धग्राहकं घ्राणमतो गन्धवत् इति ( त० भा० पृ० २६ ) ।

## च.

**च**—( अव्ययम् ) १ पादपूरणोपयोगि । तस्य च निरर्थकतैव । तत्रोक्तम् निरर्थकं चादि पादपूरणैकप्रयोजनम् ( चन्द्रालोके ) । २ पक्षान्तरद्योतनम् । पक्षान्तरं चात्र पुनरर्थकम् । यथा मूर्खोपि शोभते तावत् सभायां वस्त्रवेष्टितः । तावच्च शोभते मूर्खो यावत्किंचिन्न भाषते ॥ ( हितो० ) इति । ३ अवधारणम् । ४ चार्थः समुच्चयादिः । तस्यायं विभागो ज्ञेयः । चार्थाश्चत्वारः १ समुच्चयः २ अन्वाचयः ३ इतरेतरयोगः ४ समाहारश्चेति । अत्र सूत्रम् चार्थे द्वन्द्वः ( पा० २।२।२९ ) इति । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः । यथा अहरहर्नयति मनुष्यान्पशून्पक्षिणश्च यम इत्यत्र । अन्यतरस्यानुषङ्गिकत्वेन्वाचयः । आनुषङ्गिकत्वमनुद्देश्यत्वम् । अन्यतरस्य प्राधान्यं च तत्संबन्धिक्रियाया अवश्यकर्तव्यत्व-

रूपम्। तथा च समभिव्याहृतक्रियादिगतमानुषङ्गिकत्वव्याप्यत्वमन्वाचयचकारार्थः (वाच०)। यथा भिक्षामट गां चानयेति। अत्र हि अदर्शनाद्गामनानयन्नपि भिक्षामटत्येव। अनटंस्तु भिक्षां न गामानयति। तथा अटन्नपि नान्विष्य गामानयति (शब्दकौ० २।२।२९)। मिलितानामन्वय इतरेतरयोगः। तथा च मिलितानाम् परस्परापेक्षाणामुद्भूतावयवभेदकसमूहरूपाणाम् अन्वयः एकधर्मावच्छिन्नेनान्वयः इति निष्कृष्टार्थः (वाच०)। समूहः समाहारः। अत्र इतरेतरसमाहारयोरयं विशेषो ज्ञेयः। उद्भूतावयवभेदसमूहस्य प्रतीत्या प्रत्येकावयववृत्तिधर्म एवेतरेतरयोगे प्रवृत्तिनिमित्तम्। समाहारे तु द्वित्वत्रित्वादिनैव भानात् समूहत्वमेव प्रवृत्तिनिमित्तम्। एवं च उभयत्रैव समूहस्य बोधः इति। अन्योपि विशेषः। इतरेतरयोगे साहित्यं विशेषणम्। द्रव्यं विशेष्यम्। समाहारे तु साहित्यं प्रधानम्। द्रव्यं विशेषणम् इति (वाच०)। ५ तुल्ययोगित्वम्। तथाहि तुल्ययोगितालंकारस्य चेन द्योतनात् तस्य तदर्थकता। यथा संकुचन्ति सरोजानि स्वैरिणीवदनानि च (चन्द्रालोकः)। एवम् दीपकालंकारद्योतकतापि। चकारद्वयप्रयोगे क्वचिदविलम्बयोगितायाः क्वचित् तुल्यप्रधानस्य चावबोधनम्। यथा इतीरिता पत्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी (नैष०) कला च सा कान्तिमती कलाभृतस्त्वमस्य लोकस्य च नेत्रकौमुदी (कुमार०) इत्यादौ (वाच०)। ६ विनियोगः (वाच०)।

**चक्रकम्**—१ (तर्कः) [क] तदपेक्षापेक्ष्यपेक्षितत्वनिबन्धनोनिष्टप्रसङ्गः। इदं च उत्पत्तिस्थितिज्ञप्तिद्वारा त्रिविधम्। तत्प्रपञ्चस्तु आत्माश्रयवदनुसंधेयः। अत्रेदं ज्ञेयम्। चतुष्कक्षादावपि स्वस्य स्वापेक्षापेक्ष्यपेक्षितत्वसत्त्वान्नाधिक्यम् (गौ० वृ० १।१।४०)। अपेक्षायाः साक्षात्परंपरासाधारण्या ग्राह्यत्वात्। [ख] स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनः प्रसङ्गः। अपेक्षा च ज्ञप्तौ उत्पत्तौ स्थितौ च (जाग० तर्क०)। तत्र ज्ञप्तौ यथा एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यज्ञानजन्यज्ञानजन्यं स्यात् तदा एतद्घटज्ञानजन्यज्ञानजन्यज्ञानभिन्नं स्यात् इति। उत्पत्तौ यथा

घटोयं यद्येतद्घटजन्यजन्यजन्यः स्यात् तदा एतद्घटजन्यजन्यभिन्नः स्यात् इति । स्थितौ यथा घटोयं यद्येतद्घटवृत्तिवृत्तिवृत्तिः स्यात् तदा तथात्वेनोपलभ्येत इति (वाच०) । २ चक्राकारश्छन्दोविशेष इति छन्दोज्ञाः । ३ दद्रुरोग इति भिषज आहुः (वाच०) ।

**चक्रवृद्धिः**—वृद्धेर्वृद्धिः । उत्तमर्णाय मूलादधिकं यद्द्रव्यमधमर्णेन दीयते तद्वृद्धिशब्देनोच्यते ।

**चक्षुः**—१ (इन्द्रियम्) [क] रूपोपलब्धिसाधनमिन्द्रियम् (त० भा० प्रमेय० पृ० २६) । अत्रेदमवधेयम् । चक्षुषोधिष्ठातृदेवः सूर्यः । तत्र दिग्वातार्कप्रचेतोश्वि इत्यादि प्रमाणम् (शा० ति०) । चक्षुःसद्भावे प्रमाणमनुमानम् । तच्चानुमानम् रूपोपलब्धिः सकरणिका क्रियात्वाच्छिदिक्रियावत् इति । अनेनानुमानेन पक्षधर्मताबलाच्चक्षुःसिद्धिः । इयमेव रीतिर्घ्राणादावपि बोध्या (म० प्र० १ पृ० १४) । तच्च चक्षुः तैजसम् (न्या० म० १ पृ० १४) । चक्षुषस्तैजसत्वेनुमानं प्रमाणम् । तच्चानुमानम् चक्षुस्तैजसम् स्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात्प्रदीपवत् । प्रभावत् इति वा (मु० १ पृ० ७९) (त० भा० पृ० २७) । चक्षुष्यनुद्भूतशुक्लो गुणोस्ति । संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः परत्वम् अपरत्वम् द्रवत्वम् स्नेहः क्रिया जातिः समवायश्च एतानि योग्यव्यक्तिवृत्तीनि चक्षुर्ग्राह्याणि । तथा उद्भूतरूपम् उद्भूतरूपवद्द्रव्यं च चक्षुर्ग्राह्यम् (भा० प० श्लो० ५५–५६) । तच्चाप्राप्यप्रकाशकारि भवति इति विज्ञेयम् (दि० १ तेजोनि० पृ० ८०) । तैजसं गोलकमेव चक्षुः इति बौद्धा आहुः । उच्छृङ्खलमते तु गोलकमेव चक्षुः न तैजसम् । [ख] रूपग्राहकं महदिन्द्रियम् (न्या० म० १ पृ० १४) (त० भा० पृ० २६) । घ्राणादिवारणाय रूपग्राहकम् इति विशेषणम् । मनोवारणाय महत् इति । आलोकादिवारणाय इन्द्रियम् इति (म० प्र० १ पृ० १४) । [ग] घटे रक्तो वर्णः इति रूपप्रत्यक्षासाधारणं कारणम् । तच्च कृष्णताराप्रवर्ति (प्र० प्र० पृ० ११) (त० सं०) [घ] सर्वप्राणिनां रूपव्यञ्जकम् अन्यावयवानभिभूते-

स्तेजोवयवैरारब्धं च चक्षुः ( प्रशस्त० १ तेजोनि० पृ० ६ )। २ तेजः। यथा सूर्यश्चक्षुषे ( ताण्ड्यब्रा० ) इत्यादौ ( वाच० )।

**चण्डिका**—( कल्याणीशब्दे दृश्यम् )।

**चतुरणुकम्**—( जन्यद्रव्यस्यावयवः ) चतुर्भिस्त्र्यणुकैर्यदुत्पद्यते तत् ( त० दी० १ पृ० ९ )। एवं पञ्चाणुकाद्यूह्यम् ( त० कौ० १ पृ० ३ )। नव्या नास्तिकास्तु संयुक्ताणुचतुर्विंशतिकं चतुरणुकम् इत्याहुः ( प० मा० )।

**चतुर्थी**—( विभक्तिः ) तत्तद्धात्वर्थे संप्रदानत्वादिबोधिका विभक्तिः ( श० प्र० श्लो० ६५ पृ० ७५ )। यथा विप्राय गां ददातीत्यादौ विप्रायेति चतुर्थी। चतुर्थ्यर्थश्च [ १ ] संप्रदानम्। तच्च क्रियाकर्मीभूतवस्तुनिष्ठस्वत्वभागित्वेनोद्देश्यम्। यथा विप्राय गां ददाति राज्ञे दण्डं ददातीत्यादौ विप्रो राजा च संप्रदानम्। अत्र दानेन गोदण्डादौ यजमानस्वत्वनिवृत्तौ विप्रराजादेः स्वत्वोत्पादात् गोदण्डनिष्ठस्वत्वभागित्वेन विप्रराजोद्देश्यकगोदण्डकर्मकदानकर्ता इति बोधः ( म० प्र० पृ० ६ )। [ २ ] उद्देश्यत्वम्। यथा एषोर्घ्यः शिवाय नमः इत्यादौ चतुर्थ्यर्थः ( ग० व्यु० का० ४ पृ० ९९ )। [ ३ ] तादर्थ्यम्। यथा यूपाय दारु इत्यादौ चतुर्थ्यर्थः। अत्र तादर्थ्ये चतुर्थी वाच्या इति वार्तिकेन चतुर्थी। [ ४ ] संबन्धः। यथा नारदाय रोचते कलहः वैश्याय शतं धारयतीत्यादौ। नारदायेत्यत्र रुच्यर्थानां प्रीयमाणः ( पा० १।४।३३ ) इति सूत्रेण संबन्धमात्रबोधिका चतुर्थी उपपदविभक्तिरेव ( म० प्र० पृ० ६ )। वैश्यायेत्यत्र धारेरुत्तमर्णः ( पा० १।४।३५ ) इति सूत्रेण संबन्धमात्रे चतुर्थी। विष्णवे नमः इत्यादौ च चतुर्थ्यर्थः संबन्धः। अत्र नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ( पा० २।३।१६ ) इति सूत्रेण संबन्धार्थे चतुर्थी उपपदविभक्तिरेव ( म० प्र० पृ० ६ )। [ ५ ] विषयित्वम्। यथा पुष्पेभ्यः स्पृहयति पुत्राय क्रुध्यतीत्यादौ चतुर्थ्यर्थः। पुष्पेभ्य इत्यत्र स्पृहाविषयपुष्पस्य स्पृहेरीप्सितः ( पा० सू० १।४।३६ ) इत्यनेन संप्रदानत्वाच्चतुर्थी। तदर्थो विषयित्वम्। तस्येच्छारूपक्रियायामन्वयः। पुत्रायेत्यत्र क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ( पा०

सू० १।४।३७ ) इत्यनेन कर्मणः संप्रदानसंज्ञा । चतुर्थ्यर्थो विषयित्वम् । तस्य कोपेन्वयः ( ग० व्यु० का० ४ पु० ९६ ) ।

**चतुर्हूतः**—पृथिवी होता इत्यादिको मन्त्रश्चतुर्होता । तस्य मन्त्रस्याभिमानित्वेनात्मभूतः कश्चित्पुरुषः प्रजापतिना चतुर्वारमामन्त्रितः प्रत्युत्तरमुवाचेति स पुरुषश्चतुर्हूतः । तदीयनाम्ना मन्त्रोपि चतुर्हूतः ( जै० न्या० अ० ३ पा० ७ अधि० ४ ) ।

**चमसः**—पात्रविशेषस्थिताः सोमरसाश्चमसाः ( जै० न्या० अ० ३ पा० २ अधि० १२ ) ।

**चयनम्**—[ क ] छिदाहेतुर्विघट्टनम् । यथा वृक्षं फलान्यवचिनोतीत्यत्र चिनोतेरर्थः । अत्र फलकर्मकच्छिदानुकूलं यत् वृक्षस्य विघट्टनम् ( चालनम् ) तद्वान् इत्येवं बोधः ( श० प्र० श्लो० ७३ पृ० ९९ ) । [ ख ] शाब्दिकास्तु विभागपूर्वकमादानम् । यथा वृक्षमवचिनोति फलानीत्यादौ चिनोतेरर्थः इत्याहुः । अत्र वृक्षात्फलमादत्ते इति बोधः ( ल० म० सुब० पृ० ९२ ) ।

**चरमत्वम्**—१ स्वसजातीयपदार्थप्रागभावानधिकरणत्वम् । यथा तन्तुः पटस्य चरमावयवः इत्यादावक्यवस्य चरमत्वम् । यथा वा अब्रवीत् क्रियतामेषा सूतानां चरमा क्रिया ( भा० वि० अ० २४ ) उत्तिष्ठेत् प्रथमं चैव चरमं चैव संविशेत् ( मनु० ) इत्यादौ चरमत्वम् । क्वचित्स्वेतरभावकारणानपेक्षकार्यकत्वम् । यथा अनुमितिं प्रति परामर्शश्चरमकारणम् इत्यादौ कारणस्य चरमत्वम् इति गुरुचरणाः प्राहुः ।

**चर्या**—( विधिः ) प्रधानभूतः साक्षाद्धर्महेतुश्चर्या ( सर्व० सं० पृ० १६९ नकुली० ) ।

**चाकचक्यम्**—भ्रमोत्पादको दोषविशेषः । यथा शुक्तौ चाकचक्यम् ( नील० प्रामा० प० ३७ ) । अत्र च शुक्तौ चाकचक्यदोषवशात् इदं रजतम् इति ज्ञानमुत्पद्यते इति ध्येयम् । उज्ज्वलत्वमिति कश्चिदाह । तदाकारोन्तःकरणवृत्तिविशेष इति मायावादिन आहुः । अत्रोच्यते ।

न हि लोकसिद्धसामग्री प्रातिभासिकरजतोत्पादिका। किंतु विलक्षणैव। तथा हि काचादिदोषदूषितलोचनस्य पुरोवर्तिद्रव्यसंयोगादिदमाकारा चाकचक्याकारा च काचिदन्तःकरणवृत्तिरुदेति इति चाकचक्यसंदर्शनसमुद्बुद्धरजतत्वसंस्कारसध्रीचीना इति च (वेदान्तप०) (वाच०)।

**चाकचिक्यम्**—चाकचक्यशब्दवदस्यार्थोनुसंधेयः।

**चाक्षुषम्**—१ चक्षुर्जन्यं प्रत्यक्षम्। यथा द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणम् इत्यादौ। २ चक्षुर्ग्राह्यम्। यथा रूपादि।

**चारित्रम्**—सर्वथावद्ययोगानां त्यागश्चारित्रमुच्यते (सर्व० सं० पृ० ६५ आर्ह०)।

**चार्वाकः**—(नास्तिकः) बृहस्पतिशिष्यो लोकायताख्यः। अत्र व्युत्पत्तिः। चारुः लोकसंमतः वाकः वाक्यम् यस्य सः इति द्रष्टव्या (वाच०)। चार्वाकश्च प्रत्यक्षैकप्रमाणवादी परमेश्वरस्वर्गनरकपुण्यपापादिकं नाङ्गीकरोति। तन्मतं तु सर्वदर्शनसंग्रहादौ सायणादिना किंचित् किंचित् प्रदर्शितम्। तस्मादेव तत् ज्ञातव्यम्।

**चिकीर्षा**—[क] कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणीच्छा। यथा पाकं कृत्वा साधयामि इत्याकारिकेच्छा (चि० ४) (मु० गु० पृ० २२१)। यथा वा पाकः कृत्वा साध्यताम् इत्याकारिकेच्छा (वाच०)। अत्रेदमवधेयम्। कृतिसाध्यताज्ञानम् इष्टसाधनताज्ञानं च चिकीर्षा प्रति कारणम्। कृतिरत्र प्रवृत्तिरूपा ग्राह्या। नातो जीवनयोनियत्नसाध्यस्वाभाविकप्राणवायुसंचारे चिकीर्षा (म० प्र० ४ पृ० ६१)। बलवद्विष्टसाधनताज्ञानं तु चिकीर्षायां प्रतिबन्धकम् इति। अतो मधुविषसंपृक्तान्नभोजने न चिकीर्षा (मु० गु० पृ० २२१)। अन्ये तु बलवद्द्वेषः प्रतिबन्धकः इत्याहुः। केचित्तु बलवदनिष्टासाधनत्वज्ञानमपि चिकीर्षा प्रति कारणम् इत्याहुः (भा० प० श्लो० १४७–१४९) (मु० गु०)। गुरवस्तु कृतिसाध्यताज्ञानमात्रं चिकीर्षा प्रति कारणम् इत्याहुः (मु० गु० पृ० २२२)। नव्याश्चापि चिकीर्षा प्रति कृति-

साध्यताज्ञानमेव कारणम् इत्याहुः ( न्या० म० ४ पृ० २७ )। अयमाशयः । इच्छायाः समानप्रकारकधीसाध्यत्वम् इति नियमात्कृतिसाध्यत्वप्रकारकेच्छां प्रति कृतिसाध्यत्वप्रकारकज्ञानत्वेनैव हेतुत्वम् इति ( त० प्र० ४ पृ० १०६ )। [ ख ] कृतिप्रकारकयत्किंचिद्विशेष्यकेच्छा । यथा पाकं चिकीर्षति इत्यादौ कृतिप्रकारकपाकविशेष्यकेच्छा । सा च पाकं कृत्या साधयामि इतीच्छा । अत्रेदं बोध्यम् । पाकादेश्च कृतिकर्मत्वमेव द्वितीयया प्रत्याय्यते । न तु इच्छाया विषयत्वरूपं कर्मत्वम् इति ( ग० व्यु० का० २ ख० २ पृ० ५९ ) । [ ग ] कृतिविशेष्यकेच्छा । सा च यथा पाककृतिर्भवतु इतीच्छैव ( ग० व्यु० का० २ ख० २ पृ० ५९ ) । [ घ ] गुरवस्तु कृतिसाध्यत्वप्रकारकेच्छा इत्याहुः ( मु० गु० पृ० २२३ ) । अत्रोच्यते । कार्यत्वज्ञानं प्रवर्तकम् । तथाहि ज्ञानस्य कृतौ जनयितव्यायां चिकीर्षातिरिक्तं न कर्तव्यमस्ति । तत्सत्त्वे कृतिविलम्बहेत्वन्तराभावात् । चिकीर्षा च स्वकृतिसाध्यताज्ञानसाध्या । इच्छायाः स्वप्रकारकधीसाध्यत्वनियमात् । अत एव स्वकृतिसाध्ये पाके प्रवर्तते । न त्विष्टसाधनताज्ञानसाध्या । स्वकृत्यसाध्ये चिकीर्षापत्तेः ( चि० ४ ) ( वाच० ) ।

**चित्**— १ [ क ] चैतन्यवदस्यार्थोनुसंधेयः । [ ख ] चिदिति प्रोक्तो जीवः ( सर्व० सं० पृ० ९२ रामानु० ) । २ असाकल्यम् । यथा क्वचित् कथंचित् जातुचित् इत्यादौ । ३ चयनकर्ता । यथा अग्निचित् इत्यादौ । ४ अग्निः इति च याज्ञिका आहुः । ५ अव्यक्तानुकरणम् । यथा नहि करिणि दृष्टे चित्कारेण तमनुमिमतेनुमातारः ( चि० पक्षता० वाचस्पतिमिश्रः ) इत्यादौ इति काव्यज्ञा वदन्ति ( वाच० ) ।

**चितिः**—लाङ्गलेन कृष्टे व्याममात्रे भूप्रदेशे नानाविधाभिरिष्टकाभिः पक्ष्याकारेण स्थानं निष्पाद्यते सेयं चितिः ( जै० न्या० अ० ४ पा० ४ अधि० ७ ) ।

**चित्तम्**—प्रमाणमात्रव्यञ्जया विवेकप्रवृत्तिश्चित्तम् ( सर्व० सं० पृ० १८८ नकु० ) ।

**चिरनिर्मथितः**—( अग्निः ) आधानकाले निर्मथ्य गार्हपत्ये नित्यं धृतोग्निः ( जै० न्या० अ० १ पा० ४ अधि० १० ) ।

**चुश्चुषा**—इक्षुदण्डभक्षणे तद्रसस्वीकारे च यः शब्दविशेषस्तस्यानुकरणं चुश्चुषा इति ( जै० न्या० अ० १० पा० २ अधि० ३ ) ।

**चूडामणिः**—रविग्रहः सूर्यवारे सोमे सोमग्रहस्तथा । चूडामणिरिति ख्यातस्तत्रानन्तफलं लभेत् ॥ ( पु० चि० पृ० ३४७ ) ।

**चेत्**—( अव्ययम् ) [ क ] संभावनाविषयता । यथा सुवृष्टिश्चेदभविष्यत् सुभिक्षमभविष्यत् इत्यादौ । [ ख ] असंदेहेपि संदिग्धतया कथनम् ( शब्दार्थचि० ) । यथा सत्यं चेद्गुरुवाक्यमेव पितरो देवाश्च चेत् योगिनी प्रीता चेत् परदेवता च यदि चेत् वेदाः प्रमाणं हि चेत् । शाक्तीयं यदि दर्शनं भवति चेदाज्ञाप्यमोघास्ति चेत् स्वातन्त्र्या अपि कौलिकाश्च यदि चेत् स्यान्मे जयः सर्वदा ॥ ( तन्त्रम् ) इत्यादौ ( वाच० ) ।

**चेष्टा**—( कर्म ) [ १ ] [ क ] ईप्सितं जिहासितं वा अर्थमधिकृत्येप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा ( वात्स्या० १।१।११ ) । यथा चेष्टेन्द्रियार्थाश्रयः शरीरम् ( गौ० १।१।११ ) इत्यादौ । [ ख ] प्रयत्नवदात्मसंयोगासमवायिकारणकक्रिया । [ ग ] स्वासमवेतस्वातिरिक्तस्पर्शवदन्यप्रयत्नजन्यक्रिया ( वै० उ० ५।१।१ ) । तल्लक्षणं च चेष्टात्वमेव । तच्च प्रयत्नजन्यतावच्छेदको जातिविशेषः ( गौ० वृ० १।१।११ ) । अत्रोच्यते आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत्कृतिः । कृतिजन्या भवेच्चेष्टा तज्जन्यैव क्रिया भवेत् ॥ इति ( वै० वि० ५।१।१ ) । [ घ ] हिताहितप्राप्तिपरिहारार्थः स्पन्दः ( न्या० वा० १।१।११ पृ० ७१ ) । [ ङ ] हिताहितप्राप्तिपरिहारार्था क्रिया ( त० भा० प्रमे० पृ० २५ ) । [ २ ] शब्दस्मारकः शब्दानुमापको वा हस्तादिक्रियाविशेषः ( अभिनयः ) । यथा मूकस्य पद्यगानकर्त्र्या वा हस्तक्रिया । अत्रानुमानं च अयम् घटमानयेतिशब्दविषयकाभिप्रायवान् घटमानयेतिशब्दव्यञ्जकचेष्टाकर्तृत्वात् यथा अहम् इति । अस्मादनुमानाद्घटमानयेति

शब्दानुमितिः । ततोर्थप्रत्ययः इति बोध्यम् ( म० प्र० ४ पृ० ६६ ) । क्रियाविशेषे चोच्यते । बाह्यैर्विभावयेल्लिङ्गैर्भावैरन्तर्गतं नृणाम् । स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥ आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च । नेत्रवक्त्रविकारैश्च गृह्यतेन्तर्गतं मनः ॥ ( मनु० ) इति । वायोस्तु स्पर्शनं चेष्टा व्यूहनं रौक्ष्यमेव च इति याज्ञवल्क्येन तस्या वायुकार्यत्वमुक्तम् ( वाच० ) । चेष्टा च शब्दस्मारकतया शब्दानुमापकतया वा प्रमायामुपयोगिनी । तथाहि । इयं चेष्टा तावद्द्विविधा । कृतसमया अकृतसमया च । तत्र कृतसमया लिप्यादिवदभिप्रेतं शब्दमेव स्मारयति न किंचित्प्रमापयतीति लिपिरिव सापि न प्रमाणम् । अयमर्थः । शङ्खध्वनौ त्वया आगन्तव्यमिति शङ्खध्वनिं श्रुत्वा आगच्छति । यदा मया तर्जन्यूर्ध्वीक्रियते तदा त्वयासौ ताडनीय इति तथाविधकरणे ताडयति । तथा च अनया चेष्टया केवलं पदार्थाः स्मार्यन्ते न तु तेषां संसर्गोपि बोध्यते इति प्रमितिविरहान्न प्रमाणत्वमस्याः इति । अन्ये तु मानसं बोधमाहुः ( त० व० पृ० १०१ ) । अकृतसमया तु चेष्टा प्रयोजकाभिप्रायं स्मारयन्ती सती प्रयोज्यं प्रवर्तयति ( त० व० पृ० १००–१०१ ) । एवं च चेष्टा न प्रमाणान्तरम् इति नैयायिकाः । तान्त्रिकास्तु चेष्टापि प्रमाणान्तरम् इत्याहुः ( म० प्र० ४ पृ० ६६ ) ( सि० च० ) ।

**चैतन्यम्**—[ १ ] [ क ] ज्ञानवत्त्वम् ( दि० १।२ ) । यथा शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ( भा० प० श्लो० ४९ ) इत्यादौ । [ ख ] ज्ञानेच्छायत्नवत्त्वम् ( ल० व० ) । यथा आत्मनश्चैतन्यम् । अत्र श्रुतिः चैतन्यमात्मनो विद्यात् इति ( वाच० ) । [ २ ] चितौ बुद्ध्यादेः प्रतिबिम्बः ( चिच्छाया ) चैतन्यम् इति सांख्याः । [ ३ ] बुद्ध्यादावात्माध्यासात् ( चिच्छाया चित्प्रतिबिम्बः ) चैतन्यमिति मायावादिनो वदन्ति । अत्रोच्यते चैतन्यं परमाणूनां प्रधानस्यापि नेष्यते । ज्ञानक्रिये जगत्कर्त्रौ दृश्येते चेतनाश्रये ॥ इति ( वेदान्तका० ) ( वाच० ) । चैतन्यं दृक्क्रियारूपं तदस्त्यात्मनि सर्वदा । सर्वतश्च यतो मुक्तौ श्रूयते सर्वतोमुखम् ॥ ( सर्व० सं० पृ० १८२ शैव० ) ।

**चोदना**—१ [ क ] विधिवाक्यम् । चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः इति ( भट्टका० ) । यथा ओदनकामः पचेत स्वर्गकामो यजेत इत्यादि वाक्यम् । [ ख ] प्राभाकरास्तु प्रवर्तकं वेदवाक्यं चोदना। यथा चोदनालक्षणोर्थो धर्मः ( जै० सू० १।१।२ ) इत्यादौ ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यादि वाक्यम् इत्याहुः ( लौ० भा० पृ० ३ )। [ ग ] प्रवर्तकः शब्दश्चोदना ( जै० सू० वृ० अ० १ पा० १ सू० २ )। [ घ ] कर्मोत्पत्तिवाक्यम् (जै० सू० वृ० अ० २ पा० २ सू० १६) । भट्टास्तु [ ङ ] प्रेरणा फलभावना। यथा स्वर्गकामो यजेत इत्यादौ लिङर्थाभिधारूपा चोदना इत्याहुः ( वाच० ) । [ च ] प्रवर्तना । [ छ ] प्रवृत्तिहेतुः । यथा ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ( गीता ) इत्यादाविष्टसाधनत्वज्ञानम् इष्टसाधनं कर्म एतज्ज्ञानाश्रयश्चेति त्रिविधा चोदना भवति ( श्रीधरः ) । [ ज ] अज्ञातार्थज्ञापकं शब्दमात्रम् ( रत्नप्रभा० पृ० १२ ) । यथा चोदनाप्रवृत्तिभेदाच ( शारी० भा० १।१।१ पृ० २ ) इत्यादौ । २ चोदनाविषयो यागादिप्रयत्नः । यथा एकं वा संयोगरूपचोदनाख्याविशेषात् ( जै० सू० २।४।९ ) ( रत्नप्रभा० ) । इत्यत्र पुरुषप्रयत्नश्चोद्यते ( शाबरभा० २।४।९ ) इति ( वाच० ) । ३ चोदना नाम अपूर्वम् ( जै० सू० वृ० अ० २ पा० १ सू० ५)।

**चौर्यम्**—परमात्रस्वत्ववद्द्रव्यहरणम् । यथा सा च द्रव्यवशा कुतस्तव धनम् द्यूतेन चौर्येण वा चौर्यद्यूतपरिग्रहोपि भवतो नष्टस्य कान्या गतिः ( उद्भटः ) इत्यादौ ( वाच० ) । अत्रोच्यते मनुना स्यात्साहसं त्वन्वयवत् प्रसभं कर्म यत् कृतम् । निरन्वयं भवेत्स्तेयं हृत्वापह्नूयते च यत् ॥ ( मनु० अ० ८ श्लो० ३३२ ) इति । अत्र अपव्ययते इति पाठान्तरम् । नारदेनापि उपायैर्विविधैरेषां छलयित्वापकर्षणम् । सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः ॥ इति ( वीरमित्रो० २ पृ० ४८९ ) ।

**च्विः**—( प्रत्ययः ) [ क ] अभूततद्भावश्च्व्यर्थः । यथा घटं शुक्लीकरोतीत्यादौ शौक्ल्यादिः । तदर्थश्च अभूतस्य पूर्वकालावच्छेदेन शुक्लत्वादिभावरहितस्य तद्भावः शौक्ल्यादिः । अथवा अभूतः पूर्वकालावच्छेदेन

धर्मिण्यविद्यमानस्तद्भावः शौक्ल्यादिः इति । अत्र शौक्ल्यादिभावश्च्वि-प्रत्ययार्थः । तथा च प्रकृत्यर्थस्य शुक्लस्य पूर्वकालावच्छिन्नस्वनिष्ठाभावप्रतियोगित्वसहिताधेयत्वसंबन्धेन प्रत्ययार्थे शौक्ल्ये अन्वयः ( ग० व्यु० का० ४ पृ० १०२–१०३ ) । अत्र स्वपदम् लक्षणया शुक्लवर्णविशिष्टशुक्लरूपप्रकृत्यर्थपरम् । [ ख ] शाब्दिकास्तु यत्र प्रकृतिरेव विकारसादृश्यमापद्यमाना विवक्ष्यते तत्र च्विप्रत्ययः । यथा संघीभवन्ति ब्राह्मणाः त्वद्भवति देवदत्त इत्यादावपि इत्याहुः ( ल० म० ) ।

## छ.

छलम्—[ क ] वचनविघातोर्थविकल्पोपपत्त्या छलम् ( गौ० १।२।१० )। छलं निरनुयोज्यानुयोगरूपे निग्रहस्थाने एवान्तर्भवति नातिरिक्तः पदार्थः इति ज्ञेयम् ( गौ० वृ० १।१।१ ) । [ ख ] वक्तृतात्पर्याविषयार्थकल्पनेन दूषणाभिधानम् । अत्र तात्पर्याविषयत्वं च विशेष्ये विशेषणे संसर्गे वा विज्ञेयम् । यथाक्रममुदाहरणानि यथा नेपालादागतोयं नवकम्बलवत्त्वादित्यत्र नवसंख्यापरत्वकल्पनया असिद्ध्यभिधानम् । प्रमेयं धर्मत्वादित्यत्र पुण्यत्वार्थकल्पनया भागासिद्ध्यभिधानम् । वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम् इति ( गौ० वृ० १।२।१० ) । [ ग ] अभिप्रायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरं प्रकल्प्य दूषणाभिधानम् ( त० भा० पृ० ५० ) ( त० दी० पृ० ४३ ) । यथा नवकम्बलोयं देवदत्तः इति वाक्ये नूतनाभिप्रायेण प्रयुक्तस्य शब्दस्य नवत्वसंख्याविशिष्टमर्थान्तरमाशङ्क्य कश्चिद्दूषयति । नास्य नव कम्बलाः सन्ति दरिद्रत्वात् । न ह्यस्य द्वित्वमपि संभाव्यते कुतो नव इति ( त० भा० पृ० ५० ) ( नील० पृ० ४३ ) । यथा वा नवपुत्रोयं देवदत्त इत्यत्र नूतनाभिप्रायेण प्रयुक्तनवशब्दस्य नवत्वसंख्याभिप्रायकत्वं प्रकल्प्य दूषणाभिधानं क्रियते एक एव पुत्रः कष्टेनानेन लब्धः कुतोस्य नवसंख्याकाः पुत्राः इति ( प्र० प्र० पृ० २४ ) । [ घ ] शब्दवृत्तिव्यत्ययेन प्रतिषेधहेतुः ( सर्व० सं० पृ० २४० अक्ष० ) । छलं त्रिविधम् वाक्छलम् सामान्यच्छलम् उपचारच्छलं चेति

( गौ० १।२।११ )। प्रकारान्तरेण छलं त्रिविधम् अभिधानतात्पर्योपचारवृत्तिव्यत्ययभेदात् इति ( सर्व० सं० पृ० २४० अक्ष० )। [ ङ ] अनिष्टमर्थमारोप्य तन्निषेधश्छलं मतम् इति ( ता० र० श्लो० ९४ )।

**छिद्रम्**—गर्तवदस्यार्थोनुसंधेयः ( न्या० वा० १।१।१४ पृ० ८१ )।

**छेदनम्**—आरम्भकसंयोगविरोधिविभागावच्छिन्नक्रिया। यथा तृणं छिनत्तीत्यादौ छिदेरर्थः। अत्र छिदर्थनिविष्टे च संयोगे विभागे वा स्वावयववृत्तित्वसंबन्धेन तृणादेरन्वयः ( श० प्र० श्लो० ७२ पृ० ९४ )। यथा वा करपाददतो भङ्गे छेदने कर्णनासयोः ( याज्ञ० अ० २ श्लो० २२४ ) अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः ( कुमार० स० २ श्लो० ४१ ) इत्यादौ ( वाच० )।

## ज.

**जगत्**—१ स्थावरजङ्गमात्मकं सर्वपदार्थजातम्। यथा यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ( नारा० उप० ) यदा स देवो जागर्ति तदेदं चेष्टते जगत् ( मनुः अ० १ श्लो० ५२ ) जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः। जगदादिरनादिस्त्वं जगदीशो निरीश्वरः॥ ( कुमार० स० २ श्लो० ९ ) इत्यादौ चराचरं सत्यभूतं सर्वं विश्वं जगद्भवति। जगतो लक्षणं च प्रमेयत्वम् अभिधेयत्वं वा। तच्चेश्वरीयप्रमाविषयत्वम् ईश्वरीयाभिधाविषयत्वं च प्राह्यम्। तेन जीवानामसर्वज्ञत्वेन ऐहिकामुष्मिकनिखिलपदार्थानामज्ञानेपि नाव्याप्तिः। २ वायुरिति पौराणिकाः। ३ लोक इति काव्यज्ञा वदन्ति ( वाच० )।

**जडत्वम्**—१ ज्ञानादिमान् यो यः तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वम्। तेन सुषुप्तिकाले ज्ञानादिसामान्याभावसत्त्वेपि अव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्याव्याप्यवृत्तित्वेन ज्ञानाद्यवच्छिन्नप्रतियोगिताकभेदस्य चात्मनि सत्त्वेपि न दोषः ( ल० व० )। यथा वृक्षपाषाणा-

दीनां जडत्वम् । २ वेदग्रहणासामर्थ्यं जडत्वमिति धर्मज्ञाः । ३ मन्दबुद्धित्वमिति नीतिज्ञाः । ४ मूर्खत्वं चेति काव्यज्ञा आहुः ।

**जनकम्**—[ क ] कारणवदस्यार्थोनुसंधेयः। कारणत्वं च द्विविधम्। स्वरूपयोग्यत्वम् फलोपहितत्वम् । आद्यं यथा घटं प्रत्यरण्यस्थस्यापि दण्डादेर्जनकत्वम् । द्वितीयं यथा इच्छां प्रति ज्ञानस्य जनकत्वम् । स्वरूपयोग्यत्वं च जनकतावच्छेदकधर्मवत्त्वम् । स च धर्मो घटं प्रति दण्डः कारणमित्यत्र दण्डत्वादिः । फलोपहितत्वं चाव्यवहितपूर्ववृत्तित्वसंबन्धेन फलविशिष्टत्वम् । [ ख ] उत्पत्तिप्रयोजकत्वम् । यथा जन्यानां जनकः कालः ( भा० प० श्लो० ४६ ) इत्यादौ ।

**जननम्**—१ उत्पत्तिवदस्यार्थोनुसंधेयः । २ जन्म । ३ आविर्भावः । यथा यदैव पूर्वे जनने शरीरम् ( कुमार० स० १ श्लो० ५३ ) इत्यादौ । ४ दीक्षितस्य यज्ञादिषु दीक्षादिसंस्कारविशेष इति याज्ञिकाः । अत्र श्रुतिः पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति ये दीक्षयन्ति इत्यादिः ( वाच० )। स्मृतिरपि मातुरग्रेधिजननं द्वितीयं मौञ्जिबन्धने । तृतीयं यज्ञदीक्षायां *द्विजस्य श्रुतिचोदनात् ॥ ( मनुः अ० २ श्लो० १६९ )* इति । ५ मन्त्राणां मातृकावर्णादुद्धारो जननं स्मृतम् ( सर्व० सं० पृ० ३६९ पात० ) ।

**जन्म**—[ क ] शरीरेन्द्रियबुद्धीनां निकायविशिष्टः प्रादुर्भावः ( वात्स्या० १।१।२ ) । अत्रोच्यते अण्डजोद्भिज्जसंस्वेदजरायुजमथापि वा । चतुर्धा जन्म इत्येतद्भूतग्रामस्य लक्षणम् ॥ ( भा० आनु० अ० ४२ ) इति । [ ख ] देहेन्द्रियमनोबुद्धिवेदनाभिः संबन्धः ( वात्स्या० १।१।१९ ) ( वै० उ० ६।२।१५ ) । [ ग ] विशिष्टशरीरसंबन्धः ( गौ० वृ० १।१।२ ) । [ घ ] विजातीयशरीराद्यप्राणसंयोगः ( गौ० वृ० १।१।१९ ) । शरीरप्राणसंयोग आद्यत्वं च स्वसजातीयशरीरवृत्तिप्राणसंयोगध्वंसानधिकरणत्वम् ( राम० १ पृ० २० ) । [ ङ ] आद्यशरीरप्राणसंयोगः ( दि० १ पृ० २० ) । यथा अस्मदादीनां जन्म । शरीर आद्यत्वं च स्वसजातीयशरीरध्वंसानधिकरणत्वम् । शरीरप्राण-

संयोगे त्वाद्यत्वमुक्तमेव । [ च ] जातिविशिष्टाभिर्देहेन्द्रियमनोहंकार-बुद्धिवेदनाभिः पुरुषस्याभिसंबन्धः इति सांख्या आहुः ( सांख्य० कौ० ) । [ छ ] स्वादृष्टोपनिबद्धशरीरग्रहणमिति केचित् ( वाच० ) । [ ज ] निकायविशिष्टाभिः शरीरेन्द्रियबुद्धिवेदनाभिः संबन्धो जन्म ( न्या० वा० ) ।

**जन्यत्वम्**—यदधीनो यस्य समयसंबन्धः यद्व्यतिरेकप्रयुक्तो यद्व्यतिरेकश्च तत्त्वम् ( मू० म० १ ) । यथा जन्यानां जनकः कालः ( भा० प० श्लो० ४६ ) इत्यादौ घटपटादीनां मृत्तन्त्वादिजन्यत्वम् । अधिकं तु कार्यशब्दव्याख्यानावसरे संपादितं तत्र द्रष्टव्यम् ।

**जयः**—१ ग्रहणावच्छिन्नपराभवः । यथा शत्रुं शतानि जयतीत्यत्र जयत्यर्थः । पराभवश्च तिरस्कारः । अत्र शतस्य ग्रहणानुकूलो यः शत्रुकर्मकः पराभवः तत्कर्ता इत्येवं बोधः ( श० प्र० श्लो० ७३ पृ० ९८ ) । २ परापेक्षयोत्कर्षलाभः । ३ वशीकरणम् । यथा इन्द्रियजय इत्यादौ ( वाच० ) ।

**जयनम्**—जयशब्दवदस्यार्थोनुसंधेयः ।

**जयन्ती**—१ नन्दा मार्गशिरे शुक्ला सप्तम्यानन्ददायिनी । जयन्ती नाम सा प्रोक्ता पुण्या पापहरा स्मृता ॥ ( पु० चि० पृ० १०४ ) । २ श्रावणस्य तु मासस्य कृष्णाष्टम्यां नराधिप । रोहिणी यदि लभ्येत जयन्ती नाम सा तिथिः ॥ ( पु० चि० पृ० ११९ ) ।

**जयपत्रकम्**—( हुकुमनामा इति प्र० ) यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम् । सावधारणकं चैव जयपत्रकमिष्यते ॥ ( मिताक्षरा अ० २ श्लो० ९१ ) ।

**जरायुः**—[ क ] गर्भवेष्टनचर्मपुटकम् ( दि० १ पृथिवी० पृ० ७० ) । यथा जरायुजं मानुषादीनां शरीरम् ( मु० १ पृथिवी० पृ० ७० ) इत्यादौ । जरायुजभेदाश्च मनुना ( अ० १ श्लो० ४३ ) दर्शिता यथा पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः । रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः ॥ इति । तत्र व्यालाः सिंहाद्याः ( कुल्लू० ) । तल्लक्षणं तु या तु चर्माकृतिः सूक्ष्मा जरायुः सा निगद्यते इति । शुक्रशोणितयोर्योगस्तस्मिन्संजायते यतः । तत्र गर्भो भवेद्यस्मात्तेन प्रोक्तो

जरायुजः ॥ इति (देवीभाग०) (वाच०) । [ख] गर्भावरणचर्म (कुल्लूक० १।४३) । यथा जरायुणा मुखे छन्ने कण्ठे च कफवेष्टिते । वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति ॥ (सुश्रुत०) इत्यादौ । [ग] या तु चर्माकृतिः सूक्ष्मा जरायुः सा निगद्यते (देवीभाग०) ।

**जर्तिलाः**—आरण्यास्तिलाः (जै० न्या० मा० १०।८ अधि० ४) ।

**जलम्**—१ आपः इत्यस्यार्थोनुसंधेयः । अत्रोच्यते अपां शैत्यं तथा क्लेदो द्रवत्वं स्नेहसौम्यता । जिह्वाभिष्यन्दनं चापि भौमानां स्रवणं तथा ॥ चतुर्थमापो विज्ञेयं जिह्वाध्यात्मं प्रचक्षते । अधिभूतं रसास्तत्र सोमस्तत्राधिदैवतम् ॥ (भा० आश्व०) इति । अपां परिणामश्छान्दोग्ये समाम्नायते । आपः पीतास्त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति । यो मध्यमस्तल्लोहितम् । योणिष्ठः स प्राणः इति (वाच०) । अत्रेदं बोध्यम् । हिमकरकादीनां सांसिद्धिकद्रवत्वमस्त्येव । न तु नैमित्तिकद्रवत्वम् । अदृष्टविशेषेण घनीभावात्सांसिद्धिकद्रवत्वप्रतिबन्धमात्रम् (सि० च० १ पृ० ७) । २ लग्नावधिकं चतुर्थस्थानमिति कार्तान्तिका आहुः । ३ पूर्वाषाढानक्षत्रमिति मौहूर्तिका आहुः ।

**जल्पः**—(कथा) [क] यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः (गौ० १।२।२) । यथोक्तोपपन्न इति । प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः । छलजातिनिग्रहस्थानसाधनोपालम्भ इति । छलजातिनिग्रहस्थानैः साधनमुपालम्भश्चास्मिन्क्रियत इति । एवंविशेषणो जल्पः (वात्स्या० १।२।२) । [ख] उभयपक्षसाधनवती विजिगीषुकथा (गौ० वृ० १।२।२) (त० भा० पृ० ४४) (त० दी० पृ० ४३) (सर्व० सं० पृ० २३९ अक्ष०) । [ग] स च छलादिसंपन्नो जल्पोस्य विजयः फलम् इति (ता० र० श्लो० ७८) । जल्पश्च यथासंभवं सर्वनिग्रहाणामधिकरणम् । परपक्षे दूषिते स्वपक्षस्थापनप्रयोगावसानश्च भवतीति बोध्यम् (त० भा० पृ० ४४) ।

**जहत्स्वार्था**—( लक्षणा ) [ क ] यत्र वाच्यार्थस्यान्वयाभावस्तत्र जहती । यथा मञ्चाः क्रोशन्तीति ( त० दी० ४ पृ० ३० ) । यथा वा आयुर्घृतम् इत्यादौ ( काव्यप्र० उ० २ ) । अत्र व्युत्पत्तिः जहत् स्वार्थो यस्याम् इति ( वाच० ) । जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था ( वै० सा० ) इति वा । अत्रायं नियमः । जहत्स्वार्था च तत्रैव यत्र रूढिर्विरोधिनी इति ( न्या० म० ख० ४ पृ० ११ ) । यत्र शक्यान्वयबोधे । रूढिः प्रसिद्धिः समुदायशक्तिर्वा । विरोधिनी योगविरोधिनी । योगः संबन्धः । मञ्चाः क्रोशन्तीत्यत्र वाच्यार्थस्य क्रोशनकर्तृत्वान्वयासंभवान्मञ्चपदं मञ्चस्थपुरुषे लाक्षणिकम् इति ( नील० ४ पृ० ३० ) । आयुर्घृतमित्यत्रायुःशब्देनायुःसाधनस्य बोधनात्स्वार्थस्य शक्यार्थस्य आयुषस्त्यागाज्जहत्स्वार्थात्वमिति बोध्यम् । तथा चात्र आयुःसाधनं घृतम् इति बोधः । [ ख ] लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा ( न्या० बो० ४ पृ० २० ) । यथा गङ्गायां घोष इत्यादौ गङ्गापदस्य तीरे लक्षणा ( मु० ४ पृ० १८० ) । [ ग ] शक्यावृत्तिरूपेण बोधकतया जहत्स्वार्थेत्युच्यते । यथा तीरत्वादिना गङ्गादिपदस्य बोधकत्वम् ( श० प्र० ) । अत्रेदं बोध्यम् । गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा यत्र प्रतिसंधीयते तत्र लक्षणया तीरस्य बोधः इति । अत्रायं विशेषः । गङ्गापदशक्यप्रवाहसंबन्धस्य तीरे सत्त्वात्तादृशशक्यसंबन्धरूपलक्षणाज्ञानाद्गङ्गापदात्तीरोपस्थितिः ( तीरस्मृतिः ) । ततः शाब्दबोधः ( मु० ४ पृ० १८० ) ( न्या० बो० ४ पृ० २० ) । अन्ये त्वाहुः । यदा गङ्गापदात्तीरत्वेन तीरमात्रबोधस्तदा जहत्स्वार्थैव लक्षणा । यदा तु गङ्गापदाद्गङ्गातीरत्वेन गङ्गातीरबोधस्तदा अजहत्स्वार्था लक्षणा इति ( दि० ४ पृ० १८० ) । एवमेव मञ्चाः क्रोशन्ति इत्यादावपि बोध्यम् । तर्कप्रकाशेऽप्युक्तम् । गङ्गायां घोष इत्यादौ स्वार्थस्य प्रवाहस्य त्यागात् तीरे घोषः इत्येव बोधः । यदि च गङ्गातीरत्वेन बोधः तदा अजहत्स्वार्थैव इति ( त० प्र० ख० ४ पृ० ३९ ) । [ घ ] स्वार्थपरित्यागेन परार्थलक्षणा ( त० प्र० ख० ४ पृ० ३९ ) । आलंकारिकाश्च शक्यार्थपरित्यागेन इतरार्थलक्षणा जहत्स्वार्था । शक्यार्थ-

परित्यागश्च शक्यार्थस्य येन केनापि रूपेण लक्ष्यार्थान्वयिना अनन्वयित्वम् । गां बाहीकं पश्येत्यादौ गोपदस्य गोसदृशे लक्षणायामपि न गोस्तदन्वयिदर्शनक्रियान्वयित्वम् ( ल० म० ) । तेन गङ्गायां घोष इत्यत्र गङ्गातीरत्वेन बोधेपि जहत्स्वार्थैव लक्षणा न त्वजहत्स्वार्थेति वदन्ति । मायावादिनस्तु शक्यार्थमनन्तर्भाव्य यत्रार्थान्तरस्य प्रतीतिः तत्र जहल्लक्षणा । यथा विषं भुङ्क्ष्वेत्यादौ । अत्र स्वार्थं विहाय शत्रुगृहे भोजननिवृत्तिर्लक्ष्यते ( वेदान्तप० ) ।

**जहदजहत्स्वार्था**—( लक्षणा ) [ क ] यत्र वाच्यैकदेशत्यागेनैकदेशान्वयस्तत्र जहदजहती लक्षणा । यथा सोयं देवदत्त इत्यादौ अयमात्मा तत्त्वमसि श्वेतकेतो ( छान्दो० ६।८।७ ) इत्यादौ च ( त० दी० ४ पृ० ३० ) ( नील० ४ पृ० ३० ) । अत्र जहच्च अजहच्च स्वार्थो याम् इति व्युत्पत्तिर्द्रष्टव्या ( वाच० ) । सोयं देवदत्त इत्यादौ तत्तांशस्येदानीमसंभवाद्धानम् । इदंतांशस्य संभवादहानमिति जहदजहल्लक्षणामाचक्षते नैयायिकाः ( नील० ४ पृ० ३० ) । तत्त्वमसीत्यादौ तु तत्पदवाच्ये सर्वज्ञत्वादिविशिष्टे चैतन्ये त्वंपदवाच्यस्य किंचिज्ज्ञत्वान्तःकरणादिविशिष्टस्याभेदान्वयानुपपत्त्या उभयत्र विशेषणांशपरित्यागः । तथा च तत्पदलक्ष्यस्य शुद्धचैतन्यस्य त्वंपदलक्ष्येण तेन सहाभेदान्वयोपपत्तिरित्यभिप्रायः । इदमुदाहरणं च जीवब्रह्मणोरैक्यं ब्रुवतां मायावादिनां सिद्धान्ताभिप्रायेणास्तीति विज्ञेयम् ( नील० ४ पृ० ३० ) । अत्र केचिदाहुः । यथा घटः अनित्य इत्यादावनित्यत्वस्य घटत्वादावन्वयायोग्यत्वेपि विशेष्ये घटेन्वयः तथात्रापि विशिष्टयोरभेदान्वयानुपपत्तावपि शक्त्युपस्थापितयोर्विशेष्यमात्रयोरभेदान्वयोपपत्तौ नात्र लक्षणा स्वीक्रियते इति ( वेदान्तप० ) । [ ख ] वाच्यार्थैकदेशत्यागेनैकदेशवृत्तिर्लक्षणा ( वाच० ) । [ ग ] मायावादिनस्तु यत्र विशिष्टवाचकः शब्दः एकदेशं विहायैकदेशे वर्तते तत्र जहदजहल्लक्षणेत्याहुः । उदाहरणं तु काकेभ्यो दधि रक्ष्यतामित्यादिकमेव । तत्र शक्यकाकत्वपरित्यागेनाशक्यदध्युपघातकत्वपुरस्कारेण काके अकाकेपि शब्दस्य प्र-

वृत्तेः ( वेदान्तप० ) । केचिन्नैयायिकाश्च जहत्स्वार्थायामियं लक्षणान्तर्भवतीति नातिरिक्तेयं जहदजहत्स्वार्था लक्षणाङ्गीकर्तव्या इति मन्यन्ते ।

**जहदजहल्लक्षणा**—जहदजहत्स्वार्थावदस्यार्थोनुसंधेयः ।

**जहल्लक्षणा**—जहत्स्वार्थावदस्यार्थोनुसंधेयः । अत्र व्युत्पत्तिः जहत् स्वार्थो याम् इति ( वाच० ) । उत्तरपदस्य स्वार्थ इत्यस्य लोपः ।

**जागरणम्**—यथार्थप्रत्ययप्रवाहः ( न्या० ली० गु० पृ० ३१ ) ।

**जाघनी**—पशुपुच्छम् ( जै० सू० वृ० अ० ३ पा० ३ सू० २० ) ।

**जातिः**—१ ( सामान्यम् ) [ क ] समानप्रसवात्मिका जातिः ( गौ० २।२।६८ ) । समानः समानाकारकः प्रसवो बुद्धिजननमात्मा स्वरूपं यस्याः सा । तथा च समानाकारबुद्धिजननयोग्यत्वमर्थः ( गौ० वृ० २।२।६८ ) । तल्लक्षणं च प्रकारतया शब्दशक्तिग्रहविषयत्वम् । शक्तिसंबन्धेन जातिपदवत्त्वम् इति नैयायिकसिद्धान्तः । अत्र जातौ व्यक्तौ वा विशिष्टे वा समुदाये वा शक्तिरित्यत्र प्राभाकरादीनां विप्रतिपत्तयस्तावत् शक्तिशब्दव्याख्यानावसरे प्रदर्शयिष्यन्त इति तास्तत्रैवावलोकनीयाः । जातिबाधकानि षट् सन्ति । तथा चोक्तमुदयनाचार्येण व्यक्तेरभेदस्तुल्यत्वं संकरोथानवस्थितिः । रूपहानिरसंबन्धो जातिबाधकसंग्रहः ॥ इति ( द्रव्यकिर० ) । तदर्थश्च व्यत्ययभेदादिशब्देषु द्रष्टव्यः । [ ख ] यच्च केषांचिद्भेदं कुतश्चिद्भेदं करोति तत् सामान्यविशेषो जातिरिति ( वात्स्या० २।२।६८ ) ( वै० १।२।३ ) ( वै० उ० १।२।३ ) । [ ग ] समानाकारबुद्धिजननयोग्यधर्मविशेषः नित्यानेकसमवेतः इत्यपि वदन्ति ( गौ० वृ० २।२।६८ ) ( त० प्र० १ ) । यथा सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ( भा० प० श्लो० १५ ) इत्यादौ । यथा वा संकेतो गृह्यते जातौ गुणद्रव्यक्रियासु च । संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ( काव्यप्र० उ० २ ) असंपादयतः कंचिदर्थं जातिक्रियागुणैः ( माघ० स० २ श्लो० ४७) इत्यादौ द्रव्यत्वगुणत्वकर्मत्वादिर्जातिः । [ घ ] शाब्दिकास्तु अनुगतैकाकारबुद्धिजनन-

समर्थः अनवच्छिन्नः सकृदुपदेशग्राह्यश्च धर्मविशेषः इत्याहुः । अत्रोच्यते । आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥ इति ( महाभा० ) । आकृतिग्रहणेत्यस्य अनुगतसंस्थानव्यङ्ग्येत्यर्थः । यथा मनुष्यत्वपशुत्वघटत्वादिजातिः । लिङ्गानां च न सर्वभाक् सकृदाख्यातनिर्ग्राह्येत्यस्य असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहेत्यर्थः । यथा ब्राह्मणत्वक्षत्रियत्वादिजातिः । तत्र ब्राह्मणा द्विविधाः गौडद्राविडभेदात् । सारस्वताः कान्यकुब्जाः गौडा उत्कला मैथिलाश्चेति पञ्च गौडाः । गुर्जरा महाराष्ट्रीयाः कर्नाटकास्तैलंगाः केवलद्राविडाश्चेति पञ्च द्राविडाः । गोत्रं च चरणैः सहेत्यस्य अपत्यप्रत्ययार्थः शाखाध्येतृरूपश्चैतावर्थौ जातिरित्यर्थः । यथा औपगवी कठी बहृची इति । [ ङ ] संबन्धिभेदात्सत्तैव भिद्यमाना गवादिषु । जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥ तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते । सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥ ( सर्व० सं० पृ० ३०४ पाणि० ) । शुद्धसंकीर्णभेदेन प्रत्येकं द्विविधा ब्राह्मणत्वादिर्जातिरिति मन्वादयः । आकृतिव्यङ्ग्यमेव सामान्यं जातिरिति प्राभाकराः । तन्मते गुणकर्मणोर्जातिर्नास्ति इति बोध्यम् ( वै० वि० १।२।३ ) । २ स्वभाव इति काव्यज्ञाः । ३ मात्राकृतं छन्दो जातिरिति वृत्तशास्त्रज्ञाः । ४ दृष्टजातिशेषजातिविश्लेषजातिप्रभृतयः प्राचीनानामिष्टकर्मसंज्ञाभेदाः इति लीलावतीकाराः ( वाच० ) । ५ जन्मेति धर्मज्ञाः । तत्रोक्तम् आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः । उत्पादयति सावित्र्या सा सत्या साजरामरा ॥ इति ( मनु० अ० २ श्लो० १४८ ) । ६ जातिवाचकः शब्दो जातिरिति शाब्दिकाः । ७ [ क ] साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ( गौ० १।२।१८ ) । तदर्थश्च व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं दूषणाभिधानं जातिः इति । व्याप्तिनिरपेक्षतया दूषणाभिधानमित्येव वाच्यम् । केन च संदर्भेण दूषणासमर्थत्वं स्वव्याघातकत्वं वा दर्शितम् ( गौ० वृ० १।२।१८ ) । अत्र चिन्त्यते । इयं च जातिर्हेत्वाभासदोषदेशनाभासा इति प्रतिभाति । इयं जातिर्निरनुयो-

ज्यानुयोगरूपे हेत्वाभासेऽन्तर्भवति इत्यन्ये । प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते सा जातिः । स च प्रसङ्गः साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमुपालम्भः प्रतिषेध इति । उदाहरणसाधर्म्यात्साध्यसाधनं हेतुरित्यस्योदाहरणसाधर्म्येण प्रत्यवस्थानम् । उदाहरणवैधर्म्यात्साध्यसाधनं हेतुरित्यस्योदाहरणवैधर्म्येण प्रत्यवस्थानम् । प्रत्यनीकभावाज्जायमानोऽर्थो जातिरिति ( वात्स्या० १।२।१८ ) । [ ख ] छलादिभिन्नदूषणासमर्थमुत्तरम् । [ ग ] स्वव्याघातकमुत्तरम् ( गौ० वृ० १।२।१८ ) ( सर्व० सं० पृ० २४० अक्ष० ) ( नील० पृ० ४३ ) । [ घ ] असदुत्तरम् ( त० दी० पृ० ४३ ) ( त० भा० पृ० ५० ) । उत्तरस्यासत्त्वं तु स्वासाधकतासाधारण्येन परासाधकतासाधकतया स्वव्याघातकत्वम् ( नील० पृ० ४३ ) । यथा पर्वतो वह्निमान् धूमान्महानसवदित्यत्र यद्ययं पर्वतो महानससाधर्म्याद्धूमवत्त्वाद्वह्निमान् तर्हि ह्रदसाधर्म्यात् द्रव्यत्ववत्त्वाद्वह्न्यभाववानेव किं न स्यात् इति ( प्र० प्र० पृ० २४ ) । [ ङ ] प्रयुक्ते स्थापनाहेतौ दूषणाशक्तमुत्तरम् । जातिमाहुरथान्ये तु स्वव्याघातकमुत्तरम् ॥ ( ता० र० परि० २ श्लो० ९७ ) । जातयश्चतुर्विंशतिः । साधर्म्यसमः वैधर्म्यसमः उत्कर्षसमः अपकर्षसमः वर्ण्यसमः अवर्ण्यसमः विकल्पसमः साध्यसमः प्राप्तिसमः अप्राप्तिसमः प्रसङ्गसमः प्रतिदृष्टान्तसमः अनुत्पत्तिसमः संशयसमः प्रकरणसमः अहेतुसमः अर्थापत्तिसमः अविशेषसमः उपपत्तिसमः उपलब्धिसमः अनुपलब्धिसमः नित्यसमः अनित्यसमः कार्यसमः इति ( गौ० ५।१।१ ) ( त० भा० पृ० ५०–५१ ) ( त० दी० पृ० ४३–४५ ) । अत्र अहेतुसम इत्यस्य स्थाने हेतुसम इति पाठः केषुचित्पुस्तकेषु दृश्यते स सूत्रेष्वनुपलम्भादपपाठः इति विज्ञेयम् ।

**जातिबाधकम्**—व्यक्त्यभेदाद्यन्यतमम् । जातिबाधकानि तु षट् । व्यक्त्यभेदः तुल्यत्वम् संकरः अनवस्था रूपहानिः असंबन्धश्चेति ( द्रव्यकिर० ) ।

**जिज्ञासा**—१ [ क ] प्रश्नः ( ग० अवयव० हेतु० पृ० ६० ) । यथा लोके किं वह्निमत् इति प्रश्ने तद्रूहं वह्निमत् इत्युक्तिस्ते कुतः इति

जिज्ञासायां धूमवत्त्वात् इत्युत्तरं च ( दीधि० हेतु० पृ० १७६ ) इत्यादौ । [ ख ] अवान्तरधर्मप्रकारकज्ञानेच्छा । इयं च विशेषजिज्ञासेत्युच्यते ( ग० सव्य० ) । यथा घटे द्रव्यत्वेन ज्ञातेपि कोसौ इति विशेषतो जिज्ञासोदेति । [ ग ] विशेषज्ञानगोचरेच्छा । तत्र ज्ञानं स्वनिष्ठम् परनिष्ठं वा । तेन जल्पकथायां परं प्रति न प्रश्नानुपपत्तिः ( म० प्र० ३ पृ० ३४ ) । २ विचारः । यथा अथातो धर्मजिज्ञासा ( जै० सू० १।१।१ ) ॐ अथातो ब्रह्मजिज्ञासा ॐ ( ब्र० सू० १।१।१ ) इत्यादौ । यथा वा दुःखत्रयाभिघाताज्जिज्ञासा तदवघातके हेतौ ( सां० का० ) इत्यादौ विचारो जिज्ञासापदार्थः ।

**जिनः**—अर्हन्नामकस्तत्त्वज्ञानोपदेष्टा । यथा हस्तिना पीड्यमानोपि न गच्छेज्जैनमन्दिरम् इत्यादौ जिनः ( वाच० ) । जिनलक्षणं तु सर्वदर्शनसंग्रहे उक्तम् । तद्यथा बलभोगोपभोगानामुभयोर्दानलाभयोः । अन्तरायस्तथा निद्रा भीरज्ञानं जुगुप्सितम् ॥ हिंसा रत्यरती रागद्वेषावविरतिः स्मरः । शोको मिथ्यात्वमेतेष्टादश दोषा न यस्य सः ॥ जिनो देवो गुरुः सम्यक्तत्त्वज्ञानोपदेशकः ( सर्व० सं० पृ० ८६–८७ आर्ह० ) । तन्मतादिकं तु स्याद्वादादिकम् जीवस्य देहपरिमाणरूपत्वनिरूपणादिकं च सर्वदर्शनसंग्रहे आर्हतदर्शने अन्यजैनग्रन्थेषु च द्रष्टव्यम् ।

**जीवः**—१ ( आत्मा ) [ क ] यो प्राणादीनां करणानां प्रयोक्ता स आत्मा ( वै० उ० ३।१।२ ) । जीवात्मैवायं क्षेत्रज्ञादिपदवेदनीयः ( सि० च० १ आत्म० पृ० १२ ) । जीवलक्षणं च इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् ( गौ० १।१।१० ) इति । सुखदुःखादिकम् ( त० दी० १ पृ० ११ ) इति वा । जन्यज्ञानाधिकरणत्वम् ( सि० च० १ पृ० १२ ) इति वा । जीवसद्भावे प्रमाणं प्रत्यक्षमेव । जीवस्य अहं सुखी अहं दुःखी इत्यादिमानसप्रत्यक्षविषयत्वात् इति नैयायिकाः ( प्र० प्र० प्रमे० पृ० १० ) ( मु० १ ) । जीवो न मानसप्रत्यक्षविषयः इति वैशेषिका आहुः । अयमाशयः अहं सुखी इत्याद्याकारकम्

योग्यविशेषगुणयोगेनैवात्मनः ( जीवस्य ) प्रत्यक्षम् न तु केवलम् अहम् इत्याकारकम् इति ( त० व० प्रमाणपरि० ३ श्लो० ५१ ) ( मु० १ आत्म० पृ० १०७ ) ( वै० ३।२।१८ ) ( भा० प० श्लो० ५० )। जीवस्य प्रत्यक्षत्वे विप्रतिपत्तौ तु अनुमानमेव इन्द्रियार्थभिन्नस्य जीवस्य सद्भावे प्रमाणम् । तत्र लिङ्गमुच्यते । प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ( वै० ३।२।४ )। सुषुप्तिदशायामपि प्राणापानयोरूर्ध्वाधोगत्योरनुकूलं प्रयत्नान्तरम् जीवनयोनिरूपम् अस्त्येव इति । एवम् निमेषोन्मेषावपि शरीराधिष्ठातारमनुमापयतः इत्यादि ( वै० उ० ३।२।४ )। आत्मेन्द्रियार्थसंनिकर्षाद्यन्निष्पद्यते तदन्यत् ( वै० ३।१।१८)। इच्छा प्रणिधानम् प्राणापानौ निमेषादिः क्षतसंरोहणम् इत्यादीनि लिङ्गानि आत्मानम् ( जीवात्मानम् ) गमयन्ति ( त० व० श्लो० २–१४ पृ० १३८ ) (भा० प० श्लो० ४८–५१)। इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ( वै० ३।१।२ )। अनुमानप्रयोगस्तु रूपादिसाक्षात्कारो द्रव्याश्रितः गुणत्वाद्रूपवत् इत्यनुमानेनेतरबाधसहकृतेनात्मनः सिद्धिः ( वै० वि० ३।१।२ )। प्रसिद्धिः क्वचिदाश्रिता कार्यत्वात् घटवत् गुणत्वाद्वा क्रियात्वाद्वा । सा च प्रसिद्धिः करणजन्या क्रियात्वात् छिदिक्रियावत् । यच्च प्रसिद्धेः करणं तदिन्द्रियम् । तच्च कर्तृप्रयोज्यम् करणत्वात् वास्यादिवत् । तथा यत्रेयं प्रसिद्धिराश्रिता यो घ्राणादीनां करणानां प्रयोक्ता स आत्मा ( वै० उ० ३।१।२ ) । बुद्ध्यादयः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रिताः पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति गुणत्वात् यस्तु पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितो न भवति नासौ पृथिव्याद्यष्टद्रव्यानाश्रितो गुणो भवति यथा रूपादि इति केवलव्यतिरेक्यनुमानम् ( त० भा० प्रमेय० पृ० २५ )। [ख] इन्द्रियाद्यधिष्ठाता । इन्द्रियाणां शरीरस्य च परंपरया चैतन्यसंपादक इत्यर्थः ( मु० १ आत्म० पृ० ९६ ) । तन्त्रान्तरे तु इन्द्रियाणामधिष्ठात्र्यो देवता उक्ताः । ता यथा दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रकाः इति ( शारदाति० )। वैकारिका दिगाद्याश्च

चन्द्रेणैकादश स्मृताः । इन्द्रियाणामधिष्ठातृदेवास्ते सात्त्विका मताः ॥ इति पदार्थादर्शे ( वाच० ) । [ ग ] बन्धमोक्षयोग्यः ( सि० च० १ पृ० १२ ) । [ घ ] शरीरसापेक्षज्ञानवान् ( प्र० प्र० प्रमेय० पृ० १० ) । [ ङ ] अनित्यज्ञानवान् ( त० कौ० १ पृ० ३ ) । यथा हन्ताहमिमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ( छा० ६।३।२ इत्यादौ ) । [ च ] बादरायणाचार्यास्तु एवं पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तृतम् । एष चेतनया युक्तो जीव इत्यभिधीयते ॥ ( भाग० ) इत्याहुः । [ छ ] मायावादिमते त्रयो हि जीवस्योपाधयः । तत्र सुषुप्तौ बुद्ध्यादिसंस्कारवासितमज्ञानमात्रम् स्वप्ने जाग्रद्वासनामयं लिङ्गशरीरम् जाग्रदवस्थायां सूक्ष्मशरीरसंसृष्टं स्थूलशरीरम् उपाधिरिति तत्तदुपाध्युपलक्षितजाग्रत्स्वप्नसुषुप्तयोऽप्युपाधिशब्देन व्यवह्रियन्ते (वाच०)। तथा च तेषां मायावादिनां मते [ १ ] उपाधिप्रविष्टं वाङ्मनःप्राणकरणग्रामानुप्रविष्टं ब्रह्म जीवः [ २ ] घटावच्छिन्नाकाशवच्छरीरत्रितयावच्छिन्नं चैतन्यम् [ ३ ] दर्पणमुखप्रतिबिम्बवत् बुद्धिस्थं चैतन्यप्रतिबिम्बम् [ ४ ] साभासाहंकारस्थितप्रतिबिम्बम् [ ५ ] अन्तःकरणोपहितं चैतन्यम् [ ६ ] अज्ञानस्य व्यष्टिशक्तिभेदो जीवः स च परमात्मनः अभिन्नश्च इति बोध्यम् । अत्रोच्यते कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः इति ( वेदा० प० ) । [ ज ] अनेकान्तवादिनस्तु जीवास्तिकायसंज्ञया परिभाषितः पदार्थविशेष इत्याहुः । [ झ ] बोधात्मको जीवः ( सर्व० सं० पृ० ६७ आर्ह० ) । न्यायवैशेषिकनये जीवो देहेन्द्रियार्थादिव्यतिरिक्तः । अत्र सूत्रम् इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योर्थान्तरस्य हेतुः ( वै० ३।१।२ ) इति । तथा स जीवः परमात्मनः सकाशादतिरिक्तः । अत्र सूत्रम् शास्त्रसामर्थ्याच्च ( वै० ३।२।२१ ) । शास्त्रं च श्रुतिः द्वे ब्रह्मणी वेदितव्ये इत्यादि । तथा द्वा सुपर्णा सयुजा *सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योभिचाकशीति* इति ( वै० उ० ३।२।२१ ) । न च तत्त्वमसि श्वेतकेतो ब्रह्मविद्ब्रह्मैव भवति इत्यादिश्रुतीनां का गतिरिति वाच्यम् । तत्त्वमसि इति श्रुतेस्तदभेदेन तदीयत्वप्रतिपादनेनाभेदवाक्यपरत्वात् ।

ब्रह्मविद्ब्रह्मैव इति श्रुतिश्च निर्दुःखत्वादिनेश्वरसाम्यं जीवस्याभिधत्ते न तु तदभेदम् इत्यादि ( वै० वि० ३।२।२१ ) । स च जीवः सुखदुःखवैचित्र्यान्नानाभूत एव । तद्यथा कश्चिद्रङ्कः कश्चिदाढ्यः कश्चिदन्यविधः पुनः । अनयैवात्मनानात्वं सिद्ध्यत्यत्र व्यवस्थया ॥ ( त० व० आ० श्लो० ९० पृ० १५३ ) ( वै० ३।२।२० ) । तथा स जीवः प्रतिशरीरं भिन्नः । अत्र भोगवत्त्वे सति अनवच्छिन्नभोगवद्भिन्नो भिन्नशब्दार्थः । द्वितीयार्थोवच्छेद्यत्वं व्युत्पत्तिवैचित्र्याद्भोगे अनवच्छेद्यत्वे चान्वेति । शरीरपदं तु प्रयोज्यतासंबन्धेन तत्तन्मनोविशिष्टपरम् । तेन एकैकात्मनो जन्मभेदेनावस्थाभेदेन कायव्यूहस्थले च नानाशरीरसत्त्वेपि न क्षतिः । एकस्यैव मनसः पूर्वपूर्वजन्मार्जितधर्माधर्मद्वारा सकलशरीरप्रयोजकत्वात् । तथा च एकैकात्मा यत्किंचिन्मनोविशिष्टशरीरावच्छिन्नभोगवत्त्वे सति तादृशशरीरानवच्छिन्नभोगवद्भिन्नः इति वाक्यार्थः ( वाक्य० १ पृ० ५–६ ) । अथवा एतच्छरीरावच्छिन्नभोगवान् समानकालिकयोगजधर्माद्यजन्यशरीरावच्छिन्नभोगवद्भिन्नः इति ( नील० १ पृ० ११ ) । तथा स जीवात्मा सर्वत्र सर्वशरीरावयवेषु कार्यस्य ज्ञानादेः उपलम्भाद्विभुः । जीवस्याणुत्वाङ्गीकारे कायव्यूहस्थले योगिनः सुखादिसाक्षात्कारानुपपत्तिरतो विभुत्वमङ्गीकर्तव्यम् ( नील० १ पृ० ११ ) । विभुत्वान्नित्योसौ व्योमवत् ( त० भा० प्रमे० पृ० २५ ) ( वै० ३।२।५ ) । जीवस्यानित्यत्वाङ्गीकारे कृतस्य कर्मणो हानेः अकृतस्याभ्यागमस्य च प्रसङ्गः । अतस्तस्य नित्यत्वमङ्गीकर्तव्यम् ( त० दी० १ पृ० ११ ) । तथाच तर्कसंग्रहादावुक्तम् जीवः सुखदुःखवैचित्र्यान्नानाभूत एव प्रतिशरीरं भिन्नः विभुर्नित्यश्चेति ( त० सं० ) ( त० भा० पृ० २४ ) ( सि० च० १ पृ० १२ ) ( वै० ३।२।५ ) ( प्र० प्र० प्रमे० पृ० १० ) । जीवो विभुः इति सांख्यनैयायिकवैशेषिकपातञ्जलमायावादिवेदान्तिन आहुः । अणुपरिमाणो नानाविधश्च जीव इति रामानुजीयमाध्वादयो वैष्णवाः । अत्र श्रुतिः बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ इति । शङ्खस्मृतिरपि बालाग्रशतशो भागः

कल्पितस्तु सहस्रधा । तस्यापि शतशो भागो जीवः सूक्ष्म उदाहृतः ॥ इति ( वाच० ) । मध्यमपरिमाणरूपो जीव इति माध्यमिकबौद्धाः । तत्रापि देहपरिमाणरूपो जीव इत्यार्हताः । अत्र जीवस्य विभुत्वं मन्यमाना नैयायिकाः समुत्तिष्ठन्ते । तथा हि जीवस्य परमाणुरूपत्वाङ्गीकारे जीवगतज्ञानादिप्रत्यक्षानुपपत्तिः । सर्वशरीरव्यापिसुखाद्यनुपलब्धिप्रसङ्गश्च । योगिनो नानाशरीरावच्छेदेन सुखाद्यनुपलब्धिप्रसङ्गश्च । मध्यमपरिमाणरूपत्वाङ्गीकारे च अनित्यत्वापत्त्या कृतहानाकृताभ्यागमयोः प्रसङ्ग इति जीवस्य विभुत्वमवश्यमङ्गीकर्तव्यमिति न्यायग्रन्थतात्पर्यम् ( सि० च० १ पृ० १२ ) ( वाक्य० १ पृ० ५ ) ( नील० १ पृ० ११ )। जीव एक एव न तु नाना इति मायावादिवेदान्त्येकदेशिन आहुः । एतन्मते अविद्याप्रतिबिम्बो जीव इति मन्तव्यम् । अनेकजीववादिमायावादिमते तु अन्तःकरणप्रतिबिम्बः स च जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयवान् इति विवेकः ( वाच० )। वैशेषिकसिद्धान्ते जीवात्मनि चतुर्दश गुणा वर्तन्ते । ते च संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः बुद्धिः सुखम् दुःखम् इच्छा द्वेषः प्रयत्नः धर्मः अधर्मः भावनाख्यसंस्कारश्चेति ( त० भा० प्रमे० पृ० ३१ ) ( भा० प० श्लो० ३२–३३ ) । तत्र बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना द्विक्षणावस्थायिनस्तृतीयक्षणे नश्यन्ति । अत्रायं नियमः योग्यविभुविशेषगुणानां स्वद्वितीयक्षणोत्पन्नगुणनाश्यत्वम् इति ( त० कौ० गु० पृ० १९ ) ( मु० ) । तत्र संख्यादिपञ्चकं तु आत्मनो द्रव्यत्वेन सिद्धम् । आत्मैकत्वपरिमाणे बुद्ध्यादयः प्रयत्नान्ताश्च प्रत्यक्षसिद्धाः । तत्रात्मैकत्वपरिमाणे न प्रत्यक्षयोग्ये इति टीकाकृत आहुः ( प० मा० ) ( मु० ) । २ जीविकाख्या वृत्तिर्जीव इति काव्यज्ञा वदन्ति ( वाच० ) ।

**जीवत्वम्**—संसारित्वम् ( सर्व० सं० पृ० २०६ रसेश्व० ) ।

**जीवनम्**—१ सदेहस्यात्मनो मनसा संयोगो विपच्यमानकर्माशयसहितः ( वात्स्या० ३।२।२७ ) । यथा शतं जीवन्तु शरदः ( ऋ० १० । १८।१ ) इत्यादौ संशयं पुनरारुह्य यदि जीवति पश्यति ( हितो० ) इत्यादौ च ( वाच० ) । २ प्रणवान्तरितान्कृत्वा मन्त्रवर्णाञ्जपेत्सुधीः ।

मन्त्रार्णसंख्यया तद्धि जीवनं संप्रचक्षते ॥ ( सर्व० सं० पृ० ३६९ पातञ्ज० ) ।

**जीवनयोनियत्नः**–( प्रयत्नः ) [ क ] साहजिकप्राणसंचारविषयकयत्नः ( दि० गु० ) । स च प्राणसंचारकारणम् यावज्जीवमनुवर्तते । स चातीन्द्रियः शरीरे प्राणसंचारानुमेयश्च इति बोध्यम् ( वै० उ० ५।२।१६ ) ( भा० प० श्लो० १५३ ) । तथाहि शरीरे अधिकश्वासादिः प्राणसंचारो यत्नसाध्यतया दृष्टः । इत्थं च प्राणसंचारस्य सर्वस्य सुषुप्त्यवस्थायां जायमानस्यापि यत्नसाध्यत्वानुमानात् प्रत्यक्षप्रयत्नबाधाच्चातीन्द्रिययत्नसिद्धिः । स च प्राणसंचारहेतुत्वेनानुमीयमान एव जीवनयोनियत्नः इति ज्ञेयम् ( मु० गु० पृ० २३१ ) । अयं भावः । दृष्टो हि धावतः पुरुषस्य प्रत्यक्षप्रयत्नोत्कर्षेणाधिकश्वासादिरूपप्राणसंचारोत्कर्षः । इत्थं च एकत्र यत्नसाध्यत्वस्यानुभविकत्वेन तद्दृष्टान्तेन प्राणसंचारत्वावच्छेदेन सर्वत्र भोक्तृयत्नजन्यत्वानुमानम् इति ( दि० गु० पृ० २३२ ) । एतदुक्तं भवति । धावतः प्रयत्नोत्कर्षेण श्वासक्रियोत्कर्षदर्शनात् श्वासक्रियात्वावच्छिन्ने एव यत्नजन्यत्वनिश्चयः । यद्विशेषयोः कार्यकारणभावः असति बाधके तत्सामान्ययोरपि इति न्यायाज्जीवनयोनियत्नसिद्धिः ( त० प्र० ख० ४ पृ० ९७ ) । नव्यनैयायिकास्तु जीवनयोनियत्नं नाङ्गीचक्रुः । अयं भावः । प्राणक्रियाया अदृष्टविशेषप्रयोज्यात्ममनोयोगरूपाज्जीवनात् तत्प्रयोजकादृष्टाद्वा संभवात् उक्तानुमानस्याप्रयोजकत्वम् । अन्यथा एकत्र यत्ने ज्ञानजन्यत्वदृष्टान्तेन जन्ययत्नत्वावच्छेदेन ज्ञानजन्यत्वकल्पनापत्त्या सुषुप्तौ ज्ञानादेरप्यतीन्द्रियस्य कल्पनापत्तिः । एवं च जीवनयोनियत्नस्वीकारे मानाभावः इति ( दि० गु० पृ० २३२ ) । [ ख ] जीवनादृष्टजन्यो गुणः ( सि० च० पृ० ३५ ) । [ ग ] श्वासप्रश्वासहेतुर्यत्नः ( त० कौ० गु० पृ० १९ ) ( सि० च० पृ० ३५ ) । सुषुप्तिदशायामपि आत्मनो येन प्रयत्नेन प्राणापानयोरूर्ध्वाधोगती भवतः स प्रयत्नो जीवनयोनिसंज्ञको भवतीत्यर्थः ( वै० उ० ३।२।४ ) ।

**जीवन्मुक्तिः**—( निःश्रेयसम् ) [ क ] योगजादृष्टजन्यतत्त्वसाक्षात्कारः ( न्या० सि० दी० पृ० २९ )। इयं चापरनिःश्रेयसमित्युच्यते । जीवन्मुक्तेरुपायास्तु श्रवणमनननिदिध्यासनतत्त्वज्ञानानि योगाभ्यासादयश्च । तन्त्रोक्तकुलाचारा अपि तदुपायाः । यथोक्तम् जीवन्मुक्तावुपायस्तु कुलमार्गो हि नापरः इति ( तन्त्रम् ) ( वाच० )। यथा शुकजनकादीनां जीवन्मुक्तिः । अत्र मायावादिन आहुः । जीवन्मुक्तो नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते अज्ञानकार्यसंचितकर्मसंशयविपर्ययादीनामपि बाधितत्वादखिलबन्धरहितो ब्रह्मनिष्ठः इति ( वेदान्तसा० )। [ ख ] अवधारितात्मतत्त्वस्य नैरन्तर्याभ्यासापहृतमिथ्याज्ञानस्य प्रारब्धं कर्मोपभुञ्जानस्य जीवतः सत एव जायमानश्चरमदुःखध्वंसः ( गौ० वृ० १।१।१ )।

**जैमिनिः**—सामवेदाध्ययनेन वेदव्यासशिष्य ऋषिविशेषः । अत्र श्रूयते साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम् ( भाग० स्क० १२ अ० ६ श्लो० १८ ) इति । स च जैमिनिः अथातो धर्मजिज्ञासा ( जै० सू० १।१।१ ) इत्यारभ्य अन्वाहार्ये च दर्शनात् ( जै० सू० १२। ४।४६ ) एतत्पर्यन्तं द्वादशाध्यायात्मकं सूत्रबद्धं कर्मकाण्डाख्यं धर्ममीमांसादर्शनं प्रणिनाय ।

**ज्ञप्तिः**—१ ज्ञानम् । २ मारणम् । ३ तोषणम् । ४ स्तुतिः । ५ तीक्ष्णीकरणम् ( वाच० )।

**ज्ञा**—( धातुः ) [ क ] ज्ञानम् । यथा चैत्रो घटं जानाति चैत्रेण घटो ज्ञायते इत्यादौ धात्वर्थः ( वै० सा० धात्व० पृ० ५७ )। चैत्रो घटं जानातीत्यत्र प्राचीनमते द्वितीयार्थो विषयत्वम् । तत्र प्रकृत्यर्थस्य घटादेः आधेयतासंबन्धेनान्वयः । तस्य द्वितीयार्थस्य विषयत्वस्य धात्वर्थे ज्ञाने निरूपकत्वसंबन्धेनान्वयः । नवीनमते तु विषयित्वं द्वितीयार्थः । अयमाशयः । वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकतया घटं जानाति पटं न इत्यादौ अन्वयस्य अनुपपत्तिः । अतोयमर्थः स्वीकार्यः इति । तस्य च धात्वर्थज्ञाने आश्रयता—( स्वरूपाख्य— ) संबन्धेनान्वयः

( ग० व्यु० का० २ ख० १ पृ० ५१ ) । एवं च घटनिष्ठविषयतानिरूपितविषयिताश्रयीभूतं यज्ज्ञानं तदाश्रयश्चैत्रः इति शाब्दबोधः । घटादिनिष्ठं ज्ञानादिकर्मत्वं च ज्ञानादिविषयत्वमेव । विषयत्वादौ च द्वितीयाया लक्षणैव न तु शक्तिः इति सांप्रदायिका आहुः । चैत्रेण घटो ज्ञायते इत्यत्र कर्माख्यातेन घटादौ धात्वर्थज्ञाननिरूपितं विषयत्वं बोध्यते ( ग० व्यु० का० २ पृ० ५१ ) । तथा च चैत्रेणेति तृतीयाया अर्थः चैत्रान्वितं समवेतत्वम् । तस्य च धात्वर्थे ज्ञानेन्वयः । तस्य ज्ञानस्य चात्मनेपदार्थविषयत्वेन्वयः । तस्य तादृशविषयत्वस्य घटेन्वयः । एवं च चैत्रसमवेतज्ञानविषयो घटः इति शाब्दबोधः । [ ख ] शाब्दिकाश्च पतञ्जलिप्रभृतयः ज्ञानानुकूलव्यापारः ज्ञाधात्वर्थः । ( ल० म० धात्वर्थ० पृ० ६ ) ( वै० सा० द० धात्व० पृ० ६३ ) । यथा देवदत्तो घटं जानातीत्यादौ जानात्यर्थः इत्याहुः ( वै० सा० धात्व० पृ० ४६ ) । अत्र विषयतया ज्ञानं फलम् । आत्ममनःसंयोगो व्यापारः । अत एव मनो जानाति इत्युपपद्यते ( ल० म० धात्वर्थ० पृ० ६ ) । आत्ममनःसंयोग इत्यत्रात्मान्तःकरणम् । मनोपि तद्वृत्तिविशेषरूपम् ( ल० म० धात्वर्थ० पृ० ६ ) । अत्र देवदत्ताभिन्नाश्रयको ज्ञानाद्यनुकूलो वर्तमानो व्यापारः इति बोधः ( वै० सा० धात्व० पृ० ४६ ) । [ ग ] अन्ये तु शाब्दिकाः विषयावच्छिन्नावरणभङ्गादिफलानुकूलव्यापारः । यथा घटं जानातीत्यादौ धात्वर्थः इत्याशशङ्किरे ( वै० सा० धात्वर्थ० पृ० ६२ ) । अतीतानागतादिपरोक्षस्थलेपि ज्ञानजन्यस्य तादृशफलस्यावश्यकत्वम् । अत एव ज्ञादिधातोः सकर्मकत्वमुपपद्यते । ज्ञानस्यैव फलत्वाङ्गीकारे तदनाश्रयत्वाद्घटादेः कर्मत्वानुपपत्तिः इति भावः ( वै० सा० धात्वर्थ० पृ० ६२ ) । स च व्यापारोर्थप्रकाशरूपः । अत्रेदं ज्ञेयम् । ज्ञाकृआदिधातुषु सकर्मकत्वव्यवहारो भाक्त इति नैयायिकसिद्धान्तः ( वै० सा० धात्व० पृ० ६० ) ।

**ज्ञातता**—१ ज्ञानविषयता ( त० भा० प्रमाण० पृ० २२ ) । अत्रेदमवधेयम् । ज्ञातता ज्ञानविषयत्वम् । तच्च स्वरूपसंबन्धरूपमेव । यथा ज्ञातो

घटः इति प्रतीतिविषयो ज्ञाततेति नैयायिकाः प्राहुः । भट्टास्तु घटादौ समवायेन वर्तमाना ज्ञानजन्या ज्ञाततेत्याहुः । अत्रेदं बोध्यम् । भट्टमते ज्ञातो घटः इति प्रतीतिं प्रति घटज्ञानं निमित्तकारणम् । घटादिकं समवायिकारणम् । असमवायिकारणं तु नापेक्षितम् । भावकार्यं सासमवायिकारणम् इति नियमस्य तु भट्टैरनङ्गीकारात् इति ( त० प्र० ख० ४ पृ० १२९ ) । यथा ज्ञातसारोपि खल्वेकः संदिग्धे कार्यवस्तुनि ( माघ० स० २ श्लो० १२ ) इत्यादौ सारस्य तत्त्वार्थस्य ज्ञातता । २ भट्टमीमांसकास्तु ज्ञातः इति प्रतीतिसिद्धो ज्ञानजन्यो विषयसमवेतः प्राकट्यापरनामा अतिरिक्तपदार्थविशेषः ( मू० म० १ प्रामा० पृ० १२६ ) । अथवा सविषयको ज्ञानजन्योतिरिक्तपदार्थः इत्याहुः ( नील० प्रामा० पृ० ३५ ) । ज्ञातताया ज्ञानजन्यत्वं चेत्थम् । घटादिविषये ज्ञाने जाते मया ज्ञातोयं घटः इति घटस्य ज्ञातत्वं प्रतिसंधीयते । तेन ज्ञाने जाते सति ज्ञातता नाम कश्चिद्धर्मो जातः इत्यनुमीयते । सा च ज्ञातता ज्ञानात्पूर्वमजातत्वात् ज्ञाने जाते च जातत्वादन्वयव्यतिरेकाभ्यां ज्ञानेन जन्यते इत्यवधार्यते इति ( त० भा० प्रामा० पृ० २२ ) । ३ या शक्यमनुभावयति सा शक्तिर्ज्ञाततेति केचिदाहुः ( चि० ) ।

**ज्ञानम्**—१ बुद्धिवदस्यार्थोनुसंधेयः ( गौ० १।१।१५ ) ( वै० ८।१। १ ) । २ बुद्धितत्त्वस्य महत्तत्त्वापरपर्यायस्य परिणामविशेषो ज्ञानम् इति सांख्या आहुः ( गौ० वृ० १।१।१५ ) । अत्रायमर्थः । अर्थाकारेण परिणताया बुद्धिवृत्तेश्चेतने प्रतिबिम्बनाद्विषयप्रकाशरूपं ज्ञानम् । तत्र पौरुषेयबोधे वृत्तिः करणम् वृत्तिरूपज्ञाने चेन्द्रियादि करणम् इति भेदः । ३ गुणपुरुषान्यताख्यातिरूपोध्यवसायो ज्ञानम् इति ( वाच० ) । ४ बुद्धिवृत्तिनिरोधरूपो योगो ज्ञानम् इति योगशास्त्रज्ञा आहुः । ५ केचिद्बौद्धास्तु बाह्यार्थाभावेन बुद्धेरेव तत्तदर्थाकारतयावभासो ज्ञानम् इत्यङ्गीचक्रुः । ६ मनोवृत्तिश्चैतन्यविशेषो वा ज्ञानम् इति मायावादिनः । मायावादिमते ज्ञानं द्विविधम् । वृत्तिरूपम् तदवच्छिन्नवृत्तिप्रतिबिम्बितचैतन्यरूपं चेति । तत्र प्रत्यक्षज्ञानमपि द्विविधम् वस्तु-

मात्रद्योतकं निर्विकल्पकम् सविकल्पकं च। तत्र सविकल्पकं संज्ञादिद्योतकत्वादनेकधा। तथा हि संकल्पसंशयभ्रान्तिस्मृतिसादृश्यनिश्चयाः। ऊहोनध्यवसायश्च तथान्येनुभवा अपि॥ इत्यादि ( वाच० )। वैशेषिकमतेपि ज्ञानं द्विविधम्। विद्या अविद्या च। तत्र विद्या चतुर्विधा प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा। अविद्यापि चतुर्विधा संशयविपर्ययस्वप्नानध्यवसायलक्षणा इति ( वै० उ० ८।१।२ )। ७ ध्यानोपासनादिशब्दवाच्यं वेदनं ज्ञानम् ( सर्व० सं० पृ० १२१ रामानु० )।

**ज्ञानलक्षणः**—( संनिकर्षः ) स्वविषयविषयकप्रत्यक्षजनको ज्ञानविशेषः ( स्मरणम् )। यथा सुरभित्वज्ञानम् ( भा० प० १ श्लो० ६६ ) ( मु० १ पृ० १३१ ) ( त० व० )। अत्रेदमवधेयम्। अयं संनिकर्षः स्मृत्यात्मकः अलौकिकप्रत्यक्षे कारणं भवति। ज्ञानलक्षणसंनिकर्षेण तद्विषयीभूततत्तत्पदार्थानां प्रत्यक्षं मनसा जन्यते। कथमन्यथा ( ज्ञानलक्षणसंनिकर्षास्वीकारे ) कविकाव्यमूलभूततत्तत्पदार्थसंसर्गज्ञानम् ( त० कौ० १ पृ० ९ )। किंच ज्ञानलक्षणसंनिकर्षास्वीकारे यत्र सौरभत्वजात्युपस्थित्यनन्तरं सुरभिर्गन्धः इतिवत् सुरभि चन्दनम् इत्याकारकं सौरभत्वप्रकारेण चन्दनस्य भ्रमात्मकं चाक्षुषम् तत्र सौरभत्वजातेर्भानं न स्यात्। नहि तत्र सुरभिगन्धस्य भानसंभवः। येन सुरभिगन्धभासनेन सामान्यलक्षणायास्तद्धर्मप्रकारकतदाश्रयप्रत्यक्षं प्रत्येव हेतुतया सौरभत्वप्रत्यासत्तेः कार्यतावच्छेदकतयैव सौरभत्वजातेर्भानं भविष्यति इति संभावनीयम् ( जग० ) ( वाच० )। तादृशं स्मरणं च यद्विषयकम् तद्विषयकसाक्षात्कारजनिका प्रत्यासत्तिः। सुरभि चन्दनम् इति चाक्षुषे सौरभस्य सौरभत्वस्य वा भानं ज्ञानप्रत्यासत्त्यैव ( म० प्र० १ पृ० २२ )। अयं च यद्विषयकं ज्ञानं जननीयम् तस्यैव संनिकर्षः। अत एव सुरभि चन्दनमित्यादौ सौरभत्वादेरपि भानमिति ( दीधि० )। ज्ञानलक्षणसंनिकर्षेण ( स्मरणेन ) पूर्वज्ञातवस्तुनः अलौकिकप्रत्यक्षं जन्यते। यथा सुरभि चन्दनम् इति चाक्षुषे चन्दनस्य चक्षुर्ग्राह्यत्वेपि सौरभस्य तदग्राह्यत्वात् पूर्वज्ञातस्य सौरभस्या-

लौकिकं प्रत्यक्षं जन्यते । तथा च सुरभि चन्दनमित्यत्र सौरभांशे अलौकिकत्वम् चन्दनांशे लौकिकत्वम् इति ( वाच० ) । अत्र च सुरभित्वज्ञानं ( स्मरणम् ) तु सुरभि चन्दनम् इति चाक्षुषोपनीतभानं जनयतीति विज्ञेयम् । यत्र सौरभज्ञानलक्षणया चाक्षुषसामग्र्या च सुरभि चन्दनखण्डम् इति सौरभांशे अलौकिकम् चन्दनखण्डांशे लौकिकं चाक्षुषं जायते तत्र सौरभज्ञाने सौरभप्रत्यक्षे जननीये सौरभस्मरणमेव प्रत्यासत्तिः । सौरभांशे चक्षुःसंनिकर्षासंभवात् ( सि० च० १ पृ० २३ ) । सौरभस्य चक्षुरयोग्यत्वेन चक्षुःसंयुक्तचन्दनसमवायस्य तत्र सत्त्वेप्यप्रयोजकत्वात् इति ( त० कौ० १ पृ० ९ ) । एवम् रज्जुसर्पादिबोधेपि सर्पत्वाद्युपस्थितिर्ज्ञानलक्षणसंनिकर्षादेव भवति । यतः सर्पत्वादौ चक्षुःसंनिकर्षाभावादिति ( त० व० ) । एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया भवति । अयं च ज्ञानलक्षणः संनिकर्षः षडिन्द्रियसहकारी इति संप्रदायविद आहुः । मनस एव सहकारी इति शूलपाणिमिश्रा अमन्यन्त (त० कौ० १ पृ० ९) ।

**ज्ञानाध्यासः**—प्रमाणदोषसंस्कारजन्मान्यस्य परात्मता । तद्धीश्चाध्यास इति हि द्वयमिष्टं मनीषिभिः ( सर्व० सं० पृ० ४२० शां० ) ।

**ज्ञानेन्द्रियम्**—( इन्द्रियम् ) ज्ञानजनकमिन्द्रियम् । ज्ञानेन्द्रियाणि षट् । श्रोत्रम् त्वक् चक्षुः रसनम् घ्राणम् मनश्चेति । एतानि मनोव्यतिरिक्तानि बहिरिन्द्रियाणि । मनस्तु अन्तरिन्द्रियम् । दिग्वातार्कप्रचेतोश्विनो बहिरिन्द्रियाणां देवता ज्ञेयाः । तद्विषयाश्च शब्दस्पर्शरूपरसगन्धाः इति । अन्तरिन्द्रियस्य मनसः विषयस्तु सुखादिकम् चन्द्रमा देवता इति ज्ञेयम् । अत्रेदमवधेयम् नैयायिकमते ज्ञानेन्द्रियातिरिक्तानामिन्द्रियत्वं नास्त्येव इति । अधिकं तु इन्द्रियशब्दव्याख्यानावसरे संपादितमिति नात्र तन्निरूप्यते ।

**ज्ञापकत्वम्**—१ जनकज्ञानविषयत्वम् । यथा पर्वतो वह्निमान् धूमादित्यादौ धूमस्य ज्ञापकत्वम् ( ग० अव० हेतु० ) । अत्र ज्ञापकत्वं च परामर्शीयप्रकारत्वविशेष्यत्वैतदन्यतरवत्त्वमिति केचिद्वदन्ति । २ धर्मज्ञास्तु

ज्ञानजनकत्वम् । यथा श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक् संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ ( याज्ञ० १।७ ) इत्यादौ श्रुत्यादेर्धर्मज्ञापकत्वम् इत्याहुः ।

**ज्ञापनम्**—[ क ] ज्ञानानुकूलशब्दः । [ ख ] ज्ञानानुकूलव्यापारः । यथा चैत्रः स्ववृत्तान्तं मैत्रं ज्ञापयतीत्यादौ । [ ग ] शाब्दिकास्तु ज्ञानानुकूलव्यापारानुकूलव्यापारः इत्याहुः ।

**ज्ञाप्यत्वम्**—१ जन्यज्ञानविषयत्वम् । यथा धूमाद्वह्निमानित्यादौ वह्नयन्वयि ज्ञाप्यत्वं पञ्चम्यर्थः ( ग० अव० हेतु० ) । अयमर्थो नवीनमतानुसारेण । प्राचीनमते तु ज्ञापकत्वमेव पञ्चम्यर्थः इति बोध्यम् । २ ज्ञानजन्यत्वमिति केचिद्वदन्ति ।

**ज्ञेयत्वम्**—[ क ] ज्ञानविषयत्वम् ( मु० १ साधर्म्य० पृ० ४५ ) । यथा भूतलं घटवत् इति चाक्षुषप्रत्यक्षे घटस्य ज्ञेयत्वम् । यथा वा ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ( गीता १३।१२ ) ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् ( गीता० १३।१७ ) इत्यादौ । [ ख ] भगवज्ज्ञानविषयत्वम् ( न्या० म० २ पृ० १९ ) ( त० दी० २ पृ० २३ ) । यथा घटपटादेः सर्वस्य जगतो ज्ञेयत्वम् । तच्च केवलान्वयि ( मु० १ साधर्म्य० पृ० ४५ ) । यथा वा इदं वाच्यं ज्ञेयत्वादित्यादौ ( मु० २ ) ।

**ज्येष्ठत्वम्**—१ कालकृतः परत्वविशेषः ( सि० च० पृ० १८ ) । यथा रामस्य लक्ष्मणमपेक्ष्य ज्येष्ठत्वम् । २ बहुतरसूर्यस्पन्दान्तरितजन्यत्वम् इति नव्या आहुः ( दि० गु० पृ० २०९ ) । कालकृतो विप्रकर्ष इत्यर्थः । नव्यमते परत्वस्य गुणान्तरत्वं नास्ति इति भावः । ३ स्मार्तास्तु उत्कर्षः श्रेष्ठत्वं वा । यथा विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः । वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥ ( मनुः २।१५५ ) इत्यादौ ज्येष्ठत्वम् इत्याहुः ।

**ज्योतिर्मन्त्रः**—तारव्योमाग्निमनुयुग्ज्योतिर्मन्त्र उदाहृतः ( सर्व० सं० पृ० २७० पात० ) ।

**ज्वाला**—दर्भपिञ्जूलैः प्रज्वालनम् ( जै० न्या० अ० १० पां० १ अधि० ११ ) ।

---

## ट.

**टिप्पनी**—१ टीकायाष्टीका । सा च टीकाव्याख्यारूपतयैव व्यवह्रियते । यथा चिन्तामणिटीकाया दीधित्याख्यव्याख्यायाष्टीका जगदीशकृता जगदीशी गदाधरकृता गदाधरी च टिप्पनी । यथा वा ब्रह्मसूत्राणां भाष्यस्य व्याख्या तत्त्वप्रकाशिकाख्या जयतीर्थभिक्षुकृता पाणिनिसूत्राणां महाभाष्यस्य व्याख्या कैयटकृता इत्यादि । २ प्रथमव्याख्यापि टिप्पनीत्युच्यते । यथा श्रीमतङ्गाननं नत्वा लीलावत्याः सुटिप्पनी । भवेशेन सुबोधार्थं क्रियते यद्गुरोः श्रुतम् ॥ टिप्पनी दायभागस्य श्रीनाथेन विधीयते इत्यादौ ।

**टीका**—मूलग्रन्थस्य अप्रतिपत्तिविप्रतिपत्त्यन्यथाप्रतिपत्तिनिवारणेन तत्कर्तुरभिप्रेतार्थस्य शब्दान्तरेण विवरणम् । यथा श्रीमद्भागवतस्य टीका विजयध्वजी ।

## ढ.

**ढुण्ढा**—ढुण्ढा नामेति विख्याता राक्षसी मालिनः सुता । तया चाराधितः शंभुरुग्रेण तपसा पुरा ॥ ( पु० चि० पृ० ३०८ ) ।

## ण.

**णिः**—( धात्वंशः प्रत्ययः ) अयं धातुप्रकृतिकः प्रत्ययो बोध्यः (श० प्र० श्लो० १०७ पृ० १६९) । अनुकूलव्यापारः व्यापारमात्रं वा णेरर्थः । यथा चैत्रं भावयति आत्मानं गमयतीत्यादौ ण्यर्थः ( श० प्र० श्लो० १०७ पृ० १६९ ) ( ग० व्यु० का० २ पृ० ४८ ) । केचित्तु णिजर्थो हेतुकर्तृत्वम् । हेतुमति च ( पा० सू० ३।१।२६ ) इति पाणिन्यनुशासनात् । तच्च स्वतन्त्रकर्तृप्रेरणा अन्यनिष्ठकर्तृत्वनिर्वाहकव्यापाररूपा इत्याहुः । अत्र कर्तृत्वं कचित्प्रयत्नः । कचिदाश्रयत्वादिकम् । यादृशधातूत्तराख्यातेन यादृशकर्तृत्वं बोध्यते तदुत्तरणिच्प्रत्ययेन तादृशकर्तृत्वनिर्वाहकव्यापारो बोध्यते । अत एव पाचयतीत्यादौ पाकादिक-

तिनिर्वाहकः ज्ञापयतीत्यादौ ज्ञानाश्रयत्वनिर्वाहकः नाशयतीत्यादौ नाशप्रतियोगित्वनिर्वाहकः व्यापारः प्रतीयते । अत्र सर्वत्र निर्वाहकत्वं च स्वरूपसंबन्धविशेषः न तु जनकत्वम् । अतो न नाशयतीत्यादावनुपपत्तिः । एवं च ण्यन्तसमुदायस्यापि धातुत्वेन ण्यन्तधातुप्रतिपाद्यतावच्छेदकं फलं कर्तृत्वमेव । निर्वाह्यस्यैव फलत्वात् । तदाश्रयतया स्वतन्त्रस्य कर्तुः कर्मता । तादृशफलविशेषणतया स्वतन्त्रकर्तृवृत्तित्वविवक्षायां पाचयत्योदनं सहायम् इत्यादयः प्रयोगा अपि साधव एव । अत एव अजिग्रहत्तं जनको धनुस्तत् इत्यादयो भट्टिप्रयोगाः । यदा तु पाकादिविशेषणतया सहायादिकर्तृत्वं विवक्षितम् तदा पाचयत्योदनं सहायेन इत्यादयः प्रयोगाः इति विवेकः ( ग० व्यु० का० २ पृ० ४७ ) । क्वचित् ज्ञानानुकूलव्यापारोपि ण्यर्थः । यथा कथकः कंसं घातयतीत्यादावभिनयादिरूपः । अत्र कंसकर्मकवधमाचष्टे इति बोधः ( ग० व्यु० का० २ पृ० ६२ ) । क्वचित् स्वरूपं ण्यर्थः । यथा चोरयति चिन्तयति इत्यादौ ण्यर्थः स्वरूपमेव । अत्र चुरादिभ्यः स्वार्थिकस्य णेः स्वरूपमर्थः । तेन चोरयति चिन्तयतीत्यादौ स्तेयादिस्वरूपस्यानुकूलकृतिमान् इत्यादिरर्थः ( श० प्र० श्लो० १०७ पृ० १६९ ) ।

**णी**—( धातुः ) १ नयनवदस्यार्थोनुसंधेयः । २ संमाननम् । ३ ज्ञानम् ४ निश्चयो वा ( वाच० ) ।

---

## त.

**तटस्थः**—वादिप्रतिवादिभावानापन्न उदासीनः । यथा तटस्थः शङ्कते इत्यादौ ।

**तटस्थलक्षणम्**—यावल्लक्ष्यकालमनवस्थायित्वे सति यद्व्यावर्तकं तत् । यथा पृथिव्या गन्धवत्त्वं तटस्थं लक्षणं भवति । अत्र महाप्रलये परमाणुषु उत्पत्तिकाले घटादिषु च गन्धाभावात्तथात्वं युज्यते । यथा वा मायावादिमते ब्रह्मणो जगज्जन्मादिकारणत्वं लक्षणम् । अत्रेदं बोध्यम् । लक्षणं द्विविधम् । स्वरूपलक्षणं तटस्थलक्षणं च । तत्राद्यम् सत्यं ज्ञानमनन्तं ब्रह्म इत्यनेन ब्रह्मणः स्वरूपलक्षणमुच्यते । द्वितीयं तु जगज्जन्मादिका-

रणत्वं ब्रह्मणो लक्षणम् इति ज्ञेयम् ( वेदा० प० वि० ) ( वाच० )। यतो वा इमानि ( तै० उ० २।१।१ ) इत्यादीनि वाक्यानि ब्रह्मणः तटस्थलक्षणम् ( सर्व० सं० पृ० ४६७ शांक० )।

तद्—१ [ क ] वक्तृबुद्धिविषयः तत्पदार्थः । यथा तौ गुरुर्गुरुपत्नी च ( रघु० स० १ श्लो० ५७ ) ते हिमालयमामन्त्र्य ( कुमार० स० ६ श्लो० ९४ ) इत्यादौ । [ ख ] केचित्तु परोक्षबुद्धिविषयः तच्छब्दार्थ इति वदन्ति ( दि० ४ पृ० १७९ ) । इदमस्तु संनिकृष्टं समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षं विजानीयात् ॥ इत्यभियुक्तोक्तेः ( मनो० ) । [ ग ] कश्चित् यत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नः । इयं च व्युत्पत्तिः प्रक्रम्यमाणपरामर्शकतच्छब्दस्य द्रष्टव्या । यतः प्रक्रम्यमाणपरामर्शकतच्छब्देन नियमतो यत्पदमपेक्ष्यते । यथा तमानय य इहास्ति इत्यादौ ( ग० शक्ति० टी० पृ० ११५ ) । यथा वा स किंसखा साधु न शास्ति योऽधिपम् ( किरा० स० १ श्लो० ५ ) इत्यादौ । [ घ ] शाब्दिकास्तु यत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयो विधेयभूतः तत्पदार्थ इति वदन्ति । [ ङ ] कश्चित् स्वोच्चारकपुरुषप्रयुक्तपूर्वपदजन्योपस्थितिविषयतावच्छेदकत्वोपलक्षितस्वप्रयोजकबुद्धिविषयतावच्छेदकधर्मावच्छिन्नः । अत्रोपस्थितिश्च स्वविशेष्यकवृत्तिज्ञानाधीना ग्राह्या । अतः पशुरस्ति तं पश्येत्यादौ पश्वादिपदोपस्थापितलोमादीनां तदादिशब्देन न परामर्शः । इयं व्युत्पत्तिः प्रक्रान्तपरामर्शकतच्छब्दस्य द्रष्टव्या । यतः तत्र यत्पदापेक्षानियमो नास्ति । यथा तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः । दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥ ( रघु० स० १ श्लो० १२ ) इत्यादौ । अत्र वैवस्वतादिपदोपस्थाप्यस्यापि तच्छब्देन परामर्शान्न यत्पदापेक्षेति ज्ञेयम् ( ग० शक्ति० पृ० ११५ ) । २ प्रसिद्धम् । प्रसिद्धत्वं चानेकज्ञानविषयत्वम् ( ग० शक्ति० टी० पृ० ११६ ) । यथा द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः । कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ ( कुमार० सं० ५।७१ )

तं केशपाशं प्रसमीक्ष्य कुर्युः ( कुमार० सं० १।४८ ) इत्यादौ । अत्र सेति प्रसिद्धार्थत्वान्न यच्छब्दापेक्षा । तदुक्तं काव्यप्रकाशे प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते इति ( कुमार० मल्लि० ५।७१ ) । यथा वा तत् सत्यम् स आत्मा तत्त्वमसि श्वेतकेतो ( छा० उ० ) इत्यादौ । तदुक्तम् ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ( गीता० १७।२३ ) इति । ३ अनुभूतम् । यथा ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ( रत्नावली ) इत्यत्र । ४ हेतुः । यथा संतप्तानां त्वमसि शरणं तत् पयोद प्रियायाः ( मेघ० पूर्व० श्लो० ७ ) तदङ्गमग्र्यं मघवन् महाक्रतोः ( रघु० स० ३ श्लो० ४६ ) इत्यादौ । ५ तदा इत्येतदर्थः । यथा ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन । तत् किं कर्मणि घोरे माम् ( गीता० अ० ३ श्लो० १ ) इत्यादौ ।

**तत्त्वज्ञानम्**—[ क ] यथार्थज्ञानम् । अत्रोक्तम् । तत्त्वज्ञानं तु खलु मिथ्याज्ञानविपर्ययेण व्याख्यातम् ( वात्स्या० १।१।२ ) । तच्च ईश्वरनोदनाभिव्यक्ताद्धर्मादेव ( प्रशस्त० भा० १।१।१ पृ० ११ ) । ईश्वरनोदना उपदेशः । वेद इति यावत् । तेनाभिव्यक्तात्प्रतिपादिताद्धर्मादेव भविष्यति इत्यर्थः ( किर० १।१।१ पृ० ११ ) । [ ख ] यथावस्थितपदार्थाधिगतिः । तच्च प्रमाणम् ( न्या० वा० पृ० ४ ) । यथा सति घटादिवस्तुनि सत् इति ज्ञानम् । असति च शशशृङ्गादौ असत् इति ज्ञानम् । [ ग ] निखिललोकविमोक्षमुख्योपायं मननोपायमात्मनस्तत्त्वज्ञानमामनन्ति ( न्या० म० १ पृ० १ ) । यथा आत्मा शरीरादिभ्यो भिन्नः इत्याकारकं ज्ञानम् ( त० प्र० १ पृ० ५ ) । यथा वा आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगम इत्यादौ ( वात्स्या० १।१।१ ) । इदं तत्त्वज्ञानं च परमात्मविषयकम् निःश्रेयससाधनं चेति बोध्यम् । [ घ ] इतरनिवृत्तिपूर्वको ब्रह्मात्मावगम इति मायावादिनो वदन्ति । [ ङ ] भगवद्विषयकमपरोक्षज्ञानमिति द्वैतवादिनो वेदान्तिन आहुः ।

**तत्त्वम्**—[ क ] सतश्च सद्भावः असतश्चासद्भावः । सत् सत् इति गृह्यमाणं यथाभूतमविपरीतम् तत्त्वं भवति । असच्च असत् इति गृह्यमाणं यथाभू-

तमविपरीतम् तत्त्वं भवति ( वात्स्या० १।१।१ प्रस्तावना ) । यथा प्रमाणप्रमेय............तत्त्वज्ञानान्निःश्रेयसाधिगमः ( गौ० १।१।१ ) इत्यादौ प्रमेयादिकं तत्त्वम् । [ ख ] यो यथावस्थितः पदार्थः स तथाभूतप्रत्ययोत्पत्तिनिमित्तं यत्तत् ( न्या० वा० १ पृ० १२ ) । [ ग ] अनारोपितं तत्त्वम् । प्रमितिविषय इति यावत् । इति वेदान्तिनः श्रीपूर्णप्रज्ञाचार्यमतानुयायिनः प्राहुः ( तत्त्वसंख्या० टी० ) । [ घ ] याथातथ्यम् ( वात्स्या० १।१।४० ) । यथा अविज्ञाततत्त्वे ( गौ० १।१।४० ) इत्यादौ । यथा वा कार्यं सोवेक्ष्य शक्तिं च देशकालौ च तत्त्वतः ( मनुः ७।१० ) इत्यादौ । [ ङ ] वार्तिककारास्तु पदार्थानां यथावस्थितात्मप्रत्ययोत्पत्तिनिमित्तत्वम् इत्याहुः ( न्या० वा० १ पृ० १२ ) । [ च ] काव्यज्ञास्तु स्वभावः । यथा निस्तत्त्वाः इत्यादौ इत्याहुः ( वाच० ) । मतभेदेन तत्त्वानि प्रदर्श्यन्ते । [ १ ] स्वतन्त्रास्वतन्त्रभेदेन द्विविधं तत्त्वम् इति द्वैतवादिनः श्रीपूर्णप्रज्ञाचार्या वेदान्तिनः प्राहुः ( तत्त्वसं० टी० ) । [ २ ] सदसदुभयानुभयात्मकचतुष्कोणविनिर्मुक्तं शून्यमेव तत्त्वम् इति शून्यवादिनो बौद्धाः ( सर्व० पृ० २९ बौद्ध० ) । [ ३ ] पृथिव्यादीनि चत्वारि भूतानि तत्त्वानि इति चार्वाका आहुः ( सर्व० पृ० २ चार्वा० ) । [ ४ ] जीवाजीवाख्ये द्वे तत्त्वे इत्यार्हताः ( सर्व० सं० पृ० ६७ आर्ह० ) । [ ५ ] जीवाकाशधर्माधर्मपुद्गलास्तिकायाः पञ्च तत्त्वानि इत्यार्हतैकदेशिनः (सर्व० सं० पृ० ६९ आर्ह० ) । [ ६ ] जीवाजीवास्रवबन्धसंवरनिर्जरमोक्षाः सप्त तत्त्वानि इत्यपर आर्हतैकदेशिनः ( सर्व० सं० पृ० ७३ आर्ह० ) । [ ७ ] द्रव्याद्रव्यभेदेन द्विविधं तत्त्वम् इति रामानुजीयाः ( सर्व० पृ० ११२ रामा० ) । [ ८ ] पतिपशुपाशेषु त्रिषु पदार्थेषु पृथिव्यादीनि पञ्च तत्त्वानि इति पाशुपतशास्त्रकोविदा नकुलीशाचार्याः ( सर्व० पृ० १६५ नकु० ) । [ ९ ] पृथिव्यादिकलापर्यन्तानि त्रिंशत्तत्त्वानि पुर्यष्टकपदवाच्यानि कलाकालनियतिविद्यारागप्रकृतिगुणाख्यानि सप्त तत्त्वानि इति च शैवा आहुः (सर्व० पृ० १८५ शैव०) । [ १० ] मह-

दादीनि पञ्चविंशतिस्तत्त्वानि इति निरीश्वरसांख्याः कपिलादयः ( सर्व० सं० पृ० ३११ सां० ) । [ ११ ] ईश्वराधिकानि तानि (२५) इति षड्विंशतिस्तत्त्वानि इति सेश्वरसांख्याः पतञ्जल्यादयः ( सर्व० सं० पृ० ३३३ पातञ्जल० ) । [ १२ ] अशेषविशेषप्रत्यनीकं चिन्मात्रं ब्रह्मैकमेव तत्त्वम् इति मायावादिनो वेदान्तिनः ( सर्व० पृ० ९२ रामा० ) । [ १३ ] विलम्बितं नृत्यवाद्यादि तत्त्वम् इति नाट्यशास्त्रज्ञा आहुः । [ १४ ] चेतः स्वरूपं च तत्त्वम् इति काव्यज्ञा आहुः इति ( वाच० ) । शाक्तास्तु मद्यं मांसं तथा मत्स्यो मुद्रा मैथुनमेव च । पञ्चतत्त्वमिदं प्रोक्तं देवि निर्वाणहेतवे ॥ मकारपञ्चकं देवि देवानामपि दुर्लभम् इत्याहुः ( गुप्तसाधनतन्त्रे ७ पटले ) । वैष्णवास्तु गुरुतत्त्वं मन्त्रतत्त्वं मनस्तत्त्वं सुरेश्वरि । देवतत्त्वं ध्यानतत्त्वं पञ्चतत्त्वं प्रकीर्तितम् ॥ इत्याहुः ( निर्वाणतन्त्रे ) ( वाच० ) ।

**तत्परत्वम्**—१ तात्पर्यम् । तत्परस्य भावः तत्परत्वम् । २ पौराणिकास्तु निष्ठा । यथा भगवद्भक्तितत्परः इत्यादौ इत्याहुः ।

**तत्पुरुषः**—( समासः ) [ क ] यदर्थगतेन सुबर्थेन विशिष्टस्य यदर्थस्यान्वयबोधं प्रति यः समासः स्वरूपयोग्यः स तदर्थस्य तदर्थे तत्पुरुषः । यथा ग्रामगतः इत्यादिः ( श० प्र० श्लो० ३८ पृ० ४८ ) । [ ख ] समासप्रयुक्तलक्षणाशून्योत्तरनामकत्वे सति लुप्तद्वितीयादिविभक्तिकपूर्वनामकसमासः । यथा राजपुरुषः इति । अत्र लक्षणे पञ्चपूलीत्यादिवारणाय सत्यन्तम् । नीलोत्पलमित्यादिवारणाय लुप्तद्वितीयादिविभक्तिकेति आब्राह्मणमित्याद्यव्ययीभाववारणाय पूर्वेति च नामविशेषणम् । राजपुरुषइत्यत्र समासप्रयुक्तलक्षणायाः पूर्वपद एव स्वीकारात् सत्यन्तविशिष्टविशेष्यसत्त्वात् लक्षणसमन्वयः ( म० प्र० ४ पृ० ४२ ) । [ ग ] शाब्दिकाश्च तत्पुरुषाधिकारविहितः समासस्तत्पुरुषः इत्याहुः । तन्मते स च तत्पुरुषः प्रकारान्तरेण त्रिविधः । व्यधिकरणपदघटितः समानाधिकरणपदघटितः संज्ञानवबोधकसंख्यावाचकपदघटितश्चेति । तत्र संज्ञानवबोधकसंख्यापूर्वकसमानाधिकरणपदघटितस्तत्पुरुषो द्विगुरित्युच्यते । द्विगुविषयपरिहा-

रेण समानाधिकरणपदघटिततत्पुरुषः कर्मधारय इत्युच्यते। तद्भिन्नो व्यधिकरणपदघटितः तत्पुरुष इत्युच्यते। यथा राजपुरुष इत्यादिः (वाच०)। उत्तरपदार्थप्रधानस्तत्पुरुषः इति केचिदाहुः। तन्न। अर्धपिप्पली इत्यादितत्पुरुषे अव्याप्तेः। सूपप्रति इत्याद्यव्ययीभावेतिव्याप्तेश्च (वाच०)। यथोक्तं वाक्यपदीये समासस्तु चतुर्धेति प्रायोवादस्तथापरः। योयं पूर्वपदार्थादिप्राधान्यविषयः स च॥ इति। स च तत्पुरुषो द्वितीयादिभेदेन षड्विधः। द्वितीयादिसुबर्थस्य कर्मत्वकर्तृत्वादेर्बोधभेदादेतस्य तत्पुरुषस्य द्वितीयातृतीयादितत्पुरुषत्वेन षड्भेदाः। तथा हि ग्रामगत इत्यत्र द्वितीयातत्पुरुषः। चैत्रनीत इत्यत्र तृतीयातत्पुरुषः। ब्राह्मणदत्त इत्यत्र चतुर्थीतत्पुरुषः। वृक्षपतित इत्यत्र पञ्चमीतत्पुरुषः। चैत्रधनम् मैत्रगतिरित्यत्र षष्ठीतत्पुरुषः। गृहपक्क इत्यत्र सप्तमीतत्पुरुषः इति। अत्रेदं बोध्यम्। यदेतेषु धात्वर्थान्वय्येव द्वितीयादेरर्थः प्रायो घटकः। पीठं परितः पुण्येन सुखम् शमाय विद्या दण्डाद्भटः गवां कृष्णा संपन्नक्षीरा तिलेषु तैलम् इत्यादिविग्रहे तत्पुरुषस्यासाधुत्वात् (श० प्र० श्लो० ३९ पृ० ४८)। वर्षसुखी लोष्टकणः कुण्डलहिरण्यम् घटान्यः कुबेरबलिः कर्मकुशलः इत्यादौ तु तत्तद्विशेषविधेर्द्वितीयादितत्पुरुषः इति (श० प्र० ४९)। अत्र मतभेदाः। राजपुरुष इत्यादौ राजपदस्य राजसंबन्धिनि लक्षणा। तेन पुरुषपदार्थस्याभेदेनान्वयः इति नैयायिका आहुः। अन्ये तु लुप्तषष्ठ्येवान्वयबोधं जनयति। षष्ठीलोपमजानतस्तु पुरुषस्य तत्रान्वयप्रत्ययः शक्तिभ्रमात् राजपदलक्षणया वा इति स्वीचक्रुः। पूर्वकल्पे राजपदस्य राजसंबन्धिनि निरूढलक्षणा। एतन्मते तु षष्ठीलोपस्मरणासंभवस्थले राजपदे स्वारसिकी लक्षणा इति भेदः (त० प्र० ख० ४ पृ० ४३)। वैयाकरणास्तु समासस्थशब्दसमुदाये विशिष्टार्थे शक्तिरेवेत्याहुः (न्या० म० ४ पृ० ११)।

**तथा**—१ स प्रकारः। यथा कथमुक्त्वा तथा सत्यं सुप्तामुत्सृज्य मां गतः (भा० व० ११) यथाकामो भवति तथाक्रतुर्भवति (शत० ब्रा० १४।७।२।७) इत्यादौ। २ साम्यम्। यथा ॐ तथा प्राणाः ॐ

( ब्र० सू० २।४।१ ) ॐ तथान्यप्रतिषेधात् ॐ ( ब्रह्म० सू० ३।२।३७ ) इत्यादौ । यथा वा यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् । तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥ ( मनुः ६।९० ) इत्यादौ । ३ समुच्चयः । विघसो भुक्तशेषं तु यज्ञशेषं तथामृतम् ( मनुः ३।२८५ ) ज्ञाननिष्ठा द्विजाः केचित्तपोनिष्ठास्तथा परे ( मनुः ३।१३४ ) इत्यादौ । ४ अभ्युपगमः । ५ पूर्वप्रतिवचनम् । ६ निश्चयः । ७ सत्यम् ( वाच० ) ।

**तथा च**—१ उक्तस्य दृढीकरणार्थः । यथा निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोनृतमिति स्थितिः । तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि ॥ ( मनुः ९।१८ ) इत्यादौ । २ एवं सति इत्येतदर्थः ( मध्व० भा० ) । यथा ॐ तथा चैकवाक्योपबन्धात् ॐ ( ब्र० सू० ३।४।२४ ) इत्यादौ । एवं सिद्धे सतीत्यर्थः ( तत्त्वप्रकाशिका ३।४।२४ ) ।

**तथापि**— यद्यपीत्यनेनाक्षिप्तार्थस्य समाधानार्थः । यथा यद्यपि का नो हानिः परस्य द्राक्षां रासभश्चरति । असमञ्जसमिति मत्वा तथापि तरलायते चेतः ॥ ( उद्भटः ) इत्यादौ ।

**तथाहि**—१ निदर्शनम् । २ प्रसिद्ध्यर्थः ( शब्दार्थचि० ) । ३ उक्तार्थदृढीकरणम् । यथा ॐ छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॐ ( ब्र० सू० १।१।२५ ) इत्यादौ ।

**तथैव**—तद्वदेवेत्यर्थः । तत्समुच्चयावधारणम् ( शब्दार्थचि० ) । यथा अस्ति पुत्रो वशे यस्य भार्या भर्तुस्तथैव च ( चाणक्यः ) इत्यादौ ।

**तदन्यबाधितार्थप्रसङ्गः**—( तर्कः ) आत्माश्रय अन्योन्याश्रय चक्रक अनवस्था इत्युक्तचतुष्कान्यः प्रमाणबाधितार्थस्य प्रसङ्गः । स द्विविधः व्याप्तिग्राहकः विषयपरिशोधकश्च । विषयस्य व्यभिचारशङ्कानिवृत्तिद्वारा निश्चायकत्वेन परिशोधकत्वं बोध्यम् । तत्राद्यो यथा धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यात् इति । द्वितीयस्तु पर्वतो यदि निर्वह्निः स्यात् निर्धूमः स्यात् इत्यादिः (जग०) ( गौ० वृ० १।१।४०) ।

**तदा**—१ तत्कालः । यथा तदा विधिः कुण्डलनां विधोरपि ( नैष० ) इत्यादौ । २ यद्यर्थेनाक्षिप्तस्य विषयस्य खण्डनकरणम् । यथा धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यात् इत्यादौ ।

**तदादयः**—( सर्वनामशब्दाः ) वक्तृबुद्धिविशेषविषयत्वावच्छेदकत्वोपलक्षितधर्मावच्छिन्नस्तदादीनामर्थः ( वै० सा० द० ) । तदादयश्च तद् त्यद् यद् एतद् इदम् अदस् इत्यादयः सर्वनामसंज्ञकाः ।

**तदीयत्वम्**—१ संबन्धान्तरं विनापि तत्संबद्धस्वभावत्वम् ( चि० १ ) । यथा देवदत्तस्वभावस्य आध्यात्मिकादिधर्मस्य देवदत्तीयत्वम् । २ तत्स्वामिकत्वम् । यथा तदीयमातङ्गघटाविघट्टितैः ( माघ० स० १ श्लो० ६४) इत्यादौ मातङ्गानां तदीयत्वम् । अत्र तदीयत्वं नाम रावणस्वामिकत्वम् । तत्संबन्धित्वमिति सार्वत्रिकोर्थः ।

**तद्गुणसंविज्ञानः**—( बहुव्रीहिसमासः ) [ क ] यो बहुव्रीहिः स्वीयविग्रहवाक्यस्य विशेष्यविधया प्रत्याय्यो योर्थस्तद्विशेष्यकबोधकृद्भवति स बहुव्रीहिस्तद्गुणसंविज्ञानः इति नवीनाः प्राहुः । यथा घटस्वरूपः पदार्थः कुटादिर्गणः इत्यादौ । नवीननैयायिकमते व्युत्पत्तिः तस्य स्वार्थगुणीभूतस्य सम्यक् विशेष्यविधया विज्ञानं यस्मात् इति ( श० प्र० श्लो० ४४ पृ० ५९–६० ) । अथवा तस्य समस्यमानपदार्थस्य गुणीभूतस्यापि सम्यक् विशेष्यविधया ज्ञानं यस्मात् इति ( त० प्र० ख० ४ पृ० ४९ ) । घटस्वरूपः पदार्थ इत्यत्र घटः स्वरूपं यस्य इति विग्रहस्थले स्वस्वरूपाभिन्नघटसंबन्धित्वेन घटाभिन्नस्वस्वरूपसंबन्धित्वेन वा विग्रहविशेष्यं कलशमेव विशेष्यविधया अनेन बहुव्रीहिणा बोध्यते इति । तथा कुटादिर्गण इत्यत्र कुट आदिर्यस्य इति व्युत्पत्त्या कुटाभिन्नस्य स्वधर्मिकव्यवस्थाधर्मिणः संबन्धित्वेन धात्वन्तरमिव कुटमपि बोधयंस्तद्गुणसंविज्ञान एव बहुव्रीहिः ( श० प्र० श्लो० ४४ पृ० ५९ ) । [ ख ] यत्र विशेषणस्यापि क्रियायां विशेष्यविधयान्वयः सः । यथा भूवादयो धातवः चैत्रादीन्भोजय लम्बकर्णमानय इत्यादौ । अत्र क्रियावाचित्वेन निमन्त्रितत्वेन लम्बकर्णावयविनोर्यः संबन्धस्तदवच्छिन्नत्वेन च अन्वय-

बोधः । लक्षकसंबन्धस्यैव लक्ष्यतावच्छेदकत्वात् तेन रूपेणैव बोधात् । विशेषणस्यापि भूकादेः क्रियान्वयादजहत्स्वार्थात्र लक्षणा ( त० प्र० ख० ४ पृ० ४९ ) । [ ग ] यो बहुव्रीहिः स्वार्थस्यान्वयिनि स्वार्थघटकस्याप्यर्थस्यान्वयबोधने समर्थः स तद्गुणसंविज्ञानः इति प्राचीना आहुः । यथा लम्बकर्णमानय हारग्रीवं पश्येत्यादौ । अत्र हि बहुव्रीहिर्लम्बकर्णसंबन्धिनः स्वग्रीवावृत्तिहारसंबन्धिनश्च स्वार्थस्यान्वयिनि कर्मत्वादौ स्वार्थघटकीभूतस्य तादृशकर्णहारादेरपि व्युत्पत्तिवैचित्र्येण अन्वयबोधने समर्थः इति ( श० प्र० श्लो० ४५ पृ० ५९ ) । [ घ ] परे तु यत्र विशेषणतया स्वार्थस्य विधेयेन्वयः स तद्गुणसंविज्ञानबहुव्रीहिः इत्याहुः । यथा लम्बकर्णमानयेत्यादौ ( त० प्र० ख० ४ पृ० ४९ ) । एतत्कल्पे व्युत्पत्तिः तत्र बहुव्रीहौ गुणस्य गुणीभूतस्य विशेषणस्य संविज्ञानम् विशेष्यपारतन्त्र्येण बोधनम् यत्र इति वदन्ति । अत्र परेषां मते लम्बकर्णादेः विशेष्यान्वयिनान्वयात् विशेषणतया विधेयान्वयः । विशेषणत्वं च विशेष्यान्वयिनान्वयित्वमेव । नवीनमतानुरोधेन लम्बकर्णस्यापि विशेष्यत्वेनैवान्वयेनुभवबाधः । तस्मात् अत्रापि जहत्स्वार्थैव लक्षणा ( त० प्र० ख० ४ पृ० ४९ ) । भवति च गुणीभूतस्य कर्णादेरप्यानयने धर्मिपारतन्त्र्येण धर्मिद्वारा अन्वयबोधः इति ।

**तद्धितः**—( प्रत्ययः ) [ क ] विभक्तिधात्वंशकृद्भ्योन्यः प्रत्ययः । यथा मारीच इत्यादौ अण् दाक्षिरित्यादौ इञ् प्रत्ययस्तद्धितः । अत्र नामप्रकृतिकप्रत्ययत्वं न तद्धितस्य लक्षणम् । विभक्तौ क्यजादौ चातिव्याप्तेः । पचतितरामित्यादौ तरबादिष्वव्याप्तेश्च ( श० प्र० श्लो० १०८ पृ० १७२ ) । अतो विभक्तिधात्वंशेत्याद्येव लक्षणं युक्तम् इति । अत्रेदमवधातव्यम् । वृक्षक इत्यादौ ह्रस्वाद्यर्थकः कादिरपि तद्धित एव इति । अन्ये त्वेवमाहुः । वृक्षक इत्यादौ कादिस्तु न तद्धितः । अतः तदन्यत्वेनापि लक्षणे प्रत्ययो विशेषणीयः इति । अत्र षष्ठ्यन्तान्नाम्नः साक्षात्परंपरासाधारणापत्यसामान्ये बोध्ये अण् इत्युत्सर्गः । तेन मरीचेरपत्यं मारीच इति रूपं सिद्ध्यति ( श० प्र० श्लो० १०८—१११ ) । [ ख ] तद्धिताधिकारविहितः प्रत्ययविशेष इति शाब्दिका वदन्ति । अत्रेदं बोध्यम् ।

तद्धिताः ( पा० सू० ४।१।७६ ) इत्यधिकृत्य यूनस्तिः ( पा० सू० ४।१।७७ ) इत्यारभ्यापञ्चमाध्यायसमाप्तेर्यावन्तः प्रत्यया विहितास्ते तद्धितसंज्ञका भवन्ति इति । तत्र सामान्यतस्तद्धितो द्विविधः। प्रकृत्यर्थभिन्नार्थकः स्वार्थिकश्चेति । तद्धितप्रत्ययश्च अपत्यादितत्तदर्थभेदबोधनेन अण् इञ् ण्य इत्याद्यनेकविधः । तत्रोक्तम् तस्यापत्यं तद्विशेषस्तद्क्षेण युतेन्दुमान् । कालस्तथा तेन रक्तं तस्य व्यूहोथ वेत्ति तत् ॥ अधीते वा देवतास्य सैवमादीन् यथायथम् । बोधयद्विविधानर्थांस्तद्धितं स्यादनेकधा ॥ इति । तत्र केचित्तद्धितप्रत्ययास्तत्तदर्थेषु सोदाहरणाः प्रदर्श्यन्ते । यथा अपत्यार्थे अण् मरीचेरपत्यं मारीचः । वेत्तीत्यर्थे निमित्तं वेत्ति नैमित्तः । अधीते इत्यर्थे छान्दसः वैयाकरणः त्रैविद्यश्च । संबन्ध्यर्थे वृक्षस्य संबन्धि वार्क्षम् । जातार्थे अमावास्यायां जात आमावास्यो बालकः । गोशालायां जातं गोशालम् । अनुराधायां जातः अनुराधः । अत्राणो लुक् । अपत्यार्थे इण्[1] दक्षस्यापत्यं दाक्षिः वैयासकिः । ण्यः गर्गस्यापत्यं गार्ग्यः जामदग्न्यः । अपत्यसामान्ये आयनण् तदुत्तरं ण्यश्च कौञ्जायन्यः ब्राध्नायन्यः । अपत्यार्थे एयण् वैनतेयः आत्रेयः जाह्नवेयः द्रौपदेयः । एरण् दासस्यापत्यं दासेरः दासेयोपि । काणाया अपत्यं काणेरः काणेयोपि । चटकायाः पुमपत्यं चाटकैरः । आयनिण् तिकस्यापत्यं तैकायनिः । तस्य ( सर्वनाम्नः ) अपत्यं तादायनिः तादोपि । अपत्यार्थे ईयः स्वसुरपत्यं स्वस्त्रीयः । समूहार्थे अश्वीयम् । भवार्थे कवर्गीयः अङ्गुलीयः मित्रवर्गीयः । अपत्यार्थे व्यः भ्रातुरपत्यं भ्रातृव्यः । अपत्यार्थे यः श्वशुरस्यापत्यं श्वशुर्यः । समूहार्थे धूम्या वन्या । अपत्यार्थे एयकण् कुलस्यापत्यं कौलेयकः । ईनण् कुलीनः । डुरण् षाण्मातुरः । तद्रागयुक्तमित्यर्थे इकण् लाक्षया रक्तं लाक्षिकम् । समूहार्थे कैदारिकम् । तद्वेद तदधीते वा इत्यर्थे नैयायिकः लौकायतिकः । भवार्थे आन्तर्दैहिकम् समानदैशिकम् । संज्ञार्थे शारदिका मुद्गभेदाः । रक्तमित्यर्थे अः नीलेन रक्तो नीलः पटः । कः पीतेन रक्तः पीतकः पटः । समूहार्थे अकण्

१ इण् आयनण् इत्यादयः केचित्प्रत्ययाः पाणिनिविहितप्रत्ययापेक्षया भिन्ना एव जगदीशेन कल्पिता इति बोध्यम् ।

गार्गकम् कैदारकम् । कण् धैनुकम् । समूहार्थे यण् केशानां समूहः कैश्यम् गाणिक्यम् ब्राह्मण्यम् । भवार्थे चतुर्मासेषु भवं चातुर्मास्यं व्रतम् । समूहार्थे इनिः पद्मिनी । कठ्यः रथकठ्या । तल् बन्धुता जनता । यत् पृष्ठ्यम् । वेत्तीत्यर्थे ठिकः शतपथिकः । कः शिक्षकः मीमांसकः । जातमित्यर्थे पूर्वाह्णकम् । तस्येदमित्यर्थे क ईयश्च स्वकीयम् । कस्यानित्यत्वेन स्वीयं वा । ईनण् यौष्माकीणम् । हस्तीत्याद्यर्थे कण् आरण्यकः करी । तस्यायमित्यर्थे तु णः । अरण्यस्यायमारण्यः पशुः । तत्र भव इत्यर्थे मः आदिमः । डिमः अग्रिमः पश्चिमः । त्यः श्वस्त्यम् । तनट् श्वस्तनम् सायंतनम् । एण्यः प्रावृषि भवं प्रावृषेण्यं तृणम् । त्नः परुत्नम् परारित्नम् । नः पुराणम् । ईयण् पर्वते भवः पार्वतीयः । यत् दिशि भवं दिश्यम् दन्त्यम् मित्रवर्ग्यः । एयण् कौक्षेयम् । ईनः मित्रवर्गीणः । नण् स्त्रियां भवः स्त्रैणः । स्नण् पुंसि भवः पौंस्नः । जातमित्यर्थे इकः प्रावृषि जातं प्रावृषिकं पत्रम् । अकः आमावास्यको बालकः इत्यादि इति संक्षेपः ।

**तद्धितान्तम्**—१ (योगरूढं नाम) यथा वासुदेवः इत्यादि (श० प्र० श्लो० २८ पृ० ३७) । २ (यौगिकं नाम) यादृशं नाम यच्च तद्धितम् यादृशानुपूर्व्यवच्छिन्नं सत् यादृशार्थस्यान्वयबोधे समर्थम् तादृशानुपूर्व्यवच्छिन्नं तद् द्वयमपि तादृशार्थे तद्धितान्तं नाम । यथा बहुगुडः द्राक्षा दाक्षिरित्यादि (श० प्र० श्लो० ५१ पृ० ६७) ।

**तद्धितार्थः**—(द्विगुः समासः) यो द्विगुः स्वोत्तरतद्धितार्थान्वितस्वार्थकः सः इति परिशिष्टकृत आहुः । यथा द्विमुद्रो वृषः द्विवर्षा गौः द्विदलं पवित्रम् द्विगुञ्जं स्वर्णम् त्रिकाण्डः पुरुषः पञ्चकपालश्चरुः इत्यादौ । तथा हि द्विमुद्रो वृष इत्यादौ द्वाभ्यां मुद्राभ्यां क्रीतस्य द्विवर्षा गौरित्यादौ द्वाभ्यां वर्षाभ्यामभिन्नवयस्कस्य द्विदलं पवित्रमित्यादौ द्वाभ्यां दलाभ्यां निर्मितस्य द्विगुञ्जं स्वर्णमित्यादौ द्वाभ्यां गुञ्जाभ्यां तुलितस्य त्रिकाण्डः पुरुष इत्यादौ त्रिभिः काण्डैः परिमितस्य पञ्चकपालश्चरुरित्यादौ पञ्चभिः कपालैः संस्कृतस्य बोधने लुप्तस्यैव ठगादितद्धितस्य क्रीताद्यभिधायकत्वात् लक्षण-

समन्वयः (श० प्र० श्लो० ३५ पृ० ४६)। यथा वा पौर्वशालः षाण्मातुरः इत्यादौ। अत्र पूर्वस्यां शालायां भवः पौर्वशालः षण्णां मातॄणामपत्यम् षाण्मातुरः इति विग्रहो द्रष्टव्यः (सि० कौ०) (मनोरमायाम्)।

**तद्व्यक्तित्वम्**—१ तत्तत्तादात्म्यविशिष्टो धर्मः। यथा घटनिष्ठं तद्व्यक्तित्वं च घटतादात्म्यविशिष्टघटत्वादिकमेव। २ अखण्डोपाधिविशेष इति केचिदाहुः। तादात्म्यस्य घटादिस्वरूपतामते तु घटादिनिष्ठं तद्व्यक्तित्वमखण्डमेव इति (ग० शक्ति० टी० पृ० ११७)।

**तनुत्वम्**—प्रतिपक्षभावनया शिथिलीकरणम् (सर्व० सं० पृ० ३५९ पात०)।

**तन्त्रम्**—१ इतरेतराभिसंबद्धस्यार्थसमूहस्योपदेशः शास्त्रम् (वात्स्या० १।१।२६)। यथा तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः (गौ० १।१।२६) इत्यादौ तन्त्रम्। २ शास्त्रविशेषः। यथा इदानीं संप्रवक्ष्यामि तन्त्रमुत्तरमुत्तमम् (सुश्रुत०) इत्यादौ। यथा वा आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम्। सप्तत्यां किल येर्थास्तेर्थाः कृत्स्नस्य षष्टितन्त्रस्य (सांख्यका० ७२) इत्यादौ। शिवाद्युक्तानि सिद्धेश्वरादीनि महातन्त्राणि तथान्यान्युपतन्त्राणि सैद्धाद्युक्तानि बहूनि सन्ति। विस्तरभयात्तानि न प्रदर्शितानि। ३ प्रयोजकम् (दि० ४ पृ० १७४)। यथा चैत्रेण पच्यते तण्डुल इत्यादौ चैत्रपदोत्तरतृतीयायां चैत्रगतसंख्यानभिधानं तन्त्रम् (मु० ४ पृ० १७४)। यथा वा नीलो घट इत्यादावभेदान्वयबोधं प्रति समानविभक्तिकत्वं तन्त्रम् (ग० व्यु० का० १)। ४ सकृदुच्चारितस्यैकस्य शब्दस्य शक्त्या अनेकार्थप्रतिपादकत्वं तन्त्रम् इति शाब्दिका वदन्ति। ५ विवक्षितार्थज्ञापकं तन्त्रम् इति वेदान्तिनः। तदुक्तम् तन्त्रं साधनमुद्दिष्टं तन्त्रं ज्ञापकमेव च इति (मध्वभाष्यटीकाटिप्पणे एकादशतात्पर्योक्तिः)। ६ नीत्यवयवः। यथा तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम् (पञ्चत० पृ० १) इत्यादौ इति नीतिशास्त्रज्ञाः। तानि च पञ्च तन्त्राणि मित्रभेदमित्रप्राप्तिकाकोलूकीय-

लब्धप्रणाशापरीक्षितकारित्वानि इति । ७ धर्मशास्त्रे तु कर्मणां युगपद्भावस्तन्त्रम् ( कात्या० श्रौत० १।७१ ) । यथा मीमांसकमते उभयार्थैकप्रयोगः तन्त्रम् । यत्र प्रधानकर्मणां युगपद्भावः ( सह प्रयोगः ) तत्रारादुपकारकाणामङ्गानां तन्त्रम् ( सकृदनुष्ठानम् ) भवति न प्रतिप्रधानं पृथक् पृथक् । यद्धि सकृत्कृतं बहूनामुपकरोति तत् तन्त्रमित्युच्यते । यथा बहूनां मध्ये कृतः प्रदीपः इति ( कर्कः ) ( वाच० ) । तन्यते विस्तार्यते बहूनामुपकारो येन सकृत्प्रवर्तितेन तदिदं तन्त्रम् ( जै० न्या० अ० ११ पा० १ अधि० १ ) । उभयोद्देशेन सकृदनुष्ठानं तन्त्रम् ( जै० न्या० १२ पा० १ अधि० १ ) । यत्सकृत्कृतं बहूनुपकरोति तत्तन्त्रम् ( जै० सू० वृ० अ० ११ पा० १ सू० १ ) । कर्मशास्त्रे अनेकोद्देशेन कृतप्रयोगः । यथा द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा । मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ ( याज्ञ० अ० १ श्लो० २२७ ) इत्यादौ पितृश्राद्धे मातामहश्राद्धे च वैश्वदेवं तन्त्रेण ( सकृदनुष्ठानेन ) कर्तव्यम् ( मिताक्ष० अ० १ श्लो० २२७ ) इत्याहुः । ८ प्रबन्धः । ९ सिद्धान्तः । १० प्रधानम् । ११ परिच्छेदः । १२ वेदशाखाविशेषः । १३ स्वराष्ट्रचिन्ता । १४ औषधम् । यथा तन्त्रावापविदा योगैः ( माघः २।८८ ) इत्यादौ । १५ परच्छन्दानुगमनम् इत्यादि ( वाच० ) ।

**तन्त्री**—ज्योतिष्टोमे सवनीयपशुः (जै० न्या० अ० ११ पा०३ अधि० १६)।

**तन्मात्रम्**—शब्दस्पर्शरूपरसगन्धाः पञ्च तन्मात्राणि । सांख्यास्तु सूक्ष्मपञ्चभूतरूपमाकाशादि इत्याहुः ( वाच० ) ।

**तपः**—विधिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः । शरीरशोषणं प्राहुस्तापसास्तप उत्तमम् ॥ ( सर्व० सं० पृ० ३६७ पात० ) ।

**तमः**—१ (अभावः) [क] तेजसः अभावः (मु० १) (गौ० वृ० ५।२।२०) ( त० दी० पृ० ३ ) । प्रौढप्रकाशकतेजःसामान्याभाव इत्यर्थः । तेन तमस्यल्पपि देशे तेजःपरमाण्वादिसत्त्वेन तेजःसामान्याभावासत्त्वेपि न क्षतिः ( नील १ पृ० ४ ) । अत्र विप्रतिपत्तिः अन्धकारत्वं भाववृत्ति

इति तौताततिाः । नेति वैशेषिकादयः इति ( न्या० दी० पृ० ४ ) । [ ख ] द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः ( वै० ५।२।१९ ) । उद्भूतरूपवद्यावत्तेजःसंसर्गाभाव इत्यर्थः ( वै० उ० ५।२।२० ) । [ ग ] स्वपरप्रकाशकतेजःसामान्याभावः । यथा अदस्त्वया नुन्नमनुत्तमं तमः। आसादितस्य तमसा नियतेर्नियोगात् ( माघ० स० ४ श्लो० ३४ ) इत्यादौ । [ घ ] नीलरूपारोपविशिष्टतेजःसंसर्गाभाव इति केचित् ( न्या० दी० पृ० ८ ) । [ ङ ] भाभावः[1] । द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यात् ( न्या० क० पृ० १० ) । अत्रेदं बोध्यम् । यत्रैव देशे तेजोभावस्तत्रैव देशे तम इत्यभिलप्यते । एवं च सति गच्छता द्रव्येण तेजस आवरणात् आवरकस्य द्रव्यस्य च गमनात् सुतरामेव तमसोपि गतिभ्रम उपपद्यत इति ( त० व० ) । तेजसो द्रव्यान्तरेणावरणाच्च ( वै० ५।२।२० ) । तदर्थश्च गच्छता द्रव्यान्तरेणावृते तेजसि पूर्वदेशानुपलम्भादग्रिमदेशे चोपलम्भात्तेजोभावस्य गच्छद्द्रव्यसाधर्म्याद्गतिभ्रमः । न तु वास्तवी तत्र गतिः । किं च नीलं नभः इति प्रतीतिवत् तमसि नीलरूपवत्ताप्रतीतिरपि भ्रम एव इति । अत्रायं तर्कः तमो यदि गतिमत्स्यात् तेजोभावविषयकचाक्षुषसाक्षात्कारविषयो न स्यात् इति । यद्वा तमो यदि गतिमत्स्यात् तेजोभावाविषयकचाक्षुषसाक्षात्काराविषयो न स्यात् इति । अथवा तमो यदि तेजोभिन्नत्वे सति गतिमत्स्यात् तेजोभावविषयकसाक्षात्कारविषयगतिमन्न स्यात् इति ( न्या० दी० पृ० ८ ) । रूपवद्द्रव्यान्तरं इति भट्टा वेदान्तिनः सांख्याः कन्दलीकाराश्चाहुः ( वै० वि० १।१।५ ) । अत्रेदमवधेयम् । आलोकस्यान्यत्र चाक्षुषप्रत्यक्षे सहकारित्वेपि तमःप्रत्यक्षे न तत्सहकारस्यावश्यकता वस्तुस्वाभाव्यात् इति भट्टमीमांसकानामाशयः इति । तमसो भावत्वमङ्गीकुर्वाणानां मते तमसः पृथिव्यामन्तर्भावः । अथवा दशमं द्रव्यमतिरिक्तमेव तदिति बोध्यम् । आरोपितं नीलरूपमिति श्रीधराचार्याः । रूपदर्शनाभावस्तम इति प्राभाकराः । आलोकज्ञानाभाव इति प्राभाकरैकदेशिनः ( सर्व० सं० पृ० २२९ औलु० ) ( वै० वि० १।१।५ ) । अज्ञानं तमः

---

१ अभावः इति पदच्छेदः ।

( तमोगुणः ) इति केचिद्वेदान्तिनः । अत्रोच्यते सत्त्वं ज्ञानं तमोज्ञानं रागद्वेषौ रजः स्मृतम् इति ( मनुः १२।२६ )। तमः अज्ञानमिति पदच्छेदः । त्रिगुणात्मकप्रधानस्य तमआख्यो गुणविशेषः इति सांख्याः । या च मोहात्मकता तत्तमः ( सर्व० सं० पृ० ३२६ सां० ) । आलोकाभावस्तम इति नैयायिकादयः ( सर्व० सं० पृ० २२९ औलू० ) । २ राहुरिति ज्योतिर्विदः । ३ पादाग्रम् । ४ तमालवृक्ष इति काव्यज्ञाः ।

तर्कः—१ आन्वीक्षिकी विद्या न्यायशास्त्रम् ( गौ० वृ० १।१।१ ) । यथा प्रायस्तर्कमधीते ( न्यायमधीते सर्वः ) तनुते तर्कान्निबन्धमप्यत्र ( दीधि० २ श्लो० ४ पृ० १ ) गदाधरविनिर्मिता विषमदुर्गतर्काटवी ( ग० २ हेत्वा० बाध० पृ० ३४ ) यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः ( नैष० ) इत्यादौ । अत्र पुराणम् मीमांसा न्यायतर्कश्च उपाङ्गः परिकीर्तितः इति । त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् । आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः ॥ इति ( मनु० अ० ७ श्लो० ४३ ) । आन्विक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् इति ( भा० अ० अ० ३७ ) । आन्वीक्षिकीत्रयीवार्तादण्डनीतिरूपाश्चतस्रो विद्या विद्याप्रस्थाने कथिताः ( गौ० वृ० १।१।१ ) । २ कणादमुनिप्रणीतं दशाध्यायात्मकं सूत्रोपनिबद्धं वैशेषिकदर्शनम् । यथा अथातो धर्मं व्याख्यास्यामः ( वै० सू० १।१।१ ) इत्यारभ्य तद्वचनादाम्नायस्य प्रामाण्यमिति ( वै० सू० १०।२।९ ) इत्येतत्पर्यन्तं तर्कशास्त्रम् । द्रव्यादिपदार्थतत्त्वज्ञानं मननं चास्य शास्त्रस्य प्रयोजनमित्यवधेयम् ( त० व० १।२२ ) । अत्रोक्तम् तर्कग्रन्थार्थरहितो नैव गृह्णात्यपण्डितः इति ( सुश्रुत० )। ३ अनुमानम् ( युक्तिः ) ( तत्त्वप्रकाशिका ) ( दि० ४ ) ( गौ० वृ० १।१ ) । यथा ॐ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ ( ब्र० सू० २।१।१२ ) इत्यादौ । यथा वा अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । नाप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः ॥ ( वेदान्त० प्र० ) इत्यादौ । अत्रोक्तं मनुना

त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः । त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशावरा ॥ इति ( मनुः अ० १२ श्लो० १११ ) । ४ आगमाविरोधिन्यायः । यथा नैषा तर्केण मतिरापनेया ( कठोप० ३।९ ) इत्यादौ । तस्य प्रयोजनं चोक्तं मनुना आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ इति ( मनु० १२।१०६ ) । ५ मीमांसा । ६ आगमार्थपरीक्षणम् । ७ [ क ] ऊहः । अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ( गौ० सू० १।१।४० ) । अयमर्थः । तर्क इति लक्ष्यनिर्देशः । कारणोपपत्तित ऊह इति लक्षणम् । अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति प्रयोजनकथनम् । कारणं व्याप्यम् । तस्योपपत्तिरारोपः । तस्मात् ऊह आरोपः अर्थाद्व्यापकस्य इति । परे तु ऊह इत्येव लक्षणम् । तथा च कारणस्य व्याप्तिज्ञानादेरुपपादनद्वारेत्यर्थ इत्याहुः । ऊहत्वं च मानसत्वव्याप्यो जातिविशेषः तर्कयामि इत्यनुभवसिद्धः ( गौ० वृ० १।१।४० ) । स च तर्कः व्यभिचारशङ्कानिवृत्तिद्वारेणोपयोगी ( न्या०ली०गु० पृ० ३६ ) प्रमाणानामनुग्राहकश्च । अनुग्रहस्तु पक्षे विपक्षजिज्ञासाविच्छेदस्तदनुग्रहः ( ता० र० श्लो० ७५ ) । किं च स तर्कः अङ्गपञ्चकसंपन्नस्तत्त्वज्ञानाय कल्पते । अङ्गपञ्चकं तु व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये । अनिष्टाननुकूलत्वमिति तर्काङ्गपञ्चकम् ॥ ( ता० र० श्लो० ७२ ) । तर्कभाषायां प्रमाणानुग्राहकत्वमित्थमुपपादितम् । स चायं तर्कः प्रमाणानामनुग्राहकः । तथा हि पर्वतोयं साग्निः उतानग्निः इति संदेहानन्तरं यदि कश्चिन्मन्यते अनग्निः इति तदा तं प्रति यद्ययमनग्निरभविष्यत्तर्हि धूमवान्नाभविष्यत् इत्यवह्निमत्त्वेनाधूमवत्त्वप्रसञ्जनं क्रियते । स चानिष्टप्रसङ्गः तर्क उच्यते । एवं प्रवृत्तः तर्कः अनग्निमत्त्वस्य प्रतिक्षेपात् अनुमानस्य भवत्यनुग्राहकः इति ( त० भा० पृ० ४३ ) । अनिष्टप्रसङ्ग इत्यस्य अनिष्टस्य वह्न्यभावव्यापकधूमाभावादेः प्रसञ्जनम् इत्यर्थः । अत्र ह्रदे निर्धूमत्वापादनव्यावृत्त्यर्थमनिष्टेति ( प० च० ) । किं च तर्को धूमाग्न्योर्व्याप्तिग्रहे उत्पत्स्यमाने कार्यकारणभावभङ्गप्रसङ्गलक्षणो व्यभिचारशङ्कानिवर्तकश्च ( त०

दी० २ पृ० २१ ) । तर्के आपाद्यव्यतिरेकनिश्चयः आपाद्यापादकयोर्व्याप्तिनिश्चयश्च कारणम् इति ( नील० गु० पृ० ३८ ) । तर्के व्याप्यस्य व्यापकस्य च बाधनिश्चयः कारणम् इति ( न्या० बो० गु० पृ० २१ ) । अत्रेदं बोध्यम् । तर्को न प्रमाणसंगृहीतः इति न प्रमाणान्तरम् । अपि तु प्रमाणानामनुग्राहकस्तत्त्वज्ञानाय कल्प्यते । तस्योदाहरणम् किमिदं जन्म कृतकेन हेतुना निर्वर्त्यते आहोस्विदकृतकेन अथाकस्मिकम् इति । एवमविज्ञातेऽर्थे कारणोपपत्त्योहः प्रवर्तते । यदि कृतकेन हेतुना निर्वर्त्यते हेतूच्छेदादुपपन्नोयं जन्मोच्छेदः । अथाकृतकेन हेतुना ततो हेतूच्छेदस्याशक्यत्वादनुपपन्नोयं जन्मोच्छेदः । अथाकस्मिकम् अतोकस्मान्निर्वर्त्यमानं न पुनर्निवर्त्स्यतीति निवृत्तिकारणं नोपपद्यते । तेन जन्मानुच्छेद इति । एतस्मिंस्तर्कविषये कर्मनिमित्तं जन्म इत्यत्र प्रमाणानि प्रवर्तमानानि तर्केणानुगृह्यन्ते । तत्त्वज्ञानविषयस्य विभागात् तत्त्वज्ञानाय कल्प्यते तर्क इति । सोयमित्थंभूतस्तर्कः प्रमाणसहितो वादे साधनायोपालम्भाय वार्थस्य भवति इति ( वात्स्या० १।१।१ ) । तर्कः संशयेन्तर्भवतीति कश्चिदाह ( त० भा० पृ० ४४ ) । यद्यपि तर्को विपर्ययेन्तर्भवति तथापि प्रमाणानुग्राहकत्वाद्भेदेन कीर्तनम् ( त० दी० गु० पृ० ३८ ) । अत्र भाष्यम् । अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते जानीयेममर्थम् इति । अथ जिज्ञासितस्य वस्तुनो व्याहतौ धर्मौ विभागेन विमृशति किंस्विदित्थम् आहोस्विन्नेत्थम् इति । विमृश्यमानयोर्धर्मयोरेकतरं कारणोपपत्त्या अनुजानाति संभवत्यस्मिन् कारणम् प्रमाणम् हेतुः इति । कारणोपपत्त्या स्यात् एवमेतत् नेतरत् इति । तत्र निदर्शनम् । योयं ज्ञाता ज्ञातव्यमर्थं जानीते तं तत्त्वतो जानीय इति जिज्ञासा । स किमुत्पत्तिधर्मकः अथवानुत्पत्तिधर्मकः इति विमर्शः । विमृश्यमाने अविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याभ्यनुज्ञाकारणमुपपद्यते तमनुजानाति । यदायमनुत्पत्तिधर्मकः ततः स्वकृतस्य कर्मणः फलमनुभवति ज्ञाता । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणम् । उत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति स्यातां संसारापवर्गौ । उत्पत्तिधर्मके ज्ञातरि पुनर्न स्याताम् ।

उत्पन्नः खलु देहेन्द्रियवेदनाभिः संबध्यत इति नास्येदं स्वकृतस्य कर्मणः फलम् । उत्पन्नश्च भूत्वा न भवतीति तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतकर्मणः फलोपभोगो नास्ति । तदेवमेकस्यानेकशरीरयोगः शरीरादिवियोगश्चात्यन्तं न स्यादिति । यत्र कारणमनुपपद्यमानं पश्यति तत्रानुजानाति । सोयमेवंलक्षण ऊहस्तर्क इत्युच्यते ( वात्स्या० १।१।४० )। [ ख ] व्यापकाभाववत्त्वेन निर्णीते व्याप्यस्याहार्यारोपाद्यो व्यापकस्याहार्यारोपः सः । यथा निर्वह्नित्वारोपान्निर्धूमत्वारोपः निर्वह्निः स्याच्चेन्निर्धूमः स्यात् इत्यादिः । ह्रदो निर्वह्निः स्याच्चेन्निर्धूमः स्यात् इत्यादिवारणाय व्यापकाभाववत्त्वेन निर्णीत इति । निर्वह्निः स्याच्चेदद्रव्यं स्यात् इत्यादिवारणाय व्याप्यस्येति । तद्व्याप्यारोपाधीनस्तदारोपः इत्यर्थलाभाय व्यापकेति ( गौ० वृ० १।१।४० ) । [ ग ] अनिष्टप्रसङ्गः । स च सिद्धव्याप्तिकयोर्धर्मयोर्व्याप्याङ्गीकारेणानिष्टव्यापकप्रसञ्जनम् ( त० भा० पृ० ४३ ) ( प्र० प्र० ) । यथा पर्वतो वह्निमान् धूमादित्यत्र धूमोस्तु वह्निर्मास्तु इति हेतोरप्रयोजकत्वशङ्कायाम् यद्ययं निर्वह्निः स्यात्तर्हि निर्धूमः स्यात् । न भवति च निर्धूमः । तस्मान्न निर्वह्निः किंतु वह्निमानेवेति ( प्र० प० पृ० २१ )। [ घ ] व्याप्यारोपाद्व्यापकप्रसञ्जनम् ( गौ० वृ० ४।१।३ )। [ ङ ] व्याप्यारोपेण व्यापकारोपः ( त० सं० गु० ) ( सर्व० सं० पृ० २३८ अक्ष० ) । यथा यदि वह्निर्न स्यात् तर्हि धूमोपि न स्यात् इति ( त० सं० गु० ) । अत्र व्याप्यपदं व्याप्यत्वेन ज्ञायमानपरम् । तेन व्याप्यारोपेण तर्के नाव्याप्तिः । आरोपपदं ज्ञानमात्रपरम् । तेनायोगोलके धूमाभावेन वह्न्यभावतर्के नाव्याप्तिः । व्यापकारोपेत्यत्रारोपपदं बाधविषयकायथार्थनिश्चयपरम् । तेन ह्रदो वह्निमान् इत्यनुमितौ नातिव्याप्तिः । बाधनिश्चये अयथार्थत्वनिवेशात् अयोगोलकं धूमाभाववत्स्यात् इति तर्के नातिव्याप्तिः । अयथार्थानुभवस्यैव लक्ष्यत्वात् । इत्थं च व्याप्यत्वेन ज्ञानजन्यत्वे सति बाधविषयकायथार्थनिश्चयत्वं पर्यवसितम् ( वाक्य० गु० पृ० २१ ) । उदाहरणे वह्न्यभावो व्याप्यः धूमाभावस्तु व्यापकः इति ज्ञेयम् ( सि० च० गु० पृ० ३४ )। [ च ] अनिष्टस्य प्रसङ्गः । स चै-

कधर्माभ्युपगमे द्वितीयस्य नियतप्राप्तिरूपः । अत्रानिष्टं च द्विविधम् । प्रामाणिकपरित्यागः इतरपरिग्रहश्चेति ( ता० र० श्लो० ७१ ) । स चायं तर्कः पञ्चविधः । आत्माश्रयः अन्योन्याश्रयः चक्रकम् अनवस्था तदन्यबाधितार्थप्रसङ्गश्च ( प्रमाणबाधितार्थकप्रसङ्गः ) इत्याचार्याः । तत्र ( १ ) स्वापेक्षापादकोनिष्टप्रसङ्ग आत्माश्रयः । अपेक्षा च ज्ञप्तावुत्पत्तौ स्थितौ च ग्राह्या । तत्राद्या यथा एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यं स्यात् एतद्घटज्ञानभिन्नं स्यात् इति । द्वितीया यथा घटोयं यद्येतद्घटजन्यः स्यात् एतद्घटभिन्नः स्यात् इति । तृतीया च अयं घटो यद्येतद्घटवृत्तिः स्यात् तथात्वेनोपलभ्येत इति । ( २ ) स्वापेक्षापेक्षितत्वनिबन्धनोनिष्टप्रसङ्गोन्योन्याश्रयः । यथा अयं घटो यद्येतद्घटज्ञानजन्यज्ञानविषयः स्यात् एतद्घटभिन्नः स्यात् इति । उत्पत्तौ स्थितौ च स्वयमुदाहार्यम् । ( ३ ) स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनोनिष्टप्रसङ्गश्चक्रकम् । पूर्वोक्त एवापादके जन्यपदान्तरमन्तर्भाव्योदाहार्यम् । अपेक्षा त्वत्र साक्षात्परंपरासाधारणी ग्राह्या । ( ४ ) अनवस्था पुनरप्रामाणिकी ग्राह्या । न तु प्रवाहमूलकप्रसङ्गः । यथा घटत्वं यदि यावद्घटहेतुवृत्ति स्यात् घटजन्यवृत्ति न स्यात् इति । वृत्तिकारास्तु अनवस्था च अव्यवस्थितपरंपरारोपाधीनानिष्टप्रसङ्गः । यथा यदि घटत्वम् घटजन्यत्वव्याप्यं स्यात् कपालसमवेतत्वव्याप्यं न स्यात् इत्याहुः ( गौ० वृ० १।१।४० ) । ( ५ ) उक्तचतुष्कान्यः प्रसङ्गः प्रमाणबाधितार्थकप्रसङ्गः । सोपि द्विविधः । व्याप्तिग्राहकः विषयपरिशोधकश्च । तत्राद्यो यथा धूमो यदि वह्निव्यभिचारी स्यात् तदा वह्निजन्यो न स्यात् इति । द्वितीयस्तु पर्वतो यदि निर्वह्निः स्यात् निर्धूमः स्यात् इत्यादिः ( जग० तर्कग्रन्थ० ) ( गौ० वृ० १।१।४० ) । अत्र धूमादेर्व्यभिचारशङ्कानिवृत्तिद्वारा विषयस्य वह्न्यादेः निश्चायकत्वेन एतत्तर्कस्य परिशोधकत्वमित्यवधेयम् । अत्र प्राचीननैयायिकास्तु स च तर्क एकादशविधः व्याघातः आत्माश्रयः इतरेतराश्रयः चक्रकाश्रयः अनवस्था प्रतिबन्धिकल्पना लाघवकल्पना गौरवम् उत्सर्गः अपवादः वैजात्यम् इत्यङ्गीचक्रुः ( सर्व० पृ० २३९ अक्ष० ) । नव्यास्तु

व्याघातादीनामप्रसञ्जनरूपत्वात् न तर्कात्मकत्वम् । किंतु पञ्चविधत्वमेव तर्कस्य इत्याहुः । प्रथमोपस्थितत्वम् उत्सर्गः विनिगमनाविरहः लाघवम् गौरवम् इत्यादिकं तु प्रसञ्जनात्मकत्वान्न तर्कः । किंतु प्रमाणसहकारित्वरूपसाधर्म्यात्तथा ( तर्कत्वेन ) व्यवहारः इति ( गौ० वृ० १।१।४० ) ।

**तर्काभासः**—अङ्गान्यतमवैकल्ये तर्कस्याभासता भवेत् ।

**तर्पणम्**—मन्त्रेण वारिणा मन्त्रे तर्पणं तर्पणं स्मृतम् ( सर्व० सं० पृ० ३७० पातञ्ज० ) ।

**तस्करः**—भोगं केवलतो यस्तु कीर्तयेन्नागमं क्वचित् । भोगच्छलापदेशेन विज्ञेयः स तु तस्करः ॥ ( मिताक्षरा० अ० २ श्लो० २७ ) ।

**ताडनम्**—मन्त्रवर्णान्समालिख्य ताडयेच्चन्दनाम्भसा । प्रत्येकं वायुबीजेन ताडनं तदुदाहृतम् ॥ ( सर्व० सं० पृ० ३६९ पात० ) ।

**तात्पर्यम्**—[ क ] इतरपदस्येतरपदार्थसंसर्गज्ञानपरत्वम् (चि०) । तात्पर्यस्य निश्चय एव शाब्दबोधे शब्दस्य सहकारि कारणम् । तस्य च संशये व्यतिरेकनिश्चये ( सैन्धवपदं लवणपरं न इति निश्चये ) चान्वयाबोधात् तद्भ्रमे चान्वयबोधाच्च ( न्या० म० ४ पृ० २४ ) ( दि० ४ पृ० १८९ ) । अत्रान्यदप्युच्यते । प्रतिपादकेच्छाविषयत्वं तत्परत्वम् । यः शब्दो वक्त्रा यदिच्छया प्रयुक्तः स तत्परः । सा च प्रतिपाद्यधीः प्रवृत्तिनिवृत्तिविषययोः तत्परत्वं नानार्थाच्छ्लिष्टादनेकार्थान्वितैकक्रियापरान्मुख्यलाक्षणिकपदादनावृत्त्या क्रमेणानेकार्थज्ञानम् । न त्वेकदैव । सकृदर्थपरत्वनियमेनैकत्रोच्चारणेनेकपरत्वाभावादिति सकलतात्रिकैकवाक्यतया वदन्ति (चि० ) । [ख] तदर्थप्रतीतीच्छयोच्चरितत्वम् ( तर्का० ४ ) ( त० दी० ४ पृ० ३१ ) । [ ग ] वाक्यार्थप्रतीतिजनकतयाभिप्रेतत्वम् ( श० प्र० ) । [ घ ] इदमेतस्मिन्नर्थेस्यान्वयं प्रत्याययतु इति प्रयोक्तुरिच्छा ( न्या० म० ४ पृ० २४ ) ( भा० प० ४ श्लो० ८५ ) ( नील० पृ० ३१ ) । तदर्थश्च एतत्पदमेतत्पदेन सह संभूयान्वयबोधं जनयतु इति ( त० प्र० ख० ४ पृ० ९२ ) । प्रयोक्ता चाभिसंधापयितृमात्रम् न तु वक्तैव । मौनिश्लोकाव्याप्तेः । शुकवाक्ये भगवदिच्छैव गतिः ( न्या० म० ४ पृ०

२४ ) ( मु० ४ पृ० १८९ ) । अत्रायमाशयः । शुकवाक्याच्छाब्दबोध ईश्वरीयतात्पर्यज्ञानस्यैव कारणत्वं कल्प्यते । तेन शुकस्यार्थज्ञानाभावेनाभिसंधापयितृत्वाभावेपि नाभिसंधापयितुरिच्छायास्तात्पर्यत्वानुपपत्तिः इति ( त० प्र० ख० ४ पृ० ९२ ) । अत्रान्ये मन्यन्ते शुकवाक्ये विनैव तात्पर्यज्ञानम् शाब्दबोधः इति ( मु० ४ पृ० १८९ ) । सैन्धवमानयेत्यादौ सैन्धवपदम् आनयनपदार्थे लवणं प्रत्याययतु इत्याकारिकाया वाक्यप्रयोक्तुरिच्छायाः सत्त्वाल्लक्षणसमन्वयः ( म० प्र० ४ पृ० ५८ ) । एवम् श्वेतो धावति इत्याद्युदाहार्यम् (दि० ४ पृ० १८९ ) । अत्र विशेषे तात्पर्यग्राहकाणि प्रकरणान्येव भोजनादीनि गमनादीनि वा विज्ञेयानि (म० प्र० ४ पृ० ५०) । अत्रोक्तं भर्तृहरिणा संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥ सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ इति । अत्रोदाहरणानि तु सशङ्खचक्रो हरिः इत्यादीनि ज्ञेयानि ( काव्यप्र० उ० २ ) । अत्रोक्तं कैश्चित् । प्रत्यक्षोपस्थितेनापि कलायेन तात्पर्यग्रहसहकारिणमासाद्य पचति इत्यत्रान्वयबोधः इति ( न्या० सि० दी० पृ० ४६ ) । कलायं शमीधान्यम् मुद्गादि । अत्र मतभेदाः । शशधरादयः शाब्दबोधं प्रति तात्पर्यज्ञानस्य कारणत्वं नास्त्येव इत्याहुः । केचित्तु सैन्धवमानयेत्यादौ नानार्थस्थल एव तात्पर्यसंशयादेः संभवेन तत्रत्यशाब्दबोध एव तात्पर्यनिश्चयो हेतुः । न तु घटमानयेत्यादौ घटादिशाब्दबोधे हेतुः इत्याहुः । परे तु घटादिशाब्दस्थलेपि घटपदम् कुम्भपरम् लक्षणया पटपरं वा इति संशये घटशाब्दबोधाभावात् सर्वत्र तात्पर्यनिश्चयः कारणम् इत्याहुः ( म० प्र० ४ पृ० ५८ ) । वस्तुतस्तु नानार्थानुरोधेन शाब्दसामान्य एकपदार्थप्रकारकापरपदार्थविशेष्यकप्रतीतीच्छयोच्चरितत्वरूपतात्पर्यज्ञानस्यैव हेतुत्वम् ( त० प्र० ख० ४ पृ० १४ ) ( सि० च० ४ पृ० ३१ ) । अन्ये तु अयमेति पुत्रो राज्ञः पुरुषोपसार्यतामित्यादौ राजपुत्रसंसर्गप्रतीतीच्छयोच्चरिते राज्ञ इत्यस्य पुरुषपदेन साकाङ्क्षत्ववारणाय यत् पदं यत्पदव्यतिरेकेण तात्पर्यविषयीभूतार्थान्वयान-

नुभावकम् तत् पदं तेन पदेन साकाङ्क्षम् इति तात्पर्यगर्भाकाङ्क्षाज्ञानकारणत्वावश्यकतया आकाङ्क्षाघटकतयैव तात्पर्यज्ञानं हेतुः न तु स्वातन्त्र्येण इत्याहुः ( त० प्र० ख० ४ पृ० ९३ ) ।

**तादर्थ्यम्**—[ क ] तत्प्रयोजनकत्वम् । यथा यूपाय दार्वित्यादौ दारुणस्तादर्थ्यम् । अत्र स एवार्थः प्रयोजनमस्य तत्त्वम् इति व्युत्पत्तिः । अत्र तत्प्रयोजनत्वं च समभिव्याहृतपदार्थनिष्ठव्यापारेच्छानुकूलेच्छाविषयत्वम् । तत्प्रयोजनकत्वरूपतादर्थ्यं च तदिच्छाधीनेच्छाविषयव्यापाराश्रयत्वम् ( ग० व्यु० का० ४ पृ० ९८ ) । अत्र तादात्म्यत्वं च संबन्धताविशेषः प्रतीतिसाक्षिकः ( त० प्र० १ पृ० ४५ ) । [ ख ] उपकार्योपकारकभावरूपः संबन्धः इति शाब्दिका वदन्ति । [ ग ] तदुद्देश्यकत्वमिति केचित् ।

**तादात्म्यम्**—१ [ क ] तद्वृत्तिधर्मविशेषः । यथा प्राचीनोक्ते तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताको यः अभावः सोन्योन्याभावः इत्यन्योन्याभावस्वरूपे निरूपणीये घटान्योन्याभाव इत्यत्र घटत्वमेव घटतादात्म्यम् । तादात्म्यं च संबन्धताविशेषः प्रतीतिसाक्षिकः । अत्रायं भावः । घटान्योन्याभावबोधे घटत्वं संबन्धविधया प्रकारविधया च प्रतियोगितावच्छेदकम् इति द्विविधतया घटत्वस्य भानम् । तदवच्छिन्नप्रतियोगिताकश्चान्योन्याभाव इति लक्षणसमन्वयः इति ( त० प्र० १ पृ० ४५ ) । [ ख ] स्ववृत्त्यसाधारणो धर्मः । तादृशधर्मस्तद्व्यक्तित्वादिरूपः ( ग० व्यु० का० १ पृ० ५ ) । यथा नीलो घट इत्यादौ प्रथमाविभक्तेरभेदार्थकत्वमते नीलादिनिष्ठतद्व्यक्तित्वमेव नीलपदोत्तरप्रथमविभक्त्यर्थस्तादात्म्यम् । अत्रासाधारण्यं चैकमात्रवृत्तित्वम् ( ग० व्यु० का० १ पृ० ५ ) । भेदसहिष्णुरभेदस्तादात्म्यमिति केचिद्वेदान्तिन आहुः । मायावादिमते तत्सत्तातिरिक्तसत्ताकत्वाभावः इति तदर्थः ( वेदा० प० ) । भेदाभेदबुद्धिनियामकः संबन्धविशेषः इति सांख्या आहुः ( सांख्य० भा० ) ( वाच० ) । २ ऐक्यम् । अत्र व्युत्पत्तिः सः आत्मा यस्य स तदात्मा । तस्य भावः तादात्म्यम् इति ।

**तादृशम्**—तुल्यदर्शनम् । यथा यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः तादृशप्रतियोगितानवच्छेदकत्वम् (मु० २ पृ० १४५) इत्यादौ । यथा वा तथाविधं प्रेम पतिश्च तादृशः ( कुमा० स० ५ श्लो० २ ) इत्यादौ ( वाच० ) ।

**तान्त्रिकाः**—( मन्त्राः ) तन्त्रेषु कामिककारणप्रपञ्चाद्यागमेषु ये ये वर्णितास्ते तान्त्रिकाः ( सर्व० सं० पृ० ३६८ पातञ्ज० ) ।

**तापः**—कपालानामङ्गारैः प्रतापनम् ( जै० न्या० अ० १० पा० १ अधि० ११ ) ।

**तारतम्यम्**—न्यूनाधिकभावः । यथा रमाब्रह्मादयो देवास्तारतम्येन संयुताः इत्यादौ । यथा वा तारतम्ययोगयुक्तांश्च भावानतिरूक्षानतिस्निग्धानत्युष्णानतिशीतानित्येवमादीन् विवर्जयेत् ( सुश्रुत० ) इत्यादौ । यथा वा निर्धनं निधनमेतयोर्द्वयोस्तारतम्यविधिमुक्तचेतसाम् । बोधनाय विधिना विनिर्मिता रेफ एव जयवैजयन्तिका ( उद्भटः ) इत्यादौ ।

**तावत्**—१ तदेत्यर्थः । यथा भर्तापि तावत्क्रथकैशिकानाम् ( रघु० स० ७ श्लो० ३२ ) इत्यादौ । २ साकल्यम् । यथा तावत्प्रकीर्णाभिनवोपचारम् ( रघु० स० ७ श्लो० ४ ) इत्यादौ । ३ अवधिः । यथा बन्धुं न संभावित एव तावत् ( रघु० स० ७ श्लो० ६ ) इत्यादौ । आलोकमार्गप्राप्तिपर्यन्तमित्यर्थः । ४ मानार्थः । यथा त्वमेव तावत् परिचिन्तय स्वयम् ( कुमार० स० ५ श्लो० ६७ ) इत्यादौ । यावन्मात्रं विचारणीयम् तावन्मात्रमित्यर्थः । ५ अवधारणम् । यथा इन्द्रप्रस्थगमस्तावत् कारि मा सन्तु चेदयः ( माघ० स० २ श्लो० ६३ ) इत्यादौ । मा कारि तावत् न क्रियतामेवेत्यर्थः ( माघ० टी० मल्लि० २।६३ ) । ६ परिमाणविशिष्टम् । यथा जम्बूद्वीपोयं यावान् प्रमाणविस्तारतः तावता क्षीरोदधिना परिवेष्टितः ( भाग० ५।२०।२ ) इत्यादौ । क्रियाविशेषणत्वे यथा पुरोस्य यावन्न भुवि व्यलीयत । गिरेस्तडित्वानिव तावदुच्चकैः ( माघ० स० १ श्लो० १२ ) इत्यादौ । ७ प्रशंसा । ८ पक्षान्तरम् ।

९ अधिकारः । १० संभ्रमः ( वाच० ) । क्वचित् पादपूरणार्थे वाक्यालंकारार्थे चापि तावच्छब्दः प्रयुज्यते । एतेष्वर्थेषु केचिदर्थाः कोशे उक्ताः । यथा यावत्तावत्परिच्छेदे कार्त्स्न्ये मानावधारणे इति विश्वः । यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे इत्यमरः ( का० ३ नानार्थव० श्लो० २४५ ) इति ।

तिङ्—( विभक्तिः ) तिप्तस्झिसिप्० ( पाणि० ३।४।७८ ) इत्यनेन विहिताः प्रत्ययास्तिङ्संज्ञका बोध्याः । एतद्विचारस्तु कौमुद्यादौ द्रष्टव्यः । तिङ् शाब्दिकैराख्यातमित्युच्यते ( श० प्र० श्लो० ९५ पृ० १२७ )। धात्वर्थावच्छिन्नस्वार्थयत्नविधेयताकान्वयबोधसमर्थः शब्दस्तिङ् उच्यते ( श० प्र० श्लो० ९५ पृ० १२७ ) । यथा चैत्रः पचतीत्यादौ तिबाख्यातम् । रथो गच्छतीत्यादौ तिबाख्यातेन व्यापारो निरूढलक्षणया बोध्यते । अत्र रथादीनामचेतनतया गमनानुकूलप्रयत्नशून्यत्वाद्व्यापार एव लक्ष्यते इति भावः ( न्या० म० ४ पृ० १८ ) ( मु० ४ ) । जानाति इच्छति यत्नं करोति इत्यादावाख्यातस्याश्रयत्वे लक्षणा । केचित्तु स्थीयते इत्यत्राख्यातेन कृतिर्बोध्यते इत्याहुः । एतन्मते चैत्रेण स्थीयते इत्यत्र चैत्रकर्तृका स्थित्यनुकूला कृतिः इति बोधः । कृतौ संख्याया नान्वयः इति भावः । अन्ये तु चैत्रकर्तृका वर्तमानस्थितिः इति धात्वर्थविशेष्यक एव शाब्दबोधः । प्रत्ययस्य निरर्थकत्वम् इत्याहुः ( न्या० म० ४ पृ० २० ) । अत्रेदमवधेयम् । उभयपदिधातूनां यत्र क्रियाफलं कर्तृनिष्ठम् तत्रात्मनेपदम् यत्र च कर्तृभिन्ननिष्ठं तत्र परस्मैपदं साधु । चिन्तामणिकृतस्तु यत्र क्रियाफले कर्तुरभिप्रायः (इच्छा) तत्रैवात्मनेपदम् इत्याहुः ( श० प्र० श्लो० ९७ पृ० १४४—१४५ )। अत्राधिकं तु आत्मनेपदशब्दव्याख्यानावसरे संपादितम् ( पृ० १२० ) । तिङर्थश्च यत्नः । यथा चैत्रः पचतीत्यादौ यत्नः (कृतिः) तिबाख्यातस्य वाच्यः (चि० ४) । क्वचित् समवायित्वम् आश्रयत्वं वा तिङर्थः । यथा ईश्वरो जानाति इच्छति रथो गच्छतीत्यादौ च । अत्र ज्ञानादिमत्त्वमात्रप्रतीतेः समवायित्वे तिङो निरूढलक्षणेति भावः । अत्रेदमवधेयम् । आश्रयत्वादौ तिङो निरूढ-

लक्षणा । कृतित्ववदाश्रयतात्वादेरलघुत्वे तदवच्छिन्नेपि तिङः शक्तिरेव इति ( श० प्र० श्लो० ९५ पृ० १३८ ) । क्वचित् अवच्छेदकत्वम् । यथा चैत्रो जानातीत्यादौ । क्वचित् दैशिकाश्रयत्वम् । यथा बुद्धिरवगाहते घटो भासत इत्यादौ । क्वचित् प्रतियोगित्वम् । यथा घटो नश्यतीत्यादौ तिबर्थः ( श० प्र० श्लो० ९५ पृ० १३८ ) ( चि० ४ ) ( त० दी० ) ( दि० ४ ) । एवम् तसादिप्रत्ययानामप्यर्था यथायोग्यं स्वयमूह्याः । अत्रेदं तत्त्वम् । जीवनयोन्यादिनिखिलयत्नगतं यत्नत्वमेव तिङः शक्यतावच्छेदकम् न तु प्रवृत्तित्वम् । चैत्रो निःश्वसिति इत्यादितोपि श्वासाद्यनुकूलप्रयत्नस्य प्रतीतेः । पचतीत्यादितः पाककृतिमान् इति प्रतीतेश्च ( श० प्र० श्लो० ९५ पृ० १३७–१३८ ) । पचति इत्यस्य पाकं करोति इत्यादियत्नार्थककरोतिना सर्वाख्यातविवरणात् वृद्धव्यवहारादिव बाधकं विना विवरणादपि व्युत्पत्तेरित्यन्ये । किं करोति इति यत्नप्रश्ने पचति इत्युत्तरस्य यत्नार्थकत्वं विनानुपपत्तेः इत्याचार्याः ( चि० ) ( वाच० ) । अत्रायमर्थः । चैत्रः पचतीत्यादौ तिङर्थकृतौ धात्वर्थस्य तं करोमि इति प्रतीतिनियामकः साध्यत्वाख्यविशेष्यताप्रभेदः तद्विशिष्टं फलोपधायकत्वलक्षणमनुकूलत्वं वा संसर्गमर्यादया भासते । तादृशकृतेश्च चैत्रादिनामार्थे ईश्वरः पचति इत्यादिप्रयोगापत्तिवारणार्थमवच्छेदकत्वेनैव संसर्गेणान्वयः ( श० प्र० श्लो० ९५ पृ० १३७–१३८ ) । अत्रेयं मतप्रक्रिया ज्ञेया । शाब्दिकाः भावप्रधानमाख्यातम् सत्त्वप्रधानानि नामानि इति यास्कमुनिपठितं निरुक्तमनुरुध्य चैत्रस्तण्डुलं पचति इत्यादौ चैत्राभिन्नकर्तृकस्तण्डुलनिष्ठविक्लित्त्यनुकूलो व्यापारः इत्याद्याकारकं सर्वत्र धात्वर्थमुख्यविशेष्यकमेव शाब्दबोधं स्वीकुर्वन्ति । नैयायिकास्तु भावो भावना कृतिः प्रधानं धात्वर्थं प्रति इति विग्रहलभ्यस्य पूर्वोक्तयास्कनिरुक्तार्थस्य स्वीकारेण तण्डुलनिष्ठविक्लित्त्यनुकूलव्यापारानुकूलकृतिमान् इत्याद्याकारकं सर्वत्राख्यातार्थविशेष्यकं प्रथमान्तार्थमुख्यविशेष्यकमेव शाब्दबोधमुररीचक्रुः । अधिकं तु शाब्दबोधः इत्यत्र द्रष्टव्यम् । अत्र दीधितिकृतः । पचतीत्यादावाख्यातस्य कृत्यर्थकत्वेपि चैत्रेण पक्वम् इत्यादा-

मिव चैत्रेण पच्यते इत्यत्रापि तृतीययैव कर्तृत्वमनुभाव्यते न त्वाख्यातेन । तिङर्थकृतेर्धात्वर्थविशेष्यत्वनियमात् इत्याहुः ( श० प्र० श्लो० ९५ पृ० १४० ) । शाब्दिकास्तु कर्ता कर्म च भावश्च आख्यातार्थः इत्याहुः । अनुकूलव्यापारमात्रमाख्यातार्थः इति भट्टमीमांसका मण्डनमिश्राश्चाहुः । एतन्मते केवलं फलं धातोरर्थः इति ज्ञेयम् ( श० प्र० श्लो० ९५ पृ० १४० ) । कालः संख्यामात्रं सर्वत्राख्यातार्थः । पचतीत्यादौ धातुप्रतिपाद्यो विक्लित्यनुकूलव्यापारो यत्नं विनानुपपन्नः इति तेन यत्न आक्षिप्यते इति प्राभाकराः । रत्नकोशकृतस्तु आख्यातार्थ उत्पादना । सा चोत्पादकता सैव भावना । यथा पचतीत्यादावाख्यातस्य पाकमुत्पादयति इति विवरणात्तथात्वम् इत्याहुः ( चि० ४ ) ( श० प्र० पृ० १३९ ) । एतन्मते व्यापारमात्रं धातोर्वाच्यार्थः इति ज्ञेयम् । एकत्वादिसंख्या वर्तमानादिकालश्च तिङर्थः । यथा चैत्रस्तण्डुलं पचतीत्यादौ तिङर्थकृतावेकत्वरूपसंख्या वर्तमानकालश्चाख्यातेन प्रतीयते ( चि० ४ ) ।

**तिथिः**—चन्द्रार्कगत्या कालस्य परिच्छेदो यदा भवेत् । तदा तयोः प्रवक्ष्यामि गतिमाश्रित्य निर्णयम् ॥ भगणेन समग्रेण ज्ञेया द्वादश राशयः । त्रिंशांशश्च तथा राशेर्भाग इत्यभिधीयते ॥ आदित्याद्विप्रकृष्टस्तु भागद्वादशकं यदा । चन्द्रमाः स्यात्तदा राम तिथिरित्यभिधीयते ॥ ( पु० चि० पृ० ३ विष्णुधर्मोत्तरे ) । खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ( पु० चि० पृ० ३६ ) ।

**तिरोभावः**—नाशः । सांख्यास्तु अनभिव्यक्तिस्तिरोभावः इत्याहुः ।

**तु**—( अव्ययम् ) १ पक्षान्तरम् । यथा आचारेण तु संयुक्तः संपूर्णफलभाग्भवेत् ( मनुः अ० १ श्लो० १०९ ) इत्यादौ । २ समुच्चयः । यथा उष्ट्रयानं समारुह्य खरयानं तु कामतः । स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुद्ध्यति ॥ ( मनुः अ० ११ श्लो० १२१ ) इत्यादौ । ३ पूजा । यथा माणवकस्तु भुङ्क्ते शोभनमित्यादौ ( पा० सू० वृ० ८।१।३९ ) । अत्र सूत्रम् तुपश्यपश्यताहैः पूजायाम् ( पा० सू० ८।१।

३९ ) इति । तदर्थश्च एतैर्युक्तं तिङन्तं पूजायां विषये नानुदात्तं स्यात् इति ( पा० सू० वृ० ) । ४ पादपूरणार्थम् । पादपूरणार्थको निरर्थक एव । अत्रोच्यते चन्द्रालोके निरर्थकं तुहीत्यादि पूरणैकप्रयोजनम् इति ( वाच० ) । ५ भेदः । ६ अवधारणम् । ७ नियोगः । ८ प्रशंसा । ९ विनिग्रहः ( वाच० ) ।

तुमुन्—( प्रत्ययः ) १ [ क ] प्रकृतक्रियासमानकर्तृकत्वसहिततद्विषयकेच्छाधीनेच्छाविषयत्वम् । यथा पक्तुं व्रजतीत्यत्र तुमर्थः ( ग० व्यु० का० ४ पृ० ९८ ) ( श० प्र० श्लो० ९२ पृ० १२७ ) । अत्र समन्वयः पक्तुं व्रजतीत्यादौ प्रकृतक्रिया पचनम् तत्समानकर्तृकत्वम् यः पाककर्ता स एव व्रजनकर्ता इति व्रजनेऽस्ति । पाकेच्छाधीनेच्छा व्रजनेच्छा । तद्विषयत्वं च व्रजनेऽस्तीति सर्वं सुस्थम् । अत्र तुमुन्नन्तेन व्रजने पाकादिसमानकर्तृकत्वसहितं पाकविषयकेच्छाधीनेच्छाविषयत्वं बोध्यते । तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ( पा० सू० ३।३।१० ) इति सूत्रेण समभिव्याहृतक्रियायां प्रकृतक्रियासमानकर्तृकत्वसहिततदिच्छाधीनेच्छाविषयत्वरूपतदर्थकत्वेन विवक्षितायां तुमुन्ण्वुलोर्विधानात् ( ग० व्यु० का० ४ पृ० ९८ ) । [ ख ] तत्प्रागभावकालीनतद्विषयकेच्छा । यथा भोक्तुमागच्छतीत्यादौ । अत्र भोजनप्रागभावकालीनभोजनविषयकेच्छावानागच्छति इति बोधः ( सि० च० ४ पृ० ३२ ) । २ इच्छावान् । यथा भोक्तुं व्रजतीत्यस्य भोजनेच्छावान् व्रजति इत्यर्थः । ३ कर्ता । यथा भोक्तुमिच्छतीत्यत्र तुमुनोऽर्थः । अत्र लक्षणया कर्ता बोध्यते । कर्तृविशेषणीभूतायां कृताविच्छाया अन्वयः । तेन भोजनकर्तारमात्मानमिच्छति इत्यर्थः ( तर्का० ४ पृ० १२ ) ।

तुरी—कुविन्दस्य काष्ठादिनिर्मिततन्तुवयनसाधनविशेषः । यथा तुरीवेमादिकं पटस्य निमित्तकारणम् ( त० सं० १ ) इत्यादौ ।

तुल्यत्वम्—१ [ क ] सादृश्यवदस्यार्थोऽनुसंधेयः । यथा सकामां दूषयं-

स्तुल्यो न वधं प्राप्नुयान्नरः । सकामां दूषयंस्तुल्यो नाङ्गुलिच्छेदमाप्नुयात् ( मनुः ) कुम्भकर्णः कपीन्द्रेण तुल्यावस्थः स्वसुः कृतः ( रघु० स० १२ श्लो० ८० ) इत्यादौ । [ ख ] भिन्नत्वे सति धर्मवत्त्वम् । यथा चैत्रेण चैत्रस्य वा तुल्य इत्यादौ । अत्र तुल्यशब्दार्थनिविष्टे च भेदे तृतीयाद्यर्थस्य प्रतियोगित्वस्य धर्मे चाधेयत्वस्य अन्वयात् चैत्रत्वावच्छिन्नान्यत्वे सति चैत्रवृत्तिधर्मवान् इत्यर्थः । एवम् चैत्रेण चैत्रस्य वा सादृश्यमित्यादावपि द्रष्टव्यम् । अत्र विशेषो ज्ञेयः पाणिनीयाः तुल्योपमयोर्योगे तृतीयां नेच्छन्ति इति ( श० प्र० श्लो० ९२ पृ० १२४ ) । २ [ क ] अन्यूनानतिरिक्तव्यक्तिकत्वम् । यथा न्यायमते बुद्धित्वज्ञानत्वयोः घटत्वकलशत्वयोर्वा तुल्यत्वम् ( त० प्र० १ ) ( वै० उ० १।१ ) । इदं तु घटत्वकलशत्वादीनां भेदे भिन्नजातित्वे वा बाधकम् इति बोध्यम् ( दि० १।१ पृ० ३४ ) ( नील० ) । [ ख ] तुल्यव्यक्तिवृत्तित्वम् । स्वभिन्नजातिसमनियतत्वमिति फलितोर्थः ( दि० १।१ पृ० ३४ ) । यथा घटत्वकलशत्वयोस्तुल्यत्वम् ( त० प्र० १ ) ।

**तुल्यवित्तिवेद्यत्वम्**—एकज्ञानविषयत्वम् ( त० प्र० ख० ४ पृ० २१ ) । यथा साधनवद्वृत्तिः साध्याभावो वा हेतुदोषः ( दीधि० २ हेत्वा० ) इत्यत्र प्राचीनमते वह्निमद्वृत्तिर्धूमाभावः इति ज्ञाने धूमाभावे वह्निमद्वृत्तित्वस्य भासने वह्नौ धूमाभाववद्वृत्तित्वमपि तुल्यवित्तिवेद्यतया नियमतो भासते ( ग० सामा० लक्ष० २ पृ० १७ ) । यथा वा गुरुमते आक्षेपाज्जातिविशिष्टव्यक्तिप्रतीतिः । अत्रायं विशेषो ज्ञेयः । तन्मते जातौ व्यक्तौ च शक्तिः । परंतु जातिविषयकशक्तिज्ञानमेव जातिविशिष्टव्यक्तिविषयकशाब्दबोधे कारणम् । व्यक्तिशक्तिस्तु स्वरूपसती ( न तु ज्ञाता ) उपयुज्यते इति ( त० प्र० ख० ४ पृ० २१ ) । इदं च कुब्जशक्तिवादिगुरुमतैकदेशिनां मतम् इति ज्ञेयम् ( त० प्र० ख० ४ पृ० २२ ) ।

**तृतीया**—( कारकविभक्तिः ) तत्तद्धात्वर्थे करणत्वादिबोधिका विभक्तिः । कारकतृतीयालक्षणं च पच्यर्थधर्मिककरणत्वान्वयबोधानुकूलसुप्सजातीयत्वम् ( श० प्र० श्लो० ६५ पृ० ७५ ) । यथा काष्ठेन तण्डुलं

पचतीत्यादौ काष्ठेनेति तृतीया । तृतीयार्थश्च १ कर्तृत्वम् । यथा चैत्रेण ग्रामो गम्यते पुत्रेण सहागतः पितेत्यादौ तृतीयार्थः । चैत्रेणेत्यत्र कर्तृकरणयोस्तृतीया (पा० सू० २।३।१८) इत्यनेन कर्तरि विहिता कारकतृतीया इति ज्ञेयम् । पुत्रेणेत्यत्र सहयुक्तेऽप्रधाने (पा० सू० २।३।१९) इत्यनेन विहिता कारकार्थान्या तृतीया । अत्र कर्तृत्वं तृतीयार्थः । सहशब्दसमभिव्याहृतपदोपस्थाप्यक्रिया (आगमनम्) सहशब्दार्थः । एकदेशावच्छेदैककालीनत्वसंबन्धेन तस्याः समभिव्याहृतक्रियायाम् आगतपदोपस्थाप्यायाम् अन्वयः । तथा च पुत्रकर्तृकागमनविशिष्टागमनकर्ता पिता इत्यर्थः (का० व्या० पृ० ८) । शब्दशक्तिप्रकाशिकाकृतस्तु पुत्रेण सहागतः सूपेन सार्धं भुक्तः चक्रेण साकं दण्डेन जनितः पुत्रेण समं मित्राय दानम् इत्यादौ सहाद्यव्ययार्थैकदेशे कर्तृत्वादिकारके स्वप्रकृत्यर्थस्याधेयत्वं तृतीयया बोध्यते । तेन पुत्रवृत्तिकर्तृताकगतिकालीनगतिकर्तृतावान् सूपनिष्ठकर्मताकभोजनकालीनभोजनकर्मतावान् चक्रनिष्ठकरणताकोत्पत्तिकालीनदण्डनिष्ठकरणताकोत्पत्तिमान् पुत्रसंप्रदानताकदानकालीनं मित्रसंप्रदानताकं दानम् इत्याकारस्तत्र बोधः इत्याहुः । अत्र सहाद्यव्ययार्थस्तु स्वान्वयितत्तत्कर्तृत्वादिकारकावच्छिन्नायाः समभिव्याहृतक्रियायाः समानकालीनत्वरूपं साहित्यम् (श० प्र० श्लो० ९२ पृ० ११९) । क्वचित् हेतुकर्तृत्वमपि तृतीयार्थः । तत्स्वरूपं प्रागुक्तम् (पृ० ३०६) । २ करणत्वम् । यथा कुठारेण वृक्षं छिनत्तीत्यादौ तृतीयार्थः । साधकतमं करणम् (पा० सू० १।४।४२) इति पाणिनिसूत्रेण करणसंज्ञा । साधकतमत्वं च असाधारणकारणत्वम् व्यापारवदसाधारणकारणत्वं वा (म० प्र० १ पृ० ६) । तथा च कर्तृकरणयोस्तृतीया (पा० सू० २।३।१८) इत्यनेन तृतीया । अधिकं तु करणशब्दव्याख्याने संपादितम् (पृ० १९९) । अत्र शाब्दिकाः । इयं तृतीया द्विविधा । कर्तृतृतीया करणतृतीया च । तत्राद्याया आश्रयोऽर्थः । करणतृतीयायास्तु आश्रयव्यापारावर्थौ इत्याहुः (वै० सा०) । ३ वृत्तित्वम् । यथा अक्ष्णा काणः पादेन खञ्ज इत्यादौ तृतीयार्थः ।

अत्र येनाङ्गविकारः ( पा० सू० २।३।२० ) इति सूत्रेण तृतीया । तदर्थश्च येनाङ्गविकारो ह्यानिराधिक्यं वा तदङ्गबोधकात् तृतीया इति । एवं च अत्र तृतीयाया वृत्तित्वमर्थः । तच्च काणादिपदार्थैकदेशो विकारेन्वेति । काणत्वं च बहिरवच्छेदेन चक्षुःशून्यगोलकवत्त्वम् । प्रसन्नान्धस्य काणत्वे तु चक्षुष्मद्गोलकवत्त्वे सतीति वाच्यम् । यदि बहिरवच्छेदेन चक्षुःसत्त्वेपि उपघातादेर्न चाक्षुषं तदोपहतगोलकवत्त्वमेव काणत्वम् । अक्षिपदं चक्षुष्मद्गोलकपरम् । तथा च तादृशगोलकवृत्ति यच्चक्षुःशून्यत्वम् उपघातो वा तद्विशिष्टगोलकवान् इति अक्ष्णा काणः इत्यस्यार्थः । परे तु अक्ष्णा काण इत्यादौ अभेदे तृतीया । तथा च तादृशगोलकाभिन्नं यच्चक्षुः शून्यमुपहतं वा तद्वान् इति वाक्यार्थः इत्याहुः । खञ्जत्वं च संस्थानविशेषशून्यपादवत्त्वम् । तथा च पादवृत्ति यत् तथाविधसंस्थानशून्यत्वम् तद्विशिष्टपादवान् इति पादेन खञ्जः इत्यस्यार्थः । एवम् मुखेन त्रिलोचन इत्यस्यापि मुखवृत्तिलोचनत्रयवान् इत्यर्थः ( का० व्या० पृ० ८ ) । ४ विशेषणम् । यथा ज्ञायमानत्वेन लिङ्गं करणमित्यादौ तृतीयार्थः । अत्र इत्थंभूतलक्षणे ( पा० सू० २।३।२१ ) इत्यनेन लक्षणवाचिपदात्तृतीयानुशिष्यत इति ज्ञेयम् । अयं भावः । अत्र लक्षणं च व्यावर्तकम् । तच्च विशेषणोपलक्षणभेदेन द्विविधम् । तत्र विशेषणवाचिपदात् ज्ञायमानत्व इत्यस्मात् तृतीया इति ( ग० व्यु० का० ३ पृ० ९१–९२ ) । ५ उपलक्षणम् । यथा जटाभिस्तापस इत्यादौ तृतीयार्थः । अत्रोपलक्षणत्वं च अतद्व्यावृत्त्यनवच्छेदकत्वे सत्यतद्व्यावृत्तिसमानाधिकरणत्वम् । अस्ति च जटायामतापसव्यावृत्त्यनवच्छेदकत्वम् । शमदमादिमत्त्वस्यैव तदन्यूनानतिरिक्तवृत्तितया तदवच्छेदकत्वात् । यदि शमादिना तापसः इति प्रयोग इष्टस्तदा विशेषणोपलक्षणैतदुभयसाधारणवैशिष्ट्यमेव तृतीयार्थः ( का० व्या० पृ० ७ ) । अत्र जटाविशिष्टस्तापसः इत्याद्यनुभवेन विशेषणेनुशिष्टायाः इत्थंभूतलक्षणे ( पा० सू० २।३।२१ ) इत्यनेन विहितायास्तृतीयायाः वैशिष्ट्यम् अर्थः । वैशिष्ट्यं चातद्व्यावृत्तत्वम् । तथा च अजटव्यावृत्तिमांस्तापसः इत्याकार-

स्तत्र फलितार्थः ( श० प्र० श्लो० ९२ पृ० ११९ ) ( म० प्र० १ पृ० ६ ) । इदं तु बोध्यम् । प्रकृत्यर्थस्य निरुक्तवैशिष्ट्यं यदि वर्तमानतया प्रत्याय्यते तदेदं विशेषणत्वेन व्यपदिश्यते । यदि चावर्तमानत्वेन तदोपलक्षणत्वेन व्यपदिश्यते । यथा शिखया परिव्राजको वर्तते इत्यादौ । यथा वा गुरुणा टीका कुरुणा क्षेत्रमित्यादौ ( श० प्र० श्लो ९२ पृ० ११९ ) । इदं च बोध्यम् । इत्थंभूतलक्षणे ( पा० सू० २।३।२१ ) इत्यत्र लक्षणं च व्यावर्तकम् । तच्च विशेषणोपलक्षणभेदेन द्विविधम् । तत्रोपलक्षणं चाविद्यमानं सद्व्यावर्तकम् । जटाभिस्तापस इत्यादावविद्यमानजटादेः कालान्तरसंबन्धविवक्षया मतुबाद्यनवकाशादुपलक्षणवाचकजटादिपदात् तृतीयैव ( ग० व्यु० का० ३ पृ० ९२ ) । केचित्तु ( शाब्दिकाः ) ज्ञानज्ञाप्यत्वं तृतीयार्थः । यथा जटाभिस्तापस इत्यादौ इत्याहुः । अत्र तृतीयार्थैकदेशे ज्ञाने जटानामन्वयः । ज्ञानज्ञाप्यत्वस्य च तापसपदार्थैकदेशे तापसत्वेन्वयः । एवं च जटाज्ञाप्यतापसत्ववान् इत्यर्थः ( म० प्र० १ पृ० ६ ) । अत्रेदं चिन्त्यम् । जटाभिस्तापस इत्यादौ ज्ञानज्ञाप्यत्वस्य तृतीयार्थत्वे धूमेन वह्निमानित्यत्रेव प्रकृतस्थलेपि हेतौ ( पा० सू० २।३।२३ ) इत्यनेनैव तृतीयाया उपपत्तौ इत्थंभूतलक्षणे ( पा० सू० २।३।२१ ) इति सूत्रस्य वैयर्थ्यं स्यात् इति । ६ हेतुत्वम् । यथा धनेन कुलम् दण्डेन घटः । अत्र क्रियायोगाभावात् क्रियान्वयिनिरुक्तकरणत्वार्थिका कर्तृकरणयोस्तृतीया ( पा० सू० २।३।१८ ) इत्यनेन न तृतीया । किंतु हेतौ ( पा० २।३।२३ ) इति सूत्रेणानुमानार्थेप्यन्वितहेतुत्वार्थिका तृतीयानुशिष्यते इति विशेषः ( का० व्या० पृ० ८ ) । अत्र हेतुत्वं च जनकज्ञापकोभयसाधारणं बोध्यम् । तेन धनेन कुलमित्यादौ हेतुत्वं जनकत्वम् । तथा च धननिष्ठहेतुताककुलम् इत्याकारो बोधः ( श० प्र० श्लो० ९२ पृ० १२१ ) । पर्वतो धूमेन वह्निमानित्यादौ तु ज्ञापकत्वमेव हेतुत्वम् ( ग० व्यु० का० ३ पृ० ८७ ) । धूमेन वह्निः अणुत्वेन द्रव्यत्वम् इत्यादौ ज्ञापकत्वलक्षणं गौणमेव हेतुत्वं तृतीयार्थः । ( नवीनमते ज्ञाप्यत्वं तृतीयार्थः ) । तेन धूमनिष्ठ

यज्ज्ञापकत्वम् निरूपकत्वसंबन्धेन तद्वान्वह्निः इत्याकारस्तत्र बोधः (श० प्र० श्लो० ९२ पृ० १२२ ) ( ग० व्यु० का० ३ पृ० ८७ ) । घटेन शून्यः विधुरः रहितः इत्यादौ च हेतुत्वमेव तृतीयार्थः । अत्रापि हेतौ ( पा० सू० २।३।२३ ) इत्यनेनैव तृतीया । तत्र हेतुत्वं च प्रतियोगिसाधारणमपि इति भाति । तथा च घटत्वाद्यवच्छिन्नं प्रतियोगित्वमेव तृतीयार्थः । तस्य शून्यत्वेन्वयः । एवम् चैत्रेण चैत्रस्य वा तुल्य इत्यादावपि प्रतियोगित्वमेव तृतीयार्थः ( श० प्र० श्लो० ९२ पृ० १२३–१२४ ) । ७ फलम् ( प्रयोजनम् ) । यथा धनेन कुशलम् अध्ययनेन वसति इत्यादौ तृतीयार्थः । अत्रापि हेतौ ( पा० सू० २।३।२३ ) इत्यनेन फलार्थकात्तृतीया इति ज्ञेयम् । तत्र हेतुशब्देन कारणमिव फलमपि गृह्यते । ८ अभेदः । यथा धान्येन धनी गोत्रेण गार्ग्यः प्रकृत्या अभिरूपः प्रकृत्या कृपणः स्वभावेन सरलः घटत्वेन साजात्यम् वाजपेयेन यजनम् जात्या ब्राह्मणः इत्यादौ तृतीयार्थः । अत्र प्रकृत्यादिभ्य उपसंख्यानम् इत्यनेन वार्तिकेन अभेदार्थे तृतीया । अभेदस्य धान्यादावन्वयः । तथा च धान्याभिन्नधनवान् गोत्राभिन्नगर्गकुलोत्पन्नः साहजिकरमणीयतावान् इत्यादयः क्रमेण बोधा भवन्ति ( का० व्या० पृ० ८ ) । केचित्तु धूमेन वह्निः इत्यादाविव धान्येन धनम् इत्यादावपि ज्ञापकत्वमेव तृतीयार्थः इति वदन्ति ( श० प्र० श्लो० ९२ पृ० १२४ ) । प्रकृत्या कृपण इत्यत्र प्रकृत्यादिपदं यावदाश्रयभाविधर्मपरम् । तृतीयार्थश्चाभेदः तादात्म्यं वा । एवं च स्वाश्रयाधिकरणयावत्कालवृत्तिकार्पण्यवान् इत्याकारस्तत्र बोधः ( श० प्र० श्लो० ९२ पृ० १२४ ) । जात्या ब्राह्मण इत्यत्र ब्राह्मणपदस्यादृष्टविशेषप्रयोज्यधर्मवत्परतया तादृशधर्म एव जात्यभेदस्यान्वयः । स्वरूपत उपस्थिते ब्राह्मण्ये तदन्वयायोगात् इति विज्ञेयम् ( श० प्र० श्लो० ९२ पृ० १२४ ) । ९ अवच्छेदकत्वम् अवच्छेद्यत्वं वा । यथा घटत्वेन जन्यत्वम् प्रकारत्वं वा इत्यादौ तृतीयार्थः । १० अधिकरणत्वम् ( विषयत्वम् ) । यथा भोगैः प्रसितः उत्सुकः इत्यादौ तृतीयार्थः ।

अत्र विषयत्वलक्षणं गौणमधिकरणत्वं तृतीयया बोध्यते । तेन भोगेष्वनुरक्तः इत्येवं तत्र बोधः ( श० प्र० श्लो० ९२ पृ० ११८—१२५ ) ( ग० व्यु० का० ३ पृ० ९१—९८ ) ( का० व्या० पृ० ७—८ )। ११ वैशिष्ट्यम् । यथा वह्निमत्त्वेन पर्वतमनुमिनोमि इत्यादौ वह्निविधेयकत्वरूपं वैशिष्ट्यं तृतीयान्तार्थः । यथा वा रजतत्वेन शुक्तिं जानातीत्यादौ ज्ञाने रजतत्वादिप्रकारकत्वरूपं वैशिष्ट्यम् । घटत्वेन वह्निर्नास्तीत्यादौ च ( सौन्दडमते ) अभावे घटत्वावच्छिन्नप्रतियोगिताकत्वरूपं वैशिष्ट्यम् तृतीयान्तार्थः इति संक्षेपः ( ग० व्यु० का० २ ख० २ पृ० ५६ )।

**तृप्तिः**—फलेच्छाविच्छेदः ( कु० टी० ५ ) । यथा भोजनेन तृप्तोस्मीत्यादौ । यथा वा वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ( मनुः अ० ३ श्लो० २७१ ) तस्यालमेषा क्षुधितस्य तृप्त्यै ( रघु० स० २ श्लो० ३९ ) इत्यादौ।

**तृषा**—पिपासा । यथा न हन्ति मण्डूककुलं तृषाकुलः ( ऋतु० ) इत्यादौ । तृषाकुलस्य लक्षणं च—सततं यः पिबेत्तोयं न तृप्तिमधिगच्छति । मुहुः काङ्क्षति तोयं तु तं तृष्णार्दितमादिशेत् ॥ इति ( भावप्र० ) ।

**तृष्णा**—( दोषः ) १ इदं मे न क्षीयताम् इतीच्छा ( गौ० वृ० ४।३ )। २ अप्राप्ताभिलाषः । लोभजन्या मनोवृत्तिः । यथा लोभो जनयते तृष्णां तृषार्तो दुःखमाप्नुयात् ( हितोप० ) इत्यादौ ।

**तेजः**—१ ( द्रव्यम् ) [ क ] तेजो रूपस्पर्शवत् ( वै० २।१।३ )। तदर्थश्च रूपं भास्वरम् स्पर्शश्च उष्णः तद्वत्तेजः । भास्वरशुक्लरूपवत्त्वम् उष्णस्पर्शवत्त्वं च—तेजोलक्षणम् इति । ऊष्मणि भर्जनकपालस्थे तेजसि तप्तवारिस्थतेजसि च तेजस्त्वेन भास्वररूपमनुमीयते । तत्र तेजस्त्वं तु उष्णस्पर्शवत्त्वेनानुमीयते ( वै० उ० २।१।३ ) ( वै० वि० २।१।३ )। [ ख ] उष्णस्पर्शवत् ( त० सं० ) । अत्र सूत्रम् तेजस उष्णता इति ( वै० २। २।४ ) । [ ग ] तेजस्त्वसामान्यवत् ( प्रशस्त० ) ( त० कौ० १ पृ० २ ) । तच्च चक्षुःशरीरसवितृसुवर्णवह्निविद्युदादिप्रभेदम् ( त० भा० अर्थ० पृ० २७ )। यथा सामानाधिकरण्यं हि तेजस्तिमिरयोः

कुतः ( माघ० स० २ श्लो० ६२ ) इत्यादौ सूर्यादीनां प्रौढप्रकाशः । तेजोलक्षणं च तेजस्त्वमेव । तच्च चन्द्रचामीकरसमवेतत्वे सति ज्वलनसमवेतं सामान्यम् ( सर्व० औलु० पृ० २१८ ) । जन्योष्णस्पर्शसमवायिकारणतावच्छेदकतया सिद्धो जातिविशेषः । जन्यतेजस्त्वावच्छिन्नसमवायिकारणतावच्छेदकतया सिद्धो जातिविशेषः ( मु० १ तेजो० पृ० ७८ ) ( दि० १ पृ० ७८ ) । शुक्लभास्वररूपसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् । सांख्यास्तु शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रादुत्पन्नं शब्दस्पर्शरूपगुणं तृतीयं महाभूतं तेज इत्याहुः । अत्रोच्यते । तृतीयं ज्योतिरित्याहुश्चक्षुरध्यात्ममुच्यते । अधिभूतं ततो रूपं सूर्यस्तत्राधिदैवतम् ॥ इति ( भा० आश्व० ) । २ सात्त्विकोधिक्षेपापमानादेरसहनरूपो नायकगुणविशेषस्तेज इति साहित्यशास्त्रज्ञाः । अत्रोच्यते । अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेप्यसहनं तत्तेजः समुदाहृतम् ॥ इति ( सा० द० ) । ३ हयवेग इत्यश्वशास्त्रज्ञाः । अत्रोच्यते । तेजो नाम दर्पापरनामा सत्त्वगुणविकारः प्रकाशकोन्तःसारविशेषः । यथाह भोजराजः । तेजो निसर्गजं सत्त्वं वाजिनां स्फुरणं रजः । क्रोधस्तम इति ज्ञेयास्त्रयोपि सहजा गुणाः ॥ इति । ४ रेतः । अत्रोच्यते । रसादीनां शुक्रान्तानां धातूनां यत् परं तेजस्तत् खल्वोजः । तदेव बलमित्युच्यते इति ( सुश्रु० ) । ५ सारः इति भिषजः । ६ दीप्तिः । ७ प्रभावः । ८ पराक्रमः । ९ नवनीतं चेति काव्यज्ञाः । १० चैतन्यात्मकं ज्योतिरिति वेदान्तिन आहुः ( वाच० ) । न्यायमतसिद्धं तेजो द्विविधम् । नित्यम् अनित्यं च । तत्र नित्यं परमाणुलक्षणम् । अनित्यं कार्यलक्षणम् । अनित्यं त्रिविधम् । शरीरम् इन्द्रियम् विषयश्च । तत्र शरीरमयोनिजमेव । तच्चादित्यलोके प्रसिद्धम् । तच्च पार्थिवभागोपष्टम्भाच्चोपभोगसमर्थं भवति ( प० मा० ) ( प्रशस्त० ) । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति । विषयरूपं चतुर्विधम् । भौमम् दिव्यम् औदर्यम् आकरजं च । तत्र भौमम् पार्थिवमात्रेन्धनं वह्न्यादिकम् खद्योततेजआदि च । दिव्यम् अबिन्धनं सौरचान्द्रविद्युद्वडवान-

लादि। अद्भिरिध्यते प्रकाश्यत इति विग्रहो द्रष्टव्यः (सि० च० १ पृ० ७)। औदर्यं पार्थिवजलोभयेन्धनं तेजः। तच्च भुक्तस्य परिणामहेतुः (जाठरानलः)। आकरजम् अनुभयेन्धनं तेजः। तच्च सुवर्णत्रपुसीसरजतकांस्याद्यष्टकम् (प्रशस्त०) (तर्कसं०) (मु० १ पृ० ७९) (तर्ककौ० १ पृ० २)। अत्र केचिदाहुः। सुवर्णं पार्थिवम् तैजसं चेति मिश्रितं वस्तु। तत्र तैजसम् अग्निसंयोगानुच्छिद्यमानद्रवत्वाधिकरणम्। पार्थिवं तु अद्रुतं पीतरूपवत् इति। वस्तुतः द्रुतं पार्थिवमेव सुवर्णम् न तु तैजसम् इति (प० मा०)। न्यायवैशेषिकनये सुवर्णं तैजसमेव। तस्य तैजसत्वे प्रमाणमनुमानम्। तच्च सुवर्णमपार्थिवम् असति प्रतिबन्धकेत्यन्तानलसंयोगे सत्यप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवं यथा पृथिवी (घृतादिः) इति। जलमध्यस्थघृतादौ व्यभिचारवारणाय असति प्रतिबन्धके इति। अग्निसंयोगासमानाधिकरणद्रवत्ववति घृतादौ व्यभिचारवारणाय अत्यन्तानलसंयोगे सति इति च विशेषणं दत्तम् (नील० १ पृ० ८) (दि० १ पृ० ८१)। अनेनानुमानेनापार्थिवत्वसिद्धौ अत्यन्तानलसंयोगी पीतिमाश्रयः (पृथिवी पक्षः) द्रवत्वनाशप्रतिबन्धकद्रवद्रव्यान्तरेण (तेजस्त्वाभिमतेन सुवर्णेन) संयुक्तः (साध्यः) अत्यन्तानलसंयोगे सत्यप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वे सति गुरुत्वात् (हेतुः) जलमध्यस्थघृतवत् इत्यनुमानेन तैजसत्वसिद्धिर्द्रष्टव्या (नील० १ पृ० ८–९) (मु० १ पृ० ८१)। अथवा सुवर्णं तैजसम् असति प्रतिबन्धके अत्यन्ताग्निसंयोगेप्यनुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवं यथा पृथिवी इति व्यतिरेकिणा तैजसत्वसिद्धिः (मु० १ पृ० ८१)। यद्वा पीतिमगुरुत्वाश्रयः पीतरूपभिन्नरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः प्रहरपर्यन्तमनलसंयोगेपि पीतरूपभिन्नरूपानाश्रयत्वात् अनलसंयुक्तजलमध्यस्थितपीतपटवत् इति (वै० उ० २।१।७)। सुवर्णस्य तैजसत्वे अग्नेरपत्यं प्रथमं हिरण्यम् इत्यागमसंवादोपि ज्ञेयः (न्या० सि० दी० पृ० ४०) (दि० १ पृ० ८१)। प्रकारान्तरेण तेजश्चतुर्विधम्। किंचित् उद्भूतरूपस्पर्शम्। यथा सौरादि तेजः पिण्डितं

तेजो वह्न्यादिकं च । किंचित् अनुद्भूतरूपस्पर्शम् । यथा नायनं तेजः । किंचित् उद्भूतरूपमनुद्भूतस्पर्शम् । यथा चान्द्रं तेजः प्रदीपप्रभामण्डलं च । अथवा चान्द्रप्रभायां स्पर्शोप्युद्भूत एव । किं तु जलीयस्पर्शेनाभिभवादुष्णस्पर्शो न गृह्यते (वै० वि० २।१।३) (मु० १) (सि० च० ) । किंचित् अनुद्भूतरूपमुद्भूतस्पर्शम् । यथा नैदाघं तेजः तप्तवारिभर्जनकपालादिगतं च तेजः ( वह्न्यादि ) (वै० उ० २।१।३ ) ( त० भा० पृ० २७ ) ( वै० वि० २।१।३ ) । अत्रेदं बोध्यम् । सुवर्णं तेजस्तूद्भूताभिभूतरूपस्पर्शम् नानुद्भूतरूपस्पर्शम् । अनुद्भूतरूपत्वे अचाक्षुषं स्यात् । अनुद्भूतस्पर्शत्वे त्वचा न गृह्येत । अभिभवस्तु बलवत्सजातीयेन पार्थिवेन रूपेण स्पर्शेन च कृतः इति ( त० भा० अर्थ० पृ० २८ ) । तेजस्येकादश गुणा वर्तन्ते । भास्वरशुक्लरूपम् उष्णस्पर्शः संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः परत्वम् अपरत्वम् नैमित्तिकद्रवत्वम् वेगाख्यसंस्कारश्च ( त० भा० अर्थ० पृ० २७ ) ( भा० प० श्लो० ३० ) ( त० कौ० १ पृ० २ ) ( प्रशस्त० ) । द्रवत्वविषये सूत्रम् त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ( वै० २।१।७ ) । उपलक्षणं चैतत् । तेन कांस्यताम्रारकूटपारदपित्तलरङ्गादीनामप्युपसंग्रहः (वै० उ० २।१।७) (वै० वि० २।१।७) ( त० कौ० पृ० २ ) ।

**तैजसम्**—१ तेजस्त्वव्याप्यधर्मवत् । यथा चक्षुस्तैजसम् सुवर्णं तैजसम् इत्यादौ ( मु० १ ) ( वै० उ० २।१।७ ) । २ रजोगुणोत्पन्नः पदार्थ इति सांख्या आहुः । अत्रोच्यते । वैकृतः सात्त्विको नाम तैजसो राजसः स्मृतः । भूतादिस्तामसस्तेपि पृथक् तत्त्वान्यवासृजन् ॥ इति ( पदार्थादर्शधृतं वाक्यम् ) । सात्त्विक एकादशकः प्रवर्तते वैकृतादहंकारात् । भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ इति ( सां० का० २५ ) । ३ दशेन्द्रियजनकोहंकारतत्त्वप्रभेदः इति मध्वमतानुयायिनः ( मणिमञ्जरी १।३ ) । ४ अन्तःकरणं तैजसमिति मायावादिनः । ५ तीर्थविशेष इति पौराणिकाः ( वाच० ) ।

**त्यज्**—( धातुः ) त्यागः । अत्रोदाह्रियते । यथा वृक्षं खगस्त्यजतीत्यादौ त्यजेरर्थः । अत्र द्वितीयाया विभागोर्थः । तेन वृक्षावधिकविभागवती या विभागावच्छिन्नक्रिया तद्वान् खगः इत्याकारस्तत्र बोधः । अत्रेदं बोध्यम् । वृक्षावधिकविभागवत्त्वं च जनकत्वस्वाश्रयवृत्तित्व एतदुभयसंबन्धेनैव क्रियायां ग्राह्यम् । अतः खगावधिकविभागस्य खगादावसत्त्वात् खगं त्यजति खगः इत्यादिको न प्रयोगः ( श० प्र० श्लो० ७२ पृ० ९२–९३ ) । यथा वा त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ( चाणक्य० ) इत्यादौ त्यजेरर्थः ।

**त्यागः**—१ विभागावच्छिन्नक्रिया । न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति ( मनु० अ० ८ श्लो० ३८९ ) । २ तस्यायं भवतु इत्यादिफलेच्छाधीनस्वस्वत्वाभावेच्छा । यथा एषोर्घ्यः शिवाय नमः इत्यादौ नमःशब्दार्थस्त्यागः ( ग० व्यु० का० ४ पृ० ९९ ) । ३ तन्न मम इति ज्ञानम् इच्छा वा ( म० प्र० पृ० ५३ ) । ४ स्वत्वध्वंसजनकेच्छा । यथा पुष्पेण विष्णुं यजते इत्यत्र यजेरर्थः ( श० प्र० ७२ श्लो० पृ० ९५ ) । ५ स्वत्वध्वंसानुकूलव्यापार इति शाब्दिका वदन्ति । स च त्यागः सात्त्विकराजसतामसभेदेन त्रिविध इति वेदान्तिनः । स च स्वत्वध्वंसः मूर्तद्रव्याणामेव भवति । अमूर्तद्रव्याणां तु वियोगमात्रम् इति विज्ञेयम् ( वाच० ) ।

**त्रसः**—( जीवः ) शङ्खगण्डोलकप्रभृतयश्चतुर्विधास्त्रसाः ( सर्व० सं० पृ० ७० आर्ह० ) ।

**त्रसरः**—तन्तुवायकृतसूत्रवेष्टनविशेषः ( अमरः काण्ड० ३ संकी० श्लो० २४ ) ।

**त्रसरेणुः**—१ त्र्यणुकम् । तद्यथा जालान्तरगते भानौ सूक्ष्मं यद्दृश्यते रजः । प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥ इति ( मनु० अ० ८ श्लो० १३२ ) । स च जन्यद्रव्यावयव इति ज्ञेयम् । परमाणुद्वयेनाणुस्त्रसरेणुस्तु ते त्रयः इति ( ब्रह्मवै० पु० ) ( वाच० ) । अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः

इति ( भाग० ३।१२।५ ) । २ महादेवभट्टास्तु त्रिभिः सहितो रेणुः त्रसरेणुः इति व्युत्पत्त्या त्रिभिः परमाणुभिरेव त्रसरेणुः त्र्यणुकं वा भवतीत्याहुः ( दि० ) ( राम० १ पृ० ६९ ) । ३ त्रयोणवस्त्रसरेणुरिति बादरायणाचार्या आहुः इति केचित् । ४ भिषजस्तु जालान्तरगते सूर्यकरे ध्वंसी विलोक्यते । त्रसरेणुश्च स ज्ञेयस्त्रिंशता परमाणुभिः ॥ इत्याहुः । ५ सूर्यपत्नीति पौराणिका आहुः ( वाच० ) ।

**त्राणम्**—[ क ] अनिष्टनिवृत्त्यनुकूलो व्यापारः । यथा दस्युभ्यो मैत्रं त्रायते रक्षति कुलालाद्घटं रक्षति इत्यादौ रक्षत्यर्थः । यन्निष्ठस्वदुःखोपधायकव्यापारविरहानुकूलव्यापारः तदपादानकं स्वकर्मकं रक्षणम् इति परमार्थः । दस्युभ्य इत्यत्र भीत्रार्थानां भयहेतुः ( पा० सू० १।४।२५ ) इत्यनेनापादानसंज्ञा । तदर्थश्च अनिष्टविरहानुकूलव्यापाररूपत्राणार्थकधातुयोगे यदनिष्टप्रयोजकं तदपादानम् इति । अनिष्टं च दुःखमेव ( ग० व्यु० का० ५ पृ० १०६ ) । घटाद्यचेतनकर्मकरक्षणं च यन्निष्ठस्वविनाशोपधायकव्यापारविरहानुकूलव्यापारः तदपादानकं स्वकर्मकं रक्षणमिति निर्वाच्यम् । कुलालाद्घटं रक्षतीत्यादौ प्रयोज्यत्वं पञ्चम्यर्थः । तथा च कुलालप्रयोज्यो यो घटनाशोपधायकव्यापारः तद्विरहानुकूलव्यापारकर्ता इति बोधः । यथा वा न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ( मनुः अ० ११ श्लो० ११३ ) इत्यादौ । [ ख ] केचित्तु अनिष्टपरिहारः । यथा चोरात्त्रायत इत्यादौ इत्याहुः । अत्र चोरापादानकानिष्टपरिहारः इति बोधः ।

**त्रिपुटी**—मितिमातृमेयविषयिका प्रमा । यथा प्रभाकरमते सर्वस्य ज्ञानस्य मितिमातृमेयविषयकत्वात् त्रिपुटीप्रत्यक्षतेति ( त० प्र० ख० ४ पृ० १२९ ) ।

**त्रिमूर्तिनी**—त्रिवर्षा कन्या ( कल्याणीशब्दे दृश्यम् ) ।

**त्रिवृत्**— स्तोमः । यथा त्रिवृद्बहिष्पवमानः ( जै० न्या० अ० १०।५।६ अधि० ७ ) ।

**त्रिस्पृशा**—एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिस्पृशा नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहति ( पु० चि० पृ० १७६ ) ।

**त्रुटिः**—१ द्व्यणुकं त्र्यणुकं वा । यथा परं वा त्रुटेः ( गौ० ४।२।१५ ) इत्यत्र त्रुटिशब्दार्थः । तदुक्तम् त्रुटेरवयवस्तदवयवो वा परमाणुरिति ( गौ० वृ० ४।२।१५ ) । त्रुटिश्च जन्यो द्रव्यावयवः । मीमांसकाश्चैवमाहुः । त्रुटावेवावयवधाराविश्रामात् त्रुटिरेव परमाणुरिति ( दि० १ पृ० ६९ ) । २ त्रसरेणुत्रिकं भुङ्क्ते यः कालः सा त्रुटिः स्मृता ( भाग० ३।१२।६ ) इति बादरायणाचार्या आहुः । अत्रोच्यते अणुर्द्वौ परमाणू स्यात् त्रसरेणुस्त्रयः स्मृतः । जालार्करश्म्यवगतः खमेवानुपतन्नगात् ॥ त्रसरेणुत्रिकं भुङ्क्ते यः कालः सा त्रुटिः स्मृता । तत्रिभागस्तु वेधः स्यात् तैस्त्रिभिस्तु लवः स्मृतः ॥ निमेषस्त्रिलवो ज्ञेय आम्नातास्ते त्रयः क्षणः इत्यादि ( भाग० ३।१२।५–७ ) । तत्परस्य शतभागकालरूपा त्रुटिरिति गणका आहुः । अत्रोच्यते योऽक्ष्णोर्निमेषस्य खराम–( ३० ) भागः स तत्परस्तच्छतभाग उक्ता । त्रुटिर्निमेषैर्धृति–( १८ )भिश्च काष्ठा तत्त्रिंशता सद्गणकैः कलोक्ता ॥ इति ( सि० शि० ) । क्षणद्वयात्मकः कालस्त्रुटिरिति भरत आह । द्वौ निमेषौ त्रुटिर्ज्ञेया । अहोरात्रशब्दे दृश्यम् । ३ संशयः । ४ अल्पम् इति काव्यज्ञा आहुः ( वाच० ) ।

**त्र्यणुकम्**—त्रिभिर्द्व्यणुकैर्यदुत्पद्यते तत् ( त० दी० १ पृ० ९ ) ( दि० १।२ ) ( त० कौ० १ पृ० ३ ) ( त० भा० प्रमेय० पृ० २८ ) ( सि० च० १ पृ० ५ ) । तद्यथा गवाक्षरन्ध्रे तरणिकिरणस्थं निरीक्ष्यते । यद्रजः सर्वतः सूक्ष्मं त्र्यणुकं तन्निगद्यते ॥ इति ( सि० च० १ पृथिवी० पृ० ५ ) । त्रिभिः परमाणुभिरेव त्र्यणुकम् इति महादेवभट्टा आहुः ( दि० १।२ पृथिवी० पृ० ६९ ) । संयुक्ताणुषट्कं त्र्यणुकमिति नास्तिका आहुः ( प० मा० ) । तच्च जन्यद्रव्यावयवः इति ज्ञेयम् । त्र्यणुकरूपेऽर्थे त्रसरेणुपदमपि त्रिभिः सहितो रेणुस्त्रसरेणुः इति व्युत्पत्त्या प्रयोक्तुं युज्यते ( राम० १ पृथि० पृ० ६९ ) ।

त्वक्—१ ( इन्द्रियम् ) [ क ] स्पर्शग्राहकं महदिन्द्रियम् ( न्या० म० १ पृ० १४ ) । त्वचि स्थितमिन्द्रियं त्वगिन्द्रियम् ( दि० १ पृ० ८५ ) । पृथिव्याद्यनभिभूतैर्वाय्ववयवैरारब्धं सर्वशरीरव्यापि त्वगिन्द्रियम् ( प्रशस्त० ) । तच्च देहव्यापि त्वचि स्थितम् सूक्ष्मवायोः सत्त्वांशेनोत्पन्नं वाताधिष्ठातृदेवताकं च इति केचिच्छास्त्रकारानुयायिन आहुः ( वेदा० सा० ) । त्वगिन्द्रियस्य वायवीयत्वे प्रमाणमनुमानम् । तच्च अनुमानम् त्वगिन्द्रियं वायवीयम् द्रव्यत्वे सति रूपादिषु पञ्चसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वादङ्गसङ्गिसलिलशैत्यव्यञ्जकव्यजनपवनवत् इति ( सि० च० १ पृ० ८ ) ( मु० १ वायु० पृ० ८५ ) ( त० भा० प्रमेय० पृ० २६ ) ( प्र० प्र० इन्द्रि० पृ० ११–१२ ) । महदुद्भूतस्पर्शवद्द्रव्यम् उद्भूतस्पर्शश्च त्वगिन्द्रियेण गृह्यते । तेन वायुपरमाणुप्रदीपप्रभादयस्त्वचा न गृह्यन्ते । परमाणोर्महत्त्वाभावात् प्रभाया उद्भूतस्पर्शाभावात् ( न्या० म० १ पृ० ६ ) । एवम् रूपभिन्नं रूपत्वादिभिन्नं च यच्चक्षुर्योग्यं तत् त्वगिन्द्रियेणापि गृह्यते ( मु० १ पृ० ११३ ) । किं च त्वगिन्द्रियं महत्त्वोद्भूतरूपस्पर्शवद्द्रव्यतद्वृत्तिकर्मसामान्यसमवायसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहानामपि ग्राहकम् ( सि० च० वायुनि० पृ० ८ ) । [ ख ] स्पर्शोपलब्धिसाधनमिन्द्रियम् ( त० भा० प्रमेय० पृ० २६ ) । [ ग ] जले शीतस्पर्शः इति स्पर्शप्रत्यक्षासाधारणं कारणम् ( प्र० प्र० इन्द्रिय० पृ० ११ ) । [ घ ] शरीरव्यापकं स्पर्शग्राहकमिन्द्रियम् ( मु० १ वायु० पृ० ८५ ) । यथा द्रव्याध्यक्षे त्वचो योगो मनसा ज्ञानकारणम् ( भा० प० श्लो० ५८ ) इत्यादौ । यथा वा देहव्यापि त्वगिन्द्रियम् ( भा० प० श्लो० ४४ ) इत्यादौ । २ वृद्धिक्षयवद्द्रव्यसहजावरणं त्वगित्युच्यते ( वै० उ० ३।१।९ ) ।

त्वम्—[ क ] तत्कालीनसंबोध्यचैत्रत्वमैत्रत्वादिविशिष्टः ( दि० ४ पृ० १७८–१७९ ) । [ ख ] स्वजन्यबोधाश्रयतया वक्त्रभिप्रायविषयतावच्छेदकत्वरूपस्वसंबोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नः ( ग० शक्ति० पृ० ७३ ) । यथा भो चैत्र त्वमत्रागच्छेत्यादौ त्वंपदार्थः । युष्मत्पद-

स्थले संकेतश्च स्वजन्यबोधवत्त्वेनाभिप्रायविषयतावच्छेदकावच्छिन्नविषयकत्व स्वजन्यत्व एतदुभयसंबन्धेन युष्मत्पदप्रकारकबोधविषयकोभ्युपेयते (ग० शक्ति० टीका० पृ० ७५)। तत्र बोधः तादृशोभयसंबन्धेन युष्मत्पदवान् भवतु इत्याकारकः संकेतो ज्ञेयः । [ग] संबोध्यश्चेतनस्त्वंपदार्थ इति शाब्दिकादय आहुः ।

**त्वाष्ट्रम्**—(नक्षत्रम्) चित्रा (पु० चि० पृ० ३५७)।

## द.

**दक्षिणः**—१ [क] शरीरावयववृत्तिजातिमान् (वै० उ० २।२।१०)। यथा पुरुषस्य दक्षिणभाग इत्यादौ । [ख] अवामो देहभागविशेष इत्यपि केचित् । २ नायकनायिकाविशेषाविति साहित्यशास्त्रज्ञाः । ३ परच्छन्दानुवर्ती । ४ कुशल इति काव्यज्ञाः ।

**दक्षिणा**—१ यज्ञायन्ते दानम् । अत्राम्नायते तस्मान्नादक्षिणं हविः स्यात् इति शतपथश्रुतिः । पुराणमपि अदत्तदक्षिणं दानं व्रतं चैव नृपोत्तम । विफलं तद्विजानीयाद्भस्मनीव हुतं हविः ॥ इति (भविष्यपु०) (वाच०)। आनत्यर्थदान एव दक्षिणाशब्दो रूढः (जै० सू० वृ० अ० १० पा० २ सू० ३६)। २ (दिक्) [क] प्राच्यभिमुखपुरुषदक्षिणभागावच्छिन्ना दिक् (वै० उ० २।२।१०) (वै० २।२।१५)। अत्र दक्षिणत्वं तु शरीरावयववृत्तिजातिविशेषः । [ख] मेरुव्यवहितदेशावच्छिन्ना दिक् (वाक्य० १ पृ० ५) (न्या० बो० १ पृ० ३) (मु० १ पृ० ९४) (वै० वि० २।२।१०) । यथा झळकीग्रामादक्षिणस्यां दिशि विजयपुरम् (विजापुर) । अत्र च झळकीनिष्ठमेरुगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्यापकसंख्यापर्याप्त्यधिकरणमेरुगिरिसंयुक्तसंयोगवन्मूर्तवृत्ति विजयपुरम् इति शाब्दबोधः । दक्षिणदिगधिपो भौमः । यथाह सूर्यः सोमः क्षमापुत्रः सैंहिकेयः शनिः शशी । सौम्यस्त्रिदशमन्त्री च प्राच्यादिदिगधीश्वराः ॥ इति (ज्योति० त०)।

**दण्डः**—१ लगुडः । यथा घटं प्रति दण्डो निमित्तं कारणमित्यादौ । २ [ क ] ग्रहणावच्छिन्नशासनम् । [ ख ] ग्रहणपूर्वकशासनम् । यथा प्रजाः शतं दण्डयति राजा गर्गाः शतं दण्ड्यन्त इत्यादौ दण्ड्यर्थः इति व्यवहारशास्त्रज्ञा आहुः । शासनं नियन्त्रणम् । अत्र शतग्रहणानुकूलं यत् प्रजानां शासनम् तत्कर्ता इत्येवं बोधः ( श० प्र० श्लो० ७३ पृ० ९८ ) ।

**दण्डनीतिः**—विद्याविशेषः । तच्च अर्थशास्त्रम् ( कुल्लूकः मनु० टी० ७।४३ ) ( अमरः ) । यथा कामन्दकिनीतिशास्त्रम् । अत्रोच्यते त्रयी चान्वीक्षिकी चैव वार्ता च भरतर्षभ । दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः ॥ इति ( भा० शा० अ० ५९ ) । त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् । आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः ॥ इति ( मनु० अ० ७ श्लो० ४३ ) ।

**दण्डपारुष्यम्**—परगोत्रेष्वभिद्रोहो हस्तपादायुधादिभिः । भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥ ( मिताक्षरा २।२१२ ) ।

**दत्तम्**—पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः । स्त्रीशुल्कादिग्रहार्थं च दत्तं दानविदो विदुः ॥ ( मिताक्षरा २।१७६ ) ।

**दत्ताप्रदानिकम्**—दत्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति । दत्ताप्रदानिकं नाम व्यवहारपदं हि तत् ॥ ( मिताक्षरा २।१७५ ) ।

**दमः**—१ कुत्सितात्कर्मणो मनोनिवर्तनम् । २ बाह्येन्द्रियनिग्रह इति वेदान्तिनः । ३ दण्डनमिति धर्मशास्त्रज्ञाः । ४ कर्दम इति काव्यज्ञा आहुः ( वाच० ) ।

**दम्भः**—[ क ] कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छा ( गौ० वृ० ४।१३ ) । [ ख ] धार्मिकत्वेन ख्यापनम् । यथा अभिसंधाय तु फलं दम्भार्थमपि चैव यत् । इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ ( गीता० अ० १७ श्लो० १२ ) इत्यादौ ( ल० म० ) । [ ग ] अधार्मिकेणात्मनो धार्मिकत्वस्य ख्यापनमिति केचित् । यथा द्वेषं दम्भं च मानं च क्रोधं तैक्ष्ण्यं च वर्जयेत् ( मनु० ) इत्यादौ ।

दया—१ परदुःखप्रहरणेच्छा । यथा प्राणा यथात्मनोमीष्टा भूतानामपि ते तथा । आत्मौपम्येन सर्वत्र दयां कुर्वन्ति साधवः ॥ इत्यादौ । अत्रोच्यते । यत्नादपि परक्लेशं हर्तुं या हृदि जायते । इच्छा भूमिसुरश्रेष्ठ सा दया परिकीर्तिता ॥ इति ( वाच० ) । २ शान्तिरसस्य व्यभिचारिभावो दया इति रसशास्त्रज्ञा वदन्ति । यथाह शान्तरसोपक्रमे रोमाञ्चाद्याः स्वानुभावास्तथा स्युर्व्यभिचारिणः । निर्वेदहर्षस्मरणमतिभूतदयादयः ॥ इति ( सा० द० ) ।

दर्पः—१ परावधीरणाहेतुश्चित्तवृत्तिविशेषः । यथा अहंकारश्च सर्वेषां पापबीजममङ्गलम् । ब्रह्माण्डेषु च सर्वेषां गर्वपर्यन्तमुन्नतिः ॥ येषां येषां भवेद्दर्पो ब्रह्माण्डेषु परात्परे । विज्ञाय सर्वं सर्वात्मा तेषां शास्ताहमेव च ॥ इति ( ब्रह्मवैव० ) इत्यादौ । २ दुःखिप्रतियोगिकः सुखित्वप्रयुक्तः चित्तवृत्तिविशेषः इति योगशास्त्रज्ञा आहुः ( पात० भा० ) ( वाच० ) । ३ उत्साहः । यथा तेजोविहीनं विजहाति दर्पः ( किरा० ) इत्यादौ इति काव्यज्ञा आहुः ।

दर्शनम्—१ चाक्षुषप्रत्यक्षम् । यथा घटं पश्यतीत्यादौ धात्वर्थः । अत्र घटपदोत्तरद्वितीयाया लौकिकविषयित्वमर्थः । तस्य धात्वर्थेन्वयः ( ग० व्यु० का० २ ) । २ ज्ञानम् । यथा विश्वं मिथ्या दृश्यत्वात् शुक्तिरजतवत् इत्यादौ । ३ सूक्ष्मव्यवहितविप्रकृष्टाशेषचाक्षुषस्पर्शादिविषयं ज्ञानं दर्शनम् ( सर्व० सं० पृ० १६६ नकुली० ) । ४ तत्त्वज्ञानसाधनं शास्त्रम् । यथा महर्षिगौतममुनिप्रणीतं न्यायदर्शनम् । तच्च दर्शनं द्विविधम् । आस्तिकदर्शनम् नास्तिकदर्शनं चेति । तत्रास्तिकदर्शनं मुख्यत्वेन षड्विधम् । सांख्यपातञ्जलपूर्वमीमांसोत्तरमीमांसातर्कन्यायभेदेनेति । तदुक्तम् ॥ द्वौ योगौ द्वे च मीमांसे द्वौ तर्काविति षट् बुधाः इति । एतानि शास्त्राण्याहुरिति शेषः । तत्र सांख्यं कपिलकृतं द्वाविंशतिसूत्रात्मकम् अध्यायषट्कात्मकं च निरीश्वरवादः । पातञ्जलम् पतञ्जलिकृतं पादचतुष्टयात्मकं योगशास्त्रम् । पूर्वमीमांसा जैमिनिकृतं द्वादशाध्यायात्मकं कर्मकाण्डम् । उत्तरमीमांसा वेदव्यासकृतमध्यायचतुष्टयात्मकं

ज्ञानकाण्डम् । तर्कः कणादमुनिकृतमध्यायदशकं वैशेषिकशास्त्रम् । न्यायस्तु गौतममहर्षिप्रणीतं पञ्चाध्यायात्मकं न्यायशास्त्रम् इति । अत्र प्रशंसा षड्दर्शनानि मेऽङ्गानि पादौ कुक्षिः करौ शिरः । तेषु भेदं तु यः कुर्यान्मदङ्गच्छेदको हि सः ॥ इति ( तन्त्रशास्त्रम् ) । तत्र योगशास्त्रं पूर्वं हिरण्यगर्भोपदिष्टस्यैव योगशास्त्रस्य संक्षिप्तानुवादरूपमिति ज्ञेयम् ( योग याज्ञ० ) । उत्तरमीमांसा च वेदान्तदर्शनमित्युच्यते । तत्रापि मुख्यत्वेन त्रीणि दर्शनानि द्वैताद्वैतविशिष्टाद्वैतप्रतिपादकानि । तत्र द्वैतदर्शनम् वाय्ववतारत्वेन प्रसिद्धैर्मध्वाख्यश्रीपूर्णप्रज्ञाचार्यैः प्रणीतम् ३७ ग्रन्थात्मकम् । अद्वैतदर्शनम् शंकरावतारत्वाभिमतशंकराचार्यप्रणीतम् । विशिष्टाद्वैतदर्शनं च प्राकृतभाषया द्रमिडकृतमूलम् शेषावतारत्वाभिमतरामानुजाचार्यकृततन्मूलव्याख्यानरूपम् इति । वैशेषिकशास्त्रादीनां पद्मपुराणे उल्लेखो दृश्यते । यथा कणादेन च संप्रोक्तं शास्त्रं वैशेषिकं महत् । गौतमेन तथा न्यायं सांख्यं च कपिलेन वै ॥ इत्यादि ( पद्मपुराणे उत्त० ख० अ० २०७ ) ( वाच० ) । नास्तिकदर्शनमपि षड्विधम् । चार्वाकसौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकार्हतभेदात् । तत्र मध्यमाश्चत्वारो बौद्धविशेषाः ।

**दशा**—१ कालविशेषः । यथा सत्प्रतिपक्षतादशायाम् ( ग० व्याव० सत्प्र० ) इत्यत्र साध्यतदभावव्याप्यवत्तापरामर्शद्वयसंवलनकालः । २ बाल्यं यौवनं जरा इत्यवस्था इति पौराणिका आहुः । ३ जाग्रत्स्वप्नसुषुप्तय इत्यवस्था इति वेदान्तिनः । ४ गर्भवासाद्यवस्था इति भिषजः । ताश्च दश गर्भवासः जन्म बाल्यम् कौमारम् पौगण्डम् यौवनम् स्थविरता जरा प्राणरोधः नाशः चेति ( वाच० ) । ५ कामकृता विरहिणां नेत्ररागाद्यवस्था इति कामशास्त्रज्ञाः । ता अपि दश नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोथ संकल्पः । निद्राछेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥ उन्मादो मूर्छा मृतिरित्येताः स्मरदशा दशैव स्युः इति ( वाच० ) । ६ नक्षत्रानुसारेण सूर्यादिग्रहाणां स्वामित्वेन भोग्यकालो दशा इति ज्योतिर्विदः । ७ चित्तमित्यजयपाल आह । दीपवर्ती इति काव्यज्ञा आहुः ।

**दशापवित्रम्**—[ क ] वासःखण्डः। यथा दशापवित्रेण ग्रहं संमार्ष्टि (जै० न्या० अ० ३ पा० १ अधि० ७)। [ ख ] दशापवित्रं खण्डपटः (जै० सू० वृ० अ० ३ पा० १ सू० १२)।

**दा**—(धातुः) उत्सर्गपूर्वः स्वस्वत्वनिवृत्तिपूर्वः परस्वत्वेन संबन्धः (जै० सू० वृ० अ० ४ पा० २ सू० २९)।

**दाक्षायणयज्ञः**—आवृत्त्या युक्तः प्रकृतो दर्शपूर्णमासात्मको यज्ञो दाक्षायणयज्ञः। आवृत्तिप्रकारस्तु द्वे पौर्णमास्यौ यजेत द्वे अमावास्ये इत्यादिवाक्यशेषादवगम्यते (जै० न्या० अ० २ पा० ३ अधि० ४)।

**दाक्षिण्यम्**—तत्त्वज्ञानाभिनिवेशिनी बुद्धिः (न्या० क० पृ० १०)।

**दानम्**—१ [ क ] स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूलेच्छा। यथा ब्राह्मणाय धनं ददातीत्यादौ ददात्यर्थः। अत्र तादृशस्वत्वरूपधात्वर्थतावच्छेदकफल एव द्वितीयार्थान्वयः। उपेक्षायामतिव्याप्तिवारणाय परस्वत्वनिवेशः (ग० व्यु० का० २ ख० १ पृ० ४३)। [ ख ] स्वस्वत्वध्वंसानुकूलपरस्वत्वप्रकारिकेच्छा। दानं च न संप्रदानस्वत्वजनकम् अपि तु तत्स्वीकार एव इति मताभिप्रायेणेदं निर्वचनम्। एतन्मते ब्राह्मणाय धनं ददातीत्यादौ स्वस्वत्वध्वंसरूपफलाश्रयत्वाद्धनस्य कर्मता इति बोध्यम् (ग० व्यु० का० २ पृ० ४३)। [ग] मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वत्वजनकत्याग इति संप्रदायः (दि० गु०)। यथा विप्राय गां ददातीत्यादौ ददात्यर्थः। अत्र मूल्यग्रहणं विना विप्रोद्देश्यकगोवृत्तिस्वस्वत्वध्वंसपरस्वत्वजनकत्यागानुकूलकृतिमान् इत्यन्वयबोधः (का० व्या० पृ० ५)। [ घ ] शास्त्रोक्तसंप्रदानस्वत्वावच्छिन्नद्रव्यत्याग इति रत्नाकरप्रभृतयः। अत्रोद्देश्यपात्रविशेषो यदि न तद्द्रव्यं स्वीकरोति तदा सोपाधित्यागविशेषस्यानिर्वाहान्न दातुः स्वत्वं निवर्तेत इति तन्मताभिप्रायो ज्ञेयः। [ ङ ] शास्त्रोक्तसंप्रदानस्वत्वापादकद्रव्यत्याग इति केचिच्छास्त्रज्ञा आहुः। अत्रायमाशयः। प्रदानं स्वाम्यकरणम् इति मनूक्तेः दानमात्रात् संप्रदानस्य तद्विषयज्ञानाभावदशायामपि स्वत्वमुत्पद्यते पितुः स्वत्वोपरमात्तद्धने गर्भस्थस्येव इति। तथा च दत्तस्य प्रतिग्रहः न तु प्रतिग्रहघटितं दानम्

इति ( वाच० ) । २ परायत्तीकरणम् । तदायत्तीकरणं च तत्कर्तृक-निर्णेजनेच्छाप्रकाशको व्यापारः । यथा रजकस्य वस्त्रं ददातीत्यादौ ददात्यर्थः । निर्णेजनं च मलापकर्षः । अत्र ददात्यर्थैकदेशे कर्तृत्वे रजकस्य संबन्धविवक्षायां शैषिकी षष्ठी इति ज्ञेयम् ( ग० व्यु० का० ४ पृ० ९६ ) । शैषिकी षष्ठी च षष्ठी शेषे ( पा० सू० २।३।५० ) इत्यनेन सूत्रेण विधीयते । तदर्थश्च कारकप्रातिपदिकार्थातिरिक्तः संबन्धरूपोर्थः शेषः तद्विवक्षायां षष्ठी इति । ३ तत्कर्तृकताडनानुमति-प्रकाशकव्यापारः । यथा हन्तुः पृष्ठं ददातीत्यादौ ददात्यर्थः । अत्रापि ददात्यर्थैकदेशे कर्तृत्वे हन्तुः संबन्धविवक्षायां षष्ठी इति ज्ञेयम् । एवम् संवाहकस्य चरणं ददातीत्यादावूहनीयम् ( ग० व्यु० का० ४ पृ० ९६ ) ( ल० म० सुब० पृ० १०१ ) । ४ उत्पादकव्यापारः । यथा शत्रवे भयं ददातीत्यादौ ददात्यर्थः । अत्र ददातेः जनयति इत्यर्थो भाक्तः । एवं च उत्पादकव्यापाररूपे धात्वर्थे भयरूपं यत् कर्म तद्योगितयोद्देश्यत्वाच्छत्र्वादेः संप्रदानत्वम् ( ग० व्यु० का० ४ पृ० ९५ ) । ५ संयोगविशेषानुकूलो व्यापारः । यथा खण्डिकोपाध्यायस्तस्मै चपेटां ददातीत्यत्र ददात्यर्थः । चपेटा प्रसृतकरतलम् ( ल० म० सुब० पृ० १०१ ) । ६ बोधनम् । यथा न शूद्राय मतिं दद्यात् ( मनुः अ० ४ श्लो० ८० ) इत्यादौ ददात्यर्थः । अत्र मतिशब्देन तज्जनकं वेदादिरूपं शास्त्रमुच्यते ( ल० म० सुब० पृ० १०१ ) । कुल्लूकभ-ट्टस्तु मतिशब्देन दृष्टार्थोपदेश उच्यते धर्मोपदेशस्य पृथङ्निर्देशात् इत्याह ( मनु० टी० ४।८० ) । ७ छेदनम् । ८ पालनम् । ९ शुद्धिः । १० गजमदजलमिति काव्यज्ञा आहुः ( वाच० ) ।

**दायः**— यद्धनं स्वामिसंबन्धादेव निमित्तादन्यस्य स्वं भवति तत् ( मिता-क्षरा अ० २ श्लो० ११४ ) ।

**दायादबान्धवः**—औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नो-पविद्धश्च दायादा बान्धवाश्च षट् ॥ ( मिताक्षरा० अ० २ श्लो० १३२ ) ।

**दार्ष्टान्तिकत्वम्**—दृष्टान्तप्रयुक्तोपमेयत्वम् । यथा चन्द्रवन्मुखमित्यादौ मुखस्य दार्ष्टान्तिकत्वम् ।

**दासः**—दीयतेस्मै स्वामिना सर्वं यथाभिलषितमिति दासः ( सर्व० सं० पृ० १९१ प्रत्यभि० ) । दासभेदा मिताक्षरायामुक्ताः । गृहजातस्तथा क्रीतो लब्धो दायादुपागतः । अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥ मोक्षितो महतश्चर्णाद्युद्धप्राप्तः पणे जितः । तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥ भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः । विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥ ( मिताक्षरा २।१८२ ) ।

**दिक्**—( द्रव्यम् ) अकालत्वे सत्यविशेषगुणा महती ( सर्व० पृ० २१९ औलू० ) । दिक्चानियतोपाध्युन्नायिकास्ति ( वै० उ० २।२। १० ) । कालस्तु नियतक्रियासंबन्धघटक एवेति न तस्य प्राच्यादिसंबन्धघटकता ( प० मा० ) । अयं भावः । भवति हि यदपेक्षया यो वर्तमानः स तदपेक्षया वर्तमान एव इति कालो नियतोपाध्युन्नायकः । दिगुपाधौ तु नैवं नियमः । यं प्रति या प्राची तं प्रत्येव कदाचित्तस्याः प्रतीचीत्वात् इति ( वै० उ० २।२।१० ) । दिक् जगदाधारा निखिलकार्यनिमित्तकारणं च इति विज्ञेयम् ( सि० च० १ पृ० १० ) ( त० दी० १ पृ० १० ) । अत्र शाब्दिकाः शब्दतन्मात्रपरिणाम एव दिक् इत्याहुः ( ल० म० लका० पृ० २० ) । दिशो लक्षणं च प्राच्यादिव्यवहारजनकतावच्छेदकमुख्यविशेष्यत्वम् ( वाक्य० १ पृ० ५ ) । विभुत्वे सति दैशिकपरत्वापरत्वासमवायिकारणसंयोगाश्रयत्वाद्युपाधिरूपं दिक्त्वम् ( प० मा० ) । साच दिक् दूरान्तिकादिधीहेतुः ( भा० प० श्लो० ४७ ) । दूरत्वं दैशिकपरत्वम् । तच्च बहुतरमूर्तसंयोगविशिष्टपिण्डज्ञानादुत्पद्यते । अन्तिकत्वं तु दैशिकमपरत्वम् । तच्च अल्पतरमूर्तसंयोगविशिष्टपिण्डज्ञानादुत्पद्यते ( सि० च० १ पृ० १० ) । तथा च इतोल्पतरसंयुक्तसंयोगाश्रयादिदं बहुतरसंयुक्तसंयोगाधिकरणं परम् इतश्च संयुक्तसंयोगभूयस्त्वाधिकरणादिदं संयुक्तसंयोगाल्पीयस्त्वाधिकरणमपरम् इति नियतदिग्देशयोः समानकालयोः पिण्डयोर्यतो द्रव्याद्भवति सा दिगित्यर्थः ( वै० उ० २।२।१० ) ।

अत्र सूत्रम् इत इदमिति यतस्तद्दिश्यं लिङ्गम् (वै० २।२।१०) इति। अस्मादिदं दूरम् अस्मादिदमन्तिकम् इति दैशिकपरत्वापरत्वबुद्धिर्यतस्तद्दिग्लिङ्गम् । तथा दैशिकपरत्वापरत्वासमवायिकारणसंयोगाश्रयतया दिक् सिध्यति (वै० वि० २।२।१०) (मु० १)। दिक्च पूर्वादिप्रत्ययैरनुमेया। तेषामन्यनिमित्तासंभवात् (त० भा०)। दूरत्वसंनिहितत्वज्ञानाधीनपरत्वापरत्वानुमेयेति यावत् (प्र० प्र०) (त० कौ० पृ० ३)। तथा च तादृशपरत्वापरत्वे सासमवायिकारणके भावकार्यत्वाद्घटवत् इत्यनुमानं द्रष्टव्यम्। अत्रासमवायिकारणं च दिक्पिण्डसंयोगः तदाश्रयो दिगिति दिक्सिद्धिर्बोध्या । दिक् च पूर्वादिप्रत्ययलिङ्गा इति प्रशस्तपादैरुक्तम् (प्रश० पृ० ८) । मूर्तं द्रव्यमवधिं कृत्वा मूर्तेष्वेव द्रव्येषु एतस्मादिदं पूर्वेण दक्षिणेन पश्चिमेन उत्तरेण पूर्वदक्षिणेन दक्षिणापरेण अपरोत्तरेण उत्तरपूर्वेण अधस्तात् उपरिष्टाच्च इति दश प्रत्यया यतो भवन्ति सा दिक्। अत्रोच्यते। कृत्वैकमवधिं तस्मादिदं पूर्वं च पश्चिमम्। इति निर्दिश्यते देशो यया सा दिगिति स्मृता ॥ इति । दिग्लिङ्गाविशेषाद्दिश एकत्वेपि परमर्षिभिः श्रुतिस्मृतिलोकसंव्यवहारार्थं मेरुं प्रदक्षिणीकृत्य वर्तमानस्य भगवतः सवितुर्ये संयुक्ता लोकपालपरिगृहीतदिक्प्रदेशास्तेषां प्राच्यादिभेदेन दशविधाः संज्ञाः कृताः। अतो भक्त्या दश दिशः सिद्धाः। तथा च दिग्दशविधा। प्राची अवाची प्रतीची उदीची आग्नेयी नैर्ऋती वायवी ऐशानी ऊर्ध्वा अधः इति (वै० उ० २।२।१०) (वै० २।२।१५-१६) (वराहपु०)। तासामेव पुनर्देवतापरिग्रहवशाद्दश संज्ञा भवन्ति माहेन्द्री वैश्वानरी याम्या नैर्ऋती वारुणी वायव्या चान्द्रमसी ऐशानी ब्राह्मी नागी च इति (प्रशस्त० पृ० ८)। प्राच्यादिव्यवहारहेतुर्दिक् (त० सं०)। इयं प्राची इयं प्रतीची इत्यादिवाक्यप्रयोगरूपव्यवहारहेतुरित्यर्थः (वाक्य० २ पृ० ५)। उदयाचलाद्युपाधियोगात्प्राच्यादिव्यवहारभागित्यर्थः (प्र० प्र०)। तथा च प्राच्यां घटः इत्यादिव्यवहारबलादुदयाचलसंयोगादिलक्षणघटादिसंबन्धघटकत्वेन दिक्सिद्धिः (प० मा०)। सा चैका विभ्वी नित्या च (वै० २।२।

११–१२ ) ( त० सं० )। तथाप्युपाधिभेदाच्चतुर्विधा प्राची प्रतीची उदीची दक्षिणा चेति (त० कौ० पृ० ३ ) ( त० भा० पृ० ३१) । अत्रायं नियमः सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः इति ( मु० १ दिक्० पृ० ९४ ) (सि० च० १ पृ० १० )। यद्यपि दिगेकैव तथाप्युपाधिभेदात्प्राच्यादिभेदव्यवहारः ( भा० प० श्लो० ४८ )। कार्यभेदाच्च नाना ( वै० २।२।१३–१४ )। दिशि पञ्च गुणा वर्तन्ते। संख्या परममहत्परिमाणं पृथक्त्वं संयोगः विभागश्चेति ( त० भा० पृ० ३१ ) ( भा० प० श्लो० ३३ )।

**दिगुपाधिः**—प्राच्यादिव्यवहारोपपादकं मूर्तद्रव्यम्। यथा उदयाचलः प्राच्या उपाधिः ( वै० २।२।१४–१६ )। दिगुपाधयः पञ्च मूर्तानि पृथिवी आपः तेजः वायुः मनश्चेति।

**दिग्विशेषणता**—( स्वरूपसंबन्धः ) सर्वाधारतानियामको दिकृतविशेषणताख्यः। अयमेव दैशिकविशेषणताशब्देन व्यवह्रियते।

**दिङ्मात्रम्**—१ स्वल्पम्। २ एकदेशः। यथा दिङ्मात्रमुदाह्रियते इत्यादौ।

**दिनम्** }
**दिवसः** } —सूर्यकिरणावच्छिन्नः कालः। यथा आयोजयत्स धर्मात्मा दिवसे दिवसेत्र च ( भा० उ० अ० १८२ ) इत्यादौ ( वाच० )। पुरुषार्थचिन्तामणौ त्वित्थमुक्तम्। तिथिनैकेन दिवसश्चान्द्रमानेन कीर्तितः। अहोरात्रेण चैकेन सावनो दिवसः स्मृतः॥ आदित्यभागभोगेन सौरो दिवस उच्यते। चन्द्रनक्षत्रभोगेन नाक्षत्रो दिवसः स्मृतः॥ (पु० चि० पृ० २ )। नाडीषष्टितमस्तत्र सावनो दिवसः स्मृतः। त्रिंशभागोर्कराशेस्तु दिवसः सौर उच्यते॥ चान्द्रस्तु तिथ्यवच्छिन्नो भौमो भूपरिधेर्मतः इति ( वाच० )। दिवसश्चतुर्विधः मानुषपित्र्यदैवब्राह्मभेदात्। तत्र षष्टिदण्डात्मको मानुषो दिवसः। चान्द्रमासात्मकः पित्र्यः। सौरवर्षरूपो दैवः। ब्राह्मः कल्परूपः इति।

**दिवाकरः**—(तिथिः) सप्तमी। यथा रुद्रविद्धो दिवाकर इत्यादौ। रुद्रः अष्टमी। दिवाकरः सप्तमी ( पु० चि० पृ० १०० )।

**दीक्षा**—१ नियमः । यथा द्वादश यागाङ्गदीक्षाः इत्यादौ । दीक्षणीयेष्ट्या संपन्नः संस्कारो दीक्षा ( जै० न्या० अ० ६ पा० ५ अधि० ८ ) । २ उपनयनसंस्कार इति धर्मज्ञाः । ३ अभीष्टदेवमन्त्रग्रहणे तदुपदेश इति तान्त्रिका आहुः । अत्रोच्यते दीयते विमलं ज्ञानं क्षीयते कर्मवासना । तेन दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः ॥ इति ।

**दीक्षाकारि पञ्चकम्**—द्रव्यं कालः क्रिया मूर्तिर्गुरुश्चैव हि पञ्चमः ( सर्व० सं० पृ० १६४ नकुली० ) ।

**दीपनम्**—तारमायारमायोगो मनोर्दीपनमुच्यते ( सर्व० सं० पृ० ३७० पात० ) ।

**दीर्घत्वम्**—१ ( परिमाणम् ) इदं दीर्घम् इति व्यवहारसिद्धः परिमाणविशेषः ( वै० वि० ७।१।१७ ) । अवयवसंयोगविशेष इति केचित् ( दि० गु० पृ० २०६ ) । महत्त्वावान्तरभेद इति सांख्या आहुः ( वाच० ) । २ द्विमात्राकालिकात्वमिति शाब्दिका वदन्ति । अत्र शिक्षा एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम् ॥ इति ( वाच० ) । ३ सिंहकन्यातुलावृश्चिकराशिषु दीर्घत्वमिति ज्योतिःशास्त्रज्ञाः ( वाच० ) ।

**दुःखम्**—१ ( गुणः ) [ क ] बाधनालक्षणम् ( गौ० १।१।२१ ) । बाधना पीडा । तदेव लक्षणं स्वरूपं यस्य तदित्यर्थः ( गौ० वृ० १।१।२१ ) ( मु० ) । दुःखं तु मनसैव गृह्यते । न्यायनये जीवमात्रवृत्ति चेति विज्ञेयम् । सांख्यमते तु दुःखं चित्तादिधर्म इति ज्ञेयम् । न्यायनये तल्लक्षणं च इतरद्वेषानधीनद्वेषविषयत्वम् । सर्पादावतिव्याप्तिवारणाय इतरद्वेषानधीनेति द्वेषविशेषणं दत्तम् । तेन सर्पद्वेषस्य सर्पजन्यदुःखद्वेषजन्यत्वान्नातिव्याप्तिः ( न्या० बो० गु० पृ० २१ ) । अथवा अनिष्टसाधनताज्ञानानधीनद्वेषविषयत्वम् ( वाक्य० गु० पृ० २१ ) । दुःखत्वं जातिविशेषः ( गौ० वृ० १।१।२१ ) ( मु० ) । कणादश्च कण्ठतः सुखदुःखयोर्मिथो भेदमाह ( वै० १०।१।१ ) । दुःखस्य कार्यं च दैन्य-

मुखमालिन्यादि इति प्रशस्तपादाचार्यादयः ( वै० उ० १०।१।१ पृ० ४१७ ) । कविकल्पलतायां लोकसिद्धानि कतिचिद्दुःखकारणानि दर्शितानि । तानि यथा पारतन्त्र्यम् आधिः व्याधिः मानच्युतिः शत्रुः कुभार्या नैःस्व्यम् कुग्रामवासः कुस्वामिसेवनम् बहुकन्याः वृद्धत्वम् परगृहवासः वर्षाप्रवासः भार्याद्वयम् कुभृत्यः दुर्हलकरणकृषिः इति । एवम् वराहपुराणादावपि कतिचिद्दुःखकारणान्युक्तानि तानि तत एव वेद्यानि ( वाच० ) । [ ख ] प्रतिकूलवेदनीयम् ( वात्स्या० १।१।२ ) ( त० सं० ) । प्रतिकूलवेदनीयतया बाधनात्मकमित्यर्थः ( सर्व० पृ० २४६ अक्ष० ) । अत्र प्रतिकूलत्वं च द्विष्टत्वम् । अत्रेदं बोध्यम् । दुःखं प्रतिकूलवेदनीयतया स्वतो द्वेषविषयः । दुःखसाधनं तु द्विष्टसाधनताज्ञानाद्द्वेषविषयः ( वाच० ) इति । दुःखत्वज्ञानादेव सर्वेषां दुःखं स्वाभाविकद्वेषविषयः । दुःखसाधनं तु द्विष्टसाधनत्वज्ञानाद्द्वेषविषयः ( मु० गु० पृ० २२० ) । दुःखं द्वेषविषयः इति वाक्यवृत्तिः ( वाक्य० गु० पृ० २१ ) । [ ग ] द्वेषाजन्यद्वेषविषयः ( प्र० प्र० गु० पृ० १७ ) । [ घ ] अधर्मजन्यम् सचेतसां प्रतिकूलम् ( भा० प० श्लो० १४६ ) । अधर्ममात्रासाधारणकारणकगुण इत्यर्थः ( सि० च० पृ० ३५ ) । तच्च दुःखमेकविंशतिभेदभिन्नम् । तथाहि शरीरम् षडिन्द्रियाणि षड्विषयाः षड्विधानि प्रत्यक्षाणि सुखं दुःखं चेति । तत्र शरीरं दुःखायतनत्वाद्दुःखम् । इन्द्रियाणि विषयाः प्रत्यक्षाणि च तत्साधनत्वात् । सुखं च दुःखानुषङ्गात् । दुःखं तु स्वरूपत एवेति । सिद्धान्तचन्द्रोदये च दुःखं चतुर्विधमित्युक्तम् ( सि० च० पृ० ३५ ) । देहेन्द्रियादिकं दुःखजनकत्वाद्दुःखत्वेनोपचर्यते ( ता० र० श्लो० ३२ ) । [ ङ ] बुद्धितत्त्वस्य परिणामविशेषः । स च रजःकार्यः इति सांख्याः ( सां० कौ० ) । अत्रोच्यते । दुःखं त्रिविधम् । आध्यात्मिकम् आधिभौतिकम् आधिदैविकं चेति । तत्राध्यात्मिकं द्विविधम् । शारीरम् मानसं च । तत्र शारीरम् वातपित्तश्लेष्मणां वैषम्यनिमित्तम् । मानसं तु कामक्रोधलोभमोहभयेर्ष्याविषादविषयविशेषादर्शननिबन्धनम् । सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् ।

बाह्योपायसाध्यं च दुःखं द्वेधा । आधिभौतिकम् आधिदैविकं च । तत्राधिभौतिकं मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम् । आधिदैविकं यक्षराक्षसविनायकग्रहावेशनिबन्धनं चेति ( सां० कौ० ) । [ च ] उपघातलक्षणं दुःखम् । विषाद्यनभिप्रेतविषयसांनिध्ये सति अनिष्टोपलब्धीन्द्रियार्थसंनिकर्षादधर्माद्यपेक्षादात्ममनसोः संयोगात् अमर्षोपघातदैन्यनिमित्तमुत्पद्यते । तद्दुःखम् अतीतेषु सर्पव्याघ्रचौरादिषु स्मृतिजम् । अनागतेषु संकल्पजम् इति ( प्रशस्त० २ पृ० ३२ ) । २ दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रपञ्चिताः ( सर्व० सं० पृ० ४६ बौ० )।

**दुःखान्तः**—मोक्षः । दुःखान्तो द्विविधः अनात्मकः सात्मकश्चेति । तत्रानात्मकः सर्वदुःखानामत्यन्तोच्छेदरूपः । सात्मकस्तु दृक्क्रियाशक्तिलक्षणमैश्वर्यम् ( सर्व० सं० पृ० १६६ नकुली० ) ।

**दुर्गा**—नववर्षा कन्या ( कल्याणीशब्दे दृश्यम् ) ।

**दूरत्वम्**—दैशिकं परत्वम् ( मु० १ पृ० ९३ ) । स च गुणविशेष एव इति नैयायिकाः । वैशेषिकास्तु दिक्कृतो विप्रकर्षः न तु गुणः इत्याहुः । यथा दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ( भा० प० श्लो० ४७ ) इत्यादौ । झळकीग्रामात्खेटकग्रामापेक्षया मणल्लूरग्रामस्य दूरत्वम् । अत्रेदं बोध्यम् । दूरत्वं च भ्रमविशेषे कारणम् । यथा चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः कारणं भवति ( मुक्ता० गु० पृ० २११ ) । अत्रोक्तम् दोषोप्रमाया जनकः प्रमायास्तु गुणो भवेत् । पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥ ( भा० प० गु० श्लो० १३२ ) इति ।

**दूषकत्वम्**—सदोषत्वसंपादकत्वम् । यथा विपक्षवृत्तित्वं साधारणत्वम् । तन्मात्रस्य दूषकत्वात् ( चि० २ साधा० पृ० ८७ ) इत्यादौ । यथा वा वेदविक्रयिणश्चैव वेदानां चैव दूषकाः । वेदानां निन्दकाश्चैव ते वै निरयगामिनः ॥ ( भा० अनु० श्लो० १६४४ ) इत्यादौ ।

**दूषणम्**—बाधकप्रमाणोपन्यासरूपयुक्तिभिः खण्डनम् ( वै० सा० द० ) ।

**दृक्शक्तिः**—दृक्शक्तिरेकापि विषयभेदात्पञ्चविधोपचर्यते दर्शनं श्रवणं मननं विज्ञानं सर्वज्ञत्वं चेति ( सर्व० सं० पृ० १६६ नकु० ) ।

**दृष्टान्तः**—१ [ क ] लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ( गौ० १।१।२५ ) । लोकसाम्यमनतीता लौकिका नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्ताः । तद्विपरीताः परीक्षकास्तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्तीति । यथा यमर्थं लौकिका बुध्यन्ते तथा परीक्षका अपि सोर्थो दृष्टान्तः । दृष्टान्तविरोधेन हि प्रतिपक्षाः प्रतिषेद्धव्या भवन्तीति । दृष्टान्तसमाधिना च स्वपक्षाः स्थापनीया भवन्तीति। अवयवेषु चोदाहरणाय कल्पत इति ( वात्स्या० १।१।२५ ) । वृत्तिकारैरप्युक्तम् । लौकिकोप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षः प्रतिपाद्य इति फलितोर्थः । परीक्षकः शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षः प्रतिपादक इति फलितोर्थः । बुद्धेः साध्यसाधनोभयविषयिण्याः तदभावविषयिण्या वा साम्यमविरोधो यस्मिन्नर्थे सोर्थो दृष्टान्तः ( गौ० वृ० १।१।२५ ) । [ ख ] यत्र लौकिकपरीक्षकाणां दर्शनं न व्याहन्यते सः ( वात्स्या० १।१।१ ) । [ ग ] वादिप्रतिवादिनोः साध्यसाधनोभयप्रकारकतदभावद्वयप्रकारकान्यतरनिश्चयविषयः ( गौ० वृ० १।१।२५ ) । [ घ ] प्रत्यक्षविषयोर्थः ( न्या० वा० १ पृ० १६ ) । किमुक्तं भवति लौकिकपरीक्षकाणां दर्शनाविघातहेतुरिति । एवं चात्मादिव्याप्तिरिति । दर्शनाविघातहेतुत्वेन दृष्टान्ते वर्ण्यमान आत्मादि व्याप्तं भवति ( न्या० वा० १ पृ० १६ ) । [ ङ ] व्याप्तिसंवेदनभूमिः ( सर्व० पृ० २३८ अक्ष० ) । [ च ] वादिप्रतिवादिनोः संप्रतिपत्तिविषयोर्थः ( त० भा० पृ० ४२ ) ( दि० ) । यथा पर्वतो वह्निमान्धूमान्महानसवदित्यादौ महानसो दृष्टान्तः ( त० सं० ) । दृष्टान्तो द्विविधः । साधर्म्यदृष्टान्तः वैधर्म्यदृष्टान्तश्च । साधर्म्यदृष्टान्तः अन्वयदृष्टान्तः । स च साध्यसाधनोभयवत्तानिश्चयविषयः ( दि० १ पृ० ३२ ) । वैधर्म्यदृष्टान्तश्च व्यतिरेकदृष्टान्तः । तत्राद्यः पर्वते वह्निसाधने धूमवत्त्वस्य हेतोर्महानसः । द्वितीयः तत्रैव धूमस्य हेतोर्महाह्रदः इति ( त० भा० पृ० ४२ ) ( त० सं० ) । २ अर्थालंकार-

विशेषो दृष्टान्त इत्यालंकारिका आहुः । ३ शास्त्रम् । ४ मरणमिति काव्यज्ञा आहुः ( वाच० ) ।

**दृष्टान्ताभासः**—निदर्शनाभासशब्दवदस्यार्थोनुसंधेयः ।

**दृष्टार्थकः**—( प्रमाणशब्दः ) [ क ] यस्येह दृश्यतेर्थः स दृष्टार्थः ( वात्स्या० १।१।८ ) । [ ख ] शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणगम्यार्थकः शब्दः ( गौ० वृ० १।१।८ ) । यथा घटः पटः इत्यादिशब्दो दृष्टार्थकः ।

**देवता**—अग्नीन्द्रादयः । निरुक्ते दैवतखण्डे देवताभेदानाह यास्कमुनिः । अग्न्यादिदेवपत्न्यन्तं देवताकाण्डमुच्यते । वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः ॥ सूर्यादिदेवपत्न्यन्ता द्युस्थाना देवता इति । देवतानां प्राधान्यतस्त्रयस्त्रिंशत्त्वमुक्तम् । स्वस्वगणपत्नीसहितानां तासां त्रयस्त्रिंशत्कोटिसंख्याकत्वमुक्तं पद्मपुराणे उत्तरखण्डे । यथा सदारा विबुधाः सर्वे स्वानां गणैः सह । त्रैलोक्ये ते त्रयस्त्रिंशत्कोटिसंख्यातयाभवन् ॥ इति ( वाच० ) । देवतात्वं च [ क ] मन्त्रकरणकहविःकर्मकत्यागभागित्वेनोद्देश्यत्वम् ( चि० ४ ) ( त० प्र० ४ पृ० १२३ ) । मन्त्रप्रयोज्यहविःसंबन्धवत्त्वेनोद्देश्यत्वमिति यावत् । हविर्निष्ठं त्यागजन्यं फलम् स्वत्वम् । तदाश्रयतया ( तत्संबन्धितया ) उद्देश्यत्वम् इति तु वर्तुलार्थः । अत्र पदप्रयोजनं कथ्यते । स्वर्गसंबन्धितयोद्देश्यत्वस्य त्यागकर्तरि सत्त्वात्तत्रातिव्याप्तिवारणाय हविरिति । कोदात् कस्माददात् इति मन्त्रकरणकघृतादिरूपहविःस्वत्वभागितयोद्देश्यत्वस्य प्रतिग्रहीतरि सत्त्वात्तत्रातिव्याप्तिवारणाय मन्त्रपदं त्यागकर्तृमन्त्रपरम् । तपोविद्भ्यः पृथग्दद्यात् इत्यादिना पार्वणादौ पत्न्या अपि स्वत्वभागितया तत्रातिव्याप्तिवारणायोद्देश्यत्वम् इति ( त० प्र० ख० ४ पृ० १२३ ) । [ ख ] द्रव्यत्यागोद्देश्यत्वम् ( ग० व्यु० का० १ पृ० ३ ) ( कृष्ण० ) । वेदबोधिताबाधितद्रव्यस्वामित्वप्रकारेणेच्छाविषयत्वमित्यर्थः ( वै० सा० द० ) । यथा अग्नये स्वाहा पितृभ्यः स्वधेत्यादावग्न्यादीनां चेतनानामेव देवतात्वम् ( त० प्र० ४ पृ० १२३ ) । अत्र देवतात्वे प्रमाणम् अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः ।

इति ( ऋ० आ० १।१।१ ) । पितरो देवताः इति च ( ग० व्यु० का० १ पृ० २ ) । अत्रोच्यते । वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः । प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः ॥ इति ( याज्ञ० अ० १ श्लो० २६८ ) । [ ग ] मीमांसकास्तु देशनादेशितचतुर्थ्यन्तपदनिर्देश्यत्वम् इत्याहुः । यथा इन्द्राय स्वाहा अग्नये स्वाहेत्यादिमन्त्राणामेव देवतात्वम् । तदर्थश्च देशनया तद्धितादिरूपया देशितम् बोधितम् चतुर्थ्यन्तपदनिर्देश्यत्वम् तच्छब्दोच्चारणम् यत्र तत् तथा । इन्द्राय इत्युच्चार्य दद्यात् इति वेदेन बोधनात् । अत्रोक्तम् तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः । देवतासंगतिस्तत्र दुर्बलं तु परं परम् ॥ इति ( त० प्र० ख० ४ पृ० १२२ ) । याज्ञवल्क्य आह यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या । तदाकारं भवेत्तस्य देवत्वं देवतेति च ॥ इति ( वाच० ) । अत्र विशेषः । शब्दमयी देवता इति केचिदाहुः । अर्थोपहितः शब्द एव देवता इत्यपरे अमन्यन्त ( त० प्र० ख० ४ पृ० १२२ ) । [ घ ] वेदमेयत्यागोद्देश्यत्वम् । अत्रोद्देश्यत्वं च तस्येदम् इत्यारोपज्ञानविषयत्वम् ( श्राद्धविवेके ) । मन्त्रस्तुत्यत्वं वा । तदुभयं पितॄणामस्तीति श्राद्धादौ तेषां देवतात्वम् ( वाच० ) । [ ङ ] मन्त्रेण द्योत्यत्वम् । यथाह ऋग्वेदभाष्योपोद्घाते माधवः तथा देवनार्थदीव्यतिधातुनिमित्तो देवशब्दः इति । एतदाम्नायते देवनाद्वै देवोभूदिति तद्देवानां देवत्वमिति । अतः दीव्यतीति देवः मन्त्रेण द्योत्य इत्यर्थः इति ।

**देशः**—येनार्थानुसंधानपूर्वकं ज्ञानतपोवृद्धी प्राप्नोति स देशो गुरुजनादिः ( सर्व० सं० पृ० १६३ नकु० ) ।

**देशना**—नियोगः ( विध्यादिः ) । यथा एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिदेशना ( व्यास० ) इत्यादौ ( वाच० ) ।

**दैवः**—( विवाहः ) यज्ञस्थऋत्विजे दैवः । यस्मिन्यज्ञानुष्ठाने वितते ऋत्विजे शक्त्यलंकृता कन्या दीयते सः ।

**दैविकम्**—देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते ( पु० चि० पृ० ३९ ) ।

**दैशिकम्**— १ देशकृतम् देशसंबन्धि वा । यथा परत्वमपरत्वं च द्विविधं परिकीर्तितम् । दैशिकं कालिकं चापि मूर्त एव च दैशिकम् ॥ ( भा० प० श्लो० ११२ ) इत्यादौ । अत्रार्थे देशेन निर्वृत्तम् दैशिकम् इति विग्रहो द्रष्टव्यः ( वाच० ) । २ मन्त्राद्युपदेशकर्ता गुरुर्दैशिकः इति धर्मज्ञा आहुः ।

**दैशिकविशेषणता**—( स्वरूपसंबन्धः ) अभावीयदैशिकस्वरूपसंबन्धः । यथा भूतले घटो नास्तीत्यादौ भूतलघटाभावयोः संबन्धः ।

**दोषः**—१ अप्रमाया असाधारणकारणम् ( त० दी० गु० पृ० ३६ ) । अप्रमात्वाधिकदेशवृत्तिधर्मानवच्छिन्नाप्रमानिष्ठकार्यतानिरूपितकारणताशालीत्यर्थः ( नील० गु० पृ० ३६—३७ ) । यथा दोषोप्रमाया जनकः प्रमायास्तु गुणो भवेत् । पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥ ( भा० प० श्लो० १३२ ) इत्यादौ काचकामलपित्तमण्डूकवसाञ्जनादिर्भ्रमोत्पादको दोषः ( मु० गु० पृ० २११ ) । तथाहि शङ्खे पीतभ्रमे पित्तं दोषः । क्वचित् चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः । क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनम् । इत्येवंरूपदोषा अननुगता एव भ्रान्तिजनका इत्यर्थः ( मु० गु० प० २११ ) । २ प्रवर्तनालक्षणा दोषाः ( गौ० १।१।१८ ) । प्रवर्तना प्रवृत्तिहेतुत्वम् । अत्र विग्रहः । प्रवर्तना प्रवृत्तिजनकत्वम् । तदेव लक्षणं येषाम् इति ( गौ० वृ० १।१।१८ ) । दोषास्तु बुद्धिसमानाश्रयत्वादात्मगुणाः ( वात्स्या० ४।१।२ ) । का पुनरियं प्रवर्तना । यथा अवशः प्रवर्तते तं प्रवर्तमानं रागादयः प्रवर्तयन्तीति । सेयं प्रवृत्तिहेतुत्वात्प्रवर्तनेत्युच्यते ( न्या० वा० १।१।१८ पृ० ८५ ) । ज्ञातारं हि रागादयः प्रवर्तयन्ति पुण्ये पापे वा । यत्र मिथ्याज्ञानं तत्र रागद्वेषाविति । प्रत्यात्मवेदनीया हीमे दोषाः कस्मात् लक्षणतो निर्दिश्यन्त इति । कर्मलक्षणाः खलु रक्तद्विष्टमूढाः । रक्तो हि तत्कर्म कुरुते येन कर्मणा सुखं दुःखं वा भजते । तथा द्विष्टः तथा मूढः इति । दोषा रागद्वेषमोहा इत्युच्यमाने बहु नोक्तं भवतीति ( वात्स्या० १।१।१८ ) ( त० दी० पृ० ४२ ) । अत्रत्यम् दोषलक्षणं च लौकिकप्रत्यक्षविषयत्वे सति प्रमान्यत्वे सति प्रवृत्तिजनकत्वम् । लौकि-

कप्रत्यक्षविषयत्वे सतीत्युक्त्या शरीरादृष्टेश्वरेच्छादौ नातिव्याप्तिः। यागादिगोचरप्रमावारणाय प्रमान्यत्वे सतीत्युक्तम् (गौ० वृ० १।१।१८)। अथवा दोषत्वं प्रमाकारणीभूताभावप्रतियोगित्वम् (मू० म० प्रामा० उत्प० पृ० ३२४)। दोषाणां त्रयः पक्षाः रागपक्षः द्वेषपक्षः मोहपक्षश्च। तत्राद्यः पक्षः कामः मत्सरः स्पृहा तृष्णा लोभः माया दम्भः इति। द्वितीयः पक्षः क्रोधः ईर्ष्या असूया द्रोहः अमर्षः अभिमानः इति। तृतीयः पक्षः विपर्ययः संशयः तर्कः मानः प्रमादः भयम् शोकः इति (गौ० वृ० ४।१।३) (वात्स्या० ४।१।३)। ३ व्यावृत्तिव्यवहारेतदन्यतरप्रयोजनविघटको धर्मः। स च लक्षणदोषः इति व्यवह्रियते। यथा एकशफत्वस्य गोर्लक्षणस्यासंभवः। स च दोषस्त्रिविधः। अव्याप्तिः अतिव्याप्तिः असंभवश्च (नील० १ पृ० १)। ४ अनुमितितत्करणपरामर्शैतदन्यतरप्रतिबन्धकयथार्थज्ञानविषयः (त० दी० २ पृ० २४)। अथवा यद्विषयकत्वेन ज्ञानस्यानुमितितत्कारणीभूतपरामर्शैतदन्यतरप्रतिबन्धकत्वं सः। स च दोषः पञ्चविधः सव्यभिचारत्वम् (व्यभिचारः) विरोधः सत्प्रतिपक्षः असिद्धिः बाधश्च इति (चि० २ पृ० ८३-८४) (न्या० बो० २ पृ० १७)। स च हेतुदोषः हेत्वाभासश्च इत्यपि व्यवह्रियत इति विज्ञेयम्। तल्लक्षणादिकं च हेत्वाभासशब्दव्याख्यानावसरे सविस्तरं संपादयिष्यत इत्यत्रैव विरम्यते। ५ विध्युल्लङ्घनजन्यः अदृष्टविशेषो दोषः (प्रत्यवायः) इति मीमांसका आहुः। गुरुतल्पगमनाभक्ष्यभक्षणादिजन्यपापविशेषः इति धर्मज्ञाः पौराणिकाश्च संजगदिरे। ६ काव्यज्ञास्तु अपकर्षप्रयोजको वस्तुनिष्ठो धर्मविशेषः (वाच०)। अत्रोच्यते। स्याच्चेतो विशता येन सक्षतारमणीयता। शब्देर्थे च कृतोन्मेषं दोषमुद्घोषयन्ति तम्॥ (चन्द्रालो०) इति। अथवा मुख्यार्थहतिः (काव्य० प्र० उ० ७ श्लो० ४८)। यथा यतिभङ्गश्रुतिकटुत्वादयः पदादिगतदोषाः संभवन्ति इति वदन्ति। अत्रोच्यते। दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम्। निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाश्लीलम्॥ संदिग्धमप्रतीतं ग्राम्यं नेयार्थ-

मथ भवेत्क्लिष्टम् । अविमृष्टविधेयांशं विरुद्धमतिकृत् समासगतमेव ॥ इति ( दोषाः १८ ) ( काव्य० प्र० उ० ७ श्लो० ५०—५१ ) । एवम् वाक्यमात्रगतदोषाः रसदोषाः साक्षात्परंपरया वा तत एव विज्ञेयाः । ७ वातपित्तकफजाः इति त्रयो भ्रमदोषाः इति भिषजः प्रवदन्ति । अत्रोच्यते । वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः । विकृताविकृता देहं घ्नन्ति ते वर्धयन्ति च ॥ इति ( वाग्भट० ) । अत्र विशेषः । चिरज्वरे वातकफोल्बणे वा त्रिदोषजे वा दशमूलमिश्रः । किराततिक्तादिगणः प्रयोज्यः शुद्ध्यर्थिने वा त्रिवृताविमिश्रः ॥ इति ( चक्रदत्त० ) । अत्रार्थे दोषशब्दे दुष वैकृत्ये इति दुषधातोः करणे घञ् । तथा चोक्तम् धातवश्च मलाश्चापि दुष्यन्त्येभिर्यतस्ततः । वातपित्तकफा एते त्रयो दोषा इति स्मृताः ॥ इति ( वाग्भट० ) । अत्र द्विषष्टिर्दोषभेदाः इति सुश्रुतकारा आहुः । ८ अनुद्योगदेशान्तरापर्यटनदर्शनीयवस्त्वाद्यनवलोकनादयो दोषाः इतीदानींतना विद्वन्मन्याः पाश्चात्याश्च केचिन्मन्यन्ते ।

**दोहनम्**—[ क ] क्षरणानुकूलव्यापारः । यथा गां पयो दोग्धि मैत्र इत्यादौ दुहेरर्थः । अत्र गोपदोत्तरद्वितीयाया अर्थो विभागः । तस्य जनकत्वसंबन्धेन क्षरणेन्वयः । विभागे चाधेयतासंबन्धेन प्रकृत्यर्थगवादेरन्वयः । प्रधानकर्मक्षीरवाचकपयःपदोत्तरद्वितीयार्थो वृत्तित्वम् । तस्य धात्वर्थतावच्छेदके क्षरणरूपे फलेन्वयः । एवं च गोनिष्ठविभागानुकूलपयोनिष्ठक्षरणानुकूलव्यापारकर्ता मैत्रः इति बोधः । [ ख ] वस्तुतस्तु विभागावच्छिन्नक्षरणानुकूलो व्यापारः । अत्रायं विशेषो ज्ञेयः । यत्र च क्षरणानुकूलव्यापारमात्रं धात्वर्थतया विवक्षितम् क्षरणान्वयिविभागश्च विभक्त्यर्थतया तत्रापादानत्वबोधिका पञ्चमी इति ( ग० व्यु० का० २ पृ० ४४ ) । गां दोग्धि पयः दुह्यते गौः क्षीरमित्यादौ अकथितं च ( पा० सू० १।४।५१ ) इत्यनेन सूत्रेण गोरपादानत्वाद्यविवक्षया कर्मत्वं बोध्यम् । तत्र धात्वर्थतावच्छेदकीभूतक्षरणस्य पयोवृत्तित्वात्पयसो मुख्यं कर्मत्वम् । गोस्तु तादृशक्षरणजन्यविभागाश्रयत्वा-

गौणं कर्मत्वम् इति विवेकः । गां दोग्धि पय इत्यादौ द्विकर्मकधातुसमभिव्याहृतगवादिपदोत्तरद्वितीया क्रियाजन्यफलशालित्वादन्यदेव कर्मत्वं बोधयति । कारकाधिकारीयेण अकथितं च (पा० सू० १।४।५१) इत्यनेनापादानत्वादिभिन्नधातुप्रतिपाद्यान्वयिधर्मान्तरावच्छिन्नस्यापि कर्मसंज्ञाविधानात् इति (ग० व्यु० का० २ पृ० ४३) । अन्ये तु गां दोग्धि पय इत्यादौ गोपदोत्तरद्वितीयाया वृत्तित्वमर्थः । तस्य धात्वर्थघटकविभागेन्वयः । शाब्दबोधस्तु पूर्ववदेव ज्ञेयः इत्याहुः । अत्रेदं बोध्यम् । अस्य दुहेः गौणे कर्मणि लकारादि । तत्रोक्तम् प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥ इति (ग० व्यु० का० २ पृ० ४४) (वाच०) । इदं चात्रावधेयम् । धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वम् इत्यत्र धात्वर्थतावच्छेदकत्वस्य धातुवृत्तिग्रहविशेष्यांशे साक्षाद्विशेषणत्वरूपत्वम् इत्यतो न तादृशं कर्मत्वम् अत्र प्रवर्तते इति । दुह्यते गौः क्षीरमित्यादौ क्षरणजन्यविभागाश्रयत्वं गवादिनिष्ठमप्रधानकर्मत्वमाख्यातार्थः । अप्रधाने दुहादीनाम् इत्यनुशासनात् । क्षीरवृत्तित्वस्य धात्वर्थक्षरण एवान्वयः । आख्यातार्थक्षरणे च धात्वर्थव्यापारान्वयः । तथा च विभागावच्छिन्नक्षीरनिष्ठक्षरणानुकूलव्यापारजन्यक्षरणजन्यविभागाश्रयो गौः इत्याकारको बोधः (ग० व्यु० का० २ पृ० ४४) । यथा वा तेषु तेषु तु पात्रेषु दुह्यमाना वसुंधरा (हरिवं० श्लो० ८१) इत्यादौ दुहेरर्थः (वाच०)। अत्रादिशब्दग्राह्येषूदाहरणान्तरेषु द्विकर्मकत्वादिविशेषो ज्ञेयः । यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे । भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ (कुमार० स० १ श्लो० २) इत्यादौ । यः पयो दोग्धि पाषाणम् पयो घटोध्नीरपि गा दुहन्ति (भट्टिः) इत्यादौ च दुहेर्द्विकर्मकत्वम् । दुहेरन्यकर्मकत्वाविवक्षायामेककर्मकत्वमपि । यथा दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् (मनुः) इत्यादौ । यथा वा दुग्ध्वा पयः पत्रपुटे मदीयम् (रघु० स० २ श्लो० ६५) इत्यादौ च । [ग] द्रवद्रव्यविभागानुकूलक्रियानुकूलव्यापारविशेषः । स च

कर्तृनिष्ठः । यथा गां दोग्धि पय इत्यादौ । अत्र वायुर्वृक्षं गां दोग्धि इति प्रयोगवारणाय द्रवद्रव्येति पदम् । मेघो जलं दोग्धि इति वारणाय विशेषः इति पदं दत्तम् । अत्र विशेषो दुहधातुगम्यः । इत्थं च द्रवद्रव्येति न देयमित्यपि वदन्ति । अत्र धात्वर्थघटके विभागे गाम् इत्यस्य क्रियायां पयः इत्यस्य चान्वयात् गोवृत्तिविभागानुकूलपयोवृत्तिक्रियानुकूलकृतिमान् इति वाक्यार्थः ( का० वा० पृ० २ ) । [ ख ] मोचनानुकूलव्यापारः । यथा गां पयो दोग्धि गोप इत्यादौ दुहेरर्थः । अत्र दुह्यर्थघटकमोचने गोराधेयत्वेन पयसः कर्मत्वेन ( कर्मतानिरूपकत्वेन ) अन्वयात् पयःकर्मताकं यद्गोवृत्तिमोचनं तदनुकूलव्यापारवान् इत्याकारको बोधः । अत्रेदं बोध्यम् । मोचनं च बहिःक्षरणावच्छिन्नव्यापारः । तदनुकूलव्यापारो दोहनम् । अतः धात्वर्थतावच्छेदकीभूतं ( धात्वर्थतावच्छेदकतायामवच्छेदकम् ) बहिःक्षरणरूपं फलमादाय पयसः गौणं कर्मत्वम् । मोचनात्मकं च फलमादाय गोः मुख्यं कर्मत्वम् इति । एवं च दुहादयः फलावच्छिन्नक्रियाहेतुव्यापारवाचित्वादेव द्विकर्मका भवन्ति इति ( श० प्र० श्लो० ७३ पृ० ९८ ) । [ ग ] निःसरणमात्रम् । यथा दुग्धेऽस्मै सर्वं कामं यो वाचो दोहः ( छान्दो० उ० ) इत्यादौ । यथा वा न कर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति ( महाभा० व० श्लो० ११६५ ) इत्यादौ । यत्र धर्मदुघा भूमिः सर्वकामदुघा मही । दोग्धि स्माभीप्सितानर्थान् यजमानस्य भारत ॥ ( भाग० ४।१९।७ ) इत्यादौ च दुहेरर्थः ।

द्यूतम्—अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ( मिताक्षरा २।१९९ ) ।

द्योतकत्वम्—[ क ] अर्थविशेषे तात्पर्यग्राहकत्वम् ( चि० ४ ) ( न्या० म० ४ पृ० १८ ) ( नील० ) । यथा प्रजयतीत्यादौ प्रशब्दस्य द्योतकत्वम् । जयतिरत्र प्रकृष्टजयलक्षकः । प्रशब्दस्तु तात्पर्यग्राहकः ( न्या० म० ४ पृ० १८ ) । यथा वा चित्रगुमानयेत्यादौ चित्रपदस्य द्योतकत्वम् । अत्र च गोपदेनैव लक्षणया चित्रगोस्वामिबोधनाच्चित्रपदस्य द्योतकत्वमेव इति ज्ञेयम् ( मु० ४ पृ० १८२ ) । [ ख ] शाब्दि-

कानां मते कचित् समभिव्याहृतपदीयशक्तिव्यञ्जकत्वम् । यथा प्रहार इत्यादौ प्रादिनिपातानां प्रहरणाद्यर्थद्योतकत्वम् ( ल० म० ) । अत्र च धातोरेव शक्त्या प्रहारविहाराद्यर्थबोधकत्वसंभवेनोपसर्गाणां द्योतकत्वमेव इति बोध्यम् । अत्र वैयाकरणानां गाथा श्रूयते धातूनामनेकार्थकत्वम् इति ( ल० म० धात्वर्थ० पृ० ८ ) । तदुक्तम् उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । प्रहाराहारसंहारविहारपरिहारवत् ॥ इति ( सि० कौ० ) । [ ग ] कचित् समभिव्याहृतगतवृत्त्युद्बोधकत्वम् । [ घ ] कचित्तु क्रियाविशेषाक्षेपकत्वम् । यथा प्रादेशं विलिखतीत्यादौ । अत्र विर्विमानक्रियाक्षेपकः । तथा च प्रादेशं विमाय लिखति इत्यर्थोवगम्यते । यथा वा अथ शब्दानुशासनम् इत्यत्राथशब्दस्य प्रारम्भक्रियाक्षेपकत्वं कैयटादावुक्तम् ( ल० म० धात्वर्थ० पृ० ७ ) । [ ङ ] कचित्तु संबन्धपरिच्छेदकत्वम् । यथा सर्पिषोपि स्यात् इत्यादौ कर्मप्रवचनीयानां द्योतकत्वम् ( ल० म० धात्वर्थ० पृ० ७ ) । अत्र बिन्द्वध्याहारेणापेः पदार्थद्योतकता । अपिः क्रियायां स्वद्योत्यबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यस्यापि द्योतकः । एवं च सर्पिरवयवबिन्दुकर्तृका तद्बिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती संभावनाविषयीभूता सत्ता इति बोधः (ल० म० सुब० पृ० ९४–९५) ।

द्रवत्वम्—१ ( गुणः ) [ क ] स्यन्दनकर्मकारणम् ( प्रशस्त० पृ० ३३ ) । द्रवत्वं पृथिव्यप्तेजोवृत्ति द्वीन्द्रियग्राह्यम् असमवायि निमित्तं च कारणम् । तत्र क्रियायामसमवायि संग्रहे तु निमित्तं कारणम् । [ ख ] आद्यस्यन्दनासमवायिकारणम् । तत्र द्वितीयादिव्यापारजनकवेगवारणाय आद्य इति स्यन्दनस्य विशेषणम् ( वाक्य० १ पृ० ९ ) ( दि० गु० पृ० २३२ ) । द्रवत्वं द्विविधम् । सांसिद्धिकम् नैमित्तिकं च । तत्र सांसिद्धिकम् अग्न्यादिसंयोगाजन्यम् । स्वाभाविकम् इत्यर्थः ( वाक्य० १ पृ० ९ ) । हिमकरकादौ चादृष्टविशेषेण घनीभावेन सांसिद्धिकद्रवत्वप्रतिबन्धः कल्प्यते ( सि० च० १ पृ० ७ ) । एवं च हिमकरकादावपि सांसिद्धिकं द्रवत्वमस्त्येव । न च तत्र नैमित्तिकं द्रवत्वं युक्तम् । द्रुते घृते घृतत्वादिवत् करकात्वोपलम्भापत्तेः । नैमित्तिकद्रवत्वस्य निमित्त-

माशनाश्यत्वेन घृतादिवत्पुनः पिण्डीभावापत्तेश्च इति ( प० मा० ) । तैलक्षीरादावपि जलस्यैव द्रवत्वम् । स्नेहप्रकर्षेण च दहनानुकूल्यम् इति बोध्यम् ( मु० १ पृ० ७७ ) । अत्रेदमाकूतम् । हिमकरकयोरौपाधिकद्रवत्वनिरोधात् सूर्यकिरणभूमिसंयोगादिनोपाधिनिवृत्तिमात्रम् न तु द्रवत्वोत्पत्तिः इति ( वाक्य० १ पृ० ९ ) । तथा च अदृष्टविशेषेण द्रवत्वप्रतिरोधः । करकायां काठिन्यप्रत्ययो भ्रान्तिरेव ( मु० १ जल० पृ० ७७ ) । दिव्येन तेजसा संयुक्तानामाप्यानां परमाणूनां परस्परसंयोगो द्रव्यारम्भकः संघाताख्यः । तेन परमाणुद्रवत्वप्रतिबन्धात् कार्ये हिमकरकादौ द्रवत्वानुत्पत्तिः इति ( प्रशस्त० पृ० ३४ ) । नैमित्तिकं च अग्न्यादिसंयोगजन्यमित्यर्थः ( वाक्य० १ पृ० ९ ) । तत्र सांसिद्धिकं जल एव । नैमित्तिकं पृथिवीतेजसोरेव वर्तते ( प्रशस्त० पृ० ३३ ) ( त० सं० ) ( भा० प० श्लो० १५५–१५८ ) । सांसिद्धिकद्रवत्वत्वं जातिविशेषः प्रत्यक्षसिद्धः ( मु० १ जल० पृ० ७६ ) । घृतलाक्षादिपृथिवीषु सुवर्णादितेजस्सु चाग्निसंयोगजन्यं द्रवत्वं वर्तते इति ज्ञेयम् ( मु० १ पृ० २३२ ) ( त० सं० ) । अयं भावः । सर्पिर्जत्वाकरजेषु परमाणुष्वग्निसंयोगाद्वेगापेक्षात्कर्मोत्पत्तौ तज्जेभ्यो विभागेभ्यो द्रव्यारम्भकसंयोगविनाशात्कार्यद्रव्यनिवृत्तौ अग्निसंयोगादौष्ण्यापेक्षात् स्वतन्त्रेषु परमाणुषु द्रवत्वमुत्पद्यते इति ( प्रशस्त० पृ० ३४ ) । तथा च द्रवत्वं नित्यानित्यभेदेनापि द्विविधम् । तत्र नित्यद्रव्यगतम् नित्यम् । अनित्यद्रव्यगतमनित्यम् ( मु० गु० पृ० २३२ ) ( प्र० प्र० ) ( त० कौ० ) ( ल० म० ) । अत्रायं विवेकः । सांसिद्धिकं द्रवत्वमेव नित्यानित्यभेदेन द्विविधम् । तत्र नित्यगतं नित्यम् । अनित्यगतमनित्यम् । नैमित्तिकद्रवत्वं त्वनित्यमेव इति ( वाक्य० १ पृ० ९ ) । तस्य पाकजन्यत्वेन विनाशसंभवान्न नित्यत्वमिति भावः । द्रवद्रव्याणि तु दुग्धदध्याज्यतक्रासवजलतैलादीनि दैहिकमूत्रादीनि च विज्ञेयानि । २ काष्ण्यन्नास्तु गतिः । यथा समुद्रमेवाभिमुखा द्रवन्ति ( गीता अ० ११ श्लो० २८ ) इत्यादौ । यथा वा ततः किरीटी सहसा पाञ्चालान् समरेद्रवत्

( भा० आ० ५४।७८ ) तं दुद्रावाद्रिणा कपिः ( भट्टि० ) इत्यादौ इत्याहुः ( वाच० )।

**द्रव्यत्वम्**—१ ( सामान्यम् ) गगनारविन्दसमवेतत्वे सति नित्यत्वे सति गन्धासमवेतत्वम् ( सर्व० पृ० २१५ औलू० )। तच्च नित्यमनेकद्रव्यमात्रसमवेतम् ( वै० उ० १।२।११ )। यथा क्षित्यादीनां नवानां तु द्रव्यत्वम् ( भा० प० श्लो० २४ )। अत्र द्रव्यत्वत्वं तु द्रव्येतरासमवेतत्वे सति सकलद्रव्यसमवेतत्वम्। एवम् पृथिवीत्वत्वघटत्वत्वादिकमपि निर्वाच्यम्। २ लिङ्गसंख्यान्वयित्वं द्रव्यत्वम् इति शाब्दिका वदन्ति। लिङ्गसंख्याकारकत्वशून्यत्वं सत्त्वत्वम्। तदेव द्रव्यत्वम् इति भावः ( वाच० )।

**द्रव्यम्**—( पदार्थः ) १ [ क ] गुणाश्रयः ( त० दी० पृ० ४ )। अत्रायं नियमः। प्रथमं द्रव्यं निर्गुणं निष्क्रियं चैवोत्पद्यते पश्चात्तत्समवेता गुणक्रिया उत्पद्यन्ते इति। गुणाश्रयत्वं चात्र गुणयोग्यत्वम्। तच्च गुणात्यन्ताभावानधिकरणत्वम् ( त० भा० )। इदं द्रव्यलक्षणम् द्रव्यत्वजातिमत्त्वं वा द्रव्यलक्षणम् इति बोध्यम् ( त० दी० १।४ ) ( त० कौ० )। इत्थं च तत्र सूत्रम् क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम् ( वै० १।१।१५ ) इति। अथवा गुणसमानाधिकरणा सत्ताभिन्ना च या जातिः ( द्रव्यत्वम् ) तद्वत्त्वम्। तेन आद्यक्षणावच्छिन्ने उत्पन्नविनष्टे च द्रव्ये नाव्याप्तिः ( त० दी० १ पृ० ५ )। [ ख ] समवायिकारणम् ( त० भा० अर्थ० पृ० २७ ) ( भा० प० साधर्म्य० श्लो० २३ )। [ ग ] द्रव्यत्वरूपजातिमत् ( त० दी० १ पृ० ४ ) ( त० कौ० १ पृ० १ )। द्रव्यत्वजातिस्तु कार्यसामान्यस्य संयोगस्य विभागस्य वा समवायिकारणतावच्छेदकतया सिद्ध्यति ( वै० वि० १।१।५ ) ( मु० १ पृ० ३० ) ( नील० १ पृ० ४ )। तथाहि कार्यसमवायिकारणता किंचिद्धर्मेण ( अर्थात् द्रव्यत्वेन ) अवच्छिन्ना कारणतात्वाद्दण्डनिष्ठघटकारणतावत् इत्यनुमानेन द्रव्यत्वं जातिः सिध्यति। अनुगतः अन्यूनः अनतिप्रसक्तश्च यो धर्मस्तस्यैवावच्छेदकत्वेन तादृशयत्किंचिद्धर्मस्य जातित्वावश्यकत्वात् इति भावः। एवम् गुणत्वा-

दीनामपि जातित्वमूह्यम् । द्रव्यं नवविधम् पृथिवी आपः तेजः वायुः आकाशः कालः दिक् आत्मा मनः इति द्रव्याणि ( वै० १।१।५० ) ( प्रशस्त० पृ० १ ) ( त० भा० अर्थ० पृ० २७ ) ( त० सं० ) ( भा० प० श्लो० ३ ) । आकाशकालदिशामेकैकत्वादपरजात्यभावे पारिभाषिक्यस्तिस्रः संज्ञा भवन्ति आकाशः कालः दिक् इति ( प्रशस्त० पृ० ७ ) । तत्र दिक्कालौ परमात्मनो नातिरिच्येते इति दीधितिकृद्वक्ति ( दि० १ ) ( प० मा० ) । आकाश ईश्वरान्नातिरिच्यते इत्येकदेशिन आहुः ( प० मा० ) । अत्र भाष्यम् । आकाशं गुणवत्त्वात् अनाश्रितत्वाच्च द्रव्यम् । शब्दो गुणो भूत्वा आकाशस्याधिगमे लिङ्गम् । समानासमानजातीयकारणासंभवान्नित्यम् । सर्वप्राणिनां च शब्दोपलब्धिनिमित्तं श्रोत्रभावेन ( प्रशस्त० पृ० ७ ) । द्रव्यम् प्रकारान्तरेण द्विविधम् बहिर्द्रव्यम् अन्तर्द्रव्यं च । बहिर्द्रव्याणि पृथिवी आपः तेजः वायुश्च । तदन्यान्यन्तर्द्रव्याणि इति । तत्रापि पृथिव्यप्तेजांसि द्वीन्द्रियग्राह्याणि ( न्या० वा० १।१।१३ पृ० ७६ ) । अत्रेदं बोध्यम् । वायोरनुमेयत्ववादिनां प्राचां मते बहिर्द्रव्यप्रत्यक्षं प्रति उद्भूतरूपवत्त्वे सति महत्त्वं कारणम् । तेन प्रत्यक्षसामग्र्यभावान्न वायोस्त्वाचप्रत्यक्षम् । वायोः प्रत्यक्षत्ववादिनां नव्यानां मते तु उद्भूतस्पर्शवत्त्वे सति महत्त्वमपि कारणम् इति ( न्या० सि० दी० पृ० ३२ ) ( मु० १ पृ० ) । तेन प्रत्यक्षसामग्रीसंपत्त्या वायोस्त्वाचप्रत्यक्षं भवति इति भावः । द्रव्यं नित्यानित्यभेदेनापि द्विविधम् । तत्र नवसु द्रव्येषु मध्ये पृथिव्यादिचतुष्टयस्य परमाणवः आकाशम् कालः दिक् आत्मा ( जीवः परमात्मा च ) मनश्च एतानि नित्यद्रव्याणि । पृथिव्यादिचतुष्टयस्य द्व्यणुकमारभ्य महत्पर्यन्तं सर्वाण्यनित्यद्रव्याणि भवन्ति ( मु० १ ) । तत्र अनित्यद्रव्यं कार्यरूपत्वादवयवसमवेतम् । नित्यद्रव्यं त्वसमवेतमेव । २ शाब्दिकास्तु वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते । द्रव्यमित्युच्यते सोर्थो भेद्यत्वेन व्यवस्थितः ॥ ( भर्तृहरिः ) इति वदन्ति । ३ भिषजस्तु रसो गुणस्तथा वीर्यं विपाकः शक्तिरेव च । पञ्चानां यः समाहारस्तद्द्रव्यमिति कीर्त्यते ॥

इति। तन्मते द्रव्यरसगुणवीर्यविपाकानां प्राधान्याप्राधान्यभेदेन द्वैविध्यम् सुश्रुतग्रन्थे उक्तम्। तत्तु तस्मादेव विज्ञेयम्। प्रकारान्तरेण द्रव्यं पञ्चविधम् अत्यन्तकठिनकठिनार्द्रकोल्बणद्रवद्रव्यभेदात् इत्याहुः (वाच०)। ४ आर्हतास्तु गुणपर्यायवद्द्रव्यम् (सर्व० सं० पृ० ७२ आर्ह०) इत्याहुः। ५ रामानुजीयास्तु इत्थं वदन्ति। तत्र द्रव्यं दशावस्थप्रकृतिरिह गुणैः सत्त्वपूर्वैरुपेता कालोऽब्दाद्याकृतिः स्यादणुरवगतिमाञ्जीव ईशोऽन्य आत्मा। संप्रोक्ता नित्यभूतिस्त्रिगुणसमधिका सत्त्वयुक्ता तथैव ज्ञातुर्ज्ञेयावभासा मतिरिति कथितं संग्रहाद्द्रव्यलक्ष्म॥ (सर्व० सं० पृ० ११२ रामानु०)।

**द्रोणः**—द्रोणत्वविशिष्टः परिमाणविशेषः। यथा द्विद्रोणेन धान्यं क्रीणाति द्रोणो व्रीहिरित्यादौ। द्रोणत्वं चात्र इयत्ताविशेषावच्छिन्नपलादिपरिच्छिन्नधान्यादिपरिच्छेदकत्वसमानाधिकरणजातिविशेषः। एवम् प्रस्थत्वादयो बोध्याः (ल० म०)। द्रोणो व्रीहिरित्यत्र द्रोणरूपं यत् परिमाणं तत्परिच्छिन्नो व्रीहिः इति शाब्दबोधः (सि० कौ० का०)।

**द्रोहः**—(दोषः) [क] अहितेच्छा। यथा शत्रवे द्रुह्यतीत्यादौ धात्वर्थः (ग० व्यु० का० ४ पृ० ९६)। अत्र भाष्यम् प्रयत्नस्मृतिधर्माधर्महेतुर्द्रोहः। स च द्वेषभेदः (प्रशस्त० पृ० ३३)। अत्र अहितभागितयेच्छाविषयता। तन्निरूपकत्वं चतुर्थ्यर्थः। तादृशनिरूपकत्वस्य धात्वर्थेच्छायामन्वयः। अथवा आधेयत्वं चतुर्थ्यर्थः। अतः कर्मणेत्यादिसूत्रस्य (पा० सू० १।४।३२) न विषयः (ग० व्यु० का० ४ पृ० ९६)। तस्य चाधेयत्वस्य धात्वर्थघटकाहिते अन्वयः। अत्र क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः (पा० सू० १।४।३७) इत्यनेन कर्मणः संप्रदानसंज्ञा (ग० व्यु० का० ४ पृ० ९६)। [ख] नाशाय द्वेषः (गौ० वृ० ४।१।३)। [ग] द्विष्टाचरणम्। यथा मित्राय द्रुह्यतीत्यत्र। अत्र मित्रस्य द्विष्टमाचरतीत्यर्थः (श० प्र० श्लो० ६९ पृ० ८७)। [घ] शाब्दिकास्तु दुःखजनकक्रियारूपापकारजनकश्चित्तवृत्तिविशेषः। यथा हरये द्रुह्यतीत्यादौ द्रुहेरर्थः इत्याहुः। अत्र

हरिसंप्रदानको द्रोहः इति बोधः ( ल० म० सुबर्थ० पृ० १०३ ) । अत्रायं विवेकः । कोपपूर्वकस्य द्रोहादेर्द्रुहधातुवाच्यत्वे तत्कर्मणः संप्रदानत्वम् । द्रोहादिमात्रस्य तथात्वे तु कर्मत्वमेव इति पुनः कौमाराः । सोपसर्गयोस्तु क्रुधद्रुहोः कर्मणः कर्मतैव न तु संप्रदानता । अत एव शिष्यस्याभिक्रोद्धा मित्रस्याभिद्रोढा इत्यादौ कृद्योगे कर्मणि षष्ठ्येव प्रमाणम् ( श० प्र० श्लो० ६९ पृ० ८७ ) । अत्रेदमवधेयम् । मित्रं द्रुह्यति शिष्यमीर्ष्यति पुत्रमसूयति इत्यपि प्रयोगात् द्रुहादिकर्मणः संप्रदानत्वं वैकल्पिकम् इत्युन्नीयते । [ ङ ] हिंसा इति परे मन्यन्ते ( गौ० वृ० ४।१।३ ) ।

द्वन्द्वः—( समासः ) [ क ] यद्यदर्थोपस्थापकस्य क्रमिकयादृशनामस्तोमस्य निश्चयस्तत्तदर्थप्रकारकान्वयबोधं प्रति तत्त्वेन समर्थः तादृशनामनिवह एव तावदर्थको द्वन्द्वसमासः । घटघटेत्यादिकस्य घटकलशेत्यादिकस्य घटतद्घटेत्यादिकस्य च क्रमिकनामस्तोमस्य निश्चयत्वेन घटादेरन्वयबोधं प्रत्यहेतुत्वम् । अतो न तादृङ्नामनिवहो घटाद्यर्थे द्वन्द्वः । अत एव समस्यमानपदार्थयोः तत्त्वावच्छेदकयोर्वा यत्र मिथो भेदस्तत्रैव द्वन्द्वस्य साधुत्वसूचनाय चार्थे द्वन्द्वः ( पा० सू० २।२।२९ ) इति पाणिनिराह । अत एव भेदगर्भसमुच्चयार्थकं चशब्दमन्तर्भाव्य धवश्च खदिरश्च इत्यादिकं विग्रहमस्य प्रयुञ्जते वृद्धाः ( श० प्र० श्लो० ४७ पृ० ६२ ) । पदजन्यप्रतीतिविषयभेद एव द्वन्द्वः ( भवानन्दी ) । यथा पाणिपादं वादय धवखदिरौ छिन्धीत्यादौ द्वन्द्वः । अत्र हि कर्मत्वाद्यंशे करचरणादिप्रकारकान्वयबोधं प्रति अमादिधर्मिकः करचरणाद्युपस्थापकस्य पाणिपादादिक्रमिकनामस्तोमस्याव्यवहितोत्तरत्वसंबन्धेन निश्चयः कारणम् । अतः पाणिपादादिसमुदायः करचरणादितत्तदर्थे द्वन्द्वः ( श० प्र० श्लो० ४७ पृ० ६१ ) । द्वन्द्वो द्विविधः । समाहारः इतरेतरश्चेति ( श० प्र० श्लो० ४७–४८ पृ० ६०–६१ ) । अत्र वैयाकरणानां विवेकः । संहतिप्राधान्ये समाहारद्वन्द्वः संहन्यमानप्राधान्य इतरेतरयोगः इति ( वाच० ) । शाब्दिकास्तु धवखदिरावित्यादावितरेतरयोगद्वन्द्वे उद्भूतावयवभेदसमूहः समासार्थ

इत्याहुः (ल० म० वृत्तिवि० पृ० ३०)। अत्रायं विशेषः। समुच्चयान्वाचययोः सामर्थ्याभावान्न तत्र द्वन्द्वसमासः। यत्र युगपत्क्रियान्वयतात्पर्यम् तत्र समासः। समुच्चये च क्रमेण क्रियान्वयः न तु युगपत् इति (त० प्र० ख० ४ पृ० ५२)। [ख] परस्परानन्वितसमस्यमाननिखिलपदार्थबोधकसमासः। यथा धवखदिरावित्यादौ। अव्ययीभावादावतिव्याप्तिवारणाय परस्परानन्वितेति पदार्थविशेषणम्। अव्ययीभावादौ यथायथं भेदेनाभेदेन वा परस्परान्वितपदार्थबोधकत्वसत्त्वान्नातिव्याप्तिः। पाणिपादमित्यादिसमाहारद्वन्द्वे तु पाणिपादमात्रं प्रतीयते साहित्यमपि (समाहारः) न प्रतीयते इति तत्र नाव्याप्तिः। एकवचनं तु द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् (पा० सू० २।४।२) इति सूत्रेण विहितं न विरुद्धम्। धवखदिरावित्यत्र च परस्परानन्वितसमस्यमानपदार्थधवखदिरादिबोधकत्वसत्त्वात्समन्वयः (म० प्र० ४ पृ० ४४)। [ग] सर्वपदार्थप्रधानः समासः (न्या० वा० १ पृ० ११)।

**द्वन्द्वम्**—रहस्यादयः पञ्च द्वन्द्वशब्दार्थाः पाणिनिनोक्ताः। तथाच सूत्रम् द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु (पा० सू० ८।१।१५) इति। तत्र रहस्यं द्वन्द्वशब्दवाच्यम्। इतरे प्रयोगोपाधयः। तथाहि १ रहस्यम्। यथा द्वन्द्वं मन्त्रयते इत्यादौ। २ मर्यादा स्थित्यनतिक्रमः। यथा आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति। माता पुत्रेण मिथुनं गच्छति पौत्रेण प्रपौत्रेणापि इति मर्यादार्थः। ३ व्युत्क्रमणम् पृथगवस्थानम्। यथा द्वन्द्वं व्युत्क्रान्ताः इति। द्विवर्गसंबन्धेन पृथगवस्थिता इत्यर्थः (वाच०)। ४ यज्ञपात्रप्रयोगः। यथा द्वन्द्वं न्यञ्चि यज्ञपात्राणि प्रयुनक्ति इति। ५ अभिव्यक्तिः। यथा द्वन्द्वं संकर्षणवासुदेवौ इति (शब्देन्दुशे०)। अभिव्यक्तौ साहचर्येणेत्यर्थः (वाच०)। ६ काव्यज्ञाश्च युगलम्। यथा द्वन्द्वानि भावं क्रियया विवव्रुः (कुमार० ३।३५) इत्यादौ इत्याहुः। ७ परस्परविरुद्धस्वभावः शीतोष्णादिः। यथा द्वन्द्वातीतो विमत्सरः (गीता० ४।२२) निर्द्वन्द्वो हि महाबाहो (गीता० ५।३) न द्वन्द्वदुःखमिह किंचिदकिंचनोपि (माघः) इत्यादौ इति योगिनो वेदान्तिनः

श्चाहुः । अत्रोच्यते क्षुत्पिपासे शोकमोहौ रागद्वेषौ तथैव च । लाभालाभौ च शीतोष्णे तथा मानापमानकौ ॥ कामक्रोधप्रभृतयो द्वन्द्वशब्देन वर्णिताः इति । ८ दुर्गम् इति व्यवहारज्ञा आहुः । ९ रोगविशेष इति भिषज आहुः ( वाच० ) ।

**द्वयोरेकम् इति रीत्या जायमानं ज्ञानम्**—एकप्रकारतानिरूपितोभयविशेष्यताशालि ज्ञानम् ( ल० व० पृ० ९ ) । यथा घटपटौ रक्तरूपवन्तौ इति ज्ञानम् । अत्र घटपटोभयनिष्ठविशेष्यताया रक्तरूपनिष्ठैकप्रकारतानिरूपितत्वेन तथात्वं संपद्यते इति विज्ञेयम् ।

**द्वादशलक्षणी**—जैमिनिसूत्रम् । द्वादशानां लक्षणानां ( अध्यायानां ) समाहारः (जै० न्या० अ० १ पा० १ अधि० १) ।

**द्वादशायतनम्**—पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् । धर्मायतनमेतानि द्वादशायतनानि तु ॥ ( सर्व० सं० पृ० ४६ बौ० ) ।

**द्वारम्**—१ व्यापारवदस्यार्थोनुसंधेयः ( राम० मङ्ग० पृ० ४ ) । २ क्राथनस्पन्दनमन्दनशृङ्गारणावितत्करणावितद्भाषणानि द्वाराणि ( सर्व० सं० पृ० १७० नकुली० ) ।

**द्विकर्मकः**—( धातुः ) फलावच्छिन्नक्रियाहेतुव्यापारवाचको धातुविशेषः । यथा दुह पृच्छ इत्यादिः ( श० प्र० श्लो० ७३ पृ० ९८ ) । अत्र द्विकर्मकत्वं च कर्मद्वयसाकाङ्क्षक्रियाबोधकत्वम् इति ज्ञेयम् ( का० व्या० पृ० २ ) । द्विकर्मका धातवस्तूक्ता यथा दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् । कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ इति ( सि० कौ० का० पृ० ५६ ) ।

**द्विगुः**—१ ( समासः ) संख्यावच्छिन्नशक्तयत्पदोत्तरत्वविशिष्टं यन्नाम स्वार्थधर्मिकं तादात्म्यसंबन्धेन तदलक्ष्यार्थस्यान्वयबोधं प्रति समर्थम् तन्नामोत्तरतापन्नं तन्नामैव तदलक्ष्यार्थाभिन्नस्वार्थे द्विगुरुच्यते । यथा पञ्चमूलीत्यादौ ( श० प्र० श्लो० २४ पृ० ४५ ) । त्रिकटुत्रिभुवन-

चतुर्युगचतुर्वर्गपञ्चगव्यपञ्चामृतषड्रसषट्पदार्थसप्तर्ष्यष्टनागाष्टवसुनवरसनवग्रहदशमूलैकादशरुद्रैकादशेन्द्रियद्वादशादित्येत्यादिकः कर्मधारयः शुण्ठ्यादिपर्याप्तत्रित्वावच्छिन्नबोधकतया न पूर्वपदालक्ष्यार्थस्य बोधकः । त्रिकटुप्रभृतिभ्यः कटुत्रयादिसामान्यस्याप्रतीतेः । अतो नोक्तकर्मधारयेतिव्याप्तिः इति ( श० प्र० श्लो० ३४ पृ० ४५ ) । कटुत्रयं च शुण्ठी पिप्पली मरीच एतत्त्रयम् । अथवा संज्ञाविषयान्यत्वे सति संख्यावाचकपूर्वनामतुल्यार्थकोत्तरनामकः समासः । यथा पञ्चगवम् पञ्चाश्वम् पञ्चाम्रम् इत्यादौ इति प्राञ्चः । पञ्चाम्राः पञ्चकन्याः इत्यादिकर्मधारयवारणाय सत्यन्तम् । पञ्चानामाम्राणां समाहारः पञ्चाम्रमित्यर्थे तु द्विगुरेव । नीलोत्पलमित्यादिकर्मधारयवारणाय संख्यावाचकेति पूर्वनामविशेषणम् ( म० प्र० ४ पृ० ४४ ) । पञ्चगवमित्यादौ सत्यन्तस्य संख्यावाचकपञ्चेतिपूर्वपदतुल्यार्थकगवादिपदस्य च सत्त्वाल्लक्षणसंगतिः । तथा च पञ्चाभिन्नगवादिसमाहारः इति पञ्चाभिन्नाः समाहृतगवादयः इति वा वाक्यार्थबोधः ( म० प्र० ४ पृ० ४४ ) । अयं द्विगुस्त्रिविधः । तद्धितार्थः उत्तरपदपरकः समाहारार्थकश्चेति ( श० प्र० श्लो० ३४ पृ० ४५–४६ ) । तथाच पाणिनेः सूत्रम् संख्यापूर्वो द्विगुः ( पा० सू० २।१।५२ ) इति । अस्यार्थः तद्धितार्थोत्तरपदसमाहारे च ( पा० सू० २।१।५१ ) इत्यत्रोक्तः संख्यापूर्वो द्विगुः स्यात् ( सि० कौ० स० पृ० ७४ ) । २ काव्यज्ञास्तु द्विगवस्वामिकः पुरुषो द्विगुः । यथा द्वन्द्वो द्विगुरपि चाहं सततमस्मद्गृहेऽव्ययीभावः ( उद्भटः ) इत्यादौ इत्याहुः ।

**द्विजः**—मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् । ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥ ( मिताक्षरा अ० १।३९ ) ।

**द्वितीया**—( विभक्तिः ) तत्तद्धात्वर्थादौ कर्मत्वादिबोधिका विभक्तिः । यथा चैत्रस्तण्डुलं पचतीत्यादौ तण्डुलपदोत्तरं द्वितीया । द्वितीयादयोपि द्विविधाः । कारकविभक्तयः उपपदविभक्तयश्च । अत्र कारकत्वं च क्रियाजनकत्वशक्तिः ( ल० म० ) । द्वितीयाया अर्थश्च १ कर्मत्वम् । तच्च फलविशेषो द्वितीयार्थः । यथा ग्रामं गच्छतीत्यादौ संयोगात्मक-

फलम् परसमवेतत्वं च द्वितीयार्थः इति प्राञ्चो नैयायिका आहुः । अत्रायं भावः । कर्मत्वं च क्रियाजन्यफलशालित्वम् । तत्र क्रिया व्यापारमात्रम् धातुत एव लभ्यते । फलान्वयि वृत्तित्वम् जन्यजनकभावसंबन्धश्च ( पदार्थत्वं विना ) संबन्धमर्यादया भासते इति फलमात्रं संयोगविभागादि कर्मप्रत्ययार्थः इति प्राचां नैयायिकानां मतम् । एतन्मते धातोर्व्यापारमात्रार्थकत्वम् इति बोध्यम् ( ग० व्यु० का० २ पृ० ३६ ) ( का० व्या० ) । अत्र परसमवेतत्वमपि द्वितीयार्थो वक्तव्यः । प्राचीनमते शाब्दबोधस्तु वृत्तित्वसंबन्धेन ग्रामविशिष्टो यः संयोगः जनकतासंबन्धेन तादृशसंयोगविशिष्टो यो व्यापारः ( धातुलभ्यः ) तद्विषयिणी या कृतिः ( आख्यातलभ्या ) तद्वान् इत्युत्पद्यते । नव्यास्तु वृत्तिरेव द्वितीयार्थः । यथा ग्रामं गच्छतीत्यादौ धात्वर्थफलान्वयि वृत्तित्वं द्वितीयार्थः । अयं भावः । नव्यमते धात्वर्थतावच्छेदकफलशालित्वमेव कर्मत्वम् । तत्र फलावच्छिन्नव्यापारो धातुत एव लभ्यते । तदेकदेशे फले द्वितीयार्थवृत्तित्वमन्वेति । एवं च स्पन्दादेर्न सकर्मकत्वम् । तत्र फलस्य धात्वर्थतानवच्छेदकत्वात् इति ( ग० व्यु० का० २ पृ० ३८ )। नव्यमते यत्र समभिव्याहृतधात्वर्थतावच्छेदकफलाश्रयत्वबोधः तत्र द्वितीया इति व्युत्पत्तिः । तेन भूमौ पततीत्यादौ पतधातोरकर्मकतया धात्वर्थतावच्छेदकफलाभावेन ( सप्तम्या आश्रयत्वबोधेपि ) न द्वितीया ( त० प्र० ख० ४ पृ० ८४ ) । अत्रेदमवधेयम् । नव्यमते च यत्राश्रयत्वं कर्तृत्वम् तत्राधेयत्वं द्वितीयार्थः । यत्रानुकूलकृतिमत्त्वम् कर्तृत्वम् तत्र कृतिजन्यत्वम् द्वितीयार्थः । यत्र प्रतियोगित्वम् तत्रानुयोगित्वम् । तेषां चाश्रयतासंबन्धेनैवान्वयः ( ग० व्यु० का० २ पृ० ४७ ) । नव्यानां मतेत्रायं बोधः निरूपितसंबन्धेन ग्रामविशिष्टं यद्वृत्तित्वम् ( आधेयत्वम् ) तद्वान् यः संयोगस्तदवच्छिन्नव्यापारानुकूलकृतिमान् इत्युत्पद्यते । अत्र कर्तुरीप्सिततमं कर्म ( पा० सू० १।४।४९ ) इत्यनेन कर्मसंज्ञा कर्मणि द्वितीया ( पा० सू० २।३।२ ) इत्यनेन द्वितीया च ज्ञेया । यथा वा गां पयो दोग्धि मैत्र इत्यादौ पयःपदोत्तरद्वितीयार्थो वृत्तित्वम्

इति प्राहुः । अत्र विभागावच्छिन्नक्षरणानुकूलव्यापारो दुहेरर्थः । तत्र विभागे गोपदोत्तरद्वितीयार्थवृत्तित्वस्य क्षरणे च पयःपदोत्तरद्वितीयार्थवृत्तित्वस्यान्वयो बोध्यः (ग० व्यु० का० २ पृ० ४४) । अत्रेदं बोध्यम् । गामित्यत्र अकथितं च (पा० सू० १।४।५१) इत्यनेन कर्मसंज्ञा । पय इत्यत्र तु कर्तुरीप्सिततमं कर्म (पा० सू० १।४।४९) इत्यनेन कर्मसंज्ञा । तथा च कर्मणि द्वितीया (२।३।२) इत्यनेनोभयत्र द्वितीया इति । अधिकं तु दोहनशब्दव्याख्यानावसरे संपादितम् इति तत्र द्रष्टव्यम् । अत्र आश्रयो द्वितीयार्थः इति शाब्दिका आहुः (वै० सा० ) । क्वचित्कर्मत्वं विषयरूपत्वम् । यथा भाविनं घटं जानाति (न्या० म० ४ पृ० ६) पौरवं गां याचते इत्यादौ द्वितीयार्थः । अत्र विद्यमानघटस्थले ज्ञानेन ज्ञाततोत्पादनमङ्गीकृत्य क्रियाजन्यफलशालित्वरूपकर्मत्वमपि कदाचित्संभवति इत्यतः भाविनम् इत्युक्तम् । तत्र पूर्वं घटस्याभावेन ज्ञाततायाः जननासंभवात् इति भावः । एवं च कर्तुरीप्सिततमं कर्म इत्यनेन सूत्रेण लक्षणया विषयत्वात्मकं गौणमेव कर्मत्वं बोध्यते इति (त० प्र० ख० ४ पृ० ७६) । पौरवमित्यत्रापि पूर्वोक्तमेव गौणं कर्मत्वम् । पौरवस्य गां दोग्धि इत्यत्रेव कर्मत्वं बोध्यम् । तच्च विषयत्वरूपं कर्मत्वं क्वचिद्विधेयत्वम् विधेयित्वं वा । यथा पर्वते वह्निमनुमिनोमीत्यादौ द्वितीयार्थः । अत्रेदं बोध्यम् । ज्ञानादिरूपसविषयकवस्त्वभिधायकधातुसमभिव्याहृतद्वितीयायाः प्राचीनमते विषयत्वमर्थः । तस्य च निरूपकतासंबन्धेन धात्वर्थेन्वयः । विषयत्वे प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः इति । नव्यास्तु वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकतया घटं जानाति पटं न इत्यादौ प्राचीनमते शाब्दबोधस्य अनुपपत्तेस्तत्र द्वितीयाया विषयित्वमेव शक्यार्थमुपवर्णयन्ति । तन्मते तत्र विषयित्वे प्रकृत्यर्थस्य निरूपितत्वसंबन्धेन विषयित्वस्य च धात्वर्थे आश्रयतासंबन्धेनान्वयः इति । घटादिनिष्ठं ज्ञानादिकर्मत्वं च ज्ञानादिविषयत्वमेव । विषयित्वादौ च द्वितीयाया लक्षणैव न तु शक्तिः इति सांप्रदायिका आहुः (ग० व्यु० का० २ ख० २ पृ० ५१) । क्वचित्तु

उद्देश्यत्वम् उद्देश्यित्वं वा । यथा वह्निमत्त्वेन पर्वतमनुमिनोमीत्यादौ द्वितीयार्थः । अयं द्वितीयार्थस्तु ( उद्देश्यत्वम् उद्देश्यित्वं वा ) यदि वह्नि-साध्यकपर्वतपक्षकानुमितिपरस्य वह्निमत्त्वेन पर्वतमनुमिनोमि इत्यादि-वाक्यस्यापि प्रामाण्यं मन्यते तदाङ्गीकर्तव्यः । तथा च तादृशद्वितीयार्थो-द्देश्यत्वादेश्च तृतीयान्तोपस्थाप्यसाध्यविधेयकत्वेन विशिष्टेन्वयः कर्तव्यः । वह्निमत्त्वेनेत्यत्र तृतीयार्थो वैशिष्ट्यम् । तच्चात्र विधेयत्वमेवेति न तृतीया-र्थानुपपत्तिः ( ग० व्यु० का० २ ख० २ पृ० ५५–५६ ) । यथा वा विष्णुं यजते इत्यादौ द्वितीयार्थः । क्वचिच्च समवायसंबन्धावच्छिन्ना-धेयत्वसंसर्गावच्छिन्नविषयतानिरूपितप्रकारिता । यथा पुष्पं जिघ्रतीत्यादौ द्वितीयार्थः । अत्र तादृशप्रकारितायाश्च गन्धनिरूपितलौकिकविषयिता-शालिप्रत्यक्षात्मकधात्वर्थैकदेशे विषयितायां निरूपितत्वसंबन्धेनान्वयः । तेन इदानींतनपुष्पे गन्धः इत्यादिप्रत्ययस्याधेयतासंसर्गेण कालादिप्रकार-कत्वेपि तादृशप्रत्यक्षदशायां न कालं जिघ्रति इत्यादिप्रयोगः ( ग० व्यु० का० २ ख० १ पृ० ५२ ) । क्वचिच्च लौकिकविषयित्वम् । यथा घटं पश्यतीत्यादौ द्वितीयार्थः । क्वचित् तादात्म्यसंबन्धावच्छिन्नप्रकारता । यथा रङ्गे अभेदेन रजतारोपस्थले रङ्गं रजतं जानाति इत्यादौ द्वितीयार्थः । क्वचित् विशेष्यता । यथा पाकं चिकीर्षतीत्यादौ द्वितीयार्थः । अत्र पाकादेश्च कृतिकर्मत्वमेव द्वितीयया प्रत्याय्यते । न त्विच्छाया विषयत्व-रूपं कर्मत्वम् । गृहस्थितीच्छामादाय गृहं तिष्ठासति इत्यादिप्रयोगापत्तेः ( ग० व्यु० का० २ ख० २ पृ० ५९ ) । अत्रेदं ज्ञेयम् । क्यजाद्य-न्तादेरकर्मकस्य सन्नन्तसमानार्थकत्वेपि पुत्रीयति पुत्रकाम्यतीत्यादौ साकाङ्क्षत्वानुपगमेन न द्वितीया । भृत्यं पुत्रीयतीत्यादौ तु आचारार्थ-विहितक्यजन्तस्य सकर्मकत्वं युज्यत एवेति तत्र द्वितीया ( ग० व्यु० का० २ ख० २ पृ० ६३ ) । क्वचित् मुख्यविशेष्यत्वम् । यथा वृष्टिसाध्यं सुखं भवतु इत्यत्र सुखस्यैव न तु वृष्टेः कर्मत्वं द्वितीयार्थः । अतस्तत्र तादृशविवक्षायां सुखमिच्छति इत्यादिवत् वृष्टिमिच्छति इत्यादयो न प्रयोगाः ( ग० व्यु० का० २ ख० २ पृ० ५९ ) । क्वचित्

साध्यताख्यविषयताविशेषः । यथा घटं करोतीत्यादौ द्वितीयार्थः । अत्रायं विशेषो ज्ञेयः । काशान् कटं करोति काष्ठं भस्म करोतीत्यादौ काशकाष्ठपदोत्तरद्वितीययोरुपादानीयविलक्षणविषयतैवार्थः इति (ग० व्यु० का० २ ख० २ पृ० ६५)। २ कर्तृत्वम् । यथा अजां ग्रामं प्रापयति शिष्यं शास्त्रं ज्ञापयति ब्राह्मणमन्नं भोजयति यजमानं मन्त्रं पाठयति घटं जनयति घटं नाशयति चैत्रः इत्यादौ अजादिपदोत्तरद्वितीयार्थः कर्तृत्वम् । अजां ग्रामं प्रापयति इत्यादौ गतिनिरूपितमजानिष्ठं कर्तृत्वम् आश्रयत्वमेव द्वितीयार्थः । अत्र गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ (पा० सू० १।४।५२) इत्यनेन कर्तुः कर्मसंज्ञा विधीयते इति बोध्यम् । तथा च अजां ग्रामं प्रापयति इत्यस्य अजा ग्रामं गच्छति चैत्रोजां ग्रामं गमयति इत्यर्थः । एवमुत्तरत्राप्यर्थ ऊह्यः । शिष्यं शास्त्रं ज्ञापयतीत्यादौ ज्ञाननिरूपितं शिष्यनिष्ठं कर्तृत्वं चाश्रयत्वमेव द्वितीयार्थः । घटं जनयतीत्यादावुत्पत्तिनिरूपितं घटनिष्ठं कर्तृत्वं चाश्रयत्वमेव द्वितीयार्थः । ब्राह्मणमन्नं भोजयतीत्यादौ भोजननिरूपितं ब्राह्मणनिष्ठं कर्तृत्वं च भोजनानुकूलकृतिमत्त्वमेव द्वितीयार्थः । यजमानं मन्त्रं पाठयतीत्यादौ पाठनिरूपितं यजमाननिष्ठं कर्तृत्वं च पाठानुकूलकृतिमत्त्वमेव द्वितीयार्थः । घटं नाशयतीत्यादौ नाशनिरूपितं घटनिष्ठं कर्तृत्वं च प्रतियोगित्वमेव द्वितीयार्थः । तस्य च कर्तृत्वस्य पूर्वोक्ताश्रयत्वकृतिमत्त्वप्रतियोगित्वात्मकस्य निरूपकतासंबन्धेन धात्वर्थेन्वयः इति प्राचीना आहुः । नव्यास्तु यत्राश्रयत्वं कर्तृत्वम् तत्राधेयत्वं द्वितीयार्थः । यत्रानुकूलकृतिमत्त्वं कर्तृत्वं तत्र कृतिजन्यत्वं द्वितीयार्थः । यत्र प्रतियोगित्वं कर्तृत्वं तत्रानुयोगित्वं द्वितीयार्थः । तेषां च पूर्वोक्तकर्तृत्वानाम् आश्रयतासंबन्धेनैव तत्तद्धात्वर्थेष्वन्वयः इति प्राहुः । ३ विभागः । यथा गां पयो दोग्धि मैत्र इत्यादौ गोपदोत्तरद्वितीयाया अर्थः । अत्रत्यो विषयस्तु दोहनशब्दव्याख्यानावसरे संपादितः । तत्रावलोकनीयः । ४ अभेदः । यथा स्तोकं पचतीत्यादौ द्वितीयार्थः । अत्र नामार्थधात्वर्थयोरभेदात्मकसंबन्धेन पदादनुपस्थितेनाप्यन्वयो भवतीत्यस्यास्वीकार एवाभेदो

द्वितीयया बोध्यते । तत्स्वीकारे तु क्रियाविशेषणपदोत्तरद्वितीया विशेषणविभक्तिवत्प्रयोगसाधुत्वायैवेति ज्ञेयम् (का० व्या० पृ० ७) । ५ अधिकरणत्वम् । यथा मासमधीते चैत्र इत्यादौ द्वितीयार्थः । अत्र कालाध्वनोरत्यन्तसंयोगे (पा० सू० २।१।५) इत्यनेन द्वितीया ज्ञेया। ६ अन्ये तु व्यापकत्वम् । यथा मासं रमणीया क्रोशं कुटिला नदीत्यादौ द्वितीयार्थः इत्याहुः । अत्र अत्यन्तसंयोगोभिव्याप्तिः । अभिव्याप्त्यन्तर्भावेन मासस्य कर्मत्वम् । द्वितीयायाः साधुत्वनिर्वाहकत्वमेवेति । अत्रोक्तम् कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः । सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ॥ इति (ग० व्यु० का० २ ख० २ पृ० ६८) । ७ केचित्तु अभिव्याप्तिः । यथा मासं सुप्यते क्रोशं गम्यते इत्यादौ द्वितीयार्थ इत्याहुः । ८ प्रतियोगित्वम् अनुयोगित्वं वा । यथा दण्डं विना न घट उत्पद्यते रासभं विनापि घट उत्पद्यते इत्यादौ द्वितीयार्थः । यथा वा आरभ्य तस्यां दशमीं तु यावत् प्रपूजयेत्पर्वतराजपुत्रीम् इत्यादौ प्रतियोगित्वम् अनुयोगित्वं वा द्वितीयार्थः । ९ अवधित्वम् अवधिमत्त्वं वा । यथा काशीतः कौशिकीं यावद्यातीत्यादौ द्वितीयार्थः । १० आधेयत्वम् । यथा यज्ञमनु प्रावर्षदित्यादौ द्वितीयार्थः । अत्रार्थे कारकत्वरूपं हेतुत्वम् अनुशब्दार्थः । अनुर्लक्षणे (पा० सू० १।४।८४) इत्यत्र कर्मप्रवचनीयसंज्ञाविधायकसूत्रे लक्षणपदस्य कारकहेतुपरत्वात् । तत्र च यज्ञान्वितस्याधेयत्वरूपद्वितीयार्थस्यान्वयः । हेतुतायाश्च निरूपकत्वसंबन्धेन वृष्टावन्वयः (ग० व्यु० का० २ ख० २ पृ० ७६) । ११ निरूपितत्वम् । यथा उक्तोदाहरणे एव यज्ञमनुप्रावर्षदित्यत्र। अत्रार्थे जन्यत्वमनुशब्दार्थः। तत्र निरूपितत्वरूपद्वितीयार्थस्य यज्ञाद्यन्वितस्यान्वयः । जन्यतायाश्चाश्रयत्वसंबन्धेन वृष्टावन्वयः । यथा वा त्वां च मां चान्तरेणेत्यादौ द्वितीयार्थो निरूपितत्वम् । अत्र अन्तरान्तरेण युक्ते (पा० सू० २।३।४) इत्यनेन द्वितीया। तथा च द्वितीयार्थनिरूपितत्वस्यान्तरापदार्थतावच्छेदकमध्यत्वेन्वयः (ग० व्यु० का० २ ख० २ पृ० ७७) । एवमन्यत्रापि द्वितीयार्थ उक्तदिशा स्वयं परिच्छेद्यः (ग० व्यु० कारक० २ खण्ड० १–२ पृ० ३६–७७) ।

द्वित्वम्—[ क ] संख्याविशेषः । इदं द्वित्वं च समवायेन द्रव्यद्वये प्रत्येकं तिष्ठति इति ज्ञेयम् । यथा द्वौ घटावानयेत्यादौ द्वित्वम् । [ ख ] अपेक्षाबुद्धिजन्यो गुणविशेषः । यथा अयमेकः अयमेकः इति बुद्ध्यनन्तरम् इमौ इति व्यवहारविषयो द्वित्वम् । इदं द्वित्वं तु व्यासज्यवृत्ति पर्याप्तिसंबन्धेन द्वयोरेव द्रव्ययोस्तिष्ठति न प्रत्येकम् । इदमेव द्वित्वम् इमौ द्वौ इति व्यवहारविषयः इति च विज्ञेयम् ( सर्व० सं० पृ० २२१ औलु० ) । एवम् त्रित्वचतुष्ट्वाद्यारभ्य परार्धत्वपर्यन्तं ज्ञेयम् । मीमांसकास्तु द्वित्वादीनामपेक्षाबुद्धिजन्यत्वं न स्वीकुर्वन्ति इत्यन्यत् । वस्तुतस्तु द्वित्वमपेक्षाबुद्ध्या जन्यते तन्नाशेन च नश्यति । क्वचिदाश्रयनाशादपि नश्यति ( प्रशस्त० पृ० १३ ) ( मु० गु० ) । द्वित्वादेरपेक्षाबुद्धिजन्यत्वे प्रमाणमाहुराचार्याः अपेक्षाबुद्धिर्द्वित्वादेरुत्पादिका भवितुमर्हति व्यञ्जकत्वानुपपत्तौ तेनानुविधीयमानत्वात् शब्दं प्रति संयोगवत् इति । द्वित्वादिकमेकत्वद्वयविषयानित्यबुद्धिव्यङ्ग्यं न भवति अनेकाश्रितगुणत्वात् पृथक्त्वादिवत् इति सायणाचार्याः ( सर्व० सं० पृ० २२२ औलु० ) । इदानीं द्वित्वोत्पत्तिप्रकाराः प्रदर्श्यन्ते । ( १ ) यदा बोद्धुश्चक्षुषा समानासमानजातीययोर्द्रव्ययोः संनिकर्षे सति तत्संयुक्तसमवेतसमवेतैकत्वसामान्यज्ञानोत्पत्तावेकत्वसामान्यतत्संबन्धज्ञानेभ्य एकगुणयोरनेकविषयिण्येकबुद्धिरुत्पद्यते तदा तामपेक्ष्यैकत्वाभ्यां स्वाश्रययोर्द्वित्वमारभ्यते । ततः पुनस्तस्मिन् द्वित्वसामान्ये ज्ञानमुत्पद्यते । तस्माद्द्वित्वसामान्यज्ञानादपेक्षाबुद्धिर्विनश्यति । द्वित्वसामान्यतत्संबन्धज्ञानेभ्यो द्वित्वगुणबुद्धेरुत्पद्यमानता इत्येकः कालः ( प्रशस्त० पृ० १३ ) । ( २ ) प्रथममिन्द्रियार्थसंनिकर्षः । तस्मादेकत्वसामान्यज्ञानम् । ततोपेक्षाबुद्धिः । ततो द्वित्वोत्पत्तिः । ततो द्वित्वसामान्यज्ञानम् । तस्माद्द्वित्वगुणज्ञानम् । ततः संस्कारः ( सर्व० सं० पृ० २२१ औलु० ) । ( ३ ) उत्पत्स्यमानद्वित्वाधारेणेन्द्रियसंनिकर्षः । तत एकत्वगुणगतसामान्यज्ञानम् । तत एकत्वसामान्यविशिष्टैकत्वगुणसमूहालम्बनरूपापेक्षाबुद्धिः । ततो द्वित्वगुणोत्पत्तिः । ततस्तद्गतसामान्यस्य ज्ञानम् । ततस्तत्सामान्यविशिष्टद्वित्वगुणज्ञानम् । ततो द्वित्वगुणविशिष्ट-

द्रव्यज्ञानम् । ततः संस्कारः । इतीन्द्रियसंनिकर्षमारभ्य संस्कारपर्यन्तमष्टौ क्षणाः (वै० उ० ७।२।८)। अत्र मुक्तावली । प्रथममपेक्षाबुद्धिः । ततो द्वित्वोत्पत्तिः । ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पकात्मकम् । ततो द्वित्वविशिष्टप्रत्यक्षमपेक्षाबुद्धिनाशश्च । ततो द्वित्वनाशः इति (मु०गु०)। द्वित्वादेरपेक्षाबुद्धिनाशनाश्यत्वे प्रमाणमनुमानम् । तच्च द्वित्वमपेक्षाबुद्धिनाशनाश्यम् आश्रयनाशविरोधिगुणान्तराभावे गुणस्य स्वतः अविनाशित्वात् चरमज्ञानवत् । चरमज्ञानस्यादृष्टनाशनाश्यत्वात् इति (वै० उ० ७।२।८)। इदानीं द्वित्वविनाशप्रकाराः प्रदर्श्यन्ते । ( १ ) एकत्वत्वसामान्यज्ञानस्यापेक्षाबुद्धितो विनाशः । द्वित्वत्वसामान्यज्ञानादपेक्षाबुद्धेर्विनाशः । द्वित्वत्वसामान्यज्ञानस्य च द्वित्वगुणबुद्धितो विनाशः । द्वित्वगुणबुद्धेश्च द्वित्वविशिष्टद्रव्यज्ञानात् । तस्य च संस्कारात् विषयान्तरज्ञानाद्वा विनाशः इति । एवम् द्वित्वोत्पत्तिविनाशवत् त्रित्वोत्पत्तिविनाशावप्यूहनीयौ ( वै० उ० ७।२।८ ) । ( २ ) अपेक्षाबुद्धित एकत्वसामान्यज्ञानस्य द्वित्वोत्पत्तिसमकालं निवृत्तिः । अपेक्षाबुद्धेर्द्वित्वसामान्यज्ञानाद्द्वित्वगुणबुद्धिसमसमयं निवृत्तिः । द्वित्वस्यापेक्षाबुद्धिनिवृत्तेर्द्रव्यबुद्धिसमकालं निवृत्तिः । गुणबुद्धेर्द्रव्यबुद्धितः संस्कारोत्पत्तिसमकालं निवृत्तिः । द्रव्यबुद्धेस्तदनन्तरं संस्कारात् इति (प्रशस्त० पृ० १३ )। आश्रयनाशात्तन्नाशो यथा । ( ३ ) यत्र द्वित्वाधारावयवकर्मसमकालमेकत्वसामान्यज्ञानम् । तद्यथा अवयवकर्मसामान्यज्ञाने विभागापेक्षाबुद्धी संयोगनाशगुणोत्पत्ती द्रव्यनाशद्वित्वसामान्यज्ञाने तत्र द्रव्यनाशाद्द्वित्वनाशः सामान्यज्ञानादपेक्षाबुद्धिनाशः अपेक्षाबुद्धिनाशस्य द्वित्वनाशसमानकालत्वात् कार्यकारणसमानभावाभावात् (वै० उ० ७।२।८) । (४) यदैकत्वाधारावयवैः कर्मोत्पद्यते तदैकत्वसामान्ये ज्ञानमुत्पद्यते । कर्मणा चावयवान्तराद्विभागः क्रियते । अपेक्षाबुद्धेश्चोत्पत्तिः । ततो यस्मिन्नेव काले विभागात् संयोगविनाशस्तस्मिन्नेव काले द्वित्वमुत्पद्यते । संयोगविनाशाद्द्रव्यविनाशः सामान्यबुद्धेश्चोत्पत्तिः । ततस्तस्मिन्नेव काल आश्रयविनाशाद्द्वित्वविनाशः इति शोभनमेतद्विधानम् (प्रशस्त० पृ० १४) । अपेक्षाबुद्धि-

विशेषविषयत्वं द्वित्वमिति केचिदाहुः ( दि० १ ) । यथा समवायाभावौ द्वौ इति प्रतीतिविषयो द्वित्वम् । इदं च द्वित्वं स्वरूपसंबन्धेन पदार्थमात्रे तिष्ठति इति ज्ञेयम् । द्वित्वादिकं स्वरूपमेद एव नातिरिक्तम् इति भूषणमतम् ( वै० उ० ७।२।१ ) ।

**द्विधा**—( अव्ययम् ) प्रकारद्वयेन । यथा षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ( रघु० स० १ श्लो० ३९ ) इत्यादौ ।

**द्विराषाढः**—मलमासविशेषः । माधवाद्येषु षट्स्वेकमासि दर्शद्वयं यदा । द्विराषाढः स विज्ञेयः शेते कर्कटकेच्युतः ॥ ( पु० चि० पृ० ३० ) ।

**द्विष्ठत्वम्**—[ क ] उभयनिरूपितवृत्तित्वम् । यथा संयोगविभागादीनां द्विष्ठत्वम् । [ ख ] स्थानद्वयवृत्तित्वम् । यथा द्विष्ठास्तिथिक्षयाभ्यस्ताश्चान्द्रवासरभाजिताः ( सू० सि० ) इत्यादौ इति ज्योतिःशास्त्रज्ञा आहुः ।

**द्वीन्द्रियग्राह्यगुणत्वम्**—[ क ] इन्द्रियत्वावान्तरत्वक्त्वचक्षुष्ट्वैतदुभयधर्मावच्छिन्नजनकतानिरूपितजन्यताश्रयग्रहविषयगुणत्वम् । द्वीन्द्रियग्राह्यगुणाश्च संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः परत्वम् अपरत्वम् द्रवत्वम् वेगः स्नेहश्च ( भा० प० गु० श्लो० ९२–९३ ) ( दि० गु० पृ० १९३ ) । [ ख ] चक्षुस्त्वगुभयग्रहणयोग्यत्वम् ( दि० गु० पृ० १९३ ) । चक्षुस्त्वगुभयग्राह्यभावनावृत्त्यन्यधर्मसमवायिगुणत्वम् इति तु निष्कर्षः । अत्र संस्कारत्वादिकमादाय भावनायामतिव्याप्तिवारणाय भावनावृत्त्यन्येति । कर्मादावतिव्याप्तिवारणाय गुणत्वस्य निवेशः ( दि० गु० पृ० १९३ ) । [ ग ] चाक्षुषस्पार्शननिर्विकल्पकविषयगुणत्वव्याप्यजातिमत्त्वम् ( प० मा० ) । [ घ ] बाह्यद्वीन्द्रियग्राह्यजातिमद्गुणत्वम् इति कश्चिद्वक्ति ( ल० व० ) ।

**द्वेषः**—( गुणः ) [ क ] अमर्षलक्षणः दोषः ( वात्स्या० ४।१।३ ) । यथा इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् ( गौ० १।१।१० ) इत्यादौ द्वेषः । यज्जातीयस्यार्थस्य संनिकर्षाद्दुःखमात्मोपलब्धवान् तज्जातीयमेवार्थं पश्यन् हातुमिच्छति । सेयं हातुमिच्छा द्वेषः । एवम्

एकस्यानेकार्थदर्शिनो दर्शनप्रतिसंधानाद्दुःखहेतौ द्वेषः इति भाष्यसंमतोर्थः ( वात्स्या० १।१।१० ) । द्वेषश्च मनोग्राह्यः ( भा० प० श्लो० ५८ ) जीवात्ममात्रवृत्तिश्च ( वात्स्या० ४।१।२ ) । द्वेषलक्षणं च निवृत्तेः साक्षादनुकूलत्वम् । अत्र ज्ञानवारणाय साक्षात् इति पदम् ( वाक्य० गु० पृ० २१ ) । अथवा निवृत्त्युत्पादकज्ञानजन्यगुणत्वम् इति ( ल० व० गु० पृ० ३५ ) । [ ख ] निवृत्तिलिङ्गः ( वात्स्या० ३।२।३७ ) । स च प्रज्वलनात्मकः ( प्रशस्त० पृ० ३३ ) । यथा इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ( गीता० ३।३४ ) इत्यादौ द्वेषः । यस्मिन् सति प्रज्वलितमिवात्मानं मन्यते स द्वेषः । स चात्ममनसोः संयोगाद्दुःखापेक्षात् स्मृत्यपेक्षाद्वा उत्पद्यते । प्रयत्नस्मृतिधर्माधर्महेतुः । द्रोहः क्रोधः मन्युः अक्षमा अमर्षः इति द्वेषभेदाः ( प्रशस्त० पृ० ३३ ) । [ ग ] द्वेष्टि इत्यनुभवसिद्धद्वेषत्वसामान्यवान् प्रज्वलनात्मकः ( प्र० प्र० ) ( त० कौ० पृ० ८ ) ( सि० च० गु० पृ० ३५ ) । [ घ ] द्विष्टसाधनताज्ञानजन्यो गुणविशेषः ( सि० च० गु० पृ० ३५ ) ( भा० प० गु० श्लो० १४९ ) । अत्रेदं ज्ञेयम् । दुःखोपायविषयकं द्वेषं प्रति बलवद्द्विष्टसाधनताज्ञानं कारणम् । बलवदिष्टसाधनताज्ञानं च प्रतिबन्धकम् । तेन नान्तरीयकदुःखजनके पाकादौ न द्वेषः इति ( मु० गु० पृ० २२२ ) । [ ङ ] बलवद्दुःखसाधनताज्ञानजन्यः अप्रीतिजनकश्चित्तवृत्तिविशेषः । यथा औषधं द्वेष्टि इत्यादौ इति शाब्दिका आहुः ( ल० म० ) । [ च ] दुःखानुशयो क्लेशविशेषः द्वेषः इति पातञ्जला आहुः । [ छ ] दुःखज्ञस्य तदनुस्मृतिपुरःसरं तत्साधने निन्दा द्वेषः ( सर्व० सं० पृ० ३६३ पात० ) । स च द्वेषः बुद्धिधर्म एव नात्मधर्म इति सांख्या आहुः । न्यायनये द्वेषो द्विविधः । दुःखविषयः तत्साधनविषयश्च । अत्र कार्यकारणभावो ज्ञेयः । दुःखद्वेषं प्रति दुःखज्ञानमात्रं कारणम् । तथा दुःखसाधनद्वेषं प्रति दुःखसाधनताज्ञानं इदं दुःखसाधनम् इत्याकारकम् कारणम् इति ( त० कौ० पृ० १८ ) । सांख्यादिमते च द्वेषोष्टादशविधः ( वाच० ) ।

**द्वैतवादः**—जीवेश्वरादिभेदनिर्णायकः कथाविशेषः। यथा गौतमादिप्रणीतः कथारूपग्रन्थविशेषः। अत्र व्युत्पत्तिः। द्विधा इतं द्वीतम्। तस्य भावः द्वैतम्। स्वार्थे वा अण्। द्वैतमधिकृत्य वादो द्वैतवादः इति (वाच०)। द्वैतवादे प्रमाणानि ॐ भेदव्यपदेशात् ॐ ॐ प्रकरणात् ॐ ॐ स्थित्यदनाभ्यां च ॐ (ब्रह्मसूत्र० १।३।५–७)। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्। द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति (मु० ३।१।१) (तत्त्वप्रका० १।३।५–७)। जन्मादिव्यवस्थातः पुरुषबहुत्वम् (सां० सू० अ० १ सू० १४९) नाद्वैतश्रुतिविरोधो जातिपरत्वात् (सां० सू० अ० १ सू० १५४) इत्यादीनि ज्ञेयानि। सांख्यकारिकायामप्युक्तम्। जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च। पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव॥ (सांख्यका० श्लो० १८) इति। अत्र द्वैतमतानि च सांख्ययोगन्यायतर्कपूर्वमीमांसोत्तरमीमांसादर्शनानि ज्ञेयानि। अत्रोत्तरमीमांसाशब्देन मध्वापरनामश्रीपूर्णप्रज्ञाचार्यप्रणीतं वेदान्तशास्त्रं ग्राह्यम्। शांकरमतमद्वैतम् रामानुजमतं विशिष्टाद्वैतम् वल्लभमतं तु शुद्धाद्वैतम् इति च ज्ञेयम्। द्वैतमतेषु जगतः सत्यत्वम् जीवेश्वरादिभेदपञ्चकम् परमात्मनः सर्वोत्तमत्वं स्वातन्त्र्यं च जीवानां तु बहुविधत्वं सायुज्यादिमोक्षश्च प्रतिपाद्यते इति विज्ञेयम्। षड्दर्शनकर्तारश्च सांख्यशास्त्रप्रणेता कपिलः योगशास्त्रप्रणेता पतञ्जलिः न्यायशास्त्रप्रणेता गौतमः तर्कशास्त्रप्रणेता कणादः पूर्वमीमांसाशास्त्रप्रणेता जैमिनिः उत्तरमीमांसाशास्त्रप्रणेता श्रीसत्यवतीसुतो व्यासश्चेत्येते ज्ञेयाः।

**द्व्यणुकम्**—[क] परमाणुद्वयसंयोगेन यदुत्पद्यते तत् (त० दी० १ पृ० ९) (त० कौ० १ पृ० ३)। यथा विषयो द्व्यणुकादिस्तु ब्रह्माण्डान्त उदाहृतः (भा० प० श्लो० ३९) इत्यादौ द्व्यणुकम्। [ख] अणुर्द्वौ परमाणू स्यात् इति बादरायणाचार्या आहुः (भाग०)। [ग] नव्या नास्तिकास्तु संयुक्ताणुद्वयं द्व्यणुकम् इत्याहुः (प० मा०)। अत्र व्युत्पत्तिः द्वौ अणू कारणे यस्य तत् इति द्रष्टव्या। द्व्यणुकं तु

जन्यद्रव्यावयवोतीन्द्रियं च इति न्यायसिद्धान्तः । महादेवभट्टस्तु गवाक्षरन्ध्रे दृश्यमानानामेव त्र्यणुकत्वमिति त्र्यणुकं नातीन्द्रियम् इत्याह ( दि० १ पृथिवी० पृ० ६९ ) । अत्रायं विशेषः । गवाक्षरन्ध्रे दृश्यमानस्यैव त्र्यणुकस्य त्रसरेणुः इत्यपि व्यवहारः । त्र्यणुकार्थे त्रसरेणुः इति पदं केवलरूढमेव ( राम० १ पृथि० पृ० ६९ ) । अतो न मनुस्मृतेः ( अ० ८ श्लो० १३२ ) विरोधः इति ।

## ध.

**धमनी**—स्थूलतरनाडी ( संगीतरत्नाकरे पृ० १९ ) ।

**धर्मः**—१ आधेयः पदार्थः । यथा द्रव्यं गुणवदित्यादौ गुणो धर्मः । यथा संदिग्धसाध्यधर्मत्वं पक्षत्वम् ( चि० २ पृ० ३३ ) इति पक्षलक्षणे पर्वतपक्षकवह्निसाध्यकस्थले वह्न्यादिर्धर्मः । अत्र वृत्तिमत्त्वं धर्मस्य लक्षणम् । यत्र कुत्रचिद्वर्तते यत् तत्त्वम् इत्यर्थः । तेन घटत्वाकाशत्वादिषु वृत्तिमत्पदार्थेषु लक्षणसमन्वयः । २ (गुणः ) [क] यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ( वै० १।१।२ ) । स धर्मः निवृत्तिलक्षणः विधिरूपो वा ( वै० उ० १।१।२ ) । [ख] सुखासाधारणकारणम् ( प्र० प्र० ) ( त० भा० गु० पृ० ३७ ) । स च विहितकर्मजन्यः अदृष्टविशेषः ( त० सं० ) । यथा धर्माधर्माश्रयोऽध्यक्षः ( भा० प० श्लो० ५० ) इत्यादौ पुण्यात्मको धर्मः । [ग] शरीरेण प्रशस्तानि दानपरपरित्राणादीनि कर्माण्याचरति । वाचा हितसत्यादीनि । मनसा अजिघांसादीनि । सेयं पुण्यरूपा प्रवृत्तिर्धर्मः ( सर्व० सं० पृ० २४६ अक्ष० ) । स च जीवमात्रसमवेतः वासनया जन्यते भोगतत्त्वज्ञानादिना नश्यतीति ज्ञेयम् ( सि० च० ) । धर्मस्तु न प्रत्यक्षः । किं त्वनुमानगम्यः । तथानुमानम् देवदत्तस्य शरीरादिकं देवदत्तस्य विशेषगुणजन्यम् कार्यत्वे सति देवदत्तस्य भोगहेतुत्वात् देवदत्तप्रयत्नजन्यवस्तुवत् इति । यस्तु शरीरादिजनक आत्मविशेषगुणः स एव धर्मः । प्रयत्नादीनां शरीराद्यजनकत्वात् इति ज्ञेयम् ( त० भा० गु० पृ० ३७ ) । ३ वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः इति मीमांसकाः ( लौ० भा० पृ० ३ ) । वेदेन

प्रयोजनमुद्दिश्य विधीयमानोर्थो धर्मः ( मी० न्या० पृ० १ ) । अर्थत्वे सति चोदनागम्यो धर्मः ( जै० न्या० १।१।१ ) । स च धर्मः भट्टमते यागादिः प्राभाकरमते त्वपूर्वनाम पुण्यम् ( तत्त्वबोधिनी ) ( वाच० ) । एतद्धर्मप्रमाणम् वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ ( मनु० २।१२ ) इति । दशविधं धर्मलक्षणं च मनुनोक्तम् धृतिः क्षमा दमोस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ ( मनु० अ० ६ श्लो० ९२ ) इति । धर्मस्य शुद्धिश्च तेनैवोक्ता प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ ( मनु० अ० १२ श्लो० १०५ ) इति । यथा धर्मः स्वनुष्ठितः पुंसामित्यादौ यागादिर्धर्मः ( मीमां० कौ० ) । यथा वा गङ्गास्नानादिव्यापारः ( त० भा० ) । स च धर्मः षड्विधः वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मः गुणधर्मः निमित्तधर्मः साधारणधर्मश्चेति ( मिता० १।१ ) । ४ कर्तव्यविशेषः पुरुषविशेषगुणः प्रयत्नगुणकर्तुः प्रियहितमोक्षहेतुः अतीन्द्रियः अन्त्यसुखसंविज्ञानविरोधी पुरुषान्तःकरणसंयोगजः विशुद्धाभिसंधिजः वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः । अस्य तु साधनानि श्रुतिस्मृतिविहितानि वर्णाश्रमिणां सामान्यविशेषभावेनावस्थितानि द्रव्यगुणकर्माणि । तत्र सामान्यानि धर्मे श्रद्धा अहिंसा भूतहितम् सत्यवचनम् अस्तेयम् ब्रह्मचर्यम् अनुपधा क्रोधवर्जनम् अभिषेचनम् शुचिद्रव्यसेवनम् विशिष्टदेवताभक्तिः उपवासः अप्रमादश्च । ब्राह्मणक्षत्रियविशामिज्याध्ययनदानानि । ब्राह्मणस्य विशिष्टानि प्रतिग्रहाध्यापनयाजनानि स्ववर्णनियताश्च संस्काराः । क्षत्रियस्य सम्यक् प्रजापरिपालनम् असाधुनिग्रहः युद्धेष्वनिवर्तनम् स्वकीयाश्च संस्काराः । वैश्यस्य क्रयविक्रयकृषिपशुपालनानि स्वकीयाश्च संस्काराः । शूद्रस्य पूर्ववर्णेषु पारतन्त्र्यम् अमन्त्रिकाश्च क्रियाः । आश्रमिणां तु ब्रह्मचारिणो गुरुकुलनिवासिनः स्वशास्त्रविहितानि गुरुशुश्रूषाग्नीन्धनभैक्षाचरणादीनि मधुमांसदिवास्वप्नाभ्यञ्जनादिवर्जनं च । विद्याव्रतस्नातकस्य कृतदारस्य

गृहस्थस्य शालीनयायावरवृत्त्युपार्जितैर्भूतमनुष्यदेवपितृषु ब्रह्माख्यानां पञ्चानां महायज्ञानां सायंप्रातरनुष्ठानम् एकाग्निविधानेन पाकयज्ञसंस्थानां नित्यानां शक्तौ विद्यमानायामग्न्याधेयादीनां हविर्यज्ञसंस्थानाम् अग्निष्टोमादीनां च सोमयज्ञसंस्थानां क्रत्वन्तरेषु च ब्रह्मचर्यम् अपत्योत्पादनं च । ब्रह्मचारिणो गृहस्थस्य वा ग्रामाद्बहिर्निःसृत्य वनेषु वासः वल्कलाजिनकेशश्मश्रुनखरोमधारणम् वन्याम्बुहुतातिथिशेषभोजनानि वनस्थस्य वानप्रस्थस्य । त्रयाणामन्यतमस्य श्रद्धावतः सर्वभूतेभ्यो नित्यमभयं दत्त्वा संन्यस्य स्वानि कर्माणि यमनियमेष्वप्रमत्तस्य षट्पदार्थपरिसंख्यानायोगस्य साधनं प्रव्रजितस्य इति । दृष्टं च प्रयोजनमनुद्दिश्यैतानि साधनानि भावप्रसादं चापेक्ष्यात्ममनसोः संयोगाद्धर्मोत्पत्तिः इति ( प्रशस्त० उ० पृ० ३५–३६ ) ।

**धर्मशास्त्रम्**—धर्मप्रतिपादकं मन्वादिप्रणीतं शास्त्रम् । अत्रेदं बोध्यम् । धर्मशास्त्रस्य कर्तारश्च मनुविष्णुयमदक्षाङ्गिरोत्रिबृहस्पत्युशनआपस्तम्बवसिष्ठकात्यायनपराशरव्यासशङ्खलिखितसंवर्तगौतमशातातपहारीतयाज्ञवल्क्यप्राचेतसादयः ( हेमाद्रिखण्डे ब्र० ) । आदिशब्देन च वृद्धदेवलसोमजमदग्निप्रजापतिविश्वामित्रवृद्धशातातपपैठीनसिपितामहबौधायनछागलेयजाबालिच्यवनमरीचिकश्यपा ग्राह्याः । अत्राह यमः मनुर्यमो वसिष्ठोत्रिर्दक्षो विष्णुस्तथाङ्गिराः । उशना वाक्पतिर्व्यास आपस्तम्बोथ गौतमः ॥ कात्यायनो नारदश्च याज्ञवल्क्यः पराशरः । संवर्तश्चैव शङ्खश्च हारीतो लिखितस्तथा ॥ एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा । तान्येवातिप्रमाणानि न हन्तव्यानि हेतुभिः ॥ इति ( वाच० ) ।

**धर्माभासः**—श्रुतिस्मृतिभ्यामुदितो यः स धर्मः प्रकीर्तितः । अन्यशास्त्रेषु यः प्रोक्तो धर्माभासः स उच्यते ॥ ( देवीभाग० ) ।

**धातुः**—१ वातपित्तकफास्त्रयो धातवः इत्यायुर्वेदविदः । २ रेतः इत्यपीति भिषजः । ३ रसासृङ्मांसमेदोस्थिमज्जाशुक्राणि सप्त धातवः त्वक्चर्मादयोपि च इति शारीरकशास्त्रज्ञा आहुः । ४ हिरण्यं रजतं कांस्यं ताम्रं सीसकमेव च । रङ्गमायसरैत्यं च धातवोष्टौ प्रकीर्तिताः ॥ इति वैद्य-

शास्त्रज्ञाः तान्त्रिकाश्चाहुः। ५ आकाशादिमहाभूतानि इति पौराणिकाः। ६ इन्द्रियाणि रूपरसगन्धस्पर्शशब्दाश्च धातुशब्दवाच्या भवन्तीति शास्त्रान्तरविद आहुः (वाच०)। ७ शब्दप्रकृतिः [क] यः शब्दः स्वोत्तरतृचः शक्येर्थे स्वोपस्थाप्यस्य यादृशार्थस्यान्वयबोधं प्रति समर्थः स तादृशार्थे धातुरुच्यते। यथा पच पिपक्ष इत्यादयो धातवः। अत्र धातूनाम् अनेकार्थकत्वम् इति सर्वे सर्वार्थवाचकाः इति च शाब्दिकादीनां राद्धान्तोनुसंधेयः। अत्र अनेकार्थकत्वं च व्याकरणकोश इत्याद्यभियुक्तकृततत्तदर्थकत्वम् (त० प्र० ख० ४ पृ० ७०)। सर्वार्थवाचकत्वं च स्वप्रवृत्तिनिमित्तसमानाधिकरणकृत्स्नधर्माश्रयवाचकत्वम्। धातुलक्षणं च क्रियावाचित्वे सति भ्वादिगणपठितत्वम् (ल० व०)। पचपिपक्षादयो हि शब्दाः पक्तृ पिपक्षितृ इत्यादिनामनिविष्टाः स्वोत्तरतृजर्थे कर्त्रादौ स्वोपस्थाप्यानां पचनपाकेच्छादीनामन्वयधियं प्रति प्रभवो भवन्तीति लक्षणसमन्वयोत्र बोध्यः (श० प्र० श्लो० ५५ पृ० ७०)। [ख] यः शब्दः स्वान्ते कृच्चिन्तनं विना सुबर्थे यादृशस्य निजार्थस्यान्वयधियं प्रत्यसमर्थः स एव तादृशार्थको धातुः। यथा पाकं कुरु संपदं पश्येत्यादौ। सुबर्थेपि धात्वर्थस्यान्वयवादिनां प्राचां मते नेदं धातुलक्षणम् इति ज्ञेयम्। अत्र हि पचादिको धातुः स्वोत्तरस्य भावकृतः घञ् क्विप् इत्यादिप्रत्ययस्य प्रतिसंधानदशायामेव सुबर्थकर्मत्वादौ स्वार्थस्य पचनादेरन्वयबोधमाधत्ते न त्वन्यथेति लक्षणसमन्वयः (श० प्र० श्लो० ५५ पृ० ७०)। धात्वर्थप्रकारकबोधं प्रति धातुप्रकृतिकप्रत्ययजन्योपस्थितेर्हेतुत्वात्। [ग] शाब्दिकास्तु क्रियावाचको भ्वादिगणपठितः शब्दविशेषः इत्याहुः। अत्र वा इत्याद्यव्ययानामपि गणपठितत्वेन धातुत्वापत्तिः। तद्वारणाय क्रियावाचित्वविशेषणम्। हिरुगाद्यव्ययानां क्रियावाचित्वेन धातुत्वापत्तिः। तद्वारणाय गणपठितत्वं विशेषणं दत्तम् (वाच०)। [घ] भाववचनो धातुः (सर्व० सं० पृ० ३०५ पाणि०)। धातुस्त्रिविधः। मूलधातुः सौत्रः प्रत्ययान्तश्चेति। तत्र (१) गणपठितो धातुर्मूलधातुरुच्यते। यथा भूपचप्रभृतिः। अत्र सूत्रम् भूवादयो धातवः (पा०

सू० १।३।१ ) इति । भ्वादयो द्वाविंशतिशतविधा धातवः (२२००) इति शाब्दिका वदन्ति । (२) सूत्रमात्रोपात्तो धातुः सौत्र इत्युच्यते । यथा स्कम्भुजुप्रभृतिकः । (३) स्वावयवलभ्यार्थस्य बोधको धातुः प्रत्ययान्त इत्युच्यते । यथा पाचि पिपक्षा तितिक्षा इत्यादिः इति । आन्दोलप्रेङ्खोलादेर्लौकिकस्यापि सत्त्वाच्चतुर्विध एव धातुरिति बोपदेव आह । लौकिकस्यापि सौत्रेन्तर्भाव इति नाधिक्यम् इत्यन्य आहुः । परस्मैपदित्वात्मनेपदित्वोभयपदित्वभेदेनापि धातुस्त्रिविधः । तत्तल्लक्षणं च यो धातुः स्वोपस्थाप्यस्य यादृशार्थस्य यत्पदोपस्थाप्ये कर्तृत्वेन्वयबोधं प्रति समर्थः स धातुस्तत्पदी । यथा (१) गमभूप्रभृतयः स्वार्थस्य गत्युत्पत्तिप्रभृतेर्मुख्ये गौणे वा परस्मैपदार्थ एव कर्तृत्वेन्वयं प्रति प्रभवः इति परस्मैपदिनः । (२) संगच्छते भवते इत्यादितः संगतिप्राप्त्यादिकर्तृत्वावगमात् तादृशार्थे आत्मनेपदिन एव ते । (३) यजति करोति इत्यादित इव यजते कुरुते इत्यादितोपि यागादिकर्तृत्वस्यावगतेर्यागाद्यर्थे यजि कृञ् इत्यादिरुभयपदी ( श० प्र० श्लो० ५७–५८ पृ० ७१ ) । प्रकारान्तरेणापि धातुर्द्विविधः । सकर्मकः अकर्मकश्च इति । तत्र सकर्मको द्विविधः । एककर्मकः द्विकर्मकश्च । तत्रैककर्मकश्च एककर्मान्वितस्वार्थबोधकः । यथा गम्यादिरेककर्मकः । द्विकर्मकोपि द्विविधः । द्विकर्मान्वितैकव्यापारार्थकः द्विकर्मान्वितद्विव्यापारार्थकश्च । तत्राद्यो दुह्यादिः । द्वितीयस्तु णिजन्तः इति । तत्र द्विकर्मकत्वं तु कर्मद्वयसाकाङ्क्षक्रियाबोधकत्वम् ( का० वा० पृ० २ ) । णिजन्ते च धातुनैकव्यापारोभिधीयते । द्वितीयस्तु व्यापारः णिचा । व्यापारद्वये च ईप्सितकर्मणः प्रयोज्यकर्तृरूपकर्मणश्च यथाक्रममन्वयः । तथात्वं च गम्यादीनाम् इति बोध्यम् । पच्यादीनां तु नैवम् । तद्योगे प्रयोज्यकर्तुः कर्मसंज्ञाया अभावेन व्यापारद्वये कर्मद्वयान्वयाभावात् इति विवेकः ( वाच० ) । अत्रेदं बोध्यम् । सकर्मकत्व अकर्मकत्व एतदुभयधर्मविशिष्टोपि धातुर्भवति । यथा सकर्मकाणां गम्यादीनां कर्मणः कर्तृत्वविवक्षया अकर्मकत्वमपि इति त्रिविधोपि धातुरस्ति इत्यपि सिध्यति । अकर्मकस्तु कर्मानन्वितक्रियार्थकः ।

फलानवच्छिन्नव्यापारवाचकत्वमकर्मकत्वम् इति अकर्मकत्वस्य लक्षणं बोध्यम् । अकर्मकक्रियात्वे चत्वारो हेतवः हरिणा दर्शिताः । यथा धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोकर्मिका क्रिया ॥ इति । एवं च अकर्मकोपि धातुर्हेतुचतुष्टयाधीनाकर्मकक्रियार्थत्वाच्चतुर्विधः इत्यलं विस्तरेण ( वाच० ) । धातोरर्थश्च मतविशेषेषु यथा ( १ ) फलमेव धातोरर्थः । तदनुकूलक्रिया त्वाख्यातेन कर्त्रादावनुमाव्यत इति मण्डनमिश्र आह ( श० प्र० श्लो० ९५ पृ० १४० ) । ( २ ) क्रियामात्रं ( केवलं व्यापारमात्रम् ) धात्वर्थः । फलं तु कर्मप्रत्ययेन बोध्यते इति प्राञ्चः रत्नकोशकृत्प्रभृतयः आहुः ( चि० ४ ) । एतन्मते द्वितीयासाकाङ्क्षतुमन्तधातुत्वप्रयुक्त एव च धातूनां सकर्मकत्वव्यपदेशः । न तु फलावच्छिन्नक्रियावाचित्वप्रयुक्तः । ज्ञाप्रभृतावव्याप्तत्वात् इति ज्ञेयम् ( श० प्र० श्लो० ७२ पृ० ९३ ) । ( ३ ) फलं व्यापारश्चैतदुभयं धात्वर्थः इति शाब्दिका आहुः । अत्र फलत्वं च तद्धात्वर्थजन्यत्वप्रकारकप्रतीतिविषयत्वे सति तद्धातुजन्योपस्थितिविषयत्वम् तद्धात्वर्थत्वं वा । अत्र धात्वर्थव्यापारेतिप्रसङ्गनिरासाय सत्यन्तम् । गम्याद्यर्थव्यापारजन्यविभागादावतिप्रसङ्गवारणाय विशेष्यदलम् ( वै० सा० द० धात्व० पृ० ८ ) । मञ्जूषाकृतस्तु कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थजन्यत्वे सति तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम् । अत्र जन्यता चारोपिता अनारोपिता चेत्यन्यत् । विभागजन्यसंयोगादिरूपे पतत्याद्यर्थे विभागसंयोगयोः फलत्ववारणायोभयदलम् । कर्मप्रत्ययसमभिव्याहारे तु फलस्य विशेष्यत्वम् इत्याहुः ( वै० सा० द० धात्व० पृ० ८ ) । तथाहि चैत्रो ग्रामं गच्छतीत्यादौ ग्रामनिष्ठसंयोगानुकूलव्यापारकर्ता चैत्रः इति बोधात् संयोगात्मकफलस्य व्यापारनिरूपितप्रकारत्वम् । चैत्रेण ग्रामो गम्यत इत्यादौ तु चैत्रसमवेतव्यापारजन्यसंयोगाश्रयो ग्रामः इति बोधात् संयोगस्य व्यापारनिरूपितविशेष्यत्वम् इति । अत्र व्यापारत्वं च पदान्तरसमभिव्याहाराप्रयोज्यसाध्यत्वप्रकारकप्रतीतिविषयत्वम् ( वै० सा० द० धात्वर्थ० पृ० ८ ) ।

फलव्यापारोभयं धात्वर्थ इत्यत्रोक्तम् फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः । फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ इति ( वै० सा० धात्वर्थ० पृ० ७ ) । अस्यायमर्थः । फलेति । फलं व्यापारश्च धात्वर्थः । आश्रये इति । फलाश्रयः कर्म । व्यापाराश्रयः कर्ता । तौ तिङर्थौ । फले इति । विक्लित्त्यादिफलं प्रति व्यापारो विशेष्यः । तिङर्थ इति । तिङर्थः कर्तृकर्मसंख्याकालाः । तत्र कर्ता व्यापारे विशेषणम् । कर्म फले विशेषणम् । संख्या तु कर्तृप्रत्ययार्थे कर्तरि कर्मप्रत्ययार्थे कर्मणि विशेषणम् । समानप्रत्ययोपात्तत्वात् इति । एवं च वैयाकरणमते देवदत्तस्तण्डुलं पचतीत्यादौ देवदत्ताभिन्नैककर्तृकस्तण्डुलाभिन्नकर्मवृत्तिविक्लित्त्यनुकूलो व्यापारः इति क्रियामुख्यविशेष्यको बोधः । देवदत्तेन तण्डुलः पच्यते इत्यादौ च देवदत्ताभिन्नकर्तृको यो व्यापारस्तज्जन्या तण्डुलाभिन्नैककर्मनिष्ठा विक्लित्तिः इति बोधः । देवदत्तस्तण्डुलं पचतीत्यादौ फलं विक्लित्त्यादि । व्यापारस्तु भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया । अयं च व्यापारः फूत्कारत्वाधःसंतापनत्वयत्नत्वादितत्तद्रूपेण वाच्यः ( वै० सा० धात्वर्थ० पृ० ९–१२ ) । नैयायिकमते तु देवदत्तस्तण्डुलं पचतीत्यादौ तण्डुलवृत्तिविक्लित्त्यनुकूलव्यापारानुकूलकृतिमानेकत्वविशिष्टो देवदत्तः इति प्रथमान्तार्थमुख्यविशेष्यको बोधः । देवदत्तेन तण्डुलः पच्यते इत्यादौ च देवदत्तसमवेता या कृतिः तज्जन्यो यो व्यापारः तज्जन्या या विक्लित्तिः तदाश्रय एकत्वविशिष्टस्तण्डुलः इति बोधः । अत्रायं विशेषः । पृथक्शक्त्या विशिष्टशक्त्या वा फलव्यापारौ धातुना बोध्येते इति वैयाकरणमतम् । गदाधरादिनवीनमते तु पृथक्शक्त्यैव फलव्यापारौ बोध्येते इति । (४) नव्यास्तु न्यायभास्करकृदादयः फलावच्छिन्नविलक्षणव्यापार एव कर्त्राख्यातसमभिव्याहारे धात्वर्थः । कर्मप्रत्ययार्थस्तु ( द्वितीयार्थस्तु ) आश्रयता ( निष्ठत्वम् ) । सा च धात्वर्थैकदेशे फलेऽन्वेति इति । कर्माख्यातसमभिव्याहारे तु व्यापारावच्छिन्नफलमेव धात्वर्थः इति च प्राहुः ( म० प्र० ४ पृ० ५६ ) ( श० प्र० श्लो० ७२ पृ० ९३ ) ( ल० म० ) । एतन्मते फलस्यावच्छेदकत्वेन धात्वर्थप्रविष्टत्वात् पतेर-

कर्मकत्वेन विलक्षणव्यापारमात्रे शक्तिः न तु तत्र फलस्यावच्छेदकत्वम् इति न पतेः सकर्मकत्वापत्तिः । अत एव फलानवच्छिन्नविलक्षणव्यापारवाचित्वम् धातोरकर्मकत्वम् । फलावच्छिन्नविलक्षणव्यापारवाचित्वम् सकर्मकत्वम् । तच्च फलं यदोभयकर्मान्वितं तदा द्विकर्मकत्वम् । यथा चैत्रोश्वं ग्रामं नयतीत्यादौ नयत्यादेः । अश्वग्रामोभयनिष्ठसंयोगजनकनयनकर्ता इति बोधात् । अत्र ग्रामो मुख्यं कर्म । अश्वस्तु गौणम् । अकथितं च इत्यनुशासनात् ( म० प्र० ४ पृ० ५६ ) (न्या० म० ४ पृ० २१) इत्येके । अत्र वैयाकरणा अप्याहुः । अवच्छिन्नपदस्य संबन्धपरत्वेन कर्मीभूतफलसंबन्धिव्यापारार्थकत्वस्य सुस्थत्वात् अकर्मकाणां फलार्थत्वानङ्गीकारेणातिव्याप्त्यव्याप्त्योरनवकाशः इति ( वै० सा० द० ) । फलावच्छिन्नविलक्षणव्यापारश्च । [ क ] धातूपनीतफलानुकूलसजातीयविजातीयव्यापारप्रचयः ( त० प्र० ख० ४ पृ० ५० ) । [ ख ] फलानुकूलत्वोपलक्षितविलक्षणव्यापारः ( न्या० म० ४ पृ० २० ) । इत्थं च उपलक्षितत्वविवक्षणेन कृष्णलं ( यवत्रयमितं सुवर्णम् ) श्रपयेदित्यत्रोष्णीकरणमात्रे धातोर्न लक्षणा । रूपादिपरावृत्त्यवच्छिन्नाधःसंतापनस्य श्रपणस्य बाधेपि तदुपलक्षिताधःसंतापनस्य तत्राबाधात् इत्यवधेयम् ( म० प्र० ४ पृ० ५६ ) । [ ग ] शाब्दिकास्तु फलानुकूलो यत्नसहितः व्यापारः इत्याहुः ( ल० म० ) । अत एव गम्यादीनां सकर्मकत्वमुपपद्यते ।

**धात्वंशः**—( प्रत्ययः ) [ क ] सुबर्थानन्वितयादृशस्वार्थको यस्तिङन्यः प्रत्ययः स तादृशार्थे धात्वंशप्रत्ययः । यथा पुत्रीयतीत्यादौ क्यच् । पचतीत्यादौ सुबर्थानन्वितकृत्यर्थकोपि तिबादिर्न तिङन्यः इति न तत्रातिप्रसङ्गः । पुत्रीयतीत्यत्र क्यजाद्यर्थस्येच्छादेर्न सुबर्थेन्वयः । किंतु तिङर्थे इति तत्र लक्षणसमन्वयो बोध्यः ( श० प्र० श्लो० १०६ पृ० १६४ ) । [ ख ] धात्वन्तावयवरूपः प्रत्ययः । यथा सनादिप्रत्ययः पिपक्षादिधात्वन्तभागत्वाद्धात्वंशप्रत्ययो भवति ( श० प्र० श्लो० १०६ पृ० १६४ ) । धात्वंशप्रत्ययो द्विविधः । नामप्रकृतिकः धातुप्रकृतिक-

श्चेति । तत्र नामप्रकृतिकः क्यच् क्यङ् इत्यादिः । धातुप्रकृतिकस्तु सन् यङ् इत्यादिः ( श० प्र० श्लो० १०७ पृ० १६४ ) ।

**धारणम्**—१ [ क ] द्रव्यान्तरदानाभ्युपगमपूर्वकपरदत्तद्रव्यादानजन्यादृष्टविशेषवत्त्वम् । यथा विप्राय शतं धारयतीत्यादौ धात्वर्थः । अत्रायं भावः । ऋणग्रहणेनाधमर्णनिष्ठः परिशोधननाश्योदृष्टविशेषो जन्यते । तेनैवादृष्टेन ऋणमपरिशोध्य मृतस्य नरकादिकम् इति । अत्र धारेरुत्तमर्णः ( पा० सू० १।४।३५ ) इत्यनेन धनिकविप्रादेः संप्रदानता । तथा कर्तृत्वं चतुर्थ्यर्थः । तस्य धात्वर्थघटकादानेन्वयः ( ग० व्यु० का० ४ पृ० ९६–९७ ) । [ ख ] केचित्तु पुनर्दानमङ्गीकृत्य द्रव्यग्रहणम् इत्याहुः ( का० व्या० पृ० ९ ) । [ ग ] पाणिनीयास्तु ऋणग्रहणम् । यथा गुरवे गां धारयते इत्यादौ धारेरर्थः इत्याहुः । अत्र दत्तत्वं चतुर्थ्यर्थः । तथा च गुरुदत्तां गामृणत्वेन गृह्णाति इत्याकारस्तत्र वाक्यार्थः ( श० प्र० श्लो० ६९ पृ० ८६ ) । २ गृहावस्थितिः । यथा गुरवे गां धारयते इत्यादौ इति कालापाः । अत्र धृञा गृहावस्थितिः द्वितीयया तदन्वितं कर्तृत्वम् चतुर्थ्या च तन्निविष्टगृहान्वितं संबन्धित्वम् उपस्थाप्यते । तेन गोकर्तृकाया गुरुसंबन्धिगृहावस्थितेरनुकूलव्यापारवान् इत्याकारको बोधः । धातूत्तरणिचा व्यापारबोधनात् इति भावः (श० प्र० श्लो० ६९ पृ० ८६ ) । शाब्दिका अपि अवस्थितिः भक्ताय धारयति मोक्षं हरिरित्यादौ धारेरर्थः इत्याहुः । अत्र धृङ् अवस्थाने इति धातोर्णिचावस्थानानुकूलव्यापारो धारेरर्थः । तदर्थावस्थित्याश्रयसंबन्धी संप्रदानम् । धारेरुत्तमर्णः इति सूत्रात् । तथा च हरिकर्तृको भक्तसंप्रदानको मोक्षकर्मकावस्थित्यनुकूलो व्यापारः इति बोधः ( ल० म० सुब० कार० ४ पृ० १०३ ) । ३ प्राणस्य पूरकरेचककुम्भकैर्निरोधरूपश्चित्तवशीकरणं प्राणायामविशेषः ( सांख्यप्र० भा० अ० ३ सू० ३३ ) । यथा धारयेत्तत्र चात्मानं धारणां धारयन्बुधः ( याज्ञ० ) इत्यादौ इति सांख्या आहुः । देशबन्धश्चित्तस्य धारणा ( पात० सू० पाद ३ सू० १ ) इति योगिनो वदन्ति ( गौ० वृ० ४।२।४४ ) । नाभिचक्रहृदयपुण्डरीक-

नासाग्रादावाध्यात्मिके हिरण्यगर्भवासवप्रजापतिप्रभृतिके बाह्ये वा देशे चित्तस्य विषयान्तरपरिहारेण स्थिरीकरणं धारणा (सर्व० सं० पृ० ३८२ पातञ्ज० )। ४ धारणा मनसो ध्येये संस्थितिर्ध्यानवद्द्विधा ( अग्निपु० अ० ३७४ ) इति पौराणिका आहुः। ५ जलसूचको वायुविशेष-धारणाद्यात्मको योगभेदः इति ज्योतिषज्ञा आहुः (बृ० सं० अ० २२ )।

**धारणिकः**— अधमर्णः ।

**धूमः**—१ सार्द्रेन्धनवह्निजातः मेघाञ्जनयोर्जनको द्रव्यविशेषः । यथा पर्वतत्वेन पक्षत्वे वह्नित्वेन साध्यत्वे विशिष्टधूमत्वेन च हेतुत्वे पर्वतो वह्निमान् विशिष्टधूमात् इत्यादौ पर्वतादेः काञ्चनमयत्वविरहो न दोषः ( दीधि० २ पृ० १७९ ) इत्यत्र । अत्र विशिष्टधूमश्च वह्निशून्य-देशान्तरवृत्तिधूमव्यक्तिव्यावर्तकविशेषणावच्छिन्नो धूमः । तादृशविशेषणं तु वह्निमद्वृत्तित्वादि ज्ञेयम् । यथा वा अभ्रंलिहां धूमलेखां पश्यति ( मु० २ ) सधूमदीप्ताग्निरुचीनि रेजुः ( भट्टिः ) इत्यादौ च धूमः । २ अग्निमान्द्यसूचको वायुविशेषः ( ढेकर ) इति भिषजो वदन्ति । ३ ज्योतिर्विदस्तु धूमकेतुः इत्याहुः । ४ उल्कापातश्चेति काव्यज्ञा वदन्ति ( वाच० ) ।

**धृतिः**—१ गुरुत्ववतां पतनाभावः ( कु० ५।१ टी० हरिदासः ) ( दि० १।१ पृ० १९ ) । यथा कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः ( कु० ५।१ ) इत्यादौ । २ अष्टादशाक्षरपादकच्छन्दोमात्रम् इति वृत्तशास्त्रज्ञा वदन्ति । ३ व्यभिचारिभावविशेषः इत्यालंकारिका आहुः । अत्रोच्यते ज्ञानाभीष्टागमाद्यैस्तु संपूर्णस्पृहता धृतिः । सौहित्यवचनोल्लास-सहासप्रतिभादिकृत् ॥ इति । ४ मौहूर्तिकास्तु विष्कम्भाद्यन्यतमयोग-विशेषः इत्याहुः । ५ गणकाश्च अष्टादशसंख्यायुक्तम् द्रव्यादि इत्याहुः । ६ गौर्यादिषोडशान्यतममातृकाविशेषः इति संस्कारकुलाचारज्ञा आहुः । ७ मानसधारणाविशेषः इति योगशास्त्रज्ञा आहुः । ८ धैर्यम् इति काव्यज्ञा आहुः ( वाच० ) ।

ध्यानम्—[ क ] चिन्तनम् । यथा इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ( रघु० १।७३ ) इत्यादौ । [ ख ] योगशास्त्रज्ञास्तु तत्र प्रत्ययैकतानता ध्यानम् ( पात० पाद ३ सू० २ ) ( गौ० वृ० ४।२।४४ ) । यथा ध्येयः सदा सूर्यमण्डलमध्यवर्ती परमात्मा इत्यादौ । यथा वा लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यम् इत्यादौ । [ ग ] तस्मिन्देशे ध्येयावलम्बनस्य प्रत्ययस्य विसदृशप्रत्ययप्रहाणेन प्रवाहो ध्यानम् । तदुक्तम् तद्रूपप्रत्ययैकाग्र्या संततिश्चान्यनिस्पृहा । तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते तथा ॥ ( सर्व० सं० पृ० ३८३ पातञ्ज० ) । [ घ ] निदिध्यासनम् । यथा आगमेनानुमानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयेत्प्रज्ञां लभते योगमुत्तमम् ॥ ( श्रुतिः ) इत्यादौ । [ ङ ] रागोपहतिर्ध्यानम् ( सां० सू० ३।३० ) इति सांख्या आहुः । [ च ] ब्रह्मात्मचिन्ता ध्यानं स्यात् इति वेदान्तिनः । [ छ ] मायावादिवेदान्तिनस्तु ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः । ध्यानशब्देन विख्याता परमानन्ददायिनी ॥ इति मन्यन्ते ।

ध्वंसः—( अभावः ) [ क ] विनष्टः इति प्रतीतिसाक्षिक उत्पत्तिमानभावः ( न्या० म० १ पृ० ११ ) ( त० दी० १ पृ० ४० ) ( वाक्य० पृ० २३ ) । स च प्रतियोगिजन्यः प्रतियोगिसमवायिनि देशे वर्तते ( त० दी० १ पृ० ४० ) । स च कार्यस्योत्पत्त्यनन्तरमुत्पद्यते नित्यश्च इति ज्ञेयम् । अत्र गमकम् । ध्वंसो न विनाशी विनाशकल्पनायां मानाभावात् । नहि विनाशो विनष्टः इति कश्चित्प्रत्येति इति ( न्या० म० १ पृ० ११ ) ( नील० १ पृ० १० ) । तल्लक्षणं च ध्वंसत्वमेव । तच्च जन्याभावत्वम् ( मु० १ ) । अथवा उत्पत्तिमत्त्वे सत्यभावत्वम् ( वाक्य० पृ० २३ ) । ध्वंसत्वं च अभावत्वव्याप्योऽखण्डोपाधिः ( म० प्र० पृ० १२ ) इति नव्यनैयायिकाः प्राहुः ( वाच० ) । अयं भावः । जन्यत्वस्य प्रायेण दुर्ज्ञानत्वात् तस्याखण्डोपाधिरूपत्वमङ्गीकर्तव्यम् इति । [ ख ] सादिरनन्तः ( त० सं० ) । उत्पत्तिमत्त्वे सति नाशशून्य इत्यर्थः । यथा घटो नश्यतीत्यादौ धात्वर्थः ।

[ ग ] उत्पत्तेरनन्तरं समवायिकारणे कार्यस्य संसर्गाभावः ( त० कौ० पृ० २१ )। तदर्थश्च यथा इह कपाले घटो ध्वस्तः इत्यादौ उत्पत्तेरनन्तरम् ( प्रतियोगिभूतस्य घटादेरुत्पत्तेरनन्तरम् ) जन्यः समवायिकारणे ( घटस्य समवायिकारणे कपाले ) वर्तमानः कार्यस्य ( घटादेः ) संसर्गाभावः ( तदाख्यः अभावः ) इति। अत्रायं नियमः ध्वंसप्रागभावौ स्वप्रतियोगिसमवायिदेशे वर्तेते इति। यथा इह कपाले घटो ध्वस्तः इति प्रतीतिसाक्षिकः अभावः ( प्र० प्र० पृ० २३ )। यथा वा तदप्यध्वंसदासाद्य माहेन्द्रं लक्ष्मणेरितम् इत्यत्र प्राणा दध्वंसिरे गात्रं तस्तम्भे च प्रिये हते ( भट्टिः ) इत्यादौ च। अत्र वैयाकरणाः ध्वंसस्यातीतत्वाभावेपि फलव्यापारयोर्धात्वर्थत्वेन तदुत्पत्त्यनुकूलव्यापारस्य कारणविशेषसंयोगस्यातीतत्वात् ध्वस्तः इति व्यवहार उपपद्यते इत्याहुः। नैयायिकमते नाशमात्रस्यैव धात्वर्थत्वेपि तदुत्पत्तौ लक्षणा। तस्याश्चातीतत्वादिनैव ध्वस्तः ध्वंसते इत्यादिप्रयोगः। अत्र कर्तृत्वं प्रतियोगित्वम्। तच्च नाशान्वयि इति। तथा च वर्तमानाद्युत्पत्तिकनाशप्रतियोगी घटः इत्यन्वयबोधः ( वाच० )। अतीतावस्था ध्वंसः इति सांख्या आहुः। तिरोभावावस्था इति शाब्दिकाः सांख्याश्चाहुः ( ल० म० )। अत्र सूत्रम् नाशः कारणलयः इति ( सांख्य० अ० १ सू० १२१ )। कारणे लय इत्यर्थः। आत्यन्तिकनाशश्च कारणेन सह नाश इति भेदः ( वाच० )।

**ध्वनिः**—( शब्दः ) १ तारत्वादिधीहेतुः शब्दविशेषः। यथा उन्मदध्वनिभृता निभृताक्षरमुज्जगे ( माघ० स० ६ श्लो० २० ) इत्यादौ। अत्रोच्यते। ध्वनिर्नाम यो दूरादाकर्णयतो वर्णविशेषमनधिगच्छतः कर्णपथमवतरति प्रत्यासीदतश्च तारत्वादिविशेषमवगमयति इति ( शारीर० ) ( वाच० )। स च ध्वनिर्वैयाकरणमते द्विविधः। प्राकृतः वैकृतश्चेति। अत्रोक्तम् भर्तृहरिणा स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते। स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥ ( वाक्यप० ) इति। अत्र विवेकः। स्फोटस्याभिव्यक्तौ प्राकृतस्य ध्वनेः कारणत्वम्। चिरचिरतरकालस्थितौ तु प्राकृतध्वनिजातवैकृतध्वनेः कारणत्वम् इति ( शब्दार्थरत्ने ) ( वाच० )।

शारदातिलके च तस्य ध्वनेरुत्पत्त्यादिप्रकारादिकमुक्तम् । यथा सा प्रसूते कुण्डलिनी शब्दब्रह्ममयी विभुः । शक्तिं ततो ध्वनिस्तस्मान्नाद-स्तस्मान्निरोधिका ॥ ततोर्धेन्दुस्ततो बिन्दुस्तस्मादासीत्परा ततः । पश्यन्ती मध्यमा वाचां वैखरी ज्ञानजन्मभूः ॥ (शारदाति०) इति । अत्रायं विशेषः । अनेकवर्णात्मकस्य कलशादिपदस्य श्रावणप्रत्यक्षं न संभवति । आशुविनाशिनां क्रमिकाणां वर्णानां मेलकाभावेन तन्मेलनात्मनः पदस्य ग्रहीतुमशक्यत्वात् । पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितेनानुभूयमान-चरमवर्णेन श्रोत्रे व्यञ्जनाख्यो व्यापारः (शाब्दिकादिमतेन) जन्यते । तेनैव व्यापारेण नष्टवर्णघटितमपि पदं (वैयाकरणमते स्फोटपरिभाषितं पदम्) श्रोत्रेण साक्षात्क्रियते इति । चरमवर्णात्मनि शब्दे ध्वनिव्यवहारः इति महेश्वरः (वाच०) । २ उत्तमं काव्यं ध्वनिः इत्यालंकारिका आहुः (प्रतापरुद्रे० प्र० २) । अत्रोक्तं मम्मटभट्टेन इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः (काव्यप्र० उ० १ श्लो० ५) इति ।

## न.

न—१ अभावः (न्या० म० ४ पृ० १४) । स च संसर्गाभाव अन्योन्याभाव एतदन्यतरात्मकः (तर्का० ४ पृ० १२) । यथा भूतले घटो नास्ति (दीधि०) घटः पटो न भवति इत्यादौ । यथा वा नैकः सुप्तेषु जागृयात् इत्यादौ निषेधः । भूतल इत्यत्र सप्तम्या वृत्तित्वमर्थः । तस्य च नञर्थात्यन्ताभावेन्वयः । एवं च भूतलवृत्ति-घटत्वावच्छिन्नप्रतियोगिताकोत्यन्ताभावः इति बोधः । केचित्तु भूतल-वृत्तिर्योत्यन्ताभावः तत्प्रतियोगी घटः इति बोधः इत्याहुः । अन्ये तु सप्तम्या निरूपितत्वम् असधातोर्विद्यमानत्वम् आख्यातस्याश्रयत्वम् अर्थः । तथा च भूतलनिरूपितविद्यमानत्वाश्रयो घटाभावः इति बोधः इत्याहुः (त० प्र० ४ पृ० ६१) (ग० व्यु० १) (न्या० म० ४ पृ० १५) । घटः पटो नेत्यत्र घटः पटभेदवान् भवति इति बोधः । नञर्थो द्विविधः प्रसज्यप्रतिषेधः पर्युदासश्चेति (म० प्र० पृ० ४८) ।

२ उपमा । यथा तिष्ठा देवो न सविता (श्रुतिः) वयो न वसतीरुप (ऋ० सं० १।२५) इत्यादौ । ३ नकारस्वरूपो वर्णः । यथा दो धः सौख्यं मुदं नः (बृ० व० टी०) इत्यादौ (वाच०)। अत्र केचित् अत्यन्ताभाव एव नञः शक्तिः । अन्योन्याभावादौ तु लक्षणा इत्याहुः (शा० भा०) (वाच०) । अत्रेदमवधेयम् । न घटः पट इत्यादौ नामार्थयोर्भेदेनान्वयबोधः अव्युत्पन्नः इति व्युत्पत्तिविरोधापत्ति-वारणाय अघटः पट इत्यादौ समानविभक्तिकत्वेनाभेदान्वयबोधोपपत्तये च नञोभाववति लक्षणा घटपदस्य च घटप्रतियोगिके लक्षणा स्वीकार्या इति केचित् । परे तु नामार्थयोः इति व्युत्पत्तौ अव्यय निपात एतदति-रिक्तेति नाम्नि विशेषणान्नञः अभाववति घटपदस्य घटप्रतियोगिके च न लक्षणाङ्गीकार्या । किंतु नञः संसर्गाभावमात्रे अन्योन्याभावमात्रे च शक्तिरेव इति प्राहुः (न्या० म० ४ पृ० १४–१५) (त० प्र० ख० ४ पृ० ६०–६१)। अन्ये तु नामार्थयोः इति व्युत्पत्तिर्नाभ्युपगन्तव्या । भूतलं घटः राजा पुरुषः इत्यत्र आधेयतासंबन्धेन स्वत्वसंबन्धेन च घटपुरुषपदार्थयोर्भूतलराजपदार्थान्वयबोधतात्पर्येण तादृशप्रयोगापत्ति-वारणाय यथाक्रमं सप्तम्यन्तभूतलादिसमभिव्याहारषष्ठ्यन्तराजादिपद-समभिव्याहारयोः पूर्वोक्तान्वयबोधं प्रति कारणत्वमङ्गीकर्तव्यम् । एवं च पूर्वोक्तस्थलयोः न घटः पटः अघटः पटः इत्याद्योः नञ्पदादौ न लक्षणा इत्याहुः (ग० व्यु० का० १)। अन्यत्र च नञर्थाः षडुक्ताः । सादृश्यं तदभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥ इति । अत्र यथाक्रममुदाहरणानि । यथा अनिक्षुः शर इत्यादौ सादृश्यं नञर्थः । भूतले घटो नास्तीत्यादावत्यन्ताभावः । अघटः पट इत्यादावन्यत्वम् । अनुदरमुदरं तरुण्या इत्यादौ स्वल्प-त्वम् । अब्राह्मणो वार्धुषिक इत्यादावपकृष्टत्वम् (अप्राशस्त्यम्)। असुरो दैत्य इत्यादौ विरोधः (श० प्र० श्लो० ३९ पृ० ५०)। अन्यत्र चोक्तम् नञभावे निषेधेन स्वरूपार्थेप्यतिक्रमे। ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः ॥ इति । निषेधेन काका स्वरूपार्थे प्रकृतार्थे इत्यर्थः ।

एतादृशार्थस्वीकारेण च अभावेन न पौनरुक्त्यम् इति ध्येयम् ( वाच० ) ।

**नक्तम्**—प्रदोषात्प्राक् तद्दिनाधिकरणकभोजनाभावे सति तदहोरात्रावयवप्रदोषाधिकरणकं भोजनम् ( पु० चि० पृ० ४५ ) ।

**नगरम्**—प्राकारपरिखान्वितं श्रेणीधर्मसंयुक्तं संस्थानम् ( कैयटः ७।३।१४ ) ।

**नच**—शङ्कानिवारणार्थः । यथा नच स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिः इति वाच्यम् । इष्टापत्तेः । विघ्नशङ्कया तदाचरणात् ( मु० १ मङ्गल० ) इत्यादौ ।

**नञ्तत्पुरुषः**—( तत्पुरुषः ) नञर्थबोधकतया नञ्पदघटितः समासः । यथा अघटः पट इत्यादौ । अत्र घटपदं लक्षणया घटसंबन्ध्यर्थकम् । घटप्रतियोगिकम् इत्यर्थकम् इति यावत् । नञ्पदं च अन्योन्याभावे शक्तमेव ( न्या० म० ४ पृ० १४ ) । एवं च घटप्रतियोगिकभेदवान् पटः इति वाक्यार्थबोधः । अघटं भूतलमित्यादौ नञो घटभिन्ने लक्षणा । न कलञ्जं भक्षयेदित्यादौ बलवदनिष्टजनके लक्षणा ( तर्का० ४ पृ० १२ ) ।

**नतिः**—१ नमस्कारः ( ग० व्यु० कार० ४ पृ० १०१ ) । २ चन्द्रार्ककक्षयोर्याम्योत्तरयोरन्तरं नतिः इति ज्योतिर्विद आहुः । ३ ऊर्ध्वस्थितस्याधः पतनं नतिः इति काव्यज्ञा वदन्ति ( वाच० ) ।

**ननु**—१ प्रश्नः । यथा ननु गमिष्ये इत्यादौ । २ अवधारणम् । यथा उपपन्नं ननु शिवम् ( रघु० १।६० ) । अत्र उपपन्नमेवेत्यर्थः ( टी० मल्लिनाथः १।६० ) । यथा वा त्वया नियम्या ननु दिव्यचक्षुषा ( रघु० स० ३ श्लो० ४५ ) इत्यादौ । ३ आमन्त्रणम् ( संबोधनम् ) । यथा ननु मां प्रापय पत्युरन्तिकम् ( कुमार० ४।३२ ) इत्यादौ । ननु हे वसन्त इत्यर्थः ( टी० मल्लिनाथः ४।३२ ) । ४ आक्षेपः ( शङ्का ) । यथा नन्वेवं धनाद्यर्जनस्य कुञ्जरशौचवत् दुःखानिवर्तकत्वे कथं तत्र प्रवृत्तिस्तत्राह ( सांख्य० प्र० भा० अ० १ सू० २—३ ) इत्यादौ ( वाच० ) । ५ अनुज्ञा । यथा ननु गच्छेत्यादौ । ६ अनुनयः ( सान्त्वनम् ) । यथा ननु कोपं मुञ्च दयां कुरु इत्यादौ

( अमरः ३ नाना० श्लो० २४७ ) ( विश्वः ) । ७ विनिग्रहः । ८ परकृतिः । ९ अधिकारः । १० विनयः । ११ संभ्रमः ( मेदिनी )। १२ वाक्यारम्भः ( हैम० ) ।

**ननु च**—विरोधोक्तिः ( अमरः ३ अव्यय० श्लो० १४ ) ( वाच० ) ।

**नन्दा**—या तु मार्गशिरे मासि शुक्लपक्षे तु सप्तमी । नन्दा सा कथिता वीर सर्वानन्दकरी शुभा ॥ ( पुरु० चि० पृ० १०४ ) ।

**नन्दिका**—प्रतिपत् ( पुरु० चि० पृ० ५८ ) ।

**नपुंसकलिङ्गम्**—( नाम ) नपुंसकत्वेन परिभाषितं पदम् । यथा तटमित्यादि । परिभाषायाः प्रयोजनं चेह पदसंस्कारः । सोत्र तटमित्यादौ क्लीबत्वेन सुबादेरमादेशादिः इति । वैयाकरणास्तु तटादिवस्तुगतं नपुंसकत्वं पदार्थान्तरमेव । तच्च तटादिरूपप्रकृत्यैव बोध्यते । प्रत्ययानां तु व्यञ्जकत्वमात्रम् इत्याहुः ( श० प्र० श्लो० ५३ पृ० ६८ ) । क्वचित् विलक्षणसंस्थानरूपविशिष्टवाचकम् । यथा न प्राणि प्राप्नुयाद्दायम् इत्यादौ । अत्र लुप्तसुपैव ( न तु प्रकृत्या ) उपस्थितं विलक्षणसंस्थानरूपं नपुंसकत्वं प्राणिन्यनुभूयते इति विज्ञेयम् ( श० प्र० श्लो० ५३ पृ० ६९ ) ।

**नमः**—१ त्यागः । यथा एषोर्घ्यः शिवाय नमः इत्यादौ नमःशब्दार्थस्त्यागः ( ग० व्यु० का० ४ पृ० ९९ ) । शाब्दिकास्तु स्वस्वत्वनिवृत्त्यनुकूलो व्यापारः । यथा एषोर्घ्यः शिवाय नमः इत्यादौ त्यागो नमःशब्दार्थः इत्याहुः । शाब्दिकमतेत्र उद्देश्यत्वं चतुर्थ्यर्थः । तथा च शिवोद्देश्यकत्यागविषयोर्घ्यः इति शाब्दबोधः ( ल० म० का० ४ पृ० १०५ ) । अन्ये तु मन्त्रकरणकस्त्यागोर्थः । यथा पुष्पमिदं विष्णवे नमः इत्यादौ । अत्र प्रीत्युद्देश्यकत्वम् तदिच्छाधीनत्वरूपं नमःपदार्थे मन्त्रकरणकत्यागे चतुर्थ्या बोध्यते । प्रकृत्यर्थस्य विष्ण्वादेः प्रीतौ तदिच्छायां वान्वयः । एवं च विष्णूद्देश्यकमन्त्रकरणकत्यागस्य कर्मेदं पुष्पम् इति बोधः । ब्राह्मणोद्देश्यकस्य च गवादित्यागस्य मन्त्रकरणकत्वे प्रमाणाभावात् गौर्ब्राह्मणाय नमः इत्यादिको न प्रयोगः ( श० प्र० श्लो० ९२

पृ० १२६ ) । २ नमस्कारः । यथा हरये नम इत्यादौ (ल० म० का० ४ पृ० १०५) (ग० व्यु० का० ४ पृ० ९९)। ३ अन्तम्। ४ वज्रम् । ५ यज्ञः । यथा यज्ञो वै नमः (श्रुतिः) इत्यादौ (वाच०)।

**नमस्कारः**—[ क ] यमुद्दिश्य यस्य स्वापकर्षबोधनानुकूलव्यापारविशेषः तस्य स नमस्कारः ( चि० मङ्ग० १ पृ० १०३ ) ( म० प्र० २ ) । स्वापकर्षबोधानुकूलः विलक्षणः स्वीयव्यापारः इति परमार्थः। अत्र स्वमुच्चारयिता ( ग० व्यु० कार० ४ पृ० १०१ ) (राम०)। यथा देवतास्तुतिनमस्कारादिषु मङ्गलव्यवहारः शिष्टानाम् इत्यादौ (मू० म० मङ्ग० १ पृ० १०१ )। यथा वा हरये नमः इत्यादौ नमस्कारः । अत्र नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ( पा० सू० २।३।१६ ) इत्यनेन चतुर्थी ज्ञेया ( ल० म० सुब० कार० ४ पृ० १०५ )। नमस्कारत्वं च स्वापकर्षबोधजनकतावच्छेदकजातिमत्त्वम् ( मू० म० १ पृ० १०४ ) । अथवा मानसत्वव्याप्यजातिविशेषः ( म० वा० पृ० १० ) । ज्ञानविशेषो वा । स च विशेषो व्यवहारसाक्षिको जातिभेद एव । कायिकाद्यन्यतमत्वं वा (न्या० दी० पृ० ३ ) । नमस्कारभेदाश्च कालीपुराणे उक्ताः । यथा त्रिकोणमथ षट्कोणमर्धचन्द्रं प्रदक्षिणम् । दण्डमष्टाङ्गमुग्रं च सप्तधा नतिलक्षणम् ॥ इति (वाच०)। [ ख ] स्वापकर्षबोधनानुकूलः स्वीयव्यापारः। यथा हरये नम इत्यादौ नमःपदार्थः । अत्र स्वमुच्चारयिता । अवधित्वम् अवधिमत्त्वं वा चतुर्थ्यर्थः । तस्य नमस्कारपदार्थघटकेपकर्षेन्वयः । तथा च चैत्राद्युच्चारितात् नमो हरये इत्यादिशब्दात् हर्यवधिकचैत्रापकर्षबोधानुकूलश्चैत्रीयव्यापारः इत्याकारको बोधः ( ग० व्यु० का० ४ पृ० १०१ ) । स्वापकर्षबोधानुकूलव्यापारे च कायिकवाचिकमानसरूपे विशेषो जातिविशेष एवानुभवसाक्षिकः ( चि० १ पृ० १०३ ) । यथा वा ब्राह्मणेभ्यो नमो नित्यमित्यादौ । अत्र विषयत्वं चतुर्थ्या बोध्यते ( श० प्र० श्लो० ९२ पृ० १२६ ) । यथा वा नमस्करोति नमस्कृत्य इत्यादौ । अत्र शाब्दिका आहुः । अत्र कृधातोरेव नमनार्थकता ।

नमःशब्दस्तु तदर्थद्योतकः । तेन नारायणं नमस्कृत्येत्यादौ द्वितीया । उपपदविभक्तेः कारकविभक्तिर्बलीयसी इति न्यायात् । नमसो वाचकत्वे नमस्कृत्य ब्राह्मणेभ्यः इत्येवं नमःशब्दप्रयोगे चतुर्थी स्यात् । नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ( पा० सू० २।३।१६ ) इत्यत्र त्यागार्थकनमनार्थकयोरुभयोर्ग्रहणम् ( शब्देन्दु० ) ( ल० म० का० ४ पृ० १०५–१०६ ) । [ ग ] अपकृष्टत्वबोधनानुकूलो व्यापारः । यथा हरये नम इत्यादौ । अत्रापकर्षः प्रयोक्तृरूपविशेषनिष्ठो नमस्कार्यावधिक एव प्रतीयते । व्यापारश्च प्रयोक्तृनिष्ठः । स च व्यापारः करशिरःसंयोगादिः ईदृशशब्दप्रयोगश्च । चतुर्थ्यर्थ उद्देश्यत्वम् । एवं च हर्युद्देश्यक उक्तव्यापारः इति बोधः ( ल० म० का० ४ पृ० १०५ ) । [ घ ] अयं मत्त उत्कृष्टः अहमस्मादपकृष्टः इति ज्ञानविशेषः इति परे वदन्ति ( त० प्र० १ पृ० ३ ) ( म० वा० पृ० १० ) । नमस्कारस्त्रिविधः । कायिकः वाचिकः मानसिकश्च ( मू० म० १ पृ० १०३ ) । कायिकादिलक्षणानि च योगिनी० गन्धर्वतन्त्रे उक्तानि । यथा जानुभ्यामवनीं गत्वा संस्पृश्य शिरसा क्षितिम् । क्रियते यो नमस्कारः प्रोच्यते कायिकस्तु सः ॥ या स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः । क्रियते भक्तियुक्तेन वाचिकस्तूत्तमः स्मृतः ॥ इष्टमध्यानिष्टगतैर्मनोभिस्त्रिविधं भवेत् । नमनं मानसं प्रोक्तमुत्तमाधममध्यमम् ॥ इत्यादि ( गन्धर्वतन्त्र० ) ( वाच० ) । नमस्कारः प्रकारान्तरेण द्विविधः । क्वचित् ऐहिकः क्वचित् कारीर्यादौ आमुष्मिकः ( न्या० दी० पृ० ४ ) ।

**नयः**—१ मतम् । यथा न्यायनयः मीमांसकनयः इत्यादौ । २ नीतिशास्त्रम् ( मल्लि० टी० २।३ ) । यथा विषमोपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः ( किरा० स० २ श्लो० ३ ) इत्यादौ इति नीतिशास्त्रज्ञा वदन्ति ।

**नयनम्**—[ क ] प्रापणम् । तच्चोत्तरदेशसंयोगावच्छिन्नक्रियानुकूलव्यापारः । यथा अजां ग्रामं नयति ग्रामं भारं वहतीत्यादौ नीयते अजा ग्रामम्

उह्यते भारो ग्रामं चैत्रेणेत्यादौ च नीवहादिधात्वर्थः ( ग० व्यु० का० २ पृ० ४६ ) । [ ख ] गत्यवच्छिन्नव्यापारः । यथा ग्राममजां वहति नयतीत्यादौ वहिप्रभृतेरर्थः ( श० प्र० श्लो० ७३ पृ० ९९ ) । यथा वा गमनाय मतिं चक्रे ताश्चैनं निन्युरङ्गनाः ( रामा० वा० अ० ९ ) इत्यादौ । यथा वा नयनं पारिजातस्य द्वारकां मम रोचते ( हरिवंश० अ० १२९ ) इत्यादौ ( वाच० ) ।

**नरकः**—[ क ] दुःखविशेषः ( मु० गु० ) । यथा नरके पतनं केन नरके लिखितं यदि इत्यत्र । अत्र केनेत्यस्य ब्रह्मणेत्यर्थः । तथा एकस्य नरके इति पदस्य नरस्य मनुष्यस्य के मस्तके इत्यर्थः । यथा वा नरकेसरिणः स्मर्तुर्नरके पतनं कुतः इत्यादौ च । पौराणिकाश्च [ ख ] पापभोगस्थानविशेषो नरकः । स चासिवनक्षारादिः । यथा वेददूषयिता यश्च वेदविक्रायकश्च यः । अगम्यागामी यश्च स्यात् ते यान्त्यसिवनं द्विज ॥ ( पाद्मे० उत्तरख० अ० ४८ ) । यो गुरूनवमन्येत स्वविद्याचारदर्पितः । स मृतः पात्यते क्षारसंज्ञकेधोमुखः पुमान् ॥ ( विष्णुपु० अंश० २ अ० ६ ) इत्यादौ इत्याहुः ( वाच० ) ।

**नवद्रव्यवृत्तिगुणत्वम्**—द्रव्यत्वाश्रयवृत्तिः प्रतियोगिव्यधिकरणः यः अभावः तत्प्रतियोगितानवच्छेदकगुणविभाजकोपाधिमत्त्वम् ( ल० व० ) । यथा संख्यादिगुणानाम् । अत्र संयोगाद्यव्याप्यवृत्तिप्रतियोगिकात्यन्ताभावमादाय संयोगादावव्याप्तिः स्यात् । अतः प्रतियोगिव्यधिकरण इत्युक्तम् ।

**नवरात्रकम्**—उपवासाद्यन्यतमनियमयुक्तकर्तृकप्रतिपदादिनवम्यन्तनवतिथ्यधिकरणकपूजारूपकर्म ( पु० चि० पृ० ६१ ) ।

**न हि**—( अव्ययसमुदायः ) सकारणको निषेधः । यथा न हि सामानाधिकरण्येन बाधसिध्योरुभयोः सत्योरनुमितिं कश्चिदभ्युपैति ( ग० हेत्वा० सामा० ल० १ पृ० ४ ) इत्यादौ । यथा वा न ह्यस्मिन् युज्यते कर्म किंचिदा मौञ्जिबन्धनात् ( मनु० अ० २ श्लो० १७१ ) इत्यादौ ।

**नाक्षत्रम्**—नक्षत्रमेव नाक्षत्रम् । तन्नाक्षत्रमहोरात्रं यस्मिन्नस्तमियाद्रविः । यस्मिन्नुदेति सविता तन्नाक्षत्रं भवेद्दिनम् ॥ ( पु० चि० पृ० ५१ ) ।

**नागः**—पञ्चमी ( कामशब्दे दृश्यम् ) ।

**नाटकम्**—दृश्यकाव्यात्मको रूपकविशेषः । यथा मुरारिकवेरनर्घराघवम् भवभूतेरुत्तररामचरितम् कालिदासस्याभिज्ञानशाकुन्तलं चेति । नाटकस्य षट्त्रिंशल्लक्षणानि ( ३६ ) यथा भूषणाक्षरसंघातौ शोभोदाहरणं तथा । हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः ॥ निदर्शनाभिप्रायौ च प्राप्ति-र्विचार एव च । दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा ॥ विशेषण-निरुक्ती च सिद्धिर्भ्रंशविपर्ययौ । दाक्षिण्यानुनयौ मालार्थापत्तिर्गर्हणं तथा ॥ पृच्छा प्रसिद्धिः सारूप्यं संक्षेपो गुणकीर्तनम् । लेशो मनोरथो-नुक्तसिद्धिः प्रियवचस्तथा ॥ ( सा० द० ६।१७१–१७४ ) इति । नाटकं च दशसु रूपकेषु प्रथमम् । रूपकाणि तु नाटकमथ प्रकरणं भाण-व्यायोगसमवकारडिमाः । ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥ ( सा० द० ६।३ ) ( वाच० ) ( प्रतापरुद्र० प्रक० ३ ) इति । नाटकस्वरूपं तु यथा नाटकं ख्यातवृत्तं स्यात्पञ्चसंधिसमन्वितम् । विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥ सुखदुःखसमुद्भूति नानारस-निरन्तरम् । पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः ॥ प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् । दिव्योथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥ एक एव भवेदङ्गी शृङ्गारो वीर एव वा । अङ्गमन्ये रसाः सर्वे कार्यो निर्वहणेऽद्भुतः ॥ चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः । गो-पुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्तितम् ॥ ( सा० द० ६।७–११ ) इति ।

**नाडिका**—अहोरात्रात्मकस्य कालस्य षष्टितमो भागः ।

**नानार्थकत्वम्**—नानाधर्मावच्छिन्नशक्तिनिरूपकतावच्छेदकैकधर्मवत्त्वम् ( वै० सा० द० ) । यथा हरिपदस्य विष्णु सिंह भेक अंशु इत्यादिनानार्थकत्वम् ।

**नान्तरीयकत्वम्**—१ व्याप्तिः ( काव्यप्र० टी० कमला० उल्ला० २ ) । तदभावे तदभावरूपा व्याप्तिः इति महेश्वरः । अत्र व्युत्पत्तिः न अन्तरा विना नान्तरा । ततो भवार्थे छप्रत्ययः । अव्ययानां भमात्रे टिलोपः ।

ततः स्वार्थे कप्रत्यय इति। २ तत्सत्तानियतसत्ताकत्वम्। यथा नान्तरीयकफलजनकत्वमित्यादौ। यथा च प्रतिबन्धकाभावे नान्तरीयका अर्थोत्पत्तिः इत्यादौ। ३ मध्ये अवश्यंभावित्वम् इति केचिदाहुः।

**नान्दीमुखाः**—अश्रुमुखशब्दे दृश्यम्।

**नाम**—(अव्ययम्) १ संज्ञा। यथा सुरथो नाम राजेत्यत्र नामशब्दार्थः संज्ञा। सुरथो नाम राजा इत्यत्र सुरथः सुरथशब्दवाच्यः। तदेकदेशे च शब्दे संज्ञार्थकनामेत्यव्ययेन प्राप्तसंज्ञातादात्म्यान्वयः। तेन संज्ञातादात्म्यवत्सुरथशब्दवाच्यो राजा इत्यर्थः। एवम् नाम्ना चन्द्रमुखीत्यादावनव्ययेनापि नामपदेनोक्तदिशैवान्वयो द्रष्टव्यः। अत्र कश्चिदाह सुरथो नाम राजेत्यत्र संभाव्यत्वं नामशब्दार्थः। तच्च सुरथेन्वितम् इति (श० प्र० श्लो० ९२ पृ० १२४)। २ कोपः। यथा ममापि नाम दशाननस्य परैरभिभवः इत्यादौ। ३ उपगमः। सासूयोङ्गीकारः। यथा एवं नामास्तु इत्यादौ। ४ प्राकाश्यम्। यथा हिमालयो नाम नगाधिराजः इत्यादौ। अत्र हिमालयः प्राकाश्येनातिप्रसिद्धः इत्यर्थः (वाच०)। ५ संभावना। यथा इह नाम सीता भविष्यति इत्यादौ। ६ कुत्सनम्। यथा को नामायं सवितुरुदये स्वापमेवं विधत्ते इत्यादौ। ७ विस्मयः। यथा अन्धो नाम गिरिमारोहति इत्यादौ। ८ अलीकम्। यथा अहं च भीतो नामावप्लुतः (शाकुन्त०) इत्यादौ।

**नाम**—(अयं नामन् इति नकारान्तो नपुंसकलिङ्गः शब्दः) १ [क] यादृशशब्देन स्वोपस्थाप्ययदर्थमुख्यविशेष्यकान्वयबोधार्थं स्वोत्तरप्रथमाविभक्तिरपेक्ष्यते तादृशः शब्द एव तदर्थकं नाम। यथा घटादयो हि शब्दाः प्रथमान्तत्वेन निश्चिता एव स्वार्थमुख्यविशेष्यकं बोधमुत्पादयन्ति न त्वन्यथा (श० प्र० श्लो० १४ पृ० १५)। अत्रार्थे नामशब्दस्य व्युत्पत्तिलक्षणे उच्येते। तत्र व्युत्पत्तिः नमति आख्यातार्थं प्रति स्वार्थविशेषणत्वेन इति नाम। लक्षणं तु सत्त्वप्रधानानि नामानि इति (निरुक्त०)। तदर्थश्च लिङ्गसंख्ययोरत्र सद्भाव इति सत्त्वं द्रव्यम्। तथा लक्षणोपपत्तेः। तद्येषु प्रधानं गुणभूता क्रिया नामान्येव तानि।

नमन्त्याख्यातशब्दे गुणभावेन नमन्ति वा स्वमर्थमाख्यातशब्दवाच्ये गुणभावेनेति नामानि । तथा चोक्तम् शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते । तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥ इति ( निरुक्ते नैघण्टुक० पूर्वषट्के अ० १ पा० १ ख० १ दुर्गाचार्यकृतटीका )। [ ख ] प्रातिपदिकरूपः शब्दविशेषः । यथा घटोस्तीत्यत्र घटशब्दः इति पाणिनीया आहुः । [ ग ] पौराणिकास्तु वाचकशब्दः । यथा हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ इत्यादौ इत्याहुः । नाम चतुर्विधम् । रूढम् लक्षकम् योगरूढम् यौगिकं चेति । केचित्तु रूढयौगिकमप्यधिकं पञ्चमं नाम स्वीकुर्वन्ति । यथा मण्डपमहारजतादि । तद्धि कदाचिदवयववृत्त्या योगार्थमेव कदाचिच्च समुदायशक्त्या रूढ्यर्थमेवाभिधत्ते इत्यपरेषां मतम् (श० प्र० श्लो० १५ पृ० १६ ) । पतञ्जलिस्तु पञ्चविधं नाम इत्याह । तत्र प्रथमम् सुपां मध्य एकवचनमात्रसाकाङ्क्षम् । यथा एकविंशति इत्यादिपदम् । द्वितीयम् द्विवचनमात्रसाकाङ्क्षम् । यथा उभ द्वि पुष्पवत् पुष्पवन्त इत्यादिपदम् । तृतीयम् बहुवचनमात्रसाकाङ्क्षम् । यथा प्राण त्रि चतुर् इत्यादि पदम् कतिपदं च । चतुर्थम् द्विवचनमात्रनिराकाङ्क्षम् । यथा उभय इति पदम् । पञ्चमम् वचनत्रयसाकाङ्क्षम् । यथा घट पट इत्यादिपदम् ( श० प्र० श्लो० ५४ पृ० ६९–७० ) । प्रकारान्तरेण नाम पञ्चविधम् उणाद्यन्तं कृदन्तं च तद्धितान्तं समासजम् । शब्दानुकरणं चैव नाम पञ्चविधं स्मृतम् ॥ इति ( वाच० ) । नाम शब्दसंस्कारसिद्ध्यर्थं त्रिधा भिद्यते स्त्रीलिङ्गम् पुंलिङ्गम् नपुंसकलिङ्गम् चेति ( श० प्र० श्लो० ५३ पृ० ६८ ) । २ संज्ञाशब्दः । यथा अयं देवदत्त इत्यादौ देवदत्त इति शब्दः । द्वादशेहनि पिता नाम कुर्यात् इतीश्वरेच्छया पिता स्वपुत्रस्य देवदत्त इत्यादि नाम करोति इति विज्ञेयम् । यथा च नामजात्यादियोजनाहीनं ज्ञानं निर्विकल्पकम् ( सि० च० १ पृ० २१ ) इत्यादौ ।

**नामकरणम्**—पुत्रादीनां केशवादिनाम्ना व्यवहारः ( सर्व० सं० पृ० १३८ पूर्णप्र० ) ।

**नाशः**—१ ध्वंसः । २ शाब्दिकास्तु अदर्शनानुकूलव्यापारः । स च ध्वंससामग्रीरूपः व्यवधानाद्यनुकूलव्यापाररूपश्च । यथा उत्पतिते काके नष्टं तद्दृष्टं भवति हृतं नष्टं च लभ्यते इत्यादौ इत्याहुः । तन्मते ध्वंसस्तु तिरोभावावस्था ( ल० म० धात्व० पृ० ६ ) । ३ सांख्यास्तु नाशः कारणलयः ( सां० अ० १ सू० १२१ ) इत्याहुः ।

**नाशवत्त्वम्**—विनाशित्वम् ।

**नास्तिकः**—[ क ] वेदमार्गमननुरुन्धानः किंचिदपि पारत्रिकम् आमुष्मिकं स्वर्गनरकापूर्वादिकम् नास्ति इति वादी । यथा चार्वाको बृहस्पतिर्नास्तिकः । [ ख ] परलोकतत्साधनादृष्टाद्यभाववादी तत्साक्षिण ईश्वरस्यासत्त्ववादी च । यथा अतिमात्रोज्झितभीरनास्तिकः ( माघः ) नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् ( मनु० अ० ४ श्लो० १६३ ) इत्यादौ । नास्तिकः षड्विधः । चार्वाकः बौद्धाश्चत्वारः दिगम्बरश्चेति । इदानीं चार्वाकादीनां षण्णां संक्षेपतो मतस्वरूपमुच्यते । तत्र चार्वाकः प्रत्यक्षमात्रप्रमाणवादी । तन्मते ब्राह्मणोहम् गौरोहम् स्थूलोहम् जानामि इत्यादिसामानाधिकरण्यप्रतीतेः ब्राह्मणत्वादिधर्मवति शरीर एव ज्ञानसुखाद्याश्रयत्वं सिद्ध्यतीति शरीरमेवात्मा । तत्र श्रुतिरपि स वा एष पुरुषोन्नरसमयः इति । पृथिव्यप्तेजोवाय्वात्मकचतुर्विधभूतसमुदायमेलने किण्वादिभ्यो मदशक्तिवच्चैतन्यमुपजायते । पारत्रिकस्वर्गनरकपुण्यपापादिकं नास्त्येव । अङ्गनालिङ्गनादिजन्यं सुखमेव पुरुषार्थः । कण्टकादिजन्यं दुःखमेव नरकम् । लोकसिद्धो राजैव परमात्मा । देहोच्छेदो मोक्षः । इति चार्वाकमतम् । चत्वारो बौद्धाश्च माध्यमिको योगाचारः सौत्रान्तिकः वैभाषिकश्चेति । दिगम्बरो जैनभेदः । तत्र शून्यवादी माध्यमिकः । तन्मते सुषुप्त्यव्यवहितोत्तरक्षण उत्थितस्य सुषुप्तावहं नासम् इत्यनुभवाच्छून्यमेवात्मा । अत एव सर्वमिदं मिथ्यैव इति शून्यवादः । अत्र श्रुतिरपि असद्वा इदमग्र आसीत् ( ब्रह्म० उप० पृ० ४ ) इति । क्षणिकविज्ञानवादी योगाचारः । तन्मते क्षणिकविज्ञानम् ( स्वयंवेदनम् ) एकमेव । तदतिरिक्तं बाह्यं ग्राह्यवस्तुजातं नास्ति । तच्च विज्ञानं द्विविधम् । प्रवृत्ति-

विज्ञानम् आलयविज्ञानं च । तत्र अयं घटः इति ज्ञानं प्रवृत्तिविज्ञानम् । अहम् इति विज्ञानमालयविज्ञानम् । अयमेवात्मा । सुषुप्तावप्यालयविज्ञानधारास्त्येव । सुखादिकमस्यैवाकारः । तदतिरिक्तवस्तुन एवाप्रसिद्धेः इति । अत्र श्रुतिः अन्योन्तर आत्मा विज्ञानमयः ( ब्रह्म० उप० पृ० ३ ) इति ( सि० च० १ पृ० १२ ) ( सर्व० पृ० ३७ बौद्ध० ) । सौत्रान्तिकस्तु ज्ञानाकारानुमेयः क्षणिकः बाह्यार्थ इतीच्छति । वैभाषिकस्तु क्षणभङ्गुरवादी क्षणिकस्य बाह्यार्थस्य प्रत्यक्षमपीच्छति । दिगम्बरस्तु देहातिरिक्तः देहपरिमाण आत्मा । स च दीपप्रभावत् संकोचविकासशाली इत्याह ( सि० च० १ आत्म० पृ० १२–१३ ) ।

**नास्तिकता**—[ क ] मिथ्यादृष्टिः ( अमरः धीवर्गः श्लो० ४ ) । [ ख ] नास्ति परलोकः इति बुद्धिः ( मनु० टी० कुल्लूक० ४।१६३ ) । यथा प्रज्ञानाशात्मको मोहस्तथा धर्मार्थनाशकः । तस्मान्नास्तिकता चैव दुराचारश्च जायते ॥ ( भा० शान्ति० अ० १२३ ) इत्यादौ ( वाच० ) ।

**नास्तित्वम्**—अत्रोच्यते द्वयी संविद्वस्तुनो भूतशालिनः । एका सा स्पष्टविषया तन्मात्रविषया परा ॥ तन्मात्रविषया वापि द्वयी साथ निगद्यते । प्रतियोगिनि दृश्ये च घटादिप्रतियोगिनः ॥ ( सर्व० सं० पृ० ४३० शां० ) ।

**नास्तिकदर्शनम्**—नास्तिकविरचितं शास्त्रम् । तच्च चार्वाक बौद्ध इत्यादिदर्शनम् । अत्रोच्यते नास्तिवादार्थशास्त्रं हि धर्मविद्वेषणं परम् इति ( हरिवं० अ० २८ ) ।

**निःश्रेयसम्**—१ [ क ] जन्ममरणप्रबन्धोच्छेदः सर्वदुःखप्रहाणम् । निःश्रेयसं च शास्त्रश्रवणानन्तरं पदार्थतत्त्वज्ञानेनात्मसाक्षात्कारानन्तरमप्रारब्धकर्मणां ज्ञानात्प्रारब्धकर्मणां भोगाच्च क्षये उत्पद्यत इति बोध्यम् । सूत्रकारेणाप्येतदेव प्रदर्शितम् दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः (गौ० १।१।२) इति । अयमाशयः । यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति तदा मिथ्याज्ञानापाये दोषा अपयान्ति । दोषापाये प्रवृत्तिरपैति । प्रवृत्त्यपाये जन्मापैति । जन्मापाये दुःखमपैति । दुःखापाये

चात्यन्तिकोपवर्गो निःश्रेयसम् इति ( वात्स्या० १।१।२ ) । इदमत्राकूतम् । योगबलेनात्मतत्त्वसाक्षात्कारे सति तेन च सवासनमिथ्याज्ञाने ध्वस्ते तन्निबन्धनानां रागद्वेषमोहानां दोषाणामपायात्प्रवृत्तेरपाये तन्निबन्धनस्य जन्मनः अपाये तन्निबन्धनस्य दुःखस्यापाय इति तावद्वस्तुगतिः ( वै० उ० ५।२।१८ ) । द्रव्यादिषण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुः ( प्रशस्त० पृ० १ ) । [ ख ] शान्तः खल्वयं सर्वविप्रयोगः सर्वोपरमोपवर्गः (वात्स्या० १।१।२) । [ ग ] तदभावे संयोगाभावोप्रादुर्भावश्च मोक्षः ( वै० ५।२।१८ ) । अस्यायमर्थः। तदभावे तस्यादृष्टस्याभावे सति । प्रारब्धेतरादृष्टानामात्मसाक्षात्कारेण प्रारब्धानां च भोगेन क्षये सतीति यावत् । संयोगाभावः देहप्रवाहसंबन्धस्य विच्छेदः । तदनन्तरं चाप्रादुर्भावः अर्थाद्दुःखस्यानुत्पत्तिः। देहरूपस्यादृष्टस्य च कारणस्य विरहात् । अतः तदानीमेव मोक्षोपवर्गः संभवतीति नापवर्गस्य शशविषाणसमानता इति भावः ( वै० वि० ५।२।१८ ) । [ घ ] अशेषविशेषगुणध्वंसावधिकदुःखप्रागभावः (वै० उ० १।१।४) । [ ङ ] आत्यन्तिकी दुःखनिवृत्तिः ( वै० उ० १।१।४ ) ( गौ० वृ० १।१।२ ) ( सर्व० पृ० २४६ अक्ष० ) ( दि० १ ) ( त० दी० ) ( त० कौ० ) । अत्रात्यन्तिकत्वं च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम् । युगपदुत्पन्नसमानाधिकरणसर्वात्मविशेषगुणध्वंससमानकालीनत्वं वा ( वै० उ० १।१।४ ) । अथवा स्वसमानाधिकरणदुःखासमानकालीनत्वम् ( दि० १ ) ( त० दी० ) । अत्र संसारकालीनस्य दुःखध्वंसस्य मोक्षत्ववारणाय कालीनान्तत्वं दुःखनिवृत्तिविशेषणम् । अस्मदीयदुःखसमानकालीनशुकमोक्षे अव्याप्तिवारणाय स्वसमानाधिकरणेति दुःखविशेषणं बोध्यम् ( त० कौ० पृ० २२ ) ( म० प्र० १ पृ० ४ ) । यद्वा निवर्त्यसजातीयस्य दुःखस्य पुनस्तत्रानुत्पादः ( सर्व० पृ० २४६ अक्ष० ) । [ च ] स्वसमानाधिकरणदुःखासमानकालीनदुःखध्वंसः ( त० प्र० ) ( गौ० वृ० १।१।२२ ) ( म० प्र० १।४ ) ( त० कौ० पृ० २२ ) । अत्र दुःखध्वंसो दुःखानुत्पत्तिः इत्यर्थः इति वैशेषिकाः ( त० व० ) ।

[छ] एकविंशतिभेदभिन्नस्य दुःखस्यात्यन्तिकी निवृत्तिः (त० भा० प्रमेय० पृ० ४१)। एकविंशतिभेदास्तु शरीरम् षडिन्द्रियाणि षड्विषयाः षड्विधानि प्रत्यक्षज्ञानानि सुखं दुःखं चेति। शरीरादीनां दुःखसाधनत्वाद्दुःखत्वम्। सुखस्य च दुःखसंबन्धाद्दुःखत्वम्। अत्र वार्तिककारा आहुः। श्रेयः पुनः सुखम् अहितनिवृत्तिश्च। तच्छ्रेयो भिद्यमानं द्वेधा व्यवतिष्ठते दृष्टादृष्टभेदेन। दृष्टं सुखम्। अदृष्टमहितनिवृत्तिः। अहितनिवृत्तिरप्यात्यन्तिकी अनात्यन्तिकी च। अनात्यन्तिकी कण्टकादेर्दुःखसाधनस्य परिहारेण। आत्यन्तिकी पुनरेकविंशतिभेदभिन्नदुःखहान्या। तस्य हानिर्धर्माधर्मसाधनपरित्यागेन। अनुत्पन्नयोर्धर्माधर्मयोरनुत्पादेन उत्पन्नयोश्चोपभोगात्प्रक्षयेण इति (न्या० वा० पृ० २) (त० भा० प्रमेय० पृ० ४१)। [ज] आत्यन्तिको दुःखाभावः (न्या० वा० पृ० ४)। [झ] अहितनिवृत्तिरात्यन्तिकी (न्या० क० पृ० ४)। तस्याः सद्भावे प्रमाणम् दुःखसंततिर्धर्मिण्यत्यन्तमुच्छिद्यते संततित्वाद्दीपसंततिवत् इत्यनुमानम् इति तार्किका आहुः (न्या० क० पृ० ४)। [ञ] नित्यनिरतिशयसुखाभिव्यक्तिः इति दीधितिकृदाह (ल० म०)। [ट] चरमदुःखध्वंसः (त० दी०)। यथा तत्त्वज्ञानान्निःश्रेयसाधिगमः (गौ० १।१।१) इत्यादौ हिरण्यगर्भरुद्रादियोग्यजीवानां मोक्षः। द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुः (प्रशस्त० १।१ पृ० ५)। अत्र पदार्थतत्त्वज्ञानस्यात्मतत्त्वज्ञानद्वारा निःश्रेयसं प्रति साधनत्वमुच्यते (त० कौ० पृ० २१)। अत्र विप्रतिपत्तिः। कर्मज्ञानयोस्तुल्यवत्समुच्चयेनापवर्गकारणत्वमित्येके। तत्त्वज्ञानद्वारा कर्मणां तत्र कारणत्वम्। तथा च न तुल्यवत्समुच्चय इत्याचार्याः। तत्र समुच्चयप्रतिपादिका श्रुतिः विद्यां चाविद्यां (कर्म) च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते (ईशा०) इति। आचार्यमते तु श्रुतिः तमेवं विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेयनाय इति (न्या० सि० दी० पृ० २४)। तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमश्च यथाविधं वेदितव्यमिति। सर्वासु विद्यासु चतसृषु तत्त्व-

ज्ञानमस्ति, निःश्रेयसाधिगमश्च। तथा हि (१) त्रय्यां तावत् तत्त्वज्ञानम् अग्निहोत्रादिसाधनानां याथार्थ्येन परिज्ञानम्। निःश्रेयसाधिगमोपि स्वर्गप्राप्तिः। (२) वार्तायां तु भूम्यादिपरिज्ञानं तत्त्वज्ञानम्। कृष्याद्यधिगमश्च निःश्रेयसम्। (३) दण्डनीत्याम् सामदानदण्डभेदानां यथाकालं यथादेशं यथाशक्ति विनियोगस्तत्त्वज्ञानम्। निःश्रेयसं पृथिवीजयः इति। (४) इह तु अध्यात्मविद्यायाम् (आन्वीक्षिक्याम्) आत्मज्ञानं तत्त्वज्ञानम्। निःश्रेयसाधिगमोपवर्गप्राप्तिः इति (न्या० वा० १ पृ० २३)। निःश्रेयसं तावद्द्विविधम्। परम् अपरं च। तत्रापरम् जीवन्मुक्तिलक्षणं तत्त्वज्ञानानन्तरमेव। तदप्यवधारितात्मतत्त्वस्य नैरन्तर्याभ्यासापहृतमिथ्याज्ञानस्य प्रारब्धं कर्मोपभुञ्जानस्य। परं निःश्रेयसं तु क्रमेण भवति (गौ० वृ० १।१।१)। उभयविधनिःश्रेयससाधारणलक्षणं तु सवासनमिथ्याज्ञानध्वंसत्वम्। तत्त्वसाक्षात्कारप्रागभावविरहत्वं वा। अथवा योगजधर्मप्रागभावविरहत्वम् (न्या० सि० दी० पृ० २९)। जीवन्मुक्तौ चोक्तम् जीवन्नेव हि विद्वान् संहर्षायासाभ्यां विमुच्यते इति (न्या० वा० १ पृ० २४)। परनिःश्रेयसप्राप्तौ क्रमस्तावत् तत्त्वज्ञानेन मिथ्याज्ञाननाशः। मिथ्याज्ञाननाशे दोषनाशः। दोषनाशे प्रवृत्तिनाशः। प्रवृत्तिनाशे जन्मनाशः। जन्मनाशे दुःखनाशः इति (गौ० वृ० १।१।२)। वार्तिककारास्तु निःश्रेयसं पुनर्दृष्टादृष्टभेदात् द्वेधा भवति। तत्र प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसं दृष्टम्। नहि कश्चित्पदार्थो ज्ञायमानो हानोपादानोपेक्षाबुद्धिनिमित्तं न भवतीति। एवं च कृत्वा सर्वे पदार्था ज्ञेयतया अपेक्ष्यन्त इति। परंतु निःश्रेयसमदृष्टम् आत्मादेस्तत्त्वज्ञानाद्भवति। दृष्टम् प्रमाणादिपरिज्ञानात् अदृष्टं पुनरात्मादेः प्रमेयस्य परिज्ञानादिति इत्याहुः (न्या० वा० १ पृ० १२)। इदानीं मतभेदेन निःश्रेयसभेदा उच्यन्ते। स्वातन्त्र्यं मृत्युर्वा मोक्षः इति चार्वाका आहुः। आत्मोच्छेदो मोक्षः इति माध्यमिकाः। धर्मिनिवृत्तौ निर्मलज्ञानोदयो महोदयः इति विज्ञानवादिनः। आवरणमुक्तिर्मुक्तिः इत्यार्हताः। ब्रह्मांशिकजीवस्याविद्याप्रभवमिथ्याज्ञाननिवृत्तौ स्वस्वरूपाधिगमः इति मायावादिनः अद्वैतिनः

शांकरमतानुयायिनः । आनन्दमयपरमात्मनि जीवात्मलयो मुक्तिः इति त्रिदण्डिनः । तत्र लयश्च लिङ्गशरीरापगमः । लिङ्गशरीरं च एकादशेन्द्रियाणि पञ्च महाभूतानि सूक्ष्ममात्रयावस्थितानि जीवात्मसुखदुःखावच्छेदकानि ( कि० व० पृ० ९ )। एकादशेन्द्रियपञ्चभूतरूपस्य लिङ्गशरीरस्य जीवात्मन्यपगमो विश्लेषः । स एव परे ब्रह्मणि जीवस्य लय इत्युच्यते ( न्या० सि० दी० पृ० २६ )। जीवस्य लिङ्गशरीरापगमो मोक्षः इति भास्करीयाः । सर्वकर्तृत्वमेकं विहाय वासुदेवस्य सर्वज्ञत्वादीनां कल्याणगुणानामाप्तिमत्त्वे सति भगवद्याथात्म्यानुभवो मोक्षः इति विशिष्टाद्वैतवादिनो रामानुजीयाः । जगत्कर्तृत्वलक्ष्मीपतित्वश्रीवत्सवर्जं भगवज्ज्ञानायत्तनिर्दुःखपूर्णसुखं मोक्षः इति द्वैतवादिनो माध्वाः । अत्र श्रुतिः आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम् इति ( म० प्र० ४ )। स च मोक्षस्तन्मते सारूप्यसालोक्यसामीप्यसायुज्यभेदाच्चतुर्विधः । द्विभुजकृष्णेन सह स्वांशभूतानां जीवानां गोलोके लीलानुभवः इति शुद्धाद्वैतवादिनो वल्लभीयाः । पारमैश्वर्यप्राप्तिः इति पाशुपतशास्त्रज्ञा नकुलीशाचार्यादयो माहेश्वराः । चन्द्रचूडवपुषः सतः पार्वत्यालिङ्गनम् इति कापालिकाः । पूर्णात्मतालाभः इति प्रत्यभिज्ञावादिनोभिनवगुप्ताचार्याः । पारदरसपानेन देहस्थैर्ये जीवन्मुक्तिरेव मोक्षः इति रसेश्वरवादिनो गोविन्दभगवत्पादाचार्यादयः । आत्यन्तिकी दुःखनिवृत्तिः इति गौतमीया नैयायिकाः । आत्यन्तिकदुरितनिवृत्तिः इति न्यायैकदेशिनः । दुःखात्यन्ताभाव एव मुक्तिः इति प्राञ्चः । दुःखनिवृत्तिः ( दुःखानुत्पादः ) इति कणादादयो वैशेषिकाः । स्वर्गादिः इति मीमांसकाः । तत्र दुःखसाधनशरीरनाशे नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिः इति तदेकदेशिनो भट्टसर्वज्ञादयस्तौतातिकाः । तत्रापि नित्यसुखसाक्षात्कारः इति भट्टाः । आत्यन्तिकदुःखप्रागभावपरिपालनं मोक्षः इति प्राभाकराः । परा पश्यन्ती मध्यमा वैखरी इति वाणीचतुष्टये प्रथमायाः पराख्याया ब्रह्मरूपाया वाण्या दर्शनम् इति पाणिनीयाः । प्रकृत्युपरमे ( प्रकृतितद्विकारोपधानाद्विलये ) पुरुषस्य स्वरूपेणावस्थानम् अहंकारनिवृत्ताचौदासीन्यम् आत्यन्तिकदुःखत्रयविगमो वा मुक्तिः इति सांख्याः ।

पुरुषस्य निर्लेपस्य कैवल्येनावस्थानं कैवल्यम् । पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यम् स्वरूपप्रतिष्ठा वा चिच्छक्तिः मोक्षः इति पातञ्जलाः । ऊर्ध्वगतिः इति केचित् । निरुपप्लवा चित्तसंततिः इति परे । अग्रिमचित्तानुत्पादे पूर्वचित्तनिवृत्तिः इत्यपरे । आत्महानिः इत्येके । चित्तानुत्पादनं निरोधो वापवर्गः इत्यन्य आहुः इति ( न्या० वा० १।१।२२ पृ० ८८ ) ( सर्व० ) ( सि० च० पृ० ३७ ) ( न्या० सि० दी० पृ० २५ )( वै० वि० १।१।४ पृ० १६–१७ )( पात० सू० ४।३४ )। २ मङ्गलम् । ३ विज्ञानम् । ४ भक्तिः । ५ अनुभावः । यथा पण्डितो ह्यर्थकृच्छ्रेषु निःश्रेयसकरं वचः ( भार० स० श्लो० १६९ ) तपो विद्या हि विप्रस्य निःश्रेयसकरं परम् ( मनु० अ० १२ श्लो० १०४ ) इत्यादौ ( वाच० ) ।

**निःश्वासः**—[ क ] प्राणवायोर्व्यापारविशेषः ( गौ० वृ० ३।१।३० ) । यथा निःश्वस्य मत्करधृतं निजमम्बरान्तमाकृष्य हन्त चलितैव कथं प्रिया मे ( मुकु० भाण ) इत्यादौ । [ ख ] प्राणवायोर्नासया बहिर्निःसरणम् । यथा वृषलीफेनपीतस्य निःश्वासोपहतस्य च ( मनु० अ० ३ श्लो० १९ ) इत्यादौ ।

**निक्षेपः**—समक्षं समर्पणं निक्षेपः ( मिताक्षरा अ० २ श्लो० ६७ ) ।

**निगदः**—१ परप्रत्यायनार्था मन्त्रा निगदाः ( जै० न्या० अ० २ पा० १ अधि० १३ ) । २ देवतासंबन्धबोधकः पदसमूहो निगदः । परसंबोधनार्थलोडन्तपदयुक्तपदसमूहो निगद इत्यन्ये ( काव्यप्रदीपोद्योते पृ० २२१ ) ।

**निगमः**—१ न्यायशास्त्रम् । २ तन्त्रविशेषः । ३ वेदः । यथा निगमकल्पतरोर्गलितं फलम् ( भाग० १।१।३ ) शतं जीव शरदो वर्धमान इत्यपि निगमो भवति ( यास्कनिरुक्त० ) इत्यादौ ।

**निगमनम्**—( न्यायावयवः ) [ क ] हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम् ( गौ० १।१।३९ ) । तदर्थश्च हेतोः व्याप्तिविशिष्टपक्षधर्मस्य

अपदेशः कथनम् । प्रतिज्ञायाः प्रतिज्ञार्थस्य साध्यविशिष्टपक्षस्य वचनम् इति ( गौ० वृ० १।१।३९ ) । साधर्म्योक्ते वैधर्म्योक्ते वा यथोदाहरण-मुपसंह्रियते तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्दः इति निगमनम् । निगम्यन्तेनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्र इति निगमनम् । निगम्यन्ते समर्थ्यन्ते संबध्यन्ते । तत्र साधर्म्योक्ते तावद्धेतौ वाक्यम् अनित्यः शब्दः इति प्रतिज्ञा । उत्पत्तिधर्मकत्वात् इति हेतुः । उत्पत्तिधर्मकं स्थाल्यादि द्रव्यमनित्यं दृष्टम् इत्युदाहरणम् । तथा चोत्पत्तिधर्मकः शब्दः इत्युपनयः । तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्दः इति निगमनम् । वैधर्म्योक्तेपि अनित्यः शब्दः उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकमात्मादि द्रव्यं नित्यं दृष्टम् । न च तथा अनुत्पत्तिधर्मकः शब्दः । तस्मादुत्पत्तिधर्म-कत्वादनित्यः शब्दः इति । सर्वेषामेकार्थप्रतिपत्तौ सामर्थ्यप्रदर्शनं निग-मनम् इति ( वात्स्या० १।१।३९ ) । [ ख ] व्याप्तिविशिष्टपक्षधर्महेतु-कथनपूर्वकसाध्यविशिष्टपक्षप्रदर्शकः व्याप्तपक्षधर्महेतुज्ञाप्यसाध्यविशिष्टपक्ष-बोधकः तादृशसाध्यबोधको वा न्यायावयवः ( गौ० वृ० १।१।३९ ) । [ ग ] अनुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानकारणव्याप्तिपक्षधर्म-ताधीप्रयुक्तसाध्यधीजनकं वाक्यम् ( चि० अव० २ पृ० ८२ ) । [ घ ] पक्षे साध्योपसंहारः ( त० भा० पृ० ४३ ) । [ ङ ] हेतु-साध्यवत्तया पक्षप्रतिपादकं वचनम् ( त० दी० २ पृ० २२ ) । हेतुज्ञानज्ञाप्यत्वविशिष्टसाध्यवद्विषयकबोधजनकवाक्यमित्यर्थः ( नील० २ पृ० २२ ) । [ च ] पक्षे साध्यस्याबाधितत्वप्रतिपादकं वचनम् ( सि० च० २ पृ० २५ ) । [ छ ] अबाधितत्वासत्प्रतिपक्षितत्वतात्पर्यकं वाक्यम् ( त० कौ० २ पृ० १३ ) । [ ज ] लिङ्गसंबन्धप्रयुक्त-निश्चितसाध्यवत्त्ववचनम् । यथा पर्वतपक्षकवह्निसाध्यकधूमहेतुकस्थले पर्वतो वह्निमान् धूमादित्यादौ तस्मादग्निमानिति तस्मात्तथेति वा वाक्यं निगमनम् ( त० भा० पृ० ४३ ) ( त० कौ० २ पृ० १३ ) ( त० सं० ) । अत्र व्याप्तिपक्षधर्मताविशिष्टधूमस्तत्पदार्थः । ज्ञान-ज्ञाप्यत्वं पञ्चम्यर्थः । तथा च व्याप्तिपक्षधर्मताविशिष्टधूमज्ञानज्ञाप्यवह्नि-मान्पर्वत इति बोधः ( वाक्य० २ पृ० १५ ) । [ झ ] केचित्तु

प्रतिकूलप्रमाणाभावसूचकं प्रतिज्ञोपसंहारवचनम्। तच्च तस्मात्तथा इति वाक्यम् इत्याहुः। अत्रोच्यते असकृदनुचिन्तितानामव्याहततरनिजोपदेशानाम्। प्रामाण्यपरमसीमां निगमनमिदमेव निखिलनिगमानाम्॥ इति (वेदान्त०) (वाच०)।

**निग्रहः**—१ [क] पराजयप्राप्तिः (वात्स्या० १।२।१९)। यथा साध्ये निश्चितमन्वयेन घटितं बिभ्रत्सपक्षे स्थितिं व्यावृत्तं च विपक्षतो भवति यत्तत्साधनं सिद्धये। यत्साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धं च यत्तस्याङ्गीकरणेन वादिन इव स्यात्स्वामिनो निग्रहः॥ (मुद्रारा० नाट० ५।१०) इत्यादौ। [ख] खलीकारः (गौ० वृ० १।२।१९)। [ग] पराहंकारनिराकरणम् इति केचिदाहुः। २ भर्त्सनम्। ३ सीमा। ४ बन्धनम्। ५ अनुग्रहाभावः। ६ चिकित्सा। ७ निषिद्धे प्रवृत्तस्य तिरस्कारः। ८ मारणे प्रवृत्तिवारणाय निरोधः। ९ निरोधरूपयोगेनाभ्यासवैराग्याभ्यां मनसो निरोधः। यथायोग्यमुदाहरणे यथा निग्रहानुग्रहे शक्तः प्रभुरित्यभिधीयते इति तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् (गीता० अ० ६ श्लो० ३४) इति च (वाच०)।

**निग्रहस्थानम्**—[क] वादिनोपजयहेतुः शब्दप्रयोगः (त० दी० पृ० ४५)। निग्रहस्य खलीकारस्य स्थानं ज्ञापकमित्यर्थः। तल्लक्षणं च उद्देश्यानुगुणसम्यग्ज्ञानाभावलिङ्गत्वम्। प्रतिज्ञाहान्याद्यन्यतमत्वं वा इत्यपि वदन्ति (गौ० वृ० १।२।१९)। [ख] कथायां पराजयहेतुर्वाक्यम् (त० प्र० पृ० २४)। [ग] इष्टार्थभङ्गरूपो विरोधोपि निग्रहस्थानम् इति तर्कभाषाकृदाह (त० भा० पृ० ५१)। [घ] हेत्वाभासप्रयोगः (गौ० वृ० १।१।१) (त० भा० पृ० ५१) (सर्व० पृ० २४३ अक्ष०)। यथा विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् (गौ० १।२।६०) इत्यादौ। तदर्थश्च विप्रतिपत्तिर्विरुद्धा प्रतिपत्तिः। अप्रतिपत्तिः प्रकृताज्ञानम्। तथा च विप्रतिपत्ति अप्रतिपत्ति एतदन्यतरोन्नायकधर्मवत्त्वम् (गौ० वृ० १।२।१९)। यद्वा विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः। विप्रतिपद्यमानः पराजयं प्राप्नोति।

निग्रहस्थानं खलु पराजयप्राप्तिः। अप्रतिपत्तिस्त्वारम्भविषये न प्रारम्भः। परेण स्थापितं वा न प्रतिषेधति प्रतिषेधं वा नोद्धरति (वात्स्या० १।२।१९)। निग्रहस्थानानि खलु पराजयवस्तून्यपराधाधिकरणानि प्रायेण प्रतिज्ञाद्यवयवाश्रयाणि तत्त्ववादिनमतत्त्ववादिनं चाभिसंप्लवन्ते (वात्स्या० ५।२।१ अवतरणम्)। निग्रहस्थानानि द्वाविंशतिधा। प्रतिज्ञाहानिः प्रतिज्ञान्तरम् प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासः हेत्वन्तरम् अर्थान्तरम् निरर्थकम् अविज्ञातार्थम् अपार्थकम् अप्राप्तकालम् न्यूनम् अधिकम् पुनरुक्तम् अननुभाषणम् अज्ञानम् अप्रतिभा विक्षेपः मतानुज्ञा पर्यनुयोज्योपेक्षणम् निरनुयोज्यानुयोगः अपसिद्धान्तः हेत्वाभासश्चेति (गौ० ५।२।१) (त० भा० पृ० ५१) (त० दी० पृ० ४५) (प्र० प्र० पृ० २५)।

**नित्यम्**—उत्पत्तिविनाशशून्यं वस्तु। अनवच्छिन्नसद्भावं वस्तु यद्देशकालतः। तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभुनित्यता ॥ (सर्व० सं० पृ० १८१ शैव०)। नित्यत्वं च [ १ ] प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् (त० प्र० १ पृ० १८) (त० प्र० पृ० ४६) (वाक्य० १ पृ० ३)। उत्पत्तिनाशशून्यत्वम् इति समुदितार्थः। अत्र ध्वंसेतिव्याप्तिवारणाय सत्यन्तम्। प्रागभावेतिव्याप्तिवारणाय विशेष्यदलस्य निवेशः (त० प्र० १ पृ० १८)। यथा परमाण्वाकाशादीनां नित्यत्वम्। यथा वा ईश्वरस्य तत्साक्षात्कारस्य च नित्यत्वम्। यथा वा नित्यः संसर्गाभावोत्यन्ताभावः (न्या० म० १ पृ० ११) इत्यादौ। [ २ ] ध्वंसाप्रतियोगित्वम् (त० दी० १ पृ० ७)। प्रध्वंसवत्त्वविरहो वा। यथा केषांचिन्मते ध्वंसस्य नित्यत्वम्। [ ३ ] अविच्छिन्नपरंपराकत्वम्। यथा शाब्दिकमते वर्णानां नित्यत्वम् (वाच०)। [ ४ ] कर्मज्ञास्तु यदकरणे प्रत्यवायः तत्त्वं नित्यत्वम् (न्या० म० ४ पृ० २६)। प्रत्यवायसाधनीभूताभावप्रतियोगित्वमित्यर्थः। नियतनिमित्तकत्वमिति यावत्। तथा चोक्तं मनुना अकुर्वन् विहितं कर्म प्रायश्चित्तीयते नरः इति। नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत्। उपेत्यातिक्रमे दोषश्रुतेरत्यागदर्शनात् ॥ फलाश्रुतेर्वीप्सया च

तन्नित्यमिह कीर्तितम् इति ( ति० त० ) ( वाच० ) । इदं च कर्मणां नित्यत्वमिति ज्ञेयम् ( त० प्र० ख० ४ पृ० १०३ ) ( म० प्र० ) ( ल० म० ) । यदकरणे प्रत्यवाय इत्यत्राकरणे इत्यस्य विहिततत्कालीनाकरण इत्यर्थः । तेन अन्यदा संध्यावन्दनाकरणेपि न क्षतिः ( त० प्र० ख० ४ पृ० १०३ ) । तादृशनित्यत्वस्योदाहरणं यथा अहरहः संध्यामुपासीत इत्यादौ संध्योपासनाया नित्यत्वम् इत्याहुः ( ल० म० ) । अत्रोच्यते नित्यं नैमित्तिकं चैव नित्यनैमित्तिकं तथा । गृहस्थस्य त्रिधा कर्म तन्निशामय पुत्रक ॥ पञ्चयज्ञादिकं नित्यं यदेतत्कथितं तव । नैमित्तिकं तथा चान्यत् पुत्रजन्मक्रियादिकम् ॥ नित्यनैमित्तिकं ज्ञेयं पर्वश्राद्धादि पण्डितैः इति ( श्रा० त० ) ( मार्क० पु० ) ( वाच० ) । [ ५ ] नैरन्तर्यमिति काव्यज्ञा आहुः ।

**नित्यसमः**—( जातिः ) [ क ] नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ( गौ० ५।१।३५ ) । तदर्थश्च [ १ ] अनित्यस्य भावः अनित्यत्वम् । तस्य नित्यं सर्वकालं स्वीकारे अनित्ये शब्दे नित्यत्वं स्यात् इत्यापादनं नित्यसमः । अयमाशयः । अनित्यत्वस्य नित्यमस्वीकारे अनित्यत्वाभावदशायां तस्यानित्यत्वं न इति तस्य नित्यत्वापत्तिः । नहि दण्डाभावदशायां दण्डी इत्युच्यते । अतः अनित्यत्वस्य नित्यमेव स्वीकार इत्यभ्युपगन्तव्यम् । तथा च शब्दस्यापि नित्यत्वापत्तिः इत्याचार्याः । [ २ ] वृत्तिकारास्तु अनित्यस्य भावो धर्मस्तस्य नित्यमभ्युपगमे अनित्यत्वेनाभ्युपगतस्य नित्यत्वं स्यात् । यथा क्षितिः सकर्तृकेत्यत्रानित्यक्षितेर्धर्मः सकर्तृकत्वं त्वया क्षितौ नित्यमुपेयते न वा । न चेत् तदा साध्याभावादंशतो बाधः । अथ क्षितौ नित्यमेव सकर्तृकत्वमुपेयते तदा क्षितेर्नित्यत्वं स्यात् इत्याहुः ( गौ० वृ० ५।१।३५ ) । नित्यसमस्योदाहरणं यथा अनित्यः शब्द इति प्रतिज्ञायते । तदनित्यत्वं किं शब्दे नित्यमथानित्यम् । यदि तावत्सदा भवति धर्मस्य सदाभावाद्धर्मिणोपि सदाभाव इति नित्यः शब्द इति । अथ न सर्वदा भवति अनित्यत्वस्याभावान्नानित्यः शब्दः । एवं नित्यत्वेन प्रत्यवस्थानान्नित्यसमः

( वात्स्या० ५।१।३५ )। अयं नित्यसमश्च आचार्यमते बाधदेशनाभासः सत्प्रतिपक्षदेशनाभासश्च भवति । वृत्तिकारमते तु विरुद्धदेशनाभासो भवति इति विज्ञेयम् ( गौ० वृ० ५।१।३५ ) । [ ख ] धर्मस्य नित्यत्वानित्यत्वविकल्पाद्धर्मिणि नित्यत्वसाधनम् । यथा शब्दस्य यदनित्यत्वं भवद्भिरुच्यते तन्नित्यमनित्यं वा । यदि नित्यम् तदा शब्दवृत्तेरेव तस्य सदातनत्वाच्छब्दस्यापि तथात्वमागतम् । अथानित्यम् तदा शब्दे कदाचिदनित्यत्वाभावोस्तीति नित्य एव शब्दः इत्युभयथापि शब्दस्य नित्यत्वमिति ( नील० पृ० ४५ ) । [ ग ] धर्मस्य तदतद्रूपविकल्पानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत् ॥ ( तार्किकरक्षा )। तद्द्विविधम् । साधारणम् असाधारणं च । तत्राद्यं स्वव्याघातकम् । द्वितीयं त्रिविधम् । युक्ताङ्गहीनत्वम् अयुक्ताङ्गाधिकत्वम् अविषयवृत्तित्वं चेति ( सर्व० पृ० १५३ पूर्ण० ) ।

**नित्यसमासः**—( समासः ) [ क ] स्वान्तर्गतनामसु विभक्तिमात्रप्रक्षेपेण यल्लभ्यार्थस्याबोधः सः । यथा कृष्णसर्प निर्मक्षिक असुर इत्यादिः । अत्रोक्तं जयादित्येन विभक्तिमात्रप्रक्षेपान्निजान्तर्गतनामसु । स्वार्थस्याबोधबोधाभ्यां नित्यानित्यौ समासकौ ॥ इति । अत्र कृष्णः सर्पः मक्षिकाया निः न सुरः इत्यादितस्तल्लभ्यस्य वैजात्यादेरग्रहात् लक्षणसमन्वयः ( श० प्र० श्लो० ३२ पृ० ४० ) । [ ख ] शाब्दिकास्तु समस्यमानयावत्पदरहितविग्रहवाक्यसूचितः समासविशेषः इत्याहुः ( वाच० ) ।

**निदर्शनम्**—[ क ] उदाहरणम् ( प्रशस्त० २ पृ० २८ ) । [ ख ] दृष्टान्तः । यथोक्तं मायावादिभिः आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितम् । घटादिवच्च संघातैर्जातावेतन्निदर्शनम् ॥ इति । अत्र भाष्यम् यदा मन्दबुद्धिप्रतिपिपादयिषया श्रुत्यात्मनो जातिरुच्यते जीवादीनां तदा जातावुपगम्यमानायामेतन्निदर्शनं दृष्टान्तो यथोदितमाकाशवदित्यादीनि इति ( शब्दार्थचि० ) ( वाच० ) ।

**निदर्शनाभासः**—उदाहरणत्वेन भासमानः पदार्थः । यथा नित्यः शब्दः अमूर्तत्वात् । यदमूर्तं तन्नित्यं दृष्टम् यथा परमाणुः यथा स्थाली यथा

तमः। अम्बरवचत् द्रव्यं तत् क्रियावद्दृष्टम् इति (प्रशस्त० २ पृ० ३०)। स च द्विविधः साधर्म्यनिदर्शनाभासः वैधर्म्यनिदर्शनाभासश्चेति (प्रशस्त० २ पृ० ४८)।

**निदिध्यासनम्**—[ क ] श्रुतस्यार्थस्य नैरन्तर्येण दीर्घकालमनुसंधानम्। (त० प्र० १ पृ० ८)। तल्लक्षणं च निरन्तरं विचारो यः श्रुतार्थस्य गुरोर्मुखात्। तन्निदिध्यासनं प्रोक्तं तच्चैकाग्र्येण लभ्यते ॥ इति। ताभ्यां निर्विचिकित्सेर्थे चेतसः स्थापितस्य यत्। एकतानत्वमेतद्धि निदिध्यासनमुच्यते ॥ (पञ्चद० १।५४) इति च। ताभ्यां श्रवणमननाभ्याम् (वाच०)। यथा आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः (श्रुतिः) इत्यादौ (नील० पृ० ५०)। [ ख ] मतेर्थे सजातीयज्ञानधाराकरणम् (प० च० पृ० २०)। [ ग ] विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणम् इति केचिदाहुः (नील०)।

**निद्रा**—१ मेध्यानाडीसंयोगः। २ योगजधर्मानुगृहीतस्य मनसो निरिन्द्रियप्रदेशावस्थानम्। योगाचार्यास्तु ३ अभावप्रत्ययालम्बनो वृत्तिविशेषः इत्याहुः। अत्र सूत्रम् अभावप्रत्ययालम्बना वृत्तिर्निद्रा (पात० सू० १।१०) इति। विवरणं च जाग्रत्स्वप्नवृत्तीनामभावस्तस्य प्रत्ययः कारणं बुद्धिसत्त्वाच्छादकं तमः। तदेवालम्बनं विषयो यस्याः सा तथोक्ता वृत्तिर्निद्रा इति (वाच०)। ४ सुषुप्तिः इति वेदान्तिनः।

**निन्दा**—दोषवत्तया ख्यापनम्। यथा शुक्लयजुर्याज्ञवल्क्यप्रणीतत्वात्पौरुषेयम् इति निन्दा। आरोप्यमाणदोषकथनमिति प्रामाणिकाः। यथा वेदनिन्दारतान्मर्त्यान् देवनिन्दारतांस्तथा। द्विजनिन्दारतांश्चैव मनसापि न चिन्तयेत् ॥ (कूर्मपु० अ० १५) इत्यादौ (वाच०)। निन्दा च निन्दकेन पूर्वकृतं पुण्यं हन्ति (पुरु० चि० पृ० ३७)।

**निन्दार्थवादः**—[ क ] अनिष्टफलवादः। स च वर्जनार्थः। निन्दितं न समाचरेत् इति (वात्स्या० २।१।६३)। निन्दार्थवादवाक्यं लक्षणया निषेध्यस्य निन्दितत्वबोधकतया अर्थवद्भवति इति विज्ञेयम् (लौ० भा०

पृ० ५४ )। [ ख ] अनिष्टबोधनद्वारा विध्यर्थप्रवर्तकं वाक्यम्। यथा स एष वा व प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाथान्येन यजते ( सः ) गर्ते पतत्ययमेवैतज्जीर्यते वा प्रमीयते वा ( श्रुतिः ) इत्येवमादि ( वात्स्या० २।१।६४ ) ( गौ० वृ० २।१।६४ )। [ ग ] निषेध्यनिन्दापरं वाक्यम्। यथा बर्हिषि रजतं न देयम् इत्यादिनिषेधस्य शेषः सोरोदीत् ( तैत्ति० सं० १।५।१।१ ) असृग्धि रजतम् ( शत० ब्रा० ) इत्यादि। अत्राम्नायते सोरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम् ( तैत्ति० सं० १।५।१।१ ) इति। अस्मिन्विषये तैत्तिरीयसंहितायां ( १।५।१ ) कथा श्रूयते। पूर्वं देवदैत्यसंग्रामोभूत्। तत्र लब्धं द्रव्यं देवैः कनिष्ठभ्रातुरग्नेर्निकटे निक्षिप्तम्। तद् द्रव्यं गृहीत्वा पलायमानोग्निर्देवैर्निरुद्धः सन्नरोदीत्। तन्नेत्राश्रुणो जातस्य रजतस्यामङ्गलत्वेन रजतदक्षिणादाननिन्दा इति। असृग्धि रजतं यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ति इति ( शतपथब्रा० ) ( तै० सं० १।५।१।२ )। अस्य वाक्यस्य निषेध्यरजतनिन्दापरत्वमस्ति ( म० प्र० पृ० ६४ )। तथा हि रजतस्यासृग्रूपत्वेनायोग्यत्वात् क्रतावृत्विग्भ्यो रजतदक्षिणादातुर्यजमानस्य गृहे संवत्सरात्प्राग्रोदनरूपानिष्टबोधनद्वारा बर्हिषि रजतदक्षिणादानं निन्दतीति। यथा वा असत्रं वा एतद्यदच्छन्दोमम् ( तैत्ति० सं० ७।४।२।३ ) इत्यादिश्च। अत्रायमभिप्रायः। सत्रं छन्दोमसूक्तयुक्तमेव कर्तव्यम्। तथा अकरणे असत्रम् इति निन्देयम् इति। [ घ ] अनिष्टसाधनत्वबोधनद्वारा विध्यर्थप्रशंसावचनम्। यथा तैलस्त्रीमांससंभोगी पर्वस्वेतेषु वै पुमान्। विण्मूत्रभोजनं नाम प्रयाति नरकं ध्रुवम्॥ इत्यादि। अत्र नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुम् इति न्यायोनुसंधेयः ( वाच० )।

**निपातः**—१ अधोदेशसंयोगानुकूलव्यापारः। यथा पयोधरोत्सेधनिपातचूर्णिताः ( कुमार० ५।२४ ) क्व च निशितनिपाता वज्रसाराः शरास्ते ( शाकु० अ० १ ) इत्यादौ। २ ( शब्दः ) यः शब्दः केवले स्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वयबोधं प्रत्यसमर्थः सुबादिप्रत्ययेभ्यः प्रत्येकं

भिन्नः स तादृशार्थे भेदेनान्वयबोधं प्रति योग्ये निपातः। निपतन्त्यर्थेषूच्चा-वचेषु इति निपातः ( निरुक्ते )। कर्तरि ज्वलादि० णः ( पाणि० सू० ३।१।१४० )। नानाविधार्थेषु वृत्त्या स्वार्थबोधकतया पतनशील इत्यर्थः ( वाच० )। यथा चादयो निपाताः स्वार्थे समुच्चयादौ नामाद्यर्थस्याभे-देनान्वयबोधं प्रत्ययोग्याः। अत्र विप्रतिपत्तिः चादयो निपाताः सार्थका वाचकत्वात्। प्रादय उपसर्गा एव द्योतकाः इति नैयायिका आहुः। प्रादय उपसर्गा इव चादयो निपाता अपि द्योतका एव इति शाब्दिका मेनिरे ( वै० सा० निपा० पृ० ३३८ )। अत्र केचिच्छाब्दिका नागोजीभट्टादयः उपसर्गातिरिक्तनिपातानां द्योतकत्ववाचकत्वोभयस्वीकारः इति अव्ययं विभक्तिसमीप (पा० सू० २।१।६) इति सूत्रस्थभाष्ये स्पष्टम् इत्याहुः ( वाच० )। स चायं निपातः च तु नञ् पुनः इव एव मा स्म इत्यादिभेदाद्बहुविधः ( श० प्र० श्लो० १० टी० पृ० १२ )। अत्र निपातत्वं च असत्त्वार्थकत्वे सति चादिगणपठितत्वम् इति शाब्दिका आहुः। नैयायिकास्तु शक्तिसंबन्धेन निपातपदवत्त्वम् इत्याहुः ( वै० सा० निपा० पृ० ३३५ )।

**निपातनम्**—( शब्दः ) [ क ] अन्यथा प्राप्तस्यान्यथोच्चारणं निपातनम्। [ ख ] शास्त्रान्तराप्राप्तकार्यघटितोच्चारणवत् शब्दस्वरूपम्। [ ग ] वर्णागमादिना अन्यथोत्पद्यमानः सूत्रानिष्पाद्यः शब्दविशेषो निपातः। यथा हंस सिंह इत्यादिशब्दः। तदुक्तम् भवेद्वर्णागमाद्धंसः सिंहो वर्ण-विपर्ययात्। गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम्॥ इति ( सि० कौ० )। वर्णागमादिप्रकारश्च स्मर्यते। वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्ण-विकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥ इति ( सारस्वत० )। अत्रार्थे व्युत्पत्तिः निपतति स्वावयववर्णविनाशा-दिनान्यथा निष्पद्यते इति निपातः (कर्तरि ज्वलादि० णः) ( वाच० )।

**निबन्धः**—१ एकग्रन्थोपनिबन्धनम्। यथा प्रमाणप्रमेययोर्न्यायदर्शने निबन्धनम् ( गौ० वृ० ३।२।४२ )। २ कालविशेषे देयत्वेन प्रतिश्रुतं वस्तु। यथा दद्याद्भूमिं निबन्धं वा कृत्वा लेख्यं च लेखयेत् इत्यादौ।

३ परिगणितं द्रव्यम्। यथा भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा (याज्ञ० अ० २ श्लो० १२४) इत्यादौ इति व्यवहारज्ञा आहुः। अत्र मिताक्षरा निबन्धः एकस्य पर्णभारकस्येयन्ति पर्णानि तथा एकस्य क्रमुकफलभारकस्येयन्ति क्रमुकफलानि इत्याद्युक्तलक्षणः (याज्ञ० मि० २ श्लो० १२४) इति। ४ मूत्ररोधरूपो रोगविशेषः इति भिषजः। ५ बन्धनम् ६ ग्रन्थः ग्रन्थविशेषश्च।

**निबन्धनम्**—१ [क] प्रयुक्तम्। यथा वातादिनिबन्धनं दुःखमित्यादौ। [ख] जन्यम्। २ हेतुभूतम्। अत्रार्थे व्युत्पत्तिर्द्रष्टव्या निबध्यतेनेनात्र वा इति। ३ वीणायास्तन्त्रीनिबन्धनमूर्ध्वभागः इति गायका आहुः (वाच०)।

**निमन्त्रणम्**—आवश्यके कर्मणि श्राद्धभोजनादौ प्रवर्तकं वाक्यम्। यथा ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे (याज्ञ० २।२६३) इति। निमन्त्रयेत पूर्वेद्युर्ब्राह्मणानात्मवाञ्छुचिः (याज्ञ० १।२२५) इति च। तच्च निमन्त्रणम् भवतात्र भोक्तव्यम् इत्यादि वाक्यम् (श० प्र० श्लो० १०० टी० पृ० १५५)। अत्रोच्यते यस्याकरणे प्रत्यवायस्तत् निमन्त्रणम् इति। एतच्च नित्यम्। अत्र नित्यत्वं च प्रत्यवायसाधनीभूताभावप्रतियोगित्वम् (वाच०)। यथा वा निमन्त्रणार्थे दूतांश्च प्रेषयामास शीघ्रगान् (भार० व० अ० २२५) इत्यादौ (वाच०)।

**निमन्त्रितत्वम्**—स्वकर्तव्यत्वप्रकारकधीजनकमप्रत्याख्येयं यद्वाक्यम् तत्प्रतिपाद्यत्वम्। यथा श्राद्धे भुञ्जीत भवान् इह भुञ्जीथास्त्वम् इत्यादौ श्राद्धे भोजनाय निमन्त्रितो भवान् इत्यनुभवान्निमन्त्रितत्वं लिङर्थः। अत्र स्वपदं निरुक्तप्रतिपाद्यत्वाभिमतभवदादिपरम्। अप्रत्याख्येयत्वं च प्रत्यवायजनकप्रत्याख्यानकत्वम्। तादृशधीजनकवाक्यं च भवतात्र भोक्तव्यम् इत्यादिकं निमन्त्रणरूपम्। तत्प्रतिपाद्यो भवदादिः इति ज्ञेयम्। श्राद्धमुपक्रम्य अनिन्दितेनामन्त्रितो नापगच्छेत् इति श्रुतेः सत्त्वेन तत्प्रत्याख्याने दोषः इति ज्ञेयम्। अत्र यस्य प्रत्याख्याने प्रत्यवायः तन्निमन्त्रणम्

इति वृद्धस्मरणं ज्ञेयम् । श्राद्धे भुञ्जीत भवानित्यत्र लिङर्थनिमन्त्रितत्वैकदेशे स्वकर्तव्यत्वबोधे धात्वर्थो विशेष्यत्वेनान्वेति । तथा च श्राद्धभोजनधर्मिका या स्वकर्तव्यत्वधीः तज्जनकवाक्यप्रतिपाद्यो भवान् इत्याकारो बोधः ( श० प्र० श्लो० १०० टी० पृ० १५५–१५६ ) ।

**निमित्तमात्रगुणत्वम्**—असमवायिकारणभिन्नत्वे सति निमित्तकारणगुणत्वम् ( ल० व० पृ० ३७ ) । यथा आत्मविशेषगुणानां ज्ञानादीनाम् निमित्तगुणत्वमेव ।

**निमित्तम्**—१ ( कारणम् ) समवायिकारणभिन्नमसमवायिकारणभिन्नं च कारणम् । यथा तुरीवेमादिकं पटस्य दण्डचक्रादिकं च घटस्य निमित्तकारणम् ( त० सं० ) ( त० कौ० पृ० ८ ) । यथा वा आत्मनो विशेषगुणा निमित्तकारणानि ( भा० प० गु० श्लो० ८८–८९ ) । समवायिकारणताभिन्ना असमवायिकारणताभिन्ना च या कारणता तद्वदित्यर्थः ( त० कौ० १ पृ० ८ ) । स्वगतरूपस्य समवायिकारणे दण्डादौ यथाश्रुतलक्षणासत्त्वेन नातिव्याप्तिः इति ज्ञेयम् । अपरिणामित्वे सति यत्कारणं तन्निमित्तकारणम् इति मध्वमतानुयायिन आहुः ( प्र० च० पृ० १४ ) । २ प्रयोजकम् । यथा रोधने बन्धने चापि योजने च गवां रुजः । उत्पाद्य मरणं वापि निमित्ती तत्र लिप्यते ॥ ( अङ्गिर० ) इत्यादौ । ३ ज्ञापकम् । यथा शकुनादि कार्यविशेषे निमित्तम् । अत्रोदाह्रियन्ते यथा निमित्तेषु च सर्वेषु ह्यप्रमत्तो भवेन्नरः ( स्मृतिः ) निमित्तानि च पश्यामि विपरीतानि केशव ( गीता० १।३१ ) मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ( गीता० ११।३३ ) अतः कालं प्रवक्ष्यामि निमित्तं कर्मणामिह ( ति० त० भविष्यपु० ) इत्यादीनि ( वाच० ) । यथा वा अनियतनिमित्तकं नैमित्तिकं कर्म इत्यादौ पुत्रजन्मग्रहणादि जातेष्टिस्नानादौ निमित्तम् ( म० प्र० ४ पृ० ६० ) । अत्रोच्यते निमित्तमात्रमाश्रित्य यो धर्मः संप्रवर्तते । नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥ इति ( मल० त० ) ( वाच० ) । ४ शाब्दिकास्तु उद्देश्यम् फलं वा । यथा निमित्तात्कर्मयोगे इति

वार्तिके निमित्तं फलम् इत्याहुः ( सि० कौ० ) । ५ शरव्यम् इति काव्यज्ञा आहुः ( वाच० ) ।

**निमित्तत्वम्**—१ [ क ] क्रियाजनिका या विनियोज्यत्वेनेच्छा तद्विषयत्वम् । यथा चर्मणि द्वीपिनं हन्तीत्यादौ चर्मादीनां निमित्तत्वम् ( गदा० व्यु० कार० ७ पृ० ११६ ) । अत्र विनियोज्यत्वेनेच्छा च इदं चर्म हननेन मम प्राप्यताम् इति प्राप्यत्वप्रकारकेच्छा । तथा च चर्मणि द्वीपिनं हन्तीत्यादौ हननादिक्रियाजनिका या विनियोज्यत्वेनेच्छा तद्विषयत्वं चर्मादौ निमित्तत्वम् इति विज्ञेयम् । समुदितश्लोकस्तु चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ इति ( सि० कौ० ) । सीमा अण्डकोशः । पुष्कलको गन्धमृगः । अत्र निमित्तात्कर्मयोगे ( वार्तिकम् ) इत्यनेन सप्तमी यत्किंचित्कर्मप्रकारकबोधजनकधातुयोगे प्रयुज्यते । तदर्थश्च द्वीप्यादिरूपकर्मयोगे निमित्ताच्चर्मादिरूपात्सप्तमी । निमित्तं हि फलम् । योगस्तु संयोगः समवायो वेति । इयं सप्तमी प्रकृत्यर्थचर्मादेर्हननादिक्रियानिमित्तत्वं बोधयति । तथा च सप्तम्यर्थः स्वविषयकतादृशेच्छाधीनत्वम् । तस्य क्रियायामन्वयः । तदेकदेशविषयितायां निरूपकत्वेन प्रकृत्यर्थस्यान्वयः ( ग० व्यु० का० ७ पृ० ११६ ) ( का० व्या० पृ० ११ ) । स्वपदार्थश्चर्म । एवं च चर्मादिविषयकेच्छाधीना या व्याघ्रकर्मिका हननक्रिया तत्कर्ता इति वाक्यार्थबोधः । [ ख ] फलत्वेनेच्छाविषयत्वम् । यथा चर्मणि द्वीपिनं हन्तीत्यादौ सप्तम्यर्थः । अत्रायं विशेषो ज्ञेयः । चर्मात्मकफलस्य सिद्धतया स्वरूपफलवत्त्वेनैवेच्छा प्रयोज्यत्वेन धात्वर्थेन्वेति । तथा च चर्मप्रकारकेच्छाप्रयोज्यद्वीपिहननानुकूलकृतिमान् इति बोधः इति ( का० व्या० पृ० ११ ) । [ ग ] शाब्दिकास्तु फलत्वम् उद्देश्यत्वं वा निमित्तत्वम् । यथा निमित्तात्कर्मयोगे इत्यादौ इत्याहुः । २ फलत्वेनेच्छा । यथा मशकनिवृत्तौ धूमं करोतीत्यादौ सप्तम्यर्थः । अत्र मशकनिवृत्तिः फलम् । सप्तम्यर्थस्य मशकनिवृत्तीच्छायाः प्रयोज्यत्वसंबन्धेन करोतीत्यर्थेन्वयः । तथा च मशकनिवृत्तीच्छाप्रयोज्यधूमकरणाश्रयः इति बोधः ( का० व्या० पृ० ११ ) ।

**निमेषः**—लघ्वक्षरसमा मात्रा निमेषः परिकीर्तितः (अहोरात्रशब्दे दृश्यम्)।

**नियतत्वम्**—१ व्यापकत्वम् । यथा नियतसामानाधिकरण्यं व्याप्तिः इत्यादौ वह्नेर्धूमव्यापकत्वम् (न्या० बो० २ पृ० १४) (नील० २ पृ० २०)। यथा वा अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता । कारणत्वं भवेत् (भा० प० श्लो० १६) इत्यत्र कारणभूतदण्डादिगत-पूर्ववृत्तित्वस्य घटादिकार्यनियतत्वम् । अत्र सामानाधिकरण्यसंबन्धेन यत्र दण्डादौ कार्यं तत्र स्वरूपसंबन्धेन पूर्ववृत्तित्वम् इति रीत्या व्याप्तेः सत्त्वेन पूर्ववृत्तित्वस्य व्यापकत्वं बोध्यम् । २ नियमयुक्तत्वम् इति योगिन आहुः ।

**नियमः**—१ [क] तद्वदन्यावृत्तित्वम् । व्याप्तिरिति यावत् (ग० सिद्धा०)। यथा कार्ये कारणनियमः इत्यत्र कार्ये कारणवदन्यावृत्तित्व-रूपो नियमः । यथा धूमे वह्निमदन्यावृत्तित्वम् । [ख] व्याप्यत्वम् (ग० सत्प्र० पृ० २२)। यथा स्वसाध्यविपरीतेनानियमात् (चि० २ सत्प्र० पृ० ९७) इत्यादौ । [ग] तन्मात्रसत्त्वम् । यथा साहचर्य-नियमः इत्यादौ (वाक्य० २ पृ० १३)। अत्रायमर्थः । साहचर्यं साध्यनिष्ठहेतुसामानाधिकरण्यम् । तन्नियमः तन्मात्रसत्त्वम् । तद्विरोध्य-सत्त्वमिति यावत् । विरोधि च हेतुसमानाधिकरणाभावप्रतियोगित्वम् । यादृशवह्नेर्यादृशधूमसाहचर्यं तस्मिन्न तदव्यापकत्वम् इति विरोधः । अनुगतैकव्यक्तौ तु एकाधिकरणावच्छेदेनासत्त्वम् विरोधः इति (वाक्य० २ पृ० १३)। २ व्यापकत्वम् । ३ धर्मज्ञास्तु प्रत्यवायजनकीभूताभाव-प्रतियोगित्वम् । अयोगव्यवच्छेद इति पर्यवसितोर्थः । यथा ऋतौ स्वदारानुपेयादित्यादौ लिङर्थः इत्याहुः । अत्र नियमार्थैकदेशे अभाव ऋत्वादिकालस्यावच्छेदकत्वेनान्वयात् ऋतुकालावच्छेद्यत्वविशिष्टस्य प्रत्य-वायजनकीभूताभावस्य प्रतियोगि स्वदारगमनम् इत्याकारको बोधः । यद्वा प्रत्यवायहेतुत्वम् अभावश्च द्वयं तत्र लिङर्थः । तेन प्रतियोगिविधया धात्वर्थस्यावच्छेद्यत्वेन च कालस्यान्वयिन्यभावे लिङा प्रत्यवायहेतुत्वस्य बोधनात् ऋतुकालावच्छेद्यः स्वदारगमनाभावः प्रत्यवायहेतुः इत्याकार एव तत्र बोधः (श० प्र० श्लो० १०० टी० पृ० १५८)।

४ शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ( पात० योगसू० २।३२ ) इति योगाङ्गविशेषाः इति योगिन आहुः ( गौ० वृ० ४। २।४४ ) । ५ तत्तद्व्यापारेषु भगवत्प्रेरणम् इति वेदान्तिनो मध्वाचार्यानुयायिनः प्राहुः । ६ प्रतिज्ञा । ७ स्वीकारः । ८ आगन्तुकसाधनकर्मरूपं व्रतम् । ९ नियन्त्रणा । १० निश्चयः इत्यादि ( वाच० ) ।

**नियमविधिः**—( विधिः ) [ क ] यत्रोभयोः प्राप्तावेको नियम्यते तत्र नियमविधिः । यथा व्रीहीनवहन्ति ( श्रुतिः ) इत्यादौ ( सि० च० ४ पृ० ३३ ) । अत्र नियमः अयोगव्यवच्छेदः ( श० प्र० श्लो० १०० टी० पृ० १७८ ) । अत्र व्रीहिषु नखविदलनमुसलावहननयोः प्राप्तौ मुसलावहननमेव नियम्यते ( सि० च० ४ पृ० ३३ ) । नियमविधेः प्रयोजनं च एतद्विध्यभावे दर्शपूर्णमासादिकेषु व्रीहिषूत्पत्तिवाक्यावगतपुरोडाशोपयोगितण्डुलनिष्पत्त्यनुकूलवैतुष्यकार्यायावहननवत् कदाचिन्नखविदलनमपि प्राप्नुयादिति तस्मिन्पक्षे अवहननस्य प्राप्त्यभावात् कार्यान्यथोपपत्तेरवहननस्य पाक्षिकी प्राप्तिः स्यात् । सत्यस्मिन्विधौ अवहननेनैव वैतुष्यं कार्यम् इति नियमे सति विदलनं सर्वात्मना निवर्तेत इति नियमविधिरयम् । न च वैतुष्यस्य नखविदलनेनापि संभवादवहनननियमो व्यर्थः । प्रयोजनाभावादिति वाच्यम् । अवघातेनैव वैतुष्यकरणे किंचिददृष्टं जन्यत इत्यदृष्टाङ्गीकारात् ( मीमां० परि० ) ( वाच० ) । [ ख ] पक्षे अप्राप्तस्य नियामको विधिः । यथा व्रीहीनवहन्ति इति ( म० प्र० ४ पृ० ६२ ) । [ ग ] नानासाधनसाध्यक्रियायामेकसाधनप्राप्तावप्राप्तस्यापरसाधनस्य प्रापको विधिः इति मीमांसका आहुः ( लौ० भा० पृ० ३९ ) । [ घ ] यो विधिः पक्षे अप्राप्तमर्थं नियमयति सः । यथा व्रीहीनवहन्ति इति ( मीमां० परि० ) । [ ङ ] अन्यनिवृत्तिफलकसिद्धविषयकविधिर्नियमविधिः इति शाब्दिका वदन्ति । परे तु यत्र क्रियायां विकल्पेन कारकान्वयः सः । यथा याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत् इत्यादौ नियमविधिः इत्याहुः ( त० प्र० ख० ४ पृ० १०८ ) ।

**नियामकत्वम्**—१ प्रयोजकत्वम् । २ नियमकारकत्वम् । यथा कारणस्य कार्यं प्रति नियामकत्वम् इत्यत्रादृष्टकालादेः कार्यमात्रं प्रति नियामकत्वम् । ३ निरासकत्वम् । यथा लोकप्रसिद्धमेवैतद्वारि वह्नेर्नियामकम् ( कामन्द० ) इत्यादौ ( वाच० ) ।

**नियोगः**—१ [ क ] एवं कुरु इत्याज्ञा ( कि० व० ६ ) । यथा पुत्रोत्पादनाय विधवाया नियोजनम् । अत्रोच्यते । उक्तो नियोगो मनुना निषिद्धः स्वयमेव हि इति ( बृहस्पतिः ) । तथा हि नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः । अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥ नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः ॥ इति ( मनु० अ० ९ श्लो० ६४–६५ ) । [ ख ] प्रेरणम् । [ ग ] इष्टसाधनत्वादिबोधनेन प्रवर्तनम् । [ घ ] केचित्तु प्रवर्तकज्ञानोपधायकतानिर्वाहकव्यापारः । यथा स्वर्गकामो यजेत इत्यादौ योग्यतया नियोगो बोध्यत इत्याहुः ( वाच० ) । २ अवधारणम् । यथा तत्सिषेवे नियोगेन स विकल्पपराङ्मुखः ( रघु० स० १७ श्लो० ४९ ) इत्यादौ । अत्र कौटिल्यः अनेनैवोपायेन नान्येन इति नियोगः इति ( रघु० टी० १७।४९ ) ।

**नियोजकत्वम्**—तत्कामिकृतिसाध्यतया प्रतीयमानत्वम् ( न्या० म० ४ पृ० ६३ ) । यथा प्राभाकरमते विध्यर्थस्यापूर्वात्मकस्य कार्यस्य नियोजकत्वम् ( त० प्र० ख० ४ पृ० १११ ) ।

**नियोज्यत्वम्**—[ क ] प्रवर्तनीयत्वम् । तच्च प्रवर्तनाकर्मत्वम् । प्रवर्तनाकर्मत्वं तज्जन्यप्रवृत्तिमत्त्वम् ( वाच० ) । यथा स्वर्गकामो यजेत इत्यादौ स्वर्गकामो यागे नियोज्यः ( चि० ४ ) । [ ख ] केचित्तु प्रवर्तकज्ञानोपधायकत्वम् इत्याहुः ( वाच० ) ।

**निर्**—( अव्ययम् ) १ वियोगः । यथा निःसङ्ग इत्यादौ । २ अत्ययः । यथा निर्मक्षिकम् इत्यादौ । ३ आदेशः । यथा निर्देशः इत्यादौ । ४ अतिक्रमः । यथा निष्क्रान्तः इत्यादौ । ५ भोगः । यथा निर्वेशः

इत्यादौ । ६ निश्चितम् । यथा निश्चितमित्यादौ ( गणरत्न० ) । ७ निषेधः । यथा निर्मक्षिकम् इत्यादौ । अयं शब्दः प्रादिः सान्तो रान्तश्चेति विज्ञेयम् ( वाच० ) ।

**निरनुयोज्यानुयोगः**—( निग्रहस्थानम् ) [ क ] अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ( गौ० ५।२।२२ ) । निग्रहस्थानलक्षणस्य मिथ्याध्यवसायादनिग्रहस्थाने निगृहीतोसीति परं ब्रुवन्निरनुयोज्यानुयोगान्निगृहीतो वेदितव्य इति ( वात्स्या० ५।२।२२ ) । अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तं यन्निग्रहस्थानोद्भावनं तत् इत्यर्थः । एतेन अवसरे निग्रहस्थानोद्भावने एकनिग्रहस्थाने निग्रहस्थानान्तरोद्भावने च नातिव्याप्तिः (गौ०वृ० ५।२।२२) । [ ख ] निग्रहस्थानरहिते निग्रहस्थानोद्भावनम् ( नील० पृ० ४६ ) । सोयं चतुर्धा । छलम् जातिः आभासः अनवसरग्रहणं च ( गौ० वृ० ५।२।२२ ) ( दि० १ ) ( ता० र० परि० ३ श्लो० १५१ ) ( सा० सं० पृ० ११७ ) ।

**निरर्थकम्**—१ ( निग्रहस्थानम् ) अस्य संभवः प्रमादात् इत्यवधेयम् ( गौ० वृ० ५।२।८ ) । [ क ] वर्णक्रमनिर्देशवन्निरर्थकम् ( गौ० ५।२।८ ) । तदर्थश्च वर्णानां क्रमेण निर्देशो जबगडेत्यादिप्रयोगः तत्तुल्यो निर्देशः इति ( गौ० वृ० ५।२।८ ) । यथा नित्यः शब्दः कचटतपाः जबगडदस्त्वात् झभञ्घढधष्वत् इति । एवंप्रकारं निरर्थकम् । अभिधानाभिधेयभावानुपपत्तावर्थगतेरभावाद्वर्णा एव क्रमेण निर्दिश्यन्त इति ( वात्स्या० ५।२।८ ) । [ ख ] समयबन्धव्यतिरेकेणावाचकपदप्रयोगः ( गौ० वृ० ५।२।८ ) ( दि० १ ) । समयबन्धव्यतिरेकेणेति विशेषणदानेन यत्र अपभ्रंशेन विचारः कर्तव्यः इति समयबन्धस्तत्रापभ्रंशे न दोषः । अत्र वाचकत्वं शक्त्या निरूढलक्षणया शास्त्रपरिभाषया वा बोध्यम् ( गौ० वृ० ५।२।८ ) । [ ग ] अवाचकशब्दप्रयोगः । यथा शब्दो नित्यः जबगडदस्त्वात् इत्यादि ( नील० पृ० ४५ ) । २ काव्यदोषविशेषः इत्यालंकारिका आहुः । अत्रोच्यते निरर्थकं तुहीत्यादि पूरणैकप्रयोजनम् इति ( चन्द्रा० ) । ३ निष्फलम् ।

यथा प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ( भा० उ० अ० ३५ ) इत्थं जन्म निरर्थकं क्षितितलेरण्ये यथा मालती ( सा० द० ) इत्यादौ इति काव्यज्ञा आहुः ( वाच० ) ।

**निराकाङ्क्षम्**—अनाकाङ्क्षम् । शाब्दबोधोपयोग्याकाङ्क्षाशून्यमिति यावत् । यथा तेषां वाक्यं निराकाङ्क्षम् ( कात्या० श्रौ० १।३।२ ) इत्यादौ ।

**निरिष्टकः**—पुनः प्रयोगानर्हं इत्यर्थः । इष्टान्निर्गतो निरिष्टः । कुत्सितो निरिष्टो निरिष्टकः इति व्युत्पत्तेः । यथा भोजन उपयुक्तं कदलीपर्णं प्रक्षाल्यापि न पुनस्तच्छिष्टाः स्वीकुर्वन्ति ( जै० न्या० अ० ११ पा० ३ अधि० १२ ) ।

**निरुद्धम्**—निरुद्धसकलवृत्तिकं संस्कारमात्रशेषं चित्तं निरुद्धमिति भण्यते ( सर्व० सं० पृ० ३५६ पातञ० ) ।

**निरुपाख्यम्**—[ क ] निःस्वरूपम् ( रत्नप्रभा० ) । [ ख ] प्रमाणमात्राविषयोसत्पदार्थः । यथा वन्ध्यापुत्रशशशृङ्गकूर्मरोमादि । इदमेवालीकमित्युच्यते । तुच्छमिति वेदान्तिभिरुच्यते । अभावपदार्थ इति केचिदाहुः ।

**निरूढः**—१ शक्तितुल्यलक्षणयार्थबोधकः शब्दः । यथा पूर्वद्रव्यस्वामिसंबन्धाधीनं तत्स्वाम्युपरमे यत्र द्रव्येन्यस्वत्वम् तत्र निरूढो दायशब्दः इति जीमूतवाहनेनोक्तो निरूढशब्दः ( वीरमित्रो० अ० २ दायभाग० पृ० ५२२ ) । २ धर्मज्ञास्तु पशुयागविशेषः । यथा निर्मित ऐन्द्राग्नः ( आश्व० श्रौ० ३।८४ ) ऐन्द्राग्नो निरूढो नाम पशुः कर्तव्यः इत्यादौ इत्याहुः ( वाच० ) ।

**निरूढलक्षणा**—( लक्षणा ) [ क ] अनादितात्पर्यविषयीभूतार्थनिष्ठा लक्षणा ( त० प्र० ख० १ पृ० ४३ ) ( ग० व्यु० का० १ ) । अत्र तात्पर्येनादित्वं च स्वज्ञानजन्यशाब्दबोधध्वंसकालीनस्वज्ञानजन्यशाब्दबोधसामान्यकत्वम् ( कृष्णं० ) । तदन्वयश्च अनादितात्पर्य

वक्तुरिच्छा तद्विषयीभूतो योर्थः तन्निष्ठा शक्यसंबन्धरूपा लक्षणा इति । यथा रथो गच्छतीत्यादौ तिबाख्यातस्याश्रयत्वे निरूढलक्षणा ( दि० ४ पृ० १७५ ) । यथा वा कर्मणि कुशल इत्यादौ । अत्र कुशांल्लाति इति व्युत्पत्त्या कुशलपदं दर्भादानकर्तरि यौगिकम् । विवेचकत्वसारूप्यात्प्रवीणे वर्तमानमनादिवृद्धव्यवहारपरंपरानुपातित्वेनाभिधानवत्प्रयोजनमनपेक्ष्य प्रवर्तते ( सर्व० पृ० ३७३ पात० ) । [ ख ] लक्ष्यतावच्छेदकीभूततत्तद्रूपेण पूर्वपूर्वं प्रत्यायकत्वान्निरूढा । यथा अरुणया पिङ्गाक्ष्या एकहायन्या ( गवा ) सोमं क्रीणाति इत्यादावारुण्यादिप्रकारेण तदाश्रयद्रव्यानुभावकत्वादरुणादिपदस्य आरुण्ये निरूढलक्षणा ( श० प्र० श्लो० २४ टी० पृ० ३१ ) ( लौ० भा० पृ० १७–१८ ) । [ ग ] केचित्तु ( शाब्दिकादयः ) व्याकरणकोशादिहेतुतः प्रसिद्धार्थे शक्तितुल्या लक्षणारूपा शब्दस्यार्थबोधनशक्तिः इत्याहुः (वाच०) । [ घ ] निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ( सर्व० पृ० ३७४ पात० ) ।

**निरूढिः**—१ निरूढलक्षणा । २ काव्यज्ञास्तु प्रसिद्धिः । यथा चतसृष्वपि ते विवेकिनी नृप विद्यासु निरूढिमागता ( किरात० स० २ श्लो० ४ ) इत्यादावित्याहुः ।

**निरूपकत्वम्**—१ स्वरूपसंबन्धविशेषः । यथा दण्डो घटस्य कारणम् इत्यादौ घटनिष्ठकार्यतानिरूपकत्वं दण्डनिष्ठकारणतायाम् । यथा वा भूतले घटः इत्यादौ भूतलनिष्ठाया आधारताया निरूपकत्वं घटनिष्ठाधेयत्वे । यथा वा घटस्य ज्ञानम् इत्यादौ ज्ञाने घटनिष्ठविषयतानिरूपकत्वम् । एवमन्यत्रापि निरूप्यनिरूपकभावो ज्ञेयः । अत्रायं नियमः यन्निरूपितं यद्भवति तन्निरूपकं तत् इति । २ तज्ज्ञानजनकज्ञानविषयत्वम् ( ग० अव० हेतु० ) । यथा वृक्षाद्विभजेत इत्यादौ विभागस्य वृक्षनिष्ठावधितानिरूपकत्वम् । ३ प्रतियोगित्वम् इति केचिदाहुः ।

**निरूपणम्**—१ ज्ञानानुकूलशब्दः । लक्षणस्वरूपप्रामाण्यादिप्रकारकज्ञानानुकूलव्यापारः इति फलितोर्थः ( त० प्र० ख० ४ पृ० ३ ) ( दायभा० श्रीकृष्ण० ) । यथा अथ शब्दो निरूप्यते ( न्या० म० ४ पृ० १ )

इत्यादौ । यथा वा द्रव्यं निरूपयतीत्यादौ निरूपयत्यर्थः । अत्र तादृशविशिष्टैकार्थस्य धात्वर्थस्य एकदेशे ज्ञानांशे द्रव्यस्य द्वितीयार्थविषयतानिरूपितविषयितयान्वयः ( ग० व्यु० का० २ पृ० ४६ ) । तथा च द्रव्यविषयकज्ञानानुकूलशब्दप्रयोगकर्ता इति बोधः । यथा वा अथ हेत्वाभासास्तत्त्वनिर्णयप्रयोजकत्वान्निरूप्यन्ते ( चि० २ ) इत्यादौ । अत्रेदं बोध्यम् । निरूपणप्रतिज्ञाफलं तु शिष्यावधानमेवेति ( म० प्र० ३ पृ० ३३ ) । २ विचारः । ३ निदर्शनम् । ४ आलोकः इति काव्यज्ञा आहुः ( वाच० ) ।

**निरूपितत्वम्**—स्वरूपसंबन्धविशेषः । यथा राज्ञः पुरुष इत्यादौ पुरुषनिष्ठस्वत्वे राजनिष्ठस्वामित्वनिरूपितत्वम् । शिष्टं तु निरूपकत्वशब्दे द्रष्टव्यम् ।

**निरूप्यत्वम्**—निरूपितत्वम् ।

**निरोधः**—चित्तस्यावस्थाविशेषः । निरुध्यन्तेस्मिन्प्राणाद्याश्चित्तवृत्तयः इति व्युत्पत्तेः ( सर्व० सं० पृ० ३६५ पातञ्ज० ) ।

**निर्गमः**—पुत्र्युद्वाहस्तु निर्गमः ( पु० चि० पृ० ४५० ) ।

**निर्जरः**—आस्रवः कर्मणां बन्धो निर्जरस्तद्वियोजनम् ( आर्हतदर्शनम् ) ।

**निर्जरा**—[ क ] अर्जितस्य कर्मणस्तपःप्रभृतिभिर्निर्जरणं निर्जराख्यं तत्त्वम् ( सर्व० पृ० ८० आर्ह० ) । [ ख ] यत्कर्म तपोबलात्स्वकामनयोदयावलिं प्रवेश्य प्रपद्यते तत्कर्म निर्जरा । यदाह संसारबीजभूतानां कर्मणां जरणादिह । निर्जरा संमता द्वेधा सकामाकामनिर्जरा ॥ स्मृता सकामा यमिनामकामा त्वन्यदेहिनाम् इति ( सर्व० सं० पृ० ८० आर्ह० ) ।

**निर्णयः**—१ [ क ] तदभावाप्रकारकं तत्प्रकारकं ज्ञानम् ( गौ० वृ० १।१।४१ ) (त० भा० पृ० ४४ ) । यथा घटे अयं घटः इति ज्ञानम् । अत्रोच्यते । निर्णयो विशेषदर्शनजमवधारणम् संशयविरोधि । तत् द्विविधम् । प्रत्यक्षम् अनुमानं च । तत्राद्यं यथा स्थाणुपुरुषयोरूर्ध्वतामात्रसादृश्यालोचनाद्विशेषेषु प्रत्यक्षेषूभयविशेषानुस्मरणात् किमयं स्थाणुः

पुरुषो वा इति संशयोत्पत्तौ शिरःपाण्यादिदर्शनात् पुरुष एवायम् इत्यवधारणज्ञानं प्रत्यक्षनिर्णयः । द्वितीयं यथा विषाणमात्रदर्शनात् गौर्गवयो वा इति संशयोत्पत्तौ सास्नामात्रदर्शनात् गौरेवायम् इत्यवधारणज्ञानम् अनुमाननिर्णयः इति ( प्रशस्त० २ पृ० ३२ ) । [ ख ] विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ( गौ० १।१।४१ ) । तदर्थश्च विमृश्य संदिह्य पक्षप्रतिपक्षाभ्यां साधनोपालम्भाभ्यामर्थस्यावधारणम् । तदभावाप्रकारकं तत्प्रकारकं ज्ञानमित्यर्थः । यद्यप्येतावदेव निर्णयसामान्यलक्षणं तथापि विमृश्येत्यादिकं जल्पवितण्डास्थलीयनिर्णयमधिकृत्य । तदुक्तं भाष्ये शास्त्रे वादे च विमर्शवर्जमिति । एवम् प्रत्यक्षतः शब्दाच्च निर्णये न विमर्शपक्षप्रतिपक्षापेक्षेति ( गौ० वृ० १।१।४१ ) ( वात्स्या० १।१।४१ ) । अत्रायं विशेषो ज्ञेयः । निर्णयस्तत्त्वज्ञानम् प्रमाणानां फलम् ( वात्स्या० १।१।१ पृ० ६ ) ( त० भा० पृ० ४४ ) । निर्णयस्तत्त्वज्ञानम् प्रमाणानां फलम् । तच्च यदा वस्त्वन्तरपरिच्छेदहेतुत्वेन नोपादीयते तदा फलम् । यदा तेन परिच्छिनत्ति तदा प्रमाणम् इति न व्यवतिष्ठते प्रमाणफलभावः ( न्या० वा० १ पृ० १९ ) । स्थापना साधनम् । प्रतिषेध उपालम्भः । तौ साधनोपालम्भौ पक्षप्रतिपक्षाश्रयौ व्यतिषक्तावनुबन्धेन प्रवर्तमानौ पक्षप्रतिपक्षावित्युच्येते । तयोरन्यतरस्य निवृत्तिरेकतरस्यावस्थानमवश्यंभावि । यस्यावस्थानं तस्यावधारणं निर्णयः ( वात्स्या० १।१।४१ ) । [ ग ] यथार्थानुभवपर्याया प्रमितिर्निर्णयः ( सर्व० सं० पृ० २३९ अक्षपा० ) । २ अधिकरणाङ्गविशेषः इति मीमांसका आहुः । अत्रोच्यते । विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति पञ्चाङ्गं शास्त्रेधिकरणं स्मृतम् ॥ इति । ३ सिद्धान्तसिद्धविचार्यवाक्यतात्पर्यावधारणमिति सांख्या आहुः ( सांख्य० कौ० ) ।

**निर्देशः**—१ [ क ] शब्दप्रयोगः ( गौ० वृ० ५।२।८ ) । यथा वर्णक्रमनिर्देशवन्निरर्थकम् ( गौ० ५।२।८ ) इत्यादौ । [ ख ] उच्चारणम् । यथा अनुनासिक इति निर्देशात् इत्यादौ निर्दिश्यमानस्यादेशा भवन्ति ( सि० कौ० ) इत्यादौ च । [ ग ] यत्किंचिदर्थप्रतिपादकः शब्दः ।

यथा साध्यनिर्देशः प्रतिज्ञा ( गौ० १।१।३३ ) इत्यादौ । [ घ ] प्रतिपादकः शब्दः । यथा ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ( गीता अ० १७ श्लो० २३ ) इत्यादौ । २ निर्णयेन कथनम् । यथा अतुषत्पीठमासन्ने निरदिक्षच्च काञ्चनम् ( भट्टिः ) इत्यादौ । ३ उपदेशः । ४ शासनम् आज्ञा । ५ वेतनम् । यथा कालमेव प्रतीक्षेत निर्देशं भृतको यथा ( पुराणम् ) इत्यादौ ( वाच० ) ।

**निर्धनः**—भार्या दासश्च पुत्रश्च निर्धनाः सर्व एव ते । यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ( जै० सू० वृ० अ० ६ पा० १ सू० १३ ) ।

**निर्धर्मकत्वम्**—१ किंचिन्निष्ठप्रकारत्वानिरूपकत्वम् । यथा निर्विकल्पकज्ञानस्य निर्धर्मकत्वम् । २ मायावादिनस्तु स्वभिन्नधर्मशून्यत्वम् । यथा ब्रह्मणो निर्धर्मकत्वम् इति वदन्ति ( दि० १ ) ।

**निर्धारणम्**—[ क ] विशेषस्य स्वेतरसामान्यव्यावृत्तधर्मवत्त्वम् । यथा नराणां क्षत्रियः शूरतमः नरेषु वा इत्यत्र ( श० प्र० श्लो० ९३ टी० पृ० १२८ ) । [ ख ] जात्यादिविशेषणविशिष्टयद्धर्मावच्छिन्नस्य तादृशविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्वविशिष्टविधेयवत्तया प्रतिपादनम् । जात्यादयः जातिगुणक्रियासंज्ञाः । तथा च नराणां क्षत्रियः शूर इत्यादौ जातिः क्षत्रियत्वम् तच्च तद्विशेषणं च तेन विशिष्टो यद्धर्मावच्छिन्नः नरत्वरूपसामान्यधर्मावच्छिन्नः तस्य तादृशविशेषणम् क्षत्रियत्वम् तेन शून्यस्तद्धर्मावच्छिन्नः नरत्वावच्छिन्नः तस्माद्व्यावृत्तत्वम् अवृत्तित्वम् तेन विशिष्टम् सहितम् विधेयम् शौर्यम् तद्वत्तया प्रतिपादनम् इति । नरेभ्यो राक्षसाः शूरतमाः इत्यादौ राक्षसत्वादिविशेषणविशिष्टे तच्छून्यनरादिव्यावृत्तशूरतमत्वविवक्षायामपि न निरुक्तनिर्धारणम् । राक्षसत्वादिविशिष्टस्य नरत्वादिसामान्यधर्मानवच्छिन्नत्वात् । अतो नातिव्याप्तिः । नराणां क्षत्रियः शूरतम इत्यादौ क्षत्रियादिनिष्ठशूरतमत्वादौ नरादिसामान्यव्यावृत्तत्वबाधात् असंभवः । अतः शून्यत्वान्तं व्यावृत्त्यवधेस्तद्धर्मावच्छिन्नेत्यस्य विशेषणं दत्तम् । तादृशक्षत्रियत्वजातिरूपविशे-

षणशून्याद्ब्राह्मणादेश्च व्यावृत्तः क्षत्रियो भवति । नराणां क्षत्रियः शूरः नरेषु वा । अध्वगानां रथगामिनः शीघ्रतराः अध्वगेषु वा । गवां कृष्णा संपन्नक्षीरा गोषु वा इत्यादौ यतश्च निर्धारणम् ( पा० सू० २।३।४१ ) इत्यनेन षष्ठीसप्तम्यौ विधीयेते । सूत्रार्थश्च जात्यादिविशेषणविशिष्टयद्धर्मावच्छिन्नस्य तादृशविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्वविशिष्टविधेयवत्तया प्रतिपादनम् तद्धर्मावच्छिन्नार्थकपदात् षष्ठीसप्तम्यौ इति । एतदुक्तं भवति । जातिगुणक्रियासंज्ञाविशिष्टस्यैकदेशस्य यतः स्वघटितसमुदायात्स्वेतरसमुदायघटकव्यावृत्तधर्मकरणकं पृथक्करणं तद्वाचकात् षष्ठीसप्तम्यौ स्त इति । अत्र स्वेतरार्थस्य समुदायघटकार्थे अभेदेनान्वयः । उदाहरणानि तु नृणां नृषु वा ब्राह्मणः श्रेष्ठः । गवां गोषु वा कृष्णा बहुक्षीरा । गच्छतां गच्छत्सु वा धावञ्छीघ्रः । छात्राणां छात्रेषु वा मैत्रः पटुः । विस्तरस्तु शेखरादौ द्रष्टव्यः । प्रकृते च क्षत्रियत्वादिविशेषणविशिष्टे नरादौ तच्छून्यनरादिव्यावृत्तत्वेन शौर्यविशेषादिरूपविधेयसंबन्धोभिमतः इति नरादिपदात् षष्ठी ( ग० व्यु० का० ६ पृ० ११३ ) ।

**निर्मन्थ्यम्**—प्रोक्षणसाधनजलम् ( जै० सू० वृ० अ० १ पा०४ सू०१२)।

**निर्वर्त्यम्**—( कर्म ) [ क ] क्रियया यन्निष्पाद्यते तत् । यथा कटं घटं वा करोतीत्यादौ । अत्र कृञः फलावच्छिन्नव्यापाराबोधकतया गौणकर्मत्वम् । तच्च साध्यताख्यं कृतिविषयत्वम् ( का० व्या० पृ० ६ ) । निर्वर्त्यमेव च उत्पाद्यम् इति कैश्चिच्छास्त्रकारैर्व्यवह्रियत इति विज्ञेयम् । अथ निर्वर्त्यत्वस्य लक्षणमुच्यते । घटौदनादीनां या मृत्तण्डुलादिप्रकृतिः तादृशप्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति निष्पाद्यत्वम् ( वै० सा० द० सुब० पृ० १६३ ) । अथवा प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति क्रियाजन्योत्पत्तिरूपफलवत्त्वम् । यथा घटं करोतीत्यादौ घटादेः क्रियाजन्योत्पत्तिमत्त्वान्निर्वर्त्यत्वम् ( वाच० ) । तदुक्तं भर्तृहरिणा सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी । यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥ इति । यस्य विकृतिकर्मणः ।

नाश्रीयते न प्रयुज्यते । न विवक्ष्यते इति यावत् ( वै० सा० द० सुब० पृ० १६३ ) । [ ख ] प्रकृत्यविवक्षायां निष्पाद्यम् । यथा घटं करोतीत्यादौ सत्या अपि मृदादिप्रकृतेः परिणामित्वेनाविवक्षा ( वै० सा० द० सुब० पृ० १६३ ) । अत्रोक्तं भर्तृहरिणा यदसज्जायते सद्वा जन्मना यत्प्रकाशते । प्रकृतेस्तु विवक्षायां विकार्यं कैश्चिदन्यथा ॥ तन्निर्वर्त्यम् इति ( ग० व्यु० का० २ पृ० ६५ ) ( वै० सा० द० सुब० पृ० १६३ ) । अत्र विवेको ज्ञेयः । प्रकृतिकर्मासमभिव्याहारे निर्वर्त्यम् इत्युच्यते । यथा कटं घटं वा करोति भस्म करोति इत्यादौ निर्वर्त्यम् । प्रकृतिकर्मसमभिव्याहारे तु विकार्यम् इत्युच्यते । यथा काशान्कटं करोति मृदं घटं करोति काष्ठं भस्म करोति इत्यादौ विकार्यम् इति ( ग० व्यु० कार० २ पृ० ६५ ) ।

**निर्वाहः**—१ [ क ] कार्यसंपादनम् । यथा यावता स्यात्स्वनिर्वाहः स्वीकुर्यात्तावदेव तु ( नारदीयपु० ) इत्यादौ ( वाच० ) । [ ख ] निष्पादनम् । २ समाप्तिः ।

**निर्वाहकत्वम्**—( संगतिः ) १ [ क ] कथंचिदनुकूलत्वम् ( म० प्र० १ पृ० १५ ) । [ ख ] एककार्यनिर्वाहकत्वम् । एककार्यनिर्वाहकत्वं च कारण कारणतावच्छेदक एतदुभयसाधारणं प्रयोजकत्वम् । यथा व्याप्तिपक्षधर्मतयोरनुमित्यात्मकैककार्याजनकत्वेपि तज्जनकीभूतज्ञानविषयतावच्छेदकत्वेनैककार्यानुकूलत्वम् । तत्र सामान्यतोनुमितिलक्षणैककार्यानुकूलत्वज्ञाने किं तदनुकूलम् इति जिज्ञासायाम् अनन्तरं पक्षधर्मतानिरूपणमिति ( भवा० ) । [ ग ] एककार्यजनकत्वम् ( वै० सा० द० ) । कारणकारणतावच्छेदकसाधारणप्रयोजकत्वरूपमित्यर्थः । २ कार्यत्वम् । अत्र व्याख्यानम् । निर्वाहकत्वम् कारणतानिर्वाहकत्वम् । कार्यत्वमिति यावत् ( जग० ) । प्रयोज्यत्वं वा निर्वाहकत्वमिति केचिदाहुः ।

**निर्वाहकैक्यम्**—( संगतिः ) एकप्रयोजकप्रयोज्यत्वम् ( राम० २ पृ० १३४ ) । यथा प्रत्यक्षनिरूपणानन्तरं परामर्शानुमित्योर्निरूपणे निर्वाह-

कैक्यं संगतिः । यत्रैकेन कारणेन कार्यद्वयं तदधिकसंख्याकं वा कार्यमुत्पाद्यते तत्रेयं संगतिर्ज्ञेया । इदं तु निर्वाहकत्वमित्यप्युच्यते ( मणि० ) ।

**निर्विकल्पकम्**—( प्रत्यक्षम् ) [ क ] नामजात्यादियोजनारहितम् वैशिष्ट्यानवगाहि निष्प्रकारकं प्रत्यक्षम् ( चि० १ ) ( ता० र० ) । वैशिष्ट्यानवगाहीत्यस्य वैशिष्ट्यनिष्ठसांसर्गिकविषयताशून्यमित्यर्थः ( त० प्र० १ ) ( म० प्र० १ पृ० ९ ) । निष्प्रकारकमित्यस्यार्थश्च प्रकारताशून्यज्ञानम् ( न्या० बो० ) । [ ख ] विशेषणविशेष्यसंबन्धानवगाहि ज्ञानम् ( त० दी० ) ( मु० ) ( त० कौ० १ पृ० ८ ) ( प्र० प्र० ) । तथा च ज्ञानत्वघटितं विशेष्यताशून्यत्वम् विशेषणताशून्यत्वम् संसर्गताशून्यत्वं च लक्षणत्रयं पर्यवसितम् इति भावः ( नील० १ पृ० १७ ) ( वाक्य० १ पृ० १२ ) । तच्च वस्तुस्वरूपमात्रग्रहणम् । यदाहुः सांख्यवृद्धाः संमुग्धं वस्तुमात्रं तु प्राग्गृह्णात्यविकल्पितम् । तत्सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः ॥ इति ( सांख्य० कौ० श्लो० २७ टी० पृ० ३६ ) । यथा किंचिदिदम् इति ज्ञानम् ( त० सं० ) । यथा वा दूरात् किंचिदस्ति इति प्रत्यक्षम् ( प्र० प्र० ) । घटघटत्वे इत्याकारकं वा प्रत्यक्षम् ( त० कौ० १ पृ० ८ ) । तच्च ज्ञानमतीन्द्रियम् अनित्यम् निराकारं चेति ज्ञेयम् ( भा० प० श्लो० ५९ ) ( न्या० म० ) । अत्र बौद्धैः वैभाषिकैः अभिधीयते निर्विकल्पकज्ञानमेव प्रमाणम् । कल्पनापोढत्वात् । तद्भिन्नं सर्वमप्रमाणम् । कल्पनाज्ञानत्वात् इति ( सर्व० पृ० ४४ बौद्ध० ) । [ ग ] अलौकिक आलोचनात्मको ज्ञानविशेषः इति केचित् । तदुक्तं सांख्यवृद्धैः अस्ति ह्यालोचनज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं मुग्धवस्तुजम् ॥ ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया । बुद्ध्यावसीयते सा हि प्रत्यक्षत्वेन संमता ॥ इति ( सांख्य० कौ० श्लो० २७ पृ० ३६ ) । [ घ ] मायावादिनस्तु ज्ञातृज्ञेयादिविभागशून्यं ब्रह्मैकात्मविषयमखण्डाकारकं विशेष्यविशेषणसंबन्धरहितं ज्ञानम् इत्याहुः ( वाच० ) । मध्वमतानुयायिवेदान्तिनस्तु निर्विकल्पकं ज्ञानं नाङ्गीकुर्वन्ति ( प्र० प० पृ० ११ ) ।

अत्र नैयायिकाः। निर्विकल्पकज्ञानसत्त्वे प्रमाणमनुमानम्। तच्च विशिष्टज्ञानं जन्यविशेषणज्ञानपूर्वकम् जन्यविशिष्टज्ञानत्वात् दण्डी पुरुषः इति विशिष्टज्ञानवत् इति (न्या० दी० पृ० ३४)। निर्विकल्पकासत्त्वे सुप्तोत्थितस्य अयं घटः इति विशिष्टज्ञानं न स्यात्। विशेषणीभूतस्य घटत्वस्याज्ञानात्। विशेषणज्ञानं विना विशिष्टज्ञानानुदयेन विशेषणज्ञानस्य विशिष्टज्ञानहेतुत्वात्। तथा च विशेषणज्ञानमेव निर्विकल्पकम् इति तस्यावश्यकत्वमिति भावः (त० कौ० १ पृ० ८)। चक्षुःसंयोगाद्यनन्तरं घटः इत्याकारकं घटत्वादिविशिष्टज्ञानं न संभवति। पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात्। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्। तथा च प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानं जायते। तदेव निर्विकल्पकम् (मु० १ पृ० ११७-११८)। निर्विकल्पकं यद्यपि न प्रत्यक्षसिद्धं तथापि अयं घटः इति विशिष्टज्ञानरूपकार्यानुमेयम्। तथाहि। जन्यतद्विशिष्टज्ञानं प्रति जन्यतद्विशेषणज्ञानं कारणमिति निर्विवादम्। भवति च प्राथमिकमस्माकम् अयं घटः इति जन्यघटत्वविशिष्टज्ञानम्। अतस्तत्रापि घटत्वज्ञानं कारणम्। न च तदानीं घटत्वविशिष्टज्ञानमस्ति। विशेषणीभूतघटत्वस्याज्ञानात्। अतो वैशिष्ट्यानवगाह्येव तद्वाच्यम्। तदेव निर्विकल्पकम् इति (न्या० म० १ पृ० ३)। अत्रेदमवधेयम्। इन्द्रियजन्यज्ञानस्य कदा पुनर्ज्ञानं करणम् इति चेत् उच्यते। सविकल्पकज्ञानानन्तरं हानोपादानोपेक्षाबुद्धयो जायन्ते। तदा निर्विकल्पकं ज्ञानं करणम्। सविकल्पकमवान्तरव्यापारः। हानादिबुद्धयः फलम् इति (त० भा० पृ० ६)। ननु निर्विकल्पकज्ञानस्य प्रकारतादिशून्यत्वे तद्वति तत्प्रकारकत्वरूपं यथार्थत्वं कथम् इति चेत् उच्यते। तद्वन्निष्ठविशेष्यत्वानिरूपिता या या तत्तत्प्रकारता तत्तदनिरूपकत्वम् स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तत्तन्निरूपकत्वाभावकूटवत्त्वं वा याथार्थ्यं विवक्षणीयम्। अथवा निर्विकल्पकं भ्रमप्रमाबहिर्भूतमेव प्रवृत्त्यनङ्गत्वात् इति तत्र तद्वति तत्प्रकारकत्वाद्यभावेपि नाव्याप्तिशङ्का इति। अत्रेदमवधेयम्। ज्ञानमात्रस्य सविषयकत्वेन

निर्विकल्पकेपि विषयतापेक्षितेति प्रकारता विशेष्यता संसर्गता एतत्रयातिरिक्ता तुरीया विलक्षणविषयता स्वीक्रियते इति (नील० १ पृ० १७)।

**निलयनम्**—किंचित्कर्तृकदर्शनाभावप्रयोजकदेशविशेषस्थितिः । यथा मातुर्निलीयते कृष्ण इत्यादौ धात्वर्थो निलयनम् । धात्वर्थदर्शनकर्त्रापादानम् । तत्पूर्वकनिवृत्तिर्धातोरर्थः । तत्र मातुरपादानत्वेनान्वय इति भाष्यमतम् । दर्शने मातृकर्तृकत्वं प्रत्यासत्तिगम्यम् (ल० म० सुब० का० ५ पृ० १०९) । अत्र अन्तर्धौ येनादर्शनमिच्छति (पा० सू० १।४।२८) इत्यनेन मातुरपादानसंज्ञा । सूत्रार्थस्तु यत्कर्तृकदर्शनस्याभावमात्मनः माता मां न पश्यतु इति इच्छति (कृष्णः) तस्यापादानसंज्ञा इति ।

**निवर्तनम्**—विंशतिवंशपरिमिता भूमिः । वंशस्तु दशहस्तपरिमितः ।

**निवारणम्**—वारणम् ।

**निवासः**—यत्र देशे स्वयं वसति स देशः । अभिजनस्तु यत्र पूर्वैरुषितं स देश इति विशेषः (सि० कौ० तद्धि० पृ० १३८) ।

**निविष्टम्**—भृत्या प्राप्तम् ।

**निवृत्तिः**—१ [क] जिहासाप्रयुक्तस्य दुःखसाधनपरिवर्जनम् (वात्स्या० प्रस्तावना० १।१।१) । [ख] द्वेषजन्यो गुणः (सि० च० गु० पृ० ३५) । [ग] द्वेषजनितः प्रयत्नविशेषः (वै० उ० ३।१।१९) । लक्षणं च निवृत्तित्वमेव । तच्च द्वेषजन्यतावच्छेदकतया सिद्धो जातिविशेषः (दि० गु०) । अत्रेदं बोध्यम् । निवृत्तिं प्रति फलगतद्वेषो द्विष्टसाधनताज्ञानं च कारणम् (भा० प० श्लो० १५३) इत्यन्वयव्यतिरेकाभ्यामवधार्यते (मु० गु० पृ० २३१) । अत्रायं विवेकः । दुःखसाधनविषयकनिवृत्तिं प्रति द्विष्टसाधनताज्ञानं कारणम् । दुःखनिवृत्तिं प्रति तु दुःखद्वेष एव कारणम् इति । [घ] उत्कटद्वेषजन्यो यत्नविशेषः (वै० वि० ३।२।१९) । [ङ] द्विष्टसाधनताज्ञानजन्यो

यत्नः (त० कौ० गु० पृ० १९)। यथा अपरोक्षीकृतश्रीशो विषयेभ्यो निवर्तते इत्यादौ। निवृत्तिश्च प्रवृत्त्यभाव एवेति नव्या आहुः (त० प्र० उ० ४ पृ० ७३)(प० मा०)। सुषुप्त्यवस्थायां अयमितो निवृत्तः इत्यादिव्यवहारेण निवृत्त्याख्यप्रयत्नसिद्धिर्दुर्वारेत्यन्ये प्राचीननैयायिकाः आहुः (प० मा०)। २ सांख्यास्तु संयोगाभाव एव निवृत्तिः। यथा औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः (सांख्यका० ५८) इत्यादौ इत्याहुः। अत्रायं नियमोनुसंधेयः इच्छा विषयसिद्धौ इष्टप्राप्तौ निवर्तते इति (सांख्य० कौ० श्लो० ५८)। ३ कलञ्जाधिकरणे मीमांसकास्तु प्रवृत्त्युपाधिना विनाशं प्राप्स्यन् प्रागभाव एव प्रवृत्तिनिराकरणस्य साध्यमानो निवृत्तिरित्युच्यत इत्याहुः (वाच०)। ४ अभावः। यथा व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वात् (म० प्र० २ पृ० ३०) इत्यादौ। यथा वा निवृत्तपदार्थक इत्यादौ (नञ्सूत्रभाष्य०) (वै० भू०)। यथा वा विपक्षः साध्यधर्मनिवृत्तिमान् (ता० र० श्लो० २१) इत्यादौ निवृत्तिशब्दस्यार्थः।

**निवेशनम्**—पलालकूटाद्यर्थं विभक्तो भूप्रदेशः (मिताक्षरा व्य० श्लो० १५४)।

**निशा**—१ रात्रिः। यथा न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि (मनु०) निशातुषारैर्नयनाम्बुकल्पैः (भट्टिः) इत्यादौ। २ मेषादयो राशयः इति ज्योतिषज्ञा आहुः। ३ हरिद्रेति भिषज आहुः (वाच०)।

**निश्चयः**—(बुद्धिः) १ तदभावाप्रकारकत्वे सति तत्प्रकारकं ज्ञानम् (त० प्र० २) (भा० प० श्लो० १३०) (मु० गु० पृ० २०९)। तद्वद्विशेष्यकत्वावच्छिन्नतदभावप्रकारताशून्यतद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञानमित्यर्थः। तेन न महानसोयं वह्निमान् नवा पर्वतो वह्निमान् इत्यस्य समूहालम्बनज्ञानस्य पर्वते वह्निनिश्चयत्वाप्राप्तिः (दि० गु० पृ० २०९)। तदभावप्रकारत्वानिरूपिततत्प्रकारतानिरूपितविशेष्यताशालिज्ञानम् इत्यर्थो वा (त० व०)। यथा भूतलं घटवत् इति निश्चयः। अत्र च संशयभिन्नं ज्ञानं निश्चयः इति सर्वेषां सिद्धान्तः। निश्चयत्वं न जातिः। प्रत्यक्षत्वादिना सांकर्यात्। किं तु विषयिताविशेष एव।

२ कचित् विशेषणविशेष्यतावच्छेदकभावानापन्नविरोधिकोटिद्वयप्रकारकैकधर्मिविशेष्यकज्ञानान्यज्ञानम् । यथा द्वितीययत्तुकारमते पक्षतावच्छेदकविशिष्टे निरुक्तसाध्यहेतुवैशिष्ट्यावगाहिनिश्चयावृत्तिविषयितैव विरोधिविषयितापदार्थः इति निर्वचने ह्रदो वह्निमान् धूमात् इत्यादौ ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्च इति निश्चयः । अत्र कोटिद्वये विशेषणविशेष्यतावच्छेदकभावानापन्नत्वनिवेशात् निर्वह्निः पर्वतो वह्निमान् इत्यादौ निर्वह्निः पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्च इति निश्चयस्य नासंग्रहः ( ग० २ हेत्वा० सामा० पृ० २७ ) । ३ कचित्तु आधेयताविशेषणतापन्नस्याधिकरणस्य या संशयत्वनिरूपकविशेष्यतान्यविशेष्यता तन्निरूपितप्रकारताशालि ज्ञानम् । अत्रेदमवधेयम् । संशये च प्रत्येककोटिनिश्चयीयविशेष्यताभ्यामतिरिक्तैव विशेष्यता वर्तते इति ( ग० साधा० ) । तन्निरूपितप्रकारताशालि तादृशज्ञानं च साध्याभावांशे निश्चयः इत्युच्यते । ४ बुद्धेरसाधारणवृत्तिविशेषः इति मायावादिनो मन्यन्ते ( वेदा० प० ) । ५ अध्यवसायः इति सांख्याः ( सांख्य० भा० २।१३ ) । ६ अर्थालंकारविशेषः इत्यालंकारिका आहुः ( वाच० ) ।

**निषिद्धम्**—निषेधविषयीभूतम् । तच्च अनिष्टसाधनताबोधकलिङाद्यनुषक्तनञ्पदयोगिवाक्यगम्यम् । यथा न कलञ्जं भक्षयेत् इत्यत्र कलञ्जभक्षणं निषिद्धम् । यथा वा न सुरां पिबेत् ( श्रुतिः ) इत्यादौ सुरापानं निषिद्धम् । अत्र निषिद्धत्वं चाधर्मापादकत्वम् । अन्ये तु भ्रमावगतेष्टसाधनतानिषेधिनञ्पदयोगिवाक्यगम्यम् इत्यप्याहुः ( वाच० ) ।

**निषेधः**—१ ( वाक्यम् ) [ क ] अनिष्टसाधनताबोधको वाक्यविशेषः । स च द्विविधः । लौकिकः वैदिकश्च । तत्र लौकिकम् विषं मा भुङ्क्ष्व इति वाक्यम् । वैदिकं तु न कलञ्जं भक्षयेत् न सुरां पिबेत् अष्टम्यां मांसं नाश्नीयात् इत्यादिवाक्यम् । अत्र मांसभोजने अनिष्टसाधनत्वं बोधयति इति बोध्यम् ( वाच० ) । [ ख ] निवृत्तिपरं वाक्यम् । यथा न कलञ्जं भक्षयेत् इति । अत्र कलञ्जभक्षणं नेष्टविशेषसाधनम् इति वाक्यार्थः । इष्टविशेषश्चात्र पापानुत्पत्तिरेव । तथैव वाक्यतात्पर्यात्

इति विज्ञेयम् (त० कौ० ४ पृ० १७) । मीमांसकास्तु पुरुषस्य निवर्तकं वाक्यं निषेधः । यथा न कलञ्जं भक्षयेत् इत्यादिवाक्यम् इत्याहुः । तथाहि निषेधस्तु निवर्तनां प्रतिपादयन् स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणादेः परानिष्टसाधनत्वमाक्षिपन् पुरुषं ततो निवर्तयति इति (लौ० भा० पृ० ४६) । अत्र प्रत्ययगतो य आख्यातांशस्तद्वाच्यायाः प्रवृत्तिरूपार्थभावनायाः नञर्थेऽन्वयः । अत्राहुः । नञश्चैवं स्वभावः स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वम् इति । यथा घटो नास्तीत्यादौ अस्तीतिशब्दसमभिव्याहृतो नञ् घटसत्त्वविरोधि घटासत्त्वं गमयति । तदिह लिङ्समभिव्याहृतो नञ् लिङर्थप्रवर्तनाविरोधिनीं निवर्तनामेव बोधयति इति (लौ० भा० पृ० ४८–५१) । अत्रायं विशेषो ज्ञेयः । यदा तु प्रत्ययार्थस्य तत्र नञर्थे अन्वये बाधकं तदा धात्वर्थस्यैव तत्र नञर्थे अन्वयः । तच्च बाधकं द्विविधम् । तस्य व्रतम् इत्युपक्रमः विकल्पप्रसक्तिश्च । तत्राद्यम् नेक्षेतोद्यन्तमादित्यम् इत्यादौ । तथा च स्नातकव्रतस्य कर्तव्यार्थत्वेनोपक्रमात् तदनुरोधेनात्रत्यनञा धात्वर्थविरोध्यनीक्षणसंकल्प एव लक्षणया प्रतिपाद्यत इति पर्युदासाश्रयणम् । एवं च आदित्यविषयकानीक्षणसंकल्पेन भावयेत् इति वाक्यार्थः । द्वितीयं बाधकं विकल्पप्रसक्तिः । यजतिषु ये यजामहं करोति नानुयाजेषु इत्यादौ । अत्र विकल्पप्रसक्तौ च नञोनुयाजसंबन्धमाश्रित्य पर्युदासस्यैवाश्रयणम् न प्रतिषेधस्याश्रयणम् । इत्थं च अनुयाजव्यतिरिक्तेषु यजतिषु ये यजामहे इति शब्दं कुर्यात् इति वाक्यार्थबोधः । नञोनुयाजव्यतिरिक्ते लाक्षणिकत्वात् । एवं च न विकल्पः इति (लौ० भा० पृ० ४८–५१) । २ अभावः । यथा त्रैकालिकनिषेधप्रतियोगित्वम् इत्यादौ । ३ निवृत्तिः । तदुक्तं भट्टैः निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते इति (वाच०) ।

**निषेधविधिः**—(विधिः) अभाव इष्टसाधनताबोधकं वाक्यम् । यथा एकादश्यां न भुञ्जीत इत्यादिवाक्यं निषेधविधिः (वाच०) । अत्र भोजनाभाव एवेष्टसाधनत्वं बोधयति । न तु भोजने विध्यर्थेष्टसाधनत्वा-

भावम् । अतः निषेधवाक्यादस्य भेदः ( ग० ) । एकादश्यां न भुञ्जीत इति वाक्यस्यापि निषेधत्वे कालमात्रापेक्षतया तत्कालमात्रेण निवृत्तिः स्यात् इति । एवम् नेक्षेतोद्यन्तमादित्यम् इत्यादावपि निषेधविधित्वमाहुः ( वाच० ) । अत एव एकादशीभोजनाभावस्याभोजनसंकल्परूपस्य व्रतत्वम् तिथिखण्डविशेषनियमनं च संगच्छते । निषेधविधिरित्यस्यार्थश्च निषेधे अभावे विधिः इष्टसाधनताधीहेतुः इति ( वाच० ) ।

**निषेधशेषः**—निन्दार्थवादः ( लौ० भा० पृ० ५४ ) ।

**निष्कर्षः**—१ निश्चयः । यथा निष्कृष्टार्थः इत्यादौ । २ स्वरूपम् । यथा स उपाधिर्भवेत्तस्य निष्कर्षोयं प्रदर्श्यते ( भा० प० श्लो० १३९ ) इत्यादौ । ३ सारांशः ( मेधा० कुल्लू० ) । यथा एतद्विदन्तो विद्वांसस्त्रयीनिष्कर्षमन्वहम् ( मनु० अ० ४ श्लो० १२५ ) इत्यादौ । ४ इयत्तादिना स्वरूपपरिच्छेदः ( वाच० ) ।

**निष्कासः**—आमिक्षाया लेपः । यथा वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति ( जै० न्या० अ० ७ पा० ३ अधि० ४ ) ।

**निष्कासिनी**—( दासी ) स्वाम्यनवरुद्धा दासी ( मिताक्षरा २।२९ ) ।

**निष्कुटः**—गृहारामः ( पु० चि० पृ० २४२ ) ।

**निष्क्रमणम्**—१ स्पर्शवद्द्रव्यसंचारः ( वै० उ० ) । यथा सांख्यमते निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ( वै० २।१।२० ) इत्यादौ । २ आ प्रसवाच्चतुर्थे मासि शिशोः कर्तव्यः प्रथमनिष्क्रमनिमित्तः संस्कारविशेषो निष्क्रमणम् इति धर्मज्ञा मौहूर्तिकाश्च वदन्ति ।

**निष्ठा**—१ [क] वृत्तिः (विद्यमानत्वम्) (मु० २ व्याप्ति० पृ० १४०)। यथा अथवा हेतुमन्निष्ठविरहाप्रतियोगिना । साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ( भा० प० श्लो० ७० ) इत्यादौ । [ख] आधेयत्वम् । २ क्तक्तवतू प्रत्ययौ निष्ठा इति शाब्दिका आहुः । ३ वेदान्तिनस्तु स्वरूपेण स्थितिः ( गीताभाष्य० ) । यथा लोकेस्मिन्द्विविधा निष्ठा

पुरा प्रोक्ता मयानघ । ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ (गीता० ३।३) इत्यादौ । अत्र निष्ठाशब्दार्थः ४ श्रद्धा इति केचिदाहुः । ५ ज्ञानम् । यथा ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ (ब्र० सू० १।१।७) इत्यादौ । ६ पौराणिकास्तु अवधारणम् । यथा घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं मन एव च । न निष्ठामधिगच्छन्ति बुद्धिस्तामधिगच्छति ॥ (भा० आश्व० ६६५) इत्यादौ इत्याहुः । ७ समाप्तिः निष्पत्तिः संस्कारसंपत्तिर्वा (मेधा० कुल्लू० नन्दन०) । यथा मनुनारदावाहतुः पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥ (मनु० अ० ८ श्लो० २२७) (निर्ण० सि० ३ पृ० ३७) इत्यादौ इति धर्मज्ञा आहुः । ८ नाशः । ९ अन्तः । १० सीमा । ११ निर्वहणम् । १२ याच्ञा (वाच०) ।

**निसर्गः**—परोपदेशनिरपेक्षमात्मस्वरूपम् (सर्व० सं० पृ० ६३ आर्ह०) ।

**नीलः**—(वृषः) लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥ (पु० चि० पृ० ३०६) ।

**नीलज्येष्ठा**—तत्राष्टम्यां यदा वारो भानोर्ज्येष्ठर्क्षमेव च । नीलज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिका ॥ (पु० चि० पृ० १३३) ।

**नृत्यम्**—[क] नाट्यशास्त्रानुसारेण हस्तपादादीनामुत्क्षेपणादिकमङ्गप्रत्यङ्गोपाङ्गसहितं हावभावसमेतं च (सर्व० पृ० १६९ नकु०) । यथा शिवो नृत्यति संध्यायामुत्साहेन गणैः सह इत्यादौ नृत्यत्यर्थः । [ख] तालमानयुक्तं सविलासाङ्गविक्षेपरूपं नर्तनम् (वाच०) । यथा गोपाङ्गनानृत्यमनन्दयत्तम् (भट्टि०) इत्यादौ । तल्लक्षणादि यथा देवरुच्या प्रतीतो यस्तालमानरसाश्रयः । सविलासोङ्गविक्षेपो नृत्यमित्युच्यते बुधैः ॥ ताण्डवं च तथा लास्यं द्विविधं नृत्यमुच्यते । अङ्गविक्षेपबाहुल्यं तथाभिनयशून्यता ॥ ताण्डवं बहुरूपं तद्दारुणागलमुद्धतम् । छुरितं यौवतं चेति लास्यं द्विविधमुच्यते ॥ यत्राभिनयाद्यैर्भावै रसैराश्लेषचुम्बनैः । नायिकानायकौ रङ्गे नृत्यतश्छुरितं हि तत् ॥ मधुरं बद्धलीलाभिर्नटीभि-

र्यत्र नृत्यते । वशीकरणविद्याभं तल्लास्यं यौवतं मतम् ॥ गेयादुत्तिष्ठते वाद्यं वाद्यादुत्तिष्ठते लयः । लयतालसमारब्धं ततो नृत्यं प्रवर्तते ॥ इति ( संगीतदामो० ) ।

**नृपः**—यश्चैत्रशुक्लप्रतिपद्दिनवारो नृपो हि सः (पु० चि० पृ० ५६) ।

**नेजकः**—वस्त्रस्य धावकः ( मिताक्षरा २।२३८ ) ।

**नैगमः**—ये वेदस्याप्तप्रणीतत्वेन प्रामाण्यमिच्छन्ति पाशुपतादयस्ते ( मिताक्षरा २।१९२ ) ।

**नैमित्तिकत्वम्**—१ निमित्तजन्यत्वम् । यथा द्वयोर्नैमित्तिको द्रवः ( भा० प० श्लो० २८ ) इत्यादौ सुवर्णलाक्षादीनां द्रवत्वस्य तेजःसंयोगरूपनिमित्तजन्यत्वम् ( मु० १ ) । २ धर्मज्ञास्तु अनियतनिमित्तकत्वम् । यथा पुत्रजन्माश्रित्य विहितस्य जातेष्ट्यादेः ग्रहणादिनिमित्तमाश्रित्य विहितस्य स्नानादेश्च नैमित्तिकत्वम् इत्याहुः । ३ स्मार्तास्तु निमित्तनिश्चयवदधिकारिकर्तव्यत्वम् । यथा यत्तु पापोपशान्त्यै च दीयते विदुषां करे । नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ॥ ( गरुडपु० ) इत्यादौ इत्याहुः ( वाच० ) ।

**नैमित्तिकी**—संज्ञा—( रूढनाम ) । यन्नाम जात्यवच्छिन्नसंकेतवत् सा नैमित्तिकी संज्ञा । यथा गोचैत्रादिः । सा हि गौर्गच्छतीत्यादौ गोत्वचैत्रत्वादिजात्यवच्छिन्नमेव गवादिकमभिधत्ते न तु गोपदं गोत्वे संकेतितम् इत्याकारकग्रहात् गोत्वादिजातिमात्रम् । गामानयेत्यादौ गोत्वादिना गवादेरन्वयानुपपत्तेः । एकशक्तत्वग्रहस्यान्यानुभावकत्वेतिप्रसङ्गात् इति ( श० प्र० श्लो० १८ पृ० १७ ) । ये तु जात्यवच्छिन्नसंकेतवतामपि चैत्रादिपदानां पारिभाषिकत्वमाहुः ते जात्यवच्छिन्नशक्तिमन्नाम नैमित्तिकम् यथा गोगवयादि इत्याहुः ( श० प्र० श्लो० २२ पृ० २६ ) ।

**नैयायिकः**—षोडशपदार्थानुसारिन्यायज्ञः । यथा नैयायिकानां तु नये द्व्यणुकादावपीष्यते ( भा० प० श्लो० १०७ ) इत्यादौ गौतमर्ष्यादि-

नैयायिकः । परममहर्षिर्गौतमश्च पञ्चाध्यायात्मकं न्यायदर्शनं नाम सूत्रोपबद्धं प्रणिनाय । नैयायिकशब्दव्युत्पत्तिः न्यायं वेत्त्यधीते वा इति नैयायिकः ( उक्थादि० ठक् ) । न्यायदर्शनं च प्रमाणप्रमेयसंशय-प्रयोजन० ( गौ० सू० १।१।१ ) इत्याद्यारभ्य हेत्वाभासाश्च यथोक्ताः ( गौ० सू० ५।२।२५ ) इत्येतत्पर्यन्तं सूत्रसमूहात्मकम् ।

**नैर्ऋती**—१ ( दिक् ) [ क ] सुमेरुव्यवहितोदयगिरिव्यवहिता च दिक् ( वै० वि० २।२।१० ) । [ ख ] दक्षिणपश्चिमदिक् ( वै० उ० २।२।१० ) । यथा नैर्ऋतीं दिशमाश्रयेत् ( आ० त० ) इत्यादौ ( वाच० ) । यथा वा अक्कलकोटग्रामान्नैर्ऋत्यां झळकीग्रामो द्वादशसु क्रोशेषु । २ मूलनक्षत्रम् इति मौहूर्तिका आहुः । नैर्ऋत्या दिशः अधिष्ठाता निर्ऋतः इति विज्ञेयम् ( वै० उ० २।२।१० ) ।

**नैवेद्यम्**—निवेदनीयं द्रव्यं तु नैवेद्यमिति कथ्यते ( स्मृतिः ) । तच्च पञ्च-विधम् भक्ष्यं भोज्यं च लेह्यं च पेयं चोष्यं च पञ्चमम् । सर्वत्र चैत-न्नैवेद्यमाराध्यस्य निवेदयेत् ॥ इति ( कालि० पु० ) ( वाच० ) ।

**नोदनम्**—१ [ क ] स संयोगविशेषः येन संयोगेन जनितं कर्म संयोगिनोः परस्परं विभागहेतुर्न भवति यः संयोगः शब्दनिमित्तकारणं न भवति वा सः ( वै० उ० ५।२।१ ) । [ ख ] क्रियादिकारणीभूतः संयोगः ( सि० च० ) । [ ग ] चलस्य वेगवद्द्रव्यसंयोगविशेषः इति मायावादिन आहुः । एतन्मते अभिघातस्तु स्थिरस्य वेगवद्द्रव्यसंयोग-विशेष एव । २ खण्डनम् । ३ प्रेरणम् । विधिरूपा चोदना ।

**नोदना**—क्रियां प्रति प्रवर्तकं वचः ( षड्दर्शनसमुच्चये पृ० ६७ प० १५ ) ।

**न्यायः**—१ [ क ] प्रमाणैरर्थपरीक्षणम् । किमुक्तं भवति । समस्तप्रमाण-व्यापारादर्थाधिगतिर्न्यायः इति ( न्या० वा० १ पृ० १४ ) । अत्र व्युत्पत्तिः । नीयते प्राप्यते विवक्षितार्थसिद्धिरनेन इति न्यायः इति । [ ख ] प्रत्यक्षागमाश्रितमनुमानम् ( वात्स्या० १।१।१ ) । प्रत्यक्षा-गमाश्रितमिति प्रत्यक्षागमाविरोधि । यदि ह्यनुमानाधिगतोर्थः प्रत्यक्षा-

गमाभ्यामनुसंधीयते अथ स्फुटतरप्रत्ययो भवति ( न्या० वा० १ पृ० १४ ) । [ ग ] परार्थानुमानम् ( सर्व० पृ० २६४ अक्ष० ) । इदं च शब्दात्मकमेवेति यद्यपि अग्रे अनुपदमेव वक्ष्यमाणे ( पृ० ४४७ प० २३ ) न्याये अन्तर्भवति तथाप्यस्यानुमानत्वेनोक्तत्वात्पार्थक्येनानुमानप्रकरणे एतत्स्थापितम् इति ज्ञेयम् । २ आन्वीक्षिकी विद्या न्यायशास्त्रम् ( वात्स्या० १।१।१ ) ( गौ० वृ० १।१।१ ) । सेयमान्वीक्षिकी न्यायतर्कादिशब्दैरपि व्यवह्रियते । तथा च न्यायो मीमांसा धर्मशास्त्राणि इति श्रुतिः ॥ पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इत्यादिस्मृतिः ( याज्ञव० अ० १ श्लो० ३ ) । मीमांसा न्यायतर्कश्च उपाङ्गः परिकीर्तितः इति पुराणम् । त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् । आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः ॥ इति ( मनु० अ० ७ श्लो० ४३ ) । तथा आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ इत्यादि ( मनु० अ० १२ श्लो० १०६ ) । मोक्षधर्मे तत्रोपनिषदं तात परिशेषं तु पार्थिव । मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पराम् ॥ इति । उपनिषदर्थश्चान्वीक्षिक्यनुसारी ग्राह्यः इत्युक्तमिति ( गौ० वृ० १।१।१ ) । अत्रोक्तं पक्षिलस्वामिना वात्स्यायनेन इमास्तु चतस्रो विद्याः पृथक्प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते यासां चतुर्थीयमान्वीक्षिकी न्यायविद्या इति । सेयमान्वीक्षिकी न्यायविद्या प्रमाणादिभिः पदार्थैर्विभज्यमाना प्रदीपवत् सर्वविद्यानां भवति प्रकाशकत्वात् । प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् । आश्रयः सर्वधर्माणां विद्योद्देशे परीक्षिता ॥ इति ( वात्स्या० १।१।१ ) । ३ [ क ] साधनीयस्यार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते स पञ्चावयवोपेतवाक्यात्मको न्यायः । पञ्चावयवाः प्रतिज्ञादयः समूहमपेक्ष्यावयवा उच्यन्ते । तेषु प्रमाणसमवाय आगमः प्रतिज्ञा । हेतुरनुमानम् । उदाहरणं प्रत्यक्षम् । उपनयनमुपमानम् । सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनम् । सोयं परमो न्यायः इति । अत्रायं

नियमः संशयितेर्थे न्यायः प्रवर्तते इति (वात्स्या० १।१।१)। नानुपलब्धे न निर्णीतेर्थे न्यायः प्रवर्तते अपि तु संदिग्धे इति (त० भा० पृ० १०)। अत्र गदाधर आह जल्पस्थले संशयस्यावश्यकत्वेपि वादस्थले न तथा इति संशयमन्तरेणापि अनुमित्साधीनानुमितिनिर्वाहाय न्यायप्रयोगसंभवात् इति (ग० २ अवयव० पृ० २२)। तथा च संदिग्धेर्थे न्यायः प्रवर्तते इति नियमस्तु जल्पे एव न तु वादे इति भावः। [ख] समस्तरूपोपेतलिङ्गबोधकवाक्यजातं न्यायः (कु० १ टी० हरिदासः)। वाक्यजातं च प्रतिज्ञादिपञ्चकम्। समस्तरूपाणि च पक्षसत्त्वम् सपक्षसत्त्वम् विपक्षासत्त्वम् अबाधितविषयत्वम् असत्प्रतिपक्षितत्वं चेति पञ्च (म० प्र० २ पृ० ३१)। [ग] अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यम् (चि० २ अव० पृ० ७६)। [घ] क्रमिकप्रतिज्ञादिसमुदायः। यथा पर्वतपक्षकवह्निसाध्यकधूमहेतुकस्थले पर्वतो वह्निमान् इत्यादिप्रतिज्ञादिघटितवाक्यपञ्चकं न्यायः। प्रतिज्ञादीनि पञ्च वाक्यानि तु प्रतिज्ञा हेतुः उदाहरणम् उपनयः निगमनम् इति। यथा (१) पर्वतो वह्निमान् (२) धूमात् (३) यो यो धूमवान् स स वह्निमान् (४) वह्निव्याप्यधूमवानयम् (५) तस्माद्वह्निमान् इति (न्या० म० २ पृ० २३)। अत्र उदाहरणान्त एव प्रयोगः इति न वाच्यम्। तृतीयलिङ्गपरामर्शस्य व्याप्तपक्षधर्मतावगाहिनोवयवान्तरादलाभात्। तदनभ्युपगमेपि पक्षधर्मताया अलाभात् इति। मीमांसकानामुदाहरणान्तः प्रतिज्ञा हेतु उदाहरण एतत्त्रयात्मकः न्यायः। बौद्धानामुदाहरणोपनयद्वयावयवको न्यायः। अतिप्राचीननैयायिकानां दशावयवको न्यायः। दशावयवाश्च प्रतिज्ञादिपञ्चकम् संशयः जिज्ञासा शक्यप्राप्तिः प्रयोजनम् संशयव्युदासश्चेति। अथ प्रतिज्ञादीनां पञ्चानामवयवानां क्रमोभिधीयते। कथायामाकाङ्क्षाक्रमेणाभिधानमिति प्रथमं साध्याभिधानं विना कुतः इत्याकारकहेत्वाद्याकाङ्क्षाया अभावात् प्राथम्येन प्रतिज्ञाप्रयोगः। तथाहि विप्रतिपत्त्यग्रे समयबन्धानन्तरं शब्दानित्यत्वं साधय इति मध्यस्थस्य वादिनो वा आकाङ्क्षायां शब्दानित्यत्वं साध्यम्। न च साध्यनिर्देशं विना

हेतुवाक्यं निष्प्रतियोगिकमन्वयं बोधयितुमीष्टे । तस्मात् साध्यनिर्देशानन्तरं कुतः इत्याकाङ्क्षायां साधनताव्यञ्जकविभक्तिमल्लिङ्गवचनमेवोचितम् इति प्रतिज्ञानन्तरं हेतूपन्यासः । हेतावुक्ते कथमस्य गमकत्वम् इत्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोः प्रदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् तत्प्रदर्शनायोदाहरणम् । उदाहरणानन्तरं भवतु व्याप्तिः । तथापि व्याप्तं किं पक्षे वर्तते न वा इत्याकाङ्क्षायां व्याप्तस्य पक्षधर्मत्वप्रदर्शनायोपनयः । उपनयानन्तरं निगमनम् । न च व्याप्तिपक्षधर्मतायाश्चतुर्भिरेवावयवैः पर्याप्तिः किं तेन इति वाच्यम् । अबाधितासत्प्रतिपक्षत्वयोरलाभे चतुर्णामप्यपर्यवसानात् इति ( वि० २ अव० पृ० ७७–८२ ) । अथवा पर्वतो वह्निमान् इति प्रतिज्ञाते कुतः इत्याकाङ्क्षायां धूमात् इति प्रयोगः । ततः कथमस्य गमकत्वम् इत्याकाङ्क्षायां व्याप्तिपक्षधर्मताभ्याम् । तत्र कासौ व्याप्तिः इत्याकाङ्क्षायां यो यो धूमवान् स स वह्निमान् यथा महानसम् इति प्रयोगः । ततः व्याप्तस्य पक्षधर्मत्वमस्ति न वा इत्याकाङ्क्षायां वह्निव्याप्यधूमवांश्चायम् इति तथा चायम् इति वा प्रयोगः । ततः व्याप्तिपक्षधर्मतावानप्ययं हेतुर्बाधित एव सत्प्रतिपक्ष एव वा स्यात् इत्याकाङ्क्षायामबाधितत्वासत्प्रतिपक्षत्वबोधनाय तस्माद्वह्निमान् इति तस्मात्तथा इति वा निगमनप्रयोगः । न चानेनाप्यबाधितत्वादिबोधः कथं जन्यत इति वाच्यम् । साध्यपुनर्वचनस्यानुवादतया प्रयोजनजिज्ञासायां परिशेषाद्बाधादिविधूननमेव तत् इत्यवसीयते । तथैव व्युत्पत्तेः । तदाहुः उपसंहारस्यायं महिमा यद्विपरीतशङ्काविलोपनं नाम इति । अत्रेदं बोध्यम् । दृष्टान्तप्रयोगस्तु सामयिकः न नियतः इति ( म० प्र० २ पृ० ३१–३२ ) । ४ प्रमाणानामनुग्राहकस्तर्कः ( भा० ) । तदनुगृहीतप्रमाणगम्यो भगवान् विष्णुरपि न्यायशब्देन लक्षितलक्षणया प्रतिपाद्यते ( आनन्दगिरिः ) । यथा न्यायप्रसूनाञ्जलिः न्यायकुसुमाञ्जलिः इत्यादौ ( वाच० ) । ५ वेदार्थनिर्णयसाधनमधिकरणात्मकः पदार्थः । स च न्यायः पूर्वोत्तरवेदसंबन्धो जैमिनिवेदव्यासाभ्यां बहुप्रकारो दर्शितः । ६ लोकशास्त्रप्रसिद्धदृष्टान्तविशेषः । तत्र लोकप्रसिद्धो यथा अर्के चेन्मधु विन्देत किमर्थं

पर्वतं व्रजेत् । इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ॥ ( सांख्य० कौ० श्लो० १ टी० ) इति । कदम्बमुकुलन्यायः सूचीकटाहन्यायः इत्यादिश्च । शास्त्रप्रसिद्धस्तु यथा सविशेषणे हि वर्तमानौ विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति न्यायः अध्यारोपन्यायः मानाधीना मेयसिद्धिः इतिन्यायः इत्यादि ।

**न्यायशास्त्रम्**—असाधारण्येन व्यपदेशा भवन्ति इति न्यायेन न्यायस्य परार्थानुमानापरपर्यायस्य सकलविद्यानुग्राहकतया सर्वकर्मानुष्ठानसाधनतया प्रधानत्वेन गौतममुनिप्रणीतशास्त्रस्य न्यायशास्त्रम् इति व्यपदेशो युज्यते । तथा अभाणि सर्वज्ञेन सोयं परमो न्यायः । विप्रतिपन्नपुरुषं प्रति प्रतिपादकत्वात् तथा प्रवृत्तिहेतुत्वाच्च इति ( सर्व० पृ० २४४ अक्ष० ) । यथा गौतममुनिप्रणीतं प्रमाणप्रमेयसंशयप्रयोजन( गौ० १।१।१ ) इत्याद्यारभ्य हेत्वाभासाश्च यथोक्ताः ( गौ० ५।२।२५ ) इत्येतत्पर्यन्तं पञ्चाध्यायात्मकं सूत्रोपनिबद्धं न्यायदर्शनम् । तदुक्तम् कणादेन च संप्रोक्तं शास्त्रं वैशेषिकं महत् । गौतमेन तथा न्यायं सांख्यं च कपिलेन वै ॥ इत्यादि ( पद्मपुराणे उत्तरखण्डे अ० २०७ ) । अस्य शास्त्रस्य प्रवृत्तिश्च त्रिविधा उद्देशः लक्षणम् परीक्षा चेति ( वात्स्या० १।१।२ ) ( त० भा० पृ० १ ) । अधिकं तु न्यायशब्दव्याख्यानावसरे संपादितम् । एतच्छास्त्रस्य प्रयोजनं च निःश्रेयसप्राप्तिः । यदाह भाष्यकारः आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगमः । तच्चैतदुत्तरसूत्रेणानूद्यत इति । हेयं तस्य निर्वर्तकं हानमात्यन्तिकम् तस्योपायोधिगन्तव्य इत्येतानि चत्वार्यर्थपदानि सम्यग्बुध्वा निःश्रेयसमधिगच्छति ( वात्स्या० १।१।१ पृ० २ )।

**न्यायसिद्धान्तः**—न्यायो गौतमप्रणीतसूत्रसंदर्भरूपा तर्कविद्या । तत्र सिद्धान्तः अबाधितार्थः ( म० प्र० पृ० ३ ) । यथा न्यायसिद्धान्तमञ्जरी इत्यादौ । नैयायिकस्य मनस इन्द्रियत्वम् पार्थिवावयव अवयवि एतदुभयेषु च पाकः इति न्यायसिद्धान्तः इत्यादौ च ।

**न्यायाभासः**—यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः सः ( वात्स्या० १।१।१ ) ( न्या० वा० १ पृ० १५ ) ( ल० म० ५४५ ) ।

तत्रागमविरुद्धं यथा शुचि नरशिरःकपालं प्राण्यङ्गत्वाच्छङ्खशुक्तिवत् इति । प्रत्यक्षविरुद्धं तावत् वह्निरनुष्णः कृतकत्वाद्घटादिवत् इति । (न्या० वा० १ पृ० १५) ।

**न्यासः**—गृहस्वामिनः परोक्षमेव गृहजनहस्ते प्रक्षेपो गृहस्वामिने समर्पणीयमिति (मिताक्षरा २।६७) । राजचोरारातिभयाद्दायादानां च वञ्चनात् । स्थाप्यतेन्यगृहे द्रव्यं न्यासस्तत्परिकीर्तितम् ॥ (बृहस्पतिः) ।

**न्यूनम्**—१ (निग्रहस्थानम्) [क] हीनमन्यतमेनाप्यवयवेन न्यूनम् (गौ० ५।२।१२) । प्रतिज्ञादीनामवयवानामन्यतमेनाप्यवयवेन हीनं न्यूनं निग्रहस्थानम् । साधनाभावे साध्यासिद्धिरिति (वात्स्या० ५।२।१२) । [ख] यत्र विवक्षितार्थसमर्पकात्किंचिन्न्यूनं तत् (त० भा० पृ० ५१) । [ग] यत्किंचिदवयवशून्यावयवाभिधानम् (गौ० वृ० ५।२।१२) (दि० १ पृ० २२) (नील० पृ० ४५) । यथा न्यायमते पञ्चानामवयवानां सिद्धान्तसिद्धत्वेन पर्वतो वह्निमान् धूमात् यो यो धूमवान् स स वह्निमान् तथा चायम् इति चतुर्णामेवावयवानामभिधानं न्यूनं भवति । न चायमपसिद्धान्तः । सिद्धान्तविरुद्धानभ्युपगमात् । अपि तु सभाक्षोभादिनानभिधानात् । अत्रेदं बोध्यम् । अन्यतमेनाप्यवयवेन न्यूनमित्यत्र अवयवेनेत्यस्य स्वशास्त्रसिद्धेनेत्यर्थः । तेन सौगतस्य अवयवद्वयाभिधानेपि न न्यूनत्वम् (गौ० वृ० ५।२।१२) । २ ऊनम् । ३ गर्ह्यम् इति काव्यज्ञा आहुः ।

**न्यूनवृत्तित्वम्**—अल्पदेशकालवृत्तित्वम् । यथा पृथिवीत्वस्य द्रव्यत्वमपेक्ष्य न्यूनवृत्तित्वम् । न्यूनवृत्तिधर्म एव व्याप्यधर्मो भवति ।

## प.

**पक्षः**—१ [क] विप्रतिपत्त्येककोटिः (गौ० वृ० १।२।१) । यथा पक्षप्रतिपक्षपरिग्रहो वादः (गौ० १।२।१) इत्यादौ शब्दो नित्यो न वेति विप्रतिपत्तौ नित्यः इति पक्षः अनित्यः इति प्रतिपक्षः । [ख] वादिप्रतिवादिभ्यां दर्शितविप्रतिपत्तिरूपः संशायकः कोटिभेदः । यथा

पर्वतपक्षकवह्निसाध्यकस्थले पर्वतो वह्निमान्न वा इति । अत्र वह्निमान् इत्येकः पक्षः न वा इत्यपरः पक्षः इति ज्ञेयम् । २ पक्षतावान् ( मु० २ पृ० १४६ ) । यथा संदिग्धसाध्यधर्मा धर्मी सिषाधयिषितसाध्यधर्मा धर्मी वा पक्षः ( चि० २ पृ० ३३ ) इत्यादौ पर्वते धूमेन वह्निसाधने पर्वतः पक्षः ( त० सं० ) ( त० भा० पृ० १४–१५ ) । पक्षता यस्मिन्नस्ति स पक्ष इत्यर्थः ( वै० उ० ९।२।१ ) । ३ व्यवहारज्ञास्तु प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् । निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥ इत्याहुः ( वीरमित्रो० अ० २ लेख्य० पृ० ६९ तत्र बृहस्पतिः ) । ४ [ क ] मौहूर्तिकास्तु शुक्लकृष्णप्रतिपदादिपञ्चदश्यन्त- पञ्चदशतिथ्यात्मकः कालः इत्याहुः । [ ख ] द्वेधा विभक्तस्य चान्द्र- मासस्यैको भागः पक्षः ( पु० चि० पृ० ३१ ) । ५ वैयाकरणास्तु समूहः । यथा केशपक्ष इत्यादौ इत्याहुः । अत्र केशात्परः समूहार्थे पक्षशब्दप्रयोगो ज्ञेयः । ६ काव्यज्ञास्तु खगानां पतत्रम् । ७ पार्श्वभागः । ८ गृहम् । ९ विरोधः । १० सहायः । ११ बलम् । १२ मित्रम् । १३ वलयः इत्याहुः । १४ देहार्धभागः इति भिषज आहुः ( वाच० ) । १५ भाषा । भाषा प्रतिज्ञा पक्ष इति नार्थान्तरम् ( मिता० २।६ ) ।

पक्षता—१ [ क ] साध्यवत्त्वेन संदिह्यमानत्वम् । यत्र साध्यनिश्चयोस्ति तत्रानुमितेरनुत्पत्तिः इति साध्यनिश्चयकालेनुमितिवारणाय साध्यसंशय- रूपा पक्षता अनुमितेरङ्गम् इति प्राचीनमताभिप्रायेणेयं पक्षता इति बोध्यम् ( न्या० म० २ पृ० १९ ) ( म० प्र० २ पृ० २३ ) । अत्र भाष्यम् नानुपलब्धे न निर्णीतेर्थे न्यायः प्रवर्तते अपि तु संदिग्धे इति ( वात्स्या० ) ( त० भा० पृ० १० ) । [ ख ] संदिग्धसाध्य- त्वेनोपात्तत्वम् । [ ग ] संदिग्धसाध्यधर्मत्वम् ( चि० २ पृ० ३३ ) ( त० सं० २ ) । अत्र संदिग्धं संदेहप्रकारीभूतं साध्यं यत्र इति विग्रहे संदेहप्रकारीभूतसाध्यवत्त्वमित्यर्थः । यथा धूमानुमाने पर्वतस्य पक्षत्वम् ( त० भा० पृ० १५ ) । इदं लक्षणत्रयम् अनुमितेः पूर्वं साध्यसंदेहो नियमेन वर्तते इत्यभिप्रायेण प्राचीनैः कृतम् ( न्या० बो० २

पृ० १६ ) । २ [ क ] सिषाधयिषाविरहसहकृतसाधकमानाभावः ( चि० २ पृ० ३४ ) । अत्रायमर्थः । सिषाधयिषा अनुमित्सा । साधकमानं सिद्धिः । साध्यनिश्चयः इति यावत् । एवं च सिद्धिरनुमितिविरोधिनी । अतः तत्र सिषाधयिषोत्तेजिका वाच्या । तत्सत्त्वेनुमित्युदयात् । तथा च अनुमित्साविरहविशिष्टसिद्धिर्विरोधिनी । तदभावः पक्षता इति पर्यवसितोर्थः ( म० प्र० २ पृ० २३ ) । अत्रेदं बोध्यम् । श्रवणसंबद्धमात्रे घनगर्जिते इदं घनीयं गर्जितविशेषत्वात् इत्यनुमानस्य संशयं विनाप्यानुभाविकत्वात् संशयविघटकशाब्दसिद्ध्यनन्तरं अनुमितेर्विहितत्वेन तत्र संशयाभावात् साध्यनिश्चये प्रत्यक्षेपि वह्नौ सत्यप्यनुमित्सायां सत्यामनुमितेरुत्पत्तेश्च तन्निर्वाहार्थं नव्यमतानुसारेणेयं पक्षतानुमितिप्रयोजिका इति ( न्या० म० २ पृ० १९ ) ( म० प्र० २ पृ० २४ ) ( त० दी० २ पृ० २४ ) । अयमाशयः । गगनविशेष्यकमेघप्रकारकसंदेहाभावदशायामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन गगनं मेघवत् इत्याकारकगगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताकानुमितिदर्शनात् प्राचीनलक्षणं विहाय नवीनैः अनुमित्युद्देश्यत्वं पक्षत्वम् इति स्थिरीकृतम् ( न्या० बो० २ पृ० १६–१७ ) । एवं सिषाधयिषामात्रं न पक्षता । विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात् । अतः संशयस्य सिषाधयिषायाश्च पक्षतात्वं तिरस्कृत्य सिद्धान्तसिद्धेयं पक्षता स्वीकृतेति भावः । संशयविघटकशाब्दसिद्ध्यनन्तरमनुमितिश्च वेदान्तवाक्यैर्विहिता यथा आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इत्यादिश्रुत्या श्रवणानन्तरं मननं अनुमितिरूपं विहितम् । तथा च तत्रात्मनस्तादृशवेदवाक्येन निश्चितत्वेन संशयाभावाद्व्यभिचारः स्यादिति । [ ख ] सिषाधयिषाविरहविशिष्टसिद्ध्यभावः ( न्या० म० २ पृ० १९ ) ( भा० प० श्लो० ७१ ) । अत्रेदं बोध्यम् । सिद्धिः पर्वतो वह्निमान् इति निश्चयः । तस्य सत्त्वे पर्वतो वह्निमान् इत्यनुमितेरनुत्पत्तेः सिद्धिरनुमितौ प्रतिबन्धिका । सिद्ध्यभावोनुमितौ कारणमिति वक्तव्यम् । एवं सत्यपि पर्वतादौ पक्षे साध्यनिश्चये सत्यपि सत्यां च सिषाधयिषायां पर्वतो वह्निमान् इत्यनुमित्युत्पत्तिदर्शनात्तत्र पक्षतासंपत्तये

सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणम् ( दीधि० २ पृ० १२४ ) । सिद्धेः सिषाधयिषाविरहेण वैशिष्ट्यं चैककालावच्छेदेनैकात्मवृत्तित्वम् ( दीधि० २ पृ० १३१ ) ( म० प्र० २ पृ० २४ ) । तदर्थश्च एकक्षणावच्छिन्नैकात्मसमवेतत्वम् इति ( ग० पक्ष० पृ० ५१ ) । समुदितार्थस्तु सिषाधयिषायाः साध्यानुमितीच्छारूपायाः समवायेन यः अभावः स्वरूप समवाय एतदुभयघटितसामानाधिकरण्यसंबन्धेन तद्विशिष्टायाः सिद्धेः समवायेनाभावः इति ( नील० २ पृ० १९ ) ( ग० पक्ष० पृ० ५१ ) । अत्रायं विशेषः । यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिः तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता इति वक्तव्यम् ( दीधि० २ पृ० १२४ ) ( मु० २ ) ( न्या० म० २ ) । तेन सिद्धिपरामर्शसत्त्वे यत्किंचिज्ज्ञानं जायताम् इतीच्छायामपि नानुमित्यापत्तिः । वह्निव्याप्यधूमवान् पर्वतो वह्निमान् इति प्रत्यक्षसत्त्वे शाब्दसामग्र्यसत्त्वे च प्रत्यक्षातिरिक्तं ज्ञानं जायताम् इतीच्छायां तु भवत्येवानुमितिः । तल्लिङ्गकत्वप्रवेशेन च धूमपरामर्शसत्त्वे आलोकेन वह्निमनुमिनुयाम् इतीच्छायामपि नानुमितिः इति ( मु० २ पृ० १४८–१४९ ) । [ ग ] सिषाधयिषाविरोधिप्रमाणाभावः ( वै० उ० ९।२।१ ) । यथा पर्वते धूमेन वह्निसाधने पर्वतस्य पक्षत्वम् । [ घ ] सार्वभौमस्तु सिसाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना या सिद्धिः सिसाधयिषाविरहविशिष्टायास्तस्या अभावः पक्षता इत्याह ( दीधि० २ पृ० १२७ ) । [ ङ ] उपाध्यायाश्च सिषाधयिषाविरहविशिष्टस्य सिद्धिप्रत्यक्षसामग्र्योरन्यतरस्याभावः पक्षतेत्याहुः । तेन सिद्धिकाले समानविषयकप्रत्यक्षसामग्रीकालेपि च नानुमित्यापत्तिः इत्युपाध्यायानामाशयः ( दि० २ पृ० १५१ ) । अत्र प्रत्यक्षसामग्रीस्थाने अनुमानातिरिक्तसाधकमान इति दीधितिकृत्संमतपाठोस्ति ( दीधि० २ पृ० १२९ ) । केचित्तु अनुमित्युद्देश्यत्वं पक्षतेत्याहुः ( न्या० बो० २ पृ० १७ ) । सिषाधयिषामात्रं पक्षतेत्यन्ये । अयमभिप्रायः । पक्षताया अनुमित्यहेतुत्वमिति

प्राभाकरमते विनापि धूमादिलिङ्गकवह्न्याद्यनुमितीच्छां तादृशानुमित्युत्पत्त्या तादृशानुमित्साविरहविशिष्टप्रत्यक्षादिसामग्र्यभावस्य कारणताधिक्याद्गौरवम् । पक्षताहेतुतामते तादृशानुमितेरिच्छानियततया तत्रेच्छाया लघीयस्या हेतुतयैवोपपत्तेः पक्षतापि तत्रेच्छैव इति ( ग० पक्ष० पृ० ५८ ) । प्राभाकरास्तु विनाप्यनुमित्सां क्वचित्परामर्शानुमितिप्रवाहस्याविरलग्नस्यानुभाविकत्वात् कालभेदकल्पनायां च मानाभावाच्च पक्षता नानुमितिहेतुः । परार्थानुमाने तु सिद्धसाधनमर्थान्तरविधया दूषणमित्याहुः ( दीधि० पक्षता० २ पृ० १३२–१३३ ) ।

**पक्षधर्मता**—[ क ] व्याप्यस्य ( हेतोः ) पक्षे वर्तमानत्वम् ( त० सं० २ ) ( भा० प० २ श्लो० ६९ ) । [ ख ] व्याप्यस्य पक्षसंबन्धः ( वाक्य० २ पृ० १३ ) । [ ग ] पक्षताश्रयवृत्तित्वम् ( त० कौ० २ पृ० ११ ) । यथा पर्वते धूमेन वह्नौ साध्ये वह्निव्याप्यधूमवान् पर्वतः इत्यत्र धूमस्य पक्षधर्मता ।

**पक्षसमः**—( हेत्वाभासः ) । संदिग्धसाध्यकधर्म्यन्तरम् ( ग० साधा० ) ।

**पक्षासिद्धः**—( हेत्वाभासः ) आश्रयासिद्धः ।

**पक्षासिद्धिः**—आश्रयासिद्धिः ( भा० प० २ श्लो० ७६–७७ ) ।

**पक्षिणी**—१ आगामिवर्तमानाहर्युक्ता रात्रिः ( अमरः १ ) । यथा यापयेत्पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च ( मनु० ) इत्यादौ । अत्रोच्यते द्वावह्नावेकरात्रिश्च पक्षिणीत्यभिधीयते इति । तत्र पूर्वदिनरात्रौ तन्निमित्ते जाते पूर्वदिवसीयदिनमादायैव पक्षिणी इति व्यवहारः ( शुद्धि० त० ) । अत्र पक्षतुल्यौ दिवसौ यस्याः सा इति विग्रहः । पक्षशब्दादिन्प्रत्यये ङीप् ( वाच० ) । २ विहगजातिस्त्री इति काव्यज्ञा आहुः ।

**पक्षिलः**—गौतममुनिप्रणीतन्यायसूत्राणां भाष्यकर्ता वात्स्यायनो मुनिविशेषः ( त्रिका० ) ।

**पङ्क्तिः**—१ सजातीयपदार्थानां स्थितिविशेषः । यथा एकपङ्क्त्युपविष्टा ये न स्पृशन्ति परस्परम् । भस्मना कृतमर्यादा न तेषां संकरो भवेत् ॥

अग्निना भस्मना चैव षङ्क्तिः पङ्क्तिर्विभिद्यते ( कूर्मपु० अ० १५ ) इत्यादौ । २ छन्दोविशेषः इति वृत्तशास्त्रज्ञा आहुः । ३ दशसंख्या इति गणका आहुः । ४ गौरवम् । ५ पाकः इति काव्यज्ञा आहुः ( वाच० ) ।

**पचनम्**—पाकः ( ल० म० ) ( ग० व्यु० का० २ ) ।

**पचिः**—१ पचधातुः । २ पाकः ।

**पञ्चदशस्तोमः**—पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया । पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया । पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभिः इति । एकं सूक्तं त्रिरावर्तनीयम् । तत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः । द्वितीयावृत्तौ मध्यमायाः । तृतीयावृत्तावुत्तमायाः । सोयं पञ्चदशस्तोमः ( जै० न्या० अ० १ पा० ४ अधि० ३ ) ।

**पञ्चमी**—( विभक्तिः ) तत्तद्धात्वर्थे ( पत्याद्यर्थे ) अपादानत्वादिबोधिका विभक्तिः ( श० प्र० श्लो० ६५ ) । यथा वृक्षात्पर्णं पततीत्यादौ वृक्षपदोत्तरपञ्चमी । पञ्चम्यर्थश्च १ [ क ] अपादानम् । यथा भूभृतो गङ्गावत्तरतीत्यादौ पञ्चम्यर्थः । अत्र भूभृतो गङ्गासमवेतक्रियाजन्यविभागाश्रयत्वात् अपादानत्वम् । तथा च सूत्रम् ध्रुवमपायेपादानम् ( पा० सू० १।४।२४ ) इति । तदर्थश्च अपाये विभागे ध्रुवम् निश्चलम् परसमवेतक्रियाजन्यविभागाश्रयः अपादानं स्यात् इति ( म० प्र० पृ० ६ ) । अत्र गङ्गायामतिव्याप्तिवारणाय परसमवेतेति क्रियाविशेषणं दत्तम् । अयं विशेषः । स्पन्दजन्यविभागाश्रयत्वेन वृक्षादेरपादानत्वे वृक्षात्पर्णे स्पन्दते इत्यपि प्रयोगः स्यात् । अतः क्रियेति सकर्मकधात्वर्थपरम् इति ( का० व्या० पृ० ९ ) । अथवा अपाये विभागे यत् अवधिभूतं ध्रुवम् निश्चलम् प्रकृतपञ्चम्यर्थविभागजनकत्वान्वयिक्रियाशून्यम् तदपादानसंज्ञं स्यात् इति ( का० व्या० पृ० ९ ) ( सि० कौ० कारक० ) । [ ख ] भेदप्रतियोगितावच्छेदकत्वम् विभागश्च । यथा वृक्षात्पर्णं पततीत्यादौ पञ्चम्यर्थः । वृक्षात्पर्णं

पततीत्यादौ भेदप्रतियोगितावच्छेदकत्वं विभागश्च पञ्चम्यर्थः । भेदे विभागे च वृक्षादेः प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः । प्रतियोगितावच्छेदकत्वस्याश्रयतासंबन्धेन विभागस्य च जनकतासंबन्धेन पत्यर्थक्रियायामन्वयः । एवं च वृक्षनिष्ठभेदप्रतियोगितावच्छेदकं यद्वृक्षनिष्ठविभागजनकं पतनं तदाश्रयः पर्णम् इत्याकारको बोधः ( ग० व्यु० कारक० ५ पृ० १०४ ) ( का० व्या० पृ० ९ ) । [ ग ] अवधित्वम् अवधितानिरूपकत्वं वा । यथा वृक्षाद्विभजते फलमित्यादौ पञ्चम्यर्थः । अत्रेदं बोध्यम् । अत्र नापादाने पञ्चमी किंतु अवधौ । वृक्षावधिकविभागाश्रयः फलम् इत्यवधित्वस्यैव बोधात् इति ( म० प्र० पृ० ६ ) । अथवा अत्र विभागावधित्वमपादानत्वम् । अपाये विभागे ध्रुवमवधिभूतमपादानमिति सूत्रार्थः । तथा च वृक्षनिष्ठावधितानिरूपकविभागाश्रयः फलम् इति वाक्यार्थः ( का० व्या० पृ० ९ ) ( श० प्र० श्लो० ६८ टी० ) । २ हेतुत्वम् । यथा घटो दण्डात् वह्निर्धूमात इत्यादौ पञ्चम्यर्थः । अत्र हेतुत्वं द्विविधम् । कारकत्वम् ज्ञापकत्वं च । तत्राद्यं यथा घटो दण्डादित्यादौ । द्वितीयं यथा वह्निर्धूमादित्यादौ ( म० प्र० पृ० ६ ) । यथा वा व्याघ्राद्बिभेतीत्यादौ जन्यत्वं ( प्रयोज्यत्वं ) पञ्चम्यर्थः । अत्र भीत्रार्थानां भयहेतुः ( पा० सू० १।४।२५ ) इत्यनेनापादानत्वम् । सूत्रार्थश्च भयार्थकधातुयोगे भयहेतुत्वेन संभावितमपादानम् इति । तेन यस्य व्याघ्राधीनं भयमप्रसिद्धम् अथ च व्याघ्रहेतुकत्वेन मरणादिकं संभावयति तत्पुरुषपरः व्याघ्रादयं बिभेति इति प्रयोगः संगच्छते ( ग० व्यु० का० ५ पृ० १०६ ) । अत्राह व्याघ्राद्बिभेतीत्यादौ नापादानपञ्चमी । किंतु हेतुत्वार्थिका पञ्चमी । तथाहि । धातोर्यथायथं भयं भयाभावश्चार्थः । पञ्चम्या हेतुत्वमर्थः । तच्च धात्वर्थे भये धात्वर्थतावच्छेदके च भयत्वेन्वेति । आश्रयत्वं व्यापारश्च यथायथमाख्यातार्थः । इत्थं च हेतुपञ्चम्यैवोपपत्तौ भीत्रार्थानां भयहेतुः इति सूत्रं प्रपञ्चार्थम् इति बोध्यम् ( का० व्या० पृ० ९–१० ) । अत्रोदाह्रियन्ते । पण्डितात्पुराणं शृणोति उपाध्यायादधीते रामादधीत-

संदेशः इत्यादौ प्रकृत्यर्थपण्डितादिकर्तृकोच्चारणाधीनत्वं पञ्चम्यर्थः । तस्य च श्रवण उच्चारण अर्थविशेषज्ञान इत्यादिक्रियायामन्वयः । अत्राख्यातुः पण्डितादेः आख्यातोपयोगे ( पा० सू० १।४।२९ ) इत्यनेनापादानता ( ग० व्यु० का० ५ पृ० १०७ ) । ३ वृत्तित्वम् । यथा कूपादन्धं वारयतीत्यादौ पञ्चम्यर्थः । एवम् अधर्माज्जुगुप्सत इत्यत्रापि पञ्चम्या वृत्तित्वमर्थः । धातोर्निन्दार्थः । तथा चात्र अधर्मं निन्दति इत्यर्थो बोध्यते । एवम् उपाध्यायादन्तर्धत्ते शिष्य इत्यादौ पञ्चम्या वृत्तित्वमर्थः । धातोः स्वविषयकप्रत्यक्षविरोधिव्यापारोर्थः । पञ्चम्यर्थवृत्तित्वस्य धात्वर्थतावच्छेदकप्रत्यक्षेन्वयः । आख्यातस्य कृतिरर्थः । एवं च उपाध्यायसंबन्धिस्वविषयकप्रत्यक्षविरोधिव्यापारानुकूलकृतिमान् शिष्यः इति बोधः ( का० व्या० पृ० १० ) । अत्र अन्तर्धौ येनादर्शनमिच्छति ( पा० सू० १।४।२८ ) इत्यनेनापादानता । ४ संयोगनाशाव्यवहितोत्तरक्षणवृत्तित्वम् संबन्धाधीनत्वं वा । यथा हिमवतो गङ्गा प्रभवतीत्यादौ पञ्चम्यर्थः । ५ कर्मत्वम् ( विषयत्वम् ) । यथा कृष्णात्पराजयते शिशुपालः अध्ययनात्पराजयते बालः इत्यादौ पञ्चम्यर्थः । अधर्माद्विरमतीत्यादावपि पञ्चम्याः कर्मत्वमर्थः । धातोः करणमकरणं चार्थः । पञ्चम्यर्थकर्मत्वस्य करणे अकरणे चान्वयः । तथा च अधर्मं पुनर्न करोति इत्यर्थः । एवम् धर्मात्प्रमाद्यतीत्यादौ पञ्चम्या विषयत्वम् धातोरनवधानम् आख्यातस्याश्रयत्वमर्थः । एवं च धर्मविषयकानवधानाश्रयः इति बोधः । शब्दशक्तिप्रकाशिकाकृतस्त्वत्राहुः । पापान्निवर्तते अधर्माद्विरमतीत्यादौ पञ्चम्या द्वेषोर्थः । तत्र प्रकृत्यर्थस्य विषयत्वेन तस्य च निवृत्तिरूपे धात्वर्थे जन्यत्वेनान्वयः । तेन पापगोचरद्वेषजन्यनिवृत्तिमान् इत्येवं बोधः इति ( श० प्र० श्लो० ६८ टी० पृ० ८० ) । ६ यथेष्टविनियोगः । यथा विप्राद्धनमादत्त इत्यादौ पञ्चम्यर्थः ( का० व्या० पृ० ९–१० ) ( म० प्र० पृ० ६ ) ( ग० व्यु० का० ५ पृ० १०६ ) ( श० प्र० श्लो० ६८ टी० ) । अत्र धातोरपि यथेष्टविनियोगफलकस्वीकारोर्थः । पञ्चम्यर्थस्य विनियोगस्याव्यवहितोत्तरत्वसंबन्धेन धात्वर्थतावच्छेदके विनियोगेन्वयः । इत्थं च विप्रीययथेष्टविनियोगाव्यवहितोत्तरधनवृत्तियथेष्ट-

विनियोगफलकस्वीकारवान् इति बोधः। अत्र अव्यवहितोत्तरत्वं च स्वसमानविषयकपुरुषान्तरीयविनियोगाव्यवहितभिन्नत्वम्। तेन शूद्रात् प्रतिग्रहीत्रा विप्रेण दत्तं धनमादातरि शूद्रादादत्ते इति न प्रयोगः (का० व्या० पृ० १०)।

पञ्चपाण्डवपतिका द्रौपदी पञ्चमीशब्देनोच्यते इति पौराणिका आहुः। सूर्यकिरणप्रतिबिम्बयोग्यत्वयोग्यत्वाभावयुक्ता चन्द्रस्य पञ्चमी कला इति ज्योतिर्विदः। तादृशकलोपलक्षिततिथिश्च पञ्चमी इति मौहूर्तिका वदन्ति।

**पञ्चलक्षणम्**—१ अनुमानचिन्तामण्युक्तं व्याप्तिस्वरूपपञ्चकम्। तच्च (१) साध्याभाववदवृत्तित्वम् (२) साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम् (३) साध्यवत्प्रतियोगिताकान्योन्याभावासामानाधिकरण्यम् (४) सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम् (५) साध्यवदन्यावृत्तित्वम् इति (चि० २ पृ० २)। पञ्चलक्षणप्रतिपादकग्रन्थस्य पञ्चलक्षणी इति नाम। तत्र पञ्चानां लक्षणानां समाहारः (ङीप्) इति व्युत्पत्तिर्द्रष्टव्या। २ पुराणं पञ्चलक्षणम् इति पौराणिका आहुः। अत्र पञ्चलक्षणानि तु सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम्॥ इति (अमर० क्षेपक० का० १ शब्दादि०)।

**पटः**—१ वेष्टनवस्त्रम्। यथा तन्तवः पटस्य समवायिकारणम् इत्यादौ (त० सं०)। २ चित्रलेखनपटः इति तन्त्रज्ञा आहुः (देवीपु०) (बृ० सं० अ० ७१) (वाच०)।

**पण्डा**—१ (अपूर्वम्) फलसाधनत्वयोग्यः अदृष्टविशेषः। यथा मीमांसकमते अहरहः संध्यामुपासीत इत्यादौ नित्यकर्मणः संध्यावन्दनादेरभावे दुरदृष्टं जायते संध्यादेर्वन्दने तु तस्यानुत्पत्त्या फलानुपहितं दुरदृष्टं नश्यति इति तत्पण्डापूर्वम्। अत्र गुरवः। कार्यत्वेन अपूर्वं एव विधेः शक्तिः। तथा च न कलञ्जं भक्षयेदित्यादिनिषेधे कलञ्जभक्षणाभावविषयकं कार्यम् इत्यन्वयबोधः। तच्चापूर्वं न किंचित्फलजनकम्। अपि तु स्वतः प्रयोजनं नित्यकर्मणः इत्यङ्गीचक्रुः (वाच०) (दि० गु०)। नैयायिकास्तु नित्यकर्मणामपि पापध्वंसादिरूपफलसत्त्वात्पण्डापूर्वं नाङ्गी-

कुर्वन्ति । २ वेदोज्ज्वला बुद्धिः । यथा पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः । सर्वे व्यसनिनो मूर्खा यः क्रियावान् स पण्डितः ॥ ( भा० व० ) इत्यादौ । ३ आगमजन्यं ज्ञानम् ( गी० भा० टी० ) । यथा विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ ( गीता० ५।१८ ) इत्यादौ । ४ सर्वविद्याधिकत्वं यत्पाण्डित्यं तदुदाहृतम् इति साहित्यशास्त्रज्ञा आहुः ( प्रतापरुद्रे ) ।

**पतञ्जलिः**—योगसूत्रकारक ऋषिविशेषः । पाणिनिसूत्रव्याख्यानरूपमहाभाष्यकारः शेषावतारत्वेन प्रसिद्धो मुनिविशेषः । अत्र पतन्नञ्जलिर्नमस्यतया यस्मिन् इति पतञ्जलिरिति व्युत्पत्तिर्द्रष्टव्या ( तत्त्वसु० ) । अथवा पतन्नञ्जलित इति पतञ्जलिः इत्यपि व्युत्पत्तिः । अत्रैतिह्यम् गोनर्ददेशे नद्यास्तीरे तपस्यतः कस्यचिदृषेरञ्जलितः पतितः इति ( शकंब्बा० वार्तिक० शेखरे ) । केचित्तु व्याकरणमहाभाष्यकारः पतञ्जलिर्योगसूत्रकाराद्भिन्न एवेति वदन्ति ।

**पतनम्**—१ [ क ] अधःसंयोगावच्छिन्नस्पन्दः । अत्र पतनत्वं च गुरुत्वासमवायिकारणककर्मत्वम् ( दि० १ साधर्म्य० पृ० ६२ ) ( ग० व्यु० का० २ ) । [ ख ] स्पन्दत्वावान्तरजात्यवच्छिन्नः ( ग० २ अवयव० ) । यथा वृक्षात्पर्णं पततीत्यादौ पतत्यर्थः । स च वृक्षविभागजनकव्यापारमारभ्य भूमिसंयोगजनकव्यापारपर्यन्तं सर्वाः क्रियाः पतनम् ( वाक्य० १ पृ० ९ ) । [ ग ] अधःसंयोगावच्छिन्नो गुरुत्वप्रयोज्यपतनत्वजात्यवच्छिन्नो वा स्पन्दः ( श० प्र० श्लो० ६८ टी० पृ० ८० ) । २ धर्मज्ञास्तु पातित्यम् । तच्च [ क ] भोगावच्छिन्नं दुरितम् । यथा नरकं पतित इत्यादौ ( श० प्र० श्लो० ६५ टी पृ० ७६ ) । [ ख ] द्विजातिकर्मभ्यो हानिः ( गौतम० ) । यथा विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ ( याज्ञ० अ० ३ श्लो० २१९ ) इत्यादौ इत्याहुः ।

**पतिः**—शिवः । यथा पतिपशुपाशास्त्रयः पदार्था इत्यत्र ( सर्व० सं० पृ० १७५ शैव० ) ।

चात्र हेतुपञ्चमी। गुणातिरिक्तहेतौ पञ्चम्यनुशासनविरहात् (ग० व्यु० का० ५ पृ० १०८)। अत्र गुणत्वं च स्वप्रयोज्याश्रयवृत्तित्वम्। तेन वह्निमान् धूमादित्यादौ धूमस्य गुणत्वप्राप्त्या विभाषा गुणेऽस्त्रियाम्[1] (पा० सू० २।३।२५) इत्यनेन धूमपदात्तृतीयापञ्चम्यौ संगच्छेते (ग० अवय० हेतु०)। अत्र समवायि असमवायि निमित्त एतत्त्रितयसाधारणं कारणत्वम्। न तु समवायिकारणत्वमात्रं विज्ञेयम्। तेन दण्डाद्घटो जायत इति प्रयोग इष्यते। अत एव यतो द्रव्यं गुणाः कर्म इत्यादौ पञ्चमी (ग० व्यु० का० ५ पृ० १०८)। यतः ईश्वरात्। अथ वा केवलं समवायिकारणम् (वै० वि०) (वै० उ० ८।२।५)। यथा पृथिवी गन्धज्ञाने[2] (घ्राणे) प्रकृतिः (वै० सू० ८।२।५) इत्यादौ। अथवा स्वजनकनाशप्रतियोगि। यथा दुग्धं दध्नः प्रकृतिः (राम० १ पृथिवी० पृ० ६८)। यथा वा महापटः खण्डपटस्य प्रकृतिः (मु० १ पृथिवी०)। स्वजनकेत्यस्यार्थश्च स्वम् दधि। तस्य जनको यो नाशः दुग्धनाशः तस्य प्रतियोगि दुग्धम् तत्त्वं दुग्धे इति। एवम् खण्डपटस्य जनकीभूतो नाशः महापटनाशः तत्प्रतियोगित्वं महापटादौ इति द्रष्टव्यम्। ३ यावदाश्रयभाविधर्मः। यथा प्रकृत्या कृपणः स्वभावेन सरलः इत्यादौ। अत्र तृतीयार्थश्चाभेदस्तादात्म्यं वा। एवं च स्वाश्रयाधिकरणयावत्कालवृत्तिकार्पण्यवान् इत्याकारस्तत्र बोधः। अत्र प्रकृत्यादिभ्य उपसंख्यानम् (वार्तिकम्) इत्यनेन तृतीया विधीयते (श० प्र० श्लो० ९३ टी० पृ० १२४)। ४ स्वभावः। ५ मीमांसकास्तु यत्र समग्राङ्गोपदेशः सा प्रकृतिः। यथा दर्शपूर्णमासादिरूपप्रधानयागः प्रकृतिः (इष्टयग्निहोत्रसोमाः प्रकृतयः) (लौ० भा० पृ० २३) इत्याहुः। अत्रेदं बोध्यम्। यत्र कर्तव्यं सर्वं प्रकर्षेण कर्मान्तरनैरपेक्ष्येणोपदिश्यते सा प्रकृतिः। यत्र विशेषरूपमेव कर्तव्यं श्रुत्योपदिश्यते इतरत्सर्वं कर्मान्तरादतिदिश्यते सा विकृतिः (वाच०)। तत्रापि मूलप्रकृतिः अवान्तरप्रकृतिः इति प्रकृतेर्द्वैविध्यादिकं तु विस्तरभयान्नोच्यते इति।

---

१ अस्त्रियामिति पदच्छेदः। २ गन्धो ज्ञायते अनेन तद्। घ्राणेन्द्रियमित्यर्थः।

६ सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः ( सां० सू० अ० १ सू० ६१ ) इति सांख्या आहुः । अयमर्थः । प्रकृतेः कार्यं महत्तत्त्वम् । महतश्च कार्योहंकारः । अहंकारस्य कार्यद्वयम् तन्मात्राणि उभयमिन्द्रियं च । तत्रोभयमिन्द्रियं बाह्याभ्यन्तरभेदेनैकादशविधम् । तन्मात्राणां कार्याणि च पञ्च स्थूलभूतानि । स्थूलशब्दात्तन्मात्राणां सूक्ष्मभूतत्वमभ्युपगतम् । पुरुषस्तु कार्यकारणविलक्षणः इति । इत्येवं पञ्चविंशतिर्गणः पदार्थव्यूहः । एतदतिरिक्तः पदार्थो नास्तीत्यर्थः । दिक्कालौ चाकाशमेव इति ( सांख्य० प्र० भा० अ० १ सू० ६१ टी० ) । एतन्मते प्रकृतित्वं च तत्त्वान्तरोपादानत्वम् ( सर्व० पृ० ३१८ सांख्य० ) । ७ माया अविद्या चेति द्विविधभेदभिन्ना प्रकृतिः इति शांकरा अद्वैतवादिनो मन्यन्ते । ८ जडात्मको भगवदंशविशेषः इति वाल्लभा आहुः । ९ लक्ष्मीरपीति श्रीमध्वाचार्यानुयायिनः प्राहुः । एतन्मते च प्रकृतिर्द्विविधा चित्प्रकृतिः जडप्रकृतिश्च । तत्राद्या लक्ष्मीः । द्वितीया तु मृत्पाषाणादिस्थावरात्मकं सर्वं जगत् इति विज्ञेयम् ( भाग० १ टी० विजयध्व० ) । अत्र लक्ष्मीपदेन भगवदिच्छा संगृह्यते ( मध्व० भाष्य० १।४।२५ ) । १० शरीरावस्था इति भिषजो वदन्ति । ११ मूलस्वरः प्रकृतिः इति गायका गायन्ति । १२ शाक्तास्तु प्रकृत्यंशदेवीपञ्चकरूपशक्तिविशेषः इत्याहुः । अत्रोक्तम् गणेशजननी दुर्गा १ राधा २ लक्ष्मीः ३ सरस्वती ४ । सावित्री ५ च सृष्टिविधौ प्रकृतिः पञ्चमी स्मृता ॥ इति । १३ प्रकृतिशब्दवाच्यो विष्णुः इति श्रीपूर्णप्रज्ञाचार्या व्याचक्रुः ( मध्वभा० ) । अत्र ब्रह्मसूत्रम् ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ इति ( ब्र० सू० १।४।२४ ) । *प्रकृतिः प्रकृष्टकरणात्* ( *सर्व० सं० पृ० १४१* पूर्णप्र० ) । अत्र प्रकृतिशब्देन समवायिकारणं (ब्रह्म) ग्राह्यम् इत्यद्वैतिनो मायावादिनो मन्यन्ते । १४ स्वाम्यमात्यादिराज्याङ्गं प्रकृतिः इति नीतिशास्त्रज्ञा आहुः । अत्रोच्यते । स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि ७ प्रकृतयः पौराणां श्रेणयोपि च ॥ इति ( अमरः काण्ड० २ क्षत्रि० श्लो० १७–१८ ) । १५ एकविंशत्यक्षरपाद-

करछन्दोविशेषः प्रकृतिः इति छन्दःशास्त्रज्ञा आहुः । १६ व्याकरणशास्त्रोक्तकर्मविशेषः ( विकार्यम् ) । यथा काशान्कटं करोति इत्यादौ काशादि प्रकृतिकर्म इति ।

**प्रकृतिविकृतिः**—महदाद्याः प्रकृतिविकृतयः सप्त इति । अस्यार्थः । प्रकृतयश्च ता विकृतयश्चेति प्रकृतिविकृतयः सप्त महदादीनि तत्त्वानि ( सर्व० सं० पृ० ३१७ सांख्य० ) ।

**प्रक्रिया**—१ निरूपणम् ( दि० गु० पृ० १९८ ) । यथा नवक्षणा प्रक्रिया दशक्षणा प्रक्रिया एकादशक्षणा प्रक्रिया ( मु० गु० पृ० १९८ ) इत्यादौ । २ पक्षप्रतिपक्षयोः प्रवृत्तिः । यथा अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्धटवत् इत्येकः पक्षं प्रवर्तयति । द्वितीयश्च नित्यसाधर्म्यात् श्रावणत्वात् नित्यः शब्दः इति ( वात्स्या० ५।१।१६ ) । अत्रार्थे व्युत्पत्तिः । प्रक्रिया प्रकर्षेण क्रिया साधनम् । विपरीतसाधनमिति फलितार्थः इति ( गौ० वृ० ५।१।१६ ) । ३ शब्दप्रयोगसाधनावस्था प्रक्रिया इति शाब्दिका आहुः । ४ प्रकरणम् सा प्रक्रिया या कम् इत्यपेक्षा इति पार्थसारथिमिश्र आह । ५ अधिकारः । ६ नृपादीनां चामरव्यजनच्छत्रधारणादिव्यापारः इति काव्यज्ञा आहुः ।

**प्रचयः**—१ [ क ] शिथिलाख्यः संयोगः । यथा यत्र द्वाभ्यां तूलकपिण्डाभ्यां प्रचययुक्ताभ्यां तूलकपिण्डान्तरमारब्धम् तत्र परिमाणोत्कर्षदर्शनात् शिथिलाख्यसंयोगरूपः प्रचयस्तादशावयविपरिमाणस्यासमवायिकारणम् ( वै० वि० ७।१।९ ) ( वै० उ० ७।१।९ ) ( भा० प० गु० श्लो० ११३ ) । अत्र प्रचयश्चारम्भकः संयोगः । स च स्वाभिमुखकिंचिदवयवासंयुक्तत्वे सति स्वाभिमुखकिंचिदवयवसंयोगलक्षणः । स त्ववयवसंयोगः स्वावयवप्रशिथिलसंयोगापेक्षः परिमाणजनकः । गुणकर्मारम्भे सापेक्षः इति वचनात् ( वै० उ० ७।१।९ ) ( त० व० ) । [ ख ] किंचिदवयवावच्छेदेनावयवान्तरासंयोगिनि महत्यवयवे वर्तमानः संयोगः इत्येके वदन्ति । अन्य आहुः । अत्र महत्पदं न देयम् । परमाणुसंयोगस्य प्रचयत्वे क्षतिविरहात् इति । अपरे तु भूयोवयवावच्छेदेना-

वयवान्तरासंयोगिन्यवयवे वर्तमानः संयोगः प्रचयः। तेन परमाणुसंयोगो द्व्यणुकसंयोगो वा न प्रचयः इत्याहुः (दि० गु० पृ० २०५)। २ साहित्यम् (कि० व० ५)। ३ चयनम्। यष्ट्यादिना वृक्षाग्रस्थानां पुष्पाणां प्रचयः इत्येव (सि० कौ० कृद० पृ० ३४२)। अत्र व्याकरणनियमः। हस्तादाने चेरस्तेये (पा० सू० ३।३।४०)। हस्तादाने तु घञ्। हस्तेन पुष्पप्रचाय इत्येव। चौर्ये तु अच्। प्रचय इत्येव। चौर्येण पुष्पादेः प्रचयः इति। ४ समूहः। ५ उपचय इति काव्यज्ञा आहुः। ६ उदात्तानुदात्तस्वरितेभ्यो व्यतिरिक्तश्चतुर्थः स्वर एकश्रुतिः। तां याज्ञिकाः प्रचयः इत्याचक्षते (जै० न्या० अ० ९ पा० २ अधि० ९)।

**प्रज्ञाज्योतिः**—भूतेन्द्रियजयी योगिविशेषः (सर्व० सं० पृ० ३८४ पात०)।

**प्रज्ञापनम्**—१ उदाहरणम्। एतदर्थे वात्स्यायनभाष्यं (१।२।७) द्रष्टव्यम्। २ बोधनम्।

**प्रणतिः**—
**प्रणामः**— } (नमस्कारः) स्वापकर्षबोधकः करशिरःसंयोगादिव्यापारः। यथा पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा। वचसा मनसा चैव प्रणामोष्टाङ्ग उच्यते॥ इति। बाहुभ्यां चैव जानुभ्यां शिरसा वचसा दृशा। पञ्चाङ्गोयं प्रणामः स्यात्पूजासु प्रवरः स्मृतः॥ इत्यादौ च (वाच०)।

**प्रणिधानम्**—१ सुस्मूर्षया (स्मर्तुमिच्छया) मनसो धारणम् (वात्स्या० ३।२।४२)। २ मनसो विषयान्तरसंचारवारणम् (गौ० वृ० ३।२।४२)। इदं च स्मृतेरुद्बोधकरूपं निमित्तं बोध्यम्। अत्र भाष्यम् सुस्मूर्षितलिङ्गचिन्तनं चार्थस्मृतिकारणम् इति (वात्स्या० ३।२।४२)। ३ योगिनस्तु चिन्तनविशेषरूपः समाधिविशेषः इत्याहुः। ४ भक्तिविशेषः (पात० यो० सू० १।२३)। ५ अर्पणम्। ६ कर्मणां फलत्यागः (पात० यो० सू० २।१)। ७ प्रयत्नः। ८ अभिनिवेशः इति काव्यज्ञा आहुः।

**प्रतानः**—प्रतानाः काण्डप्ररोहरहिताः सरलयायिन्यः सारिवाप्रभृतयः ( मिताक्षरा अ० २।२२९ )।

**प्रति**—( अव्ययम् ) १ सादृश्यम् । यथा प्रतिदेवता इत्यादौ । २ आदानम् । यथा प्रतिगृह्णाति इत्यादौ । ३ हिंसा । यथा प्रतिहन्ति इत्यादौ । ४ अङ्गीकारः । यथा प्रतिज्ञानम् इत्यादौ । ५ प्रतिनिधीकरणम् । यथा अभिमन्युरर्जुनतः प्रति इत्यादौ । ६ व्याधिः । यथा प्रतिश्यायः इत्यादौ । ७ आभिमुख्यम् । यथा प्रतिसूर्यं गतः इत्यादौ । ८ व्याप्तिः । यथा प्रतिकीर्णं पांशुभिः इत्यादौ । ९ वारणम् । यथा प्रतिषिद्धः इत्यादौ ( गण० टीका० ) ( वाच० )। १० प्रतिदानम् । यथा तिलेभ्यः प्रतियच्छति माषान् इत्यादौ । ११ लक्षणम् । यथा वृक्षं प्रति विद्योतते विद्युत् इत्यादौ । अत्र प्रतेः सादृश्याद्यर्थविशेषेषु द्योतकत्वमेव न तु वाचकत्वम् इति ज्ञेयम् ।

**प्रतिकूलत्वम्**—१ द्वेषविषयत्वम् ( मु० गु० पृ० २२० ) । यथा दुःखस्य द्विष्टत्वरूपं प्रतिकूलत्वम् । २ विरुद्धपक्षावलम्बित्वम् इति काव्यज्ञा आहुः ।

**प्रतिग्रहः**—[ क ] स्वस्वत्वजनकेच्छारूपस्वीकारविशेषः । यथा धनं प्रतिगृह्णातीत्यादौ धात्वर्थः । अत्र स्वस्वत्वरूपफले द्वितीयार्थाधेयत्वान्वयः ( ग० व्यु० का० २ पृ० ४३ ) । अत्र मतविशेषो ज्ञेयः । दानस्यैव स्वस्वत्वध्वंसमिव परस्वत्वोत्पत्तिं प्रति जनकता । प्रतिग्रहस्य तु न स्वत्वजनकता । अपि तु दानेनोत्पन्नमपि स्वत्वं संप्रदानव्यापारेण प्रतिग्रहेण यथेष्टविनियोगार्हं क्रियते इति जीमूतवाहनमतम् ( जीमूतवा० दायभाग० वीरमित्रो० २ पृ० ५४३ )। अत्र प्रमाणम् मनसा पात्रमुद्दिश्य इत्यादि शास्त्रम् । अयं भावः । प्रतिग्रहस्य स्वत्वजनकत्वं यदि स्वीक्रियेत तदा देशान्तरस्थं पात्रमुद्दिश्य यद्धनं ददाति तत्पात्रमरणानन्तरं तत्पुत्राणां तद्धने तत्पितृस्वत्वानुत्पत्त्या स्वत्वाभावेन प्रवृत्तिर्न स्यात् । अतः प्रतिग्रहस्यापि स्वत्वजनकत्वं नाङ्गीकर्तव्यम् इति । विदेशस्थं पात्रमुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव पात्रस्य मरणस्थले पितृदायत्वेन तद्धनं पुत्रादिभिर्विभज्य गृह्यते । अन्यथा तैरिवोदासीनैरपि तद्धनस्यारण्य-

कुशादेरिवोपादाने यथेष्टविनियोगे च प्रत्यवायो न स्यात् इति (श० प्र० श्लो० ६९ टी० पृ० ८५) । वीरमित्रोदयकारास्तु प्रतिग्रहा-देव स्वत्वमुत्पद्यते । अन्यथा पात्रविशेषोद्देशेन त्यागे तेनास्वीकृतेपि तत्स्वत्वो-त्पत्तौ परस्मै तस्य प्रतिपादनासंभवप्रसङ्गः इत्याहुः ( वीरमित्रो० २ दाय० पृ० ५४२ ) । [ ख ] पुण्यार्थकदानजन्यस्वत्वस्य जनकः स्वीकारः । ममेदम् इति ज्ञानमिति यावत् । यथा धनं प्रतिगृह्णातीत्यत्र । अत्र फली-भूतस्वत्ववत्तया धनस्य कर्मत्वं संगच्छते । विक्रयादेर्दानविशेषत्वेपि न तस्य पुण्यजनकत्वम् । अतस्तल्लब्धस्य स्वीकारो न प्रतिग्रहः इति विज्ञेयम् ( श० प्र० श्लो० ७२ पृ० १०९ ) । प्रतिग्रहस्य स्वत्वजनकत्वे प्रमाणं श्रुतिः याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत् इति । स्मृतिरपि ब्राह्मण-स्याधिकं लब्धम् ( गौतमः ) इति । तदर्थश्च मिताक्षरायाम् ( अ० २ व्यव० श्लो० ११४ ) ब्राह्मणस्य प्रतिग्रहादिना लब्धम् तत् अधिकम-साधारणम् ( वीरमित्रो० २ पृ० ५४३ ) इति । [ ग ] दत्तद्रव्यस्वस्व-त्वजनकस्वीकारः । यथा गां प्रतिगृह्णातीत्यादौ ( का० व्या० पृ० ५ )। [ घ ] शाब्दिकास्तु अदृष्टार्थदत्तस्वीकारः ( ल० म० ) इत्याहुः । अयाचितविषये प्रतिग्रहे न दोषः । तदुक्तम् अयाचितोपपन्ने तु नास्ति दोषः प्रतिग्रहे । अमृतं तं विदुर्देवास्तस्मात्तन्नैव निर्णुदेत् ॥ इति (गारुडे० अ० २१५) ( वाच० ) । अदृष्टार्थत्यक्तद्रव्यस्वीकारः इत्यन्ये ।

**प्रतिघातः**—१ बलवत्तरवेगप्रयुक्तद्रव्यसंयोगविशेषः । २ मारणम् ।

**प्रतिज्ञा**—१ [ क ] स्वकर्तव्यत्वेन निर्देशः ( राम० ) । कर्तव्यत्वप्रकारक-बोधानुकूलव्यापारः इति परमार्थः । यथा अथ हेत्वाभासास्तत्त्वनिर्णय-प्रयोजकत्वान्निरूप्यन्ते इति मया तर्कसंग्रहः क्रियते इत्यादि च प्रतिज्ञा । [ ख ] कर्तव्यत्वज्ञानम् ( राम० पृ० २ ) । यथा कारिकावलीं विशदी-करवाणि इति प्रतिज्ञा । २ व्यवहारज्ञास्तु पक्षाभिधायकः पूर्वपक्षभाषा-द्यपरपर्यायो वाक्यविशेषः प्रतिज्ञा । स च वाक्यविशेषः व्यवहारपाद-विशेषः पूर्वपादः अर्थिपादश्चेत्यभिधीयते ( वीरमित्रो० २ व्यव० पृ० ६०) । यथा ममेदं द्रव्यमनेन गृहीतं न ददाति इत्यादिः प्रतिज्ञा इत्याहुः ।

भाषा प्रतिज्ञा पक्ष इति नार्थान्तरम् ( मिताक्षरा अ० २ श्लो० ६ ) । भाषाशब्दे द्रष्टव्यम् । अत्र प्रतिज्ञालक्षणमाह याज्ञवल्क्यः । प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना । समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥ इति ( वीरमि० २ पृ० ६१ ) । ३ अङ्गीकारः इति काव्यज्ञा आहुः । ४ न्यायावयवः । यथा पर्वतो वह्निमान् इति प्रतिज्ञावाक्यम् । पक्षज्ञानं प्रतिज्ञायाः प्रयोजनम् ( त० दी० २ पृ० २२ ) । लक्षणं च प्रतिज्ञात्वमेव । तच्चात्र हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वम् । लिङ्गाविषयकलिङ्गिविषयकज्ञानजनकन्यायावयवत्वं ( चि० २ अव० पृ० ७७ ) वा । इतरान्वितस्वार्थबोधकत्वे सति स्वीयं यदन्यभिन्नं पदं तदर्थविशेष्यकान्वयबोधजनकत्वे सति न्यायावयवत्वं वा । अथवा अन्त्यपदवत्त्वे सति स्वीयानन्त्यपदार्थविशेष्यकान्वयबोधाजनकान्यत्वे सति न्यायावयवत्वम् ( दीधि० २ पृ० १७७ ) । यद्वा एतन्न्यायघटकः पर्वतो वह्निमान् इति यः शब्दः तद्वृत्त्यवयवविभाजको पाधिमत्त्वम् ( न्या० म० २ पृ० २३ ) । प्रतिज्ञात्वं जातिः इति केचिदाहुः ( चि० २ अव० पृ० ७७ ) । वस्तुतस्तु प्रतिज्ञात्वमखण्डोपाधिरेव इत्यन्ये आहुः ( म० प्र० २ पृ० ३३ ) । प्रतिज्ञावाक्यं च उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकत्वे सत्युद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं वाक्यम् । सत्यन्तस्य प्रकृतन्यायावयवत्वं पर्यवसितार्थः । तेन प्रकृतन्यायबहिर्भूतवाक्यवारणम् ( दीधि० २ अवय० पृ० १६७ ) । एवमग्रेऽपि बोध्यम् । अथवा उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकत्वे सत्युद्देश्यानुमितिविषयकलिङ्गाविषयकशाब्दज्ञानजनकं वाक्यम् ( चि० २ अवय० पृ० ७७ ) । सा च प्रतिज्ञा [ क ] साध्यनिर्देशः प्रतिज्ञा ( गौ० १।१।३३ ) । प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा । साध्यनिर्देशः अनित्यः शब्दः इति ( वात्स्या० १।१।३३ ) । साधनीयस्य अर्थस्य यो निर्देशः स प्रतिज्ञा । तथा च पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधको न्यायावयवः इत्यर्थः । साधनीयस्य वह्निमत्त्वादिना पर्वतादिः ( गौ०

सू० १।१।३३ ) ( दीधि० २ अव० पृ० १६७ ) । [ ख ] साध्यधर्मविशिष्टधर्मिप्रतिपादकं वचनम् ( त० भा० पृ० ४३ ) ( त० दी० २ पृ० २२ ) । यथा पर्वतपक्षकवह्निसाध्यकस्थले पर्वतो वह्निमान् इति वाक्यं प्रतिज्ञा । साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकबोधजनको न्यायावयवः इत्यर्थः ( नील० २ पृ० २२ ) ( दीधि० ) । अत्र निगमनवारणाय च साध्यांशे साध्यतावच्छेदकातिरिक्ताप्रकारकत्वं वाच्यम् । तदर्थश्च साध्यतावच्छेदकप्रकारताविलक्षणप्रकारताशून्यत्वम् । तेन प्रमेयवतः साध्यत्वे नासिद्धिः । उदासीनवारणाय च न्यायान्तर्गतत्वे सति इति विशेषणीयम् । न्यायान्तर्गतत्वे सति प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यविषयताविलक्षणविषयताकबोधाजनकत्वे सति प्रकृतपक्षे प्रकृतसाध्यबोधजनकत्वं तत् । प्रतिज्ञात्वावयवत्वादिकं परिभाषाविशेषविषयत्वरूपम् तत्तद्व्यक्तित्वरूपं च ( गौ० वृ० १।१।३३ ) । उदाहरणाच्च न पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यज्ञानम् । उपनयाच्च न पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानम् इति तयोर्व्युदासः ( दीधि० २ अवय० पृ० १६७ ) । [ ग ] अनुमेयोद्देशः अविरोधी प्रतिज्ञा । प्रतिपिपादयिषितधर्मविशिष्टस्य धर्मिणोपदेशविषयापादनार्थमुद्देशमात्रम् । यथा द्रव्यं वायुः इति । अविरोधिग्रहणात् प्रत्यक्षानुमानागमस्वशास्त्रस्ववचनविरोधिनो निरस्ता भवन्ति । यथा अनुष्णोग्निः इति प्रत्यक्षविरोधी । घनमम्बरम् इत्यनुमानविरोधी । ब्राह्मणेन सुरा पेया इत्यागमविरोधी । वैशेषिकस्य सत्कार्यम् इति ब्रुवतः स्वशास्त्रविरोधी । न शब्दोर्थप्रत्यायकः इति स्ववचनविरोधी ( प्रशस्त० २ पृ० २८ ) ।

**प्रतिज्ञान्तरम्**—( निग्रहस्थानम् ) [ क ] प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ( गौ० ५।२।३ ) । प्रतिज्ञातार्थः अनित्यः शब्दः ऐन्द्रियकत्वाद्घटवदित्युक्ते योस्य प्रतिषेधः प्रतिदृष्टान्तेन हेतुव्यभिचारः सामान्यमैन्द्रियकं नित्यम् इति । तस्मिंश्च प्रतिज्ञातार्थप्रतिषेधे । धर्मविकल्पादिति । दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्ययोगे धर्मभेदात्सामान्य-

मैन्द्रियकं सर्वगतम् । ऐन्द्रियकस्त्वसर्वगतो घट इति धर्मविकल्पात् । तदर्थनिर्देश इति साध्यसिद्ध्यर्थम् । कथम् । यथा घटोसर्वगत एवं शब्दोप्यसर्वगतो घटवदेवानित्य इति । तत्रानित्यः शब्द इति पूर्वा प्रतिज्ञा । असर्वगत इति द्वितीया प्रतिज्ञा प्रतिज्ञान्तरम् ( वात्स्या० ५।२।३ ) । [ ख ] प्रतिज्ञातस्यार्थस्य प्रतिषेधे कृते तद्दूषणोद्दिधीर्षया धर्मस्य धर्मान्तरस्य विशिष्टः कल्पो विकल्पः तस्मात् विशेषणान्तरविशिष्टतया प्रतिज्ञातार्थस्य कथनम् ( गौ० वृ० ५।२।३ ) ( ता० र० परि० ३ श्लो० १३५ ) । प्रतिज्ञातार्थस्येत्युपलक्षणम् हेत्वतिरिक्तार्थस्य इति तत्त्वम् । तेन उदाहरणान्तरमुपनयान्तरं च प्रतिज्ञान्तरत्वेन संगृहीतं भवति । अत्र प्रतिषेध इत्यनेन झटिति संवरणे विलम्बेनापि स्वयं दूषणं विभाव्य विशेषणे न दोषः इत्युक्तम् ( गौ० वृ० ५।२।३ ) । [ ग ] परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनम् ( दि० १ पृ० २२ ) ( नील० पृ० ४५ ) । यथा क्षित्यादिकं गुणजन्यं कार्यत्वादित्यत्रादृष्टजन्यत्वेन सिद्धसाधनोद्भावने सविषयक इति गुणविशेषणदानम् ( नील० पृ० ४५ ) । इदं च पक्षसाध्यविशेषणभेदात्प्रत्येकं द्विविधम् । यथा शब्दः अनित्य इत्युक्ते ध्वनौ बाधेन परेण प्रत्युक्ते वर्णात्मकः शब्दः पक्ष इति प्रतिज्ञान्तरम् । एवम् पर्वतो वह्निमान्सुरभिमलिनधूमवत्त्वादित्युक्ते असमर्थविशेषणत्वेन च परेण प्रत्युक्ते कृष्णागुरुप्रभववह्निमानित्यत्र । एवम् तादृशवह्नौ साध्ये यः सुरभिमलिनधूमवान् स वह्निमान् इत्युदाहरणे न्यूनत्वेन प्रत्युक्ते स तादृशवह्निमानित्यत्र । एवमन्यदप्यूह्यम् ( गौ० वृ० ५।२।३ ) । प्रतिज्ञान्तरं च गुणेन्तर्भवतीति विज्ञेयम् ( दि० १ पृ० २२ ) ।

**प्रतिज्ञाविरोधः**—( निग्रहस्थानम् ) [ क ] प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ( गौ० ५।२।४ ) । गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा । रूपादितोर्थान्तरस्यानुपलब्धेरिति हेतुः । सोयं प्रतिज्ञाहेत्वोर्विरोधः । कथम् । यदि गुणव्यतिरिक्तं द्रव्यं रूपादिभ्योर्थान्तरस्यानुपलब्धिर्नोपपद्यते । अथ रूपादिभ्योर्थान्तरस्यानुपलब्धिः गुणव्यतिरिक्तं द्रव्यमिति नोपपद्यते ।

गुणव्यतिरिक्तं च द्रव्यं रूपादिभ्यश्चार्थान्तरस्यानुपलब्धिरिति विरुध्यते । व्याहन्यते न संभवतीति (वात्स्या० ५।२।४)। [ख] कथायां स्ववचनार्थविरोधः । यथा पर्वतो वह्निमान् धूमात् यो यो धूमवान् स स निरग्निः इत्युदाहरणे निरग्निश्चायम् इत्युपनये च प्रतिज्ञाविरोधः (गौ० वृ० ५।२।४)। अत्रोच्यते । पदयोर्वाक्ययोर्वा य एकवक्तृकयोर्मिथः । व्याघातो निग्रहस्थानं स्यात्प्रतिज्ञादिरोधनः ॥ इति (ता० र० परि० श्लो० १३६)। [ग] स्वोक्तसाध्यादिविरुद्धहेत्वादिकथनम् । यथा द्रव्यं गुणभिन्नं रूपादितः पृथक्त्वेनानुपलभ्यमानत्वादिति (दि० १ पृ० २२) (नील० पृ० ४५)। प्रतिज्ञाविरोधश्च गुणेन्तर्भवतीति विज्ञेयम् (दि० १ पृ० २२)।

**प्रतिज्ञासंन्यासः**—(निग्रहस्थानम्) [क] पक्षप्रतिषेधे प्रतिज्ञातार्थस्यापनयनं प्रतिज्ञासंन्यासः (गौ० ५।२।५)। पक्षस्य स्वाभिहितस्य परेण प्रतिषेधे कृते सति तत्परिजिहीर्षया प्रतिज्ञातार्थस्यापनयनमपलापः इत्यर्थः (गौ० वृ० ५।२।५)। यथा अनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते परो ब्रूयात् सामान्यमैन्द्रियकम् न चानित्यम् एवं शब्दोप्यैन्द्रियको न चानित्य इति । एवं प्रतिषिद्धे पक्षे यदि ब्रूयात् कः पुनराह अनित्यः शब्दः इति । सोयं प्रतिज्ञातार्थनिह्नवः प्रतिज्ञासंन्यास इति (वात्स्या० ५।२।५)। [ख] स्वोक्तेर्थे परेण दूषिते तदपलापः । यथा शब्दः अनित्य ऐन्द्रियकत्वादित्युक्ते परेण सामान्ये व्यभिचारमुद्भाव्य दूषिते स्वोक्तमपलपति क एवमाह शब्दः अनित्यः इति (गौ० वृ० ५।२।५) (दि० १।२२) (नील० पृ० ४५) (ता० र० परि० ३ श्लो० १३७)। प्रतिज्ञासंन्यासश्च गुणेन्तर्भवतीति विज्ञेयम् ।

**प्रतिज्ञाहानिः**—(निग्रहस्थानम्) [क] प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः (गौ० ५।२।२)। साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेभ्यनुजानन्प्रतिज्ञां जहातीति प्रतिज्ञाहानिः । निदर्शनम् ऐन्द्रियकत्वादनित्यः शब्दो घटवदिति कृते अपर आह दृष्टमैन्द्रियकत्वं सामान्ये नित्ये कस्मान्न तथा शब्द इति प्रत्यव-

क्रियते इत्यत्र यथैन्द्रियकं सामान्यं नित्यम् कामं घटो नित्योस्त्विति । स खल्वयं साधकस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन्निगमनान्तमेव पक्षं जहाति । पक्षं जहत्प्रतिज्ञां जहातीत्युच्यते प्रतिज्ञाश्रयत्वात्पक्षस्येति ( वात्स्या० ५।२।२ ) । अत्र वृत्तिः । प्रतिकूलो दृष्टान्तो यत्र स प्रतिदृष्टान्तः परपक्षः । स्वः स्वीयो दृष्टान्तो यत्र स स्वदृष्टान्तः स्वपक्षः इति ( गौ० वृ० ५।२।२ ) । [ ख ] स्वपक्षे परपक्षधर्माभ्यनुज्ञा । स्वयं विशिष्याभिहितपरित्यागः इति फलितार्थः ( गौ० वृ० ५।२।२ ) । अत्रोच्यते । कथायां यच्च पक्षादि येन निर्दिष्टमादितः । तस्य तेन पुनस्त्यागः प्रतिज्ञाहानिरुच्यते ॥ इति ( ता० र० परि० ३ श्लो० १२४ ) । [ ग ] प्रतिज्ञातार्थविरुद्धाभ्युपगमः प्रतिज्ञातार्थपरित्यागो वा ( नील० पृ० ४५ ) । [ घ ] विशिष्य प्रतिज्ञातस्य पक्षादेः परित्यागः ( दि० १ पृ० २२ ) । पक्षस्य पक्षत्वेन प्रतिपादनाभावरूपता इति भावः ( राम० १ पृ० २२ ) । यथा शब्दः अनित्यः प्रत्यक्षगुणत्वादित्यत्र सोयं गकारः इत्यादिप्रत्यभिज्ञाबलात्परेण बाध उद्भाविते अस्तु तर्हि नित्यः शब्दः इति नित्यत्वमङ्गीकुर्वन्वादी शब्दस्यानित्यत्वप्रतिज्ञां जहाति ( नील० पृ० ४५ ) । सेयं पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात्पञ्चधा भवति । यथा (१) शब्दः अनित्यः कृतकत्वादित्युक्ते प्रत्यभिज्ञया बाधितविषयोयमित्युत्तरिते अस्तु तर्हि घट एव पक्षः इति । (२) एवम् तत्रैव ऐन्द्रियकत्वादिति हेतोरनैकान्तिकत्वमिति प्रत्युक्ते अस्तु कृतकत्वादिति हेतुरिति । (३) एवम् पर्वतो वह्निमान् धूमादयोगोलकवदित्युक्ते दृष्टान्तः साधनविकल इति प्रत्युक्ते अस्तु तर्हि महानसवदिति । (४) एवम् अत्रैव सिद्धसाधने च प्रत्युक्ते अस्तु तर्हि इन्धनवानिति । (५) *अन्यहानिस्तु विशेषणहान्यादिः । यथा तत्रैव नीलधूमादित्युक्ते* असमर्थविशेषणत्वेन प्रत्युक्ते अस्तु तर्हि धूमात् इति हेतुः इत्यादि ( गौ० वृ० ५।२।२ ) । प्रतिज्ञाहानिश्च अभावे अन्तर्भवतीति विज्ञेयम् ( दि० १ पृ० २२ ) ।

प्रतिज्ञानम् — स्वमतनिरूपकवाक्यम् ।

**प्रतितन्त्रसिद्धान्तः**—( सिद्धान्तः ) [ क ] समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ( गौ० १।१।२९ )। अत्र समानशब्द एकार्थः। तेन एकतन्त्रसिद्ध इत्यर्थः। स्वतन्त्रसिद्धः इति पर्यवसितोर्थः ( गौ० वृ० १।१।२९ )। यथा नासत आत्मलाभः न सत आत्महानम् निरतिशयाश्चेतनाः देहेन्द्रियमनःसु विषयेषु तत्तत्कारणेषु च विशेषः इति सांख्यानाम्। पुरुषकर्मनिमित्तो भूतसर्गः कर्महेतवो दोषाः प्रवृत्तिश्च स्वगुणविशिष्टाश्चेतनाः असदुत्पद्यते उत्पन्नं निरुध्यते इति नैयायिकानाम् ( वात्स्या० १।१।२९ )। [ ख ] वादिप्रतिवाद्येकतरमात्राभ्युपगतस्तदेकतरस्य प्रतितन्त्रसिद्धान्तः। यथा मीमांसकानां शब्दनित्यत्वम् ( गौ० वृ० १।१।२९ )। यथा वा नैयायिकानां शब्दानित्यत्वम् (प्र० प्र० )। यथा वा नैयायिकस्य मन इन्द्रियम्। तच्च समानतन्त्रे वैशेषिके सिद्धम् ( त० भा० पृ० ४३ )। [ ग ] स्वतन्त्र एव सिद्धोर्थः परतन्त्रनिवारितः। प्रतितन्त्रो यथा न्याये सर्वज्ञस्य प्रमाणता ॥ (ता० र० श्लो० ६०) इति। प्रतितन्त्रसिद्धान्तश्च यथायथं द्रव्यादावन्तर्भवतीति विज्ञेयम् (दि० १ पृ० २२)।

**प्रतिदानम्**—द्रव्यान्तरग्रहणपूर्वकं दानम्। यथा तिलानस्मै प्रतियच्छतीत्यादौ धात्वर्थः ( श० प्र० श्लो० ६९ टी० पृ० ८६ )।

**प्रतिदृष्टान्तसमः**—( जातिः ) [ क ] प्रतिदृष्टान्तेन प्रत्यवस्थानात्प्रतिदृष्टान्तसमः ( गौ० ५।१।९ )। प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः। क्रियावानात्मा क्रियाहेतुगुणयोगाल्लोष्टवदित्युक्ते प्रतिदृष्टान्त उपादीयते क्रियाहेतुगुणयुक्तमाकाशं निष्क्रियम् इति। कः पुनराकाशस्य क्रियाहेतुर्गुणः वायुना संयोगः संस्कारापेक्षः वायुवनस्पतिसंयोगवदिति ( *वात्स्या० ५।१।९* )। [ ख ] *प्रतिदृष्टान्तमात्रबलेन प्रत्यवस्थानम्*। मात्रपददानेन साधर्म्यसमव्युदासः। यथा यदि घटदृष्टान्तबलेनानित्यः शब्दस्तदा आकाशदृष्टान्तबलेन नित्य एव स्यात्। नित्यः किं न स्यात् इति बाधः प्रतिरोधो वा आपादनीयः। हेतुरनङ्गम् दृष्टान्तमात्रबलादेव साध्यसिद्धिरित्यभिमानः ( गौ० वृ० ५।१।९ )। [ ग ] दृष्टान्तान्तरेण साध्याभावसाधनम्। यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वा-

लोष्टवत् इत्यत्र लोष्टदृष्टान्तेन क्रियावत्त्वे साधिते निष्क्रियाकाशदृष्टान्तेनात्मनो निष्क्रियत्वमेव किं न स्यात् । लोष्टदृष्टान्तेन क्रियावत्त्वम् आकाशदृष्टान्तेन निष्क्रियत्वं न इत्यत्र नियामकाभावात् इत्यादि (नील० पृ० ४४) । [घ] अनङ्गत्वधिया हेतोः प्रतिदृष्टान्तमात्रतः । प्रत्यवस्थानमाचख्युः प्रतिदृष्टान्तलक्षणम् ॥ (ता० र० २ श्लो० ११४) । प्रतिदृष्टान्तसमश्च बाधप्रतिरोधान्यतरदेशनाभासः (गौ० वृ० ५।१।९) । स च असदुत्तरत्वेन गुणेन्तर्भवति (दि० १ पृ० २२) ।

**प्रतिनिधित्वम्**—तुल्यरूपतया मुख्यकार्यकारित्वार्थं निधीयमानत्वम् । यथा वैदिककर्मणि पुरोहितस्य औरसाभावे दत्तकादीनां च प्रतिनिधित्वम् । अत्रोच्यते । पुत्रं च विनयोपेतं भगिनीं भ्रातरं तथा । एषामभाव एवान्यं ब्राह्मणं विनियोजयेत् ॥ (स्कन्दपु०) इति । तद्यथा वैदिककर्माङ्गद्रव्यादीनां मुख्यानामलाभे तुल्यरूपतयान्यो विधीयते इति । तदेतत् सूत्रकारैः (कात्यायनश्रौत० १ कण्डिका० ४) व्यवस्थापितम् । तत्तत्रैव दृश्यम् । तथा दत्तकक्रीतपुत्रादीनां प्रतिनिधित्वं दत्तकमीमांसादौ व्यवस्थापितम् । तत्तत्रैव दृश्यम् ।

**प्रतिपक्षः**—१ विरोध्यनुमानम् । तच्च विरोधिव्याप्त्यादिमत्तया परामृश्यमानो हेतुः । विरोधिपरामर्शो वा (दीधि० २ सत्प्रति० पृ० २०८) । यथा सत्प्रतिपक्ष इत्यत्र ह्रदे धूमेन वह्निसाधने वह्न्यभावव्याप्यवान् ह्रदः इति परामृश्यमानो जलरूपो हेतुः तादृशपरामर्शो वा प्रतिपक्षः । २ विप्रतिपत्त्यपरकोटिः (गौ० वृ० १।१।४१) । यथा विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः (गौ० १।१।४१) इत्यादौ । ३ विरुद्धपक्षः । यथा परार्थानुमाने वादिना पर्वते वह्निसाधने कृते प्रतिवादिपक्षः पर्वतो न वह्निमान् इति प्रतिपक्षः । ४ प्रतिवादी इति व्यवहारज्ञा आहुः । ५ विरोधी । ६ शत्रुः इति काव्यज्ञा आहुः ।

**प्रतिपक्षितत्वम्**—१ सत्प्रतिपक्षः । २ प्रतिपक्षवदस्यार्थोनुसंधेयः ।

**प्रतिपत्**—चन्द्रस्य प्रथमकलया दर्शनयोग्यत्वसंपत्त्यर्थं यावान्कालोपेक्ष्यते स कालः । तथा च सूर्येण सहातिसंनिकृष्टस्य चन्द्रस्य यावता कालेन सूर्याद्द्वादशभिरंशैर्विप्रकर्षो भवति तावान्कालः शुक्लपक्षे प्रतिपच्छब्द-वाच्यः । एवमादित्यादतिविप्रकृष्टस्य चन्द्रस्य यावता कालेन द्वादश-भिरंशैः संनिकर्षो भवति तावान्कालः कृष्णपक्षे प्रतिपत्तिथिः (पु० चि० पृ० ३२ ) ।

**प्रतिपत्तिः**—१ बुद्धिवदस्यार्थोनुसंधेयः । २ [ क ] मीमांसकाश्च शेषस्य ( प्रधानादिकर्मण्युपयुक्तादवशिष्टस्य ) विहितस्थलविशेषे विनियोगः । यथा चात्वाले कृष्णविषाणां प्रास्यति ( तैत्ति० संहि० ६।१।३ ) इत्यादौ इत्याहुः । [ ख ] धर्मज्ञास्तु फलशून्यकर्माङ्गविशेषः । यथा श्राद्धादौ दत्तद्रव्यस्य कुशमयब्राह्मणपक्षे जलादौ निक्षेपः प्रतिपत्तिः । यथा वा पूजितप्रतिमादेश्च जलादौ निक्षेपः प्रतिपत्तिः इत्याहुः । [ ग ] उप-युक्तस्याकीर्णकरतानिवर्तकं कर्म ( मी० न्या० पृ० ३४ ) । ३ प्रवृत्तिः । ४ प्रागल्भ्यम् । ५ गौरवम् । ६ प्राप्तिः । ७ पदप्राप्तिः इति काव्यज्ञा आहुः ( वाच० ) ।

**प्रतिपादनम्**—१ प्रतिपत्त्यनुकूलशब्दप्रयोगः । यथा श्रुत्यर्थं प्रतिपाद-यतीत्यादौ । २ दानम् इति काव्यज्ञा आहुः ।

**प्रतिप्रसवः**—१ [क] प्रतिषिद्धैकदेशस्य पुनर्विधानम् । यथा अग्नीषोमीयपश्वा-लम्भनविधानम् । अत्र रागतः प्राप्तस्य मा हिंस्यात्सर्वा भूतानि इति श्रुतिवा-क्येन निषिद्धस्य हिंसासामान्यस्यैकदेश अग्नीषोमीयपश्वालम्भनम् अग्नि-षोमीयपशुमालभेत इति श्रुतिवाक्येन विधीयते इति । यथा वा न भक्ष-येदेकचरानज्ञातांश्च मृगद्विजान् । भक्ष्येष्वपि समुद्दिष्टान् सर्वान् पञ्चनखां-स्तथा ॥ ( मनु० अ० ५ श्लो० १७ ) इति निषिद्धस्य सर्वपञ्चनख-मांसभक्षणस्यैकदेशस्य पञ्चपञ्चनखमांसभक्षणस्य विधानम् । पञ्चपञ्च-नखाश्च मनुस्मृतौ ( अ० ५ श्लो० १८ ) आपस्तम्बधर्मसूत्रे ( १।५।१७।३७ ) चोक्ताः परिसंख्याशब्दे प्रदर्शिताः । [ ख ] निषिद्धस्य पुनः प्राप्तिसंभावना । यथा स्मार्तानां मते एकादश्यां निषि-

द्धस्य भोजनस्य एकादशीश्राद्धादौ प्राप्तिः संभाव्यते इति । २ प्रतिजन्म इति काव्यज्ञा आहुः ।

**प्रतिबन्दिः**—[ क ] प्रकृतैककल्पे प्रवृत्तं पुरुषमुद्दिश्याप्रकृतकल्पान्तरापादनम् । यथा अनुमित्यव्यवहितपूर्ववर्तिसिद्धिभिन्नसिद्ध्यभावमात्ररूपपक्षता चानुमितौ कारणं चेत् तदा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवर्तित्वविशिष्टज्ञानं कारणं स्यात् इति प्रतिबन्दिः ( दीधि० पक्षता० पृ० १२७–१२८ )। [ ख ] समानं विरोध्युत्तरम् ( राम० )।

**प्रतिबन्धः**—१ प्रतिरोधः । यथा मणिर्दाहप्रतिबन्धं करोति इत्यादौ । २ व्याप्तिः ( सांख्य० भा० १।१०० ) । यथा प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम् ( सांख्यसू० अ० १ सू० १०० ) इत्यादौ ।

**प्रतिबन्धकत्वम्**—[ क ] कारणीभूताभावप्रतियोगित्वम् ( कु० १ ) ( दि० ) ( सि० च० १ तेजोनि० पृ० ८ ) । अत्र कारणपदं क्वचित्प्रयोजकपरमपि ( मू० म० १ ) । कारणीभूतेत्यादेरर्थश्च स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावत्वावच्छिन्नकारणताया अवच्छेदको यो धर्मस्तद्वत्त्वम् ( कु० १ टी० ) । तद्धर्मावच्छिन्नकार्यतानिरूपिताभावत्वावच्छिन्नकारणतानिरूपितस्वावच्छिन्नप्रतियोगिताकत्वसंबन्धावच्छिन्नावच्छेदकताश्रयधर्मवत्त्वम् इति निष्कर्षः । यथा ह्रदो वह्निमान् इति बुद्धौ ह्रदो न वह्निमान् इति निश्चयस्य प्रतिबन्धकत्वम् । तथाहि । ह्रदो वह्निमान् इत्यनुमितौ कारणीभूतो यः अभावः ह्रदो वह्न्यभाववान् इति निश्चयाभावः तस्य प्रतियोगी ह्रदो वह्न्यभाववान् इति निश्चयः इति तस्य तथात्वं संपद्यते । अयं भावः । ह्रदो वह्न्यभाववान् इति निश्चयदशायां ह्रदो वह्निमान् इत्यनुमित्यनुदयात्तादृशनिश्चयाभावस्य तादृशानुमितिं प्रति कारणत्वमङ्गीकर्तव्यम् इति । यथा वा दाहं प्रति मणेः प्रतिबन्धकत्वम् । तथाहि । मणिसमवधानदशायां वह्नेर्दाहानुत्पत्त्या दाहं प्रति मण्यभावस्य कारणत्वेन तत्प्रतियोगित्वं संपद्यते । तत्र कारणत्वं मण्यभावत्वेन न तु प्रतिबन्धकाभावत्वेन । अतो नान्योन्याश्रयः ।

एवं प्रतिबन्धकाभावकूट एव कारणम्। तेन मणिसद्भावे यत्किंचिन्मण्याद्यभावेपि न कार्यम् (चि० २) इति। अत्र मीमांसकमतेन कार्यसहभावेन प्रतिबन्धकत्वं तु कार्यसहभावेन प्रतिबन्धकाभावरूपकारणदिशा व्यवस्थापनीयम्। [ ख ] कार्यानुकूलकिंचिद्धर्मविघटकत्वम्। यथा केषांचिन्मते दाहानुकूलशक्तिविघटकत्वं मण्यादेः (न्या० दी० पृ० १४)। निश्चयस्य प्रतिबन्धकत्वं पञ्चविधम्। तथाहि। तद्वत्ताबुद्धिं प्रति १ तदभाववत्तानिश्चयत्वेन २ तदभावव्याप्यवत्तानिश्चयत्वेन ३ तदभावावच्छेदकतया गृहीतधर्मवत्तानिश्चयत्वेन ४ तदसमानाधिकरणधर्मवत्तानिश्चयत्वेन ५ तद्व्यापकतावच्छेदकतया गृहीतधर्मावच्छिन्नाभाववत्तानिश्चयत्वेन च प्रतिबन्धकत्वम् इति। एवम् तद्वच्छेदवत्तानिश्चयत्वादिनापि प्रतिबन्धकत्वमवसेयम्। तत्राद्यं यथा ह्रदो वह्निमान् इति बुद्धिं प्रति ह्रदो न वह्निमान् इति निश्चयस्य प्रतिबन्धकत्वम्। द्वितीयम् ह्रदो वह्न्यभावव्याप्यवान् इति निश्चयस्य। तृतीयम् जलवान्वह्न्यभाववान् इति निश्चयविशिष्टस्य जलवान्ह्रदः इति निश्चयस्य। चतुर्थम् वह्न्यसमानाधिकरणजलवान् ह्रदः इति निश्चयस्य। पञ्चमम् ह्रदो धूमवान् इति बुद्धिं प्रति धूमव्यापकतावच्छेदकतया गृहीतं यद्वह्नित्वं तादृशवह्नित्वावच्छिन्नाभाववान्ह्रदः इति निश्चयस्य इति। कार्यमात्रं प्रति तु कामिनीजिज्ञासायाः स्वातन्त्र्येण मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वम्। क्वचित् कार्यविशेषं प्रति स्वातन्त्र्येण कस्यचित्प्रतिबन्धकत्वम्। यथा दाहं प्रति मणेः प्रतिबन्धकत्वम् इति। प्रत्यक्षं प्रति आनुमानिकनिश्चयो न प्रतिबन्धकः। किंतु शाब्दबोधं प्रत्यानुमानिकनिश्चयः प्रतिबन्धकः इति सामान्यतो निर्णयः (दीधि०)। अत्रायमर्थः समानविषये प्रत्यक्षानुमितिसामग्र्योरेककालावच्छेदेन सत्त्वे तयोर्मध्ये प्रत्यक्षसामग्री प्रबला इत्येतदनुभवसिद्धम्। तथा च तादृशप्रत्यक्षसामग्री तत्रत्यानुमितिं प्रतिबध्नाति। भिन्नविषये तु अनुमितिसामग्र्येव प्रबला। एवं च प्रबलो दुर्बलं प्रतिबध्नाति इत्यनुभवादत्रत्यविषये प्रतिबध्यप्रतिबन्धकभावप्रयोजकः प्रबलदुर्बलभाव एव इति। अधिकं तु सामग्रीशब्दव्याख्याने संपादयिष्यते इति तचत्रावलोकनीयम्।

**प्रतिबन्धिः( धी )**—[ क ]—प्रतिबन्दिवदस्यार्थोनुसंधेयः । [ ख ] प्रतिवादिमतेनिष्टान्तरप्रसञ्जनम् । यथा आद्ये प्रतिबन्धिमाह ( गौ० वृ० २।२।३४ ) इत्यत्र । अत्राधिकं तु प्रतिबन्दिशब्देवलोकनीयम् ।

**प्रतिबिम्बनम्**—१ अनुकरणम् । यथा दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ( सा० द० परि० १० श्लो० ६९८ ) इत्यादौ । २ बिम्बानुरूपप्रतिच्छायाभवनम् । यथा मायावादिवेदान्तिमते जीवेश्वरयोर्बिम्बप्रतिबिम्बभावः इत्यादौ । अत्राधिकं तु सिद्धान्तलेशे द्रष्टव्यम् ।

**प्रतिभा**—( बुद्धिः ) १ [ क ] स्फूर्त्याख्यो बुद्धिविशेषः ( दि० १ मङ्ग० पृ० ८ ) । यथा समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात् ( मु० १ मङ्गल० ) इत्यादौ । [ ख ] प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ( रुद्र० ) । २ दीप्तिः इति केचिद्वदन्ति ।

**प्रतिभूः**—[ क ] प्रति भवति तत्कार्ये तद्वद्भवतीति प्रतिभूः ( मिता० अ० २ श्लो० १० ) ( जामीन इति प्र० ) । [ ख ] धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः (सिद्धान्तकौमुदी पृ० ३१४) ।

**प्रतियोगः**—१ विरोधः । २ विरुद्धसंबन्धः ।

**प्रतियोगिता**—१ विरोधित्वम् ( निषेध्यत्वम् ) ( न्या० सि० दी० पृ० ५६ ) । घटाभावस्य घटो विरोधी भवति इति तस्य तथात्वं संपद्यते । तच्च स्वरूपसंबन्धविशेषः ( दीधि० २ ) ( त० प्र० ) । यथा घटो नास्तीत्यादौ घटे अभावप्रतियोगितास्ति । अत्र अभावनिरूपिता घटनिष्ठा प्रतियोगितास्ति इति तदर्थो ज्ञेयः । अत्रेदमवधेयम् । घटाभावादिबुद्धेर्विशिष्टवैशिष्ट्यावगाहिबुद्धितया अभावबुद्धिर्विशेष्यविशेषणसंसर्गावगाहिनी विशिष्टबुद्धित्वात् संयोगेन घटवद्भूतलम् इत्यादिबुद्धिवत् इत्यनुमानेन अभावे घटादिवैशिष्ट्यबुद्धौ संबन्धतया अतिरिक्तप्रतियोगित्वसिद्धिः इति नव्यनैयायिका आहुः । अत्रायं नियमः अभावप्रत्ययो विशिष्टमर्यादां नातिशेते इति । श्रीहर्षखण्डनादौ दीधितिकारमते च तस्य स्वरूपसंबन्धविशेषरूपत्वेन प्रतियोगिस्वरूपत्वमनुयोगिस्वरूपत्वं वा स्वीकार्यम् ।

तेनैवोपपत्तौ न प्रतियोगित्वरूपातिरिक्तपदार्थकल्पना इति । अत्रो-पयोगित्वेनाधिकमुच्यते । प्रतियोग्यभावान्वययोस्तुल्ययोगक्षेमता इति न्यायः । तदर्थश्च यादृशसमभिव्याहारस्थले येन संबन्धेन यद्धर्मिणि येन रूपेण यद्वत्त्वं नञसत्त्वे प्रतीयते तादृशस्थले नञा तद्धर्मिणि तादृश-संबन्धावच्छिन्नतादृशधर्मावच्छिन्नप्रतियोगिताकतदभावः प्रत्येतव्यः ( ग० व्यु० का० १ ) । यथा पीतघटे घटो न नीलः इति वाक्यं प्रयुज्यते। तत्र नञ्विनिर्मोकदशायां घटो नीलः इत्यत्र येन संबन्धेन ( तादात्म्य-संबन्धेन ) नीलपदार्थो घटे प्रतीयते तेनैव संबन्धेन नीलप्रतियोगिका-भावः घटो न नीलः इति वाक्यात्प्रत्येतव्यः इति ( कृष्ण० ) । एवम् अत्यन्ताभावस्थलेपि भूतले घटो नास्ति इत्यादौ पूर्वोक्तो न्यायः संयोज-नीयः । केचित्तु प्रतिकूलसंबन्धवत्त्वम् प्रतियोगित्वम् । यथा घटाभावस्य संबन्धः स्वरूपसंबन्धः तस्य प्रतिकूलः संयोगः तद्वत्त्वात् घटो घटा-भावस्य प्रतियोगी भवति इत्याहुः । अखण्डो धर्मविशेषः प्रतियोगिता इति संप्रदायः ( मू० म० १ ) । अन्योन्याभावविरहात्मत्वम् इत्यप्यन्य आहुः ( वै० उ० ९।१।८ ) ( न्या० सि० दी० पृ० ५६ ) । अत्रा-चार्या आहुः अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ( कु० स्त० ३ श्लो० १ ) इति । एतन्मते इदं च वस्तुनिष्ठमभावनिरूपितं प्रतियोगित्वम् इति विज्ञेयम् । अत्र च यस्य पदार्थस्य अभावः तत्त्वं प्रतियोगित्वम् इति लौकिकजना वदन्ति । २ वित्तिवेद्यत्वम् ( चि० ३ ) । यथा चन्द्रवन्मुखमित्यादौ चन्द्रस्य सादृश्यप्रतियोगित्वम् । ३ अन्वयित्वम् ( अन्वयप्रतियोगित्वम् ) । तच्च स्वरूपसंबन्धविशेषः । यथा चैत्रस्य पुत्र इत्यादौ षष्ठ्यन्तार्थस्य प्रतियोगित्वम् । यथा वा संयोगेन घटव-द्भूतलमित्यादौ घटे भूतलानुयोगिकसंयोगसंबन्धप्रतियोगिता । अत्र विशिष्टबुद्धौ प्रकारतया भासमानस्य घटस्य संसर्गप्रतियोगित्वम् इति विशेष्यतया भासमानस्य तु भूतलस्य अनुयोगित्वम् इति च ज्ञेयम् । ४ निरूपकत्वम् । यथा प्रकारताप्रतियोगित्वमनुमितौ ( ग० सामा० अत्र वदन्ति इति कल्पे ) । यथा वा विलक्षणविषयताप्रतियोगिकत्वं संशयत्वम् इत्यादौ ( ग० सत्प्र० अर्वाचीन० पृ० १४ ) । ५ स्वाश्रय-

संयुक्तत्वम् । यथा देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वान्मद्व-दित्यत्र जीवनप्रतियोगित्वम् ( दीधि० बाध० २ पृ० २३ ) ( चि० २ पृ० ६८ ) इत्यादौ आत्मनो जीवनस्य मरणस्य वा प्रतियोगित्वम् । अत्र आत्मशरीरविभागस्य चरमप्राणशरीरसंयोगध्वंसस्य वा मरणरूपत्वे स्वं विभागः ध्वंसो वा । तदाश्रयः शरीरम् । तत्संयुक्तत्वमात्मनः इति लक्षणसंगतिः । जीवनप्रतियोगित्वं तु सदेहात्ममनःसंयोगस्य जीवन-रूपत्वे स्वीकर्तव्ये तादृशसंयोगानुयोगित्वमेवात्मनः प्रतियोगित्वम् इति विज्ञेयम् ।

**प्रतियोगितावच्छेदकः**—येन रूपेण ( धर्मेण ) यस्याभावादौ प्रतियोगिता बोध्यते स धर्मः । यथा घटाभावे घटस्य घटत्वरूपेण प्रतियोगिता बोध्यते । अतस्तत्र घटत्वं प्रतियोगितावच्छेदकम् । स च धर्मः क्वचि-देकः क्वचिदनेकश्च । तत्र वह्निर्नास्तीत्यादौ वह्नित्वमेकम् । महानसीय-वह्निर्नास्तीत्यादौ महानसीयत्वं वह्नित्वं चेत्युभयम् । घटपटोभयं नास्ती-त्यादौ तु घटत्वम् पटत्वम् उभयत्वं चेति त्रयम् इत्यादिकमनेकम् । संबन्धोपि प्रतियोगितावच्छेदको भवति । स च येन संबन्धेन प्रति-योगिताया अभावांशे भानम् तादृशः संबन्धः । यथा संयोगेन घटो नास्ति इत्यादौ संयोगेन घटस्याभावांशे प्रतियोगिताभानम् इति तत्र संयोगसंबन्धः प्रतियोगितावच्छेदकसंबन्धः । एवम् साध्यतावच्छेदक-संबन्धः पक्षतावच्छेदकसंबन्धः आधेयतावच्छेदकसंबन्धश्च इत्यादिक-मूह्यम् । अधिकं चावच्छेदकशब्दे दृश्यम् ।

**प्रतिरुद्धः**—१ प्रकरणसमशब्दवदस्यार्थोनुसंधेयः ( ता० र० श्लो० ८३ ) । २ प्रतिरोधकर्मा । यथा साध्यविरोध्युपस्थानसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिङ्गत्वम् ( चि० २ सत्प्र० पृ० ९४ ) इत्यादौ ।

**प्रतिरोधः**—१ सत्प्रतिपक्षदोषः । यथा पक्षसाध्यसाधनाप्रसिद्धिस्वरूपा-सिद्धिबाधप्रतिरोधानां निरासः ( दीधि० ) इत्यादौ । २ प्रतिबन्धः कार्यविशेषानुत्पादो वा । ३ तिरस्कारः । ४ हठचौर्यम् इति व्यवहारज्ञा आहुः ( वाच० ) ।

**प्रतिवादः**—वादिप्रयुक्तन्यायवाक्यविरुद्धन्यायवाक्यप्रयोगः । यथा अनेन चौर्यं कृतम् लोप्त्रग्रहणकारणात् इत्यादिवाक्ये वादिना प्रयुक्ते तन्न कृतम् तद्विपरीतकारणात् इति प्रतिवादिप्रयोगः प्रतिवादः ।

**प्रतिवादी**—[ क ] वादिप्रयुक्तन्यायवाक्यविरुद्धन्यायवाक्यप्रयोगकर्ता । यथा पर्वते वह्निसिद्धये वादिना पर्वतो वह्निमान् धूमवत्त्वात् इत्यादिन्यायवाक्ये प्रयुक्ते तद्विरोधेन पर्वतो न वह्निमान् पाषाणमयत्वात् इत्यादि विरुद्धवाक्यं येन प्रयुज्यते सः । [ ख ] अर्थिप्रतिपक्षः । [ ग ] प्रत्यर्थी च इति व्यवहारशास्त्रज्ञा आहुः ( मिता० अ० २ श्लो० ६ ) ।

**प्रतिविधानम्**—१ कृषिशब्दे दृश्यम् । २ प्रतीकारः । ३ प्रकृतस्योपपादनाद्यर्थमुपायावलम्बनम् ( वाच० ) ।

**प्रतिश्रवणम्**—१ देयत्वेनाभ्युपगमः । यथा गुरवे गां प्रतिशृणोति आशृणोतीत्यादौ धात्वर्थः । अत्र धात्वर्थे गोर्विशेष्यत्वेन तदेकदेशे च दाने गुरोरुद्देश्यत्वेन अन्वयः । तेन गुरूद्देश्यकदानकर्मत्वेन गामभ्युपगच्छति इत्येवं तत्र बोधः ( श० प्र० श्लो० ६९ टी० पृ० ८६–८७ ) । २ प्रतिशब्दः इति काव्यज्ञा आहुः ।

**प्रतिषेधः**—१ [ क ] प्रसज्यप्रतिषेधवदस्यार्थोऽनुसंधेयः ( म० प्र० ४ पृ० ४८ ) ( पर्युदासशब्दे दृश्यम् ) । [ ख ] निषेधः । [ ग ] मीमांसकास्तु मा कुरु इति निवारणम् । यथा प्राधान्यं हि विधेर्यत्र प्रतिषेधे-प्रधानता[1] ( मीमां० का० ) इत्यादौ इत्याहुः । [ घ ] प्रतिषेधः स विज्ञेयो यत्रोत्तरपदेन नञ् ( मी० न्या० पृ० ६२ ) । २ दूषणाभिधानम् । ३ अर्थालंकारविशेषः इत्यालंकारिका आहुः ।

**प्रतिसंधानम्**—१ ज्ञानम् । अनुसंधानमप्येवमेव व्याख्येयम् । २ अन्वेषणम् । ३ अनुचिन्तनम् । ४ नष्टद्रव्यस्योपलब्धिव्यापारः ( वाच० ) ।

**प्रतीकः**—१ अवयवः ( भागः ) । यथा प्रत्यक्षोपजीवकत्वात् ( चि० २ पृ० १ ) इति ग्रन्थस्य प्रत्यक्षविति ( दीधि० २ पृ० १ ) इति प्रतीको दीधितिकारेण गृहीतः । अत्रायं नियमः । यत्र समासघटकस्य अच्-

---

१ अप्रधानता इति पदच्छेदः ।

सहितस्य प्रतीकधारणम् तत्र श्रूयमाणाच्संवलितस्यैव प्रतीकधारणम् इति । तेन पूर्वोक्तस्थले प्रत्यक्षेति इत्युपेक्ष्य प्रत्यक्षविति इति प्रतीकधारणं दीधितिकृतां संगच्छते ( ग० पक्ष० पृ० १ ) । समासघटकस्येत्युक्तत्वेन नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः ( चि० २ पृ० २ ) इत्यत्र नन्वेति इत्युपेक्ष्य नन्विति ( दीधि० २ पृ० ११ ) इति प्रतीकधारणं दीधितिकृतां न विरुध्यते । नन्वनुमितीत्यत्र ननु इत्यस्य समासघटकत्वाभावात् ( न्या० र० पक्ष० पृ० ३१५ ) । अच्सहितस्येत्युक्तत्वेन साध्यवदन्यावृत्तित्वम् ( चि० २ पृ० २ ) इत्यस्य साध्यवदेति इत्युपेक्ष्य साध्यवदिति ( दीधि० २ पृ० १२ ) इति प्रतीकधारणं दीधितिकृतां न विरुध्यते । तत्र साध्यवदित्यादौ हलन्तस्यैव धारणात् इति ( न्या० र० पक्ष० पृ० ३१५ ) । २ प्रतिरूपम् । ३ विलोमः ।

**प्रतीक्षा**—निर्ज्ञातप्रास्यर्थप्रतीक्षणम् ( काठ० उ० १।८ भाष्यम् ) ।

**[प्र]तीची**—( दिक् ) [ क ] यदपेक्षया सूर्यास्ताचलसंनिहिता या दिक् सा स[त्]दपेक्षया प्रतीची ( वै० उ० २।२।१० पृ० ११५ ) । संनिधानं तु दि[क्सं]युक्तसंयोगाल्पीयस्त्वम् । ते च सूर्यसंयोगा अल्पीयांसो भूयांसो वा गादिन्[उ]पनेयाः ( वै० उ० २।२।१० पृ० ११५ ) । पश्चिमदिग्वर्तिन- इति ( [illegible] सहादित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताद्वा प्रतीचीव्यवहारः व्यवहिता य[े] [illegible] उ० २।२।१५ ) । [ ख ] यदा यत्पुरुषस्योदयगिरि- [ ग ] अस्ता[illegible] दिक् सा तत्पुरुषस्य प्रतीची ( मु० १ पृ० ९३ ) । ( न्या० बो[illegible]चलसंनिहितदेशावच्छिन्ना दिक् ( वाक्य० १ पृ० ५ ) काशीनिष्ठोद[illegible] १ पृ० ३ ) । यथा काशीतः प्रतीच्यां प्रयागः । अत्र दयगिरिसं[illegible]यगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्यापकसंख्यापर्याप्त्यधिकरणो- पृ० ९[illegible]युक्तसंयोगवन्मूर्तवृत्तिः प्रयागः इति शाब्दबोधः ( दि० १।२

**प्रतीति**[illegible] ) । यथा वा झळकीग्रामतः प्रतीच्यां रत्नागिरिपुरम् इति ।

[illegible]—१ बुद्धिवदस्यार्थोनुसंधेयः । २ ख्यातिः । ३ आदरः । ४ हर्षः [illegible]( वाच० ) ।

**प्रत्यक्षम्**—१ ( अनुभवः ) [ क ] इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ( गौ० १।१।४ ) ( त० सं० ) ( मु० १।२ पृ० १०८ )। तदर्थस्तु अव्यपदेश्यम् अशाब्दं ज्ञानम् ( वात्स्या० १।१।४ ) । निर्विकल्पकज्ञानम् ( गौ० वृ० १।१।४ ) ( दि० १।२ ) । अव्यभिचारि भ्रमभिन्नं ज्ञानम् ( वात्स्या० ) ( गौ० वृ० ) । व्यवसायात्मकम् सविकल्पकम् ( वात्स्या० १।१।४ ) ( गौ० वृ० १।१।४ ) । अत्र इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानम् इति प्रत्यक्षलक्षणे आत्ममनःसंयोगजन्यसुखादिवारणाय ज्ञानम् इति पदं दत्तम् ( गौ० वृ० १।१।४ ) । इन्द्रियत्वावच्छिन्नकारणतानिरूपितकार्यताशालिज्ञानत्वम् इत्यर्थः इति प्राञ्च आहुः ( म० प्र० १ पृ० ८ )। इदं च जन्यप्रत्यक्षस्यैव लक्षणम् इति बोध्यम् । तदुत्पत्तिप्रकारस्तु आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेन । ततः प्रत्यक्षं ज्ञानमुत्पद्यते ( वात्स्या० १।१।४ ) ( तर्कभा० पृ० ६ ) ( त० कौ० )। अत्र प्रत्यक्षत्वं च ज्ञानत्वव्याप्यजातिविशेषः । अत्र व्युत्पत्तिः अक्षमक्षं प्रतीत्योत्पद्यते इति प्रत्यक्षम् इति । अक्षाणीन्द्रियाणि घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि षट् ( प्रशस्त० गु० पृ० २५ ) । प्रतिगतमाश्रितमक्षम् । अत्यादयः क्रान्ताद्यर्थे द्वितीयया ( २।२।१८ पा० सूत्रे वार्तिकम् ) इत्यनेन समासः । प्राप्तापन्नालंगतिसमासेषु परवल्लिङ्गप्रतिषेधात् अभिधेयवल्लिङ्गे सति सर्वलिङ्गः प्रत्यक्षशब्दः सिद्धः ( न्या० बि० १ पृ० ७ )। अत्र भाष्यम् । इन्द्रियस्यार्थेन संनिकर्षादुत्पद्यते यज्ज्ञानं तत्प्रत्यक्षम् । न तर्हीदानीमिदं भवति । आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति ( वात्स्या० १।१।४ ) । अत्रेदं बोध्यम् । इन्द्रियाणां वस्तु प्राप्य प्रकाशकारित्वम् इति नियमोत्र द्रष्टव्यः ( म० प्र० ) ( त० भा० पृ० ६ ) । प्रत्यक्षं प्रति विषयस्य तादात्म्येन हेतुत्वम् इति नैयायिकानुभवसिद्धः कार्यकारणभावः । भट्टास्तु विषयस्य कार्यकालवृत्तित्वेन हेतुत्वम् न तु नैयायिकमत इव कार्यपूर्ववृत्तित्वेन हेतुत्वम् इत्यङ्गीचक्रुः ( त० प्र० ४ पृ० १२४ ) । [ ख ] ज्ञानाकरणकं ज्ञानम्

( चि० १ ) ( न्या० बो० १ पृ० ११ ) ( मु० १।३ पृ० १०९ )। ज्ञानकरणकत्वाव्यभिचारिजातिशून्यज्ञानत्वम् इति विवक्षितोर्थः ( दि० १।३ पृ० १०३ ) । इदं च जीवेश्वरोभयप्रत्यक्षसाधारणं लक्षणम् इति विज्ञेयम् ( न्या० बो० १ पृ० ११ ) । तथा च ईश्वरप्रत्यक्षस्य नित्यत्वेन न किंचिदपि करणमस्ति । जीवप्रत्यक्षस्य चेन्द्रियमेव करणम् न किंचिदपि ज्ञानं करणम् । एवं चोभयोः प्रत्यक्षयोर्ज्ञानाकरणकत्वमक्षुण्णमेव इति लक्षणसमन्वयः । [ ग ] साक्षात्कारत्वव्यञ्जकविषयताविशेषवज्ज्ञानम् ( ग० सव्य० ) । अत्र साक्षात्कारत्वं च साक्षात्करोमि इत्यनुव्यवसायसाक्षिको जातिविशेषः । अथवा जन्यधीजन्यमात्रवृत्तिर्मानसावृत्तिर्या जातिः तच्छून्यज्ञानत्वम् ( न्या० म० १।२ पृ० ३ ) ( म० प्र० पृ० ९ ) । भवति हि जन्यं ज्ञानम् ( व्याप्तिज्ञानम् अतिदेशवाक्यार्थज्ञानम् पदज्ञानादि ) । तज्जन्यम् अनुमित्युपमितिशाब्दबोधादि । तन्मात्रवृत्तिर्मानसावृत्तिश्च या जातिः अनुमितित्वोपमितित्वशाब्दबोधत्वादिः तच्छून्यत्वं साक्षात्कारे वर्तते इति लक्षणसंगतिः (त० प्र० १ पृ० १५ ) । अत्र पदप्रयोजनादिकं च तर्कप्रकाशे सविस्तरं कथितम्। तच विस्तरभयान्नात्र संगृहीतम् । [ घ ] प्रतिविषयाध्यासः प्रत्यक्षम् इति सांख्याः आहुः । [ ङ ] साक्षाद्धीः इति प्राभाकरा आहुः ( चि० १ ) । साक्षात्त्वं च साक्षात्करोमि इत्यनुव्यवसायगम्यो जातिविशेषः ( चि० १ ) ( न्या० म० १ पृ० २ ) । न्यायमते साक्षात्त्वं च जातिविशेषः एव । प्राभाकरमते तु साक्षात्त्वं न जातिः । नियतव्यञ्जकाभावादिति ( चि० १ पृ० ५५६ ) । [ च ] यत्किंचिदर्थस्य साक्षात्कारिज्ञानमिति बौद्धा आहुः ( न्या० बि० १ पृ० ७ ) । [ छ ] वैशिष्ट्यानवगाहिज्ञानं प्रत्यक्षम् इति नास्तिका आहुः । [ ज ] अन्तःकरणवृत्त्यवच्छिन्नचैतन्येन विषयस्फुरणम् प्रत्यक्षम् इति मायावादिनो मन्यन्ते । अत्रोच्यते । बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् । तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥ इति ( पञ्चद० ७।९१) । मायावादिमते प्रत्यक्षलक्षणं च तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम् ( वेदा० परि०

प० १ पृ० १२ ) । न्यायमतसिद्धं प्रत्यक्षं द्विविधम् । नित्यम् अनित्यं च । तत्र नित्यं भगवतः । अनित्यं जीवस्य । अनित्यं प्रत्यक्षं द्विविधम् । लौकिकम् अलौकिकं च । तत्र लौकिकं प्रत्यक्षं द्विविधम् । सविकल्पकम् निर्विकल्पकं च । अत्रोच्यते । अपरोक्षप्रमाव्याप्तं प्रत्यक्षं द्विविधं मतम् । सविकल्पकमित्येकमपरं निर्विकल्पकम् ॥ इति ( ता० र० श्लोक० ११-१२ ) । प्रकारान्तरेण लौकिकं प्रत्यक्षं षड्विधम् । घ्राणजम् रासनम् चाक्षुषम् स्पार्शनम् श्रौत्रम् मानसं चेति ( न्या० म० १ पृ० ३ ) ( भा० प० श्लो० ५२ ) ( त० सं० ) ( त० भा० पृ० ६ ) ( त० कौ० पृ० ८ ) । अलौकिकं तु त्रिविधम् । सामान्यलक्षणम् ज्ञानलक्षणम् योगजं च । त्रिविधमपीदं प्रत्यक्षं सविकल्पकमेव ( त० व० ) ( मु० १ परि० ३ ) । २ ( प्रमाणम् ) [ क ] साक्षात्काररूपप्रमाकरणम् ( न्या० म० १ पृ० २ ) । अत्रार्थे प्रतिगतमक्षं प्रत्यक्षम् इति व्युत्पत्तिः ( गौ० वृ० १।१।४ ) ( न्या० वा० १ पृ० ३० ) । अथवा अक्षस्याक्षस्य प्रतिविषयं वृत्तिः । वृत्तिस्तु संनिकर्षो ज्ञानं वा । यदा संनिकर्षस्तदा ज्ञानं प्रमितिः । यदा ज्ञानं तदा हानोपादानोपेक्षाबुद्धयः फलम् ( वात्स्या० १।१।३ ) । [ ख ] साक्षात्कारिप्रमाकरणम् ( त० भा० पृ० ५ ) । [ ग ] प्रत्यक्षप्रमायोगव्यवच्छिन्नं प्रत्यक्षप्रमाणम् । ( अयोगव्यवच्छिन्नमिति पदच्छेदः ) । तच्च ईश्वरघ्राणरसनचक्षुःस्पर्शनश्रोत्रमनोलक्षणम् । [ घ ] प्रत्यक्षज्ञानकरणम् ( त० सं० ) । इदं च प्रमाणतदाभाससाधारणं लक्षणमपि स्यात् इति भाति । तच्च करणं त्रिविधम् । कचित् इन्द्रियम् कचित् इन्द्रियार्थसंनिकर्षः कचित् ज्ञानं च । तत्राद्यम् निर्विकल्पकज्ञाने करणम् । तथाहि यदार्थसंनिकृष्टेनेन्द्रियेण निर्विकल्पकात्मकं ज्ञानं फलमुत्पद्यते तस्य ज्ञानस्येन्द्रियं करणम् । छिदाया इव परशुः । इन्द्रियार्थसंनिकर्षो व्यापारः । छिदाकरणस्य परशोरिव दारुसंयोगः । निर्विकल्पकज्ञानं फलम् । परशोरिव छिदा । अत्र कश्चिदाह सविकल्पकादीनामपीन्द्रियं करणम् । यावन्ति त्वान्तरालिकानि संनिकर्षादीनि तानि सर्वाण्यवान्तरव्यापाराः इति ( त० भा० प्रमाणनि० पृ० ६ ) । द्वितीयम् सविकल्पकज्ञाने निर्वि-

कल्पकज्ञानद्वारा करणम् । तथाहि । यदा निर्विकल्पकज्ञानानन्तरं सविकल्पकज्ञानमुत्पद्यते तदा इन्द्रियार्थसंनिकर्षः करणम् । निर्विकल्पकज्ञानमवान्तरव्यापारः । सविकल्पकं ज्ञानं फलम् इति (त० भा० प्रमाण० पृ० ६) । तृतीयं च निर्विकल्पकज्ञानम् । तच्च सविकल्पकज्ञानानन्तरं यत्र हानोपादानोपेक्षाबुद्धयो भवन्ति तत्र सविकल्पकज्ञानं द्वारीकृत्य करणम् (सि० च० १ पृ० २१) । तथाहि । यदा सविकल्पकज्ञानानन्तरं हानोपादानोपेक्षाबुद्धयो जायन्ते तदा निर्विकल्पकं ज्ञानं करणम् । सविकल्पकज्ञानमवान्तरव्यापारः । हानादिबुद्धयः फलम् (त० भा० प्रमाण० पृ० ६) इति । अत्राहुः । सर्वत्रापि द्रव्यगुणकर्मादिप्रत्यक्षे इन्द्रियमेव करणम् । विषयेन्द्रियसंयोगः इन्द्रियमनःसंयोगो वा व्यापारः । द्रव्यगुणकर्मादिप्रत्यक्षं फलम् इति । तत्र षड्विधद्रव्यप्रत्यक्षे त्वङ्मनःसंयोगो महत्त्वं च कारणम् । तत्र द्रव्यचाक्षुषप्रत्यक्षे तु महत्त्वम् अनेकद्रव्यत्वम् उद्भूतरूपम् प्रकाशश्च कारणम् (प्रशस्त० गु० पृ० २५) । अत्र च येनेन्द्रियेण यद्वस्तु गृह्यते तेनेन्द्रियेण तद्गतं सामान्यं तत्समवायस्तदभावश्च गृह्यते इति नियमो ग्राह्यः (प्र० प्र०) । तत्रेन्द्रियात्मकं प्रत्यक्षं द्वेधा । द्रव्यग्राहकम् द्रव्याग्राहकं च । आद्यम् चक्षुस्त्वङ्मनांसि । द्वितीयम् घ्राणम् रसनम् श्रवणम् इति (न्या० म० १ पृ० ५) । यत् संबद्धं सत् तदाकारोल्लेखि विज्ञानम् तत् प्रत्यक्षम् इति सांख्या आहुः (सांख्य० सू० १।८९) । ३ प्रत्यक्षात्मकज्ञानविषयः । यथा वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वाद्घटवत् (त० दी० १ पृ० ९) इत्यादौ । अत्र प्रत्यक्ष इत्यस्य बहिरिन्द्रियजन्यप्रत्यक्षविषयः इत्यर्थः (नील० १ वायुनि० पृ० ९) । मायावादिमते अत्रत्यप्रत्यक्षलक्षणं च स्वाकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताकत्वशून्यत्वे सति वर्तमानयोग्यत्वम् (वेदा० प० परि० १ पृ० १४) ।

**प्रत्यनुमानम्**—प्रतिपक्षानुमानम् । यथा पर्वतो वह्निमान् धूमात् इति वादिनोक्ते पर्वतो वह्न्यभाववान् पाषाणमयत्वात् इति प्रतिवादिनः प्रतीपानुमानम् ।

**प्रत्यभिज्ञा**—( प्रत्यक्षम् ) [ क ] अतीतावस्थावच्छिन्नवस्तुग्रहणम्। प्रत्यभिज्ञाप्रत्यक्षे हि अतीतापि पूर्वावस्था स्फुरत्येव ( त० भा० प्रमाण० शब्द० पृ० १९ )। प्रत्यभिज्ञाशब्दस्येत्थं व्युत्पत्तिः। प्रतिगता अभिज्ञाम् इति प्रत्यभिज्ञा ( वाच० )। तल्लक्षणं तु इन्द्रियसहकृतसंस्कारजन्यज्ञानत्वम् ( ल० व० ) ( न्या० सि० दी० पृ० ५९ )। प्रत्यभिज्ञायामुपनीततत्तादिविषयकत्वरूपमुपनीतभानमानुभाविकम् इति बोध्यम् ( दीधि० बाध० )। प्रत्यभिज्ञायामात्मा विषयः इति सिद्धान्तः। मायावादिनस्तु अन्तःकरणविशिष्ट एवात्मा प्रत्यभिज्ञाविषयः न तु केवलश्चिदात्मा इत्याहुः। अत्र प्राभाकराः सोहम् इति प्रत्यभिज्ञायां विषयत्वेनाश्रयो नात्मा सिध्यति। किं तर्हि सोयं घटः इत्यादिप्रत्यभिज्ञाश्रयत्वेन इत्यमन्यन्त ( विवरणप्रमेयसंग्रहे ) ( वाच० )। [ ख ] अतीतावस्थावच्छिन्नस्य वर्तमानभेदावगाहि प्रत्यक्षम् ( प० च० )। सा च यथा स एवायं घटः यो मया पूर्वमुपलब्धः इत्याकारिका पूर्वावस्थानुभवजनितसंस्कारसहकृतेन्द्रियप्रभवा प्रत्यभिज्ञा ( त० भा० हेत्वाभा० पृ० ५० )। यथा वा स एवायं चैत्रः इति प्रतिसंधानेनाभिमुखीभूते वस्तुनि ज्ञानम् ( सर्व० पृ० १९३ प्रत्यभि० )। अत्र तद्देशकालवृत्तित्वरूपतत्तासंस्कारात् स एवायं घटः इति प्रत्यभिज्ञा जायते इति बोध्यम् ( नील० १ पृ० १४ )। [ ग ] तदनुगृहीतस्तदनुसंधानविषयः प्रत्ययस्तद्भावविषयः प्रत्यभिज्ञानम् ( न्या० वा० )।

**प्रत्यभिज्ञाशास्त्रम्**—सूत्रं वृत्तिर्विवृतिर्लघ्वी बृहतीत्युभे विमर्शिन्यौ। प्रकरणविवरणपञ्चकमिति शास्त्रं प्रत्यभिज्ञायाः॥ (सर्व० सं० पृ० १९१ प्रत्य०)।

**प्रत्ययः**—१ बुद्धिवदस्यार्थोनुसंधेयः। सांख्यास्तु स्रक्चन्दनादिविषयसंनिकर्षादिन्द्रियप्रणाडिकयैव सुखदुःखाद्याकारो बुद्धेरेव यः परिणामविशेषः ( महत्तत्त्वधर्मः ) स प्रत्ययः इत्याहुः ( वै० उ० ८।१।१ )। २ अधीनः। ३ शपथः। ४ विश्वासः। ५ निश्चयः। ६ हेतुः। ७ छिद्रम्। ८ आचारः। ९ ख्यातिः। १० स्वादु। ११ सहकारिकारणम् ( वाच० )। १२ ( सार्थकः शब्दः ) [ क ] यादृशार्थक-

प्रकृतिनिपाताभ्यां भिन्नो यादृशार्थे शक्तिनिरूढलक्षणान्यतरात्मकप्रशस्त-वृत्तिमान् यादृशः शब्दः स तादृशार्थकप्रत्ययः । यथा एकत्वार्थकाः सुबादयः प्रत्ययाः । शक्त्या निरूढलक्षणया च गुणगुणिनोः स्थिति-प्रस्थानयोश्च बोधका अपि शुक्लस्थाप्रभृतयः प्रकृतिभ्यो न भिन्नाः तथा शक्त्या समुच्चयादिप्रतिपादका अपि चादयो न निपातेभ्यः भिन्नाः इति तत्र नातिव्याप्तिः ( श० प्र० श्लो० ८ टी० पृ० १० ) । [ ख ] यः शब्दः शब्दान्तरार्थाविशेषिते यादृशस्वार्थे धर्मिणि तिङर्थस्यान्वयबोधने स्वरूपायोग्यः स वानिभादिशब्देभ्यो भिन्नस्तादृशार्थे प्रत्ययः । यथा पचतीत्यादौ तिङाम् पाचकोस्तीत्यादौ कृताम् काश्यपिरित्यादौ च तद्धितानाम् प्रकृत्यर्थावच्छिन्न एव स्वार्थे कृत्यादौ तिङर्थस्य वर्तमानत्वा-देर्बोधकत्वम् न तु तदनवच्छिन्ने इति न तेष्वप्रसङ्गः ( अव्याप्तिः ) । चैत्रोस्तीत्यादावर्थान्तरानवच्छिन्ने स्वार्थे नाम्नां तिङर्थान्वयबोधकत्वम् । एवम् यजेत स्त्रीयेत इत्यादौ यजादिधातूनाम् तिङर्थान्वयबोधकत्वम् इति तत्र नातिव्याप्तिः । निभनिपातादिकस्तु शब्दान्तरार्थानवच्छिन्ने सदृशसमु-च्चयादिस्वार्थे तिङर्थस्यान्वयं प्रति स्वरूपायोग्योपि निभादिरेव न तु तद्भिन्नः इति न तत्र प्रसङ्गः ( श० प्र० श्लो० ९ टी० पृ० १२ ) । [ ग ] स्व स्वप्रकृति एतदन्यतरार्थप्रत्यायको यः स प्रत्ययः इति नागोजीभट्टादयः आहुः । अयं भावः । बहुजादेर्निरर्थकतया मुख्यप्रत्ययत्वाभावादेव पूर्वत्वरूपावधित्वनिवेशेपि न दोषः । अत एवोक्तं हरिणा यः स्वेतरस्य यस्यार्थे स्वार्थस्यान्वयबोधने । यदपेक्षस्तयोः पूर्वा प्रकृतिः प्रत्ययः परः ॥ इति ( वाक्यप० ) । परत्वेन विधीयमानत्वमेव प्रत्ययत्वमिति केचि-च्छाब्दिका वदन्ति । तन्न योग्यम् । बहुजादावव्याप्तिप्रसङ्गात् इति शब्दशक्तिप्रकाशिकाकृत आहुः । [ घ ] अन्ये तु शाब्दिकाः प्रकृति-मवधीकृत्य विधीयमानः स्वार्थबोधकः शब्दविशेषः इत्याहुः ( शब्दार्थ-रत्न० ) ( वाच० ) । अत्र महाभाष्यम् स्वीयमर्थं प्रत्याययति इति । अत्रावधिश्च पूर्वापररूपो ग्राह्यः । तेन बहुचि बहुगुडो द्राक्षा इत्यादौ नाप्रसङ्गः । प्रत्ययश्चतुर्विधः । विभक्तिः धात्वंशः तद्धितः कृत् इति ।

कादेष्वादेश्च तद्धितस्यानुपगमे पञ्चविधो वा प्रत्ययः इति ( श० प्र० श्लो० ५९ टी० पृ० ७२ ) ।

**प्रत्यर्थी**—[ क ] अर्थ्यत इत्यर्थः साध्यः । सोस्यास्तीत्यर्थी । तत्प्रतिपक्षः प्रत्यर्थी ( मिताक्षरा अ० २ श्लो० ६ ) । [ ख ] साध्यार्थस्य प्रतिपक्षवादी तदभाववादी च ( मिताक्षरा अ० २ श्लो० ८० ) ।

**प्रत्यवस्कन्दनम्**—अर्थिना लिखितो योर्थः प्रत्यर्थी यदि तं तथा । प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं स्मृतम् ॥ ( मिताक्षरा अ० २ श्लो० ७ ) ।

**प्रत्यवस्थानम्**—१ उपालम्भः प्रतिषेधः (वात्स्या० १।२।१८) । २ दूषणाभिधानम् ( गौ० वृ० १।२।१८ ) । यथा साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ( गौ० १।२।१८ ) इत्यादौ । ३ प्रतिपक्षतया अवस्थानम् इत्यपि केचिदाहुः ।

**प्रत्यवायः**—१ अधर्मवदस्यार्थोनुसंधेयः । यथा अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते ( जाबालिः ) इत्यादौ । २ विपरीताचरणम् । ( मनु० टी० कुल्लूक० ४।२४५ ) ।

**प्रत्याम्नायः**—१ [ क ] निगमनवदस्यार्थोनुसंधेयः ( प्रशस्त० पृ० २८ )। [ ख ] प्रतिज्ञायाः पुनर्वचनम् । अनुमेयत्वेनोद्दिष्टे चानिश्चिते च परेषां हेत्वादिभिरवयवैराहितशक्तीनां परिसमाप्तेन वाक्येन पुनर्निश्चयापादनार्थं प्रतिज्ञायाः पुनर्वचनम् । यथा तस्माद्द्रव्यमेव इति पुनर्निश्चयापादनार्थं प्रत्याम्नायः ( प्रशस्त० २ पृ० २९–३१ ) । अत्रार्थस्यैव परिसमाप्तिः। कथम् । अनित्यः शब्दः इत्यनेनानिश्चितानित्यत्वमात्रविशिष्टः शब्दः कथ्यते । प्रयत्नानन्तरीयकत्वात् इत्यनेन साध्यसमधर्ममात्रमभिधीयते । इह यत् प्रयत्नानन्तरीयकम् तत् अनित्यं दृष्टम् यथा घटः इत्यनेन साध्यसामान्येन साधनसामान्यस्यानुगममात्रमुच्यते । नित्यमप्रयत्नानन्तरीयकं दृष्टम् यथा आकाशम् इत्यनेन साध्याभावेन साधनस्यासत्त्वं प्रदर्श्यते । तथा च प्रयत्नानन्तरीयकः शब्दः न च तथा आकाशवदप्रयत्नानन्तरीयकः शब्दः इत्यन्वयव्यतिरेकाभ्यां दृष्टसामर्थ्यस्य शब्देनु-

संधानं गम्यते । तस्मादनित्यः शब्दः इत्यनेन अनित्य एव शब्दः इति प्रतिपिपादयिषितार्थपरिसमाप्तिर्गम्यते । तस्मात् पञ्चावयवेन वाक्येन परेषां स्वनिश्चितार्थप्रतिपादनं क्रियते इति चैतत्परामर्शनमनुमानं सिद्धम् (प्रशस्त० २ पृ० ३१) इति । अधिकं च निगमनशब्दार्थे दृश्यम् । २ धर्मशास्त्रज्ञास्तु प्रतिनिधित्वेन विधीयमानः पदार्थः प्रत्याम्नायः । यथा दानार्थं साक्षाद्गोरलाभे गोप्रत्याम्नायः सुवर्णम् इत्याहुः ।

**प्रत्यासत्तिः**—१ संबन्धः । यथा मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिः सामान्यं येन संबन्धेन ज्ञायते तेन संबन्धेनाधिकरणानां प्रत्यासत्तिः सामान्यविषयकं ज्ञानं प्रत्यासत्तिः (मु० १ पृ० १२९–१३०) इत्यादौ प्रत्यासत्तिः संबन्धः । यथा वा व्याकरणशास्त्रे हस्तादाने चेरस्तेये (पा० सू० ३।३।४०) इति सूत्रव्याख्याने हस्तादान इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते (सि० कौ० पृ० ३४२) इत्यत्र प्रत्यासत्तिः संबन्धः । २ नैकट्यम् इति व्यवहारशास्त्रज्ञा आहुः ।

**प्रत्यासन्नत्वम्**—१ संबद्धत्वम् । यथा समवायिकारणे प्रत्यासन्नं कारणम् असमवायिकारणम् (त० कौ०) इत्यादौ । २ तद्विषयकप्रतीत्यव्यवहितप्राक्कालिकप्रतिपत्तिविषयत्वम् । ३ समीपवृत्तित्वम् इति काव्यज्ञा वदन्ति । ४ धर्मशास्त्रे प्रत्यासन्नत्वं तु तदभावे यः प्रत्यासन्नः सपिण्डः इत्यादौ कुलगोत्रादिकृतः संनिकर्षः इति स्वीकृतम् ।

**प्रत्याहारः**—१ [क] बहिरिन्द्रियाणां स्वस्वविषयवैमुख्येनावस्थानम् (योगाङ्गविशेषः) (गौ० वृ० ४।२।४४) । [ख] चक्षुरादीनामिन्द्रियाणां प्रतिनियतरञ्जनीयकोपनीयमोहनीयप्रवणत्वप्रहाणेनाविकृतस्वरूपप्रवणचित्तानुकारः प्रत्याहारः (सर्व० सं० पृ० ३८१ पात०) । २ प्राणायामद्विषट्केन प्रत्याहार उदाहृतः इत्यपि वदन्ति (काशीख० ४१) । ३ वैयाकरणास्तु आदिरन्त्येन सहेता (पा० सू० १।१।७१) इत्यनेन कृता संज्ञा । यथा अण् इति अइउवर्णानां संज्ञा इत्याहुः । ४ उपादानम् इति काव्यज्ञा आहुः ।

**प्रस्तुत**—( अव्ययम् ) [ क ] वैपरीत्यमात्रम् । [ ख ] स्वस्वपक्षस्थापनाय परपक्षनिराकरणाय वोक्तस्य तद्वैपरीत्यभावः । यथा न दोषः पुनरुक्तोपि प्रस्तुतेयमलंक्रिया ( काव्याद० ) इत्यादौ ( वाच० ) ।

**प्रथमा**—१ ( सुप् विभक्तिः ) [ क ] या विभक्तिस्तादात्म्यभिन्नस्वार्थध-र्मिकप्रकृत्यर्थबोधं प्रति न स्वरूपयोग्या सा प्रथमा ( श० प्र० श्लो० ६३ टी० पृ० ७४ ) । यथा नीलो घट इत्यादौ घटपदोत्तरप्रथमा । विशेष्यवाचकपदोत्तरप्रथमा च स्वार्थैकत्वादिप्रकारकमेव प्रकृत्यर्थबोधं प्रति समर्था इति तत्र नाव्याप्तिः । द्वितीयादयः स्वार्थे कर्मत्वादौ प्रकृत्यर्थस्यान्वयबोधं प्रति समर्थाः इति न तत्रातिप्रसङ्गः । प्रथमा तु विशेषणपदोत्तरस्था तादृशि तादात्म्ये तथान्वयं बोधयन्त्यपि न तादात्म्य-भिन्ने तथा इति नाव्याप्तिः ( श० प्र० श्लो० ६३ टी० पृ० ७४ ) । [ ख ] धात्वर्थावच्छिन्नतिङर्थस्यान्वयबोधं प्रति यदन्तनामोपस्थाप्यत्वं तन्त्रम् तादृशी सुप् प्रथमा । स्वर्गकामो यजेतेत्यादौ तिङर्थस्येष्टसाधनत्वादेर्न प्रकृत्यर्थावच्छिन्नस्य यागादावन्वयः । किं तु केवलस्य । अतः तस्य प्र-थमान्तनामानुपस्थाप्यत्वेपि न क्षतिः । चैत्रमैत्रौ स्त इत्यादौ च द्वन्द्वेनैव प्रथमान्तनाम्ना चैत्रस्योपस्थापनान्न व्यभिचारः ( श० प्र० श्लो० ६४ टी० पृ० ७४)। प्रथमा त्रिविधा सु औ जस् इति । स्वादित्रिकान्यतमत्वं प्रथमात्वम् । एवम् अमादित्रिकान्यतमत्वादिना द्वितीयात्वादिकं निर्वाच्यम् इत्यप्याहुः ( श० प्र० श्लो० ६५ टी० पृ० ७६ ) । अत्र प्रथमाया द्विवचनम् औ द्वितीयायाः पुनरौट् इति भेदो वैयाकरणैः कल्पितः । प्रयोगे त्वर्थानुसारेण ज्ञेयः । २ आद्या । ३ प्रधानम् ।

**प्रथमाब्दिकम्**—प्रथमाब्दे पूर्णे द्वितीयाब्दाद्यतिथौ क्रियमाणं श्राद्धम् ( पु० चि० पृ० २४ ) ।

**प्रथा**—कपालेष्ववस्थितस्य पुरोडाशस्य हस्तसंघट्टनेन सर्वेषु कपालेषु प्रस-रणम् ( जै० न्या० अ० १० पा० १ अधि० ११ ) ।

**प्रदेशानुबन्धः**—कर्मभावपरिणतपुद्गलस्कन्धानामनन्तान्तप्रदेशानामात्मप्र-देशानुप्रवेशः प्रदेशबन्धः ( सर्व० सं० पृ० ७८ आर्ह० ) ।

**प्रदोषः**—१ अस्तमानं समारभ्य सार्धाः सप्त च नाडिकाः । प्रदोष इति विख्यातस्त्वर्धयाममतः शृणु ॥ ( पु० चि० पृ० २२७ ) । २ रात्रौ यामद्वयादर्वाग्यदि पश्येत्त्रयोदशीम् । प्रदोषः स तु विज्ञेयः सर्वस्वाध्यायवर्जितः ॥ ( पु० चि० पृ० ४४२ ) । ३ त्रिमुहूर्तं प्रदोषः स्याद्भानावस्तंगते सति । नक्तं तु तत्र कुर्वीत इति शास्त्रस्य निश्चयः ॥ ( पु० चि० पृ० ४६ ) ।

**प्रधानकर्मत्वम्**—( कर्मत्वम् ) साक्षाद्धात्वर्थतावच्छेदकफलशालित्वम् । यथा गां दोग्धि पय इत्यादौ पयसः प्रधानकर्मत्वम् । अत्र साक्षाद्धात्वर्थतावच्छेदकत्वं च धातुवृत्तिग्रहविशेष्यांशे साक्षाद्विशेषणत्वम् । गां दोग्धि पय इत्यत्र विभागावच्छिन्नक्षरणानुकूलव्यापारस्य दुहधात्वर्थत्वेन साक्षाद्धात्वर्थतावच्छेदकीभूतक्षरणरूपफलाश्रयत्वात्पयसः प्रधानकर्मत्वम् ( ग० व्यु० का० २ पृ० ४४ ) । अत्र शब्दशक्तिप्रकाशिकाकारास्तु मोचनानुकूलव्यापारो दुहधात्वर्थः । मोचनं च बहिःक्षरणानुकूलक्रिया । तत्र क्षरणं पयोनिष्ठम् । तदनुकूलक्रिया तु गोनिष्ठा । तथा च साक्षाद्धात्वर्थतावच्छेदकीभूततादृशमोचनक्रियाश्रयत्वेन गोः प्रधानकर्मत्वम् । तादृशक्रियायां विशेषणीभूतस्य परंपरया धात्वर्थतावच्छेदकस्य क्षरणस्याश्रयः पयः इति पयसः अप्रधानकर्मत्वम् इत्यङ्गीचक्रुः ( श० प्र० श्लो० ७३, ७७ टी० पृ० ९८, १०५) । वैयाकरणास्तु कर्तृप्रत्ययसमभिव्याहारे प्रधानभूतव्यापारविशेषणफलाश्रयत्वम् । यथा देवदत्तो ग्राममजां नयतीत्यत्र गां दोग्धि पय इत्यत्र च अजाया गोश्च कर्मत्वम् । अत्रायं विशेषः । ण्यन्तविषय ईदृशप्राधान्यस्यैव ग्राह्यत्वम् । तच्चोक्तोदाहरणयोः स्पष्टम् । तण्डुलानोदनं पचति काष्ठं भस्म करोतीत्यादौ निर्वर्त्यमानौदनभस्मनोरेव । तन्निष्ठफलविशेषणकव्यापारस्यैव तत्सूत्रस्थभाष्येण शाब्दप्राधान्यप्रतीतेः । तण्डुलरूपे कर्मणि लादय इति तु नव्यानां प्रमाद एव । दुहादिषु भाष्ये गणनाभावाच्च । अत्र विक्लेदनम् निर्वर्तनं च पचेरर्थः । तण्डुलान् विक्लेदयन् ओदनं निर्वर्तयति इत्यर्थः । कर्तुरीप्सिततमं कर्म ( पा० सू० १।४।४९ ) इति सूत्रेणैव द्वयोः कर्मत्वम् ( ल० म० सुबर्थ० कार० २ पृ० ८९ ) । नीहृकृष्वहां

धातूनामुत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारार्थकानां द्विकर्मकत्वम्। संयोगस्य फलतावच्छेदकः संबन्धो ग्रामनिष्ठः। तदनुकूलव्यापारश्चाजानिष्ठः। प्रधानव्यापारजन्यफलाश्रयत्वादजा प्रधानम्। तत्र लादयो भवन्ति। प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् इति भाष्योक्तेः। गां दोग्धि पय इत्यत्र दुहेरन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारानुकूलव्यापारार्थकत्वे गोपयसोरुभयोरपि कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मत्वम्। तत्र गोः कर्तृव्यापारजन्यफलाश्रयत्वात् प्रधानकर्मत्वम्। पयसः कर्तृव्यापारप्रयोज्यविभागफलाश्रयत्वात् गौणकर्मत्वम्। अत्र गोर्विभागाश्रयत्वेन तु न कर्मत्वम्। पयोनिष्ठविभागीयसंबन्धस्यैव फलतावच्छेदकत्वात्। तत्त्वेनानुद्देश्यत्वाच्च। उक्तप्राधान्यं च गोः इति तत्र लादयः। एवम् अन्येषामपि याचिदण्ड्यादीनां द्विकर्मकत्वं बोध्यम्। तत्र निदर्शनम्। देवदत्तेन ग्राममजा नीयते गौर्दुह्यते पय इत्यादौ च अजाया गोश्च प्रधानकर्मत्वेन लादिनाभिहितत्वात्तद्वाचकपदोत्तरं प्रथमैव भवति न तु द्वितीया इति (ल० म० पृ० ९०)। अत्रायं विशेषः। कर्तुरीप्सिततमं कर्म इत्यनेन गोः प्रधानकर्मत्वम्। तत्र लादयः। अकथितं च (पा० सू० १।४।५१) इति सूत्रेण तु गोरपादानत्वाद्यविवक्षायां पूर्वोक्तप्राधान्यानाश्रयत्वादप्रधानकर्मत्वं विधीयते। गौणकर्मणि गवादौ लादयो भवन्ति। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः इति प्रामाण्यात्। अत्र पक्षे द्रवद्रव्यविभागानुकूलव्यापारमात्रं दुहेरर्थः इति (ल० म० सुब० कार० २ पृ० ९१) (ग० व्यु० कार० २ पृ० ४४)। अत्रायं भावः। तादृशविभागानुकूलव्यापारस्य कर्तृनिष्ठत्वेन विभागस्य तु पयोनिष्ठत्वेन च गोः कर्मत्वाप्राप्तौ अकथितं च इत्यनेन क्रियाजन्यफलशालित्वादन्यदेव गौणं कर्मत्वं विधीयते इति।

**प्रधानजयः**—(मधुप्रतीकसिद्धिः) प्रकृतिविकारेषु सर्वेषु वशित्वम् (सर्व० सं० पृ० ३८५ पातञ्ज०)।

**प्रधानम्**—१ मुख्यम्। २ श्रेष्ठम्। ३ प्रशस्तम्। ४ सचिवः। ५ सेनापत्यध्यक्षः। ६ मूलप्रकृतिः इति सांख्या आहुः।

**प्रध्वंसः**—१ उत्पत्तिमान्विनाशी प्रध्वंसः ( सर्व० सं० पृ० २३२ अक्षपा० ) । २ अतीतावस्था इति सांख्या आहुः ।

**प्रपञ्चः**—१ विस्तारः । २ वैपरीत्यम् । ३ प्रतारणम् । ४ संसारः ( वाच० ) । अत्र वल्लभीया वेदान्तिनो मन्यन्ते । प्रपञ्चो भगवत्कार्यः । संसारस्तु मायाकार्यः । तथा च प्रपञ्चस्य स्थावरजङ्गमात्मकस्य भगवत्कार्यत्वेन सत्यत्वम् । संसारस्य त्वहंताममतात्मकस्य मायाकार्यत्वान्मिथ्यात्वमेव । एवं च प्रपञ्चसंसारयोर्भेद एव इति ।

**प्रबन्धः**— १ संदर्भः । २ ग्रन्थादेः रचनम् ।

**प्रभवः**—१ प्रथमप्रकाशः । यथा हिमवतो गङ्गा प्रभवतीत्यादौ प्रभवत्यर्थः । अत्र भुवः प्रभवः ( पा० सू० १।४।३१ ) इत्यनेनापादानसंज्ञा । तदर्थश्च यत्संबन्धात्प्रभवनं प्रथमप्रकाशः स प्रभवः इति ( ग० व्यु० का० ५ पृ० १०८ ) । अत्र प्रभवत्यस्मिन् इति प्रभवः इति व्युत्पत्त्या प्रथमप्रकाशस्थानम् इत्यर्थो लभ्यते ( वाच० ) । अन्यतः सिद्धस्य प्रथमोपलम्भस्थानम् इति हेमचन्द्र आह । अत्र प्रकाशः आद्यबहिः—( भूखण्ड— ) संयोगः धात्वर्थः । संयोगनाशाव्यवहितोत्तरक्षणवृत्तित्वं पञ्चम्यर्थः । आख्यातार्थ आश्रयत्वम् । तथा च हिमालयसंयोगध्वंसाव्यवहितोत्तरक्षणवृत्त्याद्यपृथिवीसंयोगाश्रयत्ववती गङ्गा इति बोधः । यद्वा पञ्चम्यर्थः संबन्धाधीनत्वम् । तस्य तादृशक्रियायां प्रभवत्यर्थे प्रथमप्रकाशे अन्वयः । संबन्धे च हिमवदादेः प्रकृत्यर्थस्यान्वयः ( ग० व्यु० कार० ५ पृ० १०८ ) । एवम् वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य ( मेघदू० पू० १५ ) इत्यादावप्यूह्यम् । अत्र ऊर्ध्वदेशसंयोगः प्रभवत्यर्थः । अन्यत्समानम् ( का० व्या० पृ० १० ) । २ संवत्सरविशेषः इति मौहूर्तिका वदन्ति ।

**प्रभृतिः**—आदिः । यथा तदाप्रभृत्येव वनद्विपानाम् ( रघु० स० २ श्लो० ३८ ) इत्यादौ । यथा वा मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः ( रघु० स० ४ श्लो० ७ ) इत्यादौ ।

**प्रभेदः**—१ सामान्यधर्मव्याप्यावान्तरधर्मविशिष्टः । यथा घटो द्रव्यप्रभेदः इत्यादौ । २ स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मः । यथा अनित्या पृथिवी त्रिविधा शरीरेन्द्रियविषयभेदात् इत्यादौ ( वाक्य० १ पृ० ३ )। ३ अन्योन्याभावः । अत्र भेदप्रभेदशब्दयोरेकार्थकत्वम् इत्यभिप्रायेणेदमुक्तम् इति विज्ञेयम् ।

**प्रमा**—( अनुभवः ) [ क ] यदर्थविज्ञानं सा प्रमा ( वात्स्या० १।१।१ प्रस्तावना० )। सा च द्रव्यादिविषयं ज्ञानम् ( यथार्थम् ) ( प्रशस्त० पृ० २६ )। लक्षणं च वक्ष्यमाणं प्रमात्वमेव इति विज्ञेयम् । प्रमात्वस्य स्वतोग्राह्यत्वादिविचारः प्रमात्वशब्दे द्रष्टव्यः । [ ख ] तत्त्वानुभवः । [ ग ] यत्र यदस्ति तत्र तस्यानुभवः । तद्वति तत्प्रकारकानुभवो वा ( चि० १ पृ० ४०० ) ( त० सं० )। फलितार्थस्तु तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकताशाल्यनुभवः इति । विशेष्यितासंबन्धेन तदवच्छिन्ना या तत्प्रकारिता तच्छाल्यनुभवः इति वा । तेन रजतरङ्गयोः इमे रङ्गरजते इत्यादिविपरीतसमूहालम्बनभ्रमे नातिव्याप्तिः ( मू० म० १ प्रामा० पृ० ४०३)। निर्विकल्पकज्ञानं तु प्रमा अप्रमा एतद्बहिर्भूतमेव । व्यवहारानङ्गत्वात् ( चि० १ प्रामा० पृ० ४०२ )। एवं च निर्विकल्पकं प्रमालक्षणालक्ष्यमेवेति तस्य प्रकारिताविशेष्यितादिशून्यत्वेपि न तत्राव्याप्तिशङ्का इति भावः । [ घ ] यथार्थानुभवः ( ता० २० ) ( त० भा० ) ( न्या० म० १ पृ० १ ) ( त० सं० ) ( त० कौ० पृ० ७ )। यथा रजते इदं रजतम् इति प्रत्यक्षं प्रमा ( त० सं० )। अत्र याथार्थ्यं च तद्वति तदवगाहित्वम् ( न्या० म० १ ) ( त० सं० )। तद्वद्विशेष्यकत्वे सतीत्यर्थः । भवति हि रजते इदं रजतम् इति ज्ञानं रजतत्ववति रजतत्वावगाहि इति लक्षणसमन्वयः ( न्या० म० ) ( त० प्र० १ पृ० १० )। अत्राहुरुदयनाचार्याः यथार्थानुभवो मानमनपेक्षतयेष्यते ( कु० ४।१ ) इति । अत्र मानशब्दस्यार्थः प्रमा इति ज्ञेयम् । अत्र प्रयोगश्चेत्थम् । यथार्थानुभवः प्रमापदवाच्यः अनपेक्षत्वात् इति । अनपेक्षत्वं च स्वसमानाधिकरणं स्वसमानविषयकं च

यज्ज्ञानं तत्प्रमात्वानधीनप्रमात्वकत्वम् ( म० प्र० १ पृ० ४ ) । स्मृतौ तु तादृशपूर्वानुभवप्रमात्वाधीनप्रमात्वकत्वेन स्मृतिव्यावृत्तिः । अत्रोभयत्र स्वपदं फलीभूतज्ञानपरमेव । अत्रेयमभिसंधिः । प्रमात्वस्य स्मृतिसाधारणत्वे स्मृतिकारणानुभवस्यापि प्रमाणान्तरत्वापत्त्या शास्त्रे प्रमाणव्यवहारौपयिकं रूपमनुभवत्वघटितमेवानुमन्यन्ते तान्त्रिकाः ( दि० गु० पृ० २११ ) । अथ वा यज्जातीयविशिष्टज्ञानत्वावच्छेदेन समानाकारनिश्चयोत्तरत्वं तज्जातीयान्ययथार्थज्ञानस्यैवागृहीतग्राहित्वेन प्रमात्वम् । अत एव धारावाहिप्रत्यक्षव्यक्तीनां समानाकारग्रहोत्तरवर्तित्वेपि न तासां प्रमात्वहानिः । हानिस्तु समानाकारानुभवसमुत्थानां स्मृतीनामिति । अयं चात्र विशेषः । अज्ञायमानकरणजन्यतत्त्वानुभवः प्रत्यक्षप्रमा । ज्ञायमानकरणजन्यतत्त्वानुभवोनुमितिप्रमा इति । [ ङ ] विषयताश्रयावृत्त्यप्रकारकानुभवः । [ च ] यत्प्रकारिका या विषयता तत्प्रकारसमानाधिकरणविषयताकः स्वप्रकारसमानाधिकरणविषयताको वा अनुभवः । अत्र प्रकारपदं धर्मपरम् । तद्धर्मसमानाधिकरणतद्विषयताक इत्यर्थः । एतल्लक्षणद्वये इदं रजतं रङ्गं च इत्यादौ प्रकारभेदेन विषयताभेदाभावेपि न क्षतिः इति ध्येयम् । अतिरिक्तविषयतापक्षे ( विशेष्यतावच्छेदकतातिरिक्ता प्रकारता विषयतापि च सविषयका इति पक्षे ) इदं लक्षणद्वयं ( ङ च इत्यत्र स्थितम् ) स्वीकृतम् इति ज्ञेयम् ( मू० म० १ प्रामा० पृ० ४१६–४१९ ) । [ छ ] विशेष्यनिष्ठात्यन्ताभावाप्रतियोगिप्रकारकविषयताप्रतियोगी [ ज ] विशेष्यनिष्ठात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयताप्रतियोगी वा [ झ ] विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारकविषयत्वाप्रतियोगी वा [ ञ ] विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयताप्रतियोगी वा अनुभवः ( चि० १ प्रामा० पृ० ४००–४२० ) । एकधर्मावच्छिन्नतत्तदभावोभयवन्निष्ठविशेष्यताकं द्रव्यं रजतम् इत्यादिज्ञानं न लक्ष्यम् इति मते छ ज इत्यादीनि लक्षणानि ( मू० म० १ प्रामा० पृ० ४२० ) । वृत्तीद्धो बोधः प्रमा इति मायावादिनो वदन्ति । अनधिगतार्थस्य वस्तुनोवधारणम् इति सांख्या आहुः । पुरुषनिष्ठबोधः

प्रमा इति पातञ्जला आहुः (पात० व्या० भा०) (सां० भा० १।८७)। न्यायनये प्रमा द्विविधा । नित्या अनित्या च । तत्र नित्या भगवतः । अनित्या जीवस्य (ता० र० श्लो० ४)।

**प्रमाणबाधितार्थकप्रसङ्गः**—तर्कविशेषः । शिष्टं तु तदन्यबाधितार्थप्रसङ्गशब्दव्याख्याने संपादितम् तत् तत्र द्रष्टव्यम् । अत्र व्युत्पत्तिः प्रमाणेन बाधितोर्थो यस्य इति (कप्)।

**प्रमाणम्**—१ [क] प्रमाता येनार्थं प्रमिणोति तत् (वात्स्या० १।१।१ प्रस्तावना)। अत्र प्रमीयतेनेन इति व्युत्पत्तिर्द्रष्टव्या । प्रमाणस्य स्वभावस्तु सतः प्रकाशकं प्रमाणमसदपि प्रकाशयति (वात्स्या० १।१।१ प्रस्तावना) इति । तल्लक्षणं तु प्रमाणत्वमेव । तच्च तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टज्ञानकारणत्वम् (गौ० वृ० १।१।३)। यद्वा अनुभवत्वव्याप्यजात्यवच्छिन्नप्रमावृत्तिकार्यतानिरूपितकारणताशालित्वे सति व्यापारवत्त्वम् (त० प्र० ख० १ पृ० १४)। अथवा अनधिगतार्थकानुभवकारणत्वम् । तच्च गृहीतग्राहीतरानुभवकारणत्वम् इति मीमांसका आहुः (कु० टी० ३) (त० प्र० ख० ४ पृ० ९)। स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्तिस्वसमानाकारनिश्चयविषयविषयकेतरतद्विशेष्यकतत्प्रकारकानुभवकारणत्वम् इति यावत् (कु० टी० ३)। सांख्यास्तु असंदिग्धाविपरीतानधिगतविषयबोधसाधनत्वम् इत्याहुः । अत्र द्वयोरेकतरस्य वाप्यसंनिकृष्टार्थपरिच्छित्तिः प्रमा तत्साधकं यत् तत् त्रिविधं प्रमाणम् (सांख्यसूत्रम् १।८७) इति । तदर्थश्च असंनिकृष्टः प्रमातर्यनारूढः अनधिगत इति यावत् (सां० भाष्य०)। [ख] प्रमायाः करणम् (न्या० म० पृ० १) (त० सं०) (त० भा० पृ० ४) (त० कौ० पृ० ८)। यथा चक्षुरादि प्रत्यक्षात्मकप्रमायाः प्रमाणम् । अनुमितौ च लिङ्गदर्शनं प्रमाणम् । उपमितौ च सादृश्यज्ञानं प्रमाणम् । शाब्दे च वेदाः प्रमाणमित्यादौ शब्दः प्रमाणम् । अत्रेदं बोध्यम् । इन्द्रियसंयोगादिरेव प्रमाकरणम् । न तु प्रमातृप्रमेयादीनि । सत्यपि प्रमातरि प्रमेये च प्रमानुत्पत्तेः । इन्द्रियसंयोगादौ तु सत्य-

विलम्बेन प्रमोत्पत्तिः । अतः इन्द्रियसंयोगादिरेव करणम् न प्रमात्रादि (त० भा० पृ० ५) । [ग] साधनाश्रयाव्यतिरिक्तत्वे सति प्रमाव्याप्तम् । अनेन च प्रतितन्त्रसिद्धान्तसिद्धं परमेश्वरप्रामाण्यं संगृहीतम् (सर्व० पृ० २३५ अक्ष०) (कु० टी० ४।५) । अत्र सूत्रम् मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् (गौ० २।१।६८) इति । [घ] प्रमायोगव्यवच्छिन्नम् । प्रमया सहायोगव्यवच्छेदेन संबन्धि । [ङ] अनधिगतार्थगन्तृ प्रमाणम् इति भट्टमीमांसका आहुः (सि० च० १ पृ० २०) (कु० टी० ४।५) (तत्त्वसंख्या०) । तदसत् । एकस्मिन्नेव घटे घटोयम् घटोयम् घटोयम् इति धारावाहिकप्रत्ययस्थले अधिगतार्थगन्तॄणामप्रामाण्यापत्तेः (सि० च० १ पृ० २०) (त० भा० १ पृ० ५) । अत्र विवदन्ते । अविसंवादि विज्ञानं प्रमाणमिति सौगताः । अनुभूतिः प्रमाणं सा स्मृतेरन्येति केचन ॥ अज्ञातचरतत्त्वार्थनिश्चायकमथापरे । प्रमेयव्याप्तमपरे प्रमाणमिति मन्वते ॥ प्रमानियतसामग्रीं प्रमाणं केचिदूचिरे (ता० र० श्लो० ५-७) इति । न्यायनये प्रमाणानि चत्वारि । प्रत्यक्षम् अनुमानम् उपमानम् शब्दश्च (गौ० १।१।३) इति । यत्प्रमाणं तत्प्रत्यक्षादिचतुष्टयान्यतमम् इति वाक्यार्थः । तेन न्यूनाधिकसंख्याव्यवच्छेदलाभः (म० प्र० १ पृ० ७) । अत्रेदं बोध्यम् । नित्यप्रमाया आश्रयः (समवायी) प्रमाणं ईश्वरः । अनित्यप्रमायास्तु करणं प्रत्यक्षादिचतुष्टयम् (ता० र० श्लो० ४) इति । [च] प्रमीयते परिच्छिद्यते अनेनेति प्रमाणम् । तच्च द्विविधम् मानुषं दैविकं च (मिताक्षरा अ० २ श्लो० २२) । प्रकारान्तरेण प्रमाणं द्विविधम् । शब्दोपजीवि शब्दानुपजीवि च (कु० टी०) । इदानीं मतभेदेन प्रमाणसंख्या कथ्यते । प्रत्यक्षमेकमेव प्रमाणम् इति चार्वाका आहुः । प्रत्यक्षमनुमानं चेति द्वे प्रमाणे इति कणादप्रधाना वैशेषिकाः मन्यन्ते । एतन्मते शब्दोपमानयोरनुमानविधयैव प्रामाण्यम् न तु स्वातन्त्र्येणेति बोध्यम् (त० कौ० पृ० ८) । अत्र भाष्यम् । शब्दादीनामप्यनुमानेन्तर्भावः । समानविधित्वात् । यथा प्रसिद्धसमयस्यासंदिग्ध-

लिङ्गदर्शनप्रसिद्ध्यनुस्मरणाभ्यामतीन्द्रियार्थे भवत्यनुमानम् । एवं शब्दादिभ्योपि इति । श्रुतिस्मृतिलक्षणोप्याम्नायो वक्तृप्रामाण्यापेक्षः । तद्वचनादाम्नायस्य प्रामाण्यम् ( वै० १।१।३ ) लिङ्गाच्चानित्यः शब्दः ( वै० २।२।३२ ) बुद्धिपूर्वा वाक्यकृतिर्वेदे ( वै० ६।१।१ ) बुद्धिपूर्वो ददातिः ( वै० ६।१।३ ) इत्युक्तत्वात् । प्रसिद्धाभिनयस्य चेष्टया प्रतिपत्तिदर्शनात्तदप्यनुमानमेव । प्रसिद्धगवयस्य गवयप्रतिपादनार्थमुपमानमाप्तवचनमेव दर्शनार्थापत्तिर्विरोधे वा शब्दश्रवणादनुमितमनुमानम् । संभवोप्यविनाभावित्वादनुमानमेव । अभावोप्यनुमानमेव । यथा उत्पन्नं कार्यं कारणसंभवलिङ्गम् एवम् अनुत्पन्नं कार्यं कारणासद्भावे लिङ्गम् । ऐतिह्यमप्यवितथमाप्तोपदेश एव ( प्रशस्त० पृ० २ पृ० २८ ) इति । शब्दस्य स्वातन्त्र्येण प्रामाण्यमनिच्छन्तोनुमानान्तर्भावमाश्रित्य प्रामाण्यमिच्छन्ति वैशेषिकादयः । तेषामयमाशयः । गामानय इत्यादिवाक्यश्रवणसमनन्तरं तावदन्वयप्रतीतिरनुभूयते । वाक्ये आकाङ्क्षादिमत्त्वप्रतिसंधानं तदर्थप्रतिपत्त्यनुकूलतयावधृतम् । तथा च आकाङ्क्षादिमत्पदकदम्बकत्वप्रतिसंधानस्यावश्यकतया तस्य च स्मारितार्थसंसर्गविज्ञप्तिपूर्वकत्वनियमेनानुमानादेव तत्फलसिद्धौ किमिति शब्दस्य प्रमाणान्तरत्वाभ्युपगमः । तथाहि । एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमदाप्तोक्तपदत्वात् गामभ्याजेतिपदकदम्बकवत् इति ज्ञानावच्छेदकतया संसर्गसिद्धिरनुमानादेव भवति इति पदपक्षकानुमानेन शब्दो न प्रमाणान्तरम् । अर्थपक्षकानुमाने साक्षादेव संसर्गसिद्धिः । एवं हि तत् । एते पदार्था मिथः संसर्गवन्तः आकाङ्क्षादिमत्पदकदम्बकस्मारितत्वात् गामभ्याज इति स्मारितपदार्थवत् इति । एवमुपमानमपि न प्रमाणान्तरम् । तथाहि । गवयपदं सप्रवृत्तिनिमित्तकम् साधुपदत्वात् इत्यनुमानेनैवात्रापि निर्वाहः ( त० व० पृ० ९८ ) ( न्या० सि० दी० पृ० २२ ) । प्रत्यक्षमनुमानं चेति प्रमाणद्वयमेवेति बौद्धा आर्हताश्च मन्यन्ते । लौकिकम् आर्षं चेति द्विविधं प्रमाणमिति सांख्या मन्यन्ते । तत्र लौकिकम् प्रत्यक्षानुमानाप्तवचनानि । आर्षम् विज्ञानम् । प्रत्यक्षं

शब्दश्चेति द्वे प्रमाणे इति श्रीमदानन्दतीर्थभगवत्पादाचार्याः प्राहुः । एतन्मते त्वनुमानं श्रुत्यनुसारित्वेन प्रमाणम् न तु स्वातन्त्र्येणेति बोध्यम् । मानुषदैवभेदेन द्विविधं प्रमाणम् ( याज्ञ० २।११६ ) इति व्यवहारशास्त्रज्ञा आहुः । प्रत्यक्षमनुमानं शाब्दं चेति मन्वादयः आहुः । अत्र अलौकिके विषये वेदो ब्रह्मसूत्रं भगवद्गीता श्रीमद्भागवतमिति प्रमाणचतुष्टयमिति वाल्लभा मन्यन्ते । प्रत्यक्षमनुमानमाप्तवचनमिति त्रीणि प्रमाणानि इति सांख्या योगिनो मायावादिवेदान्तिनश्चाहुः । तत्र सांख्यपातञ्जलमायावादिमते अन्तःकरणवृत्तीनां पौरुषेयचित्तवृत्तिप्रकाशरूपबोधे कारणत्वम् । अन्तःकरणवृत्तिषु च ज्ञानत्वारोपेण तत्करणत्वमिन्द्रियाणाम् इति विवेकः ( सां प्र० भा० ) ( पात० सू० ) । प्रत्यक्षानुमानोपमानानि त्रीणि इति नैयायिकैकदेशिन आहुः । प्रत्यक्षानुमानोपमानशब्दाश्चत्वारि प्रमाणानि इति गौतमप्रधाना नैयायिका आहुः । शब्दात्प्रत्येमि इति विलक्षणप्रतीतेर्व्याप्तिनिरपेक्षादाकाङ्क्षादिज्ञानादुत्पत्तेः तत्करणतया शब्दस्यातिरिक्तं प्रामाण्यं सिद्ध्यति इति नैयायिकसिद्धान्तः । तत्र शब्दस्य स्वतन्त्रप्रामाण्यमुक्तम् आप्तोपदेशसामर्थ्याच्छब्दादर्थसंप्रत्ययः ( गौ० २।१।५२ ) इति । प्रत्यक्षानुमानोपमानशब्दा अर्थापत्तिश्चेति पञ्च प्रमाणानि इति प्राभाकरा आहुः । प्रत्यक्षानुमानोपमानशब्दा अर्थापत्तिरनुपलब्धिश्चेति षट् प्रमाणानि इत्यपरे भट्टा वेदान्तिभेदाश्चाहुः । संभवैतिह्ये अप्यतिरिक्ते प्रमाणे इति पौराणिका आहुः । चेष्टाप्यतिरिक्तं प्रमाणम् इति तान्त्रिका अमन्यन्त ( ता० र० श्लो० ८–११ ) ( सि० च० १ पृ० २० ) । अनुभूतिरपि प्रमाणम् इति प्राभाकरा आहुः । केचित्तु शकुनलिप्यादिकमपि प्रमाणान्तरमिच्छन्ति । उपक्रमोनुमानमेव नातिरिक्तं प्रमाणम् इति ( प्र० प० पृ० ५ ) ( प्र० च० पृ० ४४ ) । २ प्रमा ( यथार्थज्ञानम् ) । यथा स्वतः प्रामाण्यम् परतः प्रामाण्यम् इत्यादौ प्रमाणपदार्थः प्रमा । ३ सत्यवादी । ४ इयत्ता । ५ परिच्छेदः । ६ हेतुः । ७ प्रमाता ( मेदिनी० ) । ८ विष्णुः ( विष्णुस० ) ।

**प्रमाणान्तरम्**—( स्वतन्त्रं प्रमाणम् ) यदसाधारणं सहकारि समासाद्य मनो बहिर्गोचरां प्रमां जनयति तत् । यथा प्रत्यक्षे इन्द्रियं प्रमाणान्तरम् । संशयस्वप्नौ तु न प्रमे इति न निद्रादेः प्रमाणान्तरत्वम् ( चि० २ पृ० ३५ ) ( कु० टी० ४ ) ।

**प्रमाता**—१ यस्येप्साजिहासाप्रयुक्तस्य प्रवृत्तिः सः ( वात्स्या० १।१।१ प्रस्तावना० ) । स च प्रमाता आत्मा ( प्रशस्त० पृ० २६ ) । यथा चैत्रो घटं प्रमिनोतीत्यादौ चैत्रः प्रमाता । अत्र प्रमातृत्वं च प्रमासमवायित्वम् । एतच्चाकारणत्वेपि प्रमाया ईश्वरस्य सिद्धम् ( कु० टी० ४।५ ) । अत्रेदं बोध्यम् । प्रमाता स्वतन्त्रः । स्वातन्त्र्यं च कारकफलोपभोक्तृत्वम् ( न्या० वा० १ पृ० ९ ) इति । २ शुद्धचेतनो वृत्तिसाक्षी प्रमाता इति सांख्या आहुः । ३ मायावादिनस्तु अन्तःकरणवृत्तिप्रतिबिम्बितम् तदवच्छिन्नं वा चैतन्यमेव प्रमाता इत्याहुः ( वाच० ) ।

**प्रमात्वम्**—तद्वति तत्प्रकारकज्ञानत्वम् ( गौ० वृ० १।१।४) । तद्वति तद्वैशिष्ट्यज्ञानत्वं वा ( चि० १ प्रामा० पृ० १७० ) । आद्यलक्षणे दलद्वयस्यार्थश्च तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशाल्यनुभवत्वम् ( त० प्र० ख०१ पृ० १४ ) ( वाक्य० ) । वस्तुतस्तु तद्वतीत्यत्रावच्छिन्नत्वमेव सप्तम्यर्थः । अन्वयश्चास्य विशेष्यितासंबन्धेन तत्प्रकारकत्वे । तथा च विशेष्यितासंबन्धेन तदवच्छिन्ना या तत्प्रकारिता तच्छाल्यनुभवत्वं तत्प्रमात्वम् इति फलितम् । इदमत्रैतत्प्रकारकम् इति प्रतीत्या विशेष्यस्यापि विशेष्यितासंबन्धेन तत्प्रकारितायामवच्छेदकत्वात् लक्षणसमन्वयः । रङ्गरजतयोः इमौ रजतरङ्गौ इति विपरीतभ्रमे च रजतावच्छिन्नं न रजतत्वप्रकारकत्वम् अपि तु रङ्गावच्छिन्नम् इति न तत्रातिव्याप्तिः ( मू० म० प्रामा० सिद्धान्त० पृ० ४०३ ) । अथवा विशेष्यतावच्छेदेन तद्धर्मावच्छिन्नप्रकारितासंबन्धेन तद्धर्मवत्त्वम् । विशेष्यतासंबन्धेन तद्विशिष्टत्वे सति तद्वत्त्वम् । विशेष्यतासंबन्धेन तद्वदवच्छिन्ना या प्रकारिता तच्छाल्यनुभवत्वमिति वा ( मू० म० १ ) । तान्त्रिकास्तु तद्वद्विशेष्यकत्वावच्छेदेन तत्प्रकारकत्वम् । तेन वह्निगुञ्जयोर्गुञ्जावगाहि-

भ्रमे नातिव्याप्तिः इत्याहुः (न्या० म० ख० ४ पृ० २४) (म० प्र० ४ पृ० ६९)। यद्वा तत्संबन्धानुयोगिविशेष्यकत्वावच्छिन्नतत्प्रतियोगिक-संबन्धावच्छिन्नप्रकारकज्ञानत्वम् । अयमेव सिद्धान्तलक्षणोक्तप्रमात्वे गदाधरभट्टाचार्याणामाशयः इति प्रतिभाति । अथवा विशेष्यितासंबन्धेन तद्धर्मवदवच्छिन्नत्वे सति प्रकारितासंबन्धेन तद्धर्मवत्त्वम् । विशेष्यिताप्रकारितयोरिव विशेष्यिताप्रकारितासंबन्धेन विशेष्यविशेषणयोरपि परस्परमवच्छेद्यावच्छेदकभावोभ्युपगम्यते इत्यभिप्रायेणेदम् (मू० म० १ प्रामाण्य० पृ० १७५)। यद्यपि अन्यान्यपि विशेष्यावृत्त्यप्रकारकत्वम् अगृहीतग्राहित्वं वा सर्वधीयथार्थत्वपक्षे अनुभवत्वजातेरभावेन स्मरणान्यज्ञानत्वम् विशिष्टज्ञानत्वं वा (चि० प्रामा० पृ० १२६) इत्यादीनि प्रमात्वस्वरूपाणि सन्ति । एतन्मते निर्विकल्पकव्यधिकरणप्रकारकज्ञानयोरनभ्युपगमात् । तथापि तानि मीमांसकादिमतोक्तरीत्या न स्वतो ग्राह्याणि इति नात्रोदाहृतानि । विशेष्यावृत्त्यप्रकारकत्वादेर्विशेषणस्य प्रागनुपस्थितौ तद्वैशिष्ट्यस्य ज्ञातुमशक्यत्वात् । अत्रेदं बोध्यम् । तद्वति तत्प्रकारकज्ञानत्वम् तद्वति तद्वैशिष्ट्यज्ञानत्वं वेति प्रमात्वद्वयं च निष्कम्पप्रवृत्त्युपयोगि मीमांसकमते स्वतो ग्राह्यं च भवति (चि० प्रामा० पृ० १७०) इति ।अनधिगतार्थग्राहित्वं प्रमात्वम् इति मीमांसका आहुः । तच्च स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्तिस्वसमानाकारज्ञानविषयविषयकत्वम् इति निष्कर्षः (कु० ४ टी०) (मू० म० प्रामा० पृ० १७०)। यथा सत्यरजते इदं रजतम् इति ज्ञानस्य प्रमात्वम् । यथा वा घटे अयं घटः इति ज्ञानस्य प्रमात्वम् । प्राभाकरमते सर्वज्ञानानां यथार्थत्वात् तत्प्रकारकज्ञानत्वमेव प्रमात्वम् (चि० १ प्रामा०) (त० प्र० ख० ४ पृ० १३३) (न्या० म० ४ पृ० ३५)। अथात्र प्रसङ्गात्प्रामाण्यवादः प्रदर्श्यते । परमकारुणिकमुनिप्रणीतायामष्टादशविद्यास्थानेष्वभ्यर्हिततमायां निःश्रेयसप्रयोजिकायामान्वीक्षिकीविद्यायां प्रेक्षावत्प्रवृत्त्यर्थं प्रमाणप्रमेयसंशय० तत्त्वज्ञानान्निःश्रेयसाधिगमः (गौत० सू० १।१।१) इति सूत्रेण प्रतिपादितानां षोडशपदार्थानां

मध्ये प्रथमोद्दिष्टस्य प्रमाणस्याधीन इतरेषां निश्चय इति प्रमाणनिश्चय आवश्यकः । स च प्रमात्वनिश्चयं विना न भवतीति प्रमात्वनिश्चयोपाय इदानीं चिन्त्यते ( चि० १ प्रामा० पृ० ११४–११७ ) । अत्र विप्रतिपत्तिः प्रमात्वं स्वतो ग्राह्यं परतो वा इति । अन्यत्र त्वेवं विप्रतिपत्तयः प्रदर्शिताः । ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यम् न वा इति । तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यम् न वा इति । स्वाश्रयग्राहकेण गृह्यत एव न वा इति । स्वाश्रयेण गृह्यत एव न वा इति । घटोयम् इति ज्ञानप्रामाण्यमेतज्ज्ञानग्राह्यम् न वा इति । एतज्ज्ञानग्राहकमात्रग्राह्यम् न वा इति ( चि० १ प्रामा० पृ० १२१–१२६ ) । ज्ञानप्रमात्वस्य स्वतो ग्राह्यत्वं च स्वत एव ( स्वकीयेभ्य एव ) स्वजनकसामग्री स्वजन्यप्रत्यक्षसामग्री स्वजन्यज्ञाततालिङ्गकानुमितिसामग्री एतदन्यतमज्ञानग्राहकसामग्रीग्राह्यत्वम् । अत्र स्वजन्य इति पदद्वयं क्रमेण स्वप्रत्यक्षस्य ज्ञाततायाश्च विशेषणम् । पञ्चम्या जन्यत्वमर्थः ( मू० म० १ प्रामा० पृ० १२६ ) । गुरुभट्टमुरारिमिश्राणां मतत्रयसाधारणं स्वतस्त्वं च तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वम् ( त० दी० प्रामा० पृ० ३४ ) ( त० कौ० पृ० १८ ) । तदर्थस्तु ज्ञाननिष्ठाप्रामाण्याग्राहिका यावती ज्ञानग्राहिका सामग्री इन्द्रियसंनिकर्षपरामर्शानुव्यवसायादिरूपा तज्जन्यग्रहविषयत्वम् । स च ग्रहः ( प्राथमिकज्ञानग्रहः ) गुरुमते व्यवसायः । भट्टमते ज्ञाततालिङ्गकानुमितिः । मुरारिमिश्रमते अनुव्यवसायः (नील० प्रामा० पृ० ३५)। तत्तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकविषयिताप्रतियोगित्वम् इति निष्कर्षः । इदमेव ज्ञप्तौ स्वतस्त्वमित्युच्यते ( नील० पृ० ३४ ) ( सि० च० पृ० ३३ ) । यया कारणसामग्र्या ज्ञानं गृह्यते तयैव तद्गतं प्रमात्वमपि गृह्यत इति स्पष्टार्थः । अत्र त्रीणि मतानि क्रमेणोक्तानि । तथाहि । ज्ञानग्राहकं च सर्वमते घटमहं जानामि इत्याकारकमेव ज्ञानं भवति । ज्ञानस्य स्वस्यैव स्वप्रामाण्यविषयकतया स्वजनकसामग्र्येव स्वनिष्ठप्रामाण्यनिश्चायिका भवति इति गुरव आहुः । स्वोत्तरवर्तिस्वविषय-

कलौकिकप्रत्यक्षस्य स्वनिष्ठप्रामाण्यविषयकतया स्वजन्यस्वविषयकप्रत्यक्षसामग्री स्वनिष्ठप्रामाण्यनिश्चायिका भवति इति मिश्रा आहुः । ज्ञानस्यातीन्द्रियतया प्रत्यक्षासंभवेन स्वजन्यज्ञाततालिङ्गकानुमितिसामग्री स्वनिष्ठप्रामाण्यनिश्चायिका भवति इति भट्टा आहुः ( मू० म० १ प्रामा० पृ० १२६ )। तदप्रामाण्याग्राहकेत्यत्र पदप्रयोजनमित्थम् । नैयायिकमते प्रमात्वमनुमानेन इदं ज्ञानं प्रमा इत्याप्तवाक्येन च गृह्यते इति सिद्धसाधनम् । तद्वारणाय यावत् इति विशेषणम् । अनुमानं तु इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात् इति । वस्तुतस्तु यावत् इति ग्रहस्य विशेषणम् । तथा च ज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वम् इति फलितम् । इदं ज्ञानमप्रमा इति ज्ञानेन व्यवसायनिष्ठप्रामाण्याविषयीकरणात् बाधाख्यो दोषः । तद्वारणाय अप्रामाण्याग्राहिका इति विशेषणं दत्तम् । तथा च तादृशज्ञानसामग्र्याः साध्यकोट्यनिविष्टत्वात् तया प्रामाण्यस्याग्रहणेपि न बाधः इति भावः । ज्ञाननिष्ठाप्रामाण्येत्यत्र ज्ञानं तु यादृशं प्रामाण्यं प्रकृतानुमितावुद्देश्यं तादृशप्रामाण्याश्रयः इति विज्ञेयम् । तेन इदं ज्ञानमप्रमा इत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकस्याप्रामाण्याग्राहकत्वाभावेपि न स्वतस्त्वहानिः ( त० दी० ) ( नील० प्रामा० पृ० ३५ ) । प्रामाण्ये स्वतस्त्वं नाम यावत्स्वाश्रयविषयकज्ञानग्राह्यत्वम् । प्रामाण्याश्रयविषयकज्ञानं च स्वप्रकाशं तदेव इति गुरव आहुः । ज्ञानग्राहकातिरिक्तानपेक्षत्वम् यावत्स्वाश्रयानुमितिग्राह्यत्वम् । प्रामाण्याश्रयानुमितिर्ज्ञाततालिङ्गका समर्थप्रवृत्तिलिङ्गकापि इति भट्टा आहुः । मिश्रमते स्वतस्त्वं च प्रामाण्यग्रहप्रतिबन्धकाभावकालीनयावत्स्वाश्रयानुव्यवसायग्राह्यत्वम् ( त० प्र० ख० ४ पृ० १३२ ) ( म० प्र० प्रामा० पृ० ७० ) । प्रामाण्यग्रहप्रतिबन्धकाभावकालीनप्रामाण्याश्रयीभूतज्ञानग्राहकसामग्रीग्राह्यत्वं वा । अथवा विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वम् । इदं स्वतस्त्वं च मुरारिभट्टानां मते उत्पद्यते ( कु० १ ) ( सर्व० पृ० २८३ जैमि० ) ( त० भा० ४ ) ( सि० च० पृ० ३४ ) । उत्पत्तौ प्रामाण्यस्य स्वतस्त्वं नाम कार्यकारणादेव कार्येण सहोत्पत्तिः ( अथर्वभाष्य० पृ० १२ )

मायामतिनो वेदान्तिनस्तु दोषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वं स्वतस्त्वम् । यद्वा यावत्स्वाश्रयग्राहकग्राह्ययोग्यत्वं स्वतस्त्वम् इत्याहुः । एतन्मतेपि प्रमात्वं स्वत एवोत्पद्यते ज्ञायते च । तथाहि । प्रमात्वम् ज्ञानसामान्यसामग्रीप्रयोज्यम् । न त्वधिकं गुणमपेक्षते । प्रमामात्रेनुगतगुणाभावात् । नापि प्रत्यक्षप्रमायां भूयोवयवेन्द्रियसंनिकर्षः । रूपादिप्रत्यक्षे आत्मप्रत्यक्षे च तदभावात् । सत्यपि तस्मिन् पीतः शङ्खः इति प्रत्यक्षस्य भ्रमत्वाच्च । अत एव न सल्लिङ्गपरामर्शादिकमप्यनुमित्यादिप्रमायां गुणः । असल्लिङ्गपरामर्शादिस्थलेपि विषयाबाधेनानुमित्यादेः प्रमात्वात् । अस्मिन्मते स्वतो ग्राह्यत्वं च दोषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वम् । तथाहि स्वाश्रयः वृत्तिज्ञानम् । तद्ग्राहकम् साक्षिज्ञानम् । तेन वृत्तिज्ञाने गृह्यमाणे तद्गतं प्रामाण्यमपि गृह्यते । न चैवं प्रामाण्यसंशयानुपपत्तिः । तत्र संशयानुरोधेन दोषस्यापि सत्त्वेन दोषाभावघटितस्वाश्रयग्राहकाभावेन तत्र प्रामाण्यस्यैवाग्रहात् इति ( वेदा० प० अनुपलब्धिपरि० पृ० ७१) । यद्वा यावत्स्वाश्रयग्राहकग्राह्यत्वयोग्यत्वं स्वतस्त्वम् । संशयस्थले प्रामाण्यस्योक्तयोग्यतायाः सत्त्वेपि दोषवशेनाग्रहात् न संशयानुपपत्तिः इति । अप्रामाण्यं तु न ज्ञानसामान्यसामग्रीप्रयोज्यम् । प्रमायामप्यप्रामाण्यापत्तेः । किं तु दोषप्रयोज्यम् । नाप्यप्रामाण्यम् यावत्स्वाश्रयग्राहकग्राह्यम् । अप्रामाण्यघटकतदभाववत्त्वादेर्वृत्तिज्ञानानुपनीतत्वेन साक्षिणा ग्रहीतुमशक्यत्वात् । किंतु विसंवादिप्रवृत्त्यादिलिङ्गकानुमित्यादिविषयः इति परत एवाप्रामाण्यमुत्पद्यते ज्ञायते चेति ( वेदान्तप० अनुपलब्धिपरिच्छेदः पृ० ७१—७२ ) । तत्र प्रमात्वं स्वतोग्राह्यमिति वदतां मीमांसकानामयमाशयः । यथा दूरात्प्रत्यक्षेण इन्द्रियेण जलादिज्ञाने जाते तत्र स्वत एव यथार्थज्ञानत्वरूपप्रामाण्यमवधार्य जलार्थी प्रवर्तते । ज्ञानग्रहे तद्गतप्रामाण्यस्यापि ग्रहात्प्रमात्वस्य स्वतस्त्वमुपपद्यते ( त० कौ० प्रामा० पृ० १८ ) इति । अन्यत्र चेत्थमुक्तम् । मीमांसकमते प्रामाण्यस्य स्वतस्त्वं द्विविधम् उत्पत्तौ ज्ञप्तौ चेति । तत्र उत्पत्तौ स्वतस्त्वं नाम ज्ञानकरणमात्रजन्यत्वम् । येन ज्ञानं जायते तेनैव तद्गतं

प्रामाण्यमपि जायत इति । ज्ञप्तौ स्वतस्त्वं नाम ज्ञानग्राहकमात्रग्राह्यत्वम्। येन ज्ञानं गृह्यते तेनैव तद्गतं प्रामाण्यमपि गृह्यत इति । नैयायिकमते परतस्त्वमपि द्विविधम् उत्पत्तौ ज्ञप्तौ चेति । तत्र उत्पत्तौ परतस्त्वं नाम ज्ञानकारणातिरिक्तकारणजन्यत्वम् । ज्ञप्तौ परतस्त्वं नाम ज्ञानग्राहकातिरिक्तग्राह्यत्वम् इति वस्तुस्थितिः (प्र० च० परि० १ पृ० ४५)। मीमांसकाश्च त्रयो मिथो विप्रतिपन्नाः । प्रभाकरापरनामका गुरवः तुतातताख्या भट्टाः मुरारिनामका मिश्राश्चेति । तत्र गुरूणां मतम् ज्ञानस्य स्वप्रकाशरूपत्वात्तज्ज्ञानप्रामाण्यं तेनैव गृह्यते इति। भट्टानां मतं च ज्ञानमतीन्द्रियम्। ज्ञानजन्या ज्ञातता प्रत्यक्षा। तया च ज्ञानमनुमीयते। अत्रानुमानं तु घटो घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयो घटत्वप्रकारकज्ञातताववत्त्वात् यन्नैवं तन्नैवम् इति (नील० प्रामा० पृ० ३५)। मुरारिमिश्रमतं तु अनुव्यवसायेन ज्ञानं गृह्यते इति । सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते । विषयनिरूप्यं हि ज्ञानम्। अतो ज्ञानवित्तिवेद्यो विषयः (मु० गु०) इति। तदर्थश्च विषयनिरूप्यं विषयज्ञानजन्यसाक्षात्कारविषयीभूतम् इति (म० प्र० पृ० ६९)। इदमत्र तत्त्वम्। गुरुमते घटत्वेन घटमहं जामामि इत्याद्याकारकं व्यवसायात्मकमेव सर्वं ज्ञानम्। तच्च स्वप्रकाशम् । मितिमातृमेयैतत्त्रयविषयत्वात्त्रिपुटीत्युच्यते । स्वप्रकाशसामर्थ्यादेव स्वात्मानमिव स्ववृत्तिप्रामाण्यं स्वत एव गृह्णाति इति। भट्टमते अयं घटः इति ज्ञानानन्तरं घटे ज्ञाततानामकं फलं भवति । ततो ज्ञातो घटः इति प्रत्यक्षम्। पश्चात्तया ज्ञाततया ज्ञानमात्रस्यातीन्द्रियत्वाज्ज्ञानं तन्निष्ठप्रामाण्यं चानुमीयते इति । मिश्रमते च अयं घटः इत्याकारकज्ञानानन्तरं घटत्वेन घटमहं जानामि इति ज्ञानविषयकलौकिकमानसमुत्पद्यते । तेन प्रामाण्यस्य ग्रहणम्। घटमहं जानामि इत्यनुव्यवसायस्तु घटं घटत्वं समवायं च विषयीकुर्वन्नात्मनि प्रकारीभूतघटमात्मानं तत्संबन्धीभूतव्यवसायं विषयीकरोति । एवं पुरोवृत्तिप्रकारसंबन्धस्यैव (पुरोवर्तिनि यः प्रकारसंबन्धः तद्घटितस्यैव) प्रमात्वपदार्थत्वेन स्वत एव प्रामाण्यं गृह्णाति (नील०) (सि० च०

पृ० ३४ ) । अत्रायमाशयः । नैयायिका अपि अनुव्यवसाये विशेष्यत्वप्रकारत्वयोर्भानमङ्गीकुर्वन्ति । पुरोवर्तिनं घटत्वेन जानामि इत्याकारकस्यैवानुव्यवसायस्य तैरङ्गीकारात् । परंतु पुरोवर्तिनि घटादौ घटत्वादिरूपप्रकारसंबन्धभानं नाङ्गीकुर्वन्ति । अतस्तत्र प्रकारसंबन्धभानस्य व्यवस्थापने किमपि नावशिष्टम् इति प्रामाण्यस्य भानं न सिध्यति । अनुपस्थितयोरपि विशेष्यत्वप्रकारत्वयोर्भानस्य सर्वसंमतत्वात् इति ( नील० प्रामा० पृ० ३६ ) । प्राभाकरास्त्वेत्थमाहुः । ज्ञानस्य प्रत्यक्षत्वमेव । प्रमात्वं स्वत एव गृह्यते । प्रमात्वाश्रयीभूतं यत् ज्ञानम् तत् यया कारणसामग्र्या आत्ममनःसंनिकर्षः इन्द्रियविषयसंनिकर्षः इत्यादिकया जन्यते तद्वृत्तिप्रमात्वमपि तयैव सामग्र्या गृह्यते । तथाच स्वप्रकाशमेव ज्ञानम् । अत्र व्युत्पत्तिः । स्वं प्रकाशते भासते यत्र तत् इति ( त० प्र० ख० ४ पृ० १२८ ) । यथा न्यायनये घटज्ञानं घटविषयकत्वाद्घटप्रकाशम् । यथा वा ईश्वरज्ञानं स्वविषयकत्वात्स्वप्रकाशमपि ( अन्यथा तज्ज्ञानस्य सर्वविषयकत्वं न स्यात् ) तथा गुरुमते सर्वमेव ज्ञानं स्वविषयकत्वात्स्वप्रकाशमेव ( म० प्र० पृ० ६७ ) । तथा च अयं घटः इति ज्ञानम् यथा घटादिकं विषयीकरोति तथा स्वात्मानं स्वस्वरूपम् स्वस्याधिकरणम् आत्मानं च विषयीकरोति । ज्ञानस्य घटादिविषय स्वस्वरूप आत्मरूपाधिकरण एतत्त्रयविषयकत्वादेव सर्वमेव ज्ञानम् घटमहं जानामि इत्याकारकमेव । इत्थं सर्वस्य व्यवसायस्यानुव्यवसायात्मकत्वे च ज्ञानस्य मितिमातृमेयविषयकत्वात् त्रिपुटीप्रत्यक्षता इति प्रवादः । तदर्थश्च ज्ञानस्य सर्वस्य ज्ञानस्य । मितिः ज्ञानम् । माता आत्मा । मेयम् घटादि । तद्विषयकत्वात् मितिमातृमेयानां ज्ञानस्यैकसामग्रीकत्वात् । त्रिपुटी त्रयाणां पुटानां समाहारस्त्रिपुटी । मितिमातृमेयविषया तत्प्रत्यक्षता इति ( त० प्र० ख० ४ पृ० १२८–१२९ ) । तथा च स्वप्रकाशमहिम्ना स्वमिव स्वप्रामाण्यमपि सिद्ध्यति ( विषयीभवति ) इत्याहुः ( न्या० म० ४ पृ० ३३–३४ ) ( त० प्र० ख० ४ पृ० १२८ ) ( म० प्र० पृ० ६९ ) । स्वस्मिन्स्वविषयकत्वं स्वीक्रियते इति भावः ( त० प्र० ख० ४ पृ० १३० ) ।

स्वप्रकाशत्वस्वरूपज्ञानस्वभावेन यथा तेनैव ज्ञानेन तदेव सिद्ध्यति तथा तद्गतं तत्प्रकारकत्वरूपं प्रामाण्यमपि सिद्ध्यति इत्यर्थः (म० प्र० पृ० ६८)। भट्टास्तु ज्ञानं तावत्स्वविषये ज्ञातताख्यं फलं जनयति इति निरूढम्। तयैवानुमेयं ज्ञानम्। तथा च ज्ञाततया ज्ञानानुमितिर्जायमाना प्रामाण्यमपि विषयीकरोति इत्याहुः। स्वविषये इत्यस्य ज्ञानविषये घटादावित्यर्थः। ज्ञातो घटः इति प्रतीतेर्ज्ञातताख्यं फलं जन्यते इति बोध्यम्। अस्यां प्रतीतौ ज्ञानं निमित्तकारणम्। घटादिकं समवायिकारणम्। असमवायिकारणं तु नापेक्षितम्। भावकार्यस्य सासमवायिकारणकत्वम् इति नियमस्य भट्टैरनङ्गीकरात् इति। ज्ञानं न प्रत्यक्षम्। अनवस्थापत्तेः। किंतु अनुमितिग्राह्यमेव इति भट्टमतम् (त० प्र० ख० ४ पृ० १२९)। अनुमानं तु घटो ज्ञानवान् ज्ञातताश्रयत्वात् इति (म० प्र० पृ० ६७)। तदर्थश्च ज्ञाततया घटो ज्ञानवान् ज्ञातताश्रयत्वात् इत्यादिना ज्ञानविधेयकानुमितिर्जायमाना घटत्ववति घटत्वप्रकारकत्वरूपं प्रामाण्यमपि विषयीकरोति (त० प्र० ख० ४ पृ० १३०) इति। घटो घटत्वप्रकारकज्ञानविशेष्यः घटत्वप्रकारकज्ञातताश्रयत्वात् इत्यनेन घटे घटत्वप्रकारकज्ञानविशेष्यत्वानुमितिर्जायमाना घटविशेष्यकघटत्वप्रकारकत्वं ज्ञानेपि विषयीकरोति। तयोः समानवित्तिवेद्यत्वादिति भावः (म० प्र० पृ० ६७)। मुरारिमिश्रास्तु तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वं प्रामाण्यम्। तच्च घटमहं जानामि इति प्रथमानुव्यवसायेनैव गृह्यते। तथाहि घटत्ववांस्तावत् घटोयम् इति व्यवसायेनोपनीतः (मनसा सह संनिधापितः)। अतः तद्वद्विशेष्यकता संसर्गरूपा ज्ञानेन मनसा गृह्यते। विशेषणस्य पूर्वमुपस्थितत्वात्। एवम् घटत्वमपि व्यवसायेनैवोपनीतम्। अतः तत्प्रकारकता विषयताप्यनुग्रहा इत्युभयस्यैकग्रहेण गृहीतं प्रामाण्यम् इत्याहुः (न्या० म० ४ पृ० २३-२४) (म० प्र०)। नैयायिकास्तु परतः अनुमानादिना ज्ञानस्य प्रामाण्यं ग्राह्यम् उत्पाद्यं चेति वदन्ति। अत्रायमर्थः। द्वितीयानुव्यवसायेन प्रामाण्यं गृह्यते। तथाहि प्रथमं अयं घटः इति ज्ञानम्। ततः ज्ञानकाम्यत्वे इति निर्विकल्पकम्।

ततः घटमहं जानामि इत्यनुव्यवसायः । ततो व्यवसायस्य नाशात् पुनः घटोयम् इति व्यवसायः । ततश्च घटमहं जानामि इत्यनुव्यवसायः । तेन प्रामाण्यं गृह्यते इति ( त० प्र० ख० ४ पृ० १२१ ) । नैयायिकानामयं भावः । प्रामाण्यस्य स्वतो ग्रहे अनभ्यासदशोत्पन्नज्ञाने तत्संशयो न स्यात् । ज्ञानग्रहे प्रामाण्यनिश्चयात् । अनिश्चये वा न स्वतः प्रामाण्यग्रहः । ज्ञानाग्रहे धर्मिज्ञानाभावात् न संशयः । अनभ्यासदशोत्पन्नम् प्रामाण्यव्याप्यवत्तानिश्चयकालीनम् । तत्संशयः इदं प्रमा न वा इति प्रामाण्यसंशयः ( मू० म० १ प्रामा० पृ० १८९ ) । अयं भावः । न च संशयस्थले ज्ञानग्रहोपि ( प्रामाण्याश्रयज्ञानस्य विशेष्यस्य ग्रह एव ) नास्ति इति वाच्यम् । ज्ञानाग्रहे ज्ञानधर्मिकप्रामाण्यतदभावकोटिकसंशयानुपपत्तेः । संशये धर्मिज्ञानस्य हेतुत्वात् ( चि० १ प्रा० पृ० १८८–१८९ ) ( त० कौ० पृ० १८ ) इति । यदि मीमांसकाः प्रमात्वस्य स्वतो ग्राह्यत्वं स्वीकुर्युस्तदा अनभ्यासदशायां ( प्राथमिकजलज्ञानग्रहोत्तरदशायाम् ) तन्मते प्रामाण्यसंशयानुपपत्तिः । तथाहि । ज्ञानग्रहानन्तरम् किंचिज्जातं मे यज्जलज्ञानम् तत् प्रमा न वा इति प्रामाण्यसंशयो लोकेनुभवसिद्धः । स न स्यात् । तन्मते ज्ञानग्रहे प्रमात्वस्यापि निश्चितत्वेन तत्संशयायोगात् इति । अतः परत एव अनुमानादिना प्रमात्वमवश्यं ग्राह्यम् ( त० कौ० पृ० १८ ) इति । परतस्त्वं च ज्ञानसामान्यग्राहकातिरिक्तग्राह्यत्वम् । ईदृशपरतस्त्वं ज्ञप्तौ क्वचित् द्वितीयानुव्यवसायमादाय । क्वचित्तु अनुमानमादाय बोध्यम् । तथाहि । परतो ग्रहणे प्रमाणमनुमानम् । तत्र विमता प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वादप्रमावत् ( सर्व० पृ० २८२ जैमि० ) इति । तथा च द्वितीयानुव्यवसायेन क्वचित्प्रामाण्यग्रहे च प्रामाण्यरूपसाध्यप्रसिद्धावनुमानमपि प्रामाण्यग्राहकम् । तद्यथा इदं पुरुषज्ञानम् प्रमा करादिमति पुरुषज्ञानत्वात् संप्रतिपन्नवत् । यन्नैवं तन्नैवम् इति व्यतिरेकी । तदर्थश्च इदम् द्वितीयानुमानेनागृहीतप्रामाण्यकम् पुरुषज्ञानं प्रमा ( पुरुषत्ववद्विशेष्यकत्वे सति पुरुषत्वप्रकारकत्ववत् )

करादिमति करादिमद्विशेष्यकत्वे सति पुरुषत्वप्रकारकज्ञानत्वात् संप्रतिपन्नवत् द्वितीयानुव्यवसायेन गृहीतप्रामाण्यकपुरुषज्ञानवत् इति । यद्वा यन्न पुरुषत्ववति पुरुषत्वज्ञानम् तन्न करादिमति पुरुषत्वज्ञानम् । यथा स्थाणौ पुरुषत्वभ्रमः इति व्यतिरेकी ( न्या० म० पृ० ३५ ) ( त० प्र० ख० ४ पृ० १३२ ) ( म० प्र० ४ पृ० ७१ ) । अत्र च परतस्त्वं द्विविधम् । ज्ञप्तौ परतस्त्वम् उत्पत्तौ परतस्त्वम् । अत्र प्रामाण्यस्य परत उत्पत्तिकत्वं च ज्ञानसाक्षाद्विभाजकोपाध्यवच्छिन्नकार्यताप्रतियोगिककारणतानिरूपितकार्यतावत्त्वम् ( मू० म० प्रामा० ) । आद्यं यथा प्रथमजलज्ञानानन्तरं प्रवृत्तौ सत्यां जललाभे सति पूर्वोत्पन्नज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात् यत्प्रमा न भवति तत्समर्थप्रवृत्तिजनकं न भवति यथा अप्रमा ( जलभ्रमः ) इति व्यतिरेकिणानुमानेनानभ्यासदशापन्नज्ञाने प्रमात्वं निश्चीयते इति । अनभ्यासदशापन्नप्राथमिकजलादिज्ञाने जाते तत्र प्रामाण्यसंशये सत्यपि पुरुषः प्रवर्तते इति विशेषोत्र द्रष्टव्यः ( त० कौ० पृ० १८ ) । अत्रेदं बोध्यम् । प्रथमं जलजलत्वयोर्निर्विकल्पकम् । ततः इदं जलम् इति विशिष्टज्ञानम् । तत इच्छा । ततः प्रवृत्तिः । तदनन्तरं जललाभः ( सि० च० ) इति । अभ्यासदशापन्नज्ञानेषु द्वितीयतृतीयादिजलादिज्ञानेषु तु प्रवृत्तेः पूर्वमप्यन्वयव्यतिरेकिणापि पूर्वज्ञानदृष्टान्तेन तत्सजातीयत्वलिङ्गेन प्रामाण्यमवधार्यते । तद्यथा द्वितीयादिजलज्ञानं प्रमा समर्थप्रवृत्तिजनकजातीयत्वादाद्यजलज्ञानवत् ( त० कौ० पृ० १८ ) ( नील० ) इति । द्वितीयं उत्पत्तौ परतस्त्वं तु प्रमाया गुणजन्यत्वरूपम् । तद्यथा प्रत्यक्षप्रमायां विशेषणवद्विशेष्यसंनिकर्षात्मकगुणजन्यत्वम् । अथवा भूयोवयवावच्छेदेनेन्द्रियसंनिकर्षात्मकगुणजन्यत्वम् । एवमनुमितौ व्यापकवति व्याप्यवत्ताज्ञानरूपगुणजन्यत्वम् उपमितौ यथार्थसादृश्यज्ञानात्मकगुणजन्यत्वम् शाब्दबोधे च यथार्थयोग्यताज्ञानरूपगुणजन्यत्वं यथार्थवक्तृवाक्यार्थज्ञानरूपगुणजन्यत्वं वा उत्पत्तौ परतस्त्वम् इत्याद्यूहनीयम् ( नील० पृ० ३७ ) ( म० प्र० ४ पृ० ७३ ) । अत्रायं संग्रहः । प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः । नैयायिकास्ते परतः सौगता-

श्चरमं स्वतः ॥ प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः । प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणताम् ॥ ( सर्व० पृ० २७९ जैमि० ) इति । एवम् नैयायिकमते अप्रमात्वमपि परत एव अनुमानादिना गृह्यते उत्पद्यते च ( चि० १ प्रामा० ) ( त० दी० पृ० ३७ ) ( सि० च० ) इति । अत्रानुमानादिनैवाप्रमात्वं गृह्यते ( अनुमीयते ) । तत्र हेतुः पुरोवर्तिनि प्रकाराभावस्य व्यवसायेनाविषयीकरणात् । तथा च प्रत्यासत्तेरभावादप्रमात्वस्यानुव्यवसायेन ग्रहणं न भवति इति भावः । अत्रानुमानप्रयोगस्त्वित्थम् । इदं ज्ञानमप्रमा विसंवादिप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा प्रमा ( नील० प्रामा० पृ० ३७ ) इति । एवं च अनुमानादिग्राह्यत्वादप्रमाया ज्ञप्तौ परतस्त्वम् इति बोध्यम् । तथा अप्रमायाः पित्तमण्डूकवसाञ्जनचाकचक्यदूरत्वादिदोषजन्यत्वादुत्पत्तावपि परतस्त्वमिति बोध्यम् ( सि० च० ) । अत्र पित्तदूरत्वादिदोषोननुगतोप्यन्वयव्यतिरेकाभ्यां हेतुर्भवति इति विज्ञेयम् ( म० प्र० प्रामा० पृ० ७३ ) ।

**प्रमादः**—( दोषः ) १ पूर्वं कर्तव्यतया निश्चितेप्यकर्तव्यताधीः । एवं वैपरीत्येपि ( गौ० वृ० ४।१।३ ) । सा च पूर्वमकर्तव्यतया निश्चितेपि कर्तव्यताधीः । यथा प्रमादात्कुर्वतां कर्म इत्यादौ । २ कर्तव्ये अकर्तव्यत्वधिया ततो निवृत्तिः अकर्तव्ये कर्तव्यत्वधिया तत्र प्रवृत्तिर्वा प्रमादः इति केचिदाहुः ( वाच० ) । ३ अनवधानता इति काव्यज्ञा आहुः ( अमरः ) । ४ पञ्चसमितिगुप्तिष्वनुत्साहः ( सर्व० सं० पृ० ७६ आर्हे० ) । समाधिसाधनानामभावनं प्रमादः ( सर्व० सं० पृ० ३५५ पातञ्ज० ) ।

**प्रमितत्वम्**—१ प्रमाविषयत्वम् । यथा घटे स घटः अस्ति इति ज्ञानविषयत्वम् । यथा वा स्थावरजङ्गमात्मकस्य सर्वस्य जगतः प्रमितत्वम् । क्वचित् स्वविशेष्यकप्रमाप्रकारत्वम् ( ग० बाध० ) । २ परिमितत्वम् । यथा प्रमितास्तण्डुलाः इत्यादौ ।

**प्रमितिः**—प्रमात्रर्थयोरनुसंधेयः ( कु० टी० ४।५ ) ।

**प्रमेयम्**—१ [ क ] योऽर्थः तत्त्वतः प्रमीयते तत्प्रमेयम् ( वात्स्या० १।१।१ प्रस्तावना ) । यथा घटपटादि सर्वं जगत्प्रमेयम् । अत्र प्रमेयत्वं च ईश्वरीयप्रमाविषयत्वम् ( त० दी० २ ) । तच्च केवलान्वयि । सर्वस्यापि जगत ईश्वरज्ञानरूपप्रमाविषयत्वात् ( न्या० म० ) । सामान्यतः प्रमाविषयत्वं वा प्रमेयत्वम् । मायावादिमते विशुद्धं चैतन्यमेव प्रमेयम् । [ ख ] संसारहेतुमिथ्याज्ञानविषयः मोक्षहेतुधीविषयो वा । यथा आत्मशरीरादि प्रमेयम् । न्यायमते द्वादशविधं प्रमेयम् । आत्मा शरीरम् इन्द्रियम् अर्थः बुद्धिः मनः प्रवृत्तिः दोषः प्रेत्यभावः फलम् दुःखम् अपवर्गश्च ( गौ० १।१।९ ) इति । अत्र प्रमेयत्वं च तत्त्वज्ञाननियामकतावच्छेदकम् इति ज्ञेयम् । २ परिच्छेद्यम् । ३ अवधारणविषयः ( अवधार्यम् ) इति काव्यज्ञा आहुः ।

**प्रयत्नः**—( गुणः ) १ [ क ] प्रयत्नः संरम्भः उत्साहः इति पर्यायः ( प्रशस्त० २ पृ० ३३ ) । स च मनोग्राह्यः ( भा० प० श्लो० ५८ ) निराकारः सविषयकः आत्ममात्रधर्मश्च इति विज्ञेयम् । प्रयत्नलक्षणं च कृतित्वजातिमत्त्वम् ( वाक्य० गु० पृ० २१ ) । अथवा संस्कारेच्छाभिन्नत्वे सति संबन्धानवच्छिन्नप्रकारताकत्वम् ( ल० व० ) । [ ख ] प्रयत्नत्वसामान्यवान् उत्साहरूपः ( त० कौ० ) । तथा चोक्तम् । प्रयत्नस्त्वात्मधर्मः स्यादुत्साहो भावना च सः ( ता० र० परि० १ श्लो० ४६ ) इति । स च कृतिरित्युच्यते ( त० सं० ) । [ ग ] प्रयत्नव्यवहारासाधारणं कारणम् ( प्र० प्र० १७ ) । यथा पचतीत्यादौ तिबर्थः । प्रयत्नव्यवहारश्च अहं यते स यतते इत्यादिव्यवहारः । स त्रिविधः प्रवृत्तिः निवृत्तिः जीवनयोनियत्नश्चेति ( भा० प० श्लो० १५० ) ( वाक्य० गु० पृ० २१ ) । प्रकारान्तरेण स प्रयत्नः द्विविधः जीवनपूर्वकः इच्छाद्वेषपूर्वकश्च । तत्र जीवनपूर्वकः सुप्तस्य प्राणापानसंतानप्रेरकः प्रबोधकाले चान्तःकरणस्येन्द्रियान्तरप्राप्तिहेतुः । अस्य जीवनसंज्ञकस्यात्ममनसोः संयोगाद्धर्माधर्मापेक्षादुत्पत्तिः ( प्रशस्त० २ पृ० ३३ ) ।

शिष्टं तु जीवनयोनिशब्दव्याख्यानावसरे संपादितम् । इच्छाद्वेषपूर्वकस्तु हिताहितप्राप्तिपरिहारसमर्थस्य व्यापारस्य हेतुः शरीरविधारकश्च आत्ममनसोः संयोगादिच्छापेक्षाद्वेषापेक्षाद्वा उत्पद्यते (प्रशस्त० २ पृ० ३३)। २ फलार्थिभिः प्रारब्धस्य कर्मणोवस्थापञ्चकान्तर्गतोवस्थाविशेषः प्रयत्नः इति साहित्यशास्त्रज्ञा आहुः (वाच०)। तदुक्तम् प्रयत्नस्तु फलावाप्त्यै व्यापारोतित्वरान्वितः (सा० द० परि० ६ श्लो० ३२६) इति। ३ प्रयासः इति काव्यज्ञा आहुः ।

**प्रयुक्तत्वम्**—१ प्रयोज्यत्वम् । तच्च कारणाभावात्कार्याभावः इति प्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः । यथा दण्डाभावाद्घटाभाव इत्यादौ घटाभावाद्यन्वयि पञ्चम्यर्थः प्रयुक्तत्वम् (मू० म० १) (गौ० वृ० १।१।२) (ग० हेत्वा० साधा० पृ० २४)। यथा वा पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा (त० सं०) इत्यादौ प्रयुक्तत्वम् (नील० ४ पृ० ३२)। २ क्वचित्तु व्यापकत्वम् । यथा दीधितिहेत्वाभाससामान्यनिरुक्तौ अत्र वदन्ति इति कल्पे यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्तः तदुत्तरमनुमितौ द्वयोर्व्यतिरेकः इति हेत्वाभाससामान्यलक्षणस्य निर्वह्निर्वह्निमान् इत्यादौ बाधाद्यव्याप्त्यापत्तिवारणार्थं प्रथमयत्तुकारेण प्रयुक्तपदस्य व्यापकत्ववान् इत्यर्थः स्वीकृतः । एवं च प्रथमयत्तुकारमते विरोधिविषयकयद्विषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकः प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्व साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्व एतदुभयाभावः तत्त्वम् हेतुदोषत्वम् इति पर्यवसितोर्थः (ग० २ हेत्वा० सामा० पृ० २७)। ३ प्रयोगकर्मत्वम् । यथा शब्दः प्रयुक्तः वाक्यं प्रयुक्तम् इत्यादौ शब्दवाक्ययोः प्रयुक्तत्वम् । ४ प्रेरितत्वम् इति काव्यज्ञा आहुः ।

**प्रयोगः**—१ अनुमानम् (वै० उ० ७।१।७)। २ उदाहरणम् । ३ शब्दोच्चारणम् । तत्र नैयायिकाः अनुमानाङ्गपञ्चावयववाक्योच्चारणम् यथा अत्रायं प्रयोगः इत्यादौ पर्वतो वह्निमान् धूमात् इत्यादिप्रयोगः इत्याहुः । शाब्दिकास्तु शब्दानां यथायोगं समभिव्याहृतत्वेनोच्चारणं

प्रयोगः इति वदन्ति । ४ यज्ञादिक्रियाकलापेतिकर्तव्यताबोधकानां समुच्चयप्रतिपादकः पद्धत्यपरपर्यायो ग्रन्थः इति याज्ञिका आहुः । ५ उत्तमर्णेन स्वद्रव्यस्य वृद्ध्यर्थमधमर्णाय दानं प्रयोगः इति व्यवहारज्ञा वदन्ति । ६ भूतप्रेताद्युच्चाटनसाधनमन्त्रोच्चारणाद्यनुष्ठानम् इति तान्त्रिका आहुः । ७ नायकयोर्मेलने क्रियाविशेषः इत्यालंकारिका आहुः । ८ शस्त्रादिमोचनम् इति योद्धारो वदन्ति ।

**प्रयोगविधिः**—( विधिः ) [ क ] प्रयोगाविलम्बबोधको विधिविशेषः । स च प्रयोगविधिः प्रयाजाद्यङ्गजातवाक्यैकवाक्यतामापन्नो दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इत्यादिप्रधानविधिरेवोक्तवक्ष्यमाणविधित्रयमेलनरूपश्चतुर्थोयं विधिः न तु विध्यन्तरम् ( लौ० भा० टी० पृ० ३० )। [ ख ] अङ्गानां क्रमबोधको विधिः ( लौ० भा० पृ० ३०—३१ ) । अत्र क्रमो नाम विततिविशेषः । पौर्वापर्यरूपो वा । तत्र क्रमे षट् प्रमाणानि श्रुति अर्थ पाठ स्थान मुख्य प्रवृत्ति इत्याख्यानि इति ( लौ० भा० पृ० ३१ ) ( म० प्र० ४ पृ० ६२ ) । अत्र उत्तरोत्तरमपेक्ष्य पूर्वपूर्वं बलीयः इति विज्ञेयम् । टीकायां चेत्थमुक्तम् । विततनं वितानो वा विततिः । तनु विस्तारे इति धातोर्भावे क्तिः । तथा च बहुभिः कर्तृभिर्युगपत् कृतानामपि पदार्थानां वितानविशेषो भवत्येव न तु क्रमव्यवहारः । तथाच तत्र प्रथमलक्षणस्यातिव्याप्तिः इत्यरुच्या लक्षणान्तरमाह पौर्वापर्येति ( लौ० भा० टी० पृ० ३१ ) । [ ग ] अनुष्ठीयमानपदार्थानां क्रमबोधको विधिः । यथा वेदं कृत्वा वेदिं करोति इत्यादि । अत्र क्रमस्तु अव्यवहितोत्तरत्वम् ( भाट्टदी० ) । अथवा अव्यवहितपौर्वापर्यम् । स च प्रयोगविधिः अङ्गविध्येकवाक्यतापन्नः प्रधानविधिरेव । तेन क्रमेण ( केवलक्रमेण ) पदार्थानामनुष्ठानात् ( म० प्र० ४ पृ० ३२ ) ( लौ० भा० ३१—३३ ) । यथा वा अग्निहोत्रं जुहोति यवागूं पचति इत्यादि । अत्र पाठक्रमादर्थक्रमो बलीयान् इति पाठक्रमं परित्यज्यार्थक्रम एवाश्रीयते । इत्थं च पूर्वं यवागूपाकः ततो यवाग्वाग्निहोत्रहोमः ( म० प्र० पृ० ६२ ) ( लौ० भा० ३३ ) । [ घ ] प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः ( मी० न्या० पृ० ३७ ) ।

**प्रयोजकत्वम्**—१ [क] परंपरया (न तु साक्षात्) कार्यजनकत्वम्। यथा काश्यां मरणान्मुक्तिरित्यादौ मोक्षं प्रति काशीमरणस्य प्रयोजकत्वम्। अत्र मुक्तौ तत्त्वज्ञानस्यैव साक्षात्कारणत्वम्। काशीमरणस्य तु मुक्तौ परंपरया कारणत्वम् इति तस्य प्रयोजकत्वं ज्ञेयम् (त० प्र० १ मङ्गल०)। अत्रेदं तत्त्वम्। यस्यानुकूलतर्कोस्ति स एव स्यात्प्रयोजकः हेतुः इति। यस्यानुकूलतर्काभावः सोन्यथासिद्धः (ता० र० श्लो० ८७–८८)। अत्र वदन्ति कारणस्य यत् कारणम् तस्य प्रयोजकत्वम् इति। अत्र गुरुचरणाः प्राहुः तन्निष्ठान्यथासिद्धिभिन्नान्यथासिद्धिशून्यत्वे सति कार्याव्यवहितपूर्ववृत्तित्वम् इति। [ख] स्वरूपसंबन्धविशेषः। यथा दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानां मध्ये यदुत्तरोत्तरम् तेषामपाये तत्पूर्वस्यापायादपवर्गः इत्यादौ पञ्चम्यर्थः। यथा वा दण्डाभावाद्घटाभाव इत्यादौ दण्डाद्यन्वयी पञ्चम्यर्थः प्रयोजकत्वम् (गौ० वृ० १।१।२)। २ हेतुत्वम्। तच्च ज्ञापकज्ञानविषयत्वम्। यथा पर्वतो वह्निमान् धूमादित्यादौ धूमस्य प्रयोजकत्वम् (ग० व्यु० का० ३ पृ० ८७)। ३ वैयाकरणास्तु हेतुसंज्ञककर्तृत्वम्। यथा तत्प्रयोजको हेतुश्च (पा० सू० १।४।५५) इत्यादौ इत्याहुः। यथा वा धर्मशास्त्रे प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफलेषु कर्मसु भागिनः। यो भूय आरभते तस्मिन् फलविशेषः (आपस्त० सू० २।११।२९।१–२) इत्यादौ प्रयोजकत्वम्। अत्र प्रयोजकस्य हन्तृत्वम् (प्रा० वि०) निर्णीतं यथा निरन्तरव्यापाराव्यवधानेन वधनिष्पादकः कर्ता। यः कर्तारं कारयति स प्रयोजकः। सोपि द्विविधः। तत्रैकः स्वतोप्रवृत्तं पदार्तिं वेतनादिना वधार्थं प्रवर्तयति। अपरस्तु स्वतः प्रवृत्तमेव मन्त्रोपायोपदेशादिना प्रोत्साहयति इति (वाच०)।

**प्रयोजनम्**—[क] यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम् (गौ० १।१।२४)। यमर्थमाप्तव्यं हातव्यं वाध्यवसाय तदाप्तिहानोपायमनुतिष्ठति प्रयोजनं तद्वेदितव्यम्। प्रवृत्तिहेतुत्वात्। इममर्थमाप्स्यामि हास्यामि वेति व्यवसायोर्थस्याधिकारः। एवं व्यवसीयमानोर्थोधिक्रियत इति

( वात्स्या० १।१।२४ ) । प्रयोजनत्वं च प्रवृत्तिहेत्विच्छाविषयत्वम् । विषयत्वं च साध्यताख्यविषयताविशेषः ( गौ० वृ० १।१।२४ ) । अत्र वार्तिककारा आहुः । धर्मार्थकाममोक्षैः प्रयुज्यत इति केचित् । वयं तु पश्यामः । सुखदुःखाप्तिहानिभ्यां प्रयुज्यत इति । सुखदुःखसाधनभावात्तु सर्वेर्थाश्चेतनं प्रयोजयन्तीति । तदिदं प्रयोजनं न्यायस्याश्रयः ( न्या० वा० १ पृ० १४ ) । [ ख ] येन प्रयुक्तः प्रवर्तते तत् प्रयोजनम् । यमर्थमभीप्सञ्जिहासन्वा कर्मारभते तेनानेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वाश्च विद्या व्याप्ताः । तदाश्रयश्च न्यायः प्रवर्तते ( वात्स्या० १।१।१ ) ( त० भा० पृ० ४२ ) ( न्या० वा० १ पृ० १४ ) । [ ग ] यदुद्दिश्य प्रवर्तन्ते पुरुषास्तत्प्रयोजनम् ( ता० र० श्लो० ५६ ) । [ घ ] साध्यतयेच्छाविषयः ( दि० १ ) । यथा सुखं दुःखहानिश्च प्रयोजनम् ( त० दी० ) ( त० भा० पृ० ४२ ) । प्रयोजनं द्विविधम् । मुख्यम् गौणं च । तत्राद्यम् सुखं दुःखहानिश्च । द्वितीयम् यागभोजनादिकम् । प्रयोजनस्य मुख्यत्वं च निरुपाधीच्छाविषयत्वम् ( चि० ४ ) ( गौ० वृ० १।१।२४ ) । इतरेच्छानधीनेच्छाविषयत्वं वा । समानाधिकरणेच्छाजन्येच्छाविषयत्वं वा ( अत्र अजन्येति पदच्छेदः ) । प्रयोजनाजनकप्रयोजनत्वं वा ( न्या० सि० दी० पृ० ७० ) । प्रयोजनस्य गौणत्वं च मुख्यप्रयोजनेच्छाधीनेच्छाविषयत्वम् ( गौ० वृ० १।१।२४ ) ।

**प्रयोजनलक्षणा**—निरूढलक्षणाभिन्ना लक्षणा । सा च षड्विधा । उपादानलक्षणा लक्षणलक्षणा गौणसारोपा गौणसाध्यवसाना शुद्धसारोपा शुद्धसाध्यवसाना ( सर्व० सं० पृ० ३७४ पातञ्ज० ) ।

**प्रयोज्यत्वम्**—१ प्रयोजकत्वनिरूपकत्वम् । २ प्रयुक्तत्ववदस्यार्थोनुसंधेयः ।

**प्रलयः**—[ क ] अभावः ( ध्वंसः ) ( गौ० वृ० ४।२।१३ ) । यथा अवयवावयविप्रसङ्गश्चैवमाप्रलयात् ( गौ० ४।२।१३ ) इति । यथा वा विश्वस्थितिप्रलयसर्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबन्धमोक्षाः । यस्या अपाङ्गलवमात्रतः ( द्वाद० स्तो० अ० ७ श्लो० १ ) इति । प्रलयसद्भावे प्रमाणं

च श्रुतिः । सा च धाता यथापूर्वमकल्पयत् (ऋ० सं० १०।१९०।३) इति (सि० च० १ पृ० ९) (त० दी० वायुनि० पृ० १०)। मीमांसकास्तु संसारप्रवाहस्य बीजाङ्कुरन्यायेनानादित्वादनन्तत्वाच्च प्रलयसद्भावे मानाभावः इत्यूचुः (सि० च० १ पृ० ९)। इदानीं प्रलयक्रमः कथ्यते। साकारोपासनापरिवासितचेतसो यतयस्ते हिरण्यगर्भपदवीमनुप्राप्यापवृज्यन्ते इत्यागमात् ब्रह्मणो जीवभूतस्य ब्राह्मशतवर्षपर्याप्तस्यापवर्गसमये शरीरिणां विश्रान्त्यर्थमीश्वरस्य संजिहीर्षा जायते। तदनन्तरं सर्वजीवगतादृष्टवृत्तिनिरोधः। यथा सुषुप्तौ कतिपयजीवानां युगपददृष्टवृत्तिनिरोधः तथा प्रलये सर्वेषामेव जीवानां युगपददृष्टवृत्तिनिरोधो भवति (त० व० पृ० १२५)। तत आत्मसंयोगतो देहाद्यारम्भकपरमाणुषु (प्रथमं पृथिवीपरमाणुषु ततो जलादिपरमाणुषु च) कर्मोत्पद्यते। ततः परमाणुद्वयविभागः। ततः परमाणुद्वयसंयोगनाशः। ततो द्व्यणुकनाशः। ततस्त्र्यणुकनाशः। एवं चतुरणुकादिनाशक्रमेण महापृथिव्यादीनां नाशः। अत्र प्राञ्चः क्वचित्समवायिकारणनाशाद्द्रव्यनाशः यथा त्र्यणुकादिनाशः। क्वचिदसमवायिकारणनाशाद्द्रव्यनाशः यथा द्व्यणुकादिनाशः इत्यङ्गीचक्रुः। नव्यास्तु लाघवात्सर्वत्रासमवायिकारणनाशाद्द्रव्यनाशमङ्गीचक्रुः (सि० च० १ पृ० ९)। इत्थं तेषां नाशः। पृथिव्युदकज्वलनपवनानामपि उदके सति पृथिव्याः ज्वलने सत्युदकस्य पवने सति ज्वलनस्य पश्चात्पवनस्य च विनाशः इति (प० मा० कालनि० पृ० ९३) (प्रशस्त० पृ० ६) (त० व० परि० ५ श्लो० ५–६ पृ० १२५)। ततः प्रविभक्ताः परमाणवो दोधूयमाना अवतिष्ठन्ते। अत्रोच्यते दोधूयमानास्तिष्ठन्ति प्रलये परमाणवः इति (भाष्य–कन्दली०) (प० मा० कालनि० पृ० ९३)। अदृष्टसंस्कारविशिष्टा आत्मान आकाशादयश्चावतिष्ठन्ते तावन्तमेव कालम् (शतवर्षम्)। अयमेव खण्डप्रलयः इति अवान्तरप्रलयः इति चोच्यते (प० मा० कालनि० पृ० ९३) (त० व० पृ० १२५) (त० दी०)। महाप्रलयानन्तरं न सृष्टिः। सर्वमुक्तौ सर्वोत्पत्तिनिमित्तस्यादृष्टस्यापायात्

इति ( प० मा० पृ० ९३ ) । अन्यत्र चेत्थमुक्तम् । चतुर्णां महाभूतानां संहारविधिरुच्यते । ब्राह्मेण मानेन वर्षशतान्ते वर्तमानस्य ब्रह्मणोपवर्गकाले संसारे खिन्नानां सर्वप्राणिनां निशि विश्रान्त्यर्थं सकलभुवनाधिपतेर्महेश्वरस्य संजिहीर्षासमकालं शरीरेन्द्रियभूतोपनिबन्धकानां सर्वात्मगतानामदृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यः तत्संयोगनिवृत्तौ तेषां परमाण्वन्तो विनाशः । तथा पृथिव्युदकज्वलनपवमानानामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाशः । ततः प्रविभक्ताः परमाणवोवतिष्ठन्ते । धर्माधर्मसंस्कारानुविद्धा आत्मानस्तावन्तमेव कालम् ( प्रशस्त० १ पृ० ६ ) । न्यायमते स द्विविधः । खण्डप्रलयः महाप्रलयश्च । तत्राद्यः सकलकार्यद्रव्यानाधारकार्याधिकरणसमयः ( न्या० सि० दी० पृ० ७६ ) ( दि० ४ पृ० १८९ ) । सचागमप्रतिपाद्यः । आगमस्तु नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्नचान्यत् इति ( दि० ४ पृ० १८९ ) । द्वितीयस्तु सकलभावकार्यलयः । [ ख ] त्रैलोक्यनाशः इति मायावादिन आहुः ( वेदा० परि० विषयप० पृ० ८१ ) । [ ग ] पौराणिकास्तु भूतादिलयाधारः कालविशेषः प्रलयः । स च चतुर्विधः । नित्यः नैमित्तिकः प्राकृतः आत्यन्तिकश्च इत्याहुः । मायावादिनां मतेपि प्रलयश्चतुर्विधः । नित्यः प्राकृतः नैमित्तिकः आत्यन्तिकश्चेति । तत्र नित्यप्रलयः सुषुप्तिः । प्राकृतप्रलयस्तु कार्यब्रह्मविनाशनिमित्तकः सकलकार्यविनाशः । नैमित्तिकप्रलयस्तु कार्यब्रह्मणो दिवसावसाननिमित्तकस्त्रैलोक्यमात्रप्रलयः । चतुर्थस्तु ब्रह्मसाक्षात्कारनिमित्तकः सर्वमोक्षः । स चैकजीववादे युगपदेव । नानाजीववादे तु क्रमेण । सर्वे एकीभवन्ति इत्यादिश्रुतेः ( वेदा० प० विषयप० पृ० ८३–८४ ) इति । किंच युगप्रलयः मनुप्रलयः दिनप्रलयः महाप्रलयश्चेति भेदेन चतुर्विधः प्रलयः इत्यपि पौराणिका वदन्ति । [ घ ] नष्टचेष्टता ( नैमित्तिकप्रलयः ) इति काव्यज्ञा आहुः । [ ङ ] तदेतेषु प्रलीनेषु निरुपप्लवविवेकख्यातिपरिपाकवशात्कार्यकारणात्मकानां प्रधाने

लयः प्रलयः ( सर्व० सं० पृ० ३८६ पातञ्ज० ) । कूर्मपुराणे चैवमुक्तम् । नित्यो नैमित्तिकश्चैव प्राकृतात्यन्तिकौ तथा । चतुर्धायं पुराणेस्मिन् प्रोच्यते प्रतिसंचरः ॥ इति । तत्र नित्यो यथा योयं संदृश्यते नूनं नित्यं लोके क्षयस्त्विह । नित्यः संकीर्त्यते नाम्ना मुनिभिः प्रतिसंचरः ॥ अत्र मायावादिन आहुः । नित्यप्रलयो नाम सुषुप्तिः । तस्याः सकलकार्यप्रविलयरूपत्वात् । धर्माधर्मपूर्वसंस्काराणां च तदा कारणात्मनावस्थानम् । यद्वा अन्तःकरणस्य द्वे शक्ती ज्ञानशक्तिः क्रियाशक्तिश्च । तत्र ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाशः । न क्रियाशक्तिविशिष्टस्य इति प्राणाद्यवस्थानमविरुद्धम् इति ( वेदा० प० विषय० प० पृ० ८१–८२ ) । नैमित्तिको यथा ब्राह्मो नैमित्तिको नाम कल्पान्ते यो भवष्यति । त्रैलोक्यस्यास्य कथितः प्रतिसर्गो मनीषिभिः ॥ तत्र नैमित्तिकप्रलयकालश्च कल्पतुल्यः । यदा स देवो जागर्ति तदेदं चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥ इति ( मनु० अ० १ श्लो० ५२ ) मनुना हिरण्यगर्भस्य निद्रासमये तत्प्रलयस्योक्तेः ( वाच० ) । प्राकृतो यथा महदाद्यं विशेषान्तं यदा संयाति संक्षयम् । प्राकृतः प्रतिसर्गोयं प्रोच्यते कालचिन्तकैः ॥ अयमेव प्रलयः खण्डप्रलयः इति अवान्तरप्रलयः इति च नैयायिकैर्व्यवह्रियते इति ज्ञेयम् । आत्यन्तिको यथा ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि । प्रलयः प्रतिसर्गोयं कालचिन्तापरैर्द्विजैः ॥ आत्यन्तिकश्च कथितः प्रलयो लयसाधनः इति ।

**प्रलयाकलः**—( जीवः ) प्रलयेन कलादेरुपसंहारान्मलकर्मयुक्तो जीवः ( सर्व० सं० पृ० १८३ शैव० ) ।

**प्रवरः**—ऋषेर्नाम ( मिता० अ० १ श्लो० ५३ ) । यथा भार्गववीतहव्यसावेतसाः इति मम ( न्यायकोशकर्तुर्भीमाचार्यस्य ) त्रयः प्रवराः ।

**प्रवर्तकम्**—प्रवृत्तिजनकम् । यथा नव्यनैयायिकमते बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताविषयकं ज्ञानं प्रवर्तकम् । अत्र बलवदनिष्टेत्यत्र बलवद्द्वेषे इष्टसाधनत्वघटकेच्छायां कृतिसाध्यताघटकज्ञाने च

इदानींतनत्वं विशेषणं देयम् । तेन वक्ष्यमाणं सर्वं संगच्छते नानुपपत्तिश्च । तथाहि । दोषदूषितचित्तो विषभक्षणादौ प्रवर्तते । इदानीं बलवदनिष्टाननुबन्धित्वज्ञानात् । तृप्तश्च भोजने न प्रवर्तते । इदानीमिष्टसाधनत्वाज्ञानात् । भावियौवराज्ये बालस्य न प्रवृत्तिः । इदानीं कृतिसाध्यत्वाज्ञानात् (दि० गु० पृ० २२५)। यथा वा जरन्नैयायिकमते इष्टसाधनताविषयकं कृतिसाध्यताज्ञानमेव प्रवर्तकम् । यथा वा प्राभाकरमते स्वविशेषणवत्ताप्रतिसंधानजन्यं कार्यताज्ञानं प्रवर्तकम् (चि० ४) (न्या० म० ४ पृ० २५–२७) (दि० गु० पृ० २२२–२२४) । स्वविशेषणवत्तेत्यादेरर्थश्च स्वम् प्रवर्तमानः पुरुषः । तत्र विशेषणम् काम्ये हि यागादौ कामना । नित्ये संध्यावन्दनादौ तु विहितकालशौचादि । तद्वत्ता पक्षे तत्संबन्धः । तस्य प्रतिसंधानम् तत्संबन्धज्ञानम् । तज्ज्ञानमेव वा परामर्शात्मकम् । तेन जन्यं कार्यताज्ञानम् कृतिसाध्यताज्ञानम् अनुमित्यात्मकम् इति । तत्र स्वर्गकामो यजेत भोजनकामः पचेत इत्यादि काम्यम् । अहरहः संध्यामुपासीतेत्यादि नित्यम् । तथाच काम्यस्थले काम्यसाधनताज्ञानम् नित्यस्थले तु शौचादिज्ञानम् इत्यर्थः (दि० गु० पृ० २२३)। अत्रानुमानप्रयोगः काम्ये पाको मत्कृतिसाध्यो मत्कृतिं विना असत्त्वे सति मदिष्टसाधनत्वात् इति (दि० गु० पृ० २२३)। नित्ये तु अहमिदानींतनकृतिसाध्यसंध्यावन्दनः संध्यासमये शौचादिमत्त्वात् पूर्वसंध्यायामहमिव इति (चि० ४)। अत्र तदानींतनं स्वविशेषणम् इति वक्तव्यम् । तेन तृप्तश्च भोजने न प्रवर्तते । तदानीं कामनायाः पुरुषविशेषणत्वाभावात् । प्रतिसंधानं च बलवदनिष्टाननुबन्धित्वविषयकम् इति वक्तव्यम् । तेन मधुविषसंपृक्तान्नभोजने न प्रवृत्त्यापत्तिः । एवं च बलवदनिष्टाननुबन्धित्वविषयकं यत् स्वविशेषणवत्ताज्ञानम् तज्जन्यं कृतिसाध्यताज्ञानं प्रवर्तकं भवति इति निष्कृष्टोर्थः (दि० गु० पृ० २२३)। यथा वा चोदनेति क्रियायाः (नियोगस्य) प्रवर्तकं (ज्ञानद्वारा प्रवर्तकम्) वचनम् इत्यादौ (शाबरभाष्यम्)। अधिकं तु विधिशब्दे प्रवृत्तिशब्दे च सविस्तरं संपादयिष्यते इति तत् तत्र द्रष्टव्यम् ।

**प्रवर्तनम्** }
**प्रवर्तना** } —१ प्रवृत्तिहेतुत्वम् (गौ० वात्स्या० भा० १।१।१८)। यथा प्रवर्तनालक्षणा दोषाः (गौ० १।१।१८) इत्यादौ। २ [क] यद्विषयकत्वेन ज्ञानस्य प्रवृत्तिजनकत्वं तत्। यथा स्वर्गकामो यजेत जलमाहरेतेत्यादौ लिङर्थो विधिः प्रवर्तनम् (वै० सा०) (कु० ५।६)। अत्र यत्पदार्थ इष्टसाधनत्वम्। तथा च इष्टसाधनत्वस्य ज्ञानं प्रवृत्तिं जनयतीतीष्टसाधनत्वं प्रवर्तनं भवति इति ज्ञेयम् (वै० सा० द०)। मण्डनमिश्राणामपीदमेव मतम् इति विज्ञेयम् (दि० गु० प्रयत्न-नि० पृ० २२६)। [ख] भट्टपादास्तु प्रवर्तयितुः प्रवृत्त्यनुकूलव्यापारविशेषः इत्याहुः। स च चेतनस्याभिप्राय एव। अचेतनस्य तु वेदस्याभिधानामा कश्चिच्छब्दसमवेतः शाब्दभावनापरपर्यायो लिङ्त्वांशेनोच्यते इति (दि० गु० विधिनि० पृ० २२६)। [ग] प्रवृत्त्यनुकूलो व्यापारः प्रवर्तना (मी० न्या० पृ० ६९)। प्रवर्तना च प्रवृत्तिजनकज्ञानविषयितावच्छेदिका इति वैयाकरणाः (दि० गु० पृ० २२६)। प्रवर्तना चतुर्विधा विधिनिमन्त्रणामन्त्रणाधीष्टभेदात्। तत्र विधिः प्रेरणम्। भृत्यादेर्निकृष्टस्य प्रवर्तनम्। निमन्त्रणं नियोगकरणम्। आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्। आमन्त्रणं कामचारानुज्ञा। अधीष्टः सत्कारपूर्वको व्यापारः (सि० कौ० पृ० १८९)। अत्रोक्तम् अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि इति (वाच०)।

**प्रवीचारः**—भोगः।

**प्रवृत्तिः**—१ (प्रयत्नः) [क] उत्कटरागजन्यः प्रयत्नविशेषः (वै० वि० ३।१।१९)। लक्षणं तु प्रवृत्तित्वमेव। तच्च रागजन्यतावच्छेदकतया सिद्धो जातिविशेषः (गौ० वृ० १।१।१७)। चिकीर्षाजन्यतावच्छेदको जातिविशेषो वा (मू० म० १) (ल० व० पृ० १३७)। चेष्टाजनकतावच्छेदकतया सिद्धो जातिविशेषो वा (श० प्र० श्लो० ९५ पृ० १३७)। प्रवृत्त्युत्पत्तावयं क्रमः। प्रथमतः फलज्ञानम्। ततः फलेच्छा। तत इष्टसाधनताज्ञानम् उपाये। तत उपायेच्छा। ततः प्रवृत्तिरुत्पद्यते इति (त० प्र० ख० ४ पृ० १०२)।

प्रवृत्तिर्हीच्छामपेक्षते । इच्छा चेष्टसाधनताज्ञानम् । तच्चेष्टसजातीयत्वे लिङ्गानुभवम् । सोपीन्द्रियार्थसंनिकर्षम् (कु० ५।६ ) । प्रवृत्तिं प्रति चिकीर्षा कृतिसाध्यताज्ञानम् इष्टसाधनत्वज्ञानं च कारणम् ( भा० प० श्लो० १५१ ) । कृतिश्चात्र प्रवृत्तिरूपा बोध्या । तेन जीवनयोनियत्नसाध्ये प्राणपञ्चकसंचारे न प्रवृत्तिः अत्र मधुविषसंपृक्तान्नभोजनादौ प्रवृत्त्यापत्तिवारणाय चिकीर्षेति ( मु० गु० पृ० २२२–२२५ ) । भोजननान्तरीयके श्रमे प्रवृत्तिवारणाय चिकीर्षा कारणम् इत्यवश्यं मन्तव्यम् । तेन इष्टसाधनत्वज्ञानस्य कारणत्वं व्यर्थम् । वृष्ट्यादौ प्रवृत्त्यापत्तेर्वारणाय कृतिसाध्यताज्ञानम् । अनिष्टसाधने प्रवृत्त्यापत्तिवारणायेष्टसाधनत्वज्ञानं च कारणमित्युक्तम् । किंत्वनिष्टसाधने चिकीर्षैव नास्ति । प्रवृत्तिं प्रति चिकीर्षामात्रं कारणम् इति प्राभाकरा आहुः । प्राभाकरमते शुक्तौ रजतार्थिप्रवृत्तिं प्रति पुरोवर्तिनीष्टतावच्छेदकासंसर्गाग्रह एव हेतुः । न तु न्यायमतसिद्ध इष्टतावच्छेदकप्रकारकं ज्ञानं हेतुः ( त० प्र० ख० ४ पृ० १३३ ) । प्राभाकराणामयमाशयः । कार्यत्वज्ञानं प्रवर्तकम् । तथाहि । ज्ञानस्य प्रवृत्तौ जनयितव्यायां चिकीर्षातिरिक्तं नापेक्षितमस्ति । तत्सत्त्वे कृतिविलम्बहेत्वन्तराभावात् । चिकीर्षा च कृतिसाध्यताज्ञानसाध्या । इच्छायाः स्वप्रकारकधीसाध्यत्वम् इति नियमात् । अत एव स्वकृतिसाध्ये पाके प्रवर्तते । न त्विष्टसाधनताज्ञानसाध्या । स्वकृत्यसाध्ये चन्द्रमण्डलानयनादौ चिकीर्षाया अदर्शनात् ( चि० ४ ) ( मु० गु० पृ० २२२–२२३ ) । अत्रेदं बोध्यम् । प्राभाकरमते प्रवृत्तेर्हि विषयता त्रिविधा । साध्यत्वाख्या उपादानत्वापरनाम्नी सिद्धत्वाख्या उद्देश्यत्वाख्या चेति । तत्राद्या यन्निष्ठकृतिसाध्यताज्ञानचिकीर्षादिना प्रवृत्तिः तन्निष्ठा । सा च घटयागपाकादिनिष्ठैव । न तु तज्जनकीभूतकपालहविस्तण्डुलादिसिद्धनिष्ठा । अत एव घटं करोमि यागं करोमि इत्याद्यनुव्यवसायः । न तु कपालहविरादेः सिद्धतादशायां कपालं करोमि हविः करोमि इत्याद्यनुव्यवसायः व्यवहारो वा । द्वितीया तु विषयता सिद्धकपालहविस्तण्डुलाद्युपायनिष्ठा । कपालेन घटं

करोमि हविषा यागं करोमि इत्याद्यनुव्यवसायात् । तृतीया च यत्साधनताज्ञानाधीना चिकीर्षा तन्निष्ठा । तच्च जलाहरणस्वर्गौदनादिरूपम् । जलाहरणमुद्दिश्य घटं करोमि स्वर्गमुद्दिश्य यागं करोमि इत्यनुव्यवसायात् इति ( मु० म० ) ( वाच० )। [ ख ] चिकीर्षाजन्यो यत्नः ( त० कौ० )। यथा विद्यार्थी विद्यायां प्रवर्तते इति । [ ग ] तस्येप्साजिहासाप्रयुक्तस्य समीहा ( वात्स्या० १।१।१ प्रस्तावना )। तस्येत्यस्य ज्ञातुरित्यर्थः । [ घ ] प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः ( गौ० १।१।१७ ) इति । तदर्थश्च वागारम्भो वाचिकी प्रवृत्तिः । सत्यं प्रियं हितमिति पुण्या । असत्यमप्रियमहितमिति पापा । बुद्धिः बुध्यते ज्ञायतेनेनेति मन उच्यते । तेन मानसी प्रवृत्तिर्भूतदयादिः । शारीरी प्रवृत्तिः दानं परिचरणमित्यादिका दशविधा पापा दशविधा पुण्या चेति ( वै० उ० ६।२।१४ ) । शरीरेण मनसा वाचा च प्रवृत्तिरारभ्यते । सेयं प्रवृत्तिः द्विविधा पुण्या च पापा च । पुण्या दशविधा कायेन परित्राणम् परिचरणम् दानमिति । वाचा सत्यम् हितम् प्रियम् स्वाध्यायः इति । मनसा दया स्पृहा श्रद्धा चेति । विपर्ययेण पापापि दशविधैव । प्रवृत्तिफले प्रवृत्त्युपचारः । तद्यथा अन्नं वै प्राणिनः प्राणाः इति । प्रवृत्तिफलं धर्माधर्मौ ( न्या० वा० १।१।१७ पृ० ८५ )। अत्र भाष्यम् । मनोत्र बुद्धिरित्यभिप्रेतम् । बुद्ध्यतेनेनेति बुद्धिः । सोयमारम्भः शरीरेण वाचा मनसा च पुण्यः पापश्च दशविधः । तदेतत्कृतभाष्यं द्वितीयसूत्र इति ( वात्स्या० १।१।१७ ) । प्रवृत्तिस्तु द्वयी । कारणरूपा कार्यरूपा च । द्वे अप्यात्मसमवेते । तत्राद्या जन्यत्वेनाविशिष्टा विशिष्टा वा यत्नत्वजातिमती प्रत्यक्षसिद्धा । द्वितीया तु धर्माधर्मरूपा यागादेरगम्यागमनादेश्च चिरध्वस्तस्य व्यापारतया कर्मनाशाजलस्पर्शादेः प्रायश्चित्तादेश्च नाश्यतया सिद्ध्यतीति ( गौ० वृ० ४।१।१ ) ( कु० १।९ ) । तदुक्तम् कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् । गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्तनात् ॥ इति । अत्र कर्मनाशा गयानिकटवृत्तिर्नदीविशेषः इति ज्ञेयम् । अत्र वार्तिककारा आहुः । प्रवृत्तेर्द्वैविध्यम् । पुरुषभेदानुविधानात् । तेषां पुरुषाणां प्रवृत्त-

अस्ताः पुरुषभेदमनुविधीयमाना उभयरूपा भवन्ति । वीतरागप्रवृत्तिरेकधा । तत्र या वीतरागाणां प्रवृत्तिः सा खल्वेकरूपा । अनिष्टप्रतिषेधार्था । अनिष्टं हास्याम इत्येव ते प्रवर्तन्ते । न पुनरेषां कचिदभिषङ्गोस्ति । रागादिमत्प्रवृत्तिस्तु द्विरूपा । ये तु रागादिमन्तस्तेषां याः प्रवृत्तयस्ता द्विविधा भवन्ति । इष्टानिष्टविषयाधिगमप्रतिषेधार्थाः । इष्टमाप्स्यामीति सक्तः प्रवर्तते । अनिष्टं हास्यामीति द्वेषान्निवर्तते । रागादिमत्प्रवृत्तेरपि द्वैविध्यं भवति । समर्थासमर्थभेदात् । या खलु रागादिमत्प्रवृत्तिः सा समर्था असमर्था च भवति । इष्टमाप्स्यामीति प्रवर्तमानो यदा प्राप्नोति तदा समर्था । तथा अनिष्टं हास्यामीति प्रवर्तमानो यदा जहाति तदा समर्था । यदा विपर्ययस्तदा असमर्थेति ( न्या० वा० पृ० ३ ) । भट्टपादा आहुः । लोके प्रवृत्तिर्द्वेधा । स्वेच्छाधीना परप्रेरणाजन्या च । तत्राद्यायां प्रवर्तनाया अनुपयोगेपि द्वितीयप्रवृत्तौ सा प्रयोजिका । आचार्यप्रेरणयेदं करोमि इति व्यवहारात् ( दि० गु० प्रयत्ननि० पृ० २२६ ) । २ शब्दानामर्थबोधनशक्तिविशेषः प्रवृत्तिः । यथा प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ( कुमार० २।१७) इत्यादौ । ३ स्वविषय इन्द्रियादीनां संचारः । ४ प्रवाहः । ५ वार्ता इति काव्यज्ञा आहुः ( वाच० ) ।

**प्रवृत्तिनिमित्तम्**—[ क ] पदशक्यतावच्छेदकम् । यथा घटत्वं घटपदस्य प्रवृत्तिनिमित्तम् । एवम् शुक्लादिपदस्य शुक्लत्वम् पाचकादेः पाकः देवदत्तादेस्तत्तत्पिण्डादि प्रवृत्तिनिमित्तं भवति । प्रवृत्तिनिमित्तशब्दस्य व्युत्पत्तिः प्रवृत्तेः शब्दानामर्थबोधनशक्तेः निमित्तं प्रयोजकम् इति । तच्च शक्यतावच्छेदकं भवति इति ज्ञेयम् । तल्लक्षणं च प्रकारतया शक्तिग्रहविषयत्वम् ( चि० ) । अथवा वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वम् इति ( ग० शक्ति० ) । [ ख ] निरवच्छिन्नविशेष्यतानिरूपितप्रकारतावत् इति शाब्दिका वदन्ति ।

**प्रवेशः**—पुत्रोद्वाहः प्रवेशाख्यः ( पु० चि० पृ० ४५० ) ।

**प्रवेशनम्**—निष्क्रमणवदस्यार्थोनुसंधेयः ।

**प्रशंसा**—( स्तुतिः ) गुणाविष्करणम् ।

**प्रश्नः**—[ क ] अभिधानप्रयोजनादिजिज्ञासा ( कु० ५ ) । यथा भोः किं तव नामधेयम् किमर्थं च भवतात्रागतम् इति प्रश्नः । अत्र जिज्ञासाशब्देन तत्प्रयोज्यकथानुकूलव्यापारो लक्ष्यते । [ ख ] अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयते । [ ग ] जिज्ञासाविष्करणम् । यथा कीदृशो गवयपदवाच्यः इति प्रश्नः ( म० प्र० ३ पृ० ३४ ) । [ घ ] शाब्दिकास्तु उत्तरप्रयोजिकेच्छा इत्याहुः ( वै० सा० द० ) । [ ङ ] जिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः । यथा गुरुं धर्मं पृच्छतीत्यादौ पृच्छतेरर्थः । अत्र धात्वर्थघटकज्ञाने गुरुवृत्तित्वस्यान्वयः । शब्दे च धर्मविषयकत्वस्य अन्वयः ( ग० व्यु० का० २ पृ० ४६ ) । शब्दस्य च विषयता व्यापारानुबन्धिनी । व्यापारस्तु ज्ञानम् इति बोध्यम् । अत्राधिकं तु पृच्छाशब्दव्याख्यानावसरे संपादितम् तत्तत्रैव द्रष्टव्यम् । [ च ] जिज्ञासाविषयार्थज्ञानानुकूलः केन पथा गन्तव्यम् इत्यभिलापादिरूपो व्यापारः । यथा माणवकं पन्थानं पृच्छतीत्यादौ पृच्छेरर्थः । अत्र माणवकस्य व्यापारे संबन्धसामान्येनान्वयः । ज्ञानविषयत्वेन पथः कर्मत्वम् । माणवकेन च तज्ज्ञानाश्रयत्वं संबन्धः ( ल० म० सुबर्थ० पृ० ९२ ) । अत्रेदं बोध्यम् । यद्धर्मविशिष्टे यद्धर्मावच्छिन्नस्य संबन्धो यत्प्रश्नवाक्यात्प्रतीयते तदुत्तरवाक्यात् तद्धर्मविशिष्ट एव तद्धर्मव्याप्यधर्मावच्छिन्नसंबन्धश्चेत्प्रतीतो भवति तदैव च प्रश्नोत्तरभावनिर्वाहः । यथा कस्माद्घटः इति प्रश्ने दण्डाद्घटः इत्युत्तरम् । यथा वा किं करोति इति प्रयत्नविशिष्टे प्रश्ने पचति इत्यनेन पाककृतिबोधः ( त० प्र० ख० ४ पृ० ७३ ) । एवम् प्रश्नवाक्ये यत्प्रधानम् तत्समानलिङ्गवचनशब्देनैवोत्तरं यथाकथंचित्प्रश्नविषयजिज्ञासानिवर्तकम् । एवं च के शिष्या अस्य इति प्रश्ने कठाः इत्येवोत्तरम् न तु कठः इति । एवम् किंशिष्योयम् इति बहुव्रीहिसमासेन प्रश्ने कठः इत्येव न तु कठाः इति । तस्य कठत्वे शिष्याणां कठत्वमर्थप्राप्तम् इत्यार्थमिदमुत्तरम् इति ( ल० म० लका० पृ० ७६ ) ।

**प्रश्वासः**—कोष्ठ्यस्य वायोः बहिर्निःसारणम् (सर्व० सं० पृ० ३७६पातञ्ज०)।

**प्रष्ठौही**—यावता वयसा वर्षत्रयरूपेण पृष्ठे भारं वोढुं शक्तिर्भवति ताव-द्वयस्का प्रष्ठौही ( जै० न्या० अ० ४ पा० ४ अधि० १ ) ।

**प्रसक्तिः**—१ अनुमितिः (दीधि०)। २ आपत्तिः। ३ प्रसङ्गः। ४ व्याप्तिः। यथा अतिप्रसक्तिरन्यधर्मत्वे ( सां० सू० अ० १ सू० ५३ ) इत्यादौ। तदर्थश्च बन्धतत्कारणयोर्भिन्नधर्मत्वेतिप्रसक्तिः मुक्तस्यापि बन्धापत्तिः इति ( सां० प्र० भा० १।५३ )। तथा च अत्र अतिप्रसक्तिः अति-व्याप्तिरित्यर्थः। ५ प्राप्तिः। यथा प्रसक्तं हि निषिध्यते इत्यादौ।

**प्रसङ्गः**—१ ( संगतिः ) [ क ] उपोद्घातादिभिन्नस्मरणप्रयोजकसंबन्धः ( राम० )। प्रतियोगित्वानुयोगित्वाधारत्वादीनामप्यत्रैवान्तर्भावः ( म० प्र० २ पृ० १५ )। प्रसङ्गत्वं च संगतित्वे सत्युपोद्घातादिभिन्नत्वम् ( जगदीशः )। [ ख ] स्मृतस्योपेक्षानर्हत्वम् ( नील० १ पृ० १५ ) ( म० प्र० २ पृ० १५ )। यथा यथार्थानुभवरूपप्रमाविभजनानन्तरं प्रमाकरणविभजने प्रसङ्गः संगतिः ( त० दी० १ पृ० १५ )। स्मृत-स्योपेक्षानर्हत्वमित्यस्यार्थश्च स्मृतिकालावच्छेदेनोपेक्षानर्हत्वम् ( भवा० )। यद्वा द्वेषविषयतानवच्छेदकः स्मृतिविषयतावच्छेदको धर्मः इति ( अनु-मितिग्रन्थे गदाधरः )। अथवा स्मृतिकालावच्छिन्नोपेक्षानर्हतावच्छेदकधर्म-वत्त्वम् ( वै० सा० द० )। २ व्याप्तिरूपः प्रकृष्टसंबन्धः। यथा अतिप्रसङ्गः अप्रसङ्गः इत्यादौ। ३ वैयाकरणास्तु प्राप्तिः। यथा कृताकृतप्रसङ्गि नित्यम् तद्विपरीतमनित्यम् ( परिभाषेन्दु० पृ० ८१ ) इत्यादौ इत्याहुः। ४ मीमां-सकास्तु अन्योद्देशेन प्रवृत्तौ तदन्यस्यापि सिद्धिः प्रसङ्गः। अथवा अन्यो-द्देशेनान्यदीयस्यापि सहानुष्ठानं प्रसङ्गः ( जै० न्या० अ० १२ पा० १ अधि० १ )। यथा पश्वर्थमनुष्ठितेन प्रयाजादिना पशुतन्त्रमध्यपातिनः पुरोडाशस्याप्युपकारः सिध्यति। यथा वा तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम् इत्यत्र आमिक्षार्थे प्रवृत्तौ अनुद्देश्य-वाजिनस्यापि सिद्धिः। यथा वा काम्ययागनिष्पत्त्यर्थमनुष्ठितैराग्नेयादिभि-र्नित्ययागादिसिद्धिः इत्याहुः ( मिता० ) ( प्रा० त० ) ( वाच० )।

**प्रसङ्गसमः**—( जातिः ) [ क ] दृष्टान्तस्य कारणानपदेशात्प्रत्यवस्थानात्प्रसङ्गसमः ( गौ० ५।१।९ ) । साधनस्यापि साधनं वक्तव्यमिति प्रसङ्गेन प्रत्यवस्थानं प्रसङ्गसमः प्रतिषेधः । क्रियाहेतुगुणयोगी क्रियावाँल्लोष्ट इति हेतुर्नापदिश्यते । न च हेतुमन्तरेण सिद्धिरस्तीति ( वात्स्या० ५।१।९ ) । अत्र वृत्तिः । दृष्टान्तस्य कारणं प्रमाणम् । तदनपदेशोनभिधानम् । अभिधानं चानतिप्रयोजकम् । तथा च दृष्टान्तस्य साध्यवत्त्वे प्रमाणाभावात् प्रत्यवस्थानम् अर्थः । यद्यपीदं सदुत्तरमेव तथापि दृष्टान्ते प्रमाणं वाच्यम् तत्रापि प्रमाणान्तरम् इत्यनवस्थया प्रत्यवस्थाने तात्पर्यम् । तदुक्तमाचार्यैः अनवस्थाभासप्रसङ्गः प्रसङ्गसमः इति । एतन्मते हेतोर्हेत्वन्तरम् इत्यनवस्थापि प्रसङ्गसम एव । पूर्वमते तु हेत्वनवस्थादिकं वक्ष्यमाणाकृतिगणेष्वन्तर्भूतम् इति विशेषः । अनवस्थादेशनाभासोयम् इति विज्ञेयम् ( गौ० वृ० ५।१।९ ) । [ ख ] साधनपरंपराप्रश्नः । यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवदित्यादौ क्रियावत्त्वे क्रियाहेतुगुणवत्त्वं साधनम् । तत्र किं साधनम् । न हि साधनं विना कस्यचित्सिद्धिरस्ति । एवं तत्रापि किं साधनम् इत्यादि ( नील० पृ० ४४ ) । [ ग ] अनवस्थाभासप्रसङ्गः प्रसङ्गसमः इत्युदयनाचार्याः आहुः ( गौ० वृ० ५।१।९ ) । तथा चोक्तम् सिद्धे दृष्टान्तहेत्वादौ कारणप्रश्नपूर्वकम् । अनवस्थाभासवाचः प्रसङ्गसमजातिता ॥ इति ( ता० र० परि० २ श्लो० ११३ ) ।

**प्रसङ्गी**—सवनीयपुरोडाशः ( जै० न्या० अ० ११ पा० ३ अधि० १६ )।

**प्रसज्यः**—१ प्रसज्यप्रतिषेधवदस्यार्थोनुसंधेयः । अत्रार्थे भीमो भीमसेनवत् प्रसज्यप्रतिषेधशब्दस्यान्त्यलोपे प्रसज्य इति रूपं सिद्ध्यति । २ प्रसञ्जनकर्मभूतः । आपाद्यः इति यावत् ।

**प्रसज्यप्रतिषेधः**—( नञर्थः ) [ क ] संसर्गाभावः । तदर्थश्च क्रियासमभिव्याहृतनञ्प्रतिपाद्योत्यन्ताभावः इति ( ल० म० ) । यथा चैत्रो न पचतीत्यादौ नञर्थः ( चि० ) । अत्र पाककृत्यभाववाँश्चैत्रः इति शाब्दबोधः । यथा वा भूतले घटो नास्तीत्यादौ नञर्थोत्यन्ताभावः ।

प्रसज्यप्रतिषेधशब्दस्य व्युत्पत्तिस्तु प्रसज्य विधाय विहितस्य प्रतिषेधः इति । प्रसज्य क्रियागुणौ ततः पश्चान्निवृत्तिं करोति इति महाभाष्यप्रामाण्यात् ( ल० म० ) । केचित्तु प्रसज्य प्रसक्तिं संपाद्य ( आरोप्येति यावत् ) प्रतिषेधः इत्याहुः । अत्रायं विवेकः । प्रसक्तं हि प्रतिषिध्यते इति न्यायेनारोपितप्रसक्तस्यैव निषेधः । तेन वायौ रूपं नास्तीत्यादावपि वायौ रूपारोपं कृत्वैव निषेधो नञा बोध्यते इति ( वाच० ) । अत्रायमप्यन्यो विशेषः । प्रसज्यनञा तत्पुरुषो भावकृदन्तपदयोग एव । न घटादिपदयोगे । वादिनामविवाद इत्याद्युदाहरणेषु भावकृदन्तस्यैवोत्तरपदत्वात् इति संप्रदायविद आहुः ( श० प्र० ) । [ ख ] शाब्दिकादयस्तु यस्यार्थस्य धात्वर्थेनान्वयो नञा प्रत्याख्यते सः । यथा न कलञ्जं भक्षयेदित्यादौ नञर्थः प्रसज्यप्रतिषेधः इत्याहुः । तदुक्तमभियुक्तैः प्रसज्यप्रतिषेधः स्यात्क्रियया सह यत्र नञ् इति । अत्र विशेषः । न कलञ्जं भक्षयेदित्यत्र बलवदनिष्टासाधनत्वविशिष्टेष्टसाधनत्वरूपस्य विध्यर्थस्याभावो नञा भक्षणक्रियायां बोध्यते । तेन विधेरप्राधान्यम् नञर्थाभावस्य च प्राधान्यम् । तेन तत्र क्रियापदान्वयी नञ् प्रसज्यप्रतिषेधार्थकः । तदुक्तम् अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोसौ क्रियया सह यत्र नञ् ॥ इति । अमुक्ता भवता नाथ मुहूर्तमपि सा पुरा इत्यादावमुक्तेत्यत्र नञः प्रसज्यप्रतिषेधार्थत्वमिति विधेयत्वमेवोचितम् इति । न कलञ्जमित्यत्र गुरुमते तु कलञ्जभक्षणाभावविषयकं कार्यम् इति बोधेनाभावविशेष्यकबोधेपि प्रतिषेधस्य प्राधान्यात् तथात्वम् । तथा च तन्मते क्वचित् विधेरप्राधान्येन क्वचिच्च प्रतिषेधस्य प्राधान्येन इति व्यस्तमेव प्रसज्यप्रतिषेधप्रबोधप्रयोजकम् इति बोध्यम् ( वाच० ) ।

**प्रसञ्जनम्**—१ [ क ] आपादनम् । यथा अत्र घटः स्यात् तर्ह्युपलभ्येत इति । [ ख ] आहार्यारोपः ( राम० ) । यथा यदि पर्वतो निर्वह्निः स्यात्तर्हि निर्धूमः स्यात् इति । २ क्वचित् तुल्यत्वेनाभावयोः प्रतिभाववचनम् प्रसञ्जनम् ।

**प्रसादः**—कर्तृत्वनिर्वाहकं वरप्रदानम् ( कि० व० ६ ) । यथा प्रसादं कुरु देवेश इत्यादौ । कर्तृत्वनिर्वाहश्च फलप्राप्त्या भवति ।

**प्रसारणम्**—( कर्म ) [ क ] शरीरविप्रकृष्टहेतुः कर्मविशेषः ( त० सं० ) ( त० कौ० ) । ऋजुतासंपादकम् इत्यर्थः ( त० दी० ) । लक्षणं च दूरदेशसंयोगजनकक्रियानुकूलक्रियात्वम् ( ल० व० ) । [ ख ] एवमाकुञ्चिताङ्गानां यत्कर्मोत्पद्यते पुनः । अनारम्भकसंयोगनाशकं तत्प्रसारणम् ॥ ( त० व० पृ० २४१ ) । [ ग ] आकुञ्चनविपर्ययेण संयोगविभागोत्पत्तौ येन कर्मणावयवी ऋजुः संपाद्यते तत् प्रसारणम् ( प्रशस्त० पृ० ३७ ) । [ घ ] प्रसारणत्वजातिमत् । [ ङ ] विस्तारकरणक्रियाविशेषः इति केचित् ( वाच० ) ।

**प्रसिद्धिः**—१ ज्ञानम् । २ ख्यातिः । ३ भूषणम् । ४ टङ्कारः इति केचिदाहुः ( वाच० ) ।

**प्रसुप्तत्वम्**—प्रबोधसहकार्यभावेनानभिव्यक्तिः (सर्व०सं० पृ०३५९पात०)।

**प्रस्तावना**—१ आरम्भः । यथा आर्य बालचरितप्रस्तावनाडिण्डिमः ( वीरच० ) इत्यादौ । २ आमुखाख्यं नाटकाङ्गम् इति साहित्यशास्त्रज्ञा आहुः ( वाच० ) । तदुक्तम् आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ( सा० द० परि० ६ श्लो० २८७ ) इति ।

**प्रस्थानम्**—१ गमनम् । २ अभीष्टवस्तुचालनम् इति मौहूर्तिका आहुः ( धर्मसिन्धौ प० ३ पृ० ११७ ) ।

**प्रागभावः**—( अभावः ) [ क ] प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनकः भविष्यति इति व्यवहारहेतुरभावः ( त० दी० ) ( न्या० म० पृ० ११ ) ( त० प्र० ) । यथा इह कपाले घटो भविष्यति इति प्रतीतिसाक्षिकः अभावः ( त० कौ० ) ( प्र० प्र० ) । [ ख ] उत्पत्तेः प्राक् समवायिकारणे कार्यस्य संसर्गाभावः । [ ग ] अनित्यः अनादिमः प्रागभावः ( सर्व० सं० पृ० २३२ अक्षपा० ) । अत्रेदं बोध्यम् । उत्पन्नस्यैव पुनरुत्पत्त्यापत्तिनिवारणार्थं प्रागभावः अवश्यं स्वीकार्यः । स च कार्यस्योत्पत्तेः पूर्वं कार्यस्य समवायिकारणे तिष्ठति ( त० व०

२।६।९ ) इति । प्रागभावलक्षणं तु विनाश्यभावत्वम् (मु० ) ( न्या० म० १ पृ० ११ ) ( त० सं० ) । अत्रायं विशेषो ज्ञेयः । प्रागभावस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं नास्ति । किंतु तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वमेव इति ( वाच० ) । शाब्दिकास्तु कारणे शक्तिरूपेणावस्थानम् इत्याहुः ( ल० म० धात्व० पृ० ६ ) । सांख्यास्तु भावस्यानागतावस्थैव प्रागभावः इत्याहुः ।

**प्राग्देशम्**—अभिजित् ( पु० चि० पृ० ३५४ ) ।

**प्राङ्न्यायः**—आचारेणावसन्नोपि पुनर्लेखयते यदि । सोभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ॥ ( मिताक्षरा अ० २ श्लो० ७ ) ।

**प्राची**—( दिक् ) [ क ] यदपेक्षया सूर्योदयाचलसंनिहिता या दिक् सा तदपेक्षया प्राची । संनिधानं तु संयुक्तसंयोगाल्पीयस्त्वम् । ते च सूर्यसंयोगा अल्पीयांसो भूयांसो वा दिगुपनेयाः ( वै० उ० २।२।१० ) । अत्र व्युत्पत्तिः प्राक् अस्यां सविता अञ्चति इति प्राची ( वै० उ० २।२।१४ ) । [ ख ] यस्यां दिशि मेरुप्रदक्षिणक्रमेण भ्रमत आदित्यस्य प्रथमं संयोगो भूतपूर्वो भविष्यन्वा भवन्वा सा दिक्प्राची ( वै० उ० २।२।१४ ) । अत्र सूत्रम् आदित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताच्च प्राची ( वै० २।२।१४ ) । अत्र पुरुषाभिसंधिभेदमाश्रित्य कालत्रयोपवर्णनम् । भवति हि कस्यचित् पूर्वेद्युः प्रातरस्यां दिशि आदित्यसंयोगः प्रथमं वृत्तः इति इयं प्राची इति प्राचीव्यवहारः । कस्यचित् अपरेद्युरस्यामादित्यसंयोगः प्रथमं भावी इत्यभिसंधाय प्राचीव्यवहारः । कस्यचित् इदानीमस्यामादित्यसंयोगो भवन्नस्ति इत्यभिसंधाय प्राचीव्यवहारः । सूत्रे भूतादित्यत्रादिकर्मणि क्तप्रत्ययः (वै० उ० २।२।१४) । एवम् दिगन्तरव्यवहारोपि स्वयं परिकल्पनीयः । [ ग ] उदयाचलसंनिहितदेशावच्छिन्ना दिक् ( वाक्य० १ पृ० ५ ) । [ घ ] उदयाचलसंनिहितमूर्तावच्छिन्ना दिक् ( नील० १ पृ० १० ) । [ ङ ] उदयाचलसंनिहिता या दिक् सा ( न्या० बो० पृ० ३ ) । [ च ] यदपेक्षयोदयगिरिसंनिहितं यन्मूर्तं सा ततः प्राची । तदपेक्षयो-

दयगिरिसंनिहितत्वं च तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाल्पतरोदयगिरि-संयुक्तसंयोगवत्त्वम् ( दि० १।२ ) । यथा मथुरातः प्राच्यां प्रयागः इति ( दि० १।२ ) । यथा वा झळकीग्रामात्प्राच्यां तिरुपतिः इति । मथुरात इत्यत्र मथुरानिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्याप्यसंख्या-पर्याप्त्यधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्तवृत्तिः प्रयागः इत्यन्वयबोधः ( दि० १।२ ) । एवमन्यत्राप्यन्वय ऊह्यः ।

**प्राचीनवंशः**—( मण्डपः ) यस्य मण्डपविशेषस्योपरिवंशाः प्रागग्राः भवन्ति स प्राचीनवंशः ( जै० न्या० अ० ३ पा० ४ अधि० ६ ) ।

**प्राजकः**—सारथिः ( मिताक्षरा अ० २।३०० ) ।

**प्राजापत्यः**—( विवाहः ) इत्युक्त्वा चरतां धर्मं सह या दीयतेर्थिने । स कायः पावयेत्तज्जः षट् षड्वंश्यान्सहात्मना ॥ ( याज्ञवल्क्य० अ० १ श्लो० ६० ) ।

**प्राजापत्यम्**—१ रोहिणी ( पु० चि० पृ० ३०६) । २ प्रायश्चित्तविशेषः । त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् । त्र्यहं परं तु नाश्नीयात्प्रा-जापत्यं चरन्द्विजः ॥ ( पु० चि० ४९ ) ।

**प्राड्विवाकः**—विवादानुगतं पृष्ट्वा ससभ्यस्तत्प्रयत्नतः । विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः ॥ ( मिताक्षरा अ० २ श्लो० ३ ) ।

**प्राणः**—१ ( वायुः ) [ क ] मुखनासिकाभ्यां निष्क्रमणप्रवेशनात्प्राणः ( दि० १।२ ) । स च विषयात्मको वायुः ( त० सं० ) । शरीरेन्द्रिय-विषयात्मकवायुभ्यो भिन्नश्चतुर्थः प्राणाख्यो वायुः इत्यप्याकरग्रन्थेषु प्रतिपादितम् । तत्तस्मादेवावगन्तव्यम् । [ख] शरीरान्तःसंचारी वायुः । स चैकोपि हृदयादिस्थानभेदात् मुखनिर्गमादिक्रियाभेदाच्चेत्येवमुपाधिभेदात् प्राणापानादिसंज्ञां लभते ( त० सं० ) ( सि० च० ) ( मु० १ ) । यथा मूलाधारोद्गतः प्राणः ( शा० ति० ) इत्यादौ । [ ग ] कश्चित् प्राणो वायुविशेष एव । स चान्तःकरणवृत्त्या जीवनयोनिप्रयत्नरूपया व्याप्रियत इति कृत्वा प्राणोन्तःकरणवृत्तिः इत्यभेदनिर्देशः इत्याह । २ इन्द्रियाणां साधारणी कारणत्रयस्य वृत्तिः ( परिणामः ) न तु

वायुविकारः इति सांख्या आहुः। ३ परब्रह्म (विष्णुः) प्राणशब्द-वाच्यम् इति वेदान्तिन आहुः। अत्र प्रमाणानि ॐ अत एव प्राणः ॐ (ब्रह्मसू० १।१।२३)। तद्वै त्वं प्राणो अभवः महाभोगः प्रजापते-र्भुजः करिष्यमाणः यद्देवान् प्राणयो नव इति। श्रीश्च ते लक्ष्मीश्च पत्न्यौ अहोरात्रे पार्श्वे (श्रुतिः) इति च (मध्वभा० १।१।२३)। तथा ॐ प्राणस्तथानुगमात् ॐ (ब्रह्मसू० १।१।२८)। तं देवाः प्राण-यन्त स एषोसुः स एष प्राणः स एष भूतिश्च प्राण ऋच इत्येवं विद्यात् तदयं प्राणोधितिष्ठति (श्रुतिः) इति (मध्वभा० १।१।२८)। प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनः (श्रुतिः) इति च (मध्वभा० १।४।१३)। ४ दशगुरुवर्णः प्राणः षट् प्राणाः स्याद्विनाडिका तासाम्। षष्ट्या घटी घटीनां षष्ट्याहोरात्र उक्तश्च॥ (मिताक्षरा २।१०२)। अहोरात्रशब्दे दृश्यम्।

**प्राणायामः**—(योगाङ्गम्) [क] तस्मिन् सति श्वासप्रश्वासयोर्गति-विच्छेदः (पात० सू० पाद० २ सू० ४९)। तस्मिन् आसनस्थैर्ये सति इत्यर्थः (गौ० वृ० ४।१११)। [ख] प्राणवायोर्गतिविच्छेद-कारकव्यापारविशेषः। अत्रोक्तं ज्ञानार्णवे कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुट-धारणम्। प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना॥ इति (वाच०)। स च प्राणायामो द्विविधः। सगर्भः निगर्भश्च। तत्राद्यो मन्त्रजपेन। द्वितीयो मात्रया। मात्रा तु वामजानुनि तद्धस्तभ्रामणमात्रकालः। अधिकं तु तन्त्रसाराज्ज्ञेयम्।

**प्रातः**—(अव्ययम्) १ सूर्योदयावधि मुहूर्तत्रयमितः कालः। यथा सर्वेषामुपवासानां प्रातरेव हि पारणम् इत्यादौ। अत्र स्मृतिः प्रातःकालो मुहूर्तांस्त्रीन्संगवस्तावदेव तु (वाच०) इति। अन्यत्राप्युक्तम्। मुहूर्त-त्रितयं प्रातस्तावानेव तु संगवः। मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णश्च तादृशः॥ सायाह्नस्त्रिमुहूर्तः स्यात्सर्वकर्मसु गर्हितः। अन्यत्रापि प्रातस्तु संस्मृतः कालो भागश्चाह्नः स पञ्चमः। संगवस्त्रिमुहूर्तोथ मध्याह्नस्तु समः स्मृतः॥ ततस्त्रयो मुहूर्ताश्च अपराह्णोभिधीयते। पञ्चमोथ दिनांशो यः स सायाह्न

इति स्मृतः ॥ ( पु० चि० पृ० ३४ )। २ प्रातःकालः आदित्योदयमारभ्य यावत्तु दशनाडिकाः। प्रातःकाल इति ख्यातः स्थापनारोपणादिषु ॥ ( पु० चि० पृ० ६४ )। ३ सार्धप्रहरात्मकः कालः इति कर्मज्ञा आहुः। स च वृद्धिश्राद्धाङ्गम्। तत्रोक्तम् प्रहरोप्यर्धसंयुक्तः प्रातरित्यभिधीयते ( नि० सि० ) इति।

**प्रातिपदिकम्**—१ [ क ] नामवदस्यार्थोनुसंधेयः ( श० प्र० )। [ ख ] अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ( पा० सू० १।२।४५ ) इति वैयाकरणा आहुः। अत्रार्थवत्त्वं च एतत्संज्ञाफलीभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेर्थविषयकबोधजनकत्वम् ( श० शेखरे )। २ प्रतिपत्तिथिभवो वह्निः प्रातिपदिकः इति याज्ञिका आहुः ( वाच० )।

**प्रातिभाव्यम्**—विश्वासार्थे पुरुषान्तरेण सह समयः ( मिताक्षरा अ० २ श्लो० ५३ )।

**प्रातिभासिकम्**—( सत्त्वम् ) लौकिकेन प्रमाणेन यद्बाध्यं लौकिकेवधौ। तत्प्रातिभासिकं सत्त्वं बाध्यं सत्येव मातरि॥ (सर्व० सं० पृ० ४४६ शां०)।

**प्रातिस्विकम्**—[ क ] विशेषधर्मः। यथा घटस्य प्रातिस्विको धर्मो घटनिष्ठं तद्व्यक्तित्वम्। [ ख ] असाधारणधर्मः इति केचिदाहुः।

**प्राथमकल्पिकः**—( योगी ) अभ्यासी प्रवृत्तमात्रज्योतिः ( सर्व० सं० पृ० ३८४ पातञ्ज० )।

**प्रादुर्भावः**—१ प्रथमप्रकाशः। २ आविर्भावः। यथा देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः। प्रादुरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः॥ ( भाग० स्कं० १० अ० ४ श्लो० ९ ) इत्यादौ।

**प्रादेशिकगुणत्वम्**—स्वाधिकरणवृत्तिदैशिकाभावप्रतियोगिगुणत्वम् ( ल० व० )। यथा विभूनां विशेषगुणानाम् संयोगस्य विभागस्य च प्रादेशिकगुणत्वम् ( भा० प० श्लो० १०० )। अत्राधिकं तु अव्याप्यवृत्तिगुणत्वशब्दव्याख्यानावसरे संपादितम् इति तत् तत्र द्रष्टव्यम्।

**प्रादेशिकत्वम्**—दैशिकाव्याप्यवृत्तित्वम् (मु० गु०) (दि० गु० पृ० १९५)। यथा विभुविशेषगुणानाम् संयोगविभागयोश्च प्रादेशिकत्वम् (भा० प० श्लो० १००)। विभुविशेषगुणाश्च शब्दः बुद्धिः सुखम् दुःखम् इच्छा द्वेषः प्रयत्नः धर्मः अधर्मः भावनाख्यसंस्कारश्च इति।

**प्रापणम्**—नयनम् (ग० व्यु० का० २ पृ० ४५)।

**प्राप्तिः**—१ संबन्धः। यथा अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः (भा० प० गु० श्लो० ११६) इत्यादौ। २ लाभः। स च स्वत्वावच्छिन्नो व्यापारः। यथा धनं प्राप्नोतीत्यादौ धात्वर्थः (श० प्र० श्लो० ७२ टी० पृ० ९७)। ३ प्रापणम्। ४ संहतिः। ५ अणिमाद्यष्टविधैश्वर्यान्तर्गतैश्वर्यविशेषः। तदुक्तम् अणिमा महिमा चैव गरिमा लघिमा तथा। प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टभूतयः॥ इति। ६ सुखाङ्गविशेषः इत्यालंकारिका आहुः। अत्रोच्यते संप्रधारणमर्थानां युक्तिः प्राप्तिः सुखागमः (सा० द० परि० ६ श्लो० ३४४) इति। ७ जरासंधसुता। ८ कंसभार्या (भा० स० १३) (हरिवंश० ९१)। ९ कामभार्या इति पौराणिका आहुः (भा० आ० अ० ३६) (वाच०)।

**प्राप्तिसमः**—(जातिः) [क] प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याविशिष्टत्वात्[1] असाधकत्वाच्च प्राप्तिसमः (गौ० ५।१।७)। हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा। न तावत्प्राप्य। प्राप्त्यामविशिष्टत्वादसाधकः। द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा। प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः (वात्स्या० ५।१।७)। प्रतिकूलतर्कदेशनाभासोयम् (गौ० वृ० ५।१।७)। [ख] प्राप्त्या अविशेषादनिष्टापादनेन प्रत्यवस्थानम् (गौ० वृ० ५।१।७)। अत्र प्राप्तिश्च साध्यहेत्वोः सामानाधिकरण्यम् (नील० पृ० ४४)। यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यादौ क्रियाहेतुगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते। किमिति क्रियावत्त्वेन तादृशगुणवत्त्वं न साध्यते। उभयोरविशेषादिति (नील० पृ० ४४)। [ग] प्राप्य साध्यं साधयति हेतुश्चेत्प्राप्तिकर्मणः। साध्यस्य पूर्वसिद्धिः स्यादिति प्राप्तिसमोदयः॥ (ता० र० २ श्लो० १११)।

---

१ अविशिष्टत्वादिति पदच्छेदः।

**प्राप्यप्रकाशकारित्वम्**—१ संनिकृष्टग्राहित्वम् (राम० १ पृ० ७९)। यथा बाह्येन्द्रियाणाम् । २ विषयदेशं गत्वा विषयप्रकाशकत्वम् । यथा न्यायमते चक्षुरिन्द्रियस्यैव प्राप्यप्रकाशकारित्वम् । गोलकमेव चक्षुः न तैजसम् इत्युच्छृङ्खलमते तु चक्षुरप्राप्यप्रकाशकार्येव भवति । यदि प्राप्यप्रकाशकारि स्यात्तदा रसनादिवदधिष्ठानसंबद्धं गृह्णीयात् । न चैवम् । गोलकासंबद्धग्रहणात् इत्यादि ( दि० १ तेजो० पृ० ७९–८० ) । मायावादिमते तु श्रोत्रस्यापि प्राप्यप्रकाशकारित्वम् ( वाच० ) इति ।

**प्राप्यम्**—१ ( कर्म ) क्रियाप्रयोज्यासाधारणधर्मप्रकारकप्रतीतिविषयतानाश्रयत्वे सति फलाश्रयः ( क्रियाजन्यफलवत्त्वेनोद्देश्यः ) ( वाच० ) । यथा ग्रामं गच्छतीत्यादौ ग्रामः प्राप्यं कर्म । अत्र ग्रामादेः कर्तृसाधारणसंयोगरूपफलवत्त्वेपि क्रियाप्रयोज्यश्रमादिरूपासाधारणविशेषफलस्यानाधारत्वेन तादृशफलप्रकारकबोधाविषयत्वात् प्राप्यत्वम् । निर्वर्त्यविकार्ययोस्तु क्रियाजन्योत्पत्त्यादिफलस्य कर्ममात्रनिष्ठतया असाधारण्येन तद्वत्त्वान्नातिप्रसङ्ग इति बोध्यम् ( वाच० ) । क्रियाप्रयोज्येत्यादिलक्षणे निर्वर्त्यादावतिव्याप्तिवारणाय सत्यन्तम् । तत्रापि विषयतानाश्रयत्वस्य धर्मप्रकारकप्रतीतिविषयतानाश्रयत्वस्य असाधारणधर्मघटितस्य वा तस्य घटं जानातीत्यादौ घटादावसंभव इति प्रयोज्यान्तं धर्मविशेषणम् । तत्रैव क्रियाप्रयोज्यधर्मसंयोगप्रतीतिविषये ग्रामादिकर्मण्यव्याप्तिनिरासायासाधारणेति । क्रियाजन्यफलानाश्रयेतिप्रसक्तिनिरासाय विशेष्यम् । प्राप्यकर्मलक्षणमुक्तं वाक्यपदीये हरिणा क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥ इति ( ग० व्यु० का० २ पृ० ६५ ) । २ गम्यम् । ३ लभ्यं चेति काव्यज्ञा आहुः ।

**प्राभाकरः**—मीमांसकविशेषप्रभाकरमतानुयायी तन्मतज्ञश्च । अत्र व्युत्पत्तिः प्रभाकरस्य इदं तन्मतं वेत्ति वा ( अण् ) इति । प्रभाकरस्य गुरु इत्यपरनाम ।

**प्रामाण्यम्**—१ प्रमात्वम् । २ प्रमाणत्वम् । अत्रत्यः स्वतःप्रामाण्यादिप्रपञ्चस्तु प्रमात्वशब्दे संपादितः । तत्र द्रष्टव्यः ।

**प्रायश्चित्तम्**—[क] दुरितनाशकत्वेन विहितः साधनविशेषः । यथा गोवधे प्रायश्चित्तमित्यादौ (श० प्र० श्लो० ९३ टी० पृ० १३४) । अत्र निमित्तात्कर्मयोगे (वार्तिक०) इत्यनेन सप्तमी ज्ञेया । तथा च जन्यत्वं सप्तम्यर्थः । तस्य प्रायश्चित्तपदार्थैकदेशे दुरितेन्वयः । जन्यत्वे च गोवधादेरन्वयः । प्रायश्चित्तशब्दस्य अङ्गिरःस्मृतौ व्युत्पत्तिः प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम् ॥ इति (वाच०) । [ख] पापक्षयमात्रसाधनत्वेन विधिबोधितः कर्मविशेषः । अत्र मात्रपदात् तुला-पुरुषाश्वमेधादिव्यावृत्तिः । तत्र पापविशेषस्यैव कामाकामकृतस्य शक्तिविशेषस्य ततो नाशः (मतभेदेन) इति विज्ञेयम् (वाच०) ।

**प्रारब्धम्**—(कर्म) [क] तत्तच्छरीरभोगजनकं हि यत्कर्म तत् । यथा अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् । नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥ इत्यादौ कर्म प्रारब्धमस्ति (मु० गु० पृ० २३५) । अत्र व्युत्पत्तिः प्रकृष्टमारब्धं स्वकार्यं येन इति (वाच०)। जननाय कृतारम्भम् इति यावत् । [ख] देहाद्यारम्भकः अदृष्टविशेषः । तस्य च भोगेनैव क्षयः । न तु ज्ञानेन । प्रारब्धातिरिक्तं कर्म तु ज्ञानेन नश्यति इति विवेकः । अत्रोक्तम् यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ (गीता० अ० ४ श्लो० ३७) इति ।

**प्रार्थनम्** / **प्रार्थना**—१ उत्कर्षप्रतिपादनेच्छा (कु० ५ टी०) । यथा देवदत्त ईश्वरं प्रार्थयतीत्यादौ धात्वर्थः । २ [क] दानाय प्रेरणम् । प्रेरणा प्रवर्तना । सा च दीयताम् इत्याद्यभिलापरूपा । यथा नृपमर्थं प्रार्थयते याचते भिक्षते इत्यादौ धात्वर्थः । अत्र नृपनिष्ठं यदर्थस्य दानं तत्प्रेरणावान् इत्यर्थः (श० प्र० श्लो० ७२ टी० पृ० ११२) । [ख] याच्ञा । यथा बलिं याचते वसुधाम् इत्यादौ । [ग] स्वसंप्रदानकदानधर्मिकसंबोध्यकर्तव्यत्वप्रकारकचक्रिच्छाविषयत्वम् । यथा धेनुं दद्यास्त्वमसम्यमित्यादौ लिङर्थः प्रार्थना । अत्र चैत्रकर्तृकैतादृशवाक्यस्थले

धेनुकर्मकचैत्रसंप्रदानकदानत्वावच्छिन्नधर्मिका या युष्मत्कर्तव्यत्वप्रकारिका चैत्रेच्छा तद्विशेष्यीभूतस्य दानस्यानुकूलकृतिमांस्त्वम् इत्याकारको बोधः ( श० प्र० श्लो० १०० टी० पृ० १७६ ) । [ घ ] शाब्दिकानां मते प्रातीच्छा विधिरूपा प्रार्थना । [ ङ ] स्वाभिलषितवस्तुदानादौ स्वीयेच्छाबोधनम् । यथा भोजनं लभेयेत्यादौ लिङर्थः ( वै० सा० द० ) । ३ आलंकारिकास्तु गर्भाङ्गविशेषः प्रार्थना इत्याहुः । अत्र अभूताहरणं मार्गो रूपोदाहरणे क्रमः । संग्रहश्चानुमानं च प्रार्थना क्षिप्तिरेव च ॥ त्रोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा । इति गर्भाङ्गान्युद्दिश्य रतिहर्षोत्सवानां तु प्रार्थनं प्रार्थना भवेत् इति प्रार्थना लक्षिता ( सा० द० परि० ६ श्लो० ३६४—३७२ ) । ४ मुद्राविशेषः प्रार्थना इति तान्त्रिका आहुः । तदुक्तम् प्रसृताङ्गुलिकौ हस्तौ मिथः श्लिष्टौ च संमुखे । कुर्यात्स्वहृदये सेयं मुद्रा स्यात्प्रार्थनाभिधा ॥ इति ( तन्त्रसा० ) ( वाच० ) ।

**प्रावृतिः**—अशुचिः मलः । प्रावृणोति प्रकर्षेणाच्छादयत्यात्मनो दृक्क्रिये इति प्रावृतिः ( सर्व० सं० पृ० १८८ शै० ) ।

**प्राशस्त्यम्**—१ विधेयतावच्छेदकसामानाधिकरण्येन बलवदनिष्टाननुबन्धित्वे सति क्रियाजन्यसुखापेक्षयाधिकेष्टजनकत्वम् । यथा मीमांसकमते विध्यर्थवादेन लक्षणया बोधितं प्राशस्त्यम् शब्दभावनायामितिकर्तव्यतात्वेनान्वेति । निषेधार्थवादेषु ( निन्दार्थवादेषु ) त्वप्राशस्त्यं लक्ष्यते इति । तत्र विध्यर्थवादः प्रजापतिरात्मनो वपामुदखिदत् इत्यादिः ( लौ० भा० टी० पृ० ८ ) । अत्राधिकं च अर्थवादशब्दव्याख्यानावसरे संपादितम् । तत्तत्र दृश्यम् । २ शीघ्रफलदातृत्वम् इति वैयाकरणा आहुः ( ल० म० ) । ३ प्रशंसनीयत्वम् इत्यन्य आहुः । ४ क्षेमत्वम् ( वाच० ) । यथा न भद्रं भद्रमिति ब्रूयात् पुण्यं प्रशस्तमित्येव ब्रूयात् ( आपस्त० धर्मसू० १।११।३१।१३—१४ ) इत्यादौ । ५ श्रेष्ठत्वम् इति काव्यज्ञा आहुः ।

**प्रीणनम्**—१ प्रीत्यनुकूलव्यापारः । यथा हरिं प्रीणयतीत्यादौ प्रीधातोरर्थः । २ इच्छा । यथा प्रीयत इत्यादौ ( वाच० ) ।

**प्रीतिः**—१ सुखविशेषः ( मु० गु० ) । २ हर्षः । यथा प्रीयतां पुरुषोत्तम इत्यादौ । ३ तृप्तिः । ४ कामस्य पत्न्या रत्याः सपत्नी इति पौराणिका आहुः ( मात्स्य—पु० अ० ८२ ) ( वाच० ) ।

**प्रेत्यभावः**—[ क ] पुनरुत्पत्तिः प्रेत्यभावः ( गौ० १।१।१९ ) । उत्पन्नस्य क्वचित्सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः । उत्पन्नस्य संबद्धस्य संबन्धस्तु देहेन्द्रियमनोबुद्धिवेदनाभिः पुनरुत्पत्तिः पुनर्देहादिभिः संबन्धः ( वात्स्या० १।१।१९ ) । अत्र वृत्तिः । प्रेत्य मृत्वा भावो जननं प्रेत्यभावः । तत्र पुनरित्यनेनाभ्यासकथनात् प्रागुत्पत्तिस्ततो मरणम् तत उत्पत्तिरिति प्रेत्यभावो जननादिरपवर्गान्तः । एतज्ज्ञानं च वैराग्य उपयुज्यते इति प्रेत्य इति न व्यर्थम् ( गौ० वृ० १।१।१९ ) ( नील० ) । अयं धर्माधर्माभ्यामुत्पद्यते । अस्यैव च प्रेत्यभावस्य अजरंजरीभाव इति वैदिकी संज्ञा ( वै० उ० ६।२।१५ ) । प्रेत्यभावश्च आत्मनः पूर्वदेहनिवृत्तिः उत्तरदेहसंघातलाभः इति ( त० भा० पृ० ४० ) । पुनर्ग्रहणं संसारानादित्वज्ञापनार्थम् । [ ख ] पूर्वोपात्तशरीरादिपरित्यागादन्यशरीरसंक्रान्तिः ( न्या० वा० १।१।१९ पृ० ८६ ) । [ ग ] मरणोत्तरं जन्म ( दि० १ ) ( त० दी० ) ( नील० ) ( ता० र० श्लो० ३१ ) । तद्यथा श्रूयते वसिष्ठर्षेरुर्वश्यां पुनरुत्पत्तिः इति । [ घ ] जन्ममरणप्रबन्धः संसारः ( वै० उ० ६।२।१५ ) । प्रबन्धः प्रवाहः ( वै० वि० ६।२।१५ ) । [ ङ ] प्रवाहरूपेणानादिसंबन्धः संसारः ( वाच० ) ।

**प्रेरणम्**—[ क ] प्रयोजकव्यापारः ( धर्मविशेषः ) । यथा देवदत्तो यज्ञदत्तेन तण्डुलं पाचयतीत्यादौ णिजर्थो देवदत्तसमवेतव्यापारः । [ ख ] प्रेषणम् । तच्च निकृष्टस्य भृत्यादेः कार्यादौ नियोगः इति वैयाकरणा आहुः । [ ग ] मीमांसकास्तु प्रवर्तकनिष्ठः प्रवृत्त्यनुकूलव्यापारः । स च लिङादिसमभिव्याहारे लिङाद्यन्तशब्दरूपः ( ल० म० ) । [ घ ] स्वाभिलषितोपायाज्ञानादप्रवृत्तापकृष्टप्रयोज्यस्योपायविषयकप्रवृत्त्यनुकूलो व्यापारः । यथा स्वर्गकामो यजेत जलमाहरेत्यादौ लिङाद्यर्थो विधिः प्रेरणम् इत्याहुः ( वै० सा० द० ) ।

**प्रोक्षणी**—संस्कृतं जलम्। यथा प्रोक्षणीभिरुद्वेजिताः स्मः (जै० न्या० अ० १ पा० ४ अधि० ९)।

**प्रोत्साहनम्**—हर्षानुकूलव्यापारः। यथा होत्रे प्रतिगृणातीत्यादौ गृणातेरर्थः प्रोत्साहनम्। अत्र धात्वर्थप्रोत्साहनैकदेशे हर्षे होत्रादेरन्वयः। तेन होतृनिष्ठहर्षानुकूलव्यापारवान् इत्याकारकस्तत्र बोधः (श० प्र० कार० ४ श्लो० ६९ टी० पृ० ९९)।

**प्लीहा**—वामपार्श्वस्थितो मांसविशेषः (संगीतरत्नाकरे पृ० १९)।

## फ.

**फक्किका**—१ असद्व्यवहारः। २ तत्त्वनिर्णयार्थं पूर्वपक्षादिबोधकं वाक्यम्। यथा फणिभाषितभाष्यफक्किका (नैष०) इत्यादौ (वाच०)। ३ कर्मकलापादिबोधको वाक्यरचनारूपः शब्दः इति याज्ञिका वदन्ति।

**फल्**—(धातुः) १ भेदनम्। यथा फलति काष्ठम्। भिनत्तीत्यर्थः। २ आरम्भः। यथा फलितः यज्ञः। आरब्ध इत्यर्थः। ३ निष्पत्तिः। यथा फलितः पट इत्यादौ। ४ गतिः। यथा फलयति ग्रामम् इत्यादौ (वाच०)।

**फलचमसः**—न्यग्रोधमुकुलरूपस्य फलस्य पिष्टं चम्यते यत्र स फलचमसः (जै० न्या० अ० ३ पा० ६ अधि० १२)।

**फलम्**—१ [क] प्रवृत्तिदोषजनितोर्थः फलम् (गौ० १।१।२०)। सुखदुःखसंवेदनं फलम्। सुखविपाकं कर्म दुःखविपाकं च। तत्पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु भवतीति सह देहादिभिः फलमभिप्रेतम् (वात्स्या० १।१।२०)। फलसामान्यलक्षणं तु जन्यत्वम् (गौ० वृ० १।१।२०)। यथा घटजन्यो घटध्वंसोपि घटस्य फलम्। क्वचित् प्रवृत्त्युद्देश्यत्वम् (दि० १ मङ्ग० पृ० ८)। यथा नव्यमते मङ्गलस्य विघ्नध्वंस एव फलम् (मु० १ मङ्गल० पृ० ८)। क्वचिच्च स्वकर्तव्यताप्रयोजकेच्छाविषयत्वम् (मू० म० १)। यथा स्वर्गार्थयागकर्तव्यताप्रयोजकस्वर्गेच्छाविषयत्वेन स्वर्गो यागफलं भवति। अधिकं तु प्रयोजन-

शब्दव्याख्यानावसरे संपादितम् । [ ख ] वैयाकरणादयस्तु यदुद्देशेन श्रुतेर्लोकतो वा प्रवृत्तिरवगता तत् इत्याहुः ( वै० भू० द० धात्व० पृ० ७ ) । न्यायमते फलं द्विविधम् । मुख्यम् गौणं च । तत्राद्यं सुखदुःखोपभोगः । लक्षणं च सुखदुःखान्यतरसाक्षात्कारत्वम् ( गौ० वृ० १।१।२० ) । अथवा तदीयमुख्यफलत्वं तु यत्कामनात्वेन तदीयफलं प्रति जनकता तत्त्वम् । यथा स्वर्गादिकामना स्वप्रयोज्यदर्शादिसंबन्धेन दर्शादिफलस्वर्गादिकं प्रति जनिका (मू० म० मङ्गल० पृ० २२)। अत्र वेदान्तिन आहुः । अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ ( गीता० अ० १८ श्लो० १२ ) इति । द्वितीयं शरीरादिकं सर्वमेव ( गौ० वृ० १।१।२० ) ( न्या० वा० १।१।२० पृ० ८६ ) । अत्रोच्यते फलं प्रवृत्तिसाध्यं स्यात् तच्च देहसुखादिकम् ( ता० र० श्लो० ३२ ) इति । २ धात्वीयवृत्तिग्रहप्रकारताश्रयः । यथा क्रियाजन्यफलशालित्वं कर्मत्वम् इत्यत्र ग्रामं गच्छतीत्यादावुत्तरदेशसंयोगः फलम् । अत्र सकर्मकधातूनां फलावच्छिन्नव्यापारे शक्तिः इत्यभिप्रायेणोक्तमिदम् इति ज्ञेयम् । कर्माख्यातसमभिव्याहारस्थले तु शाब्दबोधे फलस्य द्विधाभाने चेष्टापत्तिरेव शरणम् इति भावः । अत्र शाब्दिका आहुः । यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः । तत्प्रधानं फलं तेषां न लाभादिः प्रयोजनम् ॥ ( भर्तृ० ) इति । तेन पाकादिजन्यं भोजनम् यागादिजन्यं च पुण्यमेव फलम् न वेतनादिरूपं फलम् । तेन सूदकस्य ऋत्विगादेर्वा न धात्वर्थजन्यफलभागित्वम् इति । केचिच्छाब्दिकास्तु कर्तृप्रत्ययसमभिव्याहारे धात्वर्थजन्यत्वे सति धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयः फलम् इति वदन्ति । अत्राधिकं तु धातुशब्दव्याख्यानावसरे संपादितम् ।

**फलोपधायकत्वम्—**
**फलोपहितत्वम्—** } फलनिष्पादकत्वम् ।

## ब.

**बद्धः**—( पारदः ) अक्षतश्च लघुद्रावी तेजस्वी निर्मलो गुरुः । स्फोटनं पुनरावृत्तौ बद्धसूतस्य लक्षणम् ॥ ( सर्व० सं० पृ० २०५ रसेश्व० )।

**बध**—( धातुः ) १ संयमनम् । यथा बाधयति बधते इत्यादौ धात्वर्थः । २ निन्दा । यथा बीभत्सत इत्यादौ । ३ प्रतिबन्धः । यथा प्रतिबध्यत्वम् इत्यादौ ।

**बन्ध**—( धातुः ) १ संयमनम् । यथा संसारपाशः पुरुषं बध्नाति इत्यादौ धात्वर्थः । २ निरोधनम् । यथा अनुमितिप्रतिबन्धकत्वम् इत्यादौ ।

**बन्धः**—१ आत्मनः शरीरादिसंबन्धः । २ मिथ्यादर्शनाविरतिप्रमादकषायवशाद्योगवशाच्चात्मा सूक्ष्मैकक्षेत्रावगाहिनामनन्तप्रदेशानां पुद्गलानां कर्मबन्धयोग्यानामादानमुपश्लेषणं यत्करोति स बन्धः । तदुक्तम् सकषायत्वाज्जीवः कर्मभावयोग्यान्पुद्गलानादत्ते स बन्धः ( त० सू० ८।२ ) ( सर्व० सं० पृ० ७५ आर्ह० ) । ३ अन्योन्यं प्रदेशानुप्रवेशे सत्यविभागेनावस्थानं बन्धः ( सर्व० पृ० ८१ आर्ह० ) । ४ पारतन्त्र्यं बन्धः ( सर्व० सं० पृ० २४९ अक्षपा० ) । ५ अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः ( सर्व० सं० पृ० ४०२ शां० ) ।

**बन्धकम्**—आधिः ( गहाण इति प्र० ) ।

**बलम्**—१ साधनसामग्री । यथा गमकतौपयिकरूपसाकल्यं हि बलम् इत्यादौ ( चि० २ बाध० पृ० १०६ ) । तच्च अनुमितौ व्याप्तिपक्षधर्मतात्मकं बलम् ( चि० २ सत्प्र० पृ० ९४ ) (ग० बाध० ) । २ शरीरादिशक्तिविशेषः इति काव्यज्ञा वदन्ति । ३ सैन्यम् इति पौराणिका आहुः । ४ गुरुभक्तिः प्रसादश्च मतेर्द्वन्द्वजयस्तथा । धर्मश्चैवाप्रमादश्च बलं पञ्चविधं स्मृतम् ॥ ( सर्व० सं० पृ० १६४ नकुली० ) । ५ रोधशक्तिः ( सर्व० सं० पृ० १८८ शै० ) ।

**बहिः**—समभिव्याहृतपदार्थतावच्छेदकानधिकरणतत्संनिहितदेशः तत्स्थं वस्तु च । यथा ग्रामाद्बहिरित्यादौ । अत्र बहिर्योगे पञ्चमीसमासविधानसामर्थ्यात् तद्योगे पञ्चमी । बहिष्ट्वं च नियतमवध्याकाङ्क्षम् इति स पञ्चम्यर्थः ( ल० म० सुबर्थ० पृ० ११२ ) ।

**बहिरिन्द्रियम्**—( इन्द्रियम् ) [ क ] मनोभिन्नमिन्द्रियम् ( राम० १ साधर्म्य० पृ० ५८ ) । यथा घ्राणम् बहिरिन्द्रियम् । बहिरिन्द्रियाणि पञ्च । घ्राणम् रसनम् चक्षुः त्वक् श्रोत्रम् ( गौ० १।१।१२ ) इति । [ ख ] शब्दादिबाह्यविषयग्राहकमिन्द्रियम् । बहिरिन्द्रियलक्षणं च घ्राणाद्यन्यान्यत्वम् ( गौ० वृ० १।१।१२ ) । अत्रेदमवधेयम् । प्राचीननैयायिकमते वायोरप्रत्यक्षत्वेन बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम् इति कार्यकारणभावः स्वीकृतः । तेन वायौ रूपाभावेन न तत्प्रत्यक्षम् इति । नवीननैयायिकमते तु वायोरपि त्वाचप्रत्यक्षविषयत्वेन बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे रूपं कारणम् इति न कार्यकारणभावः । किंतु तादृशप्रत्यक्ष आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं प्रयोजकम् इति प्रयोज्यप्रयोजकभावः स्वीकृतः । तेन वायोरपि त्वाचप्रत्यक्षत्वमुपपद्यते ( भा० प० श्लो० ५७ टी० मु० १ पृ० ११३ ) ।

**बहिर्द्रव्यम्**—आत्मान्यद्रव्यम् ( नील० २ पृ० २६ ) । यथा पृथिवी बहिर्द्रव्यम् । अत्र बहिष्ट्वं चात्मान्यत्वम् । मानसलौकिकप्रत्यक्षविषयान्यत्वं वा ( म० प्र० २ पृ० २९ ) ।

**बहिष्पवमानम्**—उपास्मै गायता नरः । दविद्युतत्या रुचा । पवमानस्य ते कवे । इति सूक्तत्रयगानसाध्यं स्तोत्रं बहिष्पवमानमित्युच्यते ( जै० न्या० अ० १ पा० ४ अधि० ३ ) ।

**बहुत्वम्**—( संख्या ) १ प्रतिनियतैकत्वानालम्बनापेक्षाबुद्धिजनितत्रित्वादिसंख्या ( वै० उ० ) । यथा बहवो ब्राह्मणाः सन्ति इत्यादौ बहुत्वम् । अत्रेदं बोध्यम् । सेनावनादौ च शताद्यभिव्यक्तिस्तु न भवति । तादृशव्यञ्जकाभावात् इति ( वै० उ० ७।२।८ पृ० ३२३ ) । २ उपस्कारमते तु त्रित्वादिसमानाधिकरणं संख्यान्तरमेव बहुत्वम् । यथा भवति हि शतं वा सहस्रं वा चूतफलान्यानयामि इति प्रश्ने बहवस्तावदानीयन्ताम् किं विशेषजिज्ञासया इत्युत्तरम् । इदं च त्रित्वादिजनकापेक्षाबुद्ध्या जन्यते । अत्रेदं बोध्यम् । द्वित्वसहितापेक्षाबुद्ध्या त्रित्वमुत्पद्यते । त्रित्वसहितापेक्षाबुद्ध्या चतुष्ट्वमुत्पद्यते । एवमुत्तरोत्तरम् । बहुत्वोत्पत्तौ

तु नापेक्षाबुद्धौ पूर्वपूर्वसंख्याविशिष्टत्वनियमः । अत एव सेनावनादिषु बहुत्वमात्रमुत्पद्यते । न तु संख्यान्तरम् । संशयस्त्वसत्कोटिकोपि भवत्येव (वै० उ० ७।२।८ पृ० ३२३) इति । २ क्वचित् त्रित्वमात्रपर्यवसायि । कपिञ्जलन्यायात् । यथा वसन्ताय कपिञ्जलानालभेत इत्यादौ कपिञ्जलपदोत्तरबहुवचनबोध्यबहुत्वममुकसंख्याकेष्वेव तिष्ठति इति संख्यानियमने नियामकाभावात्त्रिष्वेव बहुत्वं कल्प्यते । तच्च बहुत्वम् पर्याप्त्या सर्वत्र वर्तते । समवायेन प्रत्येकं वृत्तिमत् ।

**बहुव्रीहिः**—१ (समासः) [क] स्वांशस्य निरूढलक्षणाया ज्ञापकेन शब्देन घटितः स्वगर्भस्य यादृशार्थस्य संबन्धित्वप्रकारेणान्वयबोधं प्रति समर्थः समासः स स्वगर्भतादृशार्थसंबन्धिबोधने बहुव्रीहिः । यथा आरूढवानरो वृक्षः पीतपयस्कं पात्रम् दत्तदक्षिणो द्विजः चित्रगुः इत्यादौ । आरूढवानरो वृक्ष इत्यत्र आरूढो वानरो यम् इति व्युत्पत्त्या स्वकर्मकारोहणकर्तृवानरसंबन्धित्वेन वृक्षम् पीतपयस्कं पात्रमित्यत्र पीतं पयो येन इति रीत्या स्वकरणकपानकर्मजलसंबन्धित्वेन पात्रम् दत्तदक्षिणो द्विज इत्यत्र दत्ता दक्षिणा यस्मै इति क्रमेण स्वसंप्रदानकदानकर्मदक्षिणासंबन्धित्वेन द्विजम् चित्रगुरित्यत्र चित्रा गौर्यस्य इति वाक्यानुसारेण चित्राभिन्नस्वगोसंबन्धित्वेन चैत्रं च बहुव्रीहिर्बोधयतीति सर्वत्र स्वगर्भतत्तदर्थसंबन्धित्वेन धर्मिणामवगमो भवति (श० प्र० श्लो० ४२ टी० पृ० ५३) । [ख] नियमतः समासप्रयुक्तलाक्षणिकोत्तरनामकसमासः । यथा चित्रगुरित्यादौ । अत्र चित्रगोस्वामिनि समासप्रयुक्तलक्षणोत्तरपद एव इति लक्षणसंगतिः । अन्यथा सुबर्थैकत्वादेस्तत्रान्वयो न स्यात् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम् इति व्युत्पत्तेः । अत्र पदप्रयोजनम् । राजपुरुषः इत्यादिवारणायोत्तरेति नामविशेषणम् । अर्धपिप्पली इत्यादितत्पुरुषवारणाय नियमतः इति पदम् । तत्पुरुषे तु न नियमतः । समासप्रयुक्तलाक्षणिकोत्तरनामके राजपुरुषः इत्यादौ व्यभिचारात् (त० प्र० ख० ४ पृ० ४४) । [ग] शाब्दिकानां मते प्रायेणान्यपदार्थप्रधानः समासविशेषो बहुव्रीहिः । अथवा [घ] बहुव्री-

हिप्रकरणपठितः समासो बहुव्रीहिः । तेन उन्मत्तगङ्गाद्यव्ययीभावे नातिव्याप्तिः । बहुव्रीहिर्द्विविधः । समानाधिकरणः व्यधिकरणश्च । तत्र समानाधिकरणो यथा चैत्रदत्तधन इत्यादौ आरूढवानरो वृक्ष इत्यादौ च । अत्र चैत्रेण दत्तं धनं यस्मै इति व्यासवाक्यात् चैत्रकर्तृकयत्संप्रदानकदानकर्म धनम् इत्यन्वयबोधः । समासे तु चैत्रकर्तृकदानकर्मधनसंबन्धी इत्यन्वयबोधः । संबन्धश्च स्वकर्मकदानसंप्रदानत्वम् इति बोध्यम् । आरूढवानर इत्यत्र आरूढो वानरो यम् इति व्यासे आङ्पूर्वकरुहधातोरूर्ध्वदेशावच्छिन्नसंयोगानुकूलक्रिया क्तप्रत्ययस्याश्रयः द्वितीयाया आधेयत्वम् अर्थः । तथा च वृक्षवृत्त्यूर्ध्वदेशावच्छिन्नसंयोगानुकूलक्रियाश्रयो वानरः इत्यन्वयबोधः । समासे तु आरोहणकर्तृवानरसंबन्धी वृक्षः इत्यन्वयधीः । संबन्धः स्वकर्तृकारोहणकर्मत्वम् इति ज्ञेयम् । व्यधिकरणो यथा चक्रपाणिरित्यादौ । अत्र चक्रं पाणौ यस्य इति विग्रहवाक्ये यत्संबन्धिपाणिवृत्ति चक्रम् इत्यन्वयधीः । समासे तु चक्रयुक्तपाणिसंबन्धी इति बोधः ( त० प्र० ख० ४ पृ० ४९ ) । प्रकारान्तरेण बहुव्रीहिर्द्विविधः तद्गुणसंविज्ञानः अतद्गुणसंविज्ञानश्चेति । ( श० प्र० श्लो० ४४ ) । लम्बकर्णः चित्रगुः इति क्रमेणोदाहरणद्वयम् । प्रकारान्तरेणापि द्विपदत्रिपदचतुष्पदादिभेदेन बहुविधः । यथा चित्रगुः जरतीचित्रगुश्चैत्रः महन्नीलोत्पला सरित् इत्यादौ ( श० प्र० श्लो० ४६ टी० पृ० ६० ) । २ काव्यज्ञास्तु अनेकधान्यादियुक्तः । यथा तत् पुरुष कर्म धारय येनाहं स्यां सदा बहुव्रीहिः ( उद्भटः ) इत्यादौ इत्याहुः ।

**बाधः**—१ अभावः ( वाक्य० ४ पृ० १९ ) । यथा अर्थाबाधो योग्यता इत्यादौ ( त० सं० ) । २ प्रतिबन्धः । ३ पीडनम् इति काव्यज्ञा आहुः । ४ हेत्वाभासविशेषः । स च प्राचीनमते साध्याभाववत्त्वप्रमाविषयपक्षकत्वम् । अथवा प्रमितसाध्याभाववत्पक्षकत्वम् । तथा च साध्याभावप्रमैव दोषः । एतादृशबाधज्ञानस्य प्रमात्वविषयकतानियमेन प्रतिबन्धकताध्रौव्यादिति भावः । तथाचैतन्मते प्रमात्वविषयकत्वस्यैव प्रतिबन्धकतायां प्रयोजकत्वाद्धेत्वाभासलक्षणस्य समन्वयो भवति

( ग० बाध० पृ० १ ) । साध्याभावप्रमा च प्रमात्वेन ज्ञातैवोपयुज्यते न स्वरूपसती । हेत्वाभासत्वात् । प्रमात्वज्ञानं विनाधिकबलत्वाभावेनादोषत्वात् । अप्रमायामपि प्रमात्वज्ञानेनुमितिप्रतिबन्धाच्च ( चि० २ पृ० १०३–१०४ ) । एकदेशिमतेन पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वम् ( चि० २ पृ० १०३ ) । अत्रत्यविषयः प्रकारताशब्दव्याख्यानावसरे संपादितः इत्यत्रैव विरम्यते । रघुनाथशिरोमणिभट्टाचार्यैस्तु बाधस्वरूपमनेकविधमुक्तम् । तद्यथा १ साध्याभाववान् पक्षः । २ साध्यवदन्यः पक्षः । ३ पक्षावृत्तिसाध्यम् । ४ पक्षे साध्याभावः । ५ पक्षनिष्ठसाध्याभाववत्त्वादिकम् । ६ साध्यादेः पक्षावृत्तित्वादिकम् । ७ साध्यवत्सामान्यादेः पक्षान्यत्वादिकम् । ८ विशिष्टसाध्ये पक्षादेर्विशेष्याभाववत्त्वादिकम् । ९ पक्षादेः साध्यासमानाधिकरणधर्मवत्त्वम् ( दीधि० २ बाध० पृ० २१९ ) इति । यथा ह्रदो वह्निमान् धूमादित्यादौ ह्रदे धूमेन वह्निसाधने वह्न्यभाववद्ध्रदादिर्बाधः ( न्या० म० २ पृ० २१ ) । अत्र प्रथमे साध्याभाववत्त्वमनवच्छिन्नं ग्राह्यम् । अतो नाव्याप्यवृत्तिसाध्यकस्थले कपिसंयोगवानयं वृक्षः इत्यादावतिप्रसङ्गः । व्याप्यवृत्तिसाध्यकस्थले च पक्षनिष्ठानवच्छिन्नसाध्याभाववत्त्वं बाधः । यथा जलं पृथिवी स्पर्शवत्त्वादित्यादौ जलनिष्ठपृथिवीत्वाभावो बाधः । अत्रायं विशेषो ज्ञेयः । यत्र तु देशकालावच्छेदेन साध्यसाधनम् यथा मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादौ उत्पत्तिकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ च तत्र तदवच्छेदेन साध्याभाववत्त्वं बाधः । इमे असंकीर्णबाधोदाहरणे इति जेगीयेते ( न्या० म० २ पृ० २१ ) ( म० प्र० २ पृ० २८ ) । परे तु घटः सकर्तृकः कार्यत्वादित्यादौ यत्र लाघवोपनीतमेकमात्रकर्तृकत्वं भासते तत्र तदभावोसंकीर्णोदाहरणम् इति वदन्ति ( गौ० वृ० १।२।९ ) । यत्र तु पक्षतावच्छेदके धर्मेनतिरिक्तवृत्तित्वरूपसाध्यावच्छेदकताभानमुद्देश्यम् यथा पर्वतो वह्निमानित्यादौ तत्र पक्षतावच्छेदकसामानाधिकरण्येन साध्याभाववत्त्वं बाधः । यत्र तु तादृशधर्मसामानाधिकरण्यमात्रेण साध्यसिद्धिरुद्देश्या यथा ह्रदो वह्निमानित्यादौ तत्र तादृशधर्मावच्छिन्नं साध्याभाववत्त्वं बाधः ( ग०

बाध० पृ० ९) (दीधि० २) (म० प्र० २ पृ० २८)। द्वितीये च तद्वत्ताबुद्धौ तदत्यन्ताभावस्येव तद्वद्भेदस्यापि धियो विरोधित्वात् हेत्वाभासलक्षणस्यापि समन्वयः । एवं च वृत्त्यनियामकेन तादात्म्यसंबन्धेन अनुमितिस्वीकारे तत्संबन्धस्य प्रतियोगितावच्छेदकत्वे च तत्र साध्यवद्भेदस्य बाधत्वं बोध्यम् (ग० २ बाध० पृ० ९)। तृतीये च प्राचीनमते पक्षः साध्यवान् पक्षे साध्यम् इति ज्ञानयोः समशीलयोरेकस्य यत्प्रतिबध्यत्वम् अन्यस्यापि तत्प्रतिबध्यत्वमनुभवसिद्धम् इत्याशयेन तदुक्तिः । एवं च एतादृशबाधज्ञानस्य ग्राह्याभावानवगाहित्वेपि नानुमितिं प्रति प्रतिबन्धकत्वहानिः। चतुर्थे पक्षे साध्याभाव इत्यस्यार्थश्च आधेयतया पक्षेण पक्षवृत्तित्वेन वा विशिष्ट इति । तथा च विशेषणविशेष्यभाववैपरीत्येपि प्रतिबन्धकत्वमक्षतम् इत्याशयेनेदं लक्षणम् इति ज्ञेयम् । पञ्चमे साध्याभावाधिकरणत्वम् साध्यवद्भेदाधिकरणत्वं चेत्यर्थः । अधिकरणताभेदात्पूर्वस्माद्भेदः । एतदपि प्राचीनमतेन । सप्तमे पक्षान्यत्वादिकमित्यस्य साध्यवत्त्वव्यापकानुयोगिताकत्वादिविशिष्टं पक्षभेदादिकम् इत्यर्थः । तथा च भेदप्रतियोगिताभेदानुयोगित्वयोः समनियतयोरेकज्ञानं यत्र विरोधि अपरज्ञानमपि तत्र तथा इत्याशयेनेदम् (ग० बाध० पृ० १०)। एवमन्यत्रोह्यम्। बाधितं च लिङ्गमनेकविधम्। १ धर्मिग्राहकमानबाधितम् । घटो व्यापकः सत्त्वादिति प्रत्यक्षेण । परमाणवः सावयवा मूर्तत्वादिति अनुमानेन । मेरुः पाषाणमयः पर्वतत्वादिति सुवर्णमयत्वबोधकागमेन । २ साध्यप्रतियोगिग्राहकमानबाधितम्। वह्निरनुष्णः कृतकत्वादिति प्रत्यक्षेण। शब्दोश्रावणो गुणत्वादिति अनुमानेन। गवयत्वं गवयपदाप्रवृत्तिनिमित्तं जातित्वादिति उपमानेन। ३ साध्यग्राहकमानबाधितम्। नरशिरःकपालं शुचि प्राण्यङ्गत्वादिति आगमेन। ४ हेतुग्राहकमानबाधितम् । जलानिलावुष्णौ पृथिवीतो विपरीतस्पर्शत्वात्तेजोवदिति प्रत्यक्षेण । मनो विभु ज्ञानासमवाय्याधारत्वादिति अनुमानेन । राजसूयो ब्राह्मणकर्तव्यः स्वर्गसाधनत्वादग्निष्टोमवदिति राजसूयकर्तव्यताबोधकागमेन इति (चि० २ बाध० पृ० ११०)। अत्र राजा राजसूयेन यजेत इति श्रुत्या राज्ञैव राज-

सूयः कर्तव्यः इति बोधनेन ब्राह्मणकर्तव्यत्वस्य बाधः इति विज्ञेयम् । बाधविभाजकं तु प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्युन्नायकत्वे प्रकृतपक्षप्रकृतसाध्यग्रहाविरोधित्वे च सति प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोधित्वम् ( दीधि० २ बाध० पृ० २२० ) इति ।

**बाधकमानम्**—१ बाधवदस्यार्थोनुसंधेयः ( दीधि० २ पक्ष० पृ० १२३ )। २ बाधकं प्रमाणम् । यथा नापि साधकबाधकमानाभावः पक्षत्वम् ( चि० २ पक्ष० पृ० ३३ ) इत्यादौ ।

**बाधितः**—( हेत्वाभासः ) [ क ] साध्याभाववत्पक्षको हेतुः । यथा वह्निरनुष्णः पदार्थत्वात् इति ( प्र० प्र० ) ( त० कौ० पृ० १५ ) । [ ख ] यस्य साध्याभावः प्रमाणान्तरेण निश्चितः सः । यथा वह्निरनुष्णो द्रव्यत्वाज्जलवदिति ( त० सं० ) । यथा वा ह्रदो वह्निमान् धूमादित्यादौ धूमो बाधितः । वह्निरनुष्ण इत्यत्र च वह्नौ पक्षे क्रियमाणे साध्याभावस्य अनुष्णत्वाभावस्योष्णत्वस्य त्वगिन्द्रियेण निश्चयात् द्रव्यत्वं हेतुर्बाधितः । यस्य साध्याभाव इत्यादेरर्थश्च पक्षविशेष्यकप्रमानिश्चयप्रकारीभूतसाध्याभावरूपबाधवान् । अथवा पक्षनिष्ठसाध्याभावादिरूपबाधवान्यः स बाधितः ( वाक्य० २ पृ० १८ ) । बाधितत्वं च कालात्ययापदिष्टत्वम् । तच्च उपजीव्यप्रमाणनिश्चितसाध्यविपरीतत्वम् । अथवा बाधात्मकहेतुदोषवत्त्वम् । एतज्ज्ञानं साक्षादनुमितिप्रतिबन्धकम् । वह्नावनुष्णत्वं नास्ति इति ज्ञाने सति वह्निरनुष्णः इति अनुमितेरसंभवात् । तदभावलौकिकनिर्णयस्य तद्वत्ताज्ञाने प्रतिबन्धकत्वात् ( त० कौ० २ पृ० १५ ) ।

**बालः**—१ [ क ] ग्रहणधारणपटुः ( त० दी० १ पृ० २ ) । तथा च ग्रहणपूर्वकधारणयोग्यः इत्यर्थः ( वाक्य० ) । अयं शास्त्राध्ययने बालः इति ज्ञेयम् । यथा बालानां सुखबोधाय क्रियते तर्कसंग्रहः इत्यादौ । [ ख ] अधीतकाव्यकोशव्याकरणोनधीतन्यायो बालः इति केचिद्वदन्ति ( सि० च० पृ० १ ) । २ आ षोडशाद्भवेद्बालस्तरुणस्तत उच्यते इति व्यवहारज्ञा आहुः । ३ स्तनधंयो बाल इति लौकिकजना वदन्ति ।

**बाह्यैकैकेन्द्रियग्राह्यगुणत्वम्**—[ क ] चक्षुस्त्वगुभयाग्राह्यबहिरिन्द्रियग्राह्य-परिमाणान्यगुणसमवेतजातिमत्त्वम् ( दि० गु० पृ० १९३ )। यथा रूपादेर्बाह्यैकैकेन्द्रियग्राह्यगुणत्वम्। तादृशी जातिश्च रूपत्वादिः। एतादृश-जातिघटितलक्षणकरणेन संख्यादौ नातिव्याप्तिः। अतीन्द्रियरूपादौ नाव्याप्तिश्च इति ज्ञेयम्। बाह्यैकैकेन्द्रियग्राह्यगुणाश्च रूपम् रसः गन्धः स्पर्शः शब्दश्च इति ( भा० प० गु० श्लो० ९४ ) ( प० मा० )। [ ख ] बहिरिन्द्रियद्वयावेद्यबहिरिन्द्रियवेद्यगुणत्वसाक्षाद्व्याप्यजातिमत्त्वम् ( प० मा० )।

**बुद्धः**—१ वेदतत्कर्मणोर्निन्दाकर्ता भगवतोवतारविशेषः। स च विष्णो-श्चतुर्विंशत्यवतारमध्य एकविंशोवतारः। यथोक्तम् ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम्। बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति ॥ ( श्रीमद्भाग० स्क० १ अ० ३ श्लो० २४ ) इति। तन्मतं तु बौद्ध-शब्दव्याख्यानावसरे संक्षेपतः प्रदर्शयिष्यते तत्तत्र दृश्यम्। २ जागरितः इति वेदान्तिन आहुः। ३ पण्डितश्च इति काव्यज्ञा आहुः।

**बुद्धिः**—१ धर्मपत्नीभेद इति पौराणिका वदन्ति ( भा० आ० अ० ६६ )। २ ( गुणः ) [ क ] बुद्धित्वसामान्यवती ( प्र० प्र० ) ( त० कौ० १ पृ० ६ )। सा चात्ममात्रवृत्तिः। न त्वन्तःकरणवृत्तिः। अव्याप्यवृत्तिः मनोमात्रगम्या च। लक्षणं च बुद्ध्यादिपदवाच्यत्वम्। अनुभवसिद्ध-ज्ञानत्वजातिरेव वा ( गौ० वृ० १।१।१५ )। अथवा जानामि इत्यनु-व्यवसायगम्यज्ञानत्वम् ( त० दी० १ पृ० १४ ) ( सि० च० १ पृ० १६ )। अथवा संबन्धावच्छिन्नप्रकारतानिरूपितप्रकारितासमाना-धिकरणगुणत्वव्याप्यजातिमत्त्वम् ( ल० व० )। बुद्धिविशेषाः केचि-दुच्यन्ते। संनिकृष्टे वस्तुनि तावत् अयम् इति बुद्धिरुत्पद्यते। विप्रकृष्टे वस्तुनि एषः इति बुद्धिः। क्रियायां स्वतन्त्रोयम् इति बुद्धिमपेक्ष्य त्वया इति कर्तृत्वोपरक्ता बुद्धिः। करणव्यापारविषयत्वबुद्धिमपेक्ष्य कृतम् इति कर्मबुद्धिः। अयं भुजिक्रियायां कर्ता प्रयोजकश्चायम् इति बुद्धिमपेक्ष्य भोजय इति बुद्धिः। नियोज्यनियोक्तृव्यापारस्य विषयोयम् इति बुद्ध्य-

पेक्षम् एनम् इति ज्ञानम् । एवमन्यदपि बुद्ध्यपेक्षमूहनीयम् (वै० उ० ८।२।१ पृ० ३६८–३६९)। [ख] आत्माश्रयः प्रकाशः (प० च० पृ० ३०)। [ग] आत्मगुणत्वे सत्यर्थप्रकाशः (त० प्र०) (त० भा०) (त० कौ०) (ता० र० श्लो० २९)। [घ] सर्वव्यवहारहेतुर्ज्ञानम् (त० सं०)। यथा भोगः (वात्स्या० १।१।९)। भोगश्च सुखदुःखानुभवः। सर्वव्यवहारेत्यस्यार्थश्च व्यवहारः बुबोधयिषापूर्वकवाक्यप्रयोगः। तथा च तादृशव्यवहारजनकतावच्छेदकजातिमती समुदायार्थः। जातिपर्यन्तानुधावनेन निर्विकल्पकादौ नाव्याप्तिः। बुबोधयिषापूर्वकवाक्यप्रयोगे वाक्यार्थज्ञानत्वेन कारणत्वात्। कारणतावच्छेदकज्ञानत्वमादाय सर्वत्र लक्षणसमन्वयः (वाक्य० १ पृ० ९)। अथवा सर्वे ये व्यवहारा आहारविहारादयः तेषां हेतुर्बुद्धिः इत्यर्थः (सि० च० १ पृ० १९)। बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् (गौ० १।१।१५)। बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः (वै० उ० ८।१।१) (प्रशस्त० गु० पृ० २३) (वै० उ० ३।१।२) (३।१।१८)। यथा सा मणिकर्णिका स विश्वेश्वरः इत्यादिः (त० कौ०)। बुद्धेर्ज्ञानपर्यायत्वकथनेन सांख्यमतनिरासः। तन्मते बुद्धेरन्तःकरणस्वरूपत्वम्। न्यायमते तु मनोभिन्नान्तःकरणे मानाभावाद्बुद्धेरन्तःकरणभिन्नत्वमेवेति बोध्यम् (सि० च० १ पृ० १९)। सांख्यास्तु सत्त्वरजस्तमोगुणात्मिकाया अनादिपरिणामिनित्यव्यापिप्रकृतेर्जडाया आद्यः परिणामोन्तःकरणरूपो महत्तत्त्वापरपर्यायो बुद्धिः (कु० १) (वै० उ० ८।१।१) (सि० च० पृ० १९) अध्यवसायो वा बुद्धिः इत्याहुः (सांख्यसू० अ० २ सू० १३)। योयं कर्तव्यम् इति निश्चयः (वृत्तिः) चितिसंनिधानादापन्नचैतन्यायाः सोध्यवसायः इति तल्लक्षणम्। मायावादिनस्तु निश्चयात्मकवृत्तियुतमन्तःकरणं बुद्धिः इत्याहुः। अत्रोच्यते। निश्चयात्मा निराकारो बुद्धिरित्यभिधीयते इति वाशिष्ठे (सांख्य० भा० १।६४)। मनो बुद्धिरहंकारश्चित्तं करणमान्तरम्। संशयो निश्चयो गर्वः स्मरणं विषया अमी॥ इति (वेदा० सा०)। न्यायमते बुद्धि-

द्विविधा नित्या अनित्या च । तत्र नित्या परमात्मनः । सा च साक्षात्काराभिधा प्रत्यक्षप्रमात्मिकैव । अनित्या तु जीवस्य । अनित्या द्विविधा । स्मृतिः अनुभवश्च । तौ च प्रत्येकं द्विविधौ । यथार्थौ अयथार्थौ च । अनुभवश्च चतुर्विधः । प्रत्यक्षम् अनुमितिः उपमितिः शाब्दबोधश्च । तत्र यथार्थानुभवः प्रमा इत्युच्यते । अयथार्थानुभवस्तु अप्रमा इति भ्रमः इति चोच्यते । प्रत्यक्षमपि सविकल्पकनिर्विकल्पकभेदेन द्विविधम् । तत्र निर्विकल्पकं न प्रमा नापि भ्रमः । संशय प्रत्यभिज्ञा उपनीतभान इत्यादिकं तु सविकल्पकप्रत्यक्ष एवान्तर्भवति । अथ प्रकारान्तरेण विभागः प्रदर्श्यते । बुद्धिर्द्विविधा । स्मृतिः अनुभवश्च । उभयमपि प्रत्येकं यथार्थायथार्थभेदेन द्विविधम् । तत्र सर्वा स्मृतिरनित्या जीवात्ममात्रसमवेता च । अनुभवस्तु प्रत्यक्षानुमित्युपमितिशाब्दबोधभेदेन चतुर्विधः । तत्र यथार्थानुभवः शास्त्रे प्रमा इत्युच्यते । प्रत्यक्षं नित्यानित्यभेदेन द्विविधम् । तत्र नित्यं प्रत्यक्षं परमात्मसमवेतम् यथार्थमेव । अनित्यं प्रत्यक्षं तु जीवात्मसमवेतम् यथार्थमयथार्थं च । अनुमिति उपमिति शाब्दबोध एतत्त्रयं चानित्यमेव जीवात्ममात्रसमवेतं च इति । इदं च यथार्थमयथार्थं चेत्युभयविधमप्यस्ति । प्रत्यभिज्ञोपनीतभानादिकं चानित्यप्रत्यक्ष एवान्तर्भवति इति नाधिक्यम् । वैशेषिकनये बुद्धिर्द्विविधा विद्या चाविद्या च । सा चानेकप्रकारा । अर्थानन्त्यात् प्रत्यर्थनियतत्वाच्च । तस्याः सत्यप्यनेकविधत्वे समासतो द्विधा । विद्या चाविद्या च ( प्रशस्त० पृ० २३ ) । तत्र विशेषणवद्विशेष्यसंनिकर्ष लिङ्गपरामर्श इत्यादिरूपगुणजन्या विद्या । दूरत्वपित्तादीन्द्रियदोषजन्या अविद्या ( त० व० पृ० २१३ ) । तत्र विद्या चतुर्विधा प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा । आर्षस्वरूपं च गालवाद्यृषीणामतीतानागतवस्तुविषयकं ज्ञानमार्षम् । अत्र नैयायिकाः इदं च योगिनां योगजधर्मसहकारेण जायमाने अलौकिकप्रत्यक्ष एवान्तर्भवति न चतुर्थम् इत्याहुः ( त० व० पृ० २२० ) । आर्षस्वरूपं प्रकारान्तरेणान्यत्रोक्तम् । आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वर्थेष्वतीन्द्रियेषु धर्मादिषु ग्रन्थोपनिबद्धे-

ष्वनुपनिबद्धेषु चात्ममनसोः संयोगविशेषाद्धर्मविशेषाच्च यत्प्रातिभं ज्ञानं यथात्मनिवेदनमुत्पद्यते तदार्षमित्याचक्षते ( प्रशस्त० पृ० ३२ )। अविद्यापि चतुर्विधा संशयविपर्ययस्वप्नानध्यवसायलक्षणा। तत्र यल्लैङ्गिकं तदनिन्द्रियजम्। लिङ्गदर्शनात्संजायमानं लैङ्गिकम् ( प्रशस्त० पृ० २६ )। इन्द्रियजमपि द्विविधम्। सर्वज्ञीयमसर्वज्ञीयं च। सर्वज्ञीयं योगजधर्मलक्षणया प्रत्यासत्त्या तत्तत्पदार्थसार्थज्ञानम्। असर्वज्ञीयं च प्रत्यक्षं द्विविधम्। सविकल्पकम् निर्विकल्पकं च। तत्र सविकल्पकं ज्ञानं न प्रमाणम् इति कीर्तिदिङ्नागादयो मन्यन्ते। स्वमते तु सविकल्पकमपीन्द्रियार्थसंनिकर्षजत्वात्प्रत्यक्षं निर्विकल्पके प्रमाणं चेति ( वै० उ० ८।१।२ ) ( प्रशस्त० पृ० २३ )। प्रकारान्तरेण विभागो यथा। बुद्धिः प्रथमतो द्विविधा अनुभूतिः स्मृतिश्च। अनुभूतिरपि कणादमते द्विविधा प्रत्यक्षम् अनुमितिश्च। प्रत्यक्षमपि घ्राणजादिभेदेन षड्विधम्। सविकल्पकनिर्विकल्पकभेदेन तथा लौकिकालौकिकभेदेन च द्विविधम्। अनुमितिरपि केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिरूपत्रिविधानुमानजन्यत्वात्त्रिविधा। स्मृतिश्चोपेक्षानात्मकनिश्चयाधीनसमानाकारकभावनाख्यसंस्काराधीनैकविधैव। प्रकारान्तरेणापि बुद्धिर्द्विविधा प्रमा अप्रमा चेति। संशयनिश्चयभेदेनापि बुद्धिर्द्विविधा। वैशेषिकमते सादृश्यज्ञानस्थले पदज्ञानस्थले च तदुत्तरं लिङ्गपरामर्शोत्पत्त्यैवानुमितिर्भवति। प्रत्यक्षानुमानातिरिक्तस्य प्रमाणान्तरस्यानभ्युपगमात् ( वै० वि० ८।१।११ )। वेदान्तिमते बुद्धिः सात्त्विकराजसतामसभेदेन त्रिविधा। तत्र सात्त्विकी यथा प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये। बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी॥ राजसी यथा यया धर्ममधर्मं च कार्यं चाकार्यमेव च। अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी॥ तामसी यथा अधर्मं धर्ममिति या मन्यते तमसावृता। सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी॥ ( गीता अ० १८ श्लो० ३०–३२ ) इति। बुद्धेः पञ्च गुणा यथा इष्टानिष्टविपत्तिश्च व्यवसायः समाधिता। संशयः प्रतिपत्तिश्च बुद्धेः पञ्च गुणान्विदुः॥

( महाभा० मोक्षधर्मे ) इति । बुद्धेः सप्त गुणा यथा शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहोर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥ ( हेमच० ) । बुद्धेर्वृत्तिः पञ्चधा । यथा प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ( पात० सूत्र० पा० १ सू० ६ ) इति । बुद्धिक्षयकरा यथा शोकः क्रोधश्च लोभश्च कामो मोहः परासुता । ईर्ष्या मानो विचिकित्सा हिंसासूया जुगुप्सता ॥ द्वादशैते बुद्धिनाशहेतवो मानसा मलाः ( कालिकापु० अ० १८ ) इति । अत्रेदं बोध्यम् । सर्वं जन्यज्ञानं त्वङ्मनःसंयोगादुत्पद्यते । अन्ये तु चर्ममनःसंयोगादनित्यज्ञानमुत्पद्यत इति वदन्ति । अत्र ज्ञानसामान्यं प्रति त्वङ्मनःसंयोगः कारणम् इति कार्यकारणभावो मन्तव्यः । अत्र प्रमाणं तु सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननम् ( मु० १।२ पृ० ११४ ) इति ।

**बोधः**—१ बुद्धिवदस्यार्थोनुसंधेयः । यथा शाब्दबोध इत्यादौ । २ देशविशेषः इति पौराणिका आहुः । ३ जागरः इति वेदान्तिनो वदन्ति ।

**बोधनम्**—विलिख्य मन्त्रवर्णांस्तु प्रसूनैः करवीरजैः । मन्त्राक्षरेण संख्यातैर्हन्यात्तद्बोधनं स्मृतम् ॥ ( सर्व० सं० पृ० ३७० पातञ्ज० ) ।

**बौद्धः**—( नास्तिकः ) वेदो न प्रमाणम् इति यत्किंचिद्वेदविशेष्यकानाहार्यनिश्चयवान् ( मू० म० १ ) । यथा सुगतादिर्बौद्धः । अत्र व्युत्पत्तिः । बौद्धं बुद्धप्रोक्तशास्त्रम् वेत्त्यधीते वा बौद्धः इति । अत्र व्याकरणम् तदधीते वेत्ति वा ( अण् ) इति । तत्र बौद्धाश्चतुर्विधाः ( १ ) माध्यमिकाः ( २ ) योगाचाराः ( ३ ) सौत्रान्तिकाः ( ४ ) वैभाषिकाश्च इति । ते च बौद्धाश्चतुर्विधया भावनया परमपुरुषार्थं कथयन्ति । चतुर्विधभावना च ( १ ) सर्वं क्षणिकं क्षणिकम् इति ( २ ) दुःखं दुःखम् इति ( ३ ) स्वलक्षणं स्वलक्षणम् इति ( ४ ) शून्यं शून्यम् इति च । ते च बौद्धा यथाक्रमं ( १ ) सर्वशून्यत्व ( २ ) बाह्यशून्यत्व ( ३ ) बाह्यार्थानुमेयत्व ( ४ ) बाह्यार्थप्रत्यक्षत्ववादानातिष्ठन्ते ( सर्व० सं० पृ० १९ बौद्ध० ) । तत्र माध्यमिकादीनां संक्षेपतो मतमुपन्यस्यते । तत्त्वचतुष्टये भगवतोपदिष्टे ( १ ) माध्यमिकाः तावदु-

त्तमप्रज्ञा इत्थमचीकथन् । भिक्षुपादप्रसारणन्यायेन क्षणभङ्गाद्यभिधानमुखेन स्थायित्वानुकूलवेदनीयत्वानुगतसर्वसत्यत्वभ्रमव्यावर्तनेन सर्वशून्यतायामेव पर्यवसानम् । अतः तत्त्वं सदसदुभयानुभयात्मकचतुष्कोणविनिर्मुक्तं शून्यमेव । दृष्टार्थव्यवहारश्च स्वप्नव्यवहारवत् संवृत्या संगच्छते । अत एवोक्तम् परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ । कुणपः कामिनी भक्ष्य इति तिस्रो विकल्पनाः ॥ इति । तदेवं भावनाचतुष्टयवशान्निखिलवासनानिवृत्तौ परं निर्वाणं शून्यरूपं सेत्स्यति इति वयं कृतार्थाः नास्माकमुपदेश्यं किंचिदस्ति इति । शिष्यैस्तावद्योगश्चाचारश्च इति द्वयं करणीयम् । तत्राप्राप्तस्यार्थस्य प्राप्तये पर्यनुयोगो योगः । गुरूक्तस्यार्थस्याङ्गीकरणमाचारः । तत्र गुरूक्तस्याङ्गीकरणादुत्तमाः पर्यनुयोगस्याकरणादधमाश्च । अत एतेषां माध्यमिका इति प्रसिद्धिः ( सर्व० सं० पृ० २९–३० )। ( २ ) केषांचित् बौद्धविशेषाणां योगाचार इति संज्ञा । गुरूक्तभावनाचतुष्टयं बाह्यार्थस्य शून्यत्वं चाङ्गीकृत्य आन्तरस्य शून्यत्वं कथमिति पर्यनुयोगस्य करणादेतेषां योगाचारप्रथा । एषा हि तेषां प्रक्रिया । स्वयंवेदनं तावदङ्गीकार्यम् । अन्यथा जगदान्ध्यं प्रसज्येत । स्वव्यतिरिक्तग्राह्यग्राहकविरहात्तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका प्रकाशवदिति । ग्राह्यग्राहकयोरभेदश्च मन्तव्यः । यद्वेद्यते येन वेदनेन तत्ततो न भिद्यते । यथा ज्ञानेनात्मा । वेद्यन्ते तैश्च नीलादयः । यश्चायं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः स एकस्मिंश्चन्द्रमसि द्वित्वावभास इव भ्रमः । अत्राप्यनादिरविच्छिन्नप्रवाहाभेदवासनैव निमित्तम् । वस्तुतः वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्तृपरिज्ञानानुरोधेन विभिन्नग्राह्यग्राहकाकाररूपवत्तया तिमिराद्युपहताक्ष्णां केशेन्द्रनाडीज्ञानाभेदवदनाद्युपप्लववासनासामर्थ्याद्व्यवस्थोपपत्तेः पर्यनुयोगायोगात् । तस्माद्बुद्धिरेवानादिवासनावशादनेकाकारावभासत इति सिद्धम् । ततश्च प्रागुक्तभावनाप्रचयबलान्निखिलवासनोच्छेदविगलितविविधविषयाकारोपप्लवविशुद्धविज्ञानोदयो महोदयः । अयमेव मोक्षः इति । (३) सौत्रान्तिका इत्थं मन्यन्ते । बाह्यमर्थजातमस्त्येव । तच्चानुमीयते । यथा पुष्ट्या भोजनमनुमीयते यथा

च भाषया देशः यथा वा संभ्रमेण स्नेहः तथा ज्ञानाकारेण ज्ञेयमनुमेयम् इति । तथा च बाह्यार्थसद्भावे प्रयोगः ये यस्मिन्सत्यपि कादाचित्काः ते सर्वे तदतिरिक्तसापेक्षाः । यथा अविवक्षत्यजिगमिषति मयि वचनगमनप्रतिभासा विवक्षुजिगमिषुपुरुषान्तरसंतानसापेक्षाः । तथा च विवादाध्यासिताः प्रवृत्तिप्रत्ययाः सत्यप्यालयविज्ञाने कदाचिदेव नीलाद्युल्लेखनाः इति । तत्रालयविज्ञानं नामाहमास्पदं विज्ञानम् । अयमेवात्मा । नीलाद्युल्लेखि च प्रवृत्तिविज्ञानम् । ततश्च कादाचित्कत्वनिर्वाहाय शब्दस्पर्शरूपरसगन्धविषयाः सुखादिविषयाः षडपि प्रत्ययाश्चतुरः प्रत्ययान्प्रतीत्योत्पद्यन्ते । ते चत्वारः प्रत्ययाः प्रसिद्धाः आलम्बनसमनन्तरसहकार्यधिपतिरूपाः । एवम् चित्तचैत्तात्मकानां सुखादीनां चत्वारि कारणानि द्रष्टव्यानि । एवम् चित्तचैत्तात्मकः स्कन्धः पञ्चविधः रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकः । तदिदं सर्वं दुःखम् दुःखायतनम् दुःखसाधनं च इति भावयित्वा तन्निरोधोपायं तत्त्वज्ञानं संपादयेत् । तच्च प्राचीनभावनाबलाद्भवति इति परमं रहस्यम् (सर्व० सं० पृ० ३१–४० ) । सूत्रस्यान्तं रहस्यम् पृच्छतां भवन्तश्च सूत्रस्यान्तं पृष्टवन्तः सौत्रान्तिका भवन्तु इति भगवता बुद्धेन अभिधानात् सौत्रान्तिकसंज्ञा संजाता इति। (४) केचन बौद्धाः (वैभाषिकाः) बाह्येषु गन्धादिषु आन्तरेषु च रूपादिषु स्कन्धेषु सत्स्वपि तत्रानास्थामुत्पादयितुं सर्वं शून्यम् इति प्राथमिकान् माध्यमिकान् विनेयानचीकथद्भगवान् । द्वितीयांस्तु योगाचारान् विज्ञानमात्रग्रहाविष्टान् विज्ञानमेवैकं सत् इत्यचीकथत् । तृतीयान् सौत्रान्तिकान् उभयं सत्यम् इत्यास्थितान् विज्ञेयमनुमेयम् इत्यचीकथत् । सेयं विरुद्धा भगवतो भाषा इति वर्णयन्तो वैभाषिकाख्यया ख्याताः इति (सर्व० पृ० ४३ बौद्ध० ) । वैभाषिकमते प्रात्यक्षिकं वस्तु सत् आनुमानिकं त्वसत् इति ज्ञेयम् । वैभाषिका इत्थं मन्यन्ते । अर्थो द्विविधः ग्राह्यः अध्यवसेयश्च । तत्र ग्रहणं निर्विकल्पकरूपं प्रत्यक्षम् प्रमाणम् । कल्पनापोढत्वात् । अध्यवसायस्तु सविकल्पकरूपः अनुमानम् अप्रमाणम् । कल्पनाज्ञानत्वात् । अवशिष्टं सौत्रान्तिकप्रस्तावे प्रपञ्चितम्

इति नेह प्रतन्यते ( सर्व० पृ० ४३–४५ बौद्ध० ) । यद्यपि भगवान् बुद्ध एक एव बोधयिता तथापि बोद्धव्यानां बुद्धिभेदाच्चातुर्विध्यम् । यथा गतोस्तमर्कः इत्युक्ते जारचौरानूचानादयः स्वेष्टानुसारेणाभिसरणपरस्वहरणसदाचरणादिसमयं बुद्ध्यन्ते इति ( सर्व० पृ० १९ बौद्ध० ) । अत्र बौद्धानामष्टादश भेदाः प्रसिद्धाः । उपभेदास्तु बहवो विस्तरभयान्नोदाहृताः ( सि० च० १।१२ ) । विवेकविलासे बौद्धमतमित्थमभ्यधायि । बौद्धानां सुगतो देवो विश्वं च क्षणभङ्गुरम् । आर्यसत्त्वाख्यया तत्त्वचतुष्टयमिदं क्रमात् ॥ दुःखमायतनं चैव ततः समुदयो मतः । मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामतः ॥ दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः । विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥ पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् । धर्मायतनमेतानि द्वादशायतनानि तु ॥ रागादीनां गणोयं स्यात्समुदेति नृणां हृदि । आत्मात्मीयस्वभावाख्यः स स्यात्समुदयः पुनः ॥ क्षणिकाः सर्वसंस्कारा इति या वासना स्थिरा । स मार्ग इति विज्ञेयः स च मोक्षोभिधीयते ॥ प्रत्यक्षमनुमानं च प्रमाणद्वितयं तथा । चतुःप्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः ॥ अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते । सौत्रान्तिकेन प्रत्यक्षग्राह्योर्थो न बहिर्मतः ॥ आकारसहिता बुद्धिर्योगाचारस्य संमता । केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः ॥ रागादिज्ञानसंतानवासनोच्छेदसंभवा । चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता ॥ कृत्तिः कमण्डलुर्मौण्ड्यं चीरं पूर्वाह्णभोजनम् । संघो रक्ताम्बरत्वं च शिश्रिये बौद्धभिक्षुभिः ॥ इति ( सर्व० सं० पृ० ४६–४७ बौद्ध० ) ।

**बौद्धशास्त्रम्**—प्रथमं बृहस्पतिप्रणीतम् ततो बुद्धावतारे प्रपञ्चितं च शास्त्रम् । तच्च शास्त्रं बौद्धः इति शब्दस्यार्थे तत्तन्मतोपन्यासवेलायां संक्षेपतः प्रादर्शि । बौद्धशब्दस्य व्युत्पत्तिस्तु बुद्धेन प्रोक्तं बौद्धम् इति । अत्र कथा श्रूयते मत्स्यपुराणे । आयुषो राज्ञो नहुषवृद्धशर्मरजिदम्भविपाप्मसंज्ञकाः पञ्च पुत्रा आसन् । तत्र रजेः पुत्रशतं जज्ञे । तै रजिपुत्रैर्बलाच्छिन्नयज्ञभागवैभवः शक्रो दीनः सन् स्वेष्टप्राप्तये वाचस्पतिं प्रार्थयामास ।

ततो बृहस्पतिः किं कृतवान् । तदाह गत्वाथ मोहयामास रजिपुत्रान् बृहस्पतिः । जिनधर्मं समास्थाय वेदबाह्यं स वेदवित् ॥ वेदत्रयीपरिभ्रष्टांश्चकार धिषणाधिपः । वेदबाह्यान् परिज्ञाय हेतुवादसमन्वितान् ॥ जघान शक्रो वज्रेण सर्वान् धर्मबहिष्कृतान् ( मत्स्यपु० अ० २४ ) ( वाच० ) इति ।

**ब्रह्म**—१ वेदः । यथा तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ( मु० १।१।९) । यथा वा तेने ब्रह्म हृदा य आदिकवये ( भाग० १।१।१ ) इत्यादौ । २ तपः । ३ सत्यम् । ४ तत्त्वम् । ५ हिरण्यगर्भादयो जीवाः । ६ विप्रः । ७ ऋत्विग्विशेषः । यथा यज्ञस्य हैष भिषक् ब्रह्मा ( श्रुतिः ) इत्यादौ । ८ विष्कम्भादिषु पञ्चविंशो योगविशेषः इति मौहूर्तिका आहुः । ९ विषयभोगत्यागः । स चाष्टादशविधः । तदुक्तम् दिव्यौदरिककामानां कृतानुमतकारितैः । मनोवाक्कायतस्त्यागो ब्रह्माष्टादशधा मतम् ( सर्व० सं० पृ० ६५ आर्ह० ) इति । १० परब्रह्म ( परमात्मा ) इति वेदान्तिनो वदन्ति । अत्राम्नायते । यद्वाचानभ्युदितम् येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ( केन० ४ ) । वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् । ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ ( भाग० १।२।११ ) इति । तस्य नवधा रूपं यथा । तर्काणामेव षण्णां यत् षड्विधं रूपमैश्वरम् । वैष्णवानामेकरूपं वेदानामेकमेव च ॥ पुराणानामेकरूपं तस्मान्नवविधं स्मृतम् । न्यायो निर्वर्णनीयं च यन्मतं शंकरोऽब्रवीत् ॥ नित्यं वैशेषिकास्त्वन्यं वदन्ति च विचक्षणाः । सांख्यो वदति तं देवं ज्योतीरूपं सनातनम् ॥ मीमांसा सर्वरूपं च वेदान्तः सर्वकारणम् । पातञ्जलोऽप्यनन्तं च वेदाः सत्यस्वरूपकम् ॥ स्वेच्छामयं पुराणं च भक्ताश्च नित्यविग्रहम् ( ब्रह्मवै० पु० अ० १०८ ) इति । अत्राधिकं तु परमात्मशब्दव्याख्यानावसरे संपादितं तत्र दृश्यम् । अत्र मध्वमते विष्णुरेव परब्रह्म । स चैक एव सच्चिदानन्दविग्रहः गुणपरिपूर्णः परमार्थतो जगदादिकारणम् सर्वान्तर्यामी स्वतन्त्रश्च इति विज्ञेयम् । रामानुजमते तु शेषशेषिभावाङ्गीकारेण विशेषः ।

परमात्मा शेषी। जीवास्तु परमात्मशरीररूपत्वाच्छेषाः इति। मायावादिमते तु सगुणनिर्गुणभेदेन द्विविधं ब्रह्म। तत्र मायाश्रितः जाग्रदाद्यवस्थात्रयसाक्षी च ईश्वरः सगुणः। मायातीतम् अवस्थात्रयातीतं च निर्गुणम् इति विशेषो ज्ञेयः। ब्रह्मणः तटस्थलक्षणं च जगज्जन्मस्थितिप्रलयानां प्रत्येकमुपादानप्रत्यक्षचिकीर्षाकृतिमत्त्वम् इति। तेन नवलक्षणवत्त्वम्। तदुक्तं ब्रह्मसूत्रकारैः जन्माद्यस्य यतः (ब्र० सू० १।१।२) इति। अत्र श्रुतिः प्रमाणम् यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म (तैत्ति० उप० २।१।१) इति। ब्रह्मणः स्वरूपलक्षणं च सच्चिदानन्दात्मकत्वम् इति। अत्र श्रुतिः सत्यं ज्ञानमनन्तं ब्रह्म (तैत्ति० उ० २।१।१) इति। निर्गुणं निष्कलं शान्तं निरवद्यं निरञ्जनम् (श्वे० ६।१९) इत्यादिश्च।

**ब्रह्मज्ञानम्**—ब्रह्मविषयकतत्त्वज्ञानम्। तच्चारोपज्ञानं न्यायमतसिद्धम् इति केचित्प्रलपन्ति (वाच०)। वयं तु तच्च न्यायमते यथार्थज्ञानमेव इति वदामः। मायावादिनस्तु तत्त्वमसि ब्रह्माहमस्मि इत्यादिमहावाक्यार्थज्ञानानन्तरं मनननिदिध्यासनादिना सर्वात्मकोऽहम् ब्रह्मैवाहमस्मि इति प्रमारूपं प्रत्यक्षम् इति मन्यन्ते। श्रीपूर्णप्रज्ञाचार्यानुयायिनः श्रवणमननादिना पञ्च भेदज्ञानम् विष्णुसर्वोत्तमत्वादिज्ञानानन्तरं भगवत्प्रसादफलं (अहैतुकम्) भगवदपरोक्षज्ञानम् इति प्राहुः। पञ्च भेदास्तु जीवेशयोर्भेदः जडजीवयोर्भेदः जडेश्वरयोर्भेदः जीवयोर्भेदः जडयोर्भेदश्च (परमा श्रुतिः) (सर्व० पृ० १४२ पूर्ण०) इति।

**ब्रह्मतत्त्वम्**—सजातीयविजातीयस्वगतनानात्वशून्यम् (सर्व० सं० पृ० १२८ पूर्णप्र०)।

**ब्राह्मः**—(विवाहः) ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता (याज्ञवल्क्य० अ० १।५८)।

**ब्राह्मणः**—१ अदृष्टविशेषप्रयोज्यब्राह्मणत्वधर्मवान्। यथा जात्या ब्राह्मण इत्यादौ। अत्र ब्राह्मणपदार्थघटकतादृशधर्मे तृतीयान्तार्थस्य जात्यभेदस्यान्वयः। अत्रार्थे व्युत्पत्तिः ब्रह्म वेदम् परब्रह्म वा वेत्त्यधीते वा इति।

ब्राह्मणलक्षणं च विशुद्धमातापितृजन्यत्वम् । अत्र विशुद्धत्वं च षट्कर्माधिकारवत्त्वम् (त० कौ० पृ० २१)। तस्य स्वरूपं यथा जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेन च । एभिर्युक्तो हि यस्तिष्ठेन्नित्यं स द्विज उच्यते ॥ (वह्निपुराणे) (वाच०) इति । वसिष्ठेनोक्तं ब्राह्मणस्वरूपं यथा योगस्तपो दमो दानं सत्यं शौचं दया श्रुतम् । विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम् ॥ इति । ब्राह्मणगुणप्रयुक्तं फलमाह सर्वत्र दान्ताः श्रुतपूर्णकर्णा जितेन्द्रियाः प्राणिवधे निवृत्ताः । प्रतिग्रहे संकुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ इति । तस्य माहात्म्यादि यथा सर्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः । तस्मै दानानि देयानि भक्तिश्रद्धासमन्वितैः ॥ (वाच०) इति । किंच अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् । प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥ (मनु० ९।३१७) इति। अत्र जन्मना ब्राह्मणो गुरुः इति स्मृतिर्ज्ञेया। मनुनाप्युक्तं यथा वैशेष्यात्प्रकृतिश्रैष्ठ्यान्नियमस्य च धारणात् । संस्कारस्य विशेषाच्च वर्णानां ब्राह्मणः प्रभुः ॥ (मनु० अ० १० श्लो० ३) इति । २ मन्त्रेतरवेदभागो ब्राह्मणम् (ऋग्वे० भाष्य० उपो० पृ० २०)। अत्रापस्तम्बः सूत्रयामास मन्त्रब्राह्मणयोर्वेदनामधेयम् इति । जैमिनिरपि तच्चोदकेषु मन्त्राख्या । शेषे ब्राह्मणशब्दः (जैमि० अ० २ पा० १ सू० ३२–३३) इति । तल्लक्षणं तु नैरुक्त्यं यस्य मन्त्रस्य विनियोगः प्रयोजनम् । प्रतिष्ठानं विधिश्चैव ब्राह्मणं तदिहोच्यते ॥ (याज्ञव०) इति (वाच०)। अत्र वात्स्यायनभाष्यम् । त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि विधिवचनानि अर्थवादवचनानि अनुवादवचनानि (वात्स्या० २।१।६१) इति ।

**ब्राह्मम्**—(नक्षत्रम्) रोहिणी (पुरु० चि० पृ० ३५४)।

**ब्रुवणम्**—ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः । यथा शिष्यं धर्मं ब्रूते इत्यादौ ब्रूञोर्थः। अत्र धात्वर्थघटके ज्ञाने शिष्यवृत्तित्वस्य शब्दे च धर्मविषयकत्वस्यान्वयः । तथा च शिष्यवृत्तिज्ञानोद्देश्यकप्रवृत्त्यधीनधर्मविषयकशब्दप्रयोगकर्ता इति बोधः (ग० व्यु० का० २ पृ० ४६)।

## भ.

**भक्तिः**—१ [क] गौणीशब्दवदस्यार्थोनुसंधेयः । यथा ततो भक्त्या दश दिशः सिद्धाः (प्रशस्त० दिङ्निरू० पृ० ८) इत्यादौ । [ख] भक्तिर्नाम लक्षणावृत्तिः (जै० सू० वृ० अ० ३ पा० २ सू० ४३)। इयं भक्तिस्तु गौणत्वम् उपचारश्च इति व्यवह्रियते इति वदन्ति । [ग] प्रकर्षभावाभावः । यथा बिल्वामलकादावणुत्वव्यवहारः समिदिक्षुदण्डादिषु च ह्रस्वत्वव्यवहारो भाक्तः इत्यादौ आमलके यः प्रकर्षभावस्तस्याभावः कुवले । बिल्वे यः प्रकर्षभावस्तस्याभाव आमलके । स च गौणमुख्योभयभागित्वाद्भक्तिपदवाच्यः (वै० उ० ७।१।८)। २ [क] आराध्यत्वप्रकारकं ज्ञानम् (कि० व० पृ० ४) (म० प्र० १ पृ० १६) (श० प्र० श्लो० ७२ टी० पृ० ९५) (त० प्र० १ पृ० ६) (सि० च०) । यथा भक्त्या हरिमुपास्ते इत्यादौ । यथा वा भक्तिर्ज्ञानाय कल्पते इत्यादौ । [ख] निरतिशयानन्दप्रियानन्यप्रयोजनसकलेतरवैतृष्ण्यवज्ज्ञानविशेषो भक्तिः इति रामानुजीया आहुः (सर्व० पृ० १२३ रामा०) । परे तु सा परानुरक्तिरीश्वरे (शाण्डि० सू० १।१) । यथा रसꣳ ह्येवायं लब्ध्वानन्दी भवति (तैत्ति० उ० २।७।१) इत्यादौ रसो भक्तिः । यथा वा ब्रह्मसंस्थोमृतत्वमेति (छान्दो० २।२३।१) इत्यादौ संस्थापदवाच्या भक्तिः इत्याहुः (शाण्डि० सू० टी० २।२) । अत्र रसशब्दवाच्यं संस्थाशब्दवाच्यं च भगवदपरोक्षज्ञानमेव इति वयं जानीमः । भक्तेर्लक्षणं च आराध्यविषयकरागित्वम् । भक्ते रागरूपत्वे प्रयोगः भक्तिर्भजनीयगोचररागरूपा तदनुवर्तनादिहेतुहितसाधनताधीभिन्नात्मविशेषगुणत्वात् यन्नैवम् तन्नैवम् यथा द्वेषः इति (शाण्डि० टी०) । अत्र वल्लभीया वदन्ति । इयं भक्तिर्द्विविधा साधनीभूता फलीभूता च । तत्र साधनभूता भक्तिर्ज्ञानाय कल्पते वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं च यदहैतुकम् ॥ इत्यादौ । फलभूता तु स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे । अहैतुक्यव्यवहिता ययात्मा संप्रसीदति ॥

( भा० १।२।६–७ ) ब्रह्मसंस्थोमृतत्वमेति इत्यादौ इति । सुखानुशयी रागः ( पात० सू० २।७ ) भक्तिः इति शाण्डिल्यसूत्रटीकाकृत आहुः । जीवोपाध्यनवच्छिन्नचेतनविषयिण्यनुरक्तिरेव भक्तिः इत्यप्यन्य आहुः (शाण्डि० सू० टी० ) । माहात्म्यज्ञानपूर्वः सुदृढः स्नेहो भक्तिः इति पञ्चरात्रागमकुशला आहुः । इयं भक्तिस्त्रिविधा । सा ( उत्तमा ) भक्तिः साधनं भावः प्रेमा चेति त्रिधोदिता इति । तत्र साधनभक्तिर्यथा कृतिसाध्या भवेत्साध्यभावा सा साधनाभिधा । नित्यसिद्धस्य भावस्य प्राकट्यं हृदि साध्यता ॥ इति । भावभक्तिर्यथा शुद्धसत्त्वविशेषात्मा प्रेमा सूर्यांशुसाम्यभाक् । रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते ॥ इति । प्रेमभक्तिर्यथा सम्यङ्मसृणितस्वान्तो ममतातिशयाङ्कितः । भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते ॥ इति ( भक्तिरसामृतसिन्धौ पूर्वभागः ) । अत्रोच्यते अनन्यसमता विष्णौ ममता प्रेमसंगता । भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैः ॥ इति नारदपञ्चरात्रे । भक्तिरपि ब्रह्मविद्यायामधिकारे उपयुज्यते । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ( कठोप० २।२२ ) ( मध्वभा० १।१।१ उपोद्घा० ) इति । ३ रचना । यथा भवति विरलभक्तिर्म्लानपुष्पोपहारः ( रघु० स० ५ श्लो० ७४ ) इत्यादौ । ४ भागः इति काव्यज्ञा आहुः । ५ विभागः इति व्यवहारज्ञा वदन्ति । ६ भङ्गी इत्यालंकारिका आहुः ।

भक्ष—( धातुः ) कठिनद्रव्यस्य गलाधःसंयोगानुकूलव्यापारः । यथा भक्षयत्यन्नमित्यादौ धात्वर्थो भक्षणम् ।

भक्षः—१ इष्टद्रव्यसंस्कारो हि भक्षः ( जै० न्या० अ० ३ पा० ५ अधि० १९ ) । २ भक्षणकर्म । यथा वषट्कर्तुः प्रथमभक्षः ( श्रुतिः ) इत्यादौ ( वाच० ) ।

भज—( धातुः ) प्रीत्यनुकूलो व्यापारः । यथा हरिं भजतीत्यादौ भजेरर्थः । अत्र हरिरूपं यत् कर्म तन्निष्ठशक्तिनिरूपकप्रीत्यनुकूलो व्यापारः इति बोधः । अत्र हरिरूपप्रकृत्यर्थनिष्ठशक्तिनिरूपकत्वं ( विभक्त्यर्थः ) धात्वर्थप्रीतौ संसर्गतयान्वेति ( ल० म० सुबर्थ० पृ० ८६ ) ।

**भजनम्**—भजनं दशविधम् वाचा सत्यं हितं प्रियं स्वाध्यायः कायेन दानं परित्राणं परिरक्षणं मनसा दया स्पृहा श्रद्धा चेति । अत्रैकैकं निष्पाद्य नारायणे समर्पणं भजनम् ( सर्व० सं० पृ० १३८ पूर्णप्र० ) ।

**भट्टः**—१ [ क ] वेदाभिज्ञः पण्डितः । [ ख ] चतुःशास्त्रज्ञः इति मालतीमाधवटीकाकार आह । [ ग ] मेधावी कृतविद्यः । यथा तुतातार्ख्यो मीमांसकविशेषः । कुमारिलार्ख्यो मीमांसकः इत्यपि मीमांसकानुयायिन आहुः । तुतातकुमारिलाभ्यां भट्ट इत्युपनाम विद्ययार्जितम् इति विज्ञेयम् । भट्टमतं तु मीमांसावार्तिके मीमांसान्यायप्रकाशे भाट्टदीपिकादौ च द्रष्टव्यम् । कुमारिलस्याख्यायिका नारायणपण्डिताचार्यैर्मणिमञ्जर्यां ( ५–६ सर्गे ) प्रतिपादिता तत्र दृश्या । २ क्षत्रियाद्विप्रकन्यायां भट्टो जातोनुवाचकः ( ब्रह्मवै० पु० ) इति पौराणिका आहुः ।

**भट्टाचार्यः**—तुतातभट्ट उदयनाचार्यश्च । अत्र विग्रहः भट्टश्च आचार्यश्च भट्टाचार्यः इति । अत्रोच्यते नास्तिकानां निग्रहाय भट्टाचार्यौ भविष्यतः इति ( वाच० ) । तत्रोदयनाचार्यस्तु न्यायतर्कग्रन्थेषु आचार्य इति व्यवह्रियते । स च किरणावलीकुसुमाञ्जलिप्रभृतिग्रन्थद्वारेण परमात्मास्तित्वं प्रदर्श्य नास्तिकानजयत् इति सुप्रसिद्धम् ।

**भद्रा**—( सप्तमी ) शुक्लपक्षे तु सप्तम्यां नक्षत्रं सवितुर्भवेत् । आद्ये पादे तु देवेन्द्र तदा सा भद्रतां व्रजेत् ॥ ( पु० चि० पृ० १०५ ) ।

**भयम्**—१ ( दोषः ) [ क ] अनिष्टहेतूपनिपाते तत्परित्यागानर्हताज्ञानम् ( गौ० वृ० ४।१।३ ) । [ ख ] अनिष्टविषयसाधनोपनिपाते तज्जिहासोर्हानाशक्यता भयम् ( न्या० वा० ) । [ ग ] परतोनिष्टसंभावना । यथा व्याघ्राद्बिभेतीत्यादौ बिभेत्यर्थः । अत्र भीत्रार्थानां भयहेतुः ( पा० सू० १।४।२५ ) इत्यनेनापादानसंज्ञा । तदर्थश्च भयार्थकधातुयोगे भयहेतुत्वेन संभावितमपादानम् इति । तथा च व्याघ्राद्बिभेतीत्यादौ प्रयोज्यत्वप्रकारकत्वं पञ्चम्यर्थः । तस्यानिष्टसंभावनायामन्वयः । संभावितम् इत्युक्त्या शत्रुभ्रमेण मित्रादपि बिभेति इति वाक्यस्यापि प्रामाण्य-

निर्वाहः ( ग० व्यु० का० ५ पृ० १०६ )। अत्र शाब्दिका वदन्ति । भीत्रार्थानां भयहेतुः इति सूत्रस्थस्य भयहेतुः इत्यस्य भयपदार्थैकदेशानिष्टहेतुः इत्यर्थः । यजन्यं भयमेव न प्रसिद्धम् तत्र पञ्चमी न भवत्येव । तत्र पञ्चम्याः इष्टत्वे तु हेतुत्वारोपेण सा पञ्चमी ( ल० म० सुब० कार० ५ पृ० १०९ ) इति । [ घ ] भावित्वेन स्वानिष्टचिन्तनम् । यथा व्याघ्राद्बिभेति त्रस्यतीत्यादौ धात्वर्थः । हेतुत्वं जन्यत्वं वा पञ्चम्यर्थः । तच्च धात्वर्थैकदेशे अनिष्टे चिन्तन एव वान्वितम् । तथा च व्याघ्रहेतुकस्य स्वानिष्टस्य भावित्वेन चिन्तनवान् इति व्याघ्रहेतुकत्वेन भाव्यनिष्टधर्मिकचिन्तनवान् इति वा तत्र बोधः ( श० प्र० श्लो० ६८ टी० पृ० ८० ) । [ ङ ] शाब्दिकास्तु अनिष्टज्ञानम् । यथा चोराद्बिभेतीत्यादौ धात्वर्थो भयम् इत्याहुः । अत्र चोरापादानकानिष्टज्ञानम् इति बोधः ( ल० म० सुब० का० ५ पृ० १०९ ) । २ भयस्थायिभावको रसविशेषः इति रसशास्त्रज्ञा आहुः । अत्रोच्यते रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम् ( सा० द० परि० ३ श्लो० १७८ ) इति । वैक्लव्यमस्थिरत्वम् । ३ निर्ऋतिपुत्रविशेषः इति पौराणिका आहुः ( भा० आ० अ० ६६ ) ।

**भवनम्**—१ उत्पत्तिः कालस्य वस्तुना संबन्धविशेषो वा । यथा घटो भवतीत्यादौ भूधात्वर्थो भवनम् । वैयाकरणास्तु उत्पत्त्यनुकूलो व्यापारः । यथा घटो भवतीत्यादौ भूधातोरर्थः इत्याहुः ( वै० सा० द० ) ( वाच० ) । २ मन्दिरम् इति काव्यज्ञा आहुः ।

**भविष्यत्**—१ ( कालः ) यत्प्रागभावेन यः कालोवच्छिद्यते स तस्य भविष्यत्कालः ( वै० उ० २।२।८ ) । यथा घट उत्पत्स्यत इत्यादौ घटप्रागभावेन यः कालोवच्छिन्नः ( विशिष्टः ) स घटस्य भविष्यत्कालः । तर्ककौमुद्यां तु तद्व्यक्तिप्रागभावविशिष्टः कालस्तद्व्यक्तेरनागतकालः इत्युक्तम् । अन्यत्र चोक्तम् वर्तमानप्रागभावप्रतियोग्यवच्छिन्नकालः इति । अत्रायं विशेषः कालस्य संबन्धमात्रत्वमते अवच्छिन्न इति न देयम् ( प० मा० कालनि० पृ० ९२ ) । भविष्यत्वं च [ क ] वर्तमानकालवृत्तिप्राग-

भावप्रतियोगित्वम्। यथा अनागतः कालः इत्यादौ कालस्य भविष्यत्त्वम् (वाक्य० १ पृ० ६) (नील० १ काल० पृ० १०)। [ख] आद्यकृतिप्रागभावः (न्या० म० ४ पृ० २०)। [ग] वर्तमानप्रागभावः। यथा पक्ष्यतीत्यादौ लृडर्थः। अत्र लृडर्थस्य तादृशप्रागभावस्य तदर्थकृतौ प्रतियोगितासंबन्धेनान्वयः। प्रागभावानङ्गीकारे तु वर्तमानध्वंस एव लृडर्थः (ग० व्यु० ल० पृ० १३६)। [घ] वर्तमानप्रागभावप्रतियोगित्वम्। यथा घटो भविष्यतीत्यादौ धात्वर्थोत्पत्तेर्भविष्यत्त्वम्। पक्ष्यतीत्यादौ चाख्यातार्थकृतेर्भविष्यत्त्वम् (त० प्र० ख० ४ पृ० ८२) (ल० म० लकार०)। [ङ] विद्यमानप्रागभावप्रतियोग्युत्पत्तिकत्वम् (तर्का० ख० ४) (दीधि० २)। यथा नङ्क्ष्यतीत्यादौ लृडर्थः (त० प्र० ख० ४ पृ० ८३) (ग० व्यु० ल० पृ० १३५)। यथा वा आगमिष्यतीत्यादौ लृटोर्थः। अत्र विद्यमानप्रागभावप्रतियोग्युत्पत्तिकागमनानुकूलकृतिमान् इत्यर्थो बोध्यते (तर्का० ख० ४ पृ० ११)। [च] वर्तमानकालोत्तरकालोत्पत्तिकत्वम् (त० प्र० २) (दीधि० २)। यथा ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः। अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्॥ (रघु० स० १० श्लो० ६) इत्यादौ। [छ] वर्तमानध्वंसः। यथा पक्ष्यतीत्यादौ लृडर्थः। अयं च प्रागभावानङ्गीकारपक्षेपि संगच्छते इति विज्ञेयम् (ग० व्यु० ल० पृ० १३६)। २ पौराणिकास्तु महापुराणान्तर्गतपुराणविशेषः। यथा भविष्यत्पुराणमित्यादौ इत्याहुः (नारदीय० पु० पा० ४ अ० १००)।

**भाक्तः**—१ लाक्षणिकः शब्दः। गौण इत्यर्थः। यथा सिंहो माणवक इत्यादौ सिंहशब्दः। अत्र सिंहपदस्य सिंहसदृशे लक्षणा। सादृश्यं च शौर्यादिना इति नैयायिका आहुः। तथा च सिंहवृत्तिगुणसदृशगुणवान्माणवकः इति शाब्दबोधः। शाब्दिकास्तु सिंहपदस्य सिंह एवार्थः। माणवके च सिंहवृत्तिशौर्यक्रौर्यादयो गुणा आरोप्यन्ते इत्याहुः। तथा चैतन्मते सिंहवृत्त्यारोपितगुणवान्माणवकः इति बोधः। २ गौण्या वृत्त्या

बोधितोर्थः ( औपचारिकः ) । ३ भक्तमन्नम् तत्संबन्धि भाक्तम् इति काव्यज्ञा आहुः ।

**भागः**—१ पक्षतावच्छेदकाश्रयो यः कश्चन पक्षैकदेशः । यथा भागासिद्धिरित्यादौ । २ स्वत्वाश्रयः ( धनम् ) । यो मां प्रति स्यात् इत्यादौ । अत्र भागः ( स्वत्वाश्रयः ) प्रत्याद्यर्थः । तदन्वयी संबन्धो द्वितीयार्थः । इत्थं च अस्मत्संबन्धी यो भागः स्यात् इति बोधः ( ग० व्यु० का० २ ख० २ पृ० ७६ ) । ३ एकदेशः । ४ त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते इति ज्योतिषज्ञा आहुः । ५ पूर्वाफल्गुनीनक्षत्रम् इति मौहूर्तिका आहुः । ६ एकादशसंख्या इति गणका आहुः ।

**भागवतम्**—१ मोक्षप्रदश्रीभगवज्ज्ञानभक्तिवैराग्यप्रतिपादको महापुराणविशेषः । यथा येन श्रुतं भागवतं पुराणम् ( भाग० ) पिबत भागवतं रसमालयम् ( भाग० १।१।३ ) इत्यादौ । तथोक्तं श्रीमद्भागवते धर्मः प्रोज्झितकैतवोत्र परमो निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् । श्रीमद्भागवते महामुनिकृते किंवा परैरीश्वरः सद्यो हृद्यवरुध्यतेत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ ( भाग० १।१।२ ) इति । अत्रोच्यते । मरीचे शृणु वक्ष्यामि वेदव्यासेन यत्कृतम् । श्रीमद्भागवतं नाम पुराणं ब्रह्मसंमितम् ॥ तदष्टादशसाहस्रं कीर्तितं पापनाशनम् । सुरपादपरूपोयं स्कन्धैर्द्वादशभिर्युतः ॥ भगवानेव विप्रेन्द्र विश्वरूपी समीरितः ( नारदीयपु० ४ अ० ९६ ) इति । तेन श्रीमद्भागवतं बोपदेवकृतम् इति केषांचित्तामसानां प्रलापो निरस्तः । बोपदेवकृतं तु देवीभागवतमेव इति तु वयं तत्त्वतो जानीमः । २ भगवद्भक्तः पुरुषः । यथा यत्र ह वा वीरव्रत औत्तानपादिः ध्रुवः परमभागवतः ( भाग० स्क० ५ अ० १७ गद्यम् २ ) इत्यादौ । तत्स्वरूपमुक्तं यथा सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥ ( भाग० स्कन्ध० ११ अ० २ श्लो० ४५ ) इति । येन सर्वात्मना विष्णुभक्त्या भावो निवेशितः । वैष्णवेषु कृतात्मत्वान्महाभागवतो हि सः ॥ ( गारुडे० ) इति ।

**भागासिद्धिः**—( स्वरूपासिद्धिः ) पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभावः । यथा पृथिवी गन्धवती घटत्वादित्यादौ पृथिवीत्वसामानाधिकरण्येन पटादौ घटत्वाद्यभावः ( ग० बाध० ) । यथा वा पृथिव्यादयश्चत्वारः परमाणवः अनित्याः गन्धवत्त्वादिति । अत्र गन्धवत्त्वं हेतुः पक्षीकृतेषु सर्वेषु नास्ति । पृथिवीमात्रवृत्तित्वात् । अत एव भागे स्वरूपासिद्धत्वम् ( त० भा० हेत्वा० पृ० ४५ ) । तस्या उदाहरणान्तरं यथा घटशब्दावभिधेयौ मूर्तत्वात् ( प्र० च० पृ० २४ ) इति ।

**भाग्यम्**—पूर्वाफल्गुनी ( पु० चि० पृ० ३५३ ) ।

**भाणः**—( रूपकम् ) दृश्यकाव्यविशेषः । यथा मुकुन्दानन्दभाणः पञ्चायुधप्रपञ्चभाणः इत्यादिः । तल्लक्षणं च भाणः स्याद्धूर्तचरितो नानावस्थान्तरात्मकः । एकाङ्क एक एवात्र निपुणः पण्डितो विटः ॥ ( सा० द० परि० ६ श्लो० ५१३ ) इत्यादि । अहोरात्रं विटानां च चरितं भाण इष्यते ( मुकु० भा० टी० ) इति च ।

**भानम्**—१ विषयतावदस्यार्थोनुसंधेयः ( दि० १।२ ) । यथा उपनीतभानमित्यादौ । २ ज्ञानम् । ३ प्रकाशः । ४ दीप्तिः ।

**भारतम्**—१ जम्बूद्वीपसंबन्धी वर्षविशेषः । अत्रोच्यते हिमाह्वं दक्षिणं वर्षं भरणाय ददौ पिता । तस्माच्च भारत वर्षम् ( वाच० ) इति । २ भरतनृपस्य वंश्यः इति पौराणिका आहुः । ३ अग्निविशेषः इति याजका आहुः । ४ भरतमुनिकृतं नाट्यशास्त्रम् इति साहित्यशास्त्रज्ञा आहुः । ५ सत्यवतीसुतव्यासप्रणीतः ग्रन्थविशेषः । एतस्य महाभारतम् इति संज्ञा । तथाहि । चत्वारश्चैकतो वेदा भारतं चैतदेकतः । पुरा किल सुरैः सर्वैः समेत्य तुलया धृतम् ॥ चतुर्भ्यः सरहस्येभ्यो वेदेभ्योभ्यधिकं यदा । तदाप्रभृति लोकेस्मिन्महाभारतमुच्यते ॥ महत्त्वे च गुरुत्वे च ध्रियमाणं यतोधिकम् । महत्त्वाद्भारतत्वाच्च ( भारवत्त्वाच्च ) महाभारतमुच्यते ॥ ( भार० आ० अ० १ ) इति । अयं च ग्रन्थो लक्षश्लोकात्मक इति वदन्ति । तत्र यत्संख्यको ग्रन्थ एतावता कालेनोपलब्धस्तत्संख्या प्रदर्श्यते ।

| पर्व. | अध्यायाः | ग्रन्थसंख्या. | अवान्तरपर्वाणि. |
|---|---|---|---|
| १ आदिपर्व | २२७ | ८८८४ | १८ |
| २ सभापर्व | ७८ | २५११ | ९ |
| ३ वनपर्व | २६९ | ११६६४ | १६ |
| ४ विराटपर्व | ६७ | २०५० | ४ |
| ५ उद्योगपर्व | १८६ | ६६९८ | ११ |
| ६ भीष्मपर्व | ११७ | ५८८४ | ५ |
| ७ द्रोणपर्व | १७० | ८९०९ | ८ |
| ८ कर्णपर्व | ६९ | ४९६४ | १ |
| ९ शल्यपर्व | ५९ | ३२०० | ४ |
| १० सौप्तिकपर्व | १८ | ८७० | ३ |
| ११ स्त्रीपर्व | २७ | ७७५ | ५ |
| १२ शान्तिपर्व | ३२९ | १४७३२ | ४ |
| १३ अनुशासनपर्व | १४६ | ८००० | २ |
| १४ आश्विमेधिकपर्व | १०३ | ३३२० | १ |
| १५ आश्रमवासिपर्व | ४२ | १५०६ | ३ |
| १६ मौसलपर्व | ८ | ३२० | १ |
| १७ महाप्रस्थानिकपर्व | ३ | ३२० | १ |
| १८ स्वर्गपर्व | ५ | २०९ | १ |
| | १९२३ | ८४८१६ | ९७ |
| १९ हरिवंशः | | २५००० | ३ |

एतावानेवेदानींतनकालपर्यन्तं प्राप्तो ग्रन्थः । लक्षसंख्यको ग्रन्थस्तु न प्राप्तः । उपलब्धेप्येतावति ग्रन्थे बहवः केचनाध्यायाः प्रक्षिप्ताः सन्ति न तु ते भारतकृता निर्मिताः इति विज्ञेयम् ।

भावः—१ अन्यनिगूढेच्छा ( प्रशस्त० २ पृ० ३३ ) । २ सत्ता ( सामान्यम् ) । यथा द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः ( वै०

७।२।२७) इत्यादौ । ३ द्रव्यादिषट्कम् (मु० १ पृ० १९)। तल्लक्षणं च भावत्वमेव । तच्चात्र समवाय एकार्थसमवाय एतदन्यतरसंबन्धेन सत्तावत्त्वम् (दि० १ पदार्थनि० पृ० २०)। अत्र समवायस्य स्वरूपेण स्वसंबद्धत्वाङ्गीकारेण समवायस्य समवायेनान्यत्रावृत्तावपि समवाये नाव्याप्तिः इति ज्ञेयम् (राम० १ पृ० २०)। अथवा समवाय सामानाधिकरण्य एतदन्यतरसंबन्धेन सत्तावत्त्वम् (दि० १ अभावनि० पृ० ४१)। ४ नव्यास्तु इतराविशेषणतया क्रियाबोधपरत्वम् । यथा कृष्णेन स्थीयते इत्यादौ आत्मनेपदविधायके भावकर्मणोः (पा० सू० १।३।१३) इति पाणिनिसूत्रे भावपदार्थ इत्याहुः (ग० व्यु० आख्यातार्थनि० पृ० १२९)। ५ धातुवाच्या क्रिया । यथा भावप्रधानमाख्यातम् (यास्कनिरुक्तम्) इत्यादौ । यास्केन साध्यरूपाया भावत्वमुक्तं यथा तद्यत्रोभे भावप्रधाने भवतः पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम् इत्यादि । अत्रायं भावः । शाब्दिकमते शाब्दबोधस्य धात्वर्थमुख्यविशेष्यकत्वस्वीकारेण भावस्य प्राधान्यं युज्यते। नैयायिकमते तु प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधाङ्गीकारेण तन्मते भावना भावशब्दार्थः । इयमेव कृतिः । तथा च भावप्रधानमाख्यातमित्यत्र भावः प्रधानं धात्वर्थे इति विग्रहं वर्णयन्ति । ६ सिद्धावस्थापन्नो धात्वर्थो भाव इति वैयाकरणा आहुः । ७ उत्पत्त्यादिरूपषड्भावविकारयुक्तः पदार्थ इति यास्क आह । अत्रोच्यते । षड्भावविकारा भवन्तीति वार्ष्यायणिः । जायते अस्ति विपरिणमते वर्धते अपक्षीयते विनश्यति इति । तत्र (१) जायते इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति । (२) अस्ति इत्युत्पन्नस्य सत्त्वस्यावधारणम् । (३) विपरिणमते इत्यप्रच्यवमानस्य तत्त्वाद्विकारम् । (४) वर्धते इति स्वाङ्गाभ्युच्चयम् सांयौगिकानां वार्थानाम् वर्धते विजयेनेति वा वर्धते शरीरेणेति वा । (५) अपक्षीयते इत्येतेनैव व्याख्यातः प्रतिलोमम् । (६) विनश्यति इत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति (निरुक्त०) इति । ८ धर्मादयोऽष्टौ भावाः इति सांख्या आहुः । धर्मादयस्तु भावैरधिवासितं लिङ्गम् (सांख्यकारि० ४०)

इत्यादौ धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि भावाः ( सांख्य० कौ० का० ४०–४५ ) इत्युक्ताः । ९ प्रकृतिजन्यबोधे प्रकारः असाधारणधर्मः भावः । यथा घटस्य भावो घटत्वम् इत्यादौ इति सर्वशास्त्रकारा आहुः । अत्रायं विशेषो ज्ञेयः । प्रकृतिजन्यबोधे येन संबन्धेन तत्प्रतिपाद्यतावच्छेदकधर्मस्य प्रकारता तेन संबन्धेन तदितरावृत्तित्वे सति तद्वृत्तिर्धर्मः इति ( भवानन्दी० ) । अत्र तस्य भावस्त्वतलौ (पा० सू० ५।१।११९) इति सूत्रेण भाववाचकस्त्वप्रत्ययो विहितः इति ज्ञेयम् । १० वासना संस्कारश्च इति मीमांसकाः प्रवदन्ति । ११ चेतनमचेतनम् इति द्विविधभेदयुतः अस्वतन्त्रतत्त्वविशेषो भावः इति मध्वाचार्याः प्राहुः । १२ भक्तिरपीति सर्वे वेदान्तिनो वदन्ति । १३ हृद्गतावस्थावेदको मानसविकारो भावः । स च निर्वेदादिर्व्यभिचारिभावस्त्रयस्त्रिंशद्विधः रत्यादिः स्थायी भावश्च नवविध इति रसिका आहुः । तदुक्तम् विभावेनानुभावेन व्यक्तः संचारिणा तथा । रसतामेति रत्यादिः स्थायी भावः सचेतसाम् ॥ ( सा० द० परि० ३ श्लो० १ ) इति । १४ नाट्योक्तनानापदार्थचिन्तकः पण्डितः इति नाटकज्ञा ब्रुवते । १५ संगीतसंगतपदार्थद्योतकहस्तचेष्टाविशेषो भावः इत्यभिनयकलाज्ञा नर्तकाश्च संगिरन्ते । १६ अभिप्रायोपीति काव्यज्ञा संजगदिरे । १७ अलंकारविशेषः इत्यालंकारिका आहुः । स्त्रीणां यौवनकाले सत्त्वभवाष्टाविंशत्यलंकारान्तर्गतोङ्गजः प्रथमालंकारोयम् । तथा चोक्तम् निर्विकारात्मके चित्ते भावः प्रथमविक्रिया इति । १८ जन्म इति पौराणिकाः संवदन्ते । १९ लग्नादितस्तन्वादिर्द्वादशविधो भावः इति मौहूर्तिका आहुः । २० ग्रहाणां द्वादशविधचेष्टाविशेषः इति ज्योतिर्विद आहुः । २१ दिव्यवीरपशुभेदेन त्रिविधो भावः इति तन्त्रज्ञा आहुः । २२ मध्वमतानुयायिवेदान्तिनस्तु प्रथमप्रतीतौ यः अस्ति इति प्रतीतिविषयः स भाव इत्याहुः ( प्र० च० परि० २ पृ० ४८ ) ।

**भावना**— १ ( गुणः ) [ क ] अनुभवजन्यः स्मृतिहेतुर्गुणविशेषः ( त० सं० ४ ) । स तु संस्कारप्रभेदः जीवमात्रवृत्तिः अतीन्द्रियश्चेति

बोध्यम् ( भा० प० ) ( त० सं० ) । अत्र भाष्यम् । भावनासंज्ञकस्त्वात्मगुणः दृष्टश्रुतानुभूतेष्वर्थेषु स्मृतिप्रत्यभिज्ञानहेतुः ज्ञानमददुःखादिविरोधी पटु अभ्यास आदर एतत्रिविधप्रत्ययजः । तत्र पटुप्रत्ययजो यथा पटुप्रत्ययापेक्षादात्ममनसोः संयोगादाश्चर्येर्थे पटुः संस्कारो जायते । यथा दाक्षिणात्यस्योष्ट्रदर्शनात् । अभ्यासप्रत्ययजो यथा शिल्पविद्याक्रियाव्यायामादिष्वभ्यस्यमानेषु तस्मिन्नेवार्थे पूर्वपूर्वसंस्कारमपेक्षमाणादुत्तरोत्तरस्मात् प्रत्ययादात्ममनसोः संयोगात् संस्कारातिशयो जायते । आदरप्रत्ययजो यथा प्रयत्नेन मनश्चक्षुषि स्थापयित्वा अपूर्वमर्थं दिदृक्षमाणस्य विद्युत्संपातदर्शनवदादरप्रत्ययः उत्पद्यते । तमपेक्षमाणादात्ममनसोः संयोगात्संस्कारातिशयो जायते । यथा देवह्रदे सौवर्णराजतपद्मदर्शनात् (प्रशस्त० २ पृ० ३४) इति। अत्रेदं बोध्यम् । उपेक्षानात्मकेन निश्चयेन ( अनुभवेन ) यः संस्कारो जायते स एवोद्बुद्धः स्मृतिजनकः । उपेक्षात्मकनिश्चयजन्यस्तु न स्मृतिं जनयतीति । संस्कारोयमपि सविषयकः । संस्कारश्चान्त्यस्मृत्युत्पादनेन रोगेण कालविशेषेण वा नश्यति । केचित्तु समानविषयस्मृत्या स नश्यति इत्याहुः ( त० व० पृ० २३१ ) ( मु० स्मृतिनि० पृ० १९० ) । [ ख ] पूर्वानुभूतवस्तुनः स्मृतिहेतुः संस्कारः ( त० प्र० ) ( त० कौ० ) । [ ग ] ज्ञानजः संस्कारः । २ कृत्यपरनामा प्रयत्नः ( त० प्र० ख० ४ पृ० ८१ ) । यथा चैत्रस्तण्डुलं पचतीत्यादावाख्यातार्थः प्रयत्नो भावना । अत्रायं नियमः भावनान्वयिन्येव संख्याया अन्वयः इति । तेन कृष्णेन स्थीयते इत्यादौ भावनाया अनन्वयेन संख्याया अप्यनन्वयेपि न क्षतिः इत्यवधेयम् ( त० प्र० ख० ४ पृ० ८१ ) । ३ शाब्दिकास्तु धातुवाच्यो व्यापारो भावना । यथा पचतीत्यादावधःसंतापनादिरूपव्यापार इत्याहुः । पचति पाकमुत्पादयति इत्यस्य पाकानुकूला भावना तादृश्युत्पादना इति विवरणात् विव्रियमाणस्यापि तद्वाचकता इति भावः । अत्राधःसंतापनत्वफूत्कारत्वचुल्ल्युपरिधारणत्वयत्नत्वादिभिर्बोधः सर्वसिद्धः । अत्रोक्तं भर्तृहरिणा व्यापारो भावना सैवोत्पादना सैव च क्रिया । कृञोकर्मकतापत्तेर्न हि यत्नोर्थ इष्यते ॥ ( वै० सा० धात्व० पृ० ५०—५१ ) इति ।

४ मीमांसकास्तु भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः । यथा यजेतेत्यादौ लिङाद्याख्यातार्थो भावनेत्याहुः ( लौ० भा० ) । अत्रायं विशेषो ज्ञेयः । भट्टमते शाब्दी भावना आर्थी भावना चेति भेदेन द्विविधा भावना । तत्रान्त्यायां भावनायां भाव्यजनकत्वम् । भाव्यत्वं चेष्टत्वम् इति विज्ञेयम् ( त० प्र० ख० ४ पृ० ९४ ) । ५ पौराणिकास्तु मानसज्ञानविशेषो भावना ( चिन्ता० ) । सा च त्रिविधा भावना विप्र विश्वमेतन्निबोधत । ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका ॥ ( विष्णुपु० अं० ६ अ० ७ ) इत्याहुः । ६ बौद्धमते भावनाचतुष्टयम् । तच्च बौद्धशब्दे दृश्यम् । ७ भिषजस्तु निर्यासादिना चूर्णद्रव्यस्य मिश्रीकरणे चूर्णद्रव्यस्य निर्यासादिना संस्कारविशेषः ( औषधसंस्कारविशेषः ) भावना इत्याहुः । तत्प्रमाणमुक्तं भावप्रकाशे यथा द्रवेण यावन्मानेन चूर्णं सर्वं प्लुतं भवेत् । भावनायाः प्रमाणं तु चूर्णे प्रोक्तं भिषग्वरैः ॥ ( वाच० ) इति ।

**भावनापञ्चकम्**—हास्यलोभभयक्रोधप्रत्याख्यानैर्निरन्तरम् । आलोच्य भाषणेनापि भावयेत्सूनृतं व्रतम् ॥ ( सर्व० सं० पृ० ६६ आर्ह० ) ।

**भावित्वम्**—१ भविष्यत्त्वम् । २ भावविशिष्टत्वम् ।

**भाव्यम्**—भाव्यं च द्विविधम् ईश्वरस्तत्त्वानि च ( सर्व० सं० पृ० ३५६ पातञ्ज० ) ।

**भाषणम्**—यत्किंचिज्ज्ञानानुकूलशब्दप्रयोगः । अत्रायं नियमः साधु भाषितव्यम् नापभ्रंशितवै न म्लेच्छितवै इति श्रुतिः । खरादिशब्दास्तु रासभादौ म्लेच्छैरिवार्यैरपि संकेतिताः इति तत्प्रयोगे न दोषः ( श० प्र० श्लो० २२ टी० पृ० २६ ) । न म्लेच्छितवै इत्यस्य म्लेच्छमात्रसंकेतितानां शब्दानां प्रयोगो न कार्य इत्यर्थः ।

**भाषा**—१ तत्तद्देशस्थजनवर्तननिर्वाहकं वाक्यम् । यथा संस्कृतभाषा । अथ भाषाविभागः (१) संस्कृता (२) सौरसेनी (३) महाराष्ट्री (४) मागधी (५) अर्धमागधी (६) प्राच्या (७) अवन्तिका (८) दाक्षिणात्या (९) शाकारी (१०) बाह्लीका (११) द्राविडी

(१२) आभीरी (१३) चाण्डाली (१४) शाबरी (१५) पैशाची (१६) शौरसेनिका (१७) प्राकृता (१८) एतदन्या तत्तद्देशभाषा चेति (सा० द० परि० ६ श्लो० १५८–१६०.) । तत्तद्भाषालक्षणानि च भाषार्णवे द्रष्टव्यानि । पात्रवर्णादिभेदेन भाषाप्रयोगस्तु साहित्यदर्पणे षष्ठे परिच्छेदे प्रतिपादितः स तत्रैव द्रष्टव्यः । तत्र संस्कृता सर्वदेशभाषाणां मूलभूता । २ व्यवहारशास्त्रज्ञास्तु प्रतिज्ञासूचकं वाक्यं भाषा इत्याहुः । मिताक्षरायां विज्ञानेश्वरेण भाषालक्षणमुक्तम् । यथा अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् । साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥ प्रसिद्धमविरुद्धं च निश्चितं साधने क्षमम् । संक्षिप्तं निखिलार्थं च देशकालाविरोधि च ॥ वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत् । स्थानावसथसाध्याख्याजात्याकारवयोयुतम् ॥ साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनामवत् । परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥ क्षमालिङ्गात्मपीडावत्कथिताहर्तृदायकम् । यदावेदयते राज्ञे तद्भाषेत्यभिधीयते ॥ (मिताक्षरा अ० २ श्लो० ६) ।

**भाषासमितिः**—प्रिया वाचंयमानां सा भाषासमितिरुच्यते (सर्व० सं० पृ० ७९ आर्ह० ) ।

**भाषिकः**—तत्तच्छाखीयब्राह्मणस्वरो भाषिक इत्युच्यते । तदुक्तमाचार्यैः छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥ ( जै० न्या० अ० १२ पा० १ अधि० ८ ) ।

**भाष्यम्**—सूत्रार्थो वर्ण्यते येन पदैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥ इति भाष्यलक्षणम् ।

**भासः**—गोष्ठकुक्कुटः ।

**भासनम्**—१ दीप्तिः । २ विषयता । यथा घटत्वं घटे भासत इत्यत्र भासधात्वर्थः । अत्र घटनिष्ठं विशेष्यत्वमवच्छेद्यतासंबन्धेन सप्तम्यानुभाव्यते । एवम् ज्ञाने घटत्वं भासत इत्यादौ निरूपितत्वमपि सप्तम्यानुभाव्यते इति विज्ञेयम् ( श० प्र० श्लो० ७१ टी० पृ० ९० ) ।

**भास्वरत्वम्**—परप्रकाशकत्वम् ( वै० उ० २।१।३ ) । यथा भास्वरं शुक्लं तेजसि ( त० सं० ) इत्यादौ स्पर्श उष्णस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्

( भा० प० श्लो० ४२ ) इत्यादौ च सूर्यतेजसि विद्यमानस्य शुक्लरूपस्य भास्वरत्वम्। अत्रोक्तं दिनकरभट्टैः भास्वरत्वं जातिविशेषः। स च तेजोरूपमात्रवृत्तिः शुक्लत्वव्याप्यश्च इति विज्ञेयम् ( दि० १ तेजोनि० पृ० ७८ )।

**भिक्ष्**—(धातुः) प्रार्थनम्। यथा नृपमर्थे भिक्षत इत्यादौ (श० प्र० श्लो० ७३ टी० पृ० ११२)।

**भिक्षा**—१ याचनम् (ल० म०)। २ भक्षणीयमन्नम्। यथा भिक्षां देहि त्वमर्थिभ्य इत्यादौ। अत्र भिक्षाशब्दस्य भक्षणीय इत्यर्थः ( श० प्र० श्लो० १०० टी० पृ० १५६ )। अत्र भिक्षाशब्दः कर्मसाधन इति बोध्यम्।

**भिद्**—( धातुः ) १ अन्यत्वेन ज्ञापनम्। अत्र ज्ञापनं च ज्ञानविषयताप्रयोजकव्याप्तिपक्षधर्मता। तदाश्रयोसाधारणधर्म एव भिदादिकर्तृत्वाद्भेदक उच्यते। अन्यत्वप्रकारकानुमितिविषयतारूपधात्वर्थतावच्छेदकफलाश्रयो भिदाकर्मतया भेद्यः। एवं च पृथिवीतरेभ्यो भिद्यत इत्यादौ पृथिव्यादेः कर्मतैव न केवलकर्तृता। २ भेदः। यथा पटाद्भिन्नम् घटाद्भिद्यते इत्यादौ धात्वर्थः। ३ विदारणम्। यथा भिद्यते हृदयग्रन्थिः इत्यादौ भिद्यते कुसूल इत्यादौ वा भिद्धात्वर्थः (ग० व्यु० का० ५ पृ० १११)।

**भिदा**—भेदः ( अन्योन्याभावः )।

**भिन्नत्वम्**—१ भेदानुयोगित्वम्। यथा घटः पटाद्भिन्नः इत्यादौ घटस्य पटप्रतियोगिकभेदानुयोगित्वम्। एवम् अन्यत्वादयः शब्दाः स्वयं निर्वाच्याः। २ रोगविशेषनिष्ठो धर्मः इति भिषज आहुः। तदुच्यते भावप्रकाशे शक्तिकुन्तेषुखड्गाग्रविषाणैराशयो हतः। यत्किंचित्प्रस्रवेत्तद्धि भिन्नमित्यभिधीयते॥ ( वाच० ) इति। आशयः कोष्ठः। ३ विदारणकर्मत्वम् इति काव्यज्ञा आहुः।

**भुक्तिः**—उपभोगः ( वहिवाट इति प्र० )।

**भुजिष्या**—(दासी) पुरुषनियतपरिग्रहा भुजिष्या (मिताक्षरा अ० २।२९०)।

**भूतकालः**—[ क ] यत्प्रध्वंसेन यः कालोवच्छिद्यते स तस्यातीतकालः ( वै० उ० २।२।८ ) । [ ख ] तद्व्यक्तिध्वंसविशिष्टः कालस्तद्व्यक्तेरतीतकालः ( त० प्र० ) ( त० कौ० ) । [ ग ] वर्तमानध्वंसप्रतियोग्यवच्छिन्नः कालः (प० मा०)। यथा गतः स कालो यत्रासीदवज्ञा कल्पशाखिनाम् । उदुम्बरफलेभ्योपि स्पृहयामोधुना वयम् ॥ इत्यादावतीतकालः । भूतत्वं च विद्यमानध्वंसप्रतियोगित्वम् । यथा अपाक्षीदित्यादौ लुङर्थो भूतत्वम् ( न्या० म० ख० ४ पृ० २४ ) ( ल० म० ) ( तर्का० ४ ) । अत्र उत्पत्तिः भूतत्वं च लुङोर्थः । भूतत्वं चोत्पत्तावन्वेति । तथा च विद्यमानध्वंसप्रतियोग्युत्पत्तिकत्वं लब्धम् ( तर्का० ४ पृ० ११ ) ।

**भूतम्**—१ पञ्चमी तिथिः ( पु० चि० पृ० ३७ ) । २ पृथिव्यादीनि पञ्च भूतानि । भूतत्वं च [ क ] बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् ( गौ० वृ० १।१।१३ ) ( न्या० बो० ) ( ग० चतु० ) ( मु० १ साधर्म्य० पृ० ५८) । अत्र पदप्रयोजनादिविशेष उच्यते । आत्मन्यतिव्याप्तिवारणाय बहिःपदम् । बहिरिन्द्रियग्राह्यजातीयसंयोगादिमति कालादावतिव्याप्तिवारणाय विशेष इति । द्रव्यत्वमादायातिव्याप्तिवारणाय गुण इति ( दि० १ साधर्म्यनि० पृ० ५८ ) । [ ख ] आत्मावृत्तिविशेषगुणवत्त्वम् (मु० १ साधर्म्यनि० पृ० ५८ ) । अत्र कल्पे दैशिकपरत्वापरत्वमादाय मनस्यतिव्याप्तिवारणाय विशेष इति पदं दत्तम् (दि० १ साधर्म्य० पृ० ५९) । यथा पृथिव्यादीनां पञ्चानां भूतत्वम् ( भा० प० श्लो० २६ ) । पृथिव्यादीनि च पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ( गौ० १।१।१३ ) । भूतानां विशेषगुणास्तु शब्दस्पर्शरूपरसगन्धा भूतगुणाः स्मृताः इति । भूतानामेकैकविशेषगुणा उक्ता यथा आकाशस्य गुणः शब्दः । वायोः स्पर्शः । तेजसो रूपम् । जलस्य रसः । भूमेर्गन्धः ( गौ० १।१।१४ ) ( शा० ति० ) इति । सांख्यास्त्वन्यथाङ्गीचक्रुः शब्दैकगुण आकाशः शब्दस्पर्शगुणो मरुत् । शब्दस्पर्शरूपगुणैस्त्रिगुणं तेज इष्यते ॥ शब्दस्पर्शरूपरसैरापो ज्ञेयाश्चतुर्गुणाः । शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा मही ॥

( ईशानसंहिता ) ( वाच० ) इति । अत्रायं प्रसङ्गोपात्तो विशेषः । भौतिकं च भूतारब्धम् । यथा पाञ्चभौतिको देहः इत्यादौ ( सां० सू० अ० ३ सू० १७ ) । अत्र स्थूलशरीरे विप्रतिपत्तिः । स्थूलशरीरं चातुर्भौतिकमित्येके । ऐकभौतिकमित्यपरे ( सांख्य० सू० अ० ३ सू० १८–१९ ) । सार्वभौतिकम् इति पूर्णप्रज्ञाचार्याः प्राहुः ( ब्र० सू० भा० ३।१।२) । सांख्यास्तु शरीरं न पाञ्चभौतिकम् किं तु पृथिव्युपादानकमेव इत्याहुः । मायावादिवेदान्तिनस्तु तेजोबन्नात्मकमित्येवं त्र्यात्मकमेव इत्यङ्गीचक्रुः । ३ सत्यम् । यथा भूतमप्यनुपन्यस्तं हीयते व्यवहारतः (याज्ञ० स्मृ० २।१९) इत्यादौ । ४ तत्त्वानुसंधानम् । यथा छलं निरस्य भूतेन (याज्ञ० स्मृ० २।१९) इत्यादौ । ५ पिशाचम् इति मान्त्रिका वदन्ति । यथा ब्रह्मविद्या क्षत्रविद्या नक्षत्रविद्या भूतविद्या सर्पविद्या ( छा० उप० ) इत्यादौ । भूतविद्या नाम देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्म बलिहरणादि ग्रहोपशमनार्थम् इति । सा च भूतविद्या तत्रोत्तरतन्त्रे दर्शिता । ६ कृष्णचतुर्दशी इति मौहूर्तिका आहुः । ७ प्राणी । ८ प्रधानम् । यथा भूतमियं ब्राह्मण्यस्मिन्गृहे । ९ विपरीतम् । यथा भूतमाह । १० अतिक्रान्तकालः । यथा भूतो धात्वर्थः । ११ देवताविशेषः । यथा भूतेभ्यो बलिः । १२ चेतनमात्रम् । यथा न हिंस्याद्भूतानि । १३ प्रातिवचनम् । यथा महद्भूतश्चन्द्रमाः । १४ उपमा । यथा काव्यभूतः । १५ उत्पन्नः । यथा देवदत्तस्य पुत्रो भूतः ( मनुस्मृ० ४।३२ मेधातिथिः टी० ) ।

**भूतार्थवादः**—( अर्थवादः ) १ अतत्कालेपि तद्गुणज्ञापकः शब्दः । यथा जरायामप्ययं शूरः इत्यादि ( सि० च० पृ० ३३ ) । यथा वा राज्यभ्रंशेप्यमात्यैः अयं राजा इति प्रयुज्यते ( त० प्र० ख० ४ पृ० १२४ ) । विधिसमभिव्याहाराभावेयमप्यर्थवादः संभवति इति बोध्यम् ( गौ० वृ० २।१।६५ ) । २ मीमांसकास्तु प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको वादः । तदुक्तम् विरोधे गुणवादः स्यात् अनु-

वादोवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ (न्या० म० ख० ४ पृ० ३१)। तदर्थश्च तद्धानात् तयोः प्रमाणान्तरविरोधप्रमाणान्तरप्राप्त्योः हानात् अभावात् इति । यथा इन्द्रो वृत्राय वज्रमुदयच्छत् (श्रुतिः) (म० प्र० ४ पृ० ६४) इत्यादिः । अयं भावः । अस्य वृत्रं प्रतीन्द्रवज्रोद्यच्छनाभावावगाहिप्रमाणान्तरस्यादर्शनात् न तद्बोधने प्रमाणान्तरविरोधः । नापि प्रमाणान्तरावगतार्थप्रतिपादकत्वम् । वृत्रं प्रतीन्द्रवज्रोद्यच्छनप्रतिपादकप्रमाणान्तरस्यादर्शनात् । अतो भूतार्थवादत्वम् (लौ० भा० पृ० ५५)। यथा वा वज्रहस्तः पुरंदरः इत्यादिश्च (त० कौ०) इत्याहुः । अविरुद्धाप्राप्तार्थबोधकः शब्दः अर्थवाद इत्यन्ये वदन्ति ।

**भूमिका**—१ प्रयोजनसंपादिका युक्तिः (राम०)। यथा विशेषपदस्य प्रयोजनमभिधातुं भूमिकामाह इत्यादौ (दि० १)। यथा वा तदेवोपपादयितुं भूमिकां रचयति इत्यादौ (सि० च० २ पृ० २४)। २ नाट्ये अभिनेयपात्रादिप्रवेशान्तरसूचिका रचना इति नाट्यकलाभिज्ञा आहुः । अत्रोच्यते अन्यरूपैर्यदन्यस्य प्रवेशस्तत्र भूमिका इति । रङ्गसंचारिपात्राणां स्थानकं भूमिकां विदुः इति च ।

**भूयस्त्वम्**—१ [क] इतरद्रव्यानभिभूतैः पार्थिवावयवैरारब्धत्वम् । पारिभाषिकं चैतद्भूयस्त्वं समानतन्त्रेपि (वै० उ० ८।२।५)। अत्र व्याकरणम् । अतिशयेन बहुः । ईयसुन् । बहोर्लोपो भू च बहोः (पा० सू० ६।४।१५८) इत्यनेनेयसुन्प्रत्ययस्थस्येकारस्य लोपः बहुशब्दस्य भू इत्यादेशश्च । तेन भूयस् इति रूपं सिद्ध्यति । तस्य भावः भूयस्त्वम् इति । [ख] जलाद्यनभिभूतभागारब्धत्वम् (वै० वि० ८।२।५)। यथा भूयस्त्वाद्गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः (वै० सू० ८।२।५) इत्यादौ घ्राणेन्द्रियस्य भूयस्त्वम् । २ पुनःपुनः परिशीलनवत्त्वम् । यथा भूयोदर्शनमित्यादौ ।

**भूयोदर्शनम्**—साध्यसाधनयोर्व्याप्तिग्रहे जनकं तयोर्भूयःसहचारदर्शनम् । यथा धूमधूमध्वजयोर्नानास्थानावच्छेदेन सामानाधिकरण्यावगाहिज्ञानम् ।

अत्र भूयःसहचारदर्शनं च व्यभिचारज्ञानविरहेण सहितमेव व्याप्तिग्राहकं भवति न त्वन्यथा । पार्थिवत्वलोहलेख्यत्वयोः शतशः सहचारं पश्यतः केवलसहचारदर्शनेपि हीरकादौ व्यभिचारदर्शनेन व्याप्तिग्रहानुदयात् (सि० च० २ पृ० २४) (त० दी० २ पृ० २१)। भूयोदर्शनशब्दस्यार्थविशेषं विकल्प्य तस्य व्याप्तिग्राहकत्वं खण्डयति नीलकण्ठः । भूयोदर्शनम् इत्यस्य (१) भूयसां दर्शनानां समाहारः इति (२) भूयसां साध्यहेतूनां दर्शनम् इति (३) भूयस्त्वाधिकरणेषु दर्शनम् इति वार्थः । नाद्यः। एकत्रैव सहचारदर्शनधारया व्याप्तिनिश्चयप्रसङ्गात् । न द्वितीयतृतीयौ । एतद्रूपवानेतद्रसादित्यादौ साध्यहेत्वोरेकव्यक्तित्वात् साध्यहेत्वोरधिकरणे भूयस्त्वाभावेन व्याप्तिनिश्चयानुत्पादप्रसङ्गात् (नील० २ पृ० २१) इति ।

**भेदः**—१ अन्योन्याभावः । २ प्रभेदः । ३ तादात्म्यातिरिक्तः संबन्धः (म० प्र० ४ पृ० ४८)। यथा राजपुरुष इत्यादौ राजपदार्थपुरुषपदार्थयोर्भेदेनान्वयबोधः अव्युत्पन्नः इत्यादौ भेदः । अत्रायं नियमः निपातातिरिक्तनामार्थयोः साक्षात् (विभक्त्यर्थमद्वारीकृत्य) भेदेनान्वयबोधः अव्युत्पन्नः इति । एतादृशनियमस्वीकारेण राजा पुरुषः इत्यत्र स्वत्वसंबन्धेन राजपदार्थस्य पुरुषपदार्थे नान्वयबोधापत्तिः । ४ [क] राज्ञः सामाद्युपायविशेषः इति नीतिशास्त्रज्ञा आहुः । [ख] वैरिणो बुद्धिभेदो भेदः (जै० न्या० अ० १ पा० १ अधि० १)। तदुक्तमग्निपुराणे परस्परं तु ये द्विष्टाः क्रुद्धभीतावमानिताः । तेषां भेदं प्रयुञ्जीत परमं दर्शयेद्भयम् ॥ (अग्निपु० अ० २२५) इत्यादि । ५ पृथक्करणम् । ६ विदारणम् इति काव्यज्ञा आहुः । ७ विरुद्धधर्माध्यासः । तदुक्तं सर्वदर्शनसंग्रहे अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च (सर्व० सं० पृ० ४०० शां०) इति ।

**भेदकम्**—१ (व्यावर्तकम्) भेदज्ञापकम् । यथा नीलो घट इत्यादौ नीलत्वं विशेषणं रक्तघटादिभेदकम् । तदुक्तम् भेद्यं विशेष्यमित्याहुर्भेदकं च विशेषणम् इति । अत्र विशेष्यस्य यादृशे लिङ्गवचने तादृशलिङ्गवचन-

विशिष्टस्यैव विशेषणस्य भेदकत्वम् । तदुक्तम् स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः । गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥ ( अमर० का० ३ वर्ग० १ श्लो० २ ) इति । यथा वा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ गन्धवत्त्वरूपं पृथिवीलक्षणं जलादिभेदकम् । २ भेदकारकम् । यथा कुठारो भिनत्तीत्यादौ कुठारो भेदकः । अत्र श्रीमध्वाचार्यैरुच्यते विद्यमानस्य भेदस्य ज्ञापको नैव कारकः ( उपा० ख० ) इति ।

**भोगः**—१ [ क ] सुखदुःखान्यतरसाक्षात्कारः ( त० भा० पृ० ४ ) ( त० दी० १ पृ० ७ ) ( वाक्य० ) । [ ख ] स्वसमवेतसुखदुःखान्यतरलौकिकसाक्षात्कारः ( प्र० प्र० ) । यथा आत्मनो भोगायतनं शरीरम् ( त० दी० १ ) इत्यादौ भोगः । अत्र वेदान्तिनस्तु आनन्दमात्रानुभवो भोगः । यथा ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ ( ब्रह्मसू० ४।४।२२ ) इत्यादौ इत्याहुः । अत्र भविष्यत्पुराणम् मुक्ताः प्राप्य परं विष्णुं तद्भोगाँल्लेशतः क्वचित् । बहिःष्ठान् भुञ्जते नित्यं नानन्दादीन् कथंचन ॥ ( मध्वभा० ४।४।४ ) इति । २ रव्यादीनां राशिगतिकालः इति ज्योतिर्विद आहुः । अत्रोच्यते अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः ( तिथि० त० ) इति । ३ सर्पदेहः इति काव्यज्ञा आहुः ।

**भोगायतनम्**—भोगस्यावच्छेदकम् । यथा यदवच्छिन्नात्मनि भोगो जायते तद्भोगायतनम् ( त० दी० १ ) इत्यादौ शरीरावच्छिन्न आत्मनि भोगो जायत इति शरीरं भोगायतनम् । तच्च भोगायतनम् स्थूलदेहः इति सांख्या आहुः । अत्र सूत्रम् भोक्तुरधिष्ठानाद्भोगायतननिर्माणम् । अन्यथा पूतिभावप्रसङ्गात् ( सांख्यसू० अ० ५ सू० ११४ ) इति । अत्र केचिद्वेदान्तिन आहुः । भोगसाधनं च लिङ्गशरीरमेव । तथा चोक्तम् पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ इति । सांख्यमते तु पञ्चप्राणस्थले पञ्चभूतमात्राः इति भेदः । स्थूलदेहस्य भोगत्वं तु भोगावच्छेदकत्वात् उपचारात् इति बोध्यम् । अत्र सूत्रम् तदधिष्ठानाश्रये देहे तद्वादात्तद्वादः ( सांख्यसू० अ० ३ सू० ११ ) इति।

**भोजनम्**—गलाधो नयनम् । तच्च [ क ] गलाधःसंयोगावच्छिन्नक्रियानुकूलव्यापारः । यथा ओदनं भुङ्क्ते इत्यादौ धात्वर्थः । अत्र भुजधात्वर्थघटके तादृशक्रियारूपफल एव ओदनवृत्तित्वान्वयः ( ग० व्यु० का० २ पृ० ४३ ) । [ ख ] प्राञ्चस्तु कठिनद्रव्यस्य गलबिलाधःसंयोजनं भोजनम् इत्याहुः ।

**भ्रमः**—१ ( अप्रमा ) [ क ] यत्र यन्नास्ति तत्र तस्य ज्ञानम् । समुदायार्थश्च तदभाववन्निरूपिततन्निष्ठविषयताप्रतियोगि ज्ञानम् इति । अत्र स्मृतेरपि भ्रमतया अनुभवत्वमपहाय ज्ञानत्वप्रवेशः ( मु० म० १ प्रामा० पृ० ४०५ ) । भ्रमश्च दोषाज्जन्यते । भ्रमलक्षणं तु स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्व स्वप्रतियोगिनिष्ठत्व स्वावच्छिन्नत्व एतत्रितयसंबन्धेन संबन्धविशिष्टान्यप्रकारताशालिज्ञानत्वम् ( ग० अव० हेतु० ) इति । अत्र स्वपदार्थस्तु विशेष्यविशेषणयोर्भासमानः संबन्धो ज्ञेयः । अत्रेदमवधेयम् । विपर्ययोपि प्रत्यक्षानुमानविषय एव भवति । प्रत्यक्षविषये तावत् प्रसिद्धानेकविशेषस्यापि पित्तकफानिलोपहतेन्द्रियस्यायथार्थलोचनात् संप्रत्यसंनिहितविषयविज्ञानजसंस्कारापेक्षादात्ममनसोः संयोगादधर्माच्चातस्मिन् तत् इति प्रत्ययो विपर्ययः । यथा गव्येव अश्वः इति । असत्यपि प्रत्यक्षे प्रत्यक्षाभिमानो भवति । यथा अपगतघनपटलमचलजलनिधिसदृशमम्बरम् अञ्जनचूर्णपुञ्जश्यामं शार्वरं तमः इति । अनुमानविषयेपि बाष्पादिभिर्धूमाभिमतैर्वह्न्यनुमानम् गवयविषाणदर्शनाच्च गौः इति त्रयीदर्शनविपरीतेषु शाक्यादिदर्शनेषु इदं श्रेयः इति मिथ्याप्रत्ययो विपर्ययः ( प्रशस्त० पृ० २४ ) । [ ख ] तदभाववति तत्प्रकारकज्ञानम् ( चि० १ प्रामा० पृ० ४०१ ) ( त० प्र० १ ) ( त० दी० ) । [ ग ] अतस्मिन् तत् इति प्रत्ययः ( न्या० वा० १ पृ० २६ ) ( भा० प० श्लो० १२८ ) ( त० भा० पृ० ४० ) । [ घ ] विशेष्यताव्यधिकरणप्रकारकं ज्ञानम् ( म० प्र० ४ पृ० ७३ ) । यथा पुरोवर्तिन्येवारजते शुक्त्यादौ रजतारोपः । इदं रजतम् इति ज्ञानम् ( त० भा० पृ० ४० ) ( त० प्र० १ ) ( त० दी० ) । यथा वा

पीतः शङ्खः लोहितः स्फटिकः इत्यादि ज्ञानम् ( त० कौ० ) ( भा० प० श्लो० १२९ ) । यथा वा कृशोहम् बधिरः स्थूलः इति ज्ञानम् ( त० व० ) । भ्रमो द्विविधः विपर्यासः ( विपर्ययः ) संशयश्च । तत्राद्यो यथा शरीरादौ आत्मत्वप्रकारकं गौरोहम् इत्याकारकं निश्चयरूपं ज्ञानम् ( मु० गु० ) । द्वितीयो यथा स्थाणुर्वा पुरुषो वा इति संशयरूपः ( भा० प० श्लो० १३० ) । प्रकारान्तरेण भ्रमो द्विविधः निरुपाधिकः सोपाधिकश्च । तयोः स्वरूपं चेत्थम् । दोषेण कर्मणा वापि क्षोभिताज्ञानसंभवः । तत्त्वविद्याविरोधी च भ्रमोयं निरुपाधिकः ॥ उपाधिसंनिधिप्राप्तक्षोभाविद्याविजृम्भितम् । उपाध्यपगमापोह्यमाहुः सोपाधिकं भ्रमम् ॥ ( सर्व० सं० पृ० ४२१ शां० ) । [ ङ ] मिथ्याज्ञानापरपर्यायः अयथार्थनिश्चयः ( गौ० वृ० ४।१।३ ) ( त० सं० ) । अयं च मोहपक्षान्तर्गतो दोषविशेष इति विज्ञेयम् । [ च ] विपरीतनिर्णयः ( त० कौ० ) । अयं तु अप्रमाप्रभेदः । भ्रमसंशयभेदेन द्विविधा अप्रमा इति विभजनात् । तेन अत्रत्यभ्रमत्वस्य निर्णयत्वरूपस्य संशयासाधारणत्वेपि न क्षतिः । २ [ क ] अतिरिक्तविषयतापक्षे यत्प्रकारिका या विषयता तत्प्रकारव्यधिकरणविषयताकं ज्ञानम् । विषयतापक्षे इत्यस्य प्रकारताविशेष्यतावच्छेदकतातिरिक्ता सविषयका च इति पक्षे इत्यर्थः । यत्प्रकारिकेत्यादेरर्थश्च प्रकारो धर्मः तद्धर्माधिकरणावृत्तितद्विषयताकं ज्ञानम् इति । मिश्रास्तु तत्प्रकारव्यधिकरणत्वं तत्प्रकारानधिकरणवृत्तित्वम् इत्याहुः ( मू० म० १ पृ० ४१९ ) । [ ख ] स्वप्रकारव्यधिकरणविषयताकं ज्ञानम् । अत्र स्वप्रकारव्यधिकरणत्वं च स्वप्रकाराधिकरणावृत्तित्वम् । मिश्रास्तु स्वप्रकारव्यधिकरणत्वं च स्वप्रकारानधिकरणवृत्तित्वम् इत्याहुः । तेन ग्रन्थकर्तृमते रजतारजतसाधारणधर्मद्रव्यविशेष्यकं द्रव्यं रजतम् इत्यादिज्ञानस्य न रजतत्वादिभ्रमत्वम् । मिश्रमते तु तस्य तद्भ्रमत्वमिष्टमेव इति ( मू० म० १ प्रामा० पृ० ४२० ) । [ ग ] स्वव्यधिकरणप्रकारावच्छिन्नविषयताप्रतियोगि ज्ञानम् । स्वव्यधिकरणेति स्वाश्रयावृत्तिधर्मप्रकारकेत्यर्थः ( मू० म० १ प्रामा० पृ० ४२२ ) ।

इदं रजतम् इति भ्रमे च विषयताद्वये व्यधिकरणप्रकारावच्छिन्नत्वस्य विषयत्वप्रतियोगित्वस्याविरोधात् समूहालम्बने च विषयताभेदान्नाप्रमालक्षणे अव्याप्त्यतिव्याप्ती ( चि० १ प्रामा० पृ० ४२१–४२२ ) । सर्वत्र स्वपदेन विशेष्यता । [ घ ] स्वसमानाधिकरणप्रकारानवच्छिन्नविषयताप्रतियोगिज्ञानम् ( चि० १ प्रामा० पृ० ४१८–४२० ) । स्वसमानाधिकरणेति स्वसमानाधिकरणधर्मप्रकारकेत्यर्थः । प्रकारता च विशेष्यतावच्छेदकतातिरिक्ता ग्राह्या । तेन इदं रजतम् इति शुक्तिमात्रविशेष्यकभ्रमे नाव्याप्तिः । विशेष्यतावच्छेदकांशे भ्रमरूपम् विधेयांशे च प्रमारूपं ज्ञानं न लक्ष्यम् इति न तत्र दोष इति भावः ( मू० म० १ प्रामा० पृ० ४२२ ) । ३ जलनिर्गमस्थानम् । ४ भ्रमणम् इति काव्यज्ञा आहुः ।

**भ्रमणम्**—( कर्म ) गतिविशेषः । अयं च गमनेन्तर्भवति ( भा० प० श्लो० ७ ) ।

**भ्रान्तिः**—१ भ्रमः ( अमरः ) । २ योगान्तरायश्चित्तविक्षेपो भ्रान्तिः इति योगशास्त्रज्ञा आहुः ( पात० पा० १ सू० ३० ) । अत्रोच्यते व्यवहारविषये षाण्मासिके तु संप्राप्ते भ्रान्तिः संजायते नृणाम् । धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ॥ ( ज्यो० त० ) ( वाच० ) इति ।

**भ्रान्तिदर्शनम्**—अतस्मिंस्तद्बुद्धिः ( सर्व० सं० पृ० ३५५ पात० ) ।

## म.

**मङ्गलम्**— १ [ क ] विघ्नध्वंसद्वारकार्थसमाप्तिफलकं कर्म । तच्च यथा ग्रन्थारम्भे कर्तव्यमाशीर्वादाद्यन्यतमम् निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ( त० सं० ) इत्यादि । मङ्गलत्वं च प्रतिबन्धकान्यस्य सतः प्रारिप्सितप्रतिबन्धकदुरितनिवृत्त्यसाधारणकारणत्वम् (कि० व० पृ० ६) । अथवा विघ्नोत्सारणासाधारणकारणत्वे सति साध्यत्वम् ( न्या० सि० दी० पृ० ३ ) । यद्वा मङ्गलत्वं निर्विघ्नमारब्धं परिसमाप्यताम् इति कामनया वेदविहितत्वम् ( चि० १ मङ्ग० पृ० १०१ ) । अयं कल्पः प्राचीनमताभिप्रायेण । तन्मते समाप्तिरेव सुखसाधनतया पुरुषार्थत्वा-

त्फलम् । श्रौतात्साङ्गात्कर्मणः फलावश्यंभावनियमात् । ननु विघ्नध्वंसो मङ्गलस्य फलम् । तस्यापुरुषार्थत्वात् ( वै० उ० १।१।१ ) इति । अत्र शङ्का । कृतमङ्गलस्यापि कादम्बर्यादौ फलादर्शनात् अकृतमङ्गलस्यापि किरणावल्यादौ समाप्तिरूपफलदर्शनाच्च ग्रन्थारम्भे मङ्गलं नानुष्ठेयम् । नहि निष्फले प्रेक्षावान् प्रवर्तते इति । अत्रोत्तरम् । मङ्गलाकरणस्थले किरणावल्यादौ जन्मान्तरीयस्य मङ्गलस्य मङ्गलकरणस्थले कादम्बर्यादौ चाङ्गवैगुण्यस्य कल्पनया सफलत्वं निश्चीयते इति । जन्मान्तरीयमङ्गलानुमानं तु इदम् मङ्गलम् आरब्धकर्माङ्गम् कर्मार्थितया शिष्टैस्तत्पूर्वं क्रियमाणत्वात् फलान्तराभावे सति फलवत्कर्मारिप्समानेन नियमतस्तत्पूर्वं क्रियमाणत्वाच्च दर्शे प्रयाजवत् ( चि० १ मङ्गलवा० पृ० १९ ) इति । अत्र मङ्गलस्य स्वाभिमतहेतुत्वे तथाविधशिष्टाचारानुमितश्रुतिरेव मानम् ( चि० १ मङ्गलवा० पृ० १५ ) । अनुमितश्रुतिश्च समाप्तिकामो मङ्गलमाचरेत् इति । अत्र श्रुत्यनुमानं तु नमस्कारादिकम् मङ्गलम् वेदबोधितसमाप्तिसाधनताकम् समाप्त्युद्देश्यकालौकिकाविगीतशिष्टाचारविषयत्वात् दर्शादिवत् इति । अत्र यो यदुद्देश्यकाविगीतशिष्टाचारविषयः स वेदबोधिततत्साधनताकः यथा दर्शः इति सामान्यतो व्याप्तिर्द्रष्टव्या ( मू० म० १ मङ्गल० पृ० १६ ) । अथवा मङ्गलं वेदबोधितकर्तव्यताकम् अलौकिकाविगीतशिष्टाचारविषयत्वाद्दर्शश्राद्धवत् (त० दी० १ मङ्ग० पृ० २ ) इति । मङ्गलस्य कर्तव्यत्वे प्रमाणमनुमानमपि । तच्च मङ्गलं सफलम् अलौकिकाविगीतशिष्टाचारविषयत्वात् अग्निहोत्रवदिति । अत्र शिष्टश्च वेदप्रामाण्याभ्युपगन्ता । वेदप्रामाण्यानभ्युपगमविरोधिमत्त्वमिति यावत् । विरोधी तु सर्वे वेदाः प्रमाणमिति ज्ञानं तादृशसंस्कारश्च ( म० प्र० १ ) ( मू० म० १ मङ्गल० पृ० १६ )। सफलत्वं च बलवदनिष्टाननुबन्धीष्टफलकत्वम् । अविगीतत्वं तु बलवदनिष्टाननुबन्धित्वम् । तच्च स्वजन्येष्टापेक्षयाधिकानिष्टजनकत्वं यद्यत् तद्भिन्नत्वम् ( म० वा० पृ० १ ) । अथवा धर्मशास्त्रानिषिद्धत्वम् ( नील० १ मङ्ग० पृ० २ ) । शिष्टत्वं चेष्टसाधनत्वांशे अभ्रान्तत्वम् । आ-

चारविषयत्वं तु साध्यत्वेन फलान्यत्वेन वा विधेयतया कृतिविषयत्वम् ( म० वा० पृ० १ ) ( दि० १ मङ्ग० पृ० ५ ) । अलौकिकत्वं विधिमन्तरा रागादिप्राप्तभिन्नत्वम् ( नील० १ पृ० २ ) । अत्र सांख्यसूत्रम् मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्चेति ( सां० सू० अ० ५ सू० १ ) इति । अत्रेदं बोध्यम् । मङ्गलं सफलमित्यनेनानुमानेन सफलत्वं सिद्ध्यत्समाप्त्यादिरूपमुपस्थितफलमादायैव पर्यवस्यति ( म० प्र० १ ) ( म० वा० १ ) । तथा ह्यनुमानम् मङ्गलं समाप्तिफलकम् समाप्त्यन्याफलकत्वे सति सफलत्वात् ( दि० १ मङ्गल० पृ० ४ ) इति । अनेनानुमानेन समाप्तिफलकत्वं सिद्ध्यत्कर्तव्यत्वं साधयितुं क्षमते । तथाहि मङ्गलं कर्तव्यम् समाप्तिफलकत्वात् इति ( नील० १ मङ्ग० पृ० २ ) । मङ्गलं च त्रिविधम् । तदुक्तम् आशीर्वादनमस्कारवस्तुनिर्देशभेदतः । मङ्गलं त्रिविधं प्रोक्तं शास्त्रादीनां मुखादिषु ॥ ( सि० च० ) इति । अत्र वस्तुनिर्देशश्च पुण्यजनकशब्दनिबन्धः पुण्यकृत्स्तुतिप्रतिपादकशब्दो वा ( म० वा० पृ० १० ) । [ ख ] नव्याः चिन्तामणिकृतस्तु विघ्नोत्सारणासाधारणं कारणम् ( म० प्र० १ पृ०२ ) इत्याहुः । एतन्मते मङ्गलत्वं च तद्विघ्नोपशमहेतुत्वेन वेदविहितत्वम् ( चि० १ मङ्ग० पृ० १०१ ) । तथा चैतन्मते मङ्गलस्य फलं विघ्नध्वंस एव । समाप्तिस्तु बुद्धिप्रतिभादिविघ्नसंसर्गाभावरूपस्वकारणकलापाद्भवति इति विज्ञेयम् ( नील० १ मङ्गल० पृ० २ ) ( मु० १ मङ्गल० ) ( दि० १ मङ्ग० ८–९ ) । विघ्नोत्सारणेत्यादिलक्षणं च शशधरीये न्यायसिद्धान्तदीपे उक्तम् । तदर्थश्च समाप्तिप्रतिबन्धकदुरितविशेषो विघ्नस्तस्योत्सारणं नाशस्तदसाधारणं कारणं मङ्गलपदवाच्यम् ( म० प्र० १ पृ० २ ) इति । अत्र किरणावली । मङ्गलमाचरेत् इति न विधिः । किं तु नमस्कारादिकमाचरेत् इति प्रत्येकमेव विधिकल्पनम् इत्यस्मद्गुरवः ( किर० पृ० ६ ) इति । तत्त्वचिन्तामणौ चोक्तम् । मङ्गलमाचरेत् इति न विधिः । किंतु निर्विघ्नसमाप्तिकामः प्रारिप्सितविघ्नोपशमनकामो वा देवतास्तुतिमाचरेत् इत्यादिः प्रत्येकमेव विधिः । मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् ।

जपतां जुह्वतां चैव विनिपातो न विद्यते ॥ इत्यनेन बोधितादर्शदर्शनादेः पृथगेव मङ्गलत्वम्। न तु विघ्ननिवर्तकतया। तत्र नानार्थतैव इति (चि० १ मङ्ग० पृ० १०१–१०२)। [ग] अन्ये तु विशेषणतादिसंबन्धावच्छिन्नप्रारिप्सितविघ्नध्वंसत्वावच्छिन्नकारणतावत् इत्याहुः (म० वा० पृ० १०)। [घ] अगर्हिताभीष्टावाप्तिर्मङ्गलम् इति योगशास्त्रज्ञा आहुः। अभीष्टं च सुखावाप्तिदुःखपरिहाररूपतयेष्टम् (सर्व० पृ० ३४१ पात०)। २ प्रशस्ताचरणं मङ्गलम् इति धर्मज्ञा वदन्ति। ३ हरिद्रा। ४ दूर्वा चेति काव्यज्ञा आहुः। पौराणिकमते मङ्गलद्रव्याण्यष्टौ लोकेस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः। हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ॥ (मत्स्यसूक्ते प० ४२) (वाच०) इति।

**मतानुज्ञा**—(निग्रहस्थानम्) [क] स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसङ्गो मतानुज्ञा (गौ० ५।२।२१)। यः परेण चोदितं दोषं स्वपक्षेभ्युपगम्यानुद्धृत्य वदति भवत्पक्षे समानो दोषः इति स स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषं प्रसञ्जयन्परमतमनुजानातीति मतानुज्ञा नाम निग्रहस्थानमापद्यते (वात्स्या० ५।२।२१) इति। [ख] स्वपक्षे दोषमनुद्धृत्य परपक्षे दोषाभिधानम् (दि० १) (नील० पृ० ४६)। यथा शब्दो नित्यः श्रावणत्वादित्युक्ते ध्वनावनैकान्तिकत्वेन हेत्वाभासोयम् इत्युक्तौ शब्दः अनित्यः कृतकत्वादिति साधिते ध्वनेरपि पक्षत्वान्न दोषः इत्युक्तौ असिद्धत्वात् तवापि हेत्वाभासोयम् इत्युक्तौ सोयं मतानुज्ञया निगृहीतः स्यात्। अप्रतिषिद्धमनुमतं भवतीति स्वपक्षे दोषाभ्युपगमात् (गौ० वृ० ५।२।२१)। [ग] स्वसिद्धान्ते परापादितदोषमनुद्धृत्य परस्यानिष्टबुद्ध्येष्टप्रसञ्जनम्। यथा केनचिदात्मनः पुरुषत्वाच्चोरस्त्वमसि इत्युक्ते तत एव हेतोः त्वमपि चोरः इति प्रसञ्जनम्। नित्यः शब्दः कार्यत्वादित्युक्ते तत एव हेतोस्तवाप्यनित्यः स्यात् इत्यादीन्युदाहरणानि द्रष्टव्यानि। अत्र अनिष्टमेव परस्परं ब्रूयात् इति रहस्यम् (सारसं० परि० ३ श्लो० १४८ टी० पृ० ११५)। [घ] पराभिमतस्यार्थस्य स्वप्रतिकूलस्य स्वयमेवाभ्यनुज्ञा (स्वीकारः) (त० भा० पृ० ५१)।

**मतिः**—१ बुद्धिः । यथा तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता (भा० प० श्लो० १२८) इत्यादौ मतिशब्दार्थो बुद्धिः । २ इच्छा । ३ मतिकरौषधम् (गरु० अ० १९८) इति भिषज आहुः (वाच०)। ४ मननविशेषः । ज्ञानावरणक्षयोपशमे सतीन्द्रियमनसी पुरस्कृत्य व्यापृतः सन्यथार्थं मनुते सा मतिः (सर्व० सं० पृ० ६३ आर्ह०)।

**मत्सरः**—(दोषः) [क] स्वप्रयोजनप्रतिसंधानं विना पराभिमत-निवारणेच्छा । यथा राजकीयादुदपानान्नोदकं पेयम् इत्यादि । [ख] परगुणनिवारणेच्छा (गौ० वृ० ४।१।३) । अत्रापि स्वप्रयोजनप्रति-संधानं विना इति पूरणीयम् इति तु वयम् । [ग] अन्यशुभद्वेषः इति केचिदाहुः (वाच०) । [घ] अन्ये तु निन्दन्ति मां सदा लोका धिगस्तु मम जीवनम् । इत्यात्मनि भवेद्यस्तु धिक्कारः स च मत्सरः ॥ इत्याहुः (क्रियायोगसारे) (वाच० )।

**मदः**—मद्यपानादिजन्यः अवस्थाविशेषः (मिताक्षरा अ० ३।२१४)।

**मद्यम्**—मदहेतुर्द्रवद्रव्यविशेषः । यथा सर्वं मद्यमपेयम् (आपस्तम्बसू० १।५।१७।२१) इत्यादौ । मुख्यतो मद्यानि द्वादशविधानि । माध्वीकं पानसं द्राक्षं खार्जूरं तालमैक्षवम् । मैरेयं माक्षिकं टाङ्कं माधूकं नारि-केलजम् ॥ मुख्यमन्नविकारोत्थं मद्यानि द्वादशैव तु इति । अत्र व्युत्पत्तिः माद्यत्यनेन (करणे यत्) इति मद्यम् ।

**मधुप्रतीकाः**—यथा मधुन एकदेशोपि स्वदते तथा प्रत्येकमेव ताः सिद्धयः स्वदन्त इति मधुप्रतीकाः । ताश्च मनोजवित्वं विकरणभावः प्रधान-जयश्चेति त्रिविधाः (सर्व० सं० पृ० ३८५ पातञ्ज०)।

**मधुभूमिकः**—(योगी) ऋतंभरप्रज्ञः (सर्व० सं० पृ० ३८४ पातञ्ज०)।

**मधुमती**—अभ्यासवैराग्यादिवशादपास्तरजस्तमोलेशसुखप्रकाशमयसत्त्वभा-वनयानवद्यवैशारद्यविद्योतनरूपऋतंभरप्रज्ञा (सर्व० सं० पृ० ३८४ पातञ्ज०)।

**मध्यमसाहसम्**—चत्वारिंशदधिकं पणपञ्चशतम् (मिताक्षरा व्य० श्लो० १५३)।

**मध्यवर्ती** }
**मध्यस्थः** } —१ [ क ] वादिप्रतिवाद्युभयप्रयुक्तन्यायवाक्यद्वयजन्यविरुद्धकोटिद्वयोपस्थितिजन्यसाध्यादिसंदेहप्रयोज्यैकतरसत्कोटिकानुमितिर्यस्य भवति सः । यथा हि पर्वतादौ वह्न्यादिसाधने वादिना पर्वतो वह्निमान्धूमवत्त्वात् इत्यादिन्याये प्रयुक्ते प्रतिवादिना च पर्वतो न वह्निमान्पाषाणमयत्वात् इत्यादिवाक्ये प्रयुक्ते च सति मध्यस्थपुरुषस्य पर्वतो वह्निमान्न वा इति संशयानन्तरं परामर्शादिद्वारा पर्वतो वह्निमान् इत्यनुमितिर्भवतीति । [ ख ] वादिप्रतिवादिनोरन्ययोर्वा पक्षप्रतिपक्षयोर्वाक्यादिविषयविमर्शपूर्वकं तत्त्वनिर्णायकः । २ स्वार्थाविरोधेन परार्थसंपादकः । ३ पूर्वापरयोः पदार्थयोरन्तरालस्थः । ४ उदासीनः । यथा माध्यस्थ्यमिष्टेप्यवलम्बतेर्थे ( कुमार० स० १ श्लो० ५२ मल्लि० टी० ) इत्यादौ इति काव्यज्ञा आहुः ।

**मध्याह्नः**—( कालः ) १ त्रिधा विभक्तदिनस्य द्वितीयो भागः । २ पञ्चधा विभक्तदिनस्य तृतीयो भागः । तदुक्तं दक्षस्मृतौ प्रातःकालो मुहूर्तांस्त्रीन् संगवस्तावदेव तु । मध्याह्नस्त्रिमुहूर्तं स्यात् इति ( वाच० ) ।

**मन्**—( धातुः ) १ पूजायाम् । यथा देवतां मनुते । २ गर्वात्मकवृत्तौ । यथा पण्डितमानी चैत्रः इति । ३ बोधे । यथा मनुते अमनिष्ट मेने इति । मन्यते अमंस्त मेने इति च । ४ धृतौ । यथा मनयति अममनत् इति ।

**मनः**—( द्रव्यम् ) १ [ क ] निस्पर्शमणु ( न्या० म० १।१४ ) ( वै० ७।१।२३ ) ( गौ० वृ० १।१।१६ ) । अत्र व्युत्पत्तिः मन्यते अनेन मनः इति । करणार्थे असुन् प्रत्ययः । तच्च मनः सर्वेन्द्रियप्रवर्तकम् आन्तरेन्द्रियम् स्वसंयोगेन बाह्येन्द्रियानुग्राहकम् अत एव सर्वोपलब्धिकारणम् ( त० भा० प्रमेयनि० पृ० ३२ ) । मनःसद्भावे प्रमाणमनुमानम् । तच्चानुमानम् सुखादिसाक्षात्कारः करणसाध्यः जन्यसाक्षात्कारत्वाच्चाक्षुषसाक्षात्कारवत् इति । आत्मेन्द्रियार्थसंनिकर्षे ज्ञानस्य भावोभावश्च मनसो लिङ्गम् ( वै० ३।२।१ ) । भावः अभावः इति पदच्छेदः । यत्संयोगव्यतिरेकात्सुषुप्तिकाले कार्यानुत्पादः तदेव मनः इति

( प० मा० ) । युगपज्ज्ञानानुत्पत्तिः मनसो लिङ्गम् ( गौ० १।१।१६ )। अत्र भाष्यम् । अनिन्द्रियजनिमित्ताः स्मृत्यादयः कारणान्तरनिमित्ता भवितुमर्हन्ति इति । युगपच्च खलु घ्राणादीनां गन्धादीनां च संनिकर्षेषु सत्सु युगपज्ज्ञानानि नोत्पद्यन्ते । तेनानुमीयते अस्ति तत्तदिन्द्रियसंयोगि सहकारि निमित्तान्तरम् अव्यापि यस्यासंनिधेर्नोत्पद्यते ज्ञानम् संनिधेश्चोत्पद्यते इति । मनःसंयोगानपेक्षस्य हीन्द्रियार्थसंनिकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन् ज्ञानानि ( वात्स्या० १।१।१६ ) इति । एतस्यार्थं वृत्तिकार आह । युगपत् एककाले । एकात्मनि इति पूरणीयम् । ज्ञानानामनुत्पत्तिर्यतः स एव धर्मो ज्ञानकारणाणुत्वम् मनसो लिङ्गम् लक्षणम् ( गौ० वृ० १।१।१६ ) इति । अत्र विप्रतिपत्तिः । समयसौक्ष्म्यानाकलनात्तत्र दीर्घशष्कुलीभक्षणादौ नानावधानादौ च यौगपद्याभिमानो भ्रम इति नैयायिकाः संगिरन्ते ( न्या० दी० पृ० २१ ) । वेदान्तिनस्तु मनसः संकोचविकासशालित्वात् ज्ञानानां यौगपद्यमयौगपद्यं चोपपद्यते इत्याहुः ( म० प्र० १ पृ० १४ ) । मनसो लक्षणं च स्पर्शरहितत्वे सति क्रियावत्त्वम् ( त० दी० ) । वेगवत्प्राणपवनसंयोगाच्चलनक्रियोपपत्तिः इति केचिद्वदन्ति ( न्या० सि० दी० पृ० ४१ ) । अथवा मानसत्वावच्छिन्नकार्यतानिरूपितकारणत्वे सतीन्द्रियत्वम् ( वाक्य० पृ० ६ ) । यद्वा द्रव्यसमवायिकारणत्वरहिताणुसमवेतद्रव्यत्वापरजातिः ( सर्व० सं० पृ० २१९ औलू० ) । मीमांसकास्तु आत्मान्यत्वे सति ज्ञानासमवायिकारणसंयोगाश्रयत्वम् इत्याहुः ( न्या० म० पृ० १४ ) । [ख] मनस्त्वाभिसंबन्धवत् ( त० भा० ) ( प्रशस्त० पृ० २३ ) ( न्या० म० ) । [ग] मयि सुखम् इति सुखप्रत्यक्षस्यासाधारणं कारणम् ( त० कौ० ) ( ता० र० श्लो० ३० ) । अत्र मनसः प्रत्यक्षकरणत्वे आत्ममनःसंयोगो व्यापारो बोध्यः ( त० कौ० ) । [घ] सुखाद्युपलब्धिसाधनमिन्द्रियम् ( गौ० वृ० १।१।१६ ) ( त० भा० अर्थ० पृ० ३१ ) ( भा० प० ) ( त० सं० ) । यथा सर्वार्थोपलब्धौ नेन्द्रियाणि प्रभवन्ति इति सर्वविषयमन्तःकरणं मनः (वात्स्या० १।१।९)। मनस इन्द्रियत्वमाह । नैयायिकस्य मन इन्द्रियम् । तच्च समानतन्त्रे

वैशेषिके सिद्धम् । एवं प्रतितन्त्रसिद्धान्तोत्र द्रष्टव्यः ( त० भा० पृ० ४२—४३ ) । सुखादिप्रत्यक्षसाधनत्वेनापि मन इन्द्रियं सिद्ध्यति ( न्या० वा० पृ० ४१ ) । अत्रेदं बोध्यम् । मनः सर्वविषयकज्ञानजनकमपि बहिर्विषयकज्ञानजनने परतन्त्रम् । स्वेतरबहिर्विषयकज्ञानजनकसामग्रीसापेक्षम् इत्यर्थः । अबाह्यविषयकज्ञाने तु मनः स्वतन्त्रम् । अबाह्यानि तु आत्मा तद्योग्यगुणाः तदभावः तद्वृत्तिजातिश्च इति ( न्या० म० १ पृ० ५) ( त० प्र० १ पृ० ३० ) । तच्च मनः प्रत्यात्मनियतत्वादनन्तम् अणु नित्यम् अतीन्द्रियं चेति ( त० सं० ) ( त० भा० प्रमे० पृ० ३२ ) । अत्र समवेतभोगकारणत्वे सति असमवेतभोगकारणत्वं नियतत्वशब्दार्थः । द्वितीयार्थो निरूपितत्वम् । तस्य च समवेतत्वद्वयेन्वयः । पञ्चम्यर्थः प्रयुक्तत्वम् । तस्य चानन्तत्वेन्वयः । तथा च तत्तदात्मसमवेतभोगजनकत्वविशिष्टतत्तदात्मासमवेतभोगजनकत्वप्रयुक्तानन्तत्ववन्मनः इति वाक्यार्थः ( वाक्य० पृ० ७ ) । तच्च प्रतिजीवं भिन्नम् ( त० कौ० ) प्रतिशरीरमेकैकमेव ( वै० उ० ३।२।३ ) । अत्र प्रमाणम् प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ( वै० ३।२।३ ) इति । प्रयत्नज्ञानायौगपद्यवचनात्प्रतिशरीरमेकत्वं सिद्धम् । अत एव पृथक्त्वम् ( प्रशस्त० ) । मनसो विभुत्वाङ्गीकारे आत्मनो मनसा संयोगस्य ज्ञानकारणत्वानुपपत्तिः इति दूषणं बोध्यम् । इदमत्राकूतम् । आत्मा विभुः इति सिद्धान्तः । तथा च मनसोपि विभुत्वाङ्गीकारे विभुद्वयस्यापि संयोगापत्तिः । न च विभुद्वयसंयोगोस्तु इति वाच्यम् । तादृशसंयोगस्य सर्वदा सर्वत्र सत्त्वप्राप्तौ सुषुप्तिरेवानुपपन्ना स्यात् । अतो मनोण्वेव इत्यङ्गीकर्तव्यम् इति । तथा सुखादीनां पादे मे सुखम् शिरसि मे वेदना इति प्रादेशिकत्वनियमार्थं प्रादेशिकासमवायिकारणम् आत्ममनःसंयोगरूपमङ्गीकर्तव्यम् । शब्दादौ विभुकार्ये तथैवावधारणात् इति । योगशास्त्रबोधितप्रत्याहारान्यथानुपपत्त्या च मनोणुत्वसिद्धिः इति केचिदाहुः ( न्या० सि० दी० पृ० २१ ) । तथा मनो नित्यम् । तत्र प्रमाणं सूत्रम् तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ( वै० ३।२।२ ) इति

द्रव्यम् । तथा मनो न प्रत्यक्षम् । अपि तु अनुमेयमेव । तथाहि । सुखदुःखोपलब्धयश्चक्षुरादिव्यतिरिक्तकरणसाध्याः असत्स्वपि चक्षुरादिषु जायमानत्वात् घटवत् इति । यच्च सुखाद्युपलब्धिकारणम् तन्मनः ( त० भा० प्रमेयनि० पृ० ३२ ) । अथवा सत्यप्यात्मेन्द्रियार्थसांनिध्ये ज्ञानसुखादीनामभूत्वोत्पत्तिदर्शनात् कारणान्तरमनुमीयते । श्रोत्राद्यव्यापारे स्मृत्युत्पत्तिदर्शनात् बाह्येन्द्रियैरगृहीतसुखादिग्राहकान्तराभावाच्चेति ( प्रशस्त० मनोनि० पृ० २३ ) । आर्हतास्तु भौतिका एव परमाणवः अणवो वा मनांसि इत्याहुः । वायुरेव मनः इत्यपि केचिदाहुः ( गौ० वृ० ३।१४० ) । नव्यास्तु अनुद्भूतविशेषगुणवदसमवेतभूतमेव मन इत्याहुः ( राम० १ पृ० ११८ ) । मनो विभु इति मीमांसका आहुः । तन्मते मनसो विभुत्वे प्रमाणमनुमानम् । तच्च मनो विभु निस्पर्शद्रव्यत्वात् आकाशवत् इति । जातेर्नियतसंस्थानव्यङ्ग्यत्वात् मनसि च संस्थानाभावान्मनस्त्वं न जातिः । किंतु मनस्त्वं च आत्मान्यत्वे सति ज्ञानासमवायिकारणसंयोगाश्रयत्वम् ( न्या० म० १।१४ ) । अथवा मनो विभु विशेषगुणशून्यद्रव्यत्वात्कालवत् इति । यद्वा मनो विभु ज्ञानासमवायिकारणसंयोगाधारत्वात् आत्मवत् इति ( वै० उ० ३।२।१ ) । मनो नेन्द्रियम् इति मायावादिनो वेदान्तिनो वदन्ति । न्यायनये मनस्यष्टौ गुणास्तिष्ठन्ति संख्या अणुपरिमाणम् पृथक्त्वम् संयोगः विभागः परत्वम् अपरत्वम् वेगश्चेति ( वै० ३।२।२–३ ) ( प्रशस्त० मनोनि० पृ० २३ ) ( त० भा० ) ( न्या० म० ) ( भा० प० ) ( सि० च० ) । तथा च मनसः क्रियावत्त्वान्मूर्तत्वम् गुणवत्त्वाद्द्रव्यत्वम् प्रयत्नादृष्टपरिग्रहवशादाशुसंचारित्वम् ( प्रशस्त० पृ० २३–२४ ) इति । मायावादिनस्तु संकल्पविकल्पात्मकवृत्तिमदन्तःकरणं मन इत्याहुः । तच्च तन्मते सुखदुःखादीनामाधारः । अत्र श्रुतिं प्रमाणयन्ति मायावादिनः कामः संकल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव ( बृ० उ० १।५।३ ) इति । न्यायमते तु तदाधार आत्मैव इति भेदः । २ मनःशिलानामको धातुविशेषः इति भिषज आहुः ।

**मनःपर्यायः**—ईर्ष्यान्तरायज्ञानावरणक्षयोपशमे सति परमनोगतस्यार्थस्य स्फुटं परिच्छेदकं ज्ञानं मनःपर्यायः ( सर्व० सं० पृ० ६४ आर्ह० ) ।

**मननम्**—[ क ] अनुमितिवदस्यार्थोनुसंधेयः ( कु० १ ) । [ ख ] युक्तिभिरनुचिन्तनम् ( त० प्र० १ पृ० ८ ) ( म० प्र० पृ० १ ) ( नील० पृ० ५० ) । यथा आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ( बृ० उ० २।४।५ ) इत्यादौ इतरभेदानुमितिः ( प० च० पृ० २० ) । अत्र मननं च आत्मा इतरेभ्यो भिद्यते इत्यात्मन इतरभिन्नत्वेनानुमानम् ( नील० पृ० ५० ) । [ ग ] समस्तचिन्ताविषयं सिद्धिज्ञानं मननम् ( सर्व० सं० पृ० १६६ नकु० ) ।

**मनोग्राह्यगुणत्वम्**—प्रत्यक्षात्मविशेषगुणवृत्तिगुणत्वव्याप्यजातिमत्त्वम् ( प० मा० ) । तादृशी जातिश्च बुद्धित्वसुखत्वादिः । अत्र मनोग्राह्यत्वं तु मनोजन्यप्रत्यक्षविषयत्वम् । तच्च बुद्धित्वसुखत्वादौ सामान्ये जीवात्मनि च संगच्छते इति ज्ञेयम् ( मु० १ ) । मनोग्राह्यगुणाश्च बुद्धिसुखदुःखेच्छाद्वेषयत्नाः ( प० मा० ) ( भा० प० श्लो० ५८ ) ।

**मनोजवित्वम्**—निरतिशयशीघ्रकारित्वम् ( सर्व० सं० पृ० १६६ नकु० ) ।

**मन्त्रः**—१ ( वेदः ) [ क ] अनुष्ठानकारकद्रव्यदेवतादिलिङ्गस्मारको वेदभागः । यथा आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन इति अब्लिङ्गः ऋगादिमन्त्रः । अत्रापस्तम्बबौधायनसूत्रम् मन्त्रब्राह्मणयोर्वेदनामधेयम् इति । [ ख ] प्रयोगसमवेतार्थस्मारको मन्त्रः इति मीमांसका आहुः । ऋग्यजुःसामभेदादेते मन्त्रास्त्रिविधाः । अत्रेदं बोध्यम् । मन्त्राणामुच्चारणस्य प्रयोजनं च प्रयोगसमवेतार्थस्मरणमेव न त्वदृष्टम् ( धर्माधर्मौ ) । संभवति दृष्टफले अदृष्टफलकल्पनमन्याय्यम् इति न्यायात् । अत्र नियमः मन्त्रैरेवार्थोनुस्मर्तव्यः नान्येन ( लौ० भा० पृ० ३९ ) इति । एतादृशनियमस्य फलं त्वदृष्टमेव । एवं च मन्त्राणां प्रयोगविधिना सहैकवाक्यतया प्रामाण्यम् इति ज्ञेयम् । अत्र जैमिनिना मन्त्रलक्षणमुक्तम् तच्चोदकेषु मन्त्राख्या । अस्यार्थः । तत् कर्मसमवेतार्थस्मरणं चोदकं फलं येषां तेषु मन्त्राख्या मन्त्रनाम ( जै० सू० वृ० अ० २ पा० १ सू० ३० ) । प्रायिकमिदम् । वसन्ताय

कपिञ्जलानालभेत इत्यादिषु विध्यादिरूपेषु मन्त्रेष्वव्याप्तेः । किंतु याज्ञिकसमाख्यातं लक्षणं मन्त्राणां दूषणरहितं बोध्यमिति ( जै० सू० वृ० अ० २ पा० १ सू० ३० टि० ) । ते च मन्त्रा द्विविधाः वैदिकास्तान्त्रिकाश्च । वैदिकाश्च द्विविधाः प्रगीता अप्रगीताश्च । प्रगीताः सामानि । अप्रगीताश्च द्विविधाः छन्दोबद्धास्तद्विलक्षणाश्च ( सर्व० सं० पृ० ३६८ पात० ) । तान्त्रिकलक्षणं स्त्रीपुंनपुंसकभेदेन मन्त्रत्रैविध्यं मन्त्राणां दशविधः संस्कारः सर्वदर्शनसंग्रहे ( पृ० ३६८–३७० ) दृश्यः । [ ग ] कचित् प्रतिसूचितः शब्दः । यथा तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ( ऋ० १।१२६ ) इति । २ रहसि कर्तव्यावधारणार्थं गुप्तभाषणं मन्त्रः इति नीतिशास्त्रज्ञा वदन्ति ।

**मन्त्रेश्वरः**—तत्राष्टौ मण्डलिनः क्रोधाद्यास्तत्समाश्च वीरेशः । श्रीकण्ठः शतरुद्राः शतमित्यष्टादशाभ्यधिकम् ॥ ( सर्व० सं० पृ० १८६ शै० ) ।

**मन्थः**—द्रवद्रव्ये प्रक्षिप्य मथिताः सक्तवो मन्थः ( जै० न्या० अ० १० पा० ३ अधि० १ ) ।

**मन्थनम्**—उत्थानावच्छिन्नोन्मन्थनम् । यथा सुधां समुद्रं मथ्नातीत्यत्र धात्वर्थः । उन्मन्थनमालोडनम् । अत्र सुधोत्थानानुकूलं यत्समुद्रस्योन्मन्थनं तत्कर्ता इत्यर्थः । अत्रत्यगौणकर्मत्वादिविषयविशेषविचारस्तु दोहनादिशब्दव्याख्याने द्रष्टव्यः ।

**मन्दनम्**—उपहतपादेन्द्रियस्येव गमनम् ( सर्व० सं० पृ० १७० ) ।

**ममता**—१ स्वकीयत्वाभिमानः । यथा ममत्वं मम राज्यस्य ( देवीभाग० ) इत्यादौ । २ केचिद्वेदान्तिनस्तु अहंकारः । यथा वल्लभमते अहंताममतात्मकः संसारः इत्यादौ इत्यमन्यन्त । अत्र व्याकरणं बोध्यम् । षष्ठ्यर्थवृत्तेरस्मच्छब्दस्यार्थे मम इत्यव्ययम् । तदुत्तरं तल्प्रत्ययः । एवं च ममता इति रूपं सिद्ध्यति ।

**मरणम्**—[ क ] जीवनादृष्टनाशः । मरणं च धर्माधर्माधीनम् ( वै० उ० ६।२।१५ ) । तथा च सूत्रम् तत्संयोगो विभागः इति

(वै० ६।२।१५)। [ख] प्राणध्वंसः । [ग] चरमप्राणशरीर-संयोगध्वंसः (गौ० वृ० १।१।१९) (नील० पृ० ४२) (दि० १ पृ० २०) (वै० वि० ६।२।१५)। प्राणशरीरसंयोगे चरमत्वं च स्वसजातीयशरीरवृत्तिप्राणसंयोगप्रागभावानधिकरणत्वम् (राम० १ पृ० २०)। [घ] शरीरमनोविभागः (वै० उ० ६।२।१५)। यथा न जायते म्रियते वा कदाचित् (गीता० २।२०) इत्यादौ। उपात्तानां जातिविशिष्टदेहेन्द्रियमनोहंकारबुद्धिवेदनानां परित्यागो मरणम् इति सांख्या आहुः (सांख्य० कौ०)। स्कन्धनाशो मरणम् इति बौद्धा आहुः। केचित्तु देहात्मनोर्विच्छेदः प्राणवायोरुत्क्रमणरूपो व्यापार-विशेषो वा मरणम् इत्याहुः।

**मर्यादा**—१ [क] सीमा। सा द्विविधा कालरूपा देशरूपा च। तत्र कालरूपा यथा आरभ्य तस्यां दशमीं तु यावत् प्रपूजयेत्पर्वतराजपुत्रीम् इत्यादौ यावदर्थो मर्यादा। अत्र यावच्छब्देन पूजारूपक्रियायां शुक्ल-दशमीनिष्ठतादृशसीमात्वनिरूपकत्वं प्रत्याय्यते। तावतैवार्थतः शुक्लदशम्यां मर्यादात्वं लभ्यते। अत्र च प्रागभाव एव यावत्पदार्थः। द्वितीयार्थः प्रतियोगित्वम् अनुयोगित्वं वा। तत्र तत्प्रकृत्यर्थदशम्या अन्वयः। तावता दशमीप्रतियोगिकप्रागभावलाभः। तस्य स्वप्रतियोग्यवृत्तित्व-विशिष्टव्यापकतासंबन्धेन पूजारूपसमभिव्याहृतक्रियायामन्वयः (ग० व्यु० का० २ ख० २ पृ० ७५)। देशरूपा मर्यादा यथा काशीतः कौशिकीं यावद्याति इत्यादौ यावदर्थो मर्यादा। अत्र यावत्पदेन च कौशिक्यनधिकरणत्वे सति काशीपूर्वकौशिकीपश्चिमदेशव्यापकत्वं गमने प्रत्याय्यते। तत्र द्वितीयार्थोवधित्वम् अवधिमत्त्वं वा। तस्य च प्रतीची-त्वादावन्वयः। निष्कर्षः पूर्ववत्स्वयमूहनीयः (ग० व्यु० का० २ ख० २ पृ० ७६)। [ख] वैयाकरणास्तु स्थित्यनतिक्रमः। मर्यादा द्विविधा कालरूपा देशरूपा च। तत्राद्या कालरूपा यथा आमुक्तेः संसारः इत्यादावाङोर्थः। अत्र मुक्तिपदं तत्कालपरम्। मर्यादामर्यादि-भावसंबन्ध आङ्द्योत्यः पञ्चम्यर्थः। एवं च मुक्तिमर्यादकः संसारः इति

बोधः । संसारे मुक्तिकालप्रागभावाधिकरणनिरूपिततद्भिन्नकालावृत्तित्व-विशिष्टव्यापकताबोधस्त्वार्थः । कालगतमर्यादात्वं च स्वस्वोत्तरकालो-भयप्रागभावाधिकरणकालमवो यः समभिव्याहृतपदार्थः तदनधिकरणत्वम् ( ल० म० सुबर्थ० पृ० ११३ ) । द्वितीया देशरूपा यथा प्रयागा-त्प्रभृत्या काश्या वृष्टो देवः इत्यादौ देशे मर्यादा । अत्र प्रयागादिकाशी-मर्यादकवृष्टिकर्ता देवः इति बोधः । वृष्टौ प्रयागादिकाशीपश्चिमदेश-निरूपितस्वभिन्नावृत्तित्वसमानाधिकरणव्यापकताबोधस्त्वार्थः । अत्र देश-गतमर्यादात्वं तु स्वस्वोत्तरदेशयोः प्रयागतदाद्यन्तरालदेशवृत्तिसमभि-व्याहृतपदार्थवृष्ट्याद्यनधिकरणत्वम् इत्याहुः । २ न्यायपथस्थितिः इति नीतिशास्त्रज्ञा आहुः । ३ कूलम् इति काव्यज्ञा आहुः ।

**मलः**—१ आत्माश्रितो दुष्टभावो मलः । स च मिथ्याज्ञानादिभेदात्पञ्च-विधः । तदप्याह मिथ्याज्ञानमधर्मश्च सक्तिर्हेतुश्च्युतिस्तथा । पशुत्वमूलं पञ्चैते तन्त्रे हेया विविक्तितः ॥ ( सर्व० सं० पृ० १६३ नकु० ) । २ मलं वदन्ति कालस्य मासं कालविदोधिकम् ( पु० चि० पृ० १२ ) ।

**मलमासः**—चान्द्रमासो ह्यसंक्रान्तो मलमासः प्रकीर्तितः ( पु० चि० पृ० १२ ) ।

**मलिम्लुचः**—शुक्लप्रतिपदादिदर्शान्तमासमतिक्रम्य सूर्यो राश्यन्तरं गच्छति तदा पूर्वो मलिम्लुचः द्वितीयः संक्रान्तियुक्तः प्राकृतः । इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः । अग्नीषोमौ स्थितौ मध्ये समाप्तौ पितृ-सोमकौ ॥ तमतिक्रम्य तु यदा रविर्गच्छेत्कदाचन । आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः ॥ ( पु० चि० पृ० १२ ) ।

**महती**—भरणी पितृपक्षे या महती परिकीर्तिता ( पु० चि० पृ० ३८५ ) ।

**महत्तत्त्वम्**—मूलप्रकृतेर्बुद्धिरूपः परिणामविशेषः ( सां० का० ) ।

**महत्त्वम्**—१ ( परिमाणम् ) इदं महत् इति प्रतीतिसाक्षिकः परिमाण-विशेषः । यथा महत्त्वं षड्विधे हेतुः ( भा० प० श्लो० ५९ ) इत्यादौ । तल्लक्षणं च मानव्यवहारासाधारणकारणत्वम् । द्रव्यसाक्षात्कारकारण-

विषयनिष्ठसामान्यगुणत्वं वा (वै० उ० ७।१।८)। अपकर्षानाश्रयपरिमाणत्वं वा। महत्त्वं द्विविधम् अवान्तरमहत्त्वम् परममहत्त्वं च। तत्राद्यम् त्रसरेणुमारभ्य महावयविपर्यन्तद्रव्येषु वर्तते। षड्विधे द्रव्यप्रत्यक्षे कारणम् अनित्यं च। इदं तु नातीन्द्रियम्। किं तु प्रत्यक्षविषयो भवति। तथा च सूत्रम् अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते (वै० ७।१।८) इति। तस्य कारणत्वं चोक्तम् द्रव्यप्रत्यक्षतायां रूपवत् परिमाणमपि कारणम्। न हि महत्त्वमन्तरेण द्रव्यं प्रत्यक्षं भवति (वै० उ० ७।१।८)। द्वितीयं तु विभुचतुष्टये वर्तते। अतीन्द्रियम् नित्यं च। संयोगविशेष एव महत्त्वम् इति नव्यनास्तिका आहुः (प० मा०)। हिरण्यगर्भस्य लिङ्गशरीरधर्मः इति वेदान्तिन आहुः।

**महाकालः**—१ (कालः) [क] अनवच्छिन्नः कालः। [ख] उपाध्यविशिष्टकालः। यथा कालो घटवान् कालपरिमाणादित्यादौ हेत्वधिकरणस्य महाकालस्य जगदाधारतया घटाधारत्वेपि महाकाले महाकालभेदाभावेन महाकालान्यत्वविशिष्टघटानाधारत्वान्महाकालान्यत्वविशिष्टघटाभावोपि प्रतियोगिव्यधिकरणो भवति (मु० २ पृ० १४५ व्याप्तिलक्षणे) इत्यादौ महाकालः। [ग] अखण्डकालः। २ शिवः इति पौराणिका आहुः। ३ भैरवविशेषश्च इति तन्त्रज्ञा आहुः।

**महाजया**—शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः। महाजया तदा स्याद्धि सप्तमी भास्करप्रिया॥ (पु० चि० पृ० १०५)।

**महानन्दा**—माघमासे तु या शुक्ला नवमी लोकपूजिता। महानन्देति सा प्रोक्ता सदानन्दकरी नृणाम्॥ (पु० चि० पृ० १४२)।

**महानवमी**—अश्वयुक्छुक्लपक्षस्य अष्टमी मूलसंयुता। सा महानवमी नाम त्रैलोक्येपि सुदुर्लभा॥ (पु० चि० पृ० '५९)।

**महापुराणम्**—व्यासकृतः पुराणविशेषः। यथा श्रीमद्भागवतम्। तल्लक्षणं च सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषां च पालनम्। कर्मणां वासना वार्ता मनूनां च क्रमेण च॥ वर्णनं प्रलयानां च मोक्षस्य च निरूपणम्।

उत्कीर्तनं हरेरेव देवानां च पृथक् पृथक् ॥ महापुराणं विज्ञेयमेकादशकलक्षणम् ( ब्रह्मवै० ज० अ० १३२ ) इति ।

**महाप्रलयः**—( प्रलयः ) [ क ] चरमसंयोगनाशः ( ग० सिद्धा० ) । [ ख ] सर्वभावकार्यध्वंसः ( त० दी० १ पृ० १० ) । केचित्तु पौराणिकादयः जन्यभावानधिकरणकालः इत्याहुः । तस्योत्पत्तिनियमस्तु महान् प्रलयो ब्रह्मणः स्वमानेन शतवर्षावसाने जायते इति । अत्रेदं बोध्यम् । महाप्रलयानन्तरं न सृष्टिः । सर्वमुक्तौ सर्वोत्पत्तिनिमित्तस्यादृष्टस्यापायात् । सर्वभोक्त्रपवृक्तौ प्रयोजनाभावाच्च । न हि बीजप्रयोजनाभ्यां विना कार्योत्पत्तिः इति ( प० मा० ) । महाप्रलयो न प्रमाणसिद्धः इति नव्यनैयायिका आहुः । अत्राधिकं तु प्रलयशब्दे द्रष्टव्यम् ।

**महामाघी**—मेषराशौ यदा सौरिः सिंहे चन्द्रबृहस्पती । भास्करः श्रवणर्क्षे स्यान्महामाघी च सा स्मृता ॥ ( पु० चि० पृ० ३१४ ) ।

**महालयः**—भाद्रपदापरपक्षः ( पु० चि० पृ० २१ ) ।

**महावाक्यम्**—१ [ क ] स्वघटकानेकनामलभ्यतादृशार्थबोधकं वाक्यम् । अत्र तादृशार्थबोधस्तु तत्तदर्थावच्छिन्नविषयताशाली इति बोध्यम् ( श० प्र० श्लो० ३० टी० पृ० ४४ ) । यथा महावाक्यार्थबुद्धिं प्रति खण्डवाक्यार्थज्ञानं कारणम् इति कार्यकारणभावे वक्तव्ये पञ्चावयवोपेतन्यायवाक्यम् । अत्र प्रतिज्ञादिघटितपञ्चावयवोपेतमहावाक्यजनितसमुदितार्थविषयकशाब्दबुद्धौ प्रतिज्ञादिरूपावान्तरवाक्यार्थज्ञानं कारणम् इति कार्यकारणभावो द्रष्टव्यः । अत्रोच्यते भर्तृहरिणा स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहृत्य जायते ॥ ( वाक्यपदीये ) इति । [ ख ] परस्परसंबद्धार्थकं वाक्यसमुदायरूपमेकवाक्यम् । यथा मीमांसकानां नये दर्शपूर्णमासाभ्यां यजेत ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यादिप्रधानवाक्यस्य गुणविधिना सहैकवाक्यत्वम् । २ अखण्डार्थबोधकम् । यथा मायावाद्यद्वैतमते तत्त्वमसि ब्रह्माहमस्मि इत्यादीनि द्वादश महावाक्यानि । साहित्यशास्त्रज्ञास्तु वाक्योच्चयो महावाक्यम् । यथा रामायणमहाभारतरघुवंशादि ( सा० द० उ० २ श्लो० ७ ) इत्याहुः ।

**महावारुणी**—चैत्रकृष्णत्रयोदश्यां शनिवारयोगे सति शततारकानक्षत्रं चेन्महावारुणी। वारुणेन समायुक्ता मधौ कृष्णत्रयोदशी। गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा॥ शनिवारसमायुक्ता सा महावारुणी स्मृता। गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा॥ शुभयोगसमायुक्ता शनौ शतभिषा यदि। महामहेति विख्याता त्रिकोटिकुलमुद्धरेत्॥ (पु० चि० पृ० २३१)।

**महाषष्ठी**—वृश्चिकार्के शुक्लषष्ठी भौमवारेप्युपस्थिते। महाषष्ठीति सा प्रोक्ता सर्वपापहरा तिथिः॥ (पु० चि० पृ० १०२)।

**माध्यमिकः**—(बौद्धः) गुरूक्तस्याकरणादुत्तमाः पर्यनुयोगस्याकरणादधमाश्च। अतस्तेषां माध्यमिका इति प्रसिद्धिः (सर्व० सं० पृ० ३० बौ०)।

**मानः**—१ [क] (दोषः) आत्मन्यविद्यमानगुणारोपेणोत्कर्षधीः (गौ० वृ० ४।१।३)। यथा पराभवोप्युत्सव एव मानिनाम् (किरा० स० १ श्लो० ४१) इत्यादौ मानः। [ख] अभिमानः इति केचन मन्यन्ते। २ परिमाणम्। यथा मानव्यवहारासाधारणकारणं परिमाणम् इत्यादौ हस्ततुलाप्रस्थादिरूपो द्रव्यपरिच्छेदो मानम्। ३ प्रमाणम्। यथा मानाधीना मेयसिद्धिः इत्यादौ मानम्। ४ गानाङ्गे तालक्रियायां तालविरामोपलक्षितः कालव्यापारो मानम् इति गायका आहुः। ५ आलंकारिकास्तु अनुरक्तदम्पत्योरवस्थाविशेषः शृङ्गाराङ्गभूतः कोपः। तथा चोक्तम्। मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः। द्वयोः प्रणयमानः स्यात्प्रमोदे सुमहत्यपि॥ प्रेम्णः कुटिलगामित्वात्कोपो यः कारणं विना (सा० द० प० ३ श्लो० २१८) इति। स्वाभीष्टाश्लेषवीक्षादिविरोधी मान उच्यते इति च। यथा मुञ्च मयि मानमनिदानम् (जयदेवः) इत्यादौ इत्याहुः। ६ संमानः (आदरः) इति काव्यज्ञा आहुः।

**मानसिकः**—(नमस्कारः)। अत्र मानसिकत्वं च मानसत्वव्याप्यो जातिविशेषः (मू० म० १ पृ० १०५)। अयं मत्त उत्कृष्टः अहमस्मादपकृष्टः इति ज्ञानविशेषः (त० प्र० १ पृ० ३–४)। यथा प्रणम्य परमात्मानं जानकीनाथशर्मणा (न्या० म० १ पृ० १) इत्यादौ

भगवन्नत्यात्मकं मङ्गलम् । इदं च नमस्कारसामान्यस्वरूपम् इति तर्कप्रकाशकृतोभिप्रायः इति तद्ग्रन्थात्प्रतिभाति ।

**माया**—१ (दोषः) परवञ्चनेच्छा (गौ० वृ० ४।१।३)। यथा मायावादतमोव्याप्तं जगत् इत्यादौ त्वद्व्याख्यासिंहनादे सपदि ददृशिरे मायिगोमायवस्ते (वायुस्तुतौ) इत्यादौ च माया । २ भगवदिच्छा (भाग० टी० विज० ११।२।३७)। यथा यन्माययातो बुध आभजेत्तम् (भाग० ११।२।३७) (ब्र० सू० मध्व० भा० १।४।२५) इत्यादौ । यथा वा मम माया दुरत्यया (गीता० ७।१४) इत्यादौ । तदुक्तम् मायेत्युक्ता प्रकृष्टत्वात्प्रकृष्टे हि मयाभिधा (सर्व० सं० पृ० १४१ पूर्ण०) इति मध्वमतानुयायिनः प्राहुः । ३ भगवच्छक्तिविशेषः इति वल्लभीया मन्यन्ते । ४ मायाशब्दो विचित्रार्थसर्गकरत्रिगुणात्मकप्रकृत्यभिधायको नानिर्वचनीयाज्ञानवचनः इति रामानुजीयाः (सर्व० सं० पृ० १०० रामा०)। ५ मायावादिवेदान्तिनस्तु मिथ्याबुद्धिहेतुभूतमज्ञानं माया । तच्चाज्ञानमीश्वरोपाधिः । मात्यस्यां शक्त्या प्रलये सर्वं जगत् सृष्टौ व्यक्तिमायातीति माया (सर्व० सं० पृ० १८९ शैव०) इति वदन्ति । ६ आदिमाया आदिशक्ति चण्डी इत्याद्यपरनाम्नी कालिका इति शाक्ता आहुः । ७ कापट्यम् । ८ दम्भः इति काव्यज्ञा वदन्ति ।

**मायामात्रम्**— माया भगवदिच्छा । सैव मानत्राणकर्त्री यस्य तन्मायामात्रम् (सर्व० सं० पृ० १४१ पूर्णप्र०)।

**मारुतम्**—(नक्षत्रम्) स्वाती (पु० चि० पृ० ३५७)।

**मार्गः**—क्षणिकाः सर्वसंस्कारा इति या वासना स्थिरा । स मार्ग इति विज्ञेयः स च मोक्षोभिधीयते ॥ (सर्व० सं० पृ० ४६ बौ०)।

**मार्जनम्**—श्लक्ष्णीकरणम् (जै० न्या० अ० १० पा० १ अधि० ११)।

**मासः**—प्रथमः सावनो मासो द्वितीयश्चान्द्र उच्यते । नाक्षत्रस्तु तृतीयः स्यात्सौरो मासश्चतुर्थकः ॥ (पु० चि० पृ० ३)। चन्द्रमाः पौर्णमास्यन्ते भास्करादतिरिच्यते । राशिषट्कं तथा राम मासार्धेन न संशयः ॥

भागद्वादशकेनैव तिथ्यां तिथ्यां क्रमेण तु। चन्द्रमाः कृष्णपक्षान्ते सूर्येण सह युज्यते॥ संनिकर्षादथारभ्य संनिकर्षमथापरम्। चन्द्रार्कयोर्बुधैर्मासश्चान्द्र इत्यभिधीयते॥ सावने तु तथा मासि त्रिंशत्सूर्योदयाः स्मृताः। आदित्यराशिभागेन सौरो मासः प्रकीर्तितः॥ सर्वर्क्षपरिवर्तैस्तु नाक्षत्रो मास उच्यते (पु० चि० पृ० ३)। अधिमासे तु षष्टिदिवसात्मको मासः। तदुक्तम् षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः। पूर्वस्मिन्देवकार्याणि पितृकार्याणि चोभयोः॥ (पु० चि० पृ० २०) इति।

**मासादिः**—इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः (पु० चि० पृ० १२)।

**माहिष्यः**—(रथकारशब्दे दृश्यम्)।

**मितिः**—१ मानम्। २ ज्ञानम्। ३ अवच्छेदः। ४ विक्षेपः (वाच०)।

**मित्रसप्तमी**—यद्विष्णोर्दक्षिणं नेत्रं तदेवाकृतिमत्पुनः। अदितेः कश्यपाज्जातो मित्रो नाम दिवाकरः॥ सप्तम्यां तेन सा ख्याता लोकेस्मिन्मित्रसप्तमी (पु० चि० पृ० १०४)।

**मिथ्याज्ञानम्**—१ भ्रमः (त० सं०)। अनात्मनि देहादावात्मबुद्धिः (सर्व० सं० पृ० २४४ अक्ष०)। २ नास्तिकत्वम् (अमरः)। यथा मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम् (अणुवे०) इत्यादौ।

**मिथ्यात्वम्**—१ कालासंबन्धित्वम्। यथा शशविषाणकूर्मरोमवन्ध्यापुत्रादीनां मिथ्यात्वम्। २ तुच्छत्वम् इति माध्वाः प्राहुः। ३ निरुपाख्यत्वं (निःस्वरूपत्वम्) इति बौद्धा आहुः। ४ बाधज्ञाननिवर्त्यत्वम्। यथा ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः इत्यादौ इति मायावादिवेदान्तिनः शंकरभारतीप्रभृतयः मन्यन्ते।

**मिश्रः**—जीवस्य उभयात्मा भावः (सर्व० सं० पृ० ६८ आर्ह०)।

**मिषम्**—१ पराभिभवेच्छा। २ छलम्। ३ स्पर्धनम् (वाच०)। ४ प्रयोजनान्तरप्रवृत्तस्य प्रयोजनान्तरोद्भावनम्। एवं व्याजादिशब्दोपि व्याख्येयः।

**मीमांसकः**—१ [क] मीमांसाशास्त्रज्ञः तदध्येता वा। यथा कुमारिलतुतातभट्टप्रभाकरादयो मीमांसकाः। अत्रार्थे व्युत्पत्तिः मीमांसां वेत्ति

अधीते वा मीमांसकः इति । क्रमादिभ्यो वुन् ( पा० ४।२।६१ ) इत्यनेन वुन् । [ ख ] कर्मैव वेदमुख्यतात्पर्यम् इति यो मन्यते सः । यथा महर्षिर्जैमिनिः । मीमांसकमते कर्मैवेश्वरः । तदन्यश्चेतनरूपो भगवान् नास्ति । स्वर्गादिकमेव पुरुषार्थः । मन्त्रमयी मन्त्रगतलिङ्गलिङ्गित अग्नीन्द्रादिर्वा देवता । अर्थवादो न प्रमाणम् इति । तत्र मीमांसकैकदेशिनस्तु यथा भूपालः परिचारकृतकर्मणः फलदाता तथा वेदोक्तकृतकर्मणः फलदातेश्वर एव इति समूचिरे ( सि० च० १ पृ० ११ ) । अत्रेदं ज्ञेयम् अर्वाचीना मीमांसकाश्च त्रयः (१) प्रभाकरापरनामा गुरुः (२) भट्टः तुतातः कुमारिलो वा (३) मुरारिमिश्रश्च इति । वेदे भागत्रयम् कर्मकाण्डः उपासनाकाण्डः ज्ञानकाण्डश्चेति । तत्र कर्मकाण्डे द्वादशाध्यायात्मकं सूत्रग्रन्थं प्रणिनाय जैमिनिः । कर्मकाण्डोपयोगस्तु ज्ञानयोगेन सांख्यानां कर्मयोगेण योगिनाम् इति भगवद्गीतया तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन तपसा अनाशकेन इति श्रुत्या च कर्मणां विविदिषाहेतुत्वोक्तेः विविदिषायामेव कर्मकाण्डप्रतिपाद्यकर्मण उपयोगः इति केचिद्वदन्ति ( वाच० ) । वयं तु कर्मणा ज्ञानमातनोति इत्यादिवचननिचयेन कर्मणोप्यपूर्वद्वारा भगवज्ज्ञानतत्प्रसादप्राप्तिहेतुत्वमस्ति इति बाहुल्येन तदुपयोगः इति भगवदपरोक्षज्ञानानन्तरमपि कृतात्कर्मणो मोक्षफले सौकर्यविशेषो भवति इति कर्मणो बहूपयोगः इति च मन्यामहे । २ सिद्धान्तकारकः । अत्रार्थे मीमांसकशब्दे व्याकरणम् मानविचारे । स्वार्थे सन् । ण्वुल् इति ज्ञेयम् ।

**मीमांसा**—१ लाघवज्ञानात्मकस्तर्कः ( दि० ४ पृ० १८९ ) । मीमांसाशब्दे व्याकरणम् मानविचारे । स्वार्थे सन् । अप्रत्ययात् ( पा० ३।३।१०२ ) इत्यनेन स्त्रियामप्रत्ययः इति ज्ञेयम् । २ विचारपूर्वकतत्त्वनिर्णयः । यथा धर्ममीमांसा ब्रह्ममीमांसा इत्यादौ वेदार्थस्य मीमांसा । विचारः इत्यपि केचिद्वदन्ति । ३ तादृशतत्त्वनिर्णयप्रतिपादको ग्रन्थविशेषः ( शास्त्रविशेषः ) । स च कर्मब्रह्मविषयभेदेन द्विविधः । तत्राद्यः कर्मविषयकसंशयनिवारको ग्रन्थो महर्षिजैमिनिना प्रणीतः । स च

अथातो धर्मजिज्ञासा इत्यारभ्य अन्वाहार्ये च दर्शनात् एतत्पर्यन्तो द्वादशाध्याययुतः सूत्रोपनिबद्धः पूर्वमीमांसात्वेन प्रसिद्धोस्ति । द्वितीयस्तु ब्रह्मविषयकसंशयनिवारको ग्रन्थो विष्ण्ववतारेण सत्यवतीसुतश्रीवेदव्यासेन निर्मितः । स च ॐ अथातो ब्रह्मजिज्ञासा ॐ इत्यारभ्य ॐ न पुनरावर्तते ॐ इत्यन्तः सूत्रोपनिबद्धोध्यायचतुष्कसमेतो वेदान्तत्वेनोत्तरमीमांसात्वेन च प्रसिद्धोस्ति इति ।

**मुक्तः**—भवान्तरप्राप्तिविधुरः ( सर्व० सं० पृ० ७१ आर्ह० ) । अन्यत्र चोक्तम् विद्यादिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते ( सर्व० सं० पृ० १९९ प्रत्य० ) ।

**मुक्तत्वम्**—जीवत्वं नाम संसारित्वम् । तद्विपरीतं मुक्तत्वम् ( सर्व० सं० पृ० २०६ रसे० ) ।

**मुक्तिः**—१ संसारोपरमः । २ पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ( सर्व० सं० पृ० ३८७ पात० ) । ३ नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिः ( सर्व० सं० पृ० २५० अक्ष० ) । ४ प्रकृतिपुरुषान्यत्वख्यातौ प्रकृत्युपरमे पुरुषस्य स्वरूपेणावस्थानं मुक्तिः ( सर्व० सं० पृ० २४९ अक्षपा० ) । ५ आवरणमुक्तिर्मुक्तिः ( सर्व० सं० पृ० २४८ अक्षपा० ) । ६ लब्धानन्तचतुष्कस्य लोकागूढस्य चात्मनः । क्षीणाष्टकर्मणो मुक्तिर्निर्व्यावृत्तिर्जिनोदिता ॥ ( सर्व० सं० पृ० ८८ आर्ह० ) । ७ गतसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्यात्मन उपरिदेशावस्थानं मुक्तिः ( सर्व० सं० पृ० ८१ आर्ह० ) । ८ रागादिज्ञानसंतानवासनोच्छेदसंभवा । चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता ॥ ( सर्व० सं० पृ० ४६ बौ० ) । ९ मोचनम् निःसरणं वा मुक्तिः इति काव्यज्ञा आहुः ।

**मुखम्**—नाडिकापञ्चकम् । पञ्चनाडीपरिमितं मुखम् (पुच्छशब्दे दृश्यम्) ।

**मुख्यः**—१ प्रथमकल्पः । २ श्रेष्ठः । ३ प्रधानम् । अत्रायं विशेषो ज्ञेयः । कारणनिष्ठं मुख्यत्वं च स्वेतरासाधारणकारणककार्यकभिन्नत्वम् । ( त० प्र० १ पृ० ७ ) । यथा मुक्तिं प्रति तत्त्वज्ञानरूपकारणस्य

मुख्यत्वम् । फलनिष्ठं मुख्यत्वं च प्रवृत्त्युद्देश्यत्वम् (राम० ) । यथा सुखसंवेदनरूपफलस्य मुख्यत्वम् । विशेष्यतानिष्ठं मुख्यत्वं च प्रकारतान्यत्वम् ( त० प्र० २ ) इति विज्ञेयम् । यथा घटवद्भूतलम् इति ज्ञाने भूतलनिष्ठविशेष्यताया मुख्यत्वम् । एवम् अन्यनिष्ठान्यपि मुख्यत्वानि स्वयमूह्यानि ।

**मुनिः**—सप्तमी ( पु० चि० पृ० ३७ ) ।

**मूढम्**—( चित्तम् ) तमःसमुद्रे मग्नं निद्रावृत्तिमच्चित्तं मूढमिति गीयते ( सर्व० सं० पृ० ३५४ पात० ) ।

**मूर्छनम्**—१ समानजात्योः समानजवयोर्वा वाय्वोर्विरुद्धदिक्क्रिययोः संनिपातः ( संयोगविशेषः ) ( प्रशस्त० वायुनि० पृ० १८ ) । यथा वायोर्वायुसंमूर्छनं नानात्वलिङ्गम् ( वै० २।१।१४ ) इत्यादौ । संमूर्छनं तृणतूलादीनामूर्ध्वगमनानुकूलं तत्संपादकतयानुमीयमानं वायुनानात्वे लिङ्गम् इति सूत्रार्थः ( वै० वि० २।१।१४ ) । २ वेदान्तिनस्तु मोहः । स च जाग्रत्स्वप्नसुषुप्त्येतत्त्रयावस्थातिरिक्तो बाह्येन्द्रियव्यापारशून्यावस्थाविशेषः । यथा ॐ मुग्धेर्धसंपत्तिः परिशेषात् ॐ (ब्र० सू० ३।२।१०) इत्यादौ मोहो मूर्छा इत्याहुः । मूर्छाभवने कारणमुच्यते भिषग्भिः । क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः । वेगाघातादभिघाताद्धीनसत्त्वस्य वा पुनः ॥ करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च । निविशन्ते यदा दोषास्तदा मूर्छन्ति मानवाः ॥ ( भावप्र० ) इति । अस्या अवस्थाया जाग्रदाद्यवस्थात्रयातिरिक्तत्वेन तुरीयत्वे मानं तु दुःखानुसंधानमेव इति । मोहावस्थायां जीवस्य परमेश्वरेर्धप्राप्तिः इति च विज्ञेयम् ( मध्व० भा० ३।२।१० ) । ३ गानाङ्गभूतः स्वरारोहावरोहक्रमविशेषः । यथा स्फुटीभवद्ग्रामविशेषमूर्छनाम् ( माघ० स० १ श्लो० १० ) इत्यादौ इति गायका वदन्ति । अत्र मूर्छनालक्षणमुच्यते । स्वरः संमूर्छितो यत्र रागतां प्रतिपद्यते । मूर्छनामिति तां प्राहुः कवयो ग्रामसंभवाम् ॥ इति ( वाच० ) । क्रमात्स्वराणां *सप्तानामारोहश्चावरोहणम् । सा मूर्छेत्युच्यते ग्रामस्था एताः सप्त सप्त* च ॥ इति । ग्रामत्रयेपि प्रत्येकं सप्त सप्त मूर्छना इत्येकविंशतिर्मूर्छना भवन्ति ( माघ-टी० स० १ श्लो० १० ) । अन्यच्च सप्त स्वरास्त्रयो ग्रामा

मूर्छनास्त्वेकविंशतिः । तालास्त्वेकोनपञ्चाशदित्येतत्स्वरमण्डलम् ॥ इति (पञ्चतन्त्रे) । ४ काव्यज्ञास्तु प्रसरणम् । यथा शिलोच्चये मूर्छति मारुतस्य (रघु० २।३४) इत्यादौ इत्याहुः ।

**मूर्छितः**—(पारदः) नानावर्णो भवेत्सूतो विहाय घनचापलम् । लक्षणं दृश्यते यस्य मूर्छितं तं वदन्ति हि ॥ (सर्व० सं० पृ० २०४ रसेश्व०) ।

**मूर्तगुणत्वम्**—[क] अमूर्तगुणवृत्तिः संस्कारत्वान्या गुणत्वव्याप्या च या जातिः संख्यात्वबुद्धित्वादिः तच्छून्यगुणत्वम् । अत्र शून्यान्तेन संख्यादेः बुद्ध्यादेश्च व्युदासः । वेगस्थितिस्थापकोपसंग्रहाय संस्कारत्वान्य इति विशेषणं दत्तम् (दि० गु० पृ० १९२) । [ख] अमूर्तावृत्तिगुणत्वम् । अमूर्तावृत्तिगुणास्तु रूपम् रसः गन्धः स्पर्शः परत्वम् अपरत्वम् गुरुत्वम् द्रवत्वम् स्नेहः वेगः स्थितिस्थापकश्चेति (भा० प० गु० श्लो० ८७–८८) । अथवा [ग] मूर्तत्वव्याप्यतावच्छेदकगुणवृत्तिजातिमत्त्वम् । अत्रावच्छेदकान्तेन संख्यात्वादेः वृत्तित्वान्तेन कर्मत्वादेः व्युदासः (दि० गु० पृ० १९२) । [घ] केचित्तु विभ्ववृत्तिसंख्यादिपञ्चकभिन्नगुणत्वम् इत्याहुः (ल० व०) ।

**मूर्तम्**—(द्रव्यम्) १ क्रियावद्द्रव्यम् । यथा वायुर्मूर्तः । मूर्तानि पञ्च पृथिवी आपः तेजः वायुः मनश्चेति (न्या० बो० १ पृ० ३) (वाक्य० १ पृ० ५) (भा० प० श्लो० २५) । लक्षणं तु मूर्तत्वमेव । तच्च अपकृष्टपरिमाणवत्त्वम् (मु० १ पृ० ५७) । अविभुवृत्तिपरिमाणवत्त्वमित्यर्थः । तेन परमाणौ नाव्याप्तिः । अथवा परिच्छिन्नपरिमाणवत्त्वम् (त० दी० १) । वेगवत्त्वं क्रियावत्त्वं वा (न्या० बो० १ पृ० ३) (वाक्य० १ पृ० ५) । इयत्तावच्छिन्नपरिमाणयोगः इति प्राञ्च आहुः । मूर्तत्वं जातिः इति नव्या आहुः (प० मा०) । सा च क्रियाजनकतावच्छेदकतया सिद्ध्यति इति ज्ञेयम् (दि० १) । मूर्तद्रव्यमात्रवृत्तिगुणास्तु परत्वम् अपरत्वम् परममहत्त्वभिन्नं परिमाणं चेति (भा० प० श्लो० २५) । अत्रेदं बोध्यम् । निबिडानामेव मूर्तानां समानदेशत्वं विरुद्धम् इति नियमः । तेन चक्षुरा-

लोकयोर्मूर्तयोरेकदेशवृत्तित्वेपि न तादृशनियमभङ्गः । तयोरनिबिडत्वात् इति ( त० प्र० १ ) । २ कठिनम् । ३ मूढम् इति काव्यज्ञा आहुः ।

**मूर्तामूर्तगुणत्वम्**—[ क ] कालवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वम् । तेन मूर्तमात्रवृत्तिसंख्यादौ नाव्याप्तिः ( दि० गु० पृ० १९२ ) । मूर्तामूर्तगुणाश्च संख्या परिमाणम् पृथक्त्वम् संयोगः विभागश्चेति ( भा० प० गु० श्लो० ८९ ) । [ ख ] द्रव्यत्वसमव्यापकतावच्छेदकजातिमत्त्वम् ( दि० गु० पृ० १९२ ) ।

**मूर्तिः**—१ व्यक्तिवदस्यार्थोनुसंधेयः । परे तु संस्थानविशेषः तद्वान् । यथा व्यक्तिर्गुणविशेषाश्रयो मूर्तिः (गौ० २।२।६६) इत्यादौ इत्याहुः । अन्ये तु अवच्छिन्नपरिमाणस्याश्रयः इत्याहुः (गौ० वृ० २।२।६६) । २ शब्दार्थौ काव्यस्य मूर्तिः इति काव्यशास्त्रज्ञा वदन्ति ( प्रतापरु० ) । ३ प्रतिमा इति पौराणिकाः संगिरन्ते । ४ काठिन्यम् इति पदार्थविज्ञानिन आहुः । ५ देहः इति काव्यज्ञजना जगुः ।

**मूलप्रकृतिः**—मूलं चासौ प्रकृतिश्च मूलप्रकृतिः । प्रधानपदेन वेदनीया केवला प्रकृतिर्मूलप्रकृतिः । नासावन्यस्य कस्यचिद्विकृतिः । प्रकरोतीति प्रकृतिरिति व्युत्पत्त्या सत्त्वरजस्तमोगुणानां साम्यावस्थाया अभिधानात् ( सर्व० सं० पृ० ३११ सांख्य० ) ।

**मृतः**—( पारदः ) आर्द्रत्वं च घनत्वं च तेजो गौरवचापलम् । यस्यैतानि न दृश्यन्ते तं विद्यान्मृतसूतकम् ॥ ( सर्व० सं० पृ० २०४ रसेश्व० ) ।

**मृतान्तरः**—योर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि । क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः ॥ ( मिताक्षरा अ० २ श्लो० ६९ ) ।

**मृदुत्वम्**—१ अवयवसंयोगविशेषः ( त० दी० १ पृ० ६ ) । २ स्पर्शविशेषः ( सि० च० ) । यथा शिरीषपक्ष्मैः कुरुकामिनीनां शरीरवल्ल्या सह मार्दवेन ( भार० च० ) इत्यादौ । कोमलत्वम् इति काव्यज्ञा वदन्ति । २ चित्रानुराधामृगरेवतीनक्षत्रवृत्तिधर्मः इति मौहूर्तिका आहुः ।

**मैत्रम्**—अनुराधा नक्षत्रम् ( मु० चि० पृ० ३५४ ) ।

**मोक्षः**—१ निःश्रेयसम् । मिथ्यादर्शनादीनां बन्धहेतूनां निरोधेभिनवकर्माभावान्निर्जराहेतुसंनिधानेनार्जितस्य कर्मणो निरसनादात्यन्तिककर्ममोक्षणं मोक्षः ( सर्व० सं० पृ० ८० आर्ह० ) इत्यार्हताः । आत्मोच्छेदो मोक्षः ( सर्व० सं० पृ० २४७ अक्ष० ) इति केचित् । स्वातन्त्र्यं मोक्षः ( सर्व० सं० पृ० २४९ अक्षपा० ) इत्यन्ये । अविद्यास्तमयो मोक्षः ( सर्व० सं० पृ० ४०२ शां० ) इत्यपरे । २ मोचनम् । यथा नीविमोक्षो हि मोक्षः ( सा० द० ) इत्यादौ इत्यालंकारिका आहुः । ३ मरणम् ( हेम० ) ।

**मोचनम्**—१ [ क ] द्रवद्रव्यविभागानुकूलक्रिया । यथा जलं मुञ्चति मेघ इत्यादौ । [ ख ] बहिःक्षरणावच्छिन्नव्यापारः ( श० प्र० श्लो० ७३ टी० पृ० ९८ ) । शिष्टं तु दोहनशब्दव्याख्याने द्रष्टव्यम् । २ मुक्तिः ( त्यागः ) । यथा रोगात्पापाद्वा मुच्यते इत्यादौ ।

**मोहः**—१ मिथ्याप्रतिपत्तिलक्षणः दोषः ( वात्स्या० ४।१।३ ) । यथा शरीरादावात्मभ्रमः ( त० दी० ) । तमोगुणप्रयोज्योन्तःकरणपरिणामविशेषः इति सांख्या आहुः । तत्स्वरूपं तु उपेक्षाविषयत्वम् । उपेक्षाविषयत्वं नाम मोहः ( सर्व० सं० पृ० ३२६ सां० ) । संसारहेत्वविद्याप्रयोज्यान्तःकरणवृत्तिविशेषः इति मायावादिन आहुः । भ्रान्तिसाधनमज्ञानम् इति मेदिनीकार आह । २ वेदान्तिनस्तु मूर्छा इत्याहुः। अत्राधिकं तु मूर्छनशब्दव्याख्याने द्रष्टव्यम् । ३ चित्तवैकल्यं मोहः ( मिता० अ० २ श्लो० २१४ ) । ४ दुःखम् ( शब्दर० ) ।

**मौनम्**—वाग्व्यापारराहित्यम् । यथा मौनं सर्वार्थसाधनम् इत्यादौ । अत्रोच्यते । उच्चारे मैथुने चैव प्रस्रावे दन्तधावने । स्नाने भोजनकाले च षट्सु मौनं समाचरेत् ॥ इति ( स्मृतिः ) ।

**म्लेच्छः**—१ अपशब्दः । अत्र प्रमाणं श्रुतिः म्लेच्छो ह वा नाम यदपशब्दः इति । २ नीचजातिः । यथा अशपत्तान्मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः (भाग० स्क० ९ अ० १६ श्लो० ३३) इत्यादौ किरातादिजातिः (अमरः)। तदुक्तम् गोमांसखादको यस्तु विरुद्धं बहु भाषते । सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते ॥ इति ( बौधायनः) ( वाच० ) । ३ पापरतः ( मेदिनी० ) ।

य.

**यकृत्**—दक्षिणपार्श्वस्थितो मांसविशेषः ( संगीतर० पृ० १९ ) ।

**यङ्**—( धात्वंशः प्रत्ययः ) १ [ क ] पौनःपुन्यम् । यथा पापच्यते इत्यादौ यङर्थः । अयं धातुप्रकृतिकः प्रत्ययो बोध्यः । पौनःपुन्यं च प्रकृतधात्वर्थजातीयक्रियोत्तरतादृशक्रियानन्तर्यरूपं प्रकृत्यर्थे विशेषणत्वेनान्वेति । तेन पाकोत्तरपाकानन्तर्यवत्पाककर्ता इत्येवं तत्र वाक्यार्थः । द्विःपक्तरि पुनः पक्तृत्वेपि न निरुक्तं पुनः पुनः पक्तृत्वम् । अतो न तत्र पापच्यते इति प्रयोगः ( श० प्र० श्लो० १०८ टी० पृ० १९३ ) । [ ख ] इदानींतनप्रकृत्यर्थसजातीयक्रियान्तरध्वंसकालीनत्वे सति वर्तमानादिकृतिविषयत्वम् । यथा पापच्यते इत्यादौ । अत्र इदानींतनत्वं च स्थूलकालमादायान्वेति इति विज्ञेयम् ( तर्का० ४ पृ० ११ ) । अत्रायं विवेकः । सत्यन्तदलमेव यङा प्रत्याय्यते । विशेष्यदलं त्वाख्यातेन बोध्यते । अतो यङो न विशिष्टवाचकत्वम् इति । २ कौटिल्यम् । यथा जङ्गम्यते चङ्क्रम्यते इत्यादौ यङोर्थः । अत्र गत्यर्थात् धातोः कौटिल्य एव यङ् विहितः । तेन कुटिलगतिमान् इत्येवं तत्र बोधः । शेषं पूर्ववत् । ३ निन्दितत्वम् । यथा लोलुप्यते चञ्चूर्यते जञ्जप्यते दन्दश्यते जेगिल्यते इत्यादौ निन्दितत्वं यङोर्थः । अत्र लुपसदचर० ( पाणि० सू० ३।१।२४ ) इति सूत्रेण गर्हायां यङ् विहितः । तेन गर्हितं लुम्पति चरति इत्यादिकोर्थः ।

**यज्**—( धातुः ) देवतोद्देश्यकद्रव्यत्यागरूपा क्रिया तदर्थः ( जै० सू० वृ० अ० ४ पा० २ सू० २७ ) ।

**यजतिः**—यागविशेषः । यथा यजतिषु येयजामहं करोति नानुयाजेषु ( श्रुतिः ) इत्यादौ । तल्लक्षणम् तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्यावन्तो यजतयः ( कात्या० श्रौ० सू० १।२।६ ) इति । अत्र कर्कभाष्यं दृश्यम् ।

**यजनम्**—यागवदस्यार्थोनुसंधेयः । तत्स्वरूपमुक्तं देवलेन पशुक्षीराज्यपुरोडाशसोमौषधिचरुप्रभृतिभिर्हविर्भिः खदिरपलाशाश्वत्थन्यग्रोधोदुम्बर-

प्रभृतिभिः समिद्भिः स्रुक्स्रुवोलूखलमुसलकुठारखनित्रयूपदारुदर्भचर्मग्रावपवित्रभाजनादिभिर्द्रव्योपकरणैः उद्गातृहोत्रध्वर्युब्रह्मादिभिर्ऋत्विग्भिः काम्यनैमित्तिकानां पक्षादिपूर्वकाणां यथोक्तदक्षिणानां समापनं यजनम् इति (श्रा० वि०) ।

**यजुः**—[ क ] वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि ( जै० न्या० अ० २ पा० १ अधि० १२ ) । शेषे यजुःशब्दः ( जै० सू० २।१।३५ ) इति । यत्र वाक्ये अर्थवशेन छन्दोविशेषवशेन पादव्यवस्था सा ऋक् । तत्रैव गाने सति सामोच्यते । एतदन्यद्यजुः—शब्देनोच्यते । [ ख ] यजूंषि वा तद्रूपत्वात् ( जै० सू० २।१।३८ ) इति । अस्यार्थः । निगदा यजूंषि । तद्रूपत्वात् यजुर्लक्षणसत्त्वात् ( जै० सू० वृ० २।१।३८ ) इति ।

**यज्ञः**—१ यागशब्दवदस्यार्थोनुसंधेयः । २ ज्ञानविशेषः । ३ क्रियाविशेषो वा । स च यागः सात्त्विकराजसतामसभेदेन त्रिविधः । तदुक्तं गीतायाम् ( १ ) अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते । यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ( २ ) अभिसंधाय तु फलं दम्भार्थमपि चैव यत् । इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ ( ३ ) विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ ( गीता अ० १७ श्लो० ११–१३ ) इति । यज्ञो नानाविधः द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे । स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ ( गीता अ० ४ श्लो० २८ ) इति । गृहस्थकर्तव्याः पञ्च महायज्ञा यथा [ क ] अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोतिथिपूजनम् ॥ ( गारुड० अ० ११५ ) इति । [ ख ] देवयज्ञो भूतयज्ञः पितृयज्ञस्तथैव च । ब्रह्मयज्ञो नृयज्ञश्च पञ्च यज्ञाः प्रकीर्तिताः ॥ तत्र च होमो दैवो बलिर्भूतः पित्र्यः पिण्डक्रिया स्मृतः । स्वाध्यायो ब्रह्मयज्ञश्च नृयज्ञोतिथिपूजनम् ॥ ( शङ्खस्मृतिः ) इति ।

**यज्ञसूत्रम्**—उपनयनसंस्कारेण पवित्रीकृतः सूत्रविशेषः । स च द्विजैर्धार्यो धर्मार्थम् । अत्र व्युत्पत्तिः यज्ञार्थं योग्यं संस्कृतं वा सूत्रम् ( शाक० त० )

इति । यज्ञेन संस्कृतमुपवीतम् इति वा ( वाच० ) । तत्स्वरूपमुक्तं यथा ऊर्ध्वं तु त्रिवृतं सूत्रं सधवानिर्मितं शनैः । तन्तुत्रयमधोवृत्तं यज्ञसूत्रं विदुर्बुधाः ॥ ( कालिकापु० अ० ४ ) इति । उपवीतमाह गोभिलः यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वा अपि वा कुशरज्जुमेव इति । मनुरपि कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् । शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥ ( मनु० अ० २ श्लोक० ४४ ) इति । नवतन्तुत्वं व्यक्तमाह देवलः यज्ञोपवीतं कुर्वीत सूत्राणि नव तन्तवः । एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोथ वा ॥ ( मनु० टी० कुल्लू० २।४४ ) इति । यज्ञोपवीतधारणार्थे मन्त्रस्तु यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ( बौधायनः ) इति ।

**यज्ञायज्ञीयम्**—यज्ञायज्ञ इत्यनेन शब्देन युक्तायामृच्युत्पन्नं साम यज्ञायज्ञीयम् ( जै० न्या० अ० ९ पा० १ अधि० १८ ) ।

**यज्ञोपवीतम्**—यज्ञसूत्रशब्दवदस्यार्थोनुसंधेयः ।

**यत्**—१ बुद्धिविशेषविषयः । अत्रार्थे यच्छब्दश्च तच्छब्दार्थनित्यापेक्षी । उत्तरवाक्यस्थस्तु न तदपेक्षी इति सामान्यतो विवेकः (काव्यप्र० उ० ७)। अत्र विशेषः यत्तच्छब्दार्थयोरन्वये च न समानविभक्तेस्तन्त्रता इत्याकरे द्रष्टव्यः । बुद्धिविशेषविषयश्च क्वचित् तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नः । यथा यो यो धूमवान् स वह्निमान् इत्यादौ यच्छब्दार्थः । अत्र तत्पदार्थस्तु स्वप्रयोजकबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नः ( ग० श० टी० पृ० ११३ ) । वस्तुतस्तु स्वपूर्वपदप्रतिपाद्यतया बुद्धिविषयतावच्छेदकधर्मावच्छिन्ने यत्पदस्य शक्तिः कल्प्यते । अतो न यत्पदशक्तिग्रहस्तत्पदशक्तिग्रहाधीनः इत्यन्योन्याश्रयः। इयं च व्युत्पत्तिः प्रक्रम्यमाणपरामर्शकयच्छब्दस्य द्रष्टव्या ( ग० शक्ति० टी० पृ० ११३ ) । यच्छब्दस्य स्वोत्तरप्रयोक्तृपदोपस्थापितवाचीत्यर्थः इत्यपि तत्रैवोक्तम् । शाब्दिकास्तु तच्छब्दप्रतिपाद्यतया वक्तृबुद्धिविषय उद्देश्यो यत्पदार्थ इत्याहुः । क्वचित् स्वप्रयोजकबुद्धिविषयताव-

च्छेदकस्वोच्चारकपुरुषोच्चरितस्वपूर्वपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नः । यथा चैत्रः समागतो यस्तत्रावलोकितः इत्यादौ । अत्र चैत्रादिपदेनाप्युपस्थितोर्थो यच्छब्देन बोध्यते । यथा वा साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके । उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥ इत्यादौ । अत्र तत्पदासत्त्वेपि न दोषः । पूर्वप्रक्रान्तस्यैव कृतशब्दोपस्थापितव्यापारस्याभेदेन मीलनान्वयितया यच्छब्देन बोधनात् । एवम् यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे । भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ ( कुमार० स० १ श्लो० २ ) इत्यादावपि ( ग० शक्ति० पृ० ११४ )। २ यस्मात् इत्यर्थः । ३ शाब्दिकास्तु कृत्तद्धितसंज्ञकः प्रत्ययविशेषः । यथा देयम् दिश्यम् इत्यादौ इत्याहुः । ४ गर्हा । ५ अवधृतिश्च इति काव्यज्ञा आहुः ( मेदिनी० ) ।

**यत्नः**—१ प्रयत्नशब्दवदस्यार्थोनुसंधेयः । २ आयासः इति काव्यज्ञा आहुः । ३ उद्योगः इति व्यवहारज्ञा वदन्ति ।

**यथा**—१ येन प्रकारेण इत्यर्थः । २ सादृश्यम् । ३ योग्यता । ४ आनुरूप्यम् । ५ पदार्थानतिवृत्तिः ( सि० कौ० ) ।

**यथार्थबुद्धिः**—तद्वति तत्प्रकारकं ज्ञानम् । यथा घटे अयं घटः इति ज्ञानम् । इदं च लक्षणं स्मृत्यनुभवोभयसाधारणमपि भवति इति विज्ञेयम् । अत्र याथार्थ्यं च फलवत्प्रवृत्तिजननयोग्यत्वम् ( त० कौ० १ पृ० ७ ) । तद्वति तदवगाहित्वं वा । सर्वांशे याथार्थ्यं तु स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तत्तदनिरूपकत्वम् ( ग० २ हेत्वा० सामा० ) ।

**यथार्थवक्ता**—( आप्तः ) प्रकृतवाक्यार्थविषयकयथार्थशाब्दबोधविषयकतात्पर्यवान् ( वाक्य० ४ पृ० १९ ) । यथा आप्तवाक्यं प्रमाणशब्दः इत्यादौ सत्यवतीसुतव्यासो गौतमकणादौ च यथार्थवक्तारः । शाब्दबोधे याथार्थ्यं च तद्वति तत्प्रकारकनिश्चयत्वमेवेति ज्ञेयम् ।

**यथार्थानुभवः**—प्रमाशब्दवदस्यार्थोनुसंधेयः ( कु० ४।१ ) ( चि० ) ( त० सं० ) ।

**यदा**—१ यस्मिन्काले इत्यर्थः । यथा यदा मनः पुरीतति प्रविशति तदा सुषुप्तिः इत्यादौ । २ शाब्दिकास्तु यच्छब्देन इत्यर्थ इत्याहुः ।

**यदि**—१ पक्षान्तरम् । यथा अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं तदा रासनचाक्षुषादिप्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात् ( मु० १ पृ० ११५ ) इत्यादौ । २ संभावना । यथा यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ( भा० प० श्लो० ६३ ) इत्यादौ संभावनाद्योतको यदिशब्दः । ३ गर्हा । ४ विकल्पः ( मेदिनी० ) । ५ असंदेहे संदेहवचनम् ( श्रीधरः ) । यथा यद्येषोपरता देवी ( भाग० १।३।२४ ) इत्यादौ यदिशब्दस्यार्थः ।

**यदृच्छा**—१ स्वातन्त्र्यम् । २ स्वैरता । यथा यदृच्छालाभसंतुष्टः ( गीता० ४।२२ ) इत्यादौ । अत्रार्थे प्रमाणम् स्वेच्छा यदृच्छा स्वच्छन्दः स्वैरता चेति ते समाः ( केशवः ) इति । ३ भगवदिच्छा । यथा यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ( गीता० २।३२ ) इत्यादौ इति वेदान्तिन आहुः ।

**यदृच्छाशब्दः**—जातिगुणक्रियाद्यवाचकः संज्ञाशब्दः । यथा डित्थ इत्यादिशब्दः । तदुक्तं काव्यप्रकाशे डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन निवेश्यते इति संज्ञारूपो यदृच्छात्मकः इति । गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः इति महाभाष्यकाराः ( काव्य० प्र० उ० २ पृ० १२ ) । अत्रोदाहरति असंपादयतः कंचिदर्थं जातिक्रियागुणैः । यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम् ॥ इति । जात्यादिप्रवृत्तिनिमित्तशून्यः इच्छाप्रकल्पितः इत्यर्थः ( माघ० टी० स० २ श्लो० ४७ ) ।

**यद्वा**—१ बुद्धौ संक्षिप्तार्थविषयीकरणम् । २ पक्षान्तरम् । पूर्वकल्पशैथिल्यप्रयुक्तारुच्या कल्पान्तरबोधनम् इति यावत् । यथा यद्वाभ्युदययोग्यता ( भर्तृहरिः ) इत्यादौ ।

**यमः**—अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः इति ( सर्व० सं० पृ० १३८ पात० ) ।

**यमद्वितीया**—कार्तिके शुक्लपक्षस्य द्वितीयायां तु नारद। यमो यमुनया पूर्वं भोजितः स्वगृहेर्चितः॥ अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता (पु० चि० पृ० ८३)।

**यवनम्**—पिष्टस्योदकमिश्रणम् (जै० न्या० अ० १० पा० १ अधि० ११)।

**यागः**—[क] प्रीत्यवच्छिन्नसमन्त्रकद्रव्यत्यागः। यथा पुष्पेण विष्णुं यजते इत्यत्र यजेरर्थः। अत्र प्रीतौ विष्णोराधेयत्वेन द्रव्ये च पुष्पादेरभेदेनान्वयः। तेन विष्णुनिष्ठप्रीतिहेतुर्यो मन्त्रकरणकः पुष्पाभिन्नद्रव्यत्यागः तद्वान् इत्याकारकस्तत्र बोधः। अथवा स्वत्वध्वंसजनकेच्छापर्यवसन्नस्य त्यागस्यैकदेशे स्वत्व एव पुष्पादेराधेयत्वेन तत्रान्वयः। तेन द्रव्येण विष्णुं यजते इत्यादौ द्रव्यस्य द्रव्याभिन्नत्वेन शाब्दान्वयासंभवेपि न क्षतिः (श० प्र० श्लो० ७२ टी० पृ० १०८)। अथवा विष्णुं यजते इत्यादौ द्वितीयार्थ उद्देश्यत्वम्। तच्च तस्येदम् इत्यारोपज्ञानविषयत्वम्। देवतायाः स्वत्वोपगमे तु न दानत्वं यागत्वव्याप्यम्। होमत्वं यागत्वव्याप्यम् इति सर्वजनसिद्धम्। देवपूजनमपि याग एव इति (का० व्या० का० ४ पृ० ५)। [ख] देवतोद्देशेन हविस्त्यागः (म० प्र० ४ पृ० ५३)। [ग] देवतोद्देश्यकद्रव्यत्यागात्मकेच्छाविशेषः (ग० व्यु० का० ३ पृ० ८१)। यथा दर्शपूर्णमासाभ्यां यजेत ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यादौ च यज्धात्वर्थः। अत्रेदमधिकं ज्ञेयम। दर्शपूर्णमासाङ्गानि प्रयाजादीनि। तत्र प्रयाजाश्च पञ्च समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजति इत्येवंरूपाः श्रुत्युक्ताः (कात्या० श्रौ० ३।२।१।१७)। अङ्गं द्विविधम् आरादुपकारकम् संनिपत्योपकारकं च। तत्राद्यम् प्रयाजः अनुयाजः सूक्तवाकः शंयुवाकः पत्नीसंयाजः इति। द्वितीयम् अग्न्यन्वाधानम् इध्माबर्हिषोः संभरणम् इत्यादि। [घ] देवतोद्देश्यकस्वस्वत्वध्वंसफलकस्त्यागो यागः इति वाचस्पतिमिश्रा आहुः। अत्र यागत्वं च देवतोद्देश्यकस्वस्वत्वध्वंसवद्द्रव्यविशेष्यकेच्छात्वम् इति संप्रदायः। अत्र देवतोद्देश्यकत्वं च देवतास्वत्ववद्विशेष्यकत्वम्। शब्दमयी देवता इति पक्षे तु तस्या

इदम् इत्यारोपज्ञानविषयत्वमुद्देश्यत्वम् इति बोध्यम् । यागत्वं मानसप्रत्यक्षगम्यो जातिविशेषः इत्यन्य आहुः । अपरे तु श्राद्धस्य पित्रपेक्षया यागत्वेन ब्राह्मणापेक्षया तु दानत्वेन तत्र सांकर्यान्न यागत्वं जातिविशेषः इत्याहुः ( दि० गु० धर्मनि० पृ० २३४ ) ( का० व्या० का० ४ पृ० ५ ) । [ ङ ] हविःप्रक्षेपात्मको व्यापारः । यथा याजका यजन्तीत्यादौ धात्वर्थः । अत्र च ऋत्विजामेव स्वातन्त्र्यम् न तु यजमानस्य । एवं च यागपदस्यायं लक्ष्यार्थ एव इति ज्ञेयम् ( ग० व्यु० का० ३ पृ० ८१ ) ।

**यागकालः**—पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः । यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः ॥ ( पु० चि० पृ० ३१९ ) ।

**याचनम्**—[ क ] स्वोद्देश्यकदानेच्छा । यथा पौरवं गां याचते विप्र इत्यादौ याच्धात्वर्थः । अत्र प्रधानकर्मगवाद्यन्वितद्वितीयार्थो विषयत्वम् । तस्य धात्वर्थतावच्छेदकदाने निरूपकत्वसंबन्धेन अन्वयः । पौरवपदोत्तरद्वितीयायास्तु वृत्तिरेवार्थः । तस्या दानेऽन्वयः । अत्रेदं विज्ञेयम् । सविषयकज्ञानादिरूपविषयोपहितेच्छाबोधकधातुस्थले इच्छाविषयविषयत्वमेव प्रधानकर्मत्वम् । अत एव घटो जिज्ञास्यते इत्यादौ घटादेः सन्नन्तकर्मता । पौरवस्य तु तादृशदानाश्रयत्वमेवाप्रधानकर्मत्वम् इति । भिक्ष्यर्थोऽप्येवमेव बोध्यः ( ग० व्यु० का० २ पृ० ४५ ) । अत्र वैयाकरणाः समुत्तिष्ठन्ते । यत्तु स्वोद्देश्यकदानेच्छा याचनम् इति तन्न । पुत्रार्थं कन्यां याचते इत्यनापत्तेः । स्वसंप्रदानकदानेच्छावति फलालाभशङ्कया देहि इत्यवदत्यपि तथा प्रयोगापत्तेश्च इति ( ल० म० सुबर्थ० का० २ पृ० ९२ ) । [ ख ] शाब्दिकास्तु स्वामिस्वत्वनिवृत्ति स्वस्वत्वोत्पत्ति एतदुभयानुकूलः दीयताम् इत्यभिलापरूपो दिदापयिषाव्यञ्जको व्यापारः । यथा बलिं याचते वसुधामित्यादौ याचेरर्थः इत्याहुः । २ स्वीकारानुकूलो व्यापारः । यथा अविनीतं विनयं याचते इत्यादौ याचेरर्थः । स्वीकारश्च इदमवश्यं करिष्यामि इत्यभिलापादिजनको ज्ञानविशेषः ( ल० म० सुबर्थ० का० २ पृ० ९२ ) ।

३ व्यापारजन्यत्वप्रकारकेच्छा । यथा याचमानः शिवं सुरानित्यादौ याच्ञा । अत्र धात्वर्थेच्छायां प्रधानकर्मकल्याणान्वितद्वितीयार्थविषयिताया अन्वयः । व्यापारे च सुरान्वितवृत्तित्वस्य द्वितीयान्तार्थस्यान्वयः । तथा च सुरवृत्तिव्यापारजन्यत्वप्रकारककल्याणेच्छाश्रयः इत्यन्वयबोधः ( ग० व्यु० का० २ पृ० ४५ ) । शिष्टं तु प्रार्थनाशब्दव्याख्याने दृश्यम् ( श० प्र० श्लो० ७३ टी० पृ० ११२ ) ।

**याचितम्**—विवाहाद्युत्सवेषु वस्त्रालंकारादि याचित्वा नीतम् ( मिताक्षरा अ० २ श्लो० ६७ ) ।

**यातयामः**—प्रतिपदंशास्त्रयो भूताः पादश्चैकश्च तिष्ठति । यातयामः स विज्ञेयो न हि भस्मनि हूयते ॥ ( पु० चि० पृ० ३१९ ) ।

**याथार्थ्यम्**—सत्यत्वम् वास्तविकत्वं वा ।

**यापनम्**—१ नयनशब्दवदस्यार्थोनुसंधेयः । २ कालादेः क्षेपणम् । ३ निरसनम् ।

**याम्यम्**—भरणी ( पु० चि० पृ० ३०६ ) ।

**यावत्**—१ मर्यादा । सा च कालरूपा देशरूपा चेति द्विविधा । तत्र कालरूपा सीमा यथा आरभ्य तस्यां दशमीं तु यावत् प्रपूजयेत्पर्वतराजपुत्रीम् इत्यादौ यावदर्थो मर्यादा । देशरूपा सीमा यथा काशीतः कौशिकीं यावद्याति इत्यादौ यावदर्थो मर्यादा । २ अभिविधिः । यथा कार्तिकमारभ्य चैत्रं यावच्छीतं भवति इत्यादौ काशीतः पाटलिपुत्रं यावद्वृष्टो देवः इत्यादौ च यावदर्थोभिविधिः । आङ्शब्दोपि यावत्शब्दवदेव व्याख्येयः । किंतु तद्योगे पञ्चमी साधुः ( ग० व्यु० का० २ ख० २ पृ० ७४–७६ ) । अधिकं च मर्यादा अभिविधि एतच्छब्दव्याख्याने संपादितम् तत्तत्र द्रष्टव्यम् ।

**यावत्त्वम्**—१ अपेक्षाबुद्धिविशेषविषयत्वम् ( त० प्र० २ ) । यथा यत्समानाधिकरणा यावन्तोभावाः ( दीधि० २ चतु० ) इत्यादौ यावत्त्वम् । २ व्यापकत्वम् ( ग० सिद्धा० ) । यथा यावन्तो घटा

रूपवन्तः इत्यादौ । यथा वा यावन्तो मनुष्या मरणशीला इत्यादौ । अत्राद्ये घटत्वव्यापकरूपवन्तः इत्यन्वयबोधो जायते । अन्त्ये मनुष्यत्वव्यापकत्वं मरणशीलत्वे बोध्यते इति विज्ञेयम् । ३ व्यासज्यवृत्तिर्धर्मविशेषः । यथा सर्वे घटा रूपवन्त इत्यादौ सर्वशब्दप्रवृत्तिनिमित्तं घटनिष्ठं यावत्त्वम् । इदं च उद्देश्यतावच्छेदकघटत्वव्यापिका विधेयरूपव्याप्या च या पर्याप्तिः तादृशपर्याप्तिकं भवति इति विज्ञेयम् ( ग० शक्ति० पृ० ९३ ) । ४ साकल्यम् ( अशेषत्वम् ) । ५ अवधित्वम् । ६ मानत्वम् ( मर्यादात्वम् ) । ७ अवधारणत्वम् ( अमरः ) ।

**यावद्द्रव्यभावित्वम्**—स्वाश्रयनाशजन्यनाशप्रतियोगित्वम् ( दि० १।२ आकाशनि० पृ० ८८ ) । यथा घटादिवृत्तिरूपादेर्यावद्द्रव्यभावित्वम् । अत्र घटस्य नाशे तद्गतरूपस्यापि नाशः इत्यनुभवो मन्तव्यः । स्वपदार्थो रूपम् । तथाच स्वम् घटस्य रूपम् । तस्याश्रयो घटः । तस्य नाशः । तादृशनाशजन्यो नाशः रूपनाशः । तस्य प्रतियोगित्वं रूपे इति लक्षणसमन्वयः । शब्दज्ञानादीनां तु न तादृशम् यावद्द्रव्यभावित्वम् इति अतो नातिव्याप्तिः । तथा चोक्तम् अयावद्द्रव्यभावित्वेनैव शब्दादीनां वायुविशेषगुणत्वं नास्ति ( मु० १ आकाशनि० पृ० ८८ ) इति ।

**युक्तः**—१ यत्किंचित्प्रतियोगिकसंबन्धानुयोगी । यथा भूतलं घटेन युक्तमित्यादौ । २ उचितम् । यथा युक्तमुच्यते इत्यादौ । ३ योगशास्त्रज्ञास्तु योगाभ्यासवशात्सर्वदा सकलविषयकज्ञानवान् योगी ( भा० प० श्लो० ६७ ) । अथवा प्रथमप्रत्यासत्त्या निरन्तरमखिलपदार्थज्ञानवान् इत्याहुः ( सि० च० १ पृ० २३ ) । अत्रेदं बोध्यम् । युक्तस्य योगजधर्मसहायेन मनसाकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव ध्यानाद्यभावेपि भवितुमर्हति ( मु० १ पृ० १३३ ) ( प्रशस्त० बुद्धिनि० पृ० ४३ ) इति ।

**युक्तिः**—१ साधकबाधकप्रमाणोपन्यासः ( त० प्र० १ ) ( म० प्र० पृ० ३ ) । २ अनुमानम् । तच्च साध्यसाधकलिङ्गज्ञानम् । न्यायः इति मीमांसका आहुः । अत्रोच्यते श्रुत्योर्विरोधे न्यायस्तु बलवानर्थनिर्णये ।

युक्तिहीनविचारे तु धर्महानिः प्रजायते ॥ इति । ३ लिङ्गोद्देशः (लिङ्ग-निश्चयः) इति व्यवहारशास्त्रज्ञा आहुः (वीरमि० लेख्य० पृ० २२२)। व्यवहारे कानिचिल्लिङ्गानि नारदेनोक्तानि यथा उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः । केशाकेशिगृहीतश्च युगपत्पारदारिकः ॥ कुद्दाल-पाणिर्विज्ञेयः सेतुभेत्ता समीपगः । तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्तितः ॥ प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः । असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम् ॥ (वीरमित्रो० लेख्यनि० पृ० २२२) इति । ४ नाटकाङ्ग-विशेषः इत्यालंकारिका आहुः । तदुक्तम् संप्रधारणमर्थानां युक्तिः प्राप्तिः सुखागमः (सा० द० परि० ६ श्लो० ३४३ पृ० १०५) इति ।

**युगम्**—१ (अनुवत्सरशब्दे दृश्यम्) । २ चतुर्थी (पु० चि० पृ० ३०)।

**युगादिः**--द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः । नवमी कार्तिके शुक्ला तृतीया माधवे सिता । अमावास्या तपस्ये च नभस्ये च त्रयोदशी ॥ (पु० चि० पृ० ८६) ।

**युग्मम्**—द्वितीया (पु० चि० पृ० ३७) ।

**युञ्जानः**—१ [क] चिन्तासहकारेण सकलज्ञानवान् योगी (भा० प० श्लो० ६७) । [ख] चिन्ताविशेषसनाथद्वितीयप्रत्यासत्त्या समय-विशेषे ज्ञानवान् (सि० च० १ पृ० २३) । अत्र युक्तपदार्थघटक-प्रथमप्रत्यासत्तिमपेक्ष्य द्वितीयप्रत्यासत्तिः इत्यनुसंधेयम् । २ रथसारथिः । ३ विप्रः इति काव्यज्ञा आहुः (वाच०) ।

**युतसिद्धिः**—[क] द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वम् युताश्रयाश्रयित्वं वा (वै० उ० ७।२।९) (प्रशस्त० पृ० १७) । यथा मेषयोः घट-भूतलयोर्वा युतसिद्धिः । [ख] असंबन्धयोर्विद्यमानत्वम् पृथगाश्रया-श्रितत्वं वा (वै० उ० ७।२।१३) । [ग] परस्परसंबन्धशून्ययोर-वस्थानम् (वै० वि० ७।२।१३) । युतसिद्धिश्च संयोगं प्रति प्रयोजि-कास्ति (वै० उ० ७।२।९–१३) (प्रशस्त० पृ० १७) । अत्रेदं बोध्यम् । अण्वाकाशयोराश्रयान्तराभावेप्यन्यतरस्य पृथग्गतिमत्त्वात्संयोग-विभागौ सिद्धौ । तन्तुपटयोरनित्ययोः पृथगाश्रयान्तराभावात्परस्परतः

संयोगविभागाभावः । दिगादीनां तु पृथग्गतिमत्त्वाभावात्परस्परेण संयोगविभागाभाव इति । त्वगिन्द्रियशरीरयोः पृथग्गतिमत्त्वं नास्ति । युतेष्वाश्रयेषु समवायो नास्तीति परस्परेण संयोगः सिद्धः (प्रशस्त० गु० पृ० १९)।

**युष्मद्**—संबोध्यचेतनः । अधिकं तु त्वम्शब्दार्थे दृश्यम् ।

**यूपः**—शास्त्रीयच्छेदनतक्षणादिक्रियाश्रयः ( जै० न्या० अ० ७ पा० ३ अधि० ११ ) ।

**योगः**—१ संबन्धः । २ [ क ] समुदायशब्दस्य अवयवशक्तिः ( त० दी० ४ ) ( नील० ४ पृ० ३१ ) ( सि० च० ४।३१ ) । यथा पाचकादिपदेषु योगः । अत्र च पाचकादिपदात् पचति इति व्युत्पत्त्या पाककर्ता बुद्ध्यते इति बोध्यम् । अत्र योगबलं समाख्या इति मीमांसका वदन्ति ( वाच० ) । [ ख ] वैयाकरणास्तु शास्त्रकल्पितावयवार्थमात्रबोधप्रयोजको योगः ( शक्तिः ) । यथा पाचकादौ इत्याहुः ( ल० म० आकाङ्क्षादिवि० पृ० १२ ) । ३ [ क ] चित्तवृत्तिनिरोधः इति योगिन आहुः ( पात० पा० १ सू० २ ) । [ ख ] क्लेशकर्मविपाकाशयपरिपन्थिचित्तवृत्तिनिरोधो योगः ( सर्व० सं० पृ० १३२ पात० ) । अत्रेदं बोध्यम् । विषयेष्वलंप्रत्ययवत उदासीनस्य बहिरिन्द्रियेभ्यो व्यावृत्तं मनो यदा आत्ममात्रनिष्ठं भवति तदा तत्कर्मानुगुणप्रयत्नाभावात्कर्म मनसि नोत्पद्यते स्थिरतरं मनो भवति स एव योगः ( वै० उ० ५।२।१६ ) । अथ वा आत्मस्थे मनसि षडङ्गयोगेन इन्द्रियादिकं परित्यज्य मनो यदा आत्ममात्रे तिष्ठति तदा मनःकर्मणोनुत्पादः तदा मनो निश्चलं भवति । तदवस्थायां शरीरावच्छेदेन दुःखं न जायते । स आत्मना बाह्यव्यावृत्तमनसः संयोगो योग उच्यते । षडङ्गानि स्कन्दपुराणे उक्तानि यथा आसनं प्राणसंरोधः प्रत्याहारश्च धारणा । ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट् ॥ ( वै० सू० ५।२।१६ ) ( वै० वि० ) इति । यद्वा इन्द्रियाणि विषयेभ्यः प्रत्याहृत्येन्द्रियेभ्यो मनः प्रत्याहृत्य साक्षात्कर्तव्ये वस्तुनि मनःप्रणिधानं योगः ( नील० ) इति । स च योगो द्विविधः । राजयोगः हठयोगश्च । तत्र राजयोगः पतञ्जलिनोक्तः । हठयोगस्तु

तन्त्रशास्त्रोक्तः। प्रकारान्तरेणापि योगो द्विविधः संप्रज्ञातः असंप्रज्ञातश्चेति। तथा योगस्त्रिविधः ज्ञानयोगः कर्मयोगः भक्तियोगश्च (भाग० स्क० ११ अ० २० श्लो० ६) इति। इदं च बोध्यम्। षष्ठभगवदवतारो दत्तात्रेयः। स च आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् (भाग० १।३।१२)। तेन च स्वसंहितायां योगोनुशिष्टः इति। ४ उपायः। ५ युक्तिः। ६ जीवात्मपरमात्मनोः संबन्धः इति केचिद्वेदान्तिन आहुः। तदुक्तम् योगं संयोगमित्याहुर्जीवात्मपरमात्मनोः इति (वाच०)। ७ देवतानुसंधानं योगः इति रामानुजीयाः नारदपञ्चरात्रविदः आहुः (सर्व० पृ० ११७ रामा०)। ८ अप्राप्तस्यार्थस्य प्राप्तये पर्यनुयोगो योगः। यथा योगाचारः इत्यादौ इति बौद्धा आहुः। ९ शब्दादीनां प्रयोगः इति वैयाकरणा आहुः। १० भेषजम् इति भिषज आहुः। ११ योगः कर्मसु कौशलम् इति कर्मकर्तारोङ्गीचक्रुः। १२ छलम् (उपधिः) इति व्यवहारशास्त्रज्ञा आहुः। अत्र स्मृतिः योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यस्य वाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत्॥ (याज्ञ० अ० २ श्लो० १८१ टी० मिता० पृ० ९४) इति। योगः कपटम् इति मनुः (८।१६५)। १३ रविचन्द्रयोगाधीना विष्कम्भादयः सप्तविंशतिः पदार्थाः इति ज्योतिषज्ञा आहुः। १४ तिथिवारनक्षत्राणां संबन्धविशेषः। यथा सिद्धियोगः अमृतसिद्धियोगः अर्धोदययोगः दग्धयोगः इत्यादिः इति मौहूर्तिका आहुः। १५ लग्नादिगृहविशेषे स्थितो ग्रहविशेषः। यथा राजयोगः नाभसयोगः इत्यादिः इति कार्तान्तिका आहुः। १६ यात्रायाम् आलग्नात्केन्द्रत्रिकोणस्थितो बुधजीवशुक्राद्यन्यतमः इति ज्योतिःशास्त्रज्ञा आहुः। तदुक्तम् एको ज्ञेज्यसितेषु पञ्चमतपःकेन्द्रेषु योगस्तथा द्वौ चेत्तेष्वधियोग एषु सकला योगाधियोगः स्मृतः। योगे क्षेममथाधियोगगमने क्षेमं रिपूणां वधः (मु० चि०) इति। १७ कामुककामिनीसंमेलनं योगः इत्यालंकारिका वदन्ति। १८ चित्तद्वारेणात्मेश्वरसंबन्धो योगः (सर्व० सं० पृ० १६९ नकुली०)।

**योगक्षेमः**—१ अनुभवमनुरुध्य वस्तुस्थितिसंगमनम्। यथा भूतले न घटः इत्यादौ घटांशे भूतलवृत्तित्वाभावः संगम्यते इति। अत्र च भूतले

घटः इति वाक्यजन्यशाब्दबोधे घटांशे भूतलवृत्तित्वावगाहित्वस्यानुभवसिद्धतया भूतले न घटः इति वाक्यजन्यशाब्दबोधे घटांशे भूतलवृत्तित्वाभावोवश्यमभ्युपगन्तव्यः इति । इदमत्राकूतम् । भूतले न घटः इति वाक्यजन्यस्याप्रामाण्यज्ञानानास्कन्दितबोधस्य भूतले घटः इत्यादिवाक्यजन्यघटादिविशेष्यकभूतलाद्याधेयत्वप्रकारकबोधविरोधितया नञ्पदं विना यत्र धर्मिणि यस्य विशेषणतया भानं यादृशसमभिव्याहाराद्भवति तादृशसमभिव्याहारस्थले नञ्सत्त्वे तत्र धर्मिणि तदभावः प्रतीयते इति नियमोङ्गीकर्तव्यः । अयमेव प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ इति न्यायस्यार्थः इति (गा० व्यु० का० १) । यथा वा प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्य हेतुतायां प्रविष्टा योगक्षेमसाधारणी साधनता । नैयायिकमते संध्यावन्दनादिनित्यकर्मणामर्थवादोपस्थापितब्रह्मलोकावाप्तिप्रत्यवायानुत्पत्तिरूपफलकल्पनेन तादृशफलस्य तु स्वतः पुरुषार्थत्वाभावेन तत्रेच्छानुत्पत्तौ कथं तादृशकर्मसु प्रवृत्तिः इत्याशङ्कायाः समाधानप्रसङ्गेनेत्थमुक्तम् । यथा हि नित्ये कृते प्रत्यवायप्रागभावस्तिष्ठति तदभावे तदभावः एवम् प्रत्यवायाभावसत्त्वे दुःखप्रागभावसत्त्वम् तदभावे तदभावः (दुःखरूपः) इति योगक्षेमसाधारणकारणताया दुःखप्रागभावं प्रत्यपि सुवचत्वात् इति । अत्र योगे अप्राप्तप्राप्तौ क्षेमः सिद्धस्य रक्षणम् इत्यर्थोनुसंधेयः (दि० गु० विधिनि० पृ० २२८) । २ वेदान्तिनस्तु अलभ्यलाभसहितं लब्धपरिरक्षणम् । यथा अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ (गीता० अ० ९ श्लो० २२) इत्यादौ इत्याहुः । अत्रार्थे योगश्च क्षेमं च इति समाहारद्वन्द्वो ज्ञेयः ।

**योगजः**—(संनिकर्षः) योगाभ्यासजनितो धर्मविशेषः । स चादृष्टविशेषः । अयं चालौकिके योगिप्रत्यक्षे कारणभूतः अलौकिकसंनिकर्षविशेषः । स च युक्तयुञ्जानेति द्विविधयोगिभेदतो द्विविधः (भा० प० श्लो० ६६) (सि० च०) । तत्र युक्ताख्ययोगिनो योगजधर्मसंनिकर्षेण वस्तुमात्रस्य अन्यात्मनाम् अतीन्द्रियाणामपि आकाशदिक्कालपरमाणुवायुमनसाम्

तत्समवेतगुणकर्मसामान्यविशेषाणां समवायस्य च सर्वदा प्रत्यक्षं जन्यते। युञ्जानाख्ययोगिनस्तु चिन्तया प्रत्यक्षं जन्यते ( मु० १ ) ( त० कौ० ) इति । तथा च एकत्र ध्यानापेक्षा अन्यत्र तु ध्यानापेक्षा नास्ति ( त० व० ) ( प्रशस्त० गु० पृ० ४३ ) ।

**योगरूढम्**—( नाम शक्तपदं वा ) [ क ] यत्र पदे अवयवशक्तिविषये समुदायशक्तिरप्यस्ति तत् ( मु० ४ पृ० १७९ ) । अत्र व्युत्पत्तिः योगो रूढिश्चैते एकसजातीयार्थबोधकतया स्तोस्य ( अच् ) इति । [ ख ] अवयव समुदाय एतदुभयशक्तिकमेकजातीयार्थप्रतिपादकं पदम् ( सि० च० ख० ४ पृ० ३१ ) । [ ग ] योगरूढिभ्यां परस्परसहकारेणार्थप्रतिपादकं पदम् । यथा पङ्कजादिपदम् ( नील० ४ पृ० ३१ ) । एवम् धेनुपदं च ( त० प्र० ४ पृ० ३२ ) । अत्र च पङ्काज्जायते इत्यवयवशक्त्या पङ्कजनिकर्तृत्वेन रूढिशक्त्या च कमलत्वेन कमलं बोधयतीति पङ्कजपदं योगरूढम् ( सि० च० ४ पृ० ३१ ) । तथा च समुदायशक्त्या ( रूढिशक्त्या ) उपस्थिते पद्मे अवयवार्थपङ्कजनिकर्तुरभेदेनान्वयो भवति इति मणिकृन्मतम् ( श० प्र० श्लो० २७ ) । तेन पङ्कजातेपि कुमुदादौ स्थलपद्मे च न पङ्कजपदप्रयोगप्रसङ्गः इति मणिकृन्मताभिप्रायः ( त० प्र० ४ पृ० ३१ ) । अत्रायं विशेषो ज्ञेयः । यत्र रूढ्यर्थस्य बाधः प्रतिसंधीयते कुमुदत्वेन बोधे च तात्पर्यम् तत्र लक्षणया कुमुदादेर्बोधः । यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्यज्ञानम् पद्मत्वस्य च बाधः तत्रावयवशक्तिमात्रेण कुमुदबोधनिर्वाहः । यत्र तु स्थलपद्मादाववयवार्थबाधः तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः । यदि तु स्थलपद्मं विजातीयमेव तदा पङ्कजपदाल्लक्षणयैव स्थलपद्मबोधः ( मु० ४ पृ० १८० ) इति । [ घ ] यन्नाम स्वावयववृत्तिलभ्यार्थेन समं स्वार्थस्यान्वयबोधकृत् तन्नाम योगरूढम् । यथा पङ्कज कृष्णसर्प अधर्म इत्यादिपदम् । तद्धि स्वान्तर्निविष्टानां पङ्कादिशब्दानां वृत्तिलभ्येन पङ्कजनिकर्त्रादिना समं स्वशक्यस्य पद्मादेरन्वयानुभावकम् । पङ्कजम् इत्यादितः पङ्कजनिकर्तृ पद्मम् इत्यनुभवस्य सर्वसिद्धत्वात् । रूढपदात्स्वयं विशेषः । यद्रूढमपि मण्डपरथकारादिपदम् तत् योगार्थ-

विनाकृतस्य रूढ्यर्थस्येव रूढ्यर्थविनाकृतस्यापि योगार्थस्य बोधकं भवति । मण्डपे शेते इत्यादौ योगार्थस्य मण्डपानकर्त्रादेरिव मण्डपं भोजयेदित्यादौ समुदितार्थस्य गृहादेरयोग्यत्वेनान्वयाबोधात् । योगरूढं तु पङ्कजादिपदमवयववृत्त्या रूढ्यर्थमेव समुदायशक्त्या चावयवलभ्यार्थमेवानुभावयति न त्वन्यम् ( श० प्र० श्लो० २५ टी० पृ० ३२ ) इति । योगरूढं द्विविधम् समासात्मकम् तद्धितात्कं चेति । तत्र समासात्मकं कृष्णसर्पादि । तद्धितात्कं तु वासुदेवादिपदम् । कृदन्तस्य पङ्कजादियोगरूढस्य सामासिक एवान्तर्भावः इति नाधिक्यम् ( श० प्र० श्लो० २८ टी० पृ० ३७ )।

योगरूढिः—( पदशक्तिः ) [ क ] शब्दस्य वृत्तिविशेषः । यया वृत्त्या पङ्कजनिकर्तृत्वविशिष्टपद्मस्य बोधः ( हेमचन्द्रः ) । यथा पङ्कजशब्दादिपदे योगरूढिः । अत्र व्युत्पत्तिः योगेन सहिता रूढिः इति ( नील० ४ पृ० ३१ ) । अत्र विप्रतिपत्तिः । पङ्कजादिपदानां योग एव इत्येके वदन्ति । रूढिः इत्यपरे वदन्ति । योगरूढिः इति गौतमीयाः आहुः ( न्या० सि० दी० पृ० ४२ ) । अयं भावः । पङ्कजपदात् पद्मत्वविशिष्टप्रतीतये पद्मत्वविशिष्टे पङ्कजसमुदायस्य रूढिरावश्यकी । पदार्थनियतोपस्थितेर्वृत्तिसाध्यत्वात् । पङ्कजपदाद्योगेन कुमुदस्यापि बोधप्रसङ्गाच्च । मन्मते कदाचित्कुमुदबोधस्तु लक्षणयैव इति ( त० प्र० ख० ४ पृ० ३१ ) । अत्रायं विशेषः । यत्र योगार्थान्वितरूढ्यर्थावबोधः तत्र सर्वत्र योगरूढिः । यौगिकार्थबुद्धिरूपसहकारिलाभाद्विशिष्टार्थोपस्थापकत्वं रूढेर्योगरूढित्वम् ( न्या० सि० दी० पृ० ४८ )। [ ख ] वैयाकरणास्तु यत्र शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपितं समुदाये बोधकत्वम् सा योगरूढिः । यथा पङ्कजादिपदे इत्याहुः । अत्र पङ्कजनिकर्तृ पद्मम् इति बोधात् पद्मस्यानुपपत्तिप्रतिसंधानं संबन्धप्रतिसंधानं च विना बोधान्न तत्र लक्षणाया अवसरः । क्वचित् तात्पर्यग्राहकवशात् केवलरूढ्यर्थस्य केवलयोगार्थस्य च बोधः । यथा भूमौ पङ्कजमुत्पन्नं कल्हारकैरवमुखेष्वपि पङ्कजेषु इत्यादौ ( ल० म० आकाङ्क्षादिवि० पृ० १२ )।

**योगशास्त्रम्**—सांख्यप्रवचनापरनामधेयं पतञ्जलिप्रणीतं पादचतुष्टयात्मकम् (सर्व० सं० ३३१ पातञ्ज० ) ।

**योगाङ्गानि**—यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि योगस्य ( सर्व० सं० पृ० ३४७ पात० ) ।

**योगाचारः**—( बौद्धः ) क्षणिकविज्ञानवादी बौद्धविशेषः । गुरूक्तभावनाचतुष्टयं बाह्यार्थस्य शून्यत्वं चाङ्गीकृत्यान्तरस्य शून्यत्वं चाङ्गीकृतं कथमिति पर्यनुयोगस्य करणात्केषांचिद्योगाचारप्रथा ( सर्व० सं० पृ० ३० बौ० ) । योगाचारमतं तु बौद्धशब्दव्याख्यानावसरे ( पृ० ६०९ ) संक्षेपतः संपादितम् ।

**योग्यता**—कार्यविशेषजनने सामर्थ्यम् । तच्च १ [ क ] एकपदार्थे अपरपदार्थप्रकृतसंसर्गवत्त्वम् ( न्या० म० ४ पृ० २२ ) । इयं योग्यता च ज्ञाता सती शाब्दबोधप्रयोजिका शब्दयोग्यता इति व्यवह्रियते । इयं योग्यता अयोग्यवाक्यनिरासिका च भवति । अत एव वह्निना सिञ्चतीत्यादिवाक्यान्नान्वयबोधः प्रमात्मको भवति । योग्यताविरहात् ( त० कौ० ) ( त० सं० ) । [ ख ] इतरपदार्थसंसर्गे अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वम् । [ ग ] बाधकप्रमाणाभावः । [ घ ] बाधकप्रमाविरहः । स चेतरपदार्थसंसर्गे अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावः ( चि० ४ ) । निष्कृष्टार्थस्तु तदीयान्वयितावच्छेदकसंबन्धे तन्निष्ठात्यन्ताभावप्रतियोगित्वप्रकारकप्रमाविशेष्यत्वसामान्याभावः इति । तेन वह्निना सिञ्चति इत्यादौ वह्निनिष्ठकरणताया निरूपकत्वरूपान्वयितावच्छेदकसंबन्धे सेकनिष्ठात्यन्ताभावप्रतियोगित्वप्रकारकप्रमाविशेष्यत्वस्यैव सत्त्वान्नातिव्याप्तिः ( मा० शब्द० ) । यथा प्रमेयं वाच्यमित्यादौ योग्यता ( चि० ४ ) ( तर्का० ४ पृ० १० ) । [ ङ ] अबाधितार्थकत्वम् ( ग० अव० ) । [ च ] अर्थाबाधः ( त० सं० ४ ) । यथा जलेन स्थलं सिञ्चतीत्यादौ योग्यता ( न्या० म० ४ पृ० २२ ) । अत्र जले सेकसंसर्गस्य कार्यकारणभावलक्षणस्य सत्त्वाद्योग्यता ( प्र० प्र० ) ( त० कौ० ) । अथ वा

सेकनिरूपितकार्यकारणभावलक्षणसंसर्गस्य जले सत्त्वाद्योग्यता ( म० प्र० ४ पृ० ५६ ) । [ छ ] बाधनिश्चयाभावो योग्यता इति नव्या आहुः ( नील० ख० ४ पृ० ३२ ) । [ ज ] परे तु असंसर्गग्रहः प्रतिबन्धकः । तदभावो योग्यता । सा च स्वरूपसती हेतुः न तु ज्ञाता इत्याहुः ( न्या० म० ४ पृ० २३ ) । तदर्थश्च पयसा सिञ्चतीत्यादौ पयःसेककरणतावच्च वा इत्यसंसर्गग्रहः शाब्दबोधप्रतिबन्धकः । तदभावस्तत्र योग्यता इति ( म० प्र० ४ पृ० ५७ ) । [ झ ] अन्वयविरोधिरूपविरहो योग्यता इत्यन्य आहुः । [ ञ ] अन्वयप्रयोजकरूपवत्त्वम् इति प्राभाकरा आहुः ( दीधि० प्राभा० ) । सेकान्वयप्रयोजकं द्रवद्रव्यत्वं जलेऽस्तीति तद्योग्यम् । वह्नौ च नास्तीति तदयोग्यम् इति प्राभाकराभिप्रायः ( न्या० म० पृ० २९ ) । [ ट ] अपरे तु तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नरूपवत्त्वम् इत्याहुः ( मा० श० ) ( भा० प० श्लो० ८४ ) । अत्र नीलकण्ठ आह एकपदार्थे अपरपदार्थवत्त्वं योग्यता इति मते संशयनिश्चयसाधारणतज्ज्ञानत्वावच्छिन्नशाब्दधीहेतुः । बाधनिश्चयाभावो योग्यता इति नवीनमते तु स्वरूपसत्येव योग्यता तद्धेतुः इति ( नील० ख० ४ पृ० ३२ ) । [ ठ ] केचित्तु तत्सजातीये तत्सजातीयस्य संसर्गनिश्चयः इत्याहुः । अस्ति च पयसा सिञ्चतीत्यादौ प्रकृतसेकसजातीयेतरकरणकसेके प्रकृतपयःकरणकत्वसजातीयस्य पयःकरणकत्वस्य संसर्गनिश्चयः । वह्निना सिञ्चतीत्यादौ तु सेकसजातीये क्वापि सेके वह्निकरणकत्वसजातीयस्य कस्यापि वह्निकरणकत्वस्य संसर्गनिश्चयो नास्ति । बाधितत्वात् ( मा० श० ) ।

२ [ क ] प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकसमवहितत्वम् ( मू० म० १ ) । न्यायमते योग्यानुपलब्धिरभावप्रत्यक्षे इन्द्रियस्य सहकारिणी । न तु भट्टमते इव प्रमाणान्तरम् । तथा च इयं योग्यता प्रतियोग्युपलम्भाभावात्मकानुपलब्धिनिष्ठा अनुपलब्धियोग्यता इति व्यवह्रियते । [ख] चिन्तामणिकृन्मतेन च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वम् । तदर्थश्च प्रतियोगिनः घटादेः सत्त्वस्य यत्प्रसञ्जनम् आपादनम् । यद्यत्र घटः स्यात् इत्याहार्यारोप इत्यर्थः । तेन प्रसञ्जितः आपादितः । तर्ह्युपलभ्येत इति भूतलमिवाद्रक्ष्यदिति वा आपादित इत्यर्थः । एतादृशः

उपलम्भरूपः प्रतियोगी यस्य उपलम्भाभावस्य सः तादृशप्रतियोगिकः उपलम्भाभावरूपः । तस्य तादृशप्रतियोगिकस्य भावः इति । तथा च उपलम्भाभावात् ( घटदर्शनाभावात् ) नास्ति घटः इति प्रत्यक्षं भवति । एवं च तादृशघटोपलम्भाभावो भूतले घटो नास्ति इत्याकारके घटाभावप्रत्यक्षे हेतुः इन्द्रियस्य सहकारी भवति इति समुदायार्थः ( त० दी० ) ( नील० १ पृ० १८ ) ( मु० १ पृ० १२३ ) ( दि० )। [ ग ] प्रतियोगिसत्त्वापादनापादितोपलम्भप्रतियोगिकत्वम् ( नील० १ पृ० १८ )। यथा यद्यत्र घटोभविष्यत्तदा भूतलमिवाद्रक्ष्यत् दर्शनाभावात् नास्ति इति ( त० दी० १ पृ० १८ ) । तथा हि यत्रालोकसंयोगादिकं वर्तते तत्र यद्यत्र घटः स्यात्तर्ह्युपलभ्येत इत्यापादयितुं शक्यते । तत्र घटाभावादेः प्रत्यक्षं भवति । अन्धकारे तु नापादयितुं शक्यते । तेन घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम् । स्पार्शनप्रत्यक्षं तु भवत्येव । आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात् । गुरुत्वपिशाचादिकं यदयोग्यम् तदभावस्तु न योग्यः ( प्रत्यक्षविषयः ) । तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुमशक्यत्वात् । अतः गुरुत्वपिशाचाद्यभावानां जलपरमाणौ पृथिवीत्वाद्यभावस्य च न प्रत्यक्षम् इति ( मु० १ पृ० १२४–१२६ ) । अत्र योग्यानुपलब्धौ योग्यता च योग्यप्रतियोगिप्रकारकयोग्याधिकरणविशेष्यकोपलम्भप्रतियोगिकत्वम् इति निर्वचनमपि चिन्तामणिकृन्मते संभवति ( राम० १ पृ० १२३ ) । ३ योग्यमात्रप्रतियोगिकत्वे सति योग्यधर्ममात्रावच्छिन्नप्रतियोगिताकत्वम् । इयं योग्यता च संसर्गाभावनिष्ठा संसर्गाभावप्रत्यक्षे प्रयोजिका च प्रतियोगियोग्यता इति व्यवह्रियते । अत्र पदप्रयोजनम् । द्रव्यसामान्याभाववारणाय मात्र इति पदम् । गुरुत्ववद्घटात्यन्ताभाववारणाय विशेष्यदलम् । रूप गुरुत्व एतदन्यतरावच्छिन्नाभाववारणाय विशेष्यदले मात्र इति पदम् ( दि० १।३ पृ० १२७ ) । योग्यमात्रप्रतियोगिकत्वे सतीत्युक्तेः वायावुद्भूतरूपाभावस्य प्रत्यक्षमुपपद्यते । वायौ गुरुत्वाभावप्रत्यक्षापत्तिवारणं च भवति । रूपाभावस्य योग्यमात्रप्रतियोगिकत्वात् ।

गुरुत्वाभावस्य च योग्यमात्राप्रतियोगिकत्वाच्च इति । ४ जात्यवच्छिन्नप्रतियोगिताकत्व जात्यतिरिक्तयोग्यधर्मावच्छिन्नप्रतियोगिताकत्व एतदन्यतरत् ( दि० १।३ पृ० १२६–१२७ ) । अत्र जात्यवच्छिन्नप्रतियोगिताकत्वेत्युक्त्या स्तम्भे पिशाचान्योन्याभावप्रत्यक्षम् ( स्तम्भः पिशाचो न इति प्रत्यक्षम् ) उपपद्यते । जात्यतिरिक्तेत्याद्युक्त्या च घटवदन्योन्याभावादेः प्रत्यक्षमुपपद्यते इति ज्ञेयम् ( राम० १।३ पृ० १२८ ) । इयं च योग्यता अन्योन्याभाववृत्तिरन्योन्याभावप्रत्यक्षे प्रयोजिका च अधिकरणयोग्यता इति व्यवह्रियते । तेन स्तम्भेपि पिशाचान्योन्याभावपिशाचवदन्योन्याभावयोः प्रत्यक्षत्वाप्रत्यक्षत्वोपपत्तिः । अधिकरणयोग्यतेत्यस्य योग्याधिकरणवृत्तित्वमित्यर्थः । तेन स्तम्भ इव वाय्वादौ न पिशाचान्योन्याभावप्रत्यक्षम् इति भावः ( दि० १।३ पृ० १२७ ) । ५ अनुमित्सानन्तरं लिङ्गदर्शनादिक्रमेण यावता कालेनोत्सर्गतः परामर्शो जायते तावानेव कालः । अनुमित्सोत्पत्त्यधिकरणक्षणमारभ्य क्रमेण पक्षविषयकलिङ्गज्ञानव्याप्तिस्मरणयोरुत्पत्तौ सत्यामुत्सर्गतो यावता कालेन परामर्शोत्पत्तिः अनुमित्सोत्पत्तिक्षणमारभ्य तत्क्षणपर्यन्तं यावन्तः क्षणाः यो वा तावन्मात्रक्षणावस्थायी स्थूलकालस्तत्समुदाय एव वेत्यर्थः । एवं च क्षणचतुष्टयं तदधिककालानवस्थायी स्थूलसमयश्च योग्यता इति पर्यवसितम् ( ग० २ पक्ष० पृ० २८ ) । इयं च योग्यता मिश्रमतानुसारिण्यनुमितिप्रयोजिका च अनुमित्सायोग्यता इति व्यवह्रियत इति बोध्यम् । अनुमित्सोत्पत्त्यनन्तरमनुमित्सानाशेपि सिद्धौ सत्यां यावत्कालमध्ये अनुमितिर्जायते तावानेव कालः ( दीधि० २ पक्ष० पृ० १३६ ) । ६ साधकबाधकमानाभावः ( चि० २ पक्ष० पृ० ३३ ) । इयं योग्यता त्वनुमितौ प्रयोजिका पक्षतात्मकसंशययोग्यता इत्युच्यते ।

**योग्यानुपलब्धिः**—( अनुपलब्धिः ) [ क ] प्रतियोगितद्व्याप्येतरप्रतियोग्युपलम्भकयावत्सामग्रीविशिष्टप्रतियोग्युपलम्भाभावः ( कु० ३ टी० ) । [ ख ] अभावप्रत्यक्षसामग्रीविशिष्टप्रतियोग्यनुपलब्धिः ( त० प्र० १ ) । अत्र अनुपलब्धौ योग्यत्वविशेषणदानेन अन्धकारे न घटाभावप्रत्यक्षा-

पत्तिः । तथा हि आलोकसंयोगाद्यसत्त्वदशायां अत्र घटः स्यात् तर्ह्युपलभ्येत इत्यापादनासंभवेन योग्यानुपलब्ध्यभावात् न तत्र घटाभावप्रत्यक्षम् ( नील० पृ० १८ ) इति । अत्र भट्टा आहुः अभावप्रत्यक्षे चेन्द्रियं न करणं किंतु योग्यानुपलब्धिरेव ( दि० १ ) इति । अत्रेदं बोध्यम् यस्य सत्त्वं यत्रानुपलब्धिविरोधि तस्याभावस्तत्र गृह्यते ( चि० ४ ) इति । शिष्टमुदाहरणप्रयोजनादिकं च अनुपलब्धिशब्दव्याख्यानावसरे योग्यताशब्दव्याख्यानावसरे च संपादितम् तत्तत्र दृश्यम् ।

**योनिजम्**—( शरीरम् ) शुक्रशोणितयोः परस्परमेलनजन्यम् ( दि० १।२ पृ० ७० ) ( सि० च० १ पृ० ६ ) । यथा मनुष्यादिशरीरं योनिजम् । शिष्टं तु शरीरशब्दे दृश्यम् ।

**यौगपद्यम्**—१ एककालवृत्तित्वम् ( ग० सत्प्र० ) । अनेकेषामेकक्षणसंबन्धः इत्यर्थः । यथा घटपटयोर्यौगपद्यम् । २ एककालोत्पत्तिकत्वम् ( मु० ) । यथा अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहोच्यते ( भा० प० श्लो० ८६ ) इत्यादौ यौगपद्यम् ।

**यौगिकम्**—( नाम शक्तपदं वा ) [ क ] यत्रावयवार्थ एव बुध्यते तत्पदम् ( मु० ४ पृ० १७९ ) ( त० प्र० ख० ४ पृ० ३० ) । [ ख ] अवयवशक्तिमात्रेणार्थप्रतिपादकम् । यथा पाचकादिपदम् ( नील० ) ( मु० ४ ) । अत्र पचति इति व्युत्पत्त्या प्रकृतिप्रत्ययादिना पाककर्ता बोध्यते इति विज्ञेयम् । [ ग ] यन्नाम स्वान्तर्निविष्टशब्दानां योगलभ्यस्यैव यादृशार्थस्यान्वयबोधं प्रति हेतुः तन्नाम तादृशार्थे यौगिकम् । तच्च यौगिकं त्रिविधम् समासः तद्धितात्तकम् कृदन्तं चेति । अत्र विशेषो ज्ञेयः । द्वन्द्वोपि समासः स्वघटकशब्दानामाकाङ्क्षया लभ्यस्य धवखदिराद्यर्थस्यान्वयबोधकतया यौगिक एव । ब्राह्मणी श्वश्रूः शूद्रेत्यादौ ङीबादेः स्त्रीत्ववाचित्वे तादृशं नाम यौगिकमेव । अन्यथा तु स्त्रीत्वादिमति तत्तदर्थे रूढमेव । नातो विभागस्य व्याघातः इति ( श० प्र० श्लो० २९ टी० पृ० ३८ ) ।

**यौगिकरूढम्**—( नाम शक्तपदम् ) [ क ] यत्रावयवार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधः तत् ( मु० ४ पृ० १८० ) ( त० प्र० ४ पृ० ३० ) । अत्र यौगिकं च तद्रूढं च इति व्युत्पत्तिरनुसंधेया ( नील० ४ पृ० ३१ ) । अत्र शब्दशक्तिप्रकाशकृत आहुः । इदं यौगिकरूढं पदं रूढयौगिकम् इत्यप्युच्यते ( श० प्र० श्लो० १५ ) इति । एतस्योदाहरणं तु नामशब्दव्याख्याने संपादितम् इति तत्र दृश्यम् । वयमत्राधिकं ब्रूमः । योगरूढिरूपशक्तिवद्यौगिकरूढिरूपा शक्तिर्नातिरिक्ता । किंतु योग रूढि एतदुभयात्मिकैव । योगरूढिशक्तिस्तु योगविशिष्टरूढित्वेन रूपेण विशिष्टैकार्थबोधकतया अतिरिक्ता इति विशेषः इति । [ ख ] यौगिकार्थरूढार्थयोः स्वातन्त्र्येण बोधकं पदम् । [ ग ] योगेन रूढ्या च परस्परासहकारेणार्थप्रतिपादकम् । यथा उद्भिदादिपदं यौगिकरूढम् । अत्र उद्भित्पदं योगेन तरुगुल्मादेः रूढ्या तु यागविशेषस्य वाचकम् । ( नील० ४ पृ० ३१ ) ( मु० ४ ) । अत्र प्रमाणम् उद्भिदस्तरुगुल्माद्याः ( अमर० का० ३ वर्ग० १ श्लो० ५१ ) इति । उद्भिदा यजेत पशुकामः ( श्रुतिः ) इत्यादावुद्भित्पदं तन्नामकयागविशेषवाचकम् । अथ वा उद्भित्पदं यौगिकं खनित्रे रूढं यागविशेषे ( त० प्र० ख० ४ पृ० ३० ) । यथा वा अश्वगन्धादिपदं यौगिकरूढम् । तथा हि । अश्वगन्धादिपदात्कदाचिदोषधिविनिष्ठसमुदायनिरूपितशक्त्यौषधिबोधः । कदाचित्तु अश्वस्य गन्धोस्याम् इति व्युत्पत्त्या वाजिशालादिबोधोवयवशक्त्या इति ( वै० सा० द० ) । अथ वा अश्वगन्धादिपदमौषधिविशेषबोधे रूढम् । अश्वसंबन्धवत्तया वाजिशालाबोधे यौगिकम् । इदं यौगिकरूढम् इत्युच्यते । रूढिर्योगापहारिणी इति तु प्रकरणाद्यभावे बोध्यम् । यत्र मण्डपपदादिभ्यो मण्डपानकर्त्रादि रूढ्यर्थमण्डपादिगुणवत्त्वेन बोधस्तत्र प्रथमप्रतीतरूढिविषयमुख्यार्थापरित्यागेन योगाद्रूढिपूर्वकलक्षणाया बलवत्त्वेन लक्षणयैव बोधः ( ल० म० आकाङ्क्षादिवि० पृ० १२ ) ।

र.

**रक्तः**—१ ( गुणः ) रूपविशेषः । यथा रक्तो घट इत्यादौ । अत्र रक्तपदस्य शक्तिबोध्योर्थो रक्तरूपमेव । तथापि रक्तघटयोः सामानाधिकरण्यानुरोधेनात्र रक्तपदस्य रक्तरूपवति लक्षणा न्यायमते स्वीक्रियते । तेन रक्तरूपवदभिन्नो घटः इति शाब्दबोधः । शाब्दिकास्तु गुणवचनेभ्यो मतुपो लुगिष्टः इति वार्तिकेन लुप्तेन मतुपैव विशिष्टार्थो बोध्यते इति रक्तपदस्यात्र शक्त्यैव बोध्योर्थो गृह्यते । नात्र लक्षणा स्वीकार्या इत्याहुः । २ शरीरस्थो रसपाकजन्यो मांसहेतू रुधिराख्यो धातुविशेषः । तत्स्वरूपमुक्तं भावप्रकाशे यथा यदा रसो यकृद्याति तत्र रञ्जकपित्ततः । रागं पाकं च संप्राप्य स भवेद्रक्तसंज्ञकः ॥ इति ।

**रक्षणम्**—त्राणम् ।

**रजः**—[ क ] जगत्कारणे या दुःखात्मता तद्रजः ( सर्व० सं० पृ० ३२६ सां० ) । [ ख ] जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम् ( याज्ञवल्क्य० अ० १ श्लो० ३६२ ) ।

**रजनी**—तत्परा रजनी ज्ञेया ( पु० चि० पृ० ४६ ) तत्परा सायंकालव्यापत ।

**रत्नत्रयम्**—रत्नत्रयपदवेदनीयतया प्रसिद्धं सम्यग्दर्शनादित्रितयमर्हत्प्रवचनसंग्रहपरे परमागमसारे प्ररूपितं सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ( सर्व० सं० पृ० ६२ आर्ह० ) इति ।

**रथकारः**—वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः । शूद्रायां वैश्यादुत्पन्ना करणी । तस्यां करण्यां माहिष्यादुत्पन्नो रथकारः ( जै० न्या० अ० ६ पा० १ अधि० १२ ) । तथा च याज्ञवल्क्यः माहिष्येण करण्यां तु रथकारः प्रजायते ( याज्ञ० १।९५ ) इति ।

**रथसप्तमी**—यस्यां मन्वन्तरस्यादौ रथारूढो दिवाकरः । माघमासस्य सप्तम्यां सा तस्माद्रथसप्तमी ॥ ( पु० चि० पृ० १०४ ) ।

**रन्ध्रम्**—नवमी ( पु० चि० पृ० ३० ) ।

**रसः**—१ ( गुणः ) [ क ] रसनग्रहणो योर्थः सः ( वै० उ० ३।१।१ प्रशस्त० पृ० १२ ) । अत्र अर्थशब्देन धर्मी भावभूत उच्यते । तेन रसत्वादौ रसाद्यभावे च नातिव्याप्तिः । स च बाह्यैकेन्द्रियग्राह्यः ( वै० उ० ३।१।१ ) रसनसहकारी च ( प्रशस्त० पृ० १२ ) । लक्षणं तु रसत्वमेव । तच्च रसनग्राह्यगुणविभाजकधर्मवत्त्वम् ( वाक्य० १ पृ० ७ ) ( वै० उ० ७।१।६ ) । अत्र व्युत्पत्तिः रस्यते आस्वाद्यते इति रसः ( कर्मणि प्रत्ययः ) । [ ख ] रसनग्राह्यो गुणः ( त० भा० ) ( त० सं० ) । अत्र निष्कर्षस्तु रसनग्रहणवृत्तिगुणत्वावान्तरजातिमत्त्वम् इति । तेन नातीन्द्रियरसाद्यसंग्रहः ( वै० उ० ३।१।१ ) । [ ग ] रसनमात्रग्राह्यजातिमान् ( त० कौ० १ पृ० ४ ) । अत्र रसनग्राह्यां रसादिगतां सत्तां जातिमादाय द्रव्यादावतिव्याप्तिवारणाय मात्र इति पदं दत्तम् । [ घ ] रसवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमान् ( वै० उ० ७।१।६ ) । सा च जातिः रसत्वम् । रसः षड्विधः मधुरः अम्लः लवणः कटुः कषायः तिक्तश्च इति । द्रव्यगतमधुरादिषड्विधरसानां कारणादिकमुच्यते सुश्रुतग्रन्थे । स खल्वाप्यो रसः शेषभूतसंसर्गाद्विभक्तः षोढा विभज्यते । तद्यथा मधुरोम्लो लवणः कटुकस्तिक्तः कषायः इति । ते च भूयः परस्परसंसर्गात् त्रिषष्टिधा ( ६३ ) भिद्यन्ते । तत्र ( १ ) भूम्यम्बुगुणबाहुल्यान्मधुरः । ( २ ) भूम्यग्निगुणबाहुल्यादम्लः । ( ३ ) तोयाग्निगुणबाहुल्याल्लवणः । ( ४ ) वाय्वग्निगुणबाहुल्यात्कटुकः । ( ५ ) वाय्वाकाशगुणबाहुल्यात्तिक्तः । ( ६ ) पृथिव्यनिलगुणबाहुल्यात्कषायः इति । तत्र मधुराम्ललवणा वातघ्नाः । मधुरतिक्तकषायाः पित्तघ्नाः । कटुतिक्तकषायाः श्लेष्मघ्नाः । तत्र वायुरात्मनैवात्मा पित्तमाग्नेयम् श्लेष्मा सौम्यः इति । त एव रसाः स्वयोनिवर्धनाः अन्ययोनिप्रशमनाश्च ( सुश्रुते० रसविशेष० ) । केचिदाहुः । अग्नीषोमीयत्वाज्जगतो रसा द्विविधाः सौम्याः आग्नेयाश्च । तत्र मधुरतिक्तकषायाः सौम्याः कट्वम्लुलवणा आग्नेयाः । मधुराम्ललवणाः स्निग्धाः गुरवश्च । कटुतिक्तकषाया रूक्षा लघवश्च । सौम्याः शीताः आग्नेयाश्चोष्णाः ( सुश्रु० ) ।

स च रसः पृथिवीजलवृत्तिः। तत्र पृथिव्यां मधुरादिषट्प्रकारः पाकजः अनित्यश्च। अप्सु मधुरः अपाकजो नित्यानित्यात्मा। जलपरमाणुगतः नित्यः। द्व्यणुकादिजलगतः अनित्यः (त० भा० प्रमेयनि० पृ० ३२) (प्रशस्त० पृ० १२) (त० सं०)। अत्रेदं बोध्यम्। जले मधुर एव रसोस्ति। जम्बीररसादावम्लत्वग्रहस्त्वौपाधिकः जम्बीरगतोम्लस्तद्गत-जले परंपरया प्रतीयते (वाक्य० १ पृ० ७) (मु० १ पृ० ७६) इति। २ रसायनशास्त्रज्ञास्तु सारः। यथा ओषधीनां रसः (ताण्ड्यब्राह्मणम्) इत्यादौ गुडमधूकपुष्पबकुलत्वग्बदरीमूलादिभवः सारः इत्याहुः। सारोत्र मदिरा। अलंकारशास्त्रे तु धर्मदत्त आह रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते। तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः॥ (सा० द० परि० ३ श्लो० ३३ टी० पृ० १७) इति। ३ देहस्थो भुक्तान्नादेः प्रथमपरिणाम इति भिषज आहुः। अत्रोच्यते भावप्रकाशे यत्पाथो रसधातुर्यस्ततोभवदपां रसः। सद्रवं सकलं देहं रसतीति रसः स्मृतः॥ इति। अथ रसस्य स्वरूपमाह सम्यक्पक्वस्य भुक्तस्य सारो निगदितो रसः इति (वाच०)। ४ आलंकारिकास्तु विभावानुभाव-संचारिभावव्यङ्ग्यो रत्यादिस्थायिभावकः शृङ्गारादिर्नवविधः रस इत्याहुः। तल्लक्षणं चोक्तम् विभावेनानुभावेन व्यक्तः संचारिणा तथा। रसतामेति रत्यादिः स्थायी भावः सचेतसाम्॥ इत्यादि (सा० द० परि० ३ श्लो० ३२ पृ० १६)। नवविधस्तु शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। बीभत्सोद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः॥ (सा० द० परि० ३ श्लो० २०९) इति। वत्सलाख्यं दशममपि रसं मुनीन्द्रादयोङ्गी-चक्रुः (सा० द० परि० ३ श्लो० २४१ पृ० ६५)। ५ ब्रह्मण आनन्दः ज्ञानं वा रसः। यथा रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति (तैत्ति० उप० २।७) इत्यादौ इति वेदान्तिन आहुः। अत्रालंकारिका आहुः। सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः। वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥ (सा० द० परि० ३ श्लो० ३३ पृ० १६) इति।

**रसकर्म**—स्वेदनमर्दनमूर्च्छनस्थापनपातननिरोधनियमाश्च । दीपनगगनग्रासप्रमाणमथ जारणा पिधानम् ॥ गर्भद्रुतिबाह्यद्रुतिक्षारणसंरागसारणाश्चैव । क्रामणवेधौ भक्षणमष्टादशधेति रसकर्म ॥ ( सर्व० सं० पृ० २०५ रसेश्व० ) ।

**रसनम्**—( इन्द्रियम् ) [ क ] गुडे मधुरो रसः इति रसप्रत्यक्षासाधारणं कारणम् ( त० कौ० १ पृ० १० ) । यथा पित्तेन दूने रसने सितापि तित्तायते हंसकुलावतंस (नैष० ३।९४) इत्यादौ । एतच्च रसनं जलीयमिन्द्रियम् सर्वप्राणिनां रसोपलम्भकम् विजातीयावयवानभिभूतैर्जलावयवैरारब्धम् जिह्वाग्रवर्ति च (प्रशस्त० पृ० ४) (त० भा० प्रमे० पृ० २६) ( त० सं० ) । रसनस्य जलीयत्वे अनुमानं प्रमाणम् । तद्यथा रसनेन्द्रियं जलीयम् रूपादिषु पञ्चसु मध्ये रसस्यैवाभिव्यञ्जकत्वाल्लालोदकवत् मधुररसाभिव्यञ्जकोदकवद्वा इति ( सि० च० ) ( मु० १ जलनि० पृ० ७७ ) ( त० भा० प्रमेयनि० पृ० २६ ) । [ ख ] रसग्राहकं कर्मेन्द्रियम् ( न्या० म० १ पृ० १४ ) ।

**रसाभासः**—दोषविशेषयुक्तो रसः । यथा उपनायकादिगतशृङ्गारादी रसः । अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः ( सा० द० परि० ३ श्लो० २४७ पृ० ६७ ) इति ।

**राका**—( पौर्णमासी ) राका संपूर्णचन्द्रा स्यात्कलोनानुमतिः स्मृता ( पु० चि० पृ० ३१७ ) ।

**राक्षसः**—(विवाहः) राक्षसो युद्धहरणात् (याज्ञवल्क्य० अ० १ श्लो० ६१)।

**रागः**—१ ( दोषः ) [ क ] आसक्तिलक्षणो दोषः । यथा तृष्णा ( वात्स्या० ४।१।३ ) । [ ख ] पुनः पुनर्विषयानुरञ्जनेच्छा ( प्रशस्त० २ पृ० ३३ ) । रागलक्षणं चोज्ज्वलमणिनोक्तम् । सुखमप्यधिकं चित्ते सुखत्वेनैव रज्यते । यतस्तु प्रणयोत्कर्षात्स राग इति कथ्यते ॥ इति ( वाच० ) । [ ग ] सुखाभिज्ञस्य सुखानुस्मृतिपूर्वकः सुखसाधनेषु तृष्णारूपो गर्धो रागः ( सर्व० सं० पृ० ३६२ पात० ) ।

२ महारजनादिवर्णविशेषः इति काव्यज्ञा आहुः । ३ गायकास्तु निषादादिस्वरयोनिकः स्वरविशेषः । यथा मालवभैरवादी राग इत्याहुः । तत्स्वरूपं च यैस्तु चेतांसि रज्यन्ते जगत्रितयवर्तिनाम् । ते रागा इति कथ्यन्ते मुनिभिर्भरतादिभिः ॥ ( वाच० ) इति । तेषां मतभेदेन भेदा यथा आदौ मालवरागेन्द्रस्ततो मल्लारसंज्ञितः । श्रीरागश्च ततः पश्चाद्वसन्तस्तदनन्तरम् ॥ हिन्दोलश्चाथ कर्णाट एते रागाः षडेव तु (संगीतदामो०) इति । भरतमते तु भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा। श्रीरागो मेघरागश्च रागाः षडिति कीर्तिताः ॥ ( वाच० ) इति । अत्र एकैकरागे रागिण्यः स्त्रियः षट् । रागिण्यो गीत्यङ्गानि स्वरभेदाः । तास्तु रागपत्न्यः इत्युच्यन्ते ( संगीतदा० ) । एवं षट्सु रागेषु रागिणीभेदाश्च षट्त्रिंशत् ( ३६ ) । यथा षट्त्रिंशद्रागिणीभेदाः क्रमशः कथिता मया। धानसी १ मालसी २ चैव रामकीरी ३ च सिन्धुडा ४। आशावरी ५ भैरवी ६ च मालवस्य प्रिया इमाः ॥ वेलावली १ पुरवी २ च कानडा ३ माधवी ४ तथा। कोडा ५ केदारिका ६ चापि मल्लारदयिता इमाः ॥ गान्धारी १ सुभगा २ चैव गौरी ३ कौमारिका ४ तथा । वेलोयारी ५ च वैरागी ६ श्रीरागस्य प्रिया इमाः ॥ तुडी १ च पञ्चमी २ चैव ललिता ३ पठमञ्जरी ४। गुर्जरी ५ च विभाषा ६ च वसन्तस्य प्रिया इमाः ॥ मायूरी १ दीपिका २ चैव देशकारी ३ च पाहिडी ४। वराडी ५ सोरहाटी ६ च हिन्दोलस्य प्रिया इमाः ॥ नाटिका १ चाथ भूपाली २ रामकेली ३ गडा ४ तथा । कामोदा ५ चाथ कल्याणी ६ कर्णाटस्य प्रिया इमाः ॥ ( संगीतदा० ) इति। एवम् तत्तद्गानकालभेदाः तत्तत्पुत्रादयश्च तत्रैव द्रष्टव्याः ( वाच० )।

रात्रिः—१ [ क ] निरस्तैतद्द्वीपवर्तिरविरश्मिजालः कालविशेषः ( कि० व० १ )। [ ख ] संपूर्णादित्यमण्डलदर्शनयोग्यो यः कालस्तद्भिन्नः कालः ( वै० )। [ ग ] अन्ये तु नृणां स्वस्वदेशापेक्षया सूर्यमण्डलस्यादर्शनयोग्यः काल इत्याहुः । [ घ ] धर्मशास्त्रे तु अहर्विपरीता रात्रिः

इत्याहुः । २ पौराणिकादयस्तु पितॄणां शुक्लपक्षरूपः कालः देवानां च दक्षिणायनरूपः काल इत्याहुः । तदुक्तम् मासेन च मनुष्याणां पितॄणां तदहर्निशम् । कृष्णपक्षे दिनं प्रोक्तं शुक्ले रात्रिः प्रकीर्तिता ॥ इति । देवविषयेप्युक्तम् उत्तरायणे दिनं प्रोक्तं रात्रिः स्याद्दक्षिणायने ( वाच० ) इति । ३ हरिद्रा इति काव्यज्ञा आहुः ।

**रामायणम्**—दशरथपुत्ररामचरितप्रतिपादकम् आदिकविवाल्मीकिकृतं महाकाव्यम् । तच्च सप्तकाण्डात्मकम् ब्रह्मलोके कोटिश्लोकात्मकम् मनुष्यलोके चतुर्विंशतिसाहस्रं पञ्चशतसर्गयुतम् । सप्तकाण्डानि तु बालकाण्डम् अयोध्याकाण्डम् अरण्यकाण्डम् किष्किन्धाकाण्डम् सुन्दरकाण्डम् युद्धकाण्डम् उत्तरकाण्डं च इति । तत्प्रतिपाद्यविषयाश्च संक्षिप्तकथाः गरुडपुराणे ( अ० १४८ ) पद्मपुराणे चोक्तास्तत्र द्रश्याः ।

**रिक्थग्राहः**—विभागद्वारेण रिक्थं गृह्णातीति रिक्थग्राहः । वारस इति प्र० ( मिताक्षरा अ० २ श्लो० ५१ ) ।

**रिक्थम्**—अन्यदीयं द्रव्यमन्यस्य क्रयादिव्यतिरेकेण यत्स्वीयं भवति तद्रिक्थम् ( मिताक्षरा अ० २ श्लो० ५१ ) ।

**रुक्मम्**—कण्ठे धृतः सन्नुरसि लम्बमानः सौवर्ण आभरणविशेषः रुक्मशब्दार्थः ( जै० न्या० अ० ५ पा० २ अधि० १२ ) ।

**रुचिः**—१ [क] प्रीतिजनकता । यथा नारदाय रोचते कलह इत्यादौ रुच्यर्थः ( ग० व्यु० का० ४ पृ० ९६ ) । अत्र रुच्यर्थानां प्रीयमाणः ( पा० सू० १।४।३३ ) इत्यनुशासनेन प्रीतिजनकतारूपरुच्यर्थघटकप्रीतिभागिनः संप्रदानसंज्ञा विहिता । तादृशक्रियाश्रयतया कलहादेः कर्तृता । तथा च आश्रितत्वं चतुर्थ्यर्थः । तस्य प्रीतावन्वयः । तादृशजनकत्वस्य कलहेन्वयः ( ग० व्यु० का० ४ पृ० ९६ ) । [ख] वैयाकरणास्तु विषयतासंबन्धावच्छिन्नप्रीत्यनुकूलस्तत्समानाधिकरणो व्यापारः । यथा हरये रोचते भक्तिरित्यादौ रुचेरर्थः इत्याहुः । अत्र व्यापारफलभूतप्रीतेः समवायेनाश्रयो हरिः संप्रदानत्वशक्तिमान् । तथा

च हरिसंप्रदानिका भक्तिकर्तृका रुचिः इति बोधः । हरिनिष्ठा या भक्तिविषया प्रीतिः तदनुकूलो भक्तिनिष्ठो व्यापारः इति यावत् ( ल० म० का० ४ पृ० १०२ ) २ आसङ्गः । ३ अभिलाषः । ४ किरणः । ५ शोभा । ६ बुभुक्षा । ७ गोरोचना चेति काव्यज्ञा आहुः । ८ प्रजापतिविशेषः इति पौराणिका आहुः । ९ आलिङ्गनविशेषः इति कामशास्त्रज्ञा अङ्गीचक्रुः ( वाच० ) ।

**रुद्रः**—१ अष्टमी तिथिः । कामशब्दे दृश्यम् । २ एकादशी तिथिः ( पुरु० पृ० ३७ ) । ३ एकादशभेदभिन्न ईश्वरविशेषः । एकादशभेदाश्च यथा वीरभद्रश्च शंभुश्च गिरिशश्च महायशाः ॥ अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ॥ भुवनाधीश्वरश्चैव कपाली च विशांपतिः । स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः ॥ (याज्ञ० अ० २ श्लो० १०२ मिता०) ।

**रूढम्**—१ (नाम) [ क ] यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेणार्थो बुध्यते तत्पदम् । यथा गोमण्डलादिपदम् (मु० ख० ४ पृ० १७९) (त० प्र० ख० ४ पृ० ३०) । [ ख ] रूढिशक्तिमात्रेणार्थप्रतिपादकं पदम् । यथा गोपदघटादिपदम् ( नील० ४ पृ० ३१ ) । [ ग ] यन्नाम यादृशार्थे संकेतितमेव न तु यौगिकमपि तद्रूढम् । यथा गोप्रभृत्यर्थे गवादिशब्दो रूढः ( श० प्र० श्लो० १५ पृ० १८ ) । अत्र गमेर्डोः (उणा० सू० २।६७) इत्यौणादिकप्रत्ययस्य शक्तिविरहेण यौगिकत्वविरहात् गकारोत्तरौकारत्वाद्यानुपूर्वीकत्वेनैवार्थबोधकत्वम् । रूढं संज्ञा इति पदेनाभिलप्यते (श० प्र० श्लो० १६ टी० पृ० १९) । अतः रूढ इति शब्दस्य विभागः संज्ञाशब्दव्याख्याने दृश्यः । [ घ ] प्रकृतिप्रत्ययार्थमनपेक्ष्य समुदायशक्त्यार्थबोधकम् । २ जातम् । ३ प्रसिद्धम् इति काव्यज्ञा आहुः ।

**रूढयौगिकम्**—( नाम ) यौगिकरूढशब्दवदस्यार्थोनुसंधेयः ( श० प्र० श्लो० १५ ) ।

**रूढलक्षणा**—[ क ] निरूढलक्षणाशब्दवदस्यार्थोनुसंधेयः । [ ख ] शाब्दिकास्तु असति प्रयोजने शक्यार्थबाधप्रतिसंधानपूर्वकतत्संबन्ध्यपरार्थबोधे

निरूढलक्षणा इति व्यवहारः । अन्यथा तादृशप्रयोजनाभावे रूढिशक्तिरेव । यथा कुशलपदे तैलपदे च इत्याहुः ( ल० म० आकाङ्क्षावि० पृ० १४ )। अत्र तैलपदस्य तिलविकारद्रव्ये शक्तस्य सार्षपादौ निरूढलक्षणा । शिष्टं तु निरूढलक्षणाशब्दे दृश्यम् ।

**रूढिः**—१ ( शब्दशक्तिः ) [ क ] समुदायशक्तिः ( त० दी० ४ )। यथा मण्डप इत्यादिपदे रूढिः शक्तिः । अत्र मकारादिवर्णानुपूर्वीकत्वेन शक्त्या जनाश्रयो बोध्यते इति विज्ञेयम् । [ ख ] शाब्दिकास्तु शास्त्रकारकल्पितावयवार्थाप्रतीतौ यदर्थनिरूपितं प्रकृतिप्रत्ययसमुदायमात्रे बोधकत्वम् तत्पदे सा तदर्थनिरूपिता रूढिः । यथा मणिनूपुरादौ इत्याहुः ( ल० म० आकाङ्क्षादिवि० पृ० १२ ) । अत्र कुमारभट्ट आह लब्धात्मिका सती रूढिर्भवेद्योगापहारिणी । कल्पनीया तु लभते नात्मानं योगबाधतः ॥ इति । तदर्थस्तु लब्धात्मिका क्लृप्ता शक्तिर्योगबाधिका । कल्पनीया तु योगबाध्या ( वाच० ) इति । २ जन्म । ३ प्रसिद्धिः इति काव्यज्ञा आहुः ।

**रूढिलक्षणा**—निरूढलक्षणाशब्दवदस्यार्थोऽनुसंधेयः ।

**रूप**—( धातुः ) प्रमाणोपन्यासेन स्वरूपादिकथनम् । यथा रूपयति अरूरूपत् इत्यादौ धात्वर्थः ।

**रूपकम्**—१ मूर्तम् । २ शुक्लादिवर्णविशेषः । ३ आकारः । ४ साहित्यशास्त्रज्ञास्तु अभिनयप्रदर्शको दृश्यकाव्यविशेषः । यथा शाकुन्तलादि इत्याहुः । रूपकस्य दशविधा भेदाः । नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः । ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥ इति । तस्य रूपकसंज्ञाहेतुमाह तद्रूपारोपात्तु रूपकम् इति । तद्दृश्यं काव्यम् इति । यथा नटे रामादिस्वरूपारोपात् रूपकम् इत्युच्यते ( सा० द० परि० ६ श्लो० २७३–२७४ ) । ५ आलंकारिकास्तु अर्थालंकारविशेषः इत्याहुः । तल्लक्षणं तु रूपकं रूपितारोपाद्विषये निरपह्नवे ( सा० द० परि० १० श्लो० ६६९ ) इति । ६ गणकास्तु गुञ्जात्रयपरिमाणम् इत्याहुः । अत्रोच्यते संचाली प्रोच्यते गुञ्जा तास्तिस्रो रूपकं भवेत् ( युक्तिक० ) इति । ७ राजतो नाणकविशेष इत्याधुनिका व्यवहरन्ति ।

**रूपत्वम्**——नीलसमवेतगुणत्वापरजातिः ( सर्वे० सं० पृ० २२० औ० ) ।

**रूपम्**——१ ( गुणः ) [ क ] चक्षुर्मात्रग्रहणो योर्थस्तत् । तच्च बाह्यैकेन्द्रियग्राह्यम् ( वै० उ० ३।१।१ ) द्रव्याद्युपलब्धिकारणम् नयनसहकारि च भवति ( भा० प० श्लो० १०१ ) ( प्रशस्त० ) । परमाणुगतं तु रूपं न प्रत्यक्षम् । एवं रसगन्धादिकमपि बोध्यम् । अत्र प्राञ्चो नैयायिका आहुः । द्रव्यगुणकर्मसामान्यानां चाक्षुषं स्पार्शनं च प्रत्यक्षं प्रति रूपं कारणम् इति कार्यकारणभावः । तेन वायौ रूपाभावान्न स्पार्शनप्रत्यक्षम् इति । नव्यास्तु चाक्षुषे द्रव्यप्रत्यक्षे एव रूपं कारणम् इति कार्यकारणभावः । तेन वायौ रूपाभावेपि स्पार्शनप्रत्यक्षमुपपद्यते इत्यङ्गीचक्रुः ( भा० प० श्लो० ५७ ) ( मु० १ पृ० ११३ ) । अत्रेदं बोध्यम् । रूपस्य चाक्षुषप्रत्यक्षे च मध्यमं महत्परिमाणम् उद्भूतत्वम् अनभिभूतत्वम् रूपत्वं च प्रयोजकम् । तत्र महत्परिमाणं तु सामानाधिकरण्यसंबन्धेन इति ज्ञेयम् । तेन परमाणौ महत्परिमाणाभावेन तद्वृत्तिरूपस्य प्रत्यक्षनिवारणम् । चक्षुर्वृत्तिशुक्लरूपस्यानुद्भूतत्वेन तादृशरूपस्य प्रत्यक्षनिवारणम् । वैश्वानरे मरकतकिरणादौ च विद्यमानस्य शुक्लरूपस्य वैश्वानरादिसंबद्धपार्थिवरूपेणाभिभवात्प्रत्यक्षनिवारणम् । रसस्पर्शादौ रूपत्वविरहाच्चाक्षुषत्वाभावः ( वै० उ० ४।१।८ ) ( मु० १ तेजोनि० पृ० ७८ ) इति । चक्षुर्मात्रग्रहणो योर्थ इत्यत्र अर्थशब्देन धर्मी भावभूत उच्यते । तेन गन्धत्वादौ गन्धाद्यभावे च नातिव्याप्तिः ( वै० उ० ३।१।१ ) । द्रव्यादित्रयमेवार्थः इति काश्यपनिर्णयः । अतो रूपादिसामान्यैर्नातिव्याप्तिर्भविष्यति ॥ ( ता० र० श्लो० ४१–४२ ) इति । काश्यपः कणादः । [ ख ] चक्षुर्मात्रबहिरिन्द्रियग्राह्यजातिमत् ( वै० उ० ७।१।६ ) । तादृशी जातिश्च रूपत्वादिः । [ ग ] नीलसमवेतगुणत्वापरजातिमत् ( सर्वे० पृ० २२० औलू० ) । [ घ ] चक्षुर्मात्रग्राह्यो विशेषगुणः ( त० कौ० ) ( त० सं० ) ( प्रशस्त० ) । तदर्थश्च इतरेन्द्रियाग्राह्यत्वं मात्रपदार्थः । चक्षुषश्चेतरत्वे ग्रहे चान्वयः । अथ वा चित्रगुरित्यादौ गोपदस्येव ग्राह्यपदस्यैव चक्षुरितरेन्द्रियाग्राह्यत्वविशिष्टचक्षुर्ग्राह्यत्वविशिष्टे लक्षणा । अवशिष्टपदे तात्पर्यग्राहके । उभयत्र

ग्राह्यत्वं लौकिकविषयताश्रयत्वम् । तेन गुरुत्वादीनां चक्षुषा अलौकिकग्रहेपि नातिव्याप्तिः । न वा रूपस्येतरेन्द्रियेणालौकिकग्रहेप्यसंभवः ( वाक्य० १ पृ० ६ ) इति । जन्यत्वं चेतरनिरूपितमसाधारणं ग्राह्यम् । तथा च चक्षुरितरेन्द्रियजन्यग्रहीयलौकिकविषयताशून्यत्वे सति चक्षुर्जन्यग्रहीयलौकिकविषयताशालित्वे च सति विशेषगुणत्ववत् । अत्र संयोगादिवारणाय प्रथमं सत्यन्तं दत्तम् । गुरुत्वादिवारणाय द्वितीयं सत्यन्तं दत्तम् । रूपत्वादिवारणाय गुणत्वं दत्तम् । प्रभाभित्तिसंयोगादिवारणाय विशेष इति पदं दत्तम् इति विज्ञेयम् ( वाक्य० १ पृ० ६ ) । वस्तुतः [ ङ ] त्वगग्राह्यचक्षुर्ग्राह्यगुणविभाजकधर्मवत् । तेन न परमाणुरूपे अव्याप्तिः इति विज्ञेयम् ( वाक्य० १ पृ० ६ ) । अथ वा [ च ] चक्षुर्ग्रहणवृत्तिगुणत्वावान्तरजातिमत् ( वै० उ० ३।१।१ ) । [ छ ] चक्षुर्मात्रग्राह्यजातिमान् गुणः । अत्र गुणपदं प्रभावारणाय दत्तम् । ( त० कौ० १ पृ० ४ ) । स च गुणः सप्तविधः शुक्लः नीलः पीतः रक्तः हरितः कपिशः चित्रः इति । केचिच्चित्ररूपं नाङ्गीकुर्वन्ति ( त० कौ० १ पृ० ४ ) । सिद्धान्तस्तु नीलपीतादिरूपकदम्बस्य चित्ररूपजनकत्वमध्यक्षसिद्धम् ( न्या० ली० पृ० १२ ) इति चित्ररूपमङ्गीकर्तव्यम् । अयं भावः । पटादिप्रत्यक्षान्यथानुपपत्त्या चित्ररूपमवश्यमङ्गीकार्यम् । तथा हि द्रव्यविषयकलौकिकचाक्षुषप्रत्यक्षं प्रति रूपं कारणम् इत्यनुभवसिद्धः कार्यकारणभावः स्वीकार्यः । तथा च चित्ररूपानङ्गीकारे रूपस्य दैशिकव्याप्यवृत्तित्वनियमादेकस्मिन्पटे नानारूपानङ्गीकारेण रूपसामान्याभावप्रसङ्गात्पटप्रत्यक्षस्यानुपपत्तिः ( त० दी० १ पृ० १२ ) इति । तच्च रूपम् पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यां सप्तविधम् पाकजम् अनित्यं च । अयं भावः । क्वचित् पाकजम् क्वचित्तु अपाकजम् एवमुभयविधमपि पृथिव्यां तिष्ठति । तथा च पाकजन्यस्यापाकजन्यस्य अवयवगतरूपजन्यस्य चोभयविधस्याप्यनित्यत्वम् इति । जले तेजसि च शुक्लमेव रूपं तिष्ठति । तच्चापाकजम् नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । भास्वराभास्वरभेदेन द्विविधं च । शुक्लं भास्वरं तेजसि । अभास्वरं शुक्लं जले ( त० भा० ) ( त० सं० ) । रूप-

मुद्भूतानुद्भूतभेदेनापि द्विविधम् । तत्रोद्भूतरूपमेव चक्षुर्विषयः । तच घटपटादिचाक्षुषद्रव्ये तिष्ठति । अनुद्भूतं त्वप्रत्यक्षमेव । तच चक्षुरादौ तप्तवारिस्थतेजसि च तिष्ठति । रूपं पृथिव्युदकज्वलनवृत्ति । तत्र सलिलादिपरमाणुषु नित्यम् । पार्थिवपरमाणुष्वग्निसंयोगविरोधि पाकजमनित्यम् । सर्वकार्यद्रव्येषु कारणगुणपूर्वकम् । आश्रयविनाशादेव विनश्यति ( प्रशस्त० गुणनि० पृ० १२ ) इति । २ तत्तद्व्यक्तिरुक्तिष्ट-धर्मः । यथा अनुमितिविरोधितावच्छेदकं रूपम् इत्यादौ । ३ आकारः। यथा घटरूपं द्रव्यमित्यादौ । एतस्य परिमाणकृताश्चत्वारो भेदाः ह्रस्वः दीर्घः चतुरस्रः वृत्तश्च इति । स्पर्शकृतास्तु कठिनचिक्कणश्लक्ष्णपिच्छल-मृदुदारुणभेदेनाकारस्य भेदाः षड्विधाः सन्ति ( वाच० ) । ४ स्वरूपम् स्वभावो वा । यथा परमाणुरूपा नित्यपृथिवी इत्यादौ । ५ सादृश्यम् । यथा पितृरूपस्तनयः मातृरूपा कन्या इत्यादौ । स च रूपशब्दः उत्तरपदस्थश्चेत्सदृशार्थको भवति इति ज्ञेयम् । ६ ज्योतिषज्ञास्तु एकत्व-संख्यान्वितं वस्तु । यथा रूपं भजेत्स्यात्परिपूर्तिकालः ( लीलावती ) इत्यादौ इत्याहुः । ७ गणकास्तु अव्यक्तराशिसहचरितव्यक्तसंख्यान्वितं वस्तु इत्याहुः । तदुक्तं बीजगणिते एकाव्यक्तं शोधयेदन्यपक्षाद्रूपाण्यन्य-स्येतरस्माच्च पक्षात् इति । ८ केचिद्वेदान्तिनस्तु वाच्यम् विकार्यम् ईश्वरस्याविद्यात्मकोपाधिविशेषो वा । यथा नामरूपे व्याकरवाणि ( छा० उ० ६।३।२ ) इत्यादौ इत्याहुः ( शारीर० २।१।१४ )। ९ शुक्रशोणितम् इति बौद्धा आहुः । १० नाटकादिदृश्यकाव्यम् इति साहित्यशास्त्रज्ञा आहुः। ११ वैयाकरणास्तु शब्दधात्वादीनां विभक्त्यादि-योगेन निष्पन्नशब्दः । यथा रामः करोति इत्यादौ । यथा वा सुधी उपास्यः इति स्थितौ यण् इत्यादेशे जाते सुध्युपास्यः इति रूपं सिद्ध्यति इत्यादौ इत्याहुः । १२ शृङ्गारकाव्यज्ञास्तु सौन्दर्यम् इत्याहुः । तल्ल-क्षणमुज्ज्वलमणिनोक्तम् अङ्गान्यभूषितान्येव केनचिद्भूषणादिना । येन भूषितवद्भान्ति तद्रूपमिति कथ्यते ॥ ( वाच० ) इति ।

**रूपस्कन्धः**—रूप्यन्त एभिर्विषया इति रूप्यन्त इति च व्युत्पत्त्या सवि-षयाणीन्द्रियाणि रूपस्कन्धः ( सर्व० सं० पृ० ४० बौ० ) ।

**रूपहानिः**—[ क ] निःसामान्यत्वगर्भस्य विशेषलक्षणस्य रूपस्य व्याघातः विशेषावृत्तित्वम् यत् सा रूपहानिः । सा च विशेषस्य जातिमत्त्वे बाधिका इति जातिबाधकेषु संगृहीता द्रव्यकिरणावल्यामुदयनेन इति विज्ञेयम् ( दि० १ सामान्यनि० पृ० ३४ )। विशेषलक्षणं स्वतो व्यावर्तकत्वं चैतद्द्वयं विशेषशब्दव्याख्यानावसरे संपादयिष्यते । अत्रायमाशयः विशेषे जात्यन्तराङ्गीकारे सामान्यशून्यत्वघटितविशेषलक्षणासंभवः इति । [ ख ] स्वतो व्यावर्तकत्वस्य हानिः । यथा विशेषत्वस्य जातित्वस्वीकारे रूपहानिः । अत्र विशेषस्य विशेषत्वात्मकजातिमत्त्वस्वीकारे स्वतो व्यावर्तकत्वं न संभवति इत्याशयः । तथा हि । यदि विशेषाः द्रव्याश्रितत्वे ( मूर्तवृत्तित्वे ) सति जातिमन्तः स्युः तदा गुणाः कर्माणि वा स्युः । विभुवृत्तित्वे सति यदि जातिमन्तः स्युः तदा गुणाः स्युः इति विशेषपदार्थस्वरूपहानिः ( वै० उ० १।२।३ ) । अथ वा यदि विशेषत्वं जातिः स्यात् तदा जातिमतः स्वतो व्यावृत्तत्वासंभवेन स्वतो व्यावृत्तत्वरूपस्यासाधारणधर्मस्य व्याघातः स्यात् । अतो विशेषत्वं न जातिः ( वै० वि० १।२।३ ) ।

**रेचकः**—कोष्ठ्यस्य वायोर्बहिर्निःसारणम् ( सर्व० सं० पृ० ३७६ पात० )।

**रेतः**—१ पुंसो रक्तादिपरिपाकजन्यो देहस्थो मज्जाहेतुश्चरमधातुः ( वाच० ) । यथा रेतोधाः पुत्रं नयति नरदेव यमक्षयम् ( भाग० स्क० ९ अ० २० श्लो० २१ दुष्यन्त० ) इत्यादौ । रेतस उत्पत्तिस्थानं तु मस्तकादि इति भारतीयभिषजां मतम् । रेतस उत्पत्तिस्थानमण्डमेव इति पाश्चात्यभिषजो वदन्ति । वयं तु पुंस्त्वोद्दीपकमेवाण्डम् न तु रेतस उत्पत्त्याश्रयः इति प्रतीमः । अत्र प्रसङ्गत उदाह्रियते । पुमान्पुंसोधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः । समेपुमान् पुंस्त्रियौ वा क्षीणेल्पे च विपर्ययः॥ ( मनु० अ० ३ श्लो० ) ( याज्ञ० १ ) इति । अपुमानिति पदच्छेदः । २ रसेश्वरदर्शनज्ञास्तु शिववीर्यस्वरूपः पारदरसः इत्याहुः । तदुक्तं रसार्णवे मम देहरसो यस्माद्रसस्तेनायमुच्यते ( सर्व० पृ० २०२ रसे० ) इति।

**रोगः**—१ धातुवैषम्यजातो व्याधिः । तल्लक्षणादिकं च रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता । रोगा दुःखस्य दातारो ज्वरप्रभृतयो हि ते ॥ इति ।

ते च स्वाभाविकाः केचित्केचिदागन्तवः स्मृताः। मानसाः केचिदाख्याताः कथिताः केपि कायिकाः॥ कर्मजाः कथिताः केचिद्दोषजाः सन्ति चापरे। कर्मदोषोद्भवाश्चान्ये व्याधयस्त्रिविधाः स्मृताः॥ इति च। साध्या याप्या असाध्याश्च व्याधयस्त्रिविधाः स्मृताः। सुखसाध्यः कष्टसाध्यो द्विविधः साध्य उच्यते॥ (राजनि०) इति च। २ कुष्ठौषधम् (मेदिनी०) (वाच०)।

**रोदनम्**—[क] इष्टवियोगेन अभिघातेन वा यद्वाष्पनिर्मोचनम् तत्। यथा सोरोदीत् इत्यादौ (शाबरभा० १।२।१ पृ० ३९)। इदमत्राम्नायते। सोरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रवशीयत तद्रजतꣳ हिरण्यमभवत्तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजꣳ हि यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देयम् (तैत्तिरीयसंहिता १।५।१–२) इति। [ख] क्रन्दनम्। तच्च दुःखजन्यो ध्वनिविशेषः इति काव्यज्ञा आहुः।

**रोधनम्**—[क] देशान्तरसंचारविरोधिव्यापारः। यथा गां व्रजं रुणद्धीत्यादौ रुधधात्वर्थो रोधनम्। अत्र संचारविरोधित्वं च संचारानुत्पादप्रयोजकत्वम्। अनुत्पादे प्रधानकर्मगोवृत्तित्वान्वयः। देशान्तरपदार्थैकदेशे देशविशेषणभेदे व्रजम् इति द्वितीयान्तार्थव्रजप्रतियोगित्वान्वयः। रुध्यते गां व्रजः इत्यादावन्वयबोधः स्वयमूहनीयः (ग० व्यु० का० २ ख० १ पृ० ४५)। अत्र व्रजस्याधिकरणत्वाविवक्षायाम् अकथितं च (पा० सू० १।४।५१) इत्यनेन गौणकर्मत्वम्। तत्र लकारः। गौणे कर्मणि दुह्यादेः इत्यनुशासनात्। अत्राधिकं च दोहनशब्दव्याख्याने ज्ञेयम्। रुध्यते गां व्रजः इत्यादौ व्यापारप्रयोज्यगोनिष्ठानुत्पादसंबन्धिसंचारावच्छेदकदेशनिष्ठभेदप्रतियोगी व्रजः इति शाब्दबोधः इति। [ख] शाब्दिकास्तु निर्गमप्रतिबन्धद्वारा व्रजाद्यधिकरणकचिरस्थित्यनुकूलव्यापारः। यथा व्रजमवरुणद्धि गामित्यादौ रुधेरर्थः इत्याहुः। अत्र व्रजे गौस्तिष्ठति तत्र तां निर्गमप्रतिबन्धेन चिरं स्थापयति इति संप्रत्ययः (ल० म० सुबर्थ० का० २ पृ० ९२)।

**रोहिणी**—कल्याणीशब्दे द्रष्टव्यम्।

ल.

**लः**—१ तिङ्शब्दवदस्यार्थोनुसंधेयः। अत्र लकारस्य कर्मत्वाद्यर्थबोधने सूत्रम् लः कर्मणि च भावे चाकर्मकेभ्यः ( पा० सू० ३।४।६९ ) इति। स च लकारो दशविधः लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् इति। अयं व्याकरणशास्त्रप्रसिद्धः प्रत्ययो विज्ञेयः। संक्षेपतस्तदर्थस्तु लड्वर्तमाने लेड्वेदे भूते लङ्लुङ्लिटस्तथा। विध्याशिषोश्च लिङ्लोटौ लृङ्लृटौ लुड्भविष्यति॥ इति। अयमत्र संग्रहः। कालो द्विविधः अद्यतनः अनद्यतनश्च। अद्यतनस्त्रिविधः भूतः भविष्यन् वर्तमानश्च। अनद्यतनो द्विविधः भूतः भविष्यंश्चेति। तत्र वर्तमानत्वे लट्। भूतत्वमात्रे लुङ्। भविष्यत्तामात्रे लृट्। लिङर्थे लेट्। लिङर्थेषु आशिषि च लोट्। विध्यादौ लिङ्। हेतुहेतुमद्भावाद्यधिकार्थविवक्षायामनयोर्लृङ्। अनद्यतने भूते तत्त्वेन विवक्षिते लङ्। तत्रैव परोक्षत्वविवक्षायां लिट्। अनद्यतने भविष्यति लुट् ( वै० सा० ल० पृ० १४७ ) इति। अयं लकार आख्यातम् इत्युच्यते ( म० प्र० ४ पृ० ५५ )। २ एकलघुको वर्णविशेषः ल इति वैयाकरणा आहुः। ३ इन्द्रः इति मेदिनीकार आह। ४ भूमिदेवताको मन्त्रविशेषः इति तान्त्रिका आहुः।

**ला**—( धातुः ) आदानम्। यथा विठ्ठल इत्यादौ। अत्र विग्रहः विदा ज्ञानेन ठान् शून्यान् मुमुक्षून् लाति गृह्णाति स्वप्रसादपात्रतया इति विठ्ठलः।

**लक्षकम्**—( नाम ) यादृशार्थसंबन्धवति यन्नाम संकेतितं तदेव तादृशार्थे लक्षकम् यदि तादृशार्थे शक्तिशून्यं भवेत्। यथा गङ्गायां घोषः प्रवसतीत्यादौ गङ्गादयः शब्दाः तीरादावसंकेतितास्तत्संबन्धिनीरादिशक्तत्वेन गृहीता एव तीराद्यन्वयं बोधयन्ति इति तत्र लक्षका भवन्ति। अत्र मीमांसका वदन्ति। पदमिव वाक्यमपि लक्षकम्। यथा गभीरायां नद्यां घोषः इति पदकदम्बकं गभीरनदीतीरस्य लक्षकम् इति। अत्रायमाशयः। अत्र न केवलं नदीपदं तीरलक्षकम्। गभीरायाम् इत्यस्यानन्वयापत्तेः। न हि तीरं गभीरम्। नापि गभीरपदं तीरलक्षकम्। नद्याम् इत्यस्या-

योग्यतापत्तेः । न हि तीरं नदी । तस्माद्वाक्यमेव तत्र गभीरनदीतीरस्य लक्षकम् इति । अत्र सिद्धान्तविदः नैयायिकाः समुत्तिष्ठन्ते । मीमांसकैर्यदुक्तं तन्न । नदीपदस्यैव गभीरनदीतीरात्मके विशिष्टे लक्षणा । गभीरपदं तु तात्पर्यग्राहकमेव इति वाक्ये लक्षणा नास्त्येव ( मु० ४ पृ० १०१ ) ( न्या० म० ४ पृ० १२ ) इति । सैन्धवादयश्च शब्दाः लवणादाविव तुरगादावपि शक्ता एव इति न ते लक्षका भवन्ति । चटपटाद्यनुकरणस्य हुंफडादिस्तोमस्य च स्वानुभावकत्वमपभ्रंशानामिव शक्तिभ्रमादेव । अतो न तेषां लक्षकत्वम् इति विज्ञेयम् ( श० प्र० श्लो० २३ टी० पृ० ३२—३३ ) । लक्षकं च जहत्स्वार्थादिविविधलक्षणावत्त्वेनानेकविधम् । तथा हि जहत्स्वार्थलक्षणया तीरत्वादिना तीरादिबोधकं गङ्गादिपदम् । अजहत्स्वार्थलक्षणया द्रव्यत्वादिना नीलघटत्वादिना च द्रव्यनीलघटादिबोधकं घटादिपदम् । निरूढलक्षणया आरुण्यादिप्रकारेण तदाश्रयद्रव्यबोधकमरुणादिपदम् । आधुनिकलक्षणया ( स्वारसिकलक्षणया ) घटत्वादिना घटादिबोधकं पटपदम् । गौण्या लक्षणया अग्निसदृशत्वादिना माणवकबोधकमग्न्यादिपदम् ( श० प्र० श्लो० २४ टी० पृ० ३५ ) इति ।

**लक्षणम्**—१ [ क ] उद्दिष्टस्यातत्त्वव्यवच्छेदको धर्मः ( वात्स्या० १।१।३ ) । यथा इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानं...प्रत्यक्षम् ( वात्स्या० १।१।४ ) । इति प्रत्यक्षलक्षणम् । त्रिविधा शास्त्रस्य प्रवृत्तिः उद्देशः लक्षणम् परीक्षा चेति । तत्र उद्देशानन्तरं लक्षणम् । ततः परीक्षा । लक्षणस्य प्रयोजनं च सर्वं हि लक्षणमितरपदार्थव्यवच्छेदकम् ( न्या० वा० १।१।१४ पृ० ८२ ) । पदार्थतत्त्वज्ञानं लक्षणस्य प्रयोजनम् इति तर्कभाषायामुक्तम् ( त० भा० पृ० १ ) । व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति दीपिकायाम् ( त० दी० पृ० ५ ) ( सि० च० ) । अत्रायं विशेषो ज्ञेयः । लक्षणस्य व्यावृत्तिप्रयोजनकत्वे सप्तपदार्थेतरत्वाप्रसिद्ध्या पदार्थसामान्यलक्षणस्य अभिधेयत्वस्य प्रयोजनं शब्दप्रयोग एव । व्यावृत्तेरत्रासंभवात् । अन्येषां लक्षणानां तूभयं व्यावृत्तिर्व्यवहारश्च प्रयोजनम्

द्यवधेयम् ( ल० व० ) । व्यवहारः शब्दव्यवहारः शब्दशक्तिग्रहः । लक्षणज्ञानस्य प्रयोजनं यथा सास्नादिमान् गौः इति लक्षणज्ञाने सति यं यं सास्नादिमन्तं पिण्डं पश्यति तं तं गोशब्दवाच्यं प्रत्येति ( प्र० प० पृ० २ ) इति । अत्रेदं बोध्यम् । सर्वं लक्षणं अभिधेयत्वादिवर्जम् व्यतिरेकिहेतुर्भवति । यथा पृथिवीलक्षणं गन्धवत्त्वम् । तथा च विवादपदं पृथिवी गन्धवत्त्वात् यन्न पृथिवी तन्न गन्धवत् यथा आपः इत्यादि ( त० भा० अनु० पृ० १३ ) । लक्षणस्य केवलव्यतिरेकिहेतुत्वे प्रयोगः । लक्षणं केवलव्यतिरेकिहेतुः विशेषधर्मत्वात् यत् केवलव्यतिरेकिहेतुर्न भवति तन्न विशेषधर्मो भवति यथा अभिधेयत्वम् । न चेदं तथा । तस्मान्न तथा इति । अन्यदप्युदाह्रियते । गोः सास्नादिमत्त्वं लक्षणमित्युक्त्या गौः पक्षः महिष्याद्यात्मकेतरभेदः साध्यः । सास्नादिमत्त्वं हेतुः व्यतिरेकदृष्टान्तः । यथा गौरितरेभ्यो भिन्ना सास्नादिमत्त्वाद्यन्नैवं तन्नैवं महिष्यादिवत् इत्यनुमाने गोर्लक्षणं सास्नादिमत्त्वं व्यतिरेकिहेतुरेव भवति । नान्वयिहेतुः । गोरितरत्र सास्नादिमत्त्वाभावेन दृष्टान्ताभावात् इति । अत्रायं विशेषः । लक्षणलक्ष्यतावच्छेदकयोरैक्ये सिद्धसाधनं दोषः संपद्यते । यथा अनुमितेर्लक्षणमनुमितित्वम् इत्युक्तौ लक्षणेन लक्ष्ये अनुमितौ इतरभेदसाधने सिद्धसाधनम् । पक्षतावच्छेदकसाध्यसामानाधिकरण्यस्यानुमितिविषयस्यानुमितेः पूर्वमेव हेतावव्यभिचरितसाध्यसामानाधिकरण्यात्मकव्याप्तिज्ञाने भातत्वात् ( म० प्र० २ पृ० १५ ) । व्यावृत्तेः प्रयोजनत्वे पृथिव्यामितरभेदे साध्ये गन्धवत्त्वरूपं लक्षणं हेतुर्भवति । लक्षणस्य लक्षणं तु लक्ष्यतावच्छेदकसमनियतत्वम् । यथा गोर्लक्षणस्य सास्नादिमत्त्वस्य लक्ष्यतावच्छेदकीभूतगोत्वसमनियतत्वं लक्षणं भवति इति विज्ञेयम् ( त० दी० ) ( ल० व० ) । [ ख ] दूषणत्रयरहितो धर्मः ( त० भा० ) ( त० प्र० ) ( त० दी० ) । यथा गोर्लक्षणं सास्नादिमत्त्वम् । यथा वा विशुद्धमातापितृजन्यत्वं ब्राह्मणस्य लक्षणम् ( त० कौ० पृ० २१ ) । दूषणत्रयं च अव्याप्तिः अतिव्याप्तिः असंभवश्च इति ( त० दी० ) ( त० कौ० ) । एते त्रयो दोषा लक्षणदोषाः इत्युच्यन्ते ( ल० व० ) । एतेषां दूषकताबीजं तु

लक्षणेनेतरभेदसाधने अतिव्याप्तौ व्यभिचारः। अव्याप्तौ भागासिद्धिः। असंभवे स्वरूपासिद्धिश्चेति (नील० १ पृ० ४)। एतद्दूषणत्रयरहितो धर्म एव असाधारणधर्मः इत्युच्यते (त० भा०) (त० प्र०) (त० दी०)। [ग] वेदान्तिनस्तु यो धर्मो लक्ष्ये व्याप्त्या वर्तते न वर्तते चान्यत्र स धर्मः। यथा गोः सास्नादिमत्त्वम्। तद्धि गोषु सर्वत्रास्ति नास्ति चागोषु इत्याहुः (प्र० प० पृ० १)। [घ] सजातीयविजातीयव्यावर्तको लक्ष्यगतः कश्चिल्लोकप्रसिद्धः आकारो लक्षणम् (जै० न्या० अ० १ पा० १ अधि० १)। इदं लक्षणं द्विविधम् स्वरूपलक्षणम् तटस्थलक्षणं च इति। तदुक्तम् स्वरूपं तटस्थं द्विधा लक्षणं स्यात् स्वरूपे प्रविष्टं स्वरूपाद्विभिन्नम् इति। तत्र स्वरूपलक्षणं यथा आकाशो बिलम् इति। यथा वेदान्तमते सच्चिदानन्दो ब्रह्म इति स्वरूपलक्षणम्। यथा मीमांसकमते चोदनालक्षणोर्थो धर्मः इत्यादौ चोदनावाच्यविधिवाक्यमेव धर्मस्वरूपज्ञापकमस्ति इति। तटस्थलक्षणं तु काकवत् देवदत्तगृहम् इति। अत्रोदासीनोपि काक इदं देवदत्तगृहमिति बोधयति। यथा वा पृथिव्या गन्धो लक्षणम्। स हि तटस्थलक्षणमपि पृथिवीं परस्माद्भिन्नतयानुमापयति। तथा हि पृथिवी जलादिभ्यो भिद्यते गन्धवत्त्वात् यन्नैवं तन्नैवम् यथा जलम् इति। मायावादिमते तु जगज्जन्मादिकारणं ब्रह्म इति तटस्थलक्षणम्। लक्षणेन च पदार्थज्ञानं सुकरं भवति। तदुक्तम् ऋषयोपि पदार्थानां नान्तं यान्ति पृथक्त्वतः। लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः॥ इति। २ व्यावर्तकम्। तच्च द्विविधम् विशेषणम् उपलक्षणं च। तत्रोपलक्षणं यथा जटाभिस्तापस इत्यादौ तापसादेः कालान्तरीणजटादिकं लक्षणम् (ग० व्यु० का० ३ पृ० ९१)। अयं च इत्थंभूतलक्षणे (पा० सू० २।३।२१) इति पाणिनिसूत्रघटकलक्षणशब्दस्यार्थः। विशेषणं तु पताकावद्देवदत्तगृहमित्यादौ पताका। तथा हि सजातीयविजातीयव्यावर्तकतया लक्ष्यावधारणं लक्षणस्य प्रयोजनम्। अस्मिन् ग्रामे देवदत्तगृहम् इति वार्तां श्रुतवतः पुरुषस्य तद्ग्रामस्थेषु सर्वेषु गृहेष्वपि देवदत्तगृहबुद्धिप्रसक्तौ यत्र पताका वर्तते तद्देवदत्त-

गृहम् इति लक्षणज्ञाने सति इदमेव देवदत्तगृहम् नान्यत् इत्यवधारणज्ञानं जायते ( प्र० प० पृ० २ ) इति । ३ स्वरूपम् । यथा व्याप्तेर्लक्षणमाह यत्रेति ( त० दी० २ पृ० २० ) इत्यादौ । यथा वा जीवलक्षणमाह ( त० दी० ) इत्यादौ ( नील० १ पृ० ११ ) । यथा वा पटलक्षणं वस्तु घटलक्षणं द्रव्यम् परमाणुलक्षणा नित्यपृथिवी इत्यादौ च लक्षणशब्दस्यार्थः स्वरूपम् । ४ प्रतिपाद्यो विषयः । यथा जैमिनिर्द्वादशलक्षणीं प्रणिनाय इत्यादौ । ५ आलोचनम् । यथा विलक्षणमित्यादौ लक्षणशब्दस्यार्थः । तदर्थश्च हेतुशून्या स्थितिर्विलक्षणम् ( अमरटी० ३।२।२ ) । ६ अन्यदीयधर्मराहित्यम् । यथा विलक्षणं वस्त्विदम् इत्यादौ लक्षणशब्दस्यार्थः । यथा वा बौद्धमते स्वलक्षणं स्वलक्षणम् इति भावनाविषयो लक्षणपदार्थः । ७ शाब्दिकास्तु शब्दसाधुताप्रतिपादकं प्रमाणम् । यथा व्याकरणादिसूत्रं लक्षणम् इत्याहुः । ८ व्यवहारज्ञास्तु व्यवहारोपयोगि नाम इत्याहुः । ९ चिह्नम् इति काव्यज्ञा वदन्ति ।

**लक्षणा**—( वृत्तिः ) [ क ] न्यायमते स्वशक्यसंबन्धः ( भा० प० श्लो० ८३ ) ( त० दी० ख० ४ ) ( न्या० बो० ४ ) ( न्या० म० ४ पृ० १० ) ( वाक्य० ) । तदर्थस्तु स्वं लाक्षणिकं पदम् गङ्गापदम् । तस्य शक्यः प्रवाहः । तत्संबन्धः संयोगः इति ( त० प्र० ४ पृ० ३५ ) । स च संयोगसमवायादिर्यथायथं ग्राह्यः । स्वशक्यसंबन्धश्च शब्दनिरूपितोर्थनिष्ठः शाब्दबोधप्रयोजकः शब्दार्थयोः संबन्धः । मीमांसकादयस्तु वाच्यार्थसंबद्धार्थबोधकत्वरूपः शब्दनिष्ठः इत्याहुः । यथा गङ्गायां घोषः प्रतिवसति इत्यादौ गङ्गापदस्य प्रवाहसमीपे तीरे लक्षणा ( मु० ४ ) ( वाक्य० ४ ) । गङ्गापदशक्यप्रवाहजलौघस्य तीरे संयोगसंबन्धो गङ्गापदलक्षणा ( त० कौ० ४ ) । अस्ति हि गङ्गापदशक्यः प्रवाहविशेषः तत्संबन्धस्तीरे इति ( न्या० म० ख० ४ पृ० १० ) । अत्र अन्वयानुपपत्तिर्लक्षणाबीजम् इति प्राञ्च आहुः ( मु० ४ ) । तात्पर्यानुपपत्तिरेव ( तात्पर्यनिर्वाहिका ) सर्वत्र लक्षणाबीजम् इति नव्याः प्राहुः ( भा० प० श्लो० ८३ ) । लक्षणाप्रयोजकं चालंकारिकादय इत्थम-

मन्यन्त । मुख्यार्थबाधे तद्युक्तो ययान्योर्थः प्रतीयते । रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता ॥ ( सा० द० परि० २ श्लो० ५ ) इति । काव्यप्रकाशे तु लक्षणारोपिता क्रिया इति चतुर्थचरणः ( उल्ला० २ ) । लक्षणा पुनर्द्विविधा प्रयोजननिरपेक्षा प्रयोजनसापेक्षा चेति । तत्राद्या यथा मार्गाश्चलन्ति इति । इयं प्रयोजनाभावेपि प्रवर्तमानत्वात् रूढलक्षणा इत्युच्यते । द्वितीया यथा गङ्गायां घोषः इति । इयं च पावित्र्यादिप्रयोजनापेक्षया प्रवर्तमानत्वात् केवलं लक्षणा इत्युच्यते । मुख्यार्थानुपपत्तिर्लक्षणाबीजम् ( प्र० च० ४ पृ० ४० ) इति । लक्षणाशब्दश्च लक्षधातोर्युच्प्रत्यये स्त्रियां टापि सिद्ध्यति । [ ख ] प्राञ्चस्तु शक्यादशक्योपस्थितिर्लक्षणा इत्याहुः । [ ग ] अन्ये तु अशक्ये तात्पर्यविषयत्वं लक्षणा इत्याहुः ( न्या० म० ४ पृ० १० ) ( त० प्र० ४ पृ० ३५ ) । [ घ ] शाब्दिकास्तु शक्यतावच्छेदकारोपो लक्षणा इत्यङ्गीचक्रुः । समासस्थशब्दसमुदाये राजपुरुष इत्यादौ तु विशिष्टार्थे समासरूपविलक्षणशक्त्यैवोपपत्तौ लक्षणारूपातिरिक्तवृत्तिकल्पनमनुचितम् इति शाब्दिका वदन्ति ( न्या० म० ४ पृ० ११ ) ( त० प्र० ख० ४ पृ० ४३ ) । आरोपनिमित्तानि च गौतमेनोक्तानि यथा सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्यानि ( गौ० २।२।६१ ) इति वैयाकरणसिद्धान्तः । वस्तुतस्तु सहचरणादीनि शक्यसंबन्धग्राहकाण्येव नारोपनिमित्तानि इति तु वयं प्रतीमः । [ ङ ] मीमांसकास्तु प्रतिपाद्यसंबन्धो लक्षणा । यथा छत्रिणो यान्तीत्यादावजहल्लक्षणा । अत्र छत्रिन् इत्यस्य मतुबर्थकेन्प्रत्ययान्ततया पदसमूहरूपत्वेन तच्छक्त्याप्रसिद्ध्या शक्यसंबन्धरूपा लक्षणा न संभवति । अतः प्रतिपाद्यसंबन्धो हि लक्षणा इत्येतत्पर्यन्तानुधावनम् । अत्र केचिदाहुः । छत्रपदस्यैकसार्थे लक्षणा । तद्धितार्थः संबन्धी । तथा च एकसार्थसंबन्धिनो गच्छन्ति इत्यन्वयबोधः ( नी० ४ पृ० ३० ) । एवं च शक्यसंबन्धरूपलक्षणयैवोपपत्तौ प्रतिपाद्यसंबन्धरूपलक्षणा नाङ्गीकर्तव्या इति । [ च ] अन्ये च स्वबोध्यसंबन्धो लक्षणा । यथा चित्रगुरिति बहुव्रीहौ लक्षणा इत्याहुः । मीमांसकमते चित्रगुः इति बहुव्रीहौ वाक्यस्यापि विशिष्टं बोध्यमस्ति ( न्या० म० ४ पृ० १ ) ।

तथा हि एकदेशविकृतमनन्यवद्भवति इति न्यायेन चित्रगुरित्यत्र चित्रा गौः इति वाक्यस्य सत्त्वात् तस्य च बोध्यम् चित्रा गौः तत्संबन्धश्चित्रगोः स्वामिन्यस्ति इति ( त० प्र० ख० ४ पृ० ४५–४६ ) । एतन्मते वाक्ये लक्षणाया आवश्यकत्वं तु लक्षकशब्दव्याख्याने समवलोकनीयम् । [ छ ] आलंकारिकाश्च शक्यसंबन्धज्ञानं लक्षणा ( काव्यप्रदी० ) । [ ज ] शक्यतावच्छेदकारोपविषयनिष्ठसंसर्गः । एतन्मते गङ्गायां घोष इत्यादौ गङ्गात्वेनैव लक्ष्यार्थप्रतीतिः । अत एव ततो वैयञ्जनिकी शैत्यपावनत्वादिप्रतीतिः ( वै० सा० द० ) । [ झ ] मुख्यार्थबाधतद्योगाभ्यामर्थान्तरप्रतिपादनं लक्षणा । सा च द्विविधा रूढिमूला प्रयोजनमूला च । तदुक्तं काव्यप्रकाशे मुख्यार्थबाधे तद्योगे रूढितोथ प्रयोजनात् । अन्योर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ॥ ( सर्व० सं० पृ० ३७३ पात० ) इति । तथा च लक्षणा द्विविधा निरूढलक्षणा स्वारसिकलक्षणा च इति । प्राचां मते लक्षणा चतुर्विधा जहत्स्वार्था अजहत्स्वार्था जहदजहत्स्वार्था लक्षितलक्षणा चेति ( मु० ४ ) । नव्यनैयायिकानां मते तु लक्षणा त्रिविधा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा च ( त० दी० ४ ) । यच्चोक्तं ग्रन्थान्तरे शक्येन सह संबन्धात् सादृश्यात् समवायतः । वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता ॥ इति तस्य गौणी शुद्धा चेति भेदद्वय एव तात्पर्यम् ( म० प्र० ख० ४ पृ० ४१ ) । शाब्दिकानामालंकारिकाणां च मते लक्षणा द्विधा गौणी शुद्धा च । तत्र गौण्यां सादृश्यात्मकः शक्यसंबन्धः । यथा गौर्वाहीक इति ( न्या० म० ४ पृ० १० ) ( न्या० बो० ) । तदर्थश्च वाहीको वाहीकदेशोद्भवः । गौर्बलीवर्दः । वाहीके गवाभेदस्य बाधात् गोपदेन गोसदृशो लक्ष्यते । सादृश्यं च गोगतजाड्यमान्द्यादिकमेव । तथा च जडो मन्दश्च वाहीकः इति शाब्दबोधः ( त० प्र० ख० ४ पृ० ३५–३६ ) । अत्र भट्टवार्तिकम् अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥ ( काव्यप्र० उ० २ ) इति । शुद्धा च द्विविधा जहल्लक्षणा अजहल्लक्षणा चेति ( न्या० म० ४ पृ० १० ) ( न्या० बो० ) । जगदीशमते तु प्रकारान्तरेण जहत्स्वार्था अजहत्स्वार्था

निरूढा आधुनिकी गौणी चेति लक्षणा पञ्चविधा ( श० प्र० श्लो० २४ पृ० ३५ )। व्यञ्जना तु शक्तिलक्षणान्तर्भूता शब्दशक्तिमूला। अर्थशक्तिमूला त्वनुमानादिना अन्यथासिद्धा ( त० दी० ४ पृ० ३० )। अत्राधिकं तु व्यञ्जनाशब्दव्याख्याने दृश्यम्। अत्र वैयाकरणा आहुः। लक्षणा द्विविधा गौणी शुद्धा च। तत्र स्वनिरूपितसादृश्याधिकरणत्वसंबन्धेन शक्यसंबन्ध्यर्थप्रतिपादिका गौणी। तदतिरिक्तसंबन्धेन तत्प्रतिपादिका शुद्धा। सापि शुद्धा द्विविधा अजहत्स्वार्था जहत्स्वार्था च इति ( ल० म० आकाङ्क्षावि० पृ० १३ )। आलंकारिकास्तु गौण्याः शुद्धायाश्च प्रत्येकं सारोपा साध्यवसाना चेति द्वौ भेदौ। तत्र गौण्या भेदद्वयस्योदाहरणे गौर्वाहीकः गौरयम् इति। शुद्धायां भेदद्वयस्योदाहरणे तु आयुर्घृतम् आयुरेवेदम् इत्याहुः ( काव्यप्र० उ० २ )।

**लक्षणाभासः**—दोषयुक्तं लक्षणम्। तच्च त्रिविधम् असंभवि अव्यापकम् अतिव्यापकं चेति। तत्राद्यं यथा गोरेकशफत्वं लक्षणम् इति। द्वितीयं यथा गोः शबलत्वं लक्षणम् इति। तृतीयं यथा गोर्विषाणित्वं लक्षणम् इति ( प्र० प० पृ० २ )।

**लक्षितः**—१ [ क ] लक्षणया बोधितोर्थः। यथा गङ्गायां घोषः इत्यत्र तीरं लक्षितोर्थः। [ ख ] ज्ञातः। [ ग ] अनुमितः। २ लक्षकः शब्दः ( वाच० )।

**लक्षितलक्षणा**—( लक्षणा ) [ क ] प्राचां मते स्वलक्षितपदशक्यसंबन्धः। यथा द्विरेफपदे लक्षितलक्षणा। अत्रार्थे लक्षितस्य पदस्य लक्षणा इति विग्रहो द्रष्टव्यः ( त० प्र० ख० ४ पृ० ३९ )। अत्र द्विरेफपदेन द्वौ रेफौ यत्र इति बहुव्रीहिलक्षणया भ्रमरपदं लक्ष्यते। भ्रमरपदेन च स्वशक्यसंबन्धी भ्रमररूपोर्थो लक्ष्यते इति द्विरेफपदस्य भ्रमरे लक्षितलक्षणोपपद्यते इति। लक्षितलक्षणापि वृत्त्यन्तरम् इति प्राञ्च आहुः ( त० प्र० ख० ४ पृ० ३८ )। [ ख ] यत्र लक्षितपदेन लक्ष्यार्थोवगम्यते ( न तु शक्यार्थः दि० ) तत्र लक्षितलक्षणा। यथा द्विरेफोस्तीत्यत्र द्विरेफपदे ( म० प्र० ४ पृ० ४१ )। [ ग ] नव्यनैयायिकानां

मते तु यत्र शक्यार्थस्य परंपरासंबन्धरूपा लक्षणा सा । यथा द्विरेफमानयेत्यादौ द्विरेफादिपदे लक्षितलक्षणा । द्विरेफमानयेत्यादौ परंपरासंबन्धस्तु स्ववाच्यरेफद्वयघटितपदवाच्यत्वादिरूपः ( दि० ४ पृ० १८१ ) । अत्र स्वं द्विरेफपदम् । तस्य वाच्यं रेफद्वयम् । तद्घटितं पदं भ्रमर इति पदम् । तस्य वाच्यो भ्रमरः । तस्य भावस्तत्त्वं भ्रमररूपार्थेस्ति इति द्विरेफपदशक्यार्थस्य रेफद्वयस्य परंपरासंबन्धरूपा लक्षणा भ्रमरे संगच्छते । अत्र द्विरेफादिपदे रेफद्वयसंबन्धो भ्रमरपदे ज्ञायते । भ्रमरपदस्य च संबन्धो भ्रमरे ज्ञायते इति तत्र लक्षितलक्षणा जहल्लक्षणैव इति नव्यनैयायिकाः प्राहुः ( मु० ४ पृ० १८१ ) । लक्षितलक्षणापि गौण्यामेवान्तर्भवति । यथा द्विरेफोस्तीत्यत्र द्विरेफपदवाच्यरेफद्वयसंबन्धिभ्रमरपदेन भ्रमरस्योपस्थापनात् द्विरेफपदशक्यरेफद्वयसंबन्धिभ्रमरपदवाच्यत्वरूपपरंपरासंबन्धस्यैव शक्यसंबन्धत्वात् इति बोध्यम् (म० प्र० ४ पृ० ४१ ) । अत्रेत्थं विप्रतिपत्तिः । लक्षितलक्षणापि वृत्त्यन्तरम् इति प्राञ्चो मन्यन्ते । तन्न । परंपरासंबन्धस्यापि ( न तु साक्षाच्छक्यसंबन्धस्यैव ) शक्यसंबन्धात्मकलक्षणात्वेन द्विरेफपदस्य स्वलक्ष्यभ्रमरपदघटितपरंपरासंबन्धेन भ्रमररूपार्थोपस्थापकत्वसंभवात् द्विरेफपदलक्षणयैवोपपत्तेर्नातिरिक्तवृत्तिकल्पनम् इति नव्यनैयायिका आहुः ( त० प्र० ख० ४ पृ० ३९ ) । आलंकारिकास्तु यत्र लक्षिताच्छब्दादर्थाभिधानम् तत्रैव लक्षितलक्षणा परिभाषिता । यथा द्विरेफपदे रूढिप्रयोजनाभावेपि लक्षितलक्षणा इत्याहुः ( सा० द० टी० ) । अत्र वैयाकरणास्तु द्विरेफपदं रूढिशक्त्या भ्रमरबोधकम् । अवयवार्थप्रतीतिस्तु नास्त्येव रथन्तरादिवत् । यद्वा पदनिष्ठरेफद्वयस्यार्थे आरोपात्संबन्धित्वेनैव भ्रमरबोधः । अत एव भ्रमरपर्यायेषु द्विरेफपदस्य कोशेषु पाठः । बाधप्रतिसंधानं विनैव द्विरेफपदाद्भ्रमरबोधेन लक्षणा इत्ययुक्तम् इत्याहुः ( ल० म० आकाङ्क्षावि० पृ० १७ ) ।

**लक्ष्मीः**—१ [ क ] श्रीविष्णोः पत्नी । अत्र प्रसङ्गतो विषयान्तरमुच्यते । पौषे चैत्रे तथा भाद्रे पूजयेयुः स्त्रियः श्रियम् ( स्कन्दपु० ) इति । दीपान्वितामावास्यायां लक्ष्मीपूजा सर्वैस्तत्कामिभिः कार्या । कोजागर-

लक्ष्मीपूजापि तत्काले कार्या। [ ख ] आदिमाया शक्तिः इति वाममार्गीयाः शाक्ता आहुः। [ ग ] भगवदिच्छा इत्यन्ये संगिरन्ते। [ घ ] चित्प्रकृतिरपि इति माध्वाः संवदन्ते। एतन्मते लक्ष्मीरीशकोटिप्रविष्टा न तु जीवकोटिप्रविष्टा भगवदधीना च। तथा च श्रुतौ लक्ष्म्या यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् इत्युक्त्वा मम योनिरप्स्वन्तः समुद्रे ( ऋ० सं० ८।७।११।११-१२ ) इत्युक्तम्। [ ङ ] भगवदंशविशेषः इति वल्लभीया मन्यन्ते। २ शोभा। ३ कान्तिः। ४ संपत्तिः। ५ स्थलपद्मम्। ६ हरिद्रा। ७ शमी। ८ वारयोषित् इति काव्यज्ञा आहुः। ९ पीडा। १० औषधम् इति भिषजो वदन्ति।

**लक्ष्यम्**—१ लक्षणया बोध्योर्थः। तल्लक्षणं च लक्षणानिर्वाहकतात्पर्यविषयत्वम् ( कृष्ण० )। यथा गङ्गायां घोष इत्यादौ गङ्गापदस्य लक्षणया बोध्यस्तीररूपोर्थो लक्ष्यो भवति। २ [ क ] यदुद्दिश्य लक्षणमुच्यते तत्। यथा गन्धवत्त्वं पृथिव्या लक्षणम् इत्युक्ते पृथिवी लक्ष्या। यथा वा लक्ष्यतावच्छेदकमात्रेण लक्ष्यसंकीर्तनमुद्देशः ( त० कौ० ) इत्यादौ च लक्ष्यशब्दार्थः। [ ख ] वेदान्तिनस्तु यावदन्यतो व्यावर्तनीयम् यावति चैकः शब्दो व्युत्पादनीयः तल्लक्ष्यम् इत्याहुः ( प्र० प० पृ० २ )। ३ ज्ञेयम्। ४ अनुमेयम् ( त्रि० )। ५ वेधार्थमुद्दिश्यमानं शरव्यम् इति काव्यज्ञा आहुः।

**लग्नः**—१ संबन्धविशेषानुयोगी। संबद्धः इति यावत्। यथा कार्यविशेषलग्नः इत्यादौ। २ मेषादिराशीनामुदयः इति ज्योतिषज्ञा आहुः। ३ प्रतिभूः ( जामीन ) इति व्यवहारशास्त्रज्ञा वदन्ति ( अमरका० २ शूद्र० श्लो० ४४ )। अत्रोदाह्रियते प्रसङ्गतः खादको वित्तहीनः स्याल्लग्नको वित्तवान् यदि ( स्मृति० ) ( वाच० ) इति। ४ लज्जितः। ५ स्तुतिपाठकः इति काव्यज्ञा आहुः। विवाहेपि लग्नशब्दं प्रयुञ्जन्ति प्राकृतजनाः।

**लघुत्वम्**—१ गुरुत्वाभावः ( सि० च० १ पृ० ३ ) ( प० च० पृ० १९ ) ( त० दी० १ पृ० ६ )। यथा मृदु लघु चेदं द्रव्यम् इत्यादौ लघुत्वम्।

२ स्पर्शविशेष इति केचिदाहुः ( सि० च० ) । ३ शीघ्राल्पोपस्थिति-कत्वम् । यथा लघुनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धम् इत्यादौ लघुत्वम् । इदं लघुत्वं त्रिविधम् शरीरकृतम् उपस्थितिकृतम् संबन्धकृतं चेति ( दि० १ ) ( सि० च० ) । तत्र प्रथमम् द्रव्यप्रत्यक्षोत्पत्तिं प्रति महत्त्वस्य कारणत्वे अनेकद्रव्यत्वापेक्षया महत्त्वस्य लघुत्वम् । द्वितीयम् गन्धोत्पत्तिं प्रति गन्धप्रागभावस्य कारणत्वे रूपप्रागभावापेक्षया गन्धप्रागभावस्य लघुत्वम् । गन्धात्मकप्रतियोगिज्ञानस्य सत्त्वेन शीघ्रं तदुपस्थितेः । तृतीयम् घटं प्रति दण्डस्य कारणत्वे दण्डत्वदण्डरूपाद्यपेक्षया दण्डस्य लघुत्वम् इति । दण्डत्वादेः कारणत्वे तु स्वाश्रयदण्डसंयोगादिरूपपरंपराया गुरुत्वम् इति भावः ( दि० १ पृ० ५४ ) ( नील० १ पृ० १७ ) । ४ दोषविशेषः ( प० च० ) । ५ तर्कविशेषः । यथा लघुत्वकल्पनं तर्कविशेषः इत्यादौ इति प्राञ्चो नैयायिका आहुः ( सर्व० पृ० २३९ अक्ष० ) ( गौ० वृ० १।१।३९ ) । ६ शाब्दिकास्तु ह्रस्वसंज्ञकवर्णवृत्तिर्धर्मविशेष इत्याहुः । ७ पुष्याश्विहस्ताभिजित्संज्ञकेषु नक्षत्रेषु वर्तमानो धर्मविशेषः इति मौहूर्तिका आहुः ।

**लङ्**—( तिङ् ) स्मशब्दस्य योगं विना शबन्तस्य धातोरर्थे अतीतत्वस्यान्वयधीहेतुर्यादृशी तिङ् तादृशी तिङ् लङ् इत्युच्यते । यथा अपचदित्यादौ लङ् । यथा वा अस्य पुत्रः अभवदित्यादौ लङ् (वै० सा० ल० पृ० १३१)। तिबादिश्च स्मशब्दोपसंधानं विना धातोरर्थे नातीतत्वं बोधयति पपाचेत्यादौ लिडादिर्बोधयन्नपि न शबन्तस्य इति तिबादेर्लिडादेश्च व्युदासः । अपचदित्यादौ तु विनापि स्मशब्दयोगं लङस्तथात्वम् इति लक्षणसमन्वयः । प्रकृत्यर्थे अनुमतत्वाद्यतनत्वाद्यनाकाङ्क्षितत्वम् इति विशेषणाच्च पचतां पचेतां पचन्ताम् इत्यादौ अपाक्ताम् अपक्षाताम् इत्यादौ अपक्ष्यतां अपक्ष्येताम् इत्यादौ च लोटो लुङो लृङस्तामातामप्रभृतौ नातिप्रसङ्गः । अत्र लङोतीतः काल इव तन्निष्ठं ह्यस्तनत्वमप्यर्थः । अनद्यतने लङ् ( पा० सू० ३।२।१११ ) इति सूत्रे अनद्यतनशब्दमहिम्ना ह्यस्तनत्वं बोध्यत इति भावः । तच्च पूर्वदिनवृत्तित्वम् इति कौमारा

वदन्ति । ह्यस्तनत्वं लङो नार्थः । किं तु अद्यतनभिन्नत्वम् इत्यपरे दर्पणकृदादयः वदन्ति ( वै० सा० द० पृ० १२९–१३० ) । अनद्यतने लङ् ( पा० सू० ३।२।१११ ) इति पाणिनिना अनुशिष्टत्वात् इति भावः । तथा च अपचदित्यादौ वर्तमानध्वंसप्रतियोगिपूर्वदिनवृत्तिपाककृतिमान् इति तादृशप्रतियोग्यनद्यतनकालवृत्तिपाककृतिमान् इति वा मतद्वये यथाक्रमं बोधः (श० प्र० श्लो० १०१ टी० पृ० १६०)। अथ वा अनद्यतनातीतत्वं विशिष्टमेव लङर्थः । तच्च शब्दप्रयोगाधिकरणदिनाद्यक्षणवृत्तिध्वंसप्रतियोगित्वम् ( ग० व्यु० लका० पृ० १३८ ) । यद्वा अनद्यतनत्वम् अतीतत्वं च पृथगेव लङर्थः ( तर्का० ४ पृ० ११ ) ( सि० च० ) । शब्दप्रयोगाधिकरणदिवसावृत्तित्वे सति शब्दप्रयोगकालीनध्वंसप्रतियोगित्वम् इति कश्चिदुक्तिः । अस्य पुत्रोभवत् इत्यत्र शाब्दिकमते शाब्दबोधस्तु वर्तमानध्वंसप्रतियोग्यनद्यतनकालवृत्तिरेतत्संबन्धिपुत्रकर्तृकोत्पत्त्यनुकूलो व्यापारः इति (वै० सा० द० ल० पृ० १३० )।

लट्—( तिङ् ) यादृशतिङः स्मशब्दोपसंधानाभावप्रयुक्तः स्वार्थातीतत्वबोधकत्वाभावः तादृशी तिङ् लडुच्यते । यथा जानाति जानीते पचति पचते चैत्रः इत्यादौ तिबाद्याख्यातम् । अत्र द्विरुक्तधात्वनाकाङ्क्षत्वेन प्रकृत्यर्थपरोक्षत्वनिराकाङ्क्षत्वेन वा विशेषणीयम् । नातो बुभुजे बुभुजाते इत्यादिस्थलीयलिड्व्यतिप्रसङ्गः । जानाति जानीते पचति पचते इत्यादौ तिबादीनामष्टादशानामपि स्मशब्दोपसंधानाभावप्रयुक्तो ज्ञानादिधर्मिकातीतत्वबोधस्योपधायकत्वाभावः । स्मशब्दोपसंधाने तु जानाति स्म इत्यादितोतीतत्वबोधानुभवात् इति लक्षणसमन्वयः (श० प्र० श्लो० ९७ टी० पृ० १४२ ) । लट् द्विविधा परस्मैपदम् आत्मनेपदं चेति । एवम् अन्या लोडाद्या अपि तिङः परस्मैपदात्मनेपदभेदेन द्विविधा भवन्ति इति विज्ञेयम् । लटो वर्तमानकालः वर्तमानसामीप्यं चेति द्विविधोर्थः ( श० प्र० श्लो० ९७ टी० पृ० १४३–१४४ ) । अत्र सूत्रम् वर्तमाने लट् ( पा० सू० ३।२।१२३ ) इति । तदर्थस्तु वर्तमानार्थवृत्तेर्धातोर्लट्प्रत्ययो भवति ( काशिका० ) । वर्तमानकालस्तु तत्तच्छब्दप्रयोगा-

धिकरणकालः । यथा पचतीत्यादौ लडर्थः ( ग० व्यु० ल० ) । अत्र लडर्थवर्तमानत्वं चाख्यातार्थकृत्याद्यन्वयि तत्तत्कालवृत्तित्वमेव ( श० प्र० श्लो० ९७ टी० पृ० १४२ ) । शाब्दिकास्तु प्रारब्धापरिसमाप्तो भूतभविष्यद्भिन्नो वा कालो वर्तमानकालः इति वदन्ति ( वै० सा० ल० पृ० १२० ) ( काशिका० ३।२।१२३ ) । तदर्थश्च विनष्टावयवप्रागभावकत्वे सत्यनुत्पन्नध्वंसान्त्यावयवकत्वम् । अथ वा शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षिततत्तत्कालत्वावच्छिन्नत्वम् ( वै० सा० द० ल० पृ० १२० ) । वर्तमानसामीप्यं तु वर्तमानक्षणोत्तरकालावच्छेद्यत्वम् । तेन चैत्रः कदा गमिष्यति इति जिज्ञासायाम् एष गच्छति इत्युत्तरस्य वर्तमानक्षणोत्तरकालावच्छेद्यगतिमांश्चैत्रः इत्यर्थः इति न प्रश्नोत्तरभावासंगतिः । अथवा वर्तमानक्षणाव्यवहितप्राक्कालावच्छेद्यत्वम् । तेन चैत्रः कदा समागतः इति जिज्ञासायाम् एष आगच्छति इत्युत्तरस्य वर्तमानक्षणाव्यवहितप्राक्कालावच्छेद्यागमनवान् इत्यर्थ इति न प्रश्नोत्तरभावासंगतिः ( श० प्र० श्लो० ९७ टी० पृ० १४४ ) ।

**लता**—दीर्घयायिन्यो द्राक्षातिमुक्ताप्रभृतयः ( मिताक्षरा अ० २।२२९ ) ।

**लयः**—१ विनाशः । कार्यस्य कारणे सूक्ष्मीभावेनावस्थानम् इति सांख्या आहुः । तदुदाहृतम् आसीज्ज्ञानमथोप्यर्थ एकमेवाविकल्पितम् ( सांख्य० भाष्य० १।६२ ) इति । २ प्रलयकालः इति पौराणिका आहुः । ३ गायकास्तु नृत्यगीतवाद्यानामेकतानतारूपं साम्यं लयः इत्याहुः । ते लयभेदाश्च द्विपदी वलतिका झल्लिका छिन्नखण्डिका इत्यादयश्चत्वारिंशत्संख्याकाः संगीतदामोदरादौ द्रष्टव्याः ( वाच० ) । ४ संश्लेषः इति काव्यज्ञा वदन्ति । ५ ईश्वरः इति वेदान्तिनः संगिरन्ते ।

**लवः**—त्रुटिद्वयं लवः प्रोक्तः ( पुरु० पृ० ३१८ ) ।

**लवणः**—१ ( गुणः ) रसविशेषः । अत्रोच्यते लवणः शोधनो रुच्यः पाचनः कफपित्तदः । पुंस्त्ववातहरः कायशैथिल्यमृदुताकरः ॥ ( भावप्र० ) इति । २ सिन्धुदेशः । ३ समुद्रः । ४ लावण्ययुतः ।

**लाक्षणिकः**—१ लक्षणया अर्थबोधकः शब्दः । यथा गङ्गायां घोषः प्रवसतीत्यादौ गङ्गाशब्दः । अत्राधिकं तु लक्षकशब्दव्याख्याने द्रष्टव्यम् । २ लक्षणयुक्तः ।

**लाघवज्ञानसहकृतानुमितिः**—( अनुमितिः ) सामान्यधर्मावच्छिन्नस्य साध्यत्वे सामान्यधर्मावच्छिन्नव्याप्यवत्तापरामर्शाद्विशेषधर्मे लाघवज्ञानसहकृताज्जायमाना विशेषधर्मावच्छिन्नविधेयकानुमितिः । यथा पर्वते धूमेन शुद्धवह्निसाधनेपि पर्वतो महानसीयवह्निमान् इत्यनुमितिः । अत्रेदं बोध्यम् । वह्निव्याप्यधूमवान् पर्वतः इति परामर्शादपि महानसीयवह्नौ लाघवम् इति लाघवज्ञानबलान्महानसीयवह्नित्वादिना वह्न्यनुमितिः पर्वतो महानसीयवह्निमान् इति जायते ( त० प्र० ख० ४ पृ० १३० ) इति । अस्मद्गुरुचरणास्तु वह्नेर्महानसीयत्वे लाघवम् इति लाघवज्ञानसत्त्वे वह्निव्याप्यधूमवान्पर्वतः इति परामर्शात् पर्वतो महानसीयवह्निमान् इत्यनुमितिर्जायते इति प्राहुः । एवम् इतरबाधग्रहसहकारसत्त्वेप्यनुमितिर्भवति । सा च इतरबाधग्रहसहकृतानुमितिशब्दे दृश्या ।

**लाघवम्**—१ लघुत्वशब्दवदस्यार्थोनुसंधेयः । २ तर्कविशेषविषयः इति प्राञ्च आहुः ( सर्व० सं० पृ० २३९ अक्ष० ) । ३ आरोग्यम् इति भिषज आहुः ( राजनि० ) ।

**लाभः**—१ स्वत्वावच्छिन्नो व्यापारः । यथा धनं लभते प्राप्नोति इत्यादौ धात्वर्थः । अत्र धात्वर्थनिविष्टे स्वत्वे धनादेराधेयत्वेनान्वयः ( श० प्र० श्लो० ७२ टी० पृ० ९७ ) । २ विधीयमानमुपायफलं लाभः ( सर्व० सं० पृ० १६२ नकु० ) ।

**लिङ्**—( तिङ् ) विध्याद्यन्यतमस्यान्वयबोधं प्रति समर्था लटो लोटश्च भिन्ना तिङ् लिङुच्यते । पटमानय इत्यादौ सप्तमं पदं गृह्णाति इत्यादौ च विधिं बोधयन्त्यावपि लोट्लटौ न ताभ्यां भिन्ने इति यष्टव्यम् देयम् इत्यादौ तु तव्यादिकं कार्यत्वादिकं बोधयदपि न तिङ् इति न लोट्लटोस्तव्यादौ चातिप्रसङ्गः । भावित्वाद्यप्रत्यायकत्वेन विशेषणाच्च पच्यात् इत्यादावाशीर्लिङि न प्रसङ्गः ( श० प्र० श्लो० १०० टी० पृ० १४६–१४७ ) ।

लिङ् द्विविधा विधिलिङ् आशीर्लिङ् चेति ( तर्का० ) ( सि० च० ) । तत्र विध्याद्यर्थबोधिका लिङ् विधिलिङ् । आशीर्मात्रबोधिका लिङ् आशीर्लिङ् । विध्यादयो लिङर्थास्तु विधिः निमन्त्रितत्वम् आमन्त्रितत्वम् प्रार्थना आश्रयत्वम् जन्यत्वम् अधीष्टः संप्रश्नः इत्यादयो ज्ञेयाः । अत्र सूत्राणि विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ( पा० सू० ३।३।१६१ ) हेतुहेतुमतोर्लिङ् ( पा० सू० ३।३।१५६ ) आशिषि लिङ्लोटौ ( पा० सू० ३।३।१७३ ) इत्यादीनि विध्याद्यर्थपरत्वेन योज्यानि। अत्र वैयाकरणा आहुः । विधिनिमन्त्रणामन्त्रणाधीष्टानां चतुर्णामनुगतप्रवर्तनात्वेन वाच्यता । उक्तं च भर्तृहरिणा अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि । तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥ ( वै० सा० ल० पृ० १३२ ) इति । अत्रेदं बोध्यम् । प्रवर्तनात्वं च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम् । तच्चेष्टसाधनत्वस्यास्तीति तदेव विध्यर्थः ( वै० सा० पृ० १३३ ) इति। अत्र यथाक्रममुदाहरणानि प्रदर्श्यन्ते। तत्र ( १ ) विधाद्यर्थे लिङ् यथा यजेत पचेत भवान् ग्रामं गच्छेत् इत्यादि । अत्र नव्यनैयायिकमते इष्टसाधनत्वादिकं विध्यर्थः ( श० प्र० श्लो० १०० ) इति । अत्रेष्टत्वं च समभिव्याहृतपदोपस्थापितकामनाविषयत्वम् ( ग० व्यु० ल० ) ( वै० सा० द० ल० पृ० १३३ ) । अत्राधिकं तु विधिशब्दव्याख्यानावसरे संपादयिष्यते । तत्तत्र द्रष्टव्यम् । द्वेषविषयतावच्छेदकत्वोपलक्षितनरकत्वाद्यवच्छिन्नसाधनतात्वावच्छिन्नप्रतियोगिताकाभावो विध्यर्थः इति प्राचीननैयायिका आहुः । आचार्यास्तु आत्माभिप्रायो विध्यर्थः । पाकं कुर्याः पाकं कुर्याम् इति मध्यमोत्तमपुरुषयोर्लिङ् इच्छाविशेषात्मकाज्ञाध्येषणानुज्ञाप्रश्नप्रार्थनार्थकतया प्रथमपुरुषेपीच्छायामेकशक्तेरुचितत्वात् इत्याहुः (वै० सा० द० ल० पृ० १४५) । (२) निमन्त्रितत्वे लिङ् यथा श्राद्धे भुञ्जीत भवान् इह भुञ्जीयास्त्वम् इत्यादि । ( ३ ) आमन्त्रितत्वे ( कामचारकरणे ) लिङ् यथा भवानिहासीत पुत्रोत्सवे भवान् भुञ्जीत इत्यादि । ( ४ ) प्रार्थनायां लिङ् यथा भोजनं लभेय धेनुं दद्यास्त्वमस्मभ्यम् भवति मे प्रार्थना व्याकरणमधीयीय इत्यादि । ( ५ ) आश्रयत्वे लिङ् यथा ह्रदो यदि धूमवान् स्यात्

इत्यादि । अत्र धातोः यदि इत्यस्य वा निरूढलक्षणया भेदोर्थः । तेन धूमवद्भेदाश्रयतावान् ह्रदः इत्यर्थः । एवम् गुणत्वं यदि घटे स्याद्द्रव्ये स्यात् इत्यादौ तु धातोरत्यन्ताभाव एवार्थः । तदुत्तरलिङस्तु पूर्ववत् आश्रयत्वम् अर्थः । तथा च घटवृत्तित्वाभाववद्गुणत्वं घटवृत्तित्वव्यापकीभूतस्य द्रव्यवृत्तित्वस्याभाववत् इत्येवं तत्र बोधः ( श० प्र० श्लो० १०० टी० पृ० १५५ ) । (६) जन्यत्वेर्थे लिङ् यथा यो ब्राह्मणायावगुरेत्तं शतेन यातयात् इत्यादि । अत्र हेतुहेतुमतोर्लिङ् (पा० सू० ३।३।१५६) इत्यनुशासनात् यः शतयातनाहेतुब्राह्मणावगोरणवान् तदीयशतयातनं ब्राह्मणावगोरणजन्यम् इत्याकारको बोधः । अवगोरणं हन्तुमुद्यमः । अत्र शाब्दिकमते तु शाब्दबोधः यत्कर्तृको ब्राह्मणोद्देश्यको वधोद्यमः तत्कर्मिका तादृशवधोद्यमजन्या शतसंवत्सरयातना इत्याकारको द्रष्टव्यः ( वै० सा० द० पृ० १४६ ) । प्राभाकरास्तु अत्र जन्यजनकभावो न लिङर्थः । अपि तु पौर्वापर्यमात्रं लिङर्थः । पश्चात्तस्य कल्पनात् । अन्यथा दुरितापूर्वस्य वाच्यत्वापत्तेः इत्याहुः ( श० प्र० श्लो० १०० टी० पृ० १५८ ) । (७) अधीष्टार्थे लिङ् यथा माणवकमध्यापयेद्भवान् इत्यादि । अधीष्टश्च सत्कारपूर्वको व्यापारः । तथा च माणवकमध्यापयेद्भवानित्यादौ अध्यापनादिव्यापारे संमानपूर्वकप्रवृत्त्यनुकूलो व्यापारः इत्यर्थः । अयमेव अभ्यर्थना इत्युच्यते । अत्र संमानपूर्वमध्यापनादिव्यापार इष्टसाधनम् इति बोधः ( वै० सा० द० पृ० १३१–१३२ ) । (८) संप्रश्ने ( संप्रधारणे ) लिङ् यथा किं भो वेदमधीयीय उत तर्कमधीयीय इत्यादि ( काशिका० पा० सू० ३।३।१६१ पृ० १८१ ) । आशिषि लिङ् यथा चिरं जीव्याद्भवान् । यथा वा अव्यादजोङ्घ्रिमणिमांस्तव जान्वथोरू यज्ञोच्युतः कटितटं जठरं हयास्यः ( भाग० स्क० १० अ० ६ श्लो० २२ ) इत्यादि ।

**लिङ्गपरामर्शः**—परामर्शशब्दवदस्यार्थोनुसंधेयः । अत्रेदं बोध्यम् । लिङ्गपरामर्शोनुमानम् इति वार्तिककारसिद्धान्तः । एके तावद्वर्णयन्ति लिङ्गलिङ्गिसंबन्धस्मृतिरनुमानम् इति (न्या० वा० १।१।५ पृ० ४७) ।

इदमेव तृतीयं लिङ्गज्ञानम् । तथा हि लिङ्गज्ञानं त्रिविधम् । तद्यथा पर्वते धूमेन वह्निसाधने धूमाग्न्योर्व्याप्तौ गृह्यमाणायां महानसादौ यद्धूमज्ञानं तदादिमम् । पक्षे यद्धूमज्ञानं तद्द्वितीयम् । ततः पूर्वगृहीतां धूमाग्न्योर्व्याप्तिं स्मृत्वा तत्रैव पर्वते वह्निव्याप्यत्वेन यद्धूमज्ञानं तत्तृतीयम् । इदमेव लिङ्गपरामर्शः इत्युच्यते ( सि० च० ) ( त० भा० ) । अथ वा महानसादौ दृष्टान्ते वह्निधूमयोर्भूयः सहचारदर्शनात् व्याप्यत्वेन धूमज्ञानं प्रथमम् । ततः पर्वतादौ धूमं दृष्ट्वा व्याप्यत्वेन तत्स्मरणं द्वितीयम् । ततः तत्रैव व्याप्यत्वेन धूमस्य परामर्शो वह्निव्याप्यधूमवान् इत्येवंरूपस्तृतीयः ( त० कौ० २ ) । यद्वा प्रथमं दृष्टान्ते धूमदर्शनम् । ततः व्याप्तिज्ञानम् । ततः तद्विशिष्टपक्षधर्मताज्ञानम् ( न्या० म० २ पृ० १८ ) ।

**लिङ्गम्**—१ ( हेतुः ) [ क ] व्याप्तिबलेन यद्यस्य गमकम् तत् तस्य लिङ्गम् । यथा पर्वतो वह्निमान्धूमादित्यादौ धूमो वह्नेर्लिङ्गम् ( प्र० प्र० ) ( त० भा० पृ० ९ ) । इदं लिङ्गं द्विविधम् सल्लिङ्गम् असल्लिङ्गं च । तत्र व्याप्तिपक्षधर्मतावल्लिङ्गं सल्लिङ्गम् । तच्च व्यापकेन साध्येन व्याप्यं भवति । असल्लिङ्गं तु व्याप्तिपक्षधर्मतान्यतरशून्यम् । तस्य व्याप्यत्वे न नियमः । अत्र उभयविधमपि लिङ्गं प्रत्येकं त्रिविधम् अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति ( न्या० म० २ पृ० १८ ) ( गौ० वृ० ) ( त० सं० ) । अत्रापि विभागः संपद्यते । अन्वयव्यतिरेकि द्विविधम् सपक्षवृत्ति तदेकदेशवृत्ति चेति । तत्राद्यम् शब्दः अनित्यः कृतकत्वाद्घटवत् इति सपक्षव्यापकम् । सर्वस्मिन्ननित्ये कृतकत्वस्य वृत्तेः । द्वितीयं यथा पर्वतोग्निमान् धूमवत्त्वात् इति सपक्षैकदेशवृत्ति । अग्निमत्यपि क्वचिदवृत्तेः ( प्र० प० पृ० १८ ) इति । अत्र शिष्टं तु अनुमानशब्दव्याख्याने दृश्यम् । लिङ्गं ( अनुमानम् ) द्विविधम् दृष्टम् सामान्यतो दृष्टं च । तत्र दृष्टं प्रसिद्धसाध्ययोरत्यन्तजात्यभेदे अनुमानम् । यथा गव्येव सास्नामात्रमुपलभ्य देशान्तरे सास्नामात्रदर्शनात् गवि प्रतिपत्तिर्भवति । प्रसिद्धसाध्ययोरत्यन्तजातिभेदे लिङ्गानुमेयधर्मसामान्यानुवृत्तितोनुमानं सामान्यतो दृष्टम् । यथा कर्षकवणिग्राजपुरुषाणां प्रवृत्तेः

फलवत्त्वमुपलभ्य वर्णाश्रमिणामपि दृष्टं प्रयोजनमनुद्दिश्य प्रवर्तमानानां फलानुमानम् इति। अत्रेदं बोध्यम्। यत्र धूमस्तत्राग्निः इति अग्न्यभावे धूमो न भवति इत्येवं प्रसिद्धसमयस्यासंदिग्धधूमदर्शनात् साहचर्यानुस्मरणादनन्तरमग्न्यध्यवसायो भवति इति तत्र लिङ्गदर्शनं प्रमाणम्। प्रमितिरग्निज्ञानम्। अथ वा अग्निज्ञानमेव प्रमाणम्। प्रमितिरग्नौ गुणदोषमाध्यस्थप्रदर्शनम्। तत्स्वनिश्चितार्थमनुमानम् (प्रशस्त० पृ० ४४–४५)। लिङ्गशब्दे व्युत्पत्तिस्तु व्याप्तिबलेन लीनमर्थं गमयति इति लिङ्गम् (सि० च० २ पृ० २५) (गौ० वृ०)। अथवा लिङ्ग्यते गम्यते अनेनार्थः इति लिङ्गम् (न्या० बिन्दु० प० २ पृ० २१)। [ख] यदनुमेयेन सहचरितं तत्समानजातीये च सर्वत्रासर्वत्र वा सामान्येन प्रसिद्धम् तद्विपरीते च सर्वस्मिन्नसदेव तत् लिङ्गम्। अत्रोक्तम् अनुमेयेन संबद्धं प्रसिद्धं च तदन्विते। तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्॥ विपरीतमतो यत्स्यादेकेन द्वितयेन वा। विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोऽब्रवीत्॥ इति। काश्यपः कणादः। तदर्थश्च यदनुमेयेनार्थेन देशविशेषे कालविशेषे च सहचरितम् अनुमेयधर्मान्विते चान्यत्र सर्वस्मिन्नेकदेशे वा प्रसिद्धम् अनुमेयविपरीते च सर्वस्मिन् प्रमाणतोऽसदेव तदप्रसिद्धस्यार्थस्यानुमापकं लिङ्गं भवति इति। यत्तु यथोक्तात्त्रिरूपाल्लिङ्गादेकेन धर्मेण द्वाभ्यां वा विपरीतम् तदनुमेयस्याधिगमे लिङ्गं न भवति इति आह सूत्रकारः अप्रसिद्धोऽनपदेशोऽसन् संदिग्धश्चानपदेशः (वै० ३।१।१५) (प्रशस्त० २ पृ० २७,४४,४६) इति। २ सांख्यमते महत्तत्त्वादिकार्यजातं लिङ्गमुच्यते। अस्मिन्नर्थे व्युत्पत्तिस्तु लियं लयं गच्छति प्रधाने इति लिङ्गम्। पृषोदरादित्वात्साधुत्वम्। ३ लक्षणम्। यथा युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् (गौ० १।१।१६) इत्यादौ ज्ञानकारणाणुत्वं मनसो लिङ्गम् (गौ० वृ० १।१।१६) इत्यादौ। ४ वैयाकरणास्तु शब्दसाधुताप्रयोजको धर्मः। स च प्राकृतगुणगतावस्थात्मको धर्मः। तद्विशेषश्च पुंनपुंसकत्वादिः इत्याहुः (शब्दार्थर०)। तथा हि। सर्वेषां त्रिगुणप्रकृतिकार्यतया शब्दानामपि

तथात्वेन गुणगतविशेषाच्छब्देषु लिङ्गविशेषः इति कल्प्यते । स च विशेषः शास्त्रे इत्थमभ्यधायि । विकृतसत्त्वादीनां तुल्यरूपेणावस्थाना-न्नपुंसकत्वम् । सत्त्वस्याधिक्ये पुंस्त्वम् । रजस आधिक्ये स्त्रीत्वम् इति । एवं च लिङ्गस्य शब्दधर्मत्वेपि शब्देन सहार्थाभेदारोपात् असति बाधके अर्थेपि साक्षात् तत्पारतन्त्र्येण वा सर्वत्र तस्य विशेषणत्वम् ( वाच० ) । अथ वा सत्त्वरजस्तमोगुणानां साम्यावस्था नपुंसकत्वम् । आधिक्यं पुंस्त्वम् । अपचयः स्त्रीत्वम् । तत्तच्छब्दनिष्ठं तत्तच्छब्दवाच्यं च । तमेव विरुद्धधर्ममादाय तटादिशब्दा भिद्यन्ते ( वै० सा० नामार्थ० पृ० २२४ ) इति । अत्रेदं बोध्यम् । पुंलिङ्गः शब्दः इति व्यवहारात् स्वमोर्नपुंसकात् ( पा० सू० ७।१।२३ ) इत्यत्र शब्दस्यैव नपुंसकत्व-व्यपदेशात् दारान् इत्यादौ पुंस्त्वान्वयबाधाच्च लिङ्गस्य शब्दधर्मत्वम् इति । तटादिशब्दानामनेकलिङ्गत्वव्यवहारः समानानुपूर्वीकत्वेनैव शब्दानाम-भेदारोपात् । वस्तुतः तेषां भिन्नानामेव भिन्नलिङ्गत्वमिति । अत्र महा-भाष्यम् एकार्थे शब्दान्यत्वात् दृष्टं लिङ्गान्यत्वम् इति दिक् ( वाच० ) । इदं शाब्दिकमतम् । पुंस्त्वादयस्तिस्रो जातयः इति वैशेषिका आहुः । पुंस्त्वादि शब्दनिष्ठम् इति प्राञ्च आहुः । पुंस्त्वादिलिङ्गमर्थनिष्ठमेवेति नव्यवैयाकरणा आहुः । पुंस्त्वादिलिङ्गस्यार्थनिष्ठत्वे प्रमाणं च इयं व्यक्तिः इदं वस्तु अयं पदार्थः इति व्यवहारा अप्रतिबद्धप्रसराः इति । अत्रेद-माकूतम् पुष्यः तारका नक्षत्रम् इति शब्दनानात्वदर्शनात्स्तनकेशाद्यति-रिक्तमेव लिङ्गमर्थनिष्ठम् इति ( ल० म० ) ( वै० सा० द० नामार्थ० पृ० २२५ ) । अत्रोक्तम् स्त्रीलिङ्गमपि पुल्लिङ्गं क्लीबलिङ्गमिति त्रिधा । शब्दसंस्कारसिद्ध्यर्थं भाषया नाम भिद्यते ॥ (श० प्र० श्लो० ५३ ) इति । अधिकं तु स्त्रीलिङ्गम् इत्यादितत्तच्छब्दे द्रष्टव्यम् । ५ मीमांसकाश्च अर्थप्रकाशनसामर्थ्यं लिङ्गम् इत्याहुः । सामर्थ्यं द्विविधम् शब्दगतं साम-र्थ्यम् अर्थगतं सामर्थ्यं च । तत्राद्यम् बर्हिर्देवसदनं दामि इति । द्वितीयं तु स्रुवेणावद्यति इति । एवम् ऐन्द्या गार्हपत्यमुपतिष्ठते स्योनं ते सदनं कृणोमि इत्यादिकानि लिङ्गस्योदाहरणानि ज्ञेयानि । अत्रोक्तम् सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते इति । क्षमता च लिङ्गम् इति च (वाच०) ।

अत्र पुरोडाशसदनभूतं बर्हिः खण्डयामि इति श्रुतपदसामर्थ्यात् बर्हिर्देवसदनं दामि इति मन्त्रस्य कुशकाशादिरूपाणां मुख्यबर्हिषां लवनाङ्गत्वम् । न तु समाख्यातो दर्भसदृशानामुलपादिरूपतृणविशेषाणां गौणबर्हिषां लवनाङ्गत्वम् इत्यर्थः ( लौ० भा० टी० पृ० २१ ) । अथ वा दामि इति पदस्य दा लवने इत्यस्माद्धातोः सिद्धस्य छेदनप्रकाशनसामर्थ्यात् बर्हिः इत्यस्य चास्तृतदर्भप्रकाशनसामर्थ्यात् दर्भच्छेदने समुदायमन्त्रस्य विनियोगोत्रगम्यते ( तत्त्वबोध० ) ( वाच० ) । स्रुवेणावद्यतीत्यत्र अवदानसामान्यशेषत्वावगमेपि स्रुवस्य लिङ्गात्सामर्थ्यरूपात् आज्यसांनाय्यादिद्रवद्रव्यावदानविशेषाङ्गत्वम् । स्रुवेण मांसादिद्रव्यावदानस्य कर्तुमशक्यत्वात् इति । ऐन्द्या गार्हपत्यमित्यत्र मन्त्रस्य प्राप्तार्थत्वेनानुवादकत्वसंभवात् मन्त्रस्येन्द्रपदस्यैव इदि परमैश्वर्ये इति धात्वनुसारादैश्वर्यगुणयोगादग्नौ लक्षणा इति गार्हपत्यप्रकाशने समर्थमेव मन्त्रं ऐन्द्या इति तृतीयाश्रुतिर्गार्हपत्योपस्थाने विनियुङ्क्ते (लौ० भा० टी० पृ० २१) इति । मीमांसकाभिमतमिदं च लिङ्गं विनियोगविधेः सहकारि भवति इति विज्ञेयम् (लौ० भा० पृ० १६) । ६ स्वरूपम् । यथा सप्तदशावयवो लिङ्गदेहः इत्यादौ सप्तदश सूक्ष्मदेहस्य लिङ्गम् इत्याहुः । अत्र सूत्रम् सप्तदशैकं लिङ्गम् ( सांख्य० सू० अ० ३ सू० ९ ) इति । तदर्थश्च सूक्ष्मशरीरमप्याधाराधेयभावेन द्विविधं भवति । तत्र सप्तदश मिलित्वा लिङ्गशरीरम् । तच्च सर्गादौ समष्टिरूपमेकमेव भवतीत्यर्थः । एकादशेन्द्रियाणि पञ्च तन्मात्राणि बुद्धिश्च इति सप्तदश । अहंकारस्य बुद्धावेवान्तर्भावः ( सांख्य० भा० ३।९ ) इति । अत्रोक्तम् वासना भूतसूक्ष्मं ( तन्मात्रा ) च कर्मविद्ये तथैव च । दशेन्द्रियं मनो बुद्धिरेतल्लिङ्गं विदुर्बुधाः ॥ ( वाशिष्ठ० ) इति । कर्मात्मा पुरुषो योसौ बन्धमोक्षैः प्रयुज्यते । स सप्तदशकेनापि राशिना युज्यते च सः ॥ ( भार० मोक्षधर्मे ) (सांख्य० भा० ३।९) इति । अत्रेदं बोध्यम् । सांख्यमते लिङ्गशरीरस्यैव सुखदुःखकार्यकत्वम् । कुतः । एकस्य लिङ्गदेहस्यैव सुखदुःखाख्यभोगात् । न तु स्थूलशरीरस्य । मृतशरीरे सुखदुःखाद्यभावस्य सर्वसंमतत्वात् ( सांख्य० भा० अ० ३ सू० ८ ) इति । ७ धर्म-

शास्त्रज्ञादयस्तु पुंसः असाधारणमिन्द्रियम् (उपस्थः) इत्याहुः । ८ चिह्नम् शिवलिङ्गं चेति काव्यज्ञाः पौराणिकाश्चाहुः । ९ उपक्रमोपसंहारावभ्यासोपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ (वेदान्तसारः) (सर्व० सं० पृ० ४०५ शां०)। इदमेव लिङ्गषट्कमित्युच्यते ।

**लिङ्गाभासत्वम्**—१ अङ्गवैकल्यम् । २ दुष्टलिङ्गत्वम् ।

**लिङ्गि**—१ साध्यम् (दीधि० २)। यथा लिङ्गाविषयकलिङ्गिविषयकज्ञानजनकन्यायावयवत्वम् प्रतिज्ञालक्षणम् (चि० २ अव० पृ० ७७) इत्यादौ लिङ्गिशब्दार्थः साध्यम् । यथा वा तल्लिङ्गलिङ्गिपूर्वकम् (सांख्यका० ५) इत्यादौ । अत्र लिङ्गि इत्यस्य लिङ्गज्ञानज्ञेयम् इत्यर्थो ज्ञेयः । २ पक्षः । ३ पक्षधर्मताज्ञानम् । अत्रार्थे लिङ्गमस्यास्ति इति विग्रहोपि ज्ञेयः (सांख्य० कौ० श्लो० ५ पृ० १०)।

**लिङ्गोपधानम्**—लिङ्गोपहिते पक्षे लैङ्गिकस्य साध्यस्य भानम् । अत्र विग्रहः । लिङ्गस्य हेतोः उपधानम् पक्षे वैशिष्ट्यम् इति । लिङ्गोपहिते इत्यस्य लिङ्गेन व्याप्तिपक्षधर्मताविशिष्टेन हेतुना उपहितः विशिष्टः तस्मिन् इति विग्रहः । तथा च साध्यानुमानाङ्गहेतुयुक्ते पक्ष इत्यर्थः । यथा शुद्धपर्वतपक्षकेपि वह्निसाध्यके धूमहेतुके स्थले पर्वतो वह्निमान् धूमादित्यादौ वह्निव्याप्यधूमविशिष्टे पर्वते वह्नेर्भानम् वह्निव्याप्यधूमवान्पर्वतो वह्निमान् इति । तथा हि वह्निव्याप्यो हि धूमो वह्नेर्लिङ्गम् । तद्वति पक्षे वह्नेर्भानम् । वह्निव्याप्यधूमवान्पर्वतः इति परामर्शोत्तरं जायमानानुमितौ ज्ञानलक्षणया तादृशपक्षभानस्यावश्यकत्वात् । तथा च वह्निव्याप्यधूमवान् पर्वतो वह्निमान् इत्येव तत्रानुमितेराकारः इति विज्ञेयम् ।

**लिङ्गोपधानमतम्**—लिङ्गोपहितलैङ्गिकभानम् इत्यभिमतम् । अत्र व्युत्पत्तिः लिङ्गस्य व्याप्तिपक्षधर्मताविशिष्टहेतोः उपधानम् भानम् वैशिष्ट्यं वा अर्थात् पक्षे भवति इति मतम् । लिङ्गोपहितेत्यस्यार्थश्च लिङ्गोपहिते लिङ्गविशिष्टे पक्षे लैङ्गिकस्य साध्यस्य भानं भवति इति । यथा शुद्धपर्वतत्वावच्छिन्नपक्षकवह्निसाध्यकस्थले पर्वतो वह्निमान्धूमादित्यादावपि

वह्निव्याप्यधूमवान्पर्वतो वह्निमान् इत्यनुमितिर्भवति न तु केवलः पर्वतो वह्निमान् इति । इदं चोदयनाचार्याणां मतम् । तन्मते सर्वत्र तादृशहेतुविशिष्टः पक्षः साध्यवान् इत्याकारैवानुमितिर्भवति इति विज्ञेयम् । अयं भावः । आचार्याणां मते हेतोः सर्वत्रैव धर्मितावच्छेदकतया भानात् पर्वतत्वाद्यवच्छेदेन हेतुमत्ताज्ञानस्थलेपि ( वह्निव्याप्यधूमवान्पर्वतः इति परामर्शेपि ) वह्निव्याप्यधूमविशिष्टपर्वतो वह्निमान् इत्याकारिकैवानुमितिर्भवति इति ( ग० २ सामान्यनि० पृ० ४ ) ।

**लिट्**— ( तिङ् ) [ क ] द्विरुक्तभिन्नधात्वर्थे स्वार्थस्यान्वयबोधने । या न योग्या तादृशी तिङ् लिट्पदेनाभिधीयते ॥ यथा जघान जघ्नतुरित्यादौ लिट् । अत्र द्विरुक्तस्यैव धातोरर्थे स्वार्थान्वयं प्रत्यया बोधयन्ति इति तत्र लक्षणसमन्वयो बोध्यः । अशिश्रियत् अदुद्रुवत् इत्यादौ द्विरुक्तस्येव अपाक्षीत् इत्यादौ द्विरुक्तान्यस्यापि धातोरर्थे स्वार्थान्वयं लुङादयो बोधयन्ति । अतो न लुङादावतिप्रसङ्गः । पिपक्षति पापच्यते इत्यादौ च सनादयस्तादृशा द्विरुक्तस्यैव धातोरर्थे स्वार्थान्वयबोधका अपि न तिङः इति न तत्रातिप्रसङ्गः । अत्र प्रकृत्यर्थे वर्तमानत्वाद्यनाकाङ्क्षत्व इति विशेषणं देयम् । तेन पचे पचावहे पचावः इत्यादौ न लडाद्यतिप्रसङ्गः । [ ख ] द्विरुक्तस्य यजेरर्थे चकास्तेराम्युतस्य वा । या स्वार्थस्यान्वये हेतुः सा वा लिट् कथ्यते बुधैः ॥ जुहोतीत्यादौ द्विरुक्तस्य धातोरर्थे स्वार्थबोधकोपि लडादिः न यजेरर्थे इति न तत्र लडादावतिप्रसङ्गः । यथा काशांचक्रे लोढयामास ईक्षांबभूवेत्यादौ मनश्चचाल सुरभिभाग आजगाम इत्यादौ च लिट् । अत्र अतीतः काल इव धात्वर्थनिष्ठं परोक्षत्वमपि लिटोर्थः । तच्च परोक्षत्वम् अतीन्द्रियत्वम् । तेन अतीतकालवृत्त्यतीन्द्रियचलनवन्मनः इत्याकारकस्तत्र बोधः ( श० प्र० श्लो० १०५ टी० पृ० १६२ ) । अत्र चैत्रश्चारु पपाच व्यातेने किरणावलीमुदयनः इत्यादौ लिटि लक्षणसमन्वयश्चिन्त्यः । चिन्ताबीजं तु कलिङ्गे दृष्टोसि नाहं कलिङ्गान् जगाम इत्यत्रेव पूर्वोक्तस्थलयोरपि लिट्साधुत्वोपपादकं सूत्रान्तरमेव इति ( ग० व्यु० ल० पृ० १३९ ) ।

अतीतत्वमनद्यतनत्वं परोक्षत्वं च लिडर्थः ( तर्का० ४ पृ० ११ ) । यथा जुगोप गोरूपधरामिवोर्वीम् ( रघु० २।३ ) इत्यादौ लिडर्थः । अत्र सूत्रम् परोक्षे लिट् ( पा० सू० ३।२।११५ ) इति । तदर्थस्तु अनद्यतने भूते परोक्षेर्थे लिट् भवति इति । तेन अद्यतने भूते अनद्यतने भविष्यति भूतेप्यपरोक्षे च न लिट्प्रयोगः स्यात् । अत्र परोक्षत्वं च साक्षात्करोमि इत्येतत्प्रतीतिसाक्षिकलौकिकविषयत्वाभाववत्त्वम् । तेन उपनीतक्रियायां यथाश्रुतप्रत्यक्षाविषयत्वरूपस्य परोक्षत्वस्याभावेपि न पपाच इत्यादिप्रयोगानुपपत्तिः ( वै० सा० द० ल० पृ० १२४ ) । अत्र परोक्षत्वातीतत्वयोर्लिडर्थयोरन्वयस्तु लुङर्थवदुत्पत्तौ ज्ञेयः ( तर्का० ४ पृ० ११ ) ।

**लिपिः**—शब्दस्मारकः शब्दानुमापको वा रेखाविशेषः ( म० प्र० ४ पृ० ६६ ) । यथा क इति रेखा प्रजापति इति शब्दस्य स्मारिका । केचित्तु लिपिं प्रमाणान्तरं मन्यन्ते । लिपिभेदास्तु तत्तद्देशभेदेन देवनगरीग्रन्थाक्षरलिप्यादयो बहवः । अत्र सिद्धान्तविदस्तु लिपिस्तु शब्दस्मारकतया शब्दानुमापकतया वा प्रमायामुपयोगिनी न तु प्रमाणान्तरम् इत्याहुः । अनुमानं च अयं पुरुषः घटमानय इति शब्दविषयकाभिप्रायवान् घटमानय इति शब्दव्यञ्जकलिपिकर्तृत्वात् यथा अहम् इति । अस्मादनुमानात् घटमानय इति शब्दस्यानुमितिर्भवति । ततोर्थप्रत्ययः इति ज्ञेयम् ( म० प्र० ४ पृ० ६६ ) ।

**लुङ्**—( तिङ् ) कृतवधादेशस्य हन्तेरर्थे अथ वा सिजन्तस्य धातोरर्थे या अतीतत्वस्य बोधिका तादृशी तिङ् लुङ्शब्देनोच्यते । यथा अवधीत् अवधिष्टाम् अवधिषुरित्यादौ अपाक्षीदित्यादौ च लुङ् ( श० प्र० श्लो० १०३ पृ० १६१ ) । यथा वा घटोभूदित्यादौ ( वै० सा० ल० पृ० १४७ ) । जघान हन्ति स्म इत्यादौ लिङ्लडादिको हन्तेरर्थे अतीतत्वस्य बोधकोपि न कृतवधादेशस्य न वा सिजन्तस्य इति न तत्रातिप्रसङ्गः । वध्यात् वध्यास्ताम् वध्यासुः इत्यादौ कृतवधादेशस्य तस्यार्थे स्वार्थानुभाविकापि आशीः नातीतत्वस्य बोधिका इति न तत्राति-

प्रसङ्गः । अत्र अनुमतत्वह्यस्तनत्वाद्यनाकाङ्क्षितत्वम् इति विशेषणं देयम् । तेन पच्यताम् अपचत् अपचताम् इत्यादौ लोडादौ नातिप्रसङ्गः । अत्र अतीतः काल इव तन्निष्ठमद्यतनत्वमपि लुङोर्थः । तेन वर्तमानध्वंसप्रतियोग्यद्यतनपाककृतिमान् इत्येवं बोधः ( श० प्र० श्लो० १०३ टी० पृ० १६१ ) ( ग० व्यु० ल० पृ० १३८ ) । किंच उत्पत्तिः भूतत्वं च लुङर्थः ( तर्का० ४ पृ० ११ ) । अथ वा अतीतत्वं लुङर्थः । तस्याश्रयतासंबन्धेनाख्यातार्थकृत्यादावन्वयः । वस्तुतः वर्तमानध्वंस एव लुङर्थः । तस्य प्रतियोगितासंबन्धेन कृत्यादावन्वयः ( ग० व्यु० लका० पृ० १३८ ) । अत्र सूत्रम् लुङ् ( पा० सू० ३।२।११० ) इति । तदर्थस्तु भूतसामान्ये लुङ् इति ( वै० सा० ल० पृ० १४६ ) ( काशिका० ) । अत्र भूतत्वं चातीतत्वम् । तच्चोत्पत्तावन्वेति । तथा च विद्यमानध्वंसप्रतियोग्युत्पत्तिकत्वं लब्धम् ( तर्का० ४ पृ० ११ ) । वैयाकरणास्तु अत्र विद्यमानध्वंसप्रतियोगित्वं भूतत्वम् । तच्च घटोभूत् इत्यत्र क्रियायां निर्बाधम् इति विद्यमानेपि घटे घटोभूत् इति प्रयोगः । विद्यमानध्वंसप्रतियोगी घटाभिन्नाश्रयक उत्पत्त्याद्यनुकूलो व्यापारः इति बोधः इत्याहुः ( वै० सा० ल० पृ० १४७ ) ।

**लुट्**—( तिङ् ) धात्वर्थे श्वस्तनत्वस्य भावित्वस्य च बोधिका तिङ् लुडुच्यते । यथा भविता भवितारौ भवितारः इत्यादौ पक्ता पक्तारौ पक्तारः इत्यादौ च ( तर्का० ४ ) । लृडादयस्तु धात्वर्थे भावित्वमेव बोधयन्ति न श्वस्तनत्वमपि इति तत्र नातिप्रसङ्गः । श्वः पक्ष्यति इत्यादौ धात्वर्थे श्वस्तनत्वस्य बोधकमपि श्वः इति पदं न तिङ् इति न श्वः इति पदेतिप्रसङ्गः ( श० प्र० श्लो० १०५ पृ० १६२ ) । अत्र लुडर्थोनद्यतनभविष्यत्त्वम् । तच्च शब्दप्रयोगाधिकरणदिवसावृत्तित्वे सति शब्दप्रयोगकालीनप्रागभावप्रतियोगित्वम् । शब्दप्रयोगाधिकरणदिवसध्वंसोत्पत्तिकत्वं वा । केचित्तु भविष्यत्त्वमेव लुडर्थः इत्याहुः ( ग० व्यु० ल० पृ० १३६ ) । तण्डुलं चेत्पचेदोदनमपि भुञ्जीतेत्यादौ तु क्रियातिपतनस्य वर्तमानत्वमेव लिङा प्रत्याय्यते न त्वतीतत्वम् इति तद्व्युदासः

( श० प्र० श्लो० १०६ पृ० १६४ ) । अत्र सूत्रम् अनद्यतने लुट् ( पा० सू० ३।३।१५ ) इति । तदर्थस्तु अनद्यतने भाविनि लुट् ( वै० सा० ल० पृ० १२७ ) इति । अत्र अनद्यतन इति बहुव्रीहिः । ते न व्यामिश्रे न भवति अद्य श्वो वा भविष्यति इति ( काशिका० ) ।

लृङ्—( तिङ् ) या तिङ् क्रियायाः ( धात्वर्थस्य ) अतिपाते ( विगमे ) अतीतकालावच्छेद्यत्वस्य बोधिका तादृशी तिङ् लृङुच्यते । यथा एधश्चेत् प्राप्स्यत् ओदनमप्यपक्ष्यत् इत्यादौ लृङ् । अत्र स्यतिप्रभृतयश्चैत्रादेरतीतकालावच्छेद्यमिन्धनप्राप्त्यभाववत्त्वमनुभावयन्ति । तथा च अतीतकाल इव क्रियाप्रतियोगिकोभावोपि लृङोर्थः । वस्तुतः अतीतकालावच्छेदेनेन्धनप्राप्त्यभावप्रयुक्त ओदनपाकाद्यभाव एवोक्तस्थले लृङा चैत्रादावनुभाव्यः । क्रियाविरहप्रयुक्तस्य क्रियान्तरविरहस्यैव क्रियातिपातशब्दार्थत्वात् ( श० प्र० श्लो० १०६ टी० पृ० १६४ ) । लृङर्थस्तु व्याप्यक्रियया व्यापकक्रियाया आपादनम् ( तर्का० ४ पृ० ११ ) । यथा भूतले घटश्चेदभविष्यद्भूतलमिवाद्रक्ष्यत् इत्यादौ लृङर्थः । अत्रोदाहरणान्तरं यथा परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् । अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां वितथोभविष्यत् ॥ ( रघु० स० ७ श्लो० १४ ) इति । शाब्दिकमते क्रियाया अनिष्पत्तौ गम्यमानायां भूते भाविनि वा हेतुहेतुमद्भावे सति लृङ् । अत्र जगदीश आह क्वचित् भूतत्वम् क्वचित्तु भविष्यत्त्वं लृङर्थः इति ( तर्का० ४ पृ० ११ ) ( सि० च० ४ पृ० ३२ ) । अत्र सूत्रम् लिङ्निमित्ते लृङ् क्रियातिपत्तौ ( पा० सू० ३।३।१३९ ) इति । तदर्थस्तु लिङो निमित्तं हेतुहेतुमद्भावादि ( वै० सा० ल० पृ० १४८ ) । भविष्यतीत्यनुवर्तते । हेतुहेतुमतोर्लिङ् इत्येवमादिकं लिङो निमित्तम् । तत्र लिङ्निमित्ते भविष्यति काले लृङ् प्रत्ययो भवति क्रियातिपत्तौ सत्याम् ( काशिका० ) इति । तत्र भाविनि हेतुहेतुमद्भावे लृङ् यथा सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यत् वह्निश्चेत्प्राज्वलिष्यत् ओदनमपक्ष्यत् इत्यादौ इत्याहुः ।

अत्र वह्न्यभिन्नाश्रयकप्रज्वलनानुकूलव्यापाराभावप्रयोज्य ओदनाभिन्ना-श्रयकविक्लित्त्यनुकूलव्यापाराभावः इति वैयाकरणमते शाब्दबोधः ( वै० सा० ल० पृ० १४८ ) । वह्न्यभिन्नाश्रयकभाविप्रज्वलनजन्यौदना-श्रयकविक्लित्त्यनुकूलव्यापारः इति शाब्दबोधस्तूचितः ( वै० सा० द० पृ० १४८ ) ।

**लृङ्**—( तिङ् ) या तिङ् क्रियायाः ( धात्वर्थस्य ) अतिपाते ( विगमे ) भाविकालावच्छेद्यत्वस्य बोधिका तादृशी तिङ् लृङुच्यते । यथा तण्डुलं चेत्प्राप्स्यत्योदनमपि पक्ष्यति चैत्र इत्यादौ लृङ् । अत्र स्यतिश्चैत्रादेर्भावि-कालावच्छेदेन तण्डुलप्राप्त्यभाववत्त्वमनुभावयति । तथा च भाविकाल इव क्रियाप्रतियोगिकोभावोपि लृङर्थः । वस्तुतः भाविकालावच्छेदेन तण्डुलप्राप्त्यभावप्रयुक्त ओदनपाकाद्यभाव एवोक्तस्थले लृङा चैत्रादावनु-भाव्यः । क्रियाविरहप्रयुक्तस्य क्रियान्तरविरहस्यैव क्रियातिपातशब्दार्थ-त्वात् ( श० प्र० श्लो० १०६ टी० पृ० १६३ ) । भविष्यत्त्वं लृङर्थः । यथा पक्ष्यतीत्यादौ ( ग० व्यु० ल० ) । यथा वा घटो भविष्यतीत्यादौ । अत्र सूत्रम् लृट् शेषे च ( पा० सू० ३।३।१३ ) इति । तदर्थस्तु शेषे शुद्धे भविष्यति काले चकारात् क्रियायां चोपपदे क्रियार्थायां धातोर्लृट्प्रत्ययो भवति ( काशिका० ) इति । अत्र भवि-ष्यत्त्वं च विद्यमानप्रागभावप्रतियोग्युत्पत्तिकत्वम् । तेन आगमिष्यतीत्यादौ विद्यमानप्रागभावप्रतियोग्युत्पत्तिकागमनानुकूलकृतिमान् इत्यर्थः ( तर्को० ४ पृ० ११ ) । वैयाकरणाश्च भविष्यत्त्वं वर्तमानप्रागभावप्रतियोगि-समयोत्पत्तिमत्त्वम् इत्याहुः ( वै० सा० ल० पृ० १२८ ) ।

**लेख्यम्**—देशाचाराविरुद्धं यद्व्यक्ताधिविधिलक्षणम् । तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम् ॥ ( मिताक्षरा अ० २ श्लो० ८९ ) ।

**लेट्**—( तिङ् ) लिङर्थवदस्यार्थोनुसंधेयः ( वै० सा० ल० पृ० १२९ ) । अत्र सूत्रम् लिङर्थे लेट् ( पा० सू० ३।४।७ ) इति । तदर्थस्तु लिङो येर्थास्तेष्वर्थेषु वेदे लेड्वा स्यात् इति । यथा जोषिषत् तारिषत् मन्दिषत् नेता नेषत् कवयस्तक्षिषत् इत्यादौ ( काशिका० ) ।

**लैङ्गिकम्**—१ लिङ्गदर्शनाज्जायमानं ज्ञानम् ( अनुमितिः ) ( प्रशस्त० गु० पृ० २६ ) । यथा पर्वते धूमेन वह्निसाधने वह्निव्याप्यधूमवान् पर्वतः इति लिङ्गदर्शनात् पर्वतो वह्निमान् इत्यनुमितिः । अत्रोदाह्रियते पक्षीकृत्य गिरीशं सिद्ध्या रहिताश्च मानहीनाश्च । इच्छन्त्यधिगन्तुमिमे धनंजयं लिङ्गदर्शनेनैव ॥ ( विश्वगुणादर्शे ) इति । अर्थान्तरे धनं जयं च । २ [ क ] लिङ्गादिना अनुमितं साध्यम् । यथा आचार्यमते लिङ्गोपहितलैङ्गिकभानम् इत्यादौ लैङ्गिकं साध्यम् । [ ख ] लिङ्गादिभिः कल्पितम् । यथा मीमांसकमते अर्थप्रकाशनसामर्थ्यरूपलिङ्गेन मन्त्रादीनां तत्तत्कर्मादौ विनियोगः कल्प्यत इति ।

**लोकः**—१ वेदतदुपजीविप्रमाणातिरिक्तप्रमाणम् । यथा अलौकिकत्वम् इत्यादौ लोकः ( मू० म० १ पृ० १६ ) । २ स्वर्गादिर्लोकः इति पौराणिका आहुः । ३ मनुष्यश्च लोकः इति काव्यज्ञा वदन्ति ।

**लोट्**—( तिङ् ) स्ववक्त्रनुमतत्वस्य धात्वर्थेन्वयबोधने । अनुकूला यादृशी तिङ् सैव लोट् परिभाष्यते ॥ लोडर्थास्त्वनुमतत्वादयो बहवः सन्ति । १ अनुमतत्वम् । यथा करोतु कुरुताम् कुर्वन्तु इत्यादौ लोटोर्थः । अत्र तुप्ताम्प्रभृतयश्चैत्राद्युक्तत्वधीसहकृताः कृत्यादौ प्रकृत्यर्थे चैत्राद्यनुमतत्वं बोधयन्ति न तु तिबाद्याः इति लक्षणसमन्वयः तिबादौ नातिप्रसङ्गश्च ( श० प्र० श्लो० ९९ टी० पृ० १४५ ) इति । अत्र सूत्रम् लोट् च ( पा० सू० ३।३।१६२ ) इति । तदर्थस्तु लोट्प्रत्ययो भवति धातोर्विध्यादिष्वर्थेषु ( काशिका० ) इति । २ अनुज्ञा । यथा पत्नी पचतु इत्यादौ लोटोर्थः । अनुज्ञा च कर्तुरिष्टत्वे सति वक्त्रनुमतत्वम् । चैत्रवक्तृकतादृशवाक्यात् चैत्रानुमतस्वेष्टस्य पाकस्य कर्त्री पत्नी इत्येवं बोधः ( श० प्र० श्लो० ९९ टी० पृ० १४५ ) । ३ आज्ञा । यथा शूलं विश विषं भुङ्क्ष्व इत्यादिराजवाक्यस्थलीयलोडर्थः । आज्ञा च वक्त्रनुमतत्वे सति कर्तुरनिष्टहेतुत्वम् । अत्र राजानुमतस्वानिष्टहेतुशूलप्रवेशकर्तृतावांस्त्वम् इत्याकारो बोधः ( श० प्र० श्लो० ९९ टी० पृ० १४५ ) । ४ समर्थना । यथा पर्वतमप्युत्पाटयानि समुद्रमपि

शोषयाणि इत्यादौ लोडर्थः । समर्थना च पराशक्यधर्मिकस्वशक्यत्वाध्यवसायः । अत्र स्वेतराशक्यं यत् पर्वतोत्पाटनम् तद्धर्मिकस्वशक्यत्वाध्यवसायवान् इत्यन्वयबोधः ( श० प्र० श्लो० ९९ टी० पृ० १४५ ) । ५ विधिः । यथा पटमानय इत्यादौ लोडर्थः ( श० प्र० श्लो० ९९–१०० टी० पृ० १४५–१४८ ) । विधिश्चात्र वक्त्रिच्छाविषयत्वम् । अत्र पटकर्मकमदिच्छाविषयानयनानुकूलकृतिमांस्त्वम् इत्यन्वयः ( तर्का० ४ पृ० ११ ) ( सि० च० ४ पृ० ३२ ) । यथा वा कटं तावद्भवान् करोतु ग्रामं भवानागच्छतु इत्यादौ ( काशिका० ) । ६ निमन्त्रणम् । यथा अमुत्र भवानास्ताम् अमुत्र भवान् भुङ्क्ताम् इत्यादौ । ७ आमन्त्रणम् । यथा इह भवान् भुङ्क्ताम् इत्यादौ । ८ अधीष्टः । यथा अधीच्छामो भवन्तं माणवकं भवानध्यापयतु इत्यादौ । ९ संप्रश्नः । यथा किं नु खलु भो व्याकरणमध्ययै इत्यादौ ( काशिका० ३।३।१६२ ) । १० प्रार्थना । यथा भिक्षां देहि त्वमर्थिभ्यः इत्यादौ लोडर्थः ( श० प्र० ) ( ग० व्यु० ल० पृ० १३९ ) । यथा वा भवति मे प्रार्थना व्याकरणमध्ययै छन्दोध्ययै इत्यादौ ( काशिका० ) । ११ आशंसनम् । यथा चिरं जीवतु भवानित्यादौ लोडर्थः । यथा वा भवतु ते शिवप्रसादः इत्यादौ लोडर्थः । आशंसनं च वक्त्राशंसनम् । अथ वा अप्राप्तस्येष्टस्यार्थस्य प्राप्तुमिच्छा । अत्रार्थे सूत्रम् आशिषि लिङ्लोटौ ( पा० सू० ३।३।१७३ ) इति । तदर्थस्तु आशीर्विशिष्टेर्थे वर्तमानाद्धातोर्लिङ्लोटौ प्रत्ययौ भवतः ( काशिका० ) इति । अत्राधिकं तु आशीः इति शब्दव्याख्याने दृश्यम् । चैत्रोक्तात् जीवतु भवान् इति वाक्यात् चैत्राशंसाविषयवर्तमानजीवनवांस्त्वम् इत्येवं बोधः । घटो नीलो भवतु भवान् सुखी भवतु इत्यादौ तु धातुनैव लक्षणयोपस्थापितायां नीलाद्युत्पत्तौ तिङाशंसनीयत्वं प्रतीयते । एवं च आशंसाविषयवर्तमाननीलोत्पत्तिमान्नीलो घटः इत्यादिकस्तत्र बोधः ( श० प्र० श्लो० ९९ टी० पृ० १४६ ) ।

**लोभः**—( दोषः ) [ क ] धर्मविरोधेन परद्रव्येच्छा ( गौ० वृ० ४।१।३ ) । तदुक्तम् परवित्तादिकं दृष्ट्वा नेतुं यो हृदि जायते । अभिलाषो

द्विजश्रेष्ठ स लोभः परिकीर्तितः ॥ ( पद्मपु० ) ( वाच० ) इति । यथा लोभश्चेदगुणेन किम् इत्यादौ । [ ख ] लिप्सातिशयः ( मिताक्षरा अ० २ श्लो० १ ) ।

**लौकिकः**—( पुरुषः ) लोकसाम्यमनतीतो नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्तः ( वात्स्या० १।१।२५ ) । यथा लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ( गौ० १।१।२५ ) इत्यादौ कश्चन ग्राम्यो जनो लौकिकः । अत्र लौकिकत्वं च अप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षत्वम् ( गौ० वृ० १।१।२५ ) ।

**लौकिकप्रत्यक्षम्**—( प्रत्यक्षम् ) [ क ] लौकिकसंनिकर्षजन्यं ज्ञानं प्रत्यक्षम् ( ल० व० ) । यथा घटचक्षुःसंयोगे सति भूतले घटवत्ताज्ञानम् । ( मु० २ पृ० १६० ) । [ ख ] षड्विधसंनिकर्षजन्यं प्रत्यक्षम् ( त० कौ० १ पृ० ८ ) । अत्र प्रत्यक्षे लौकिकत्वं च साक्षात्कारत्वव्यञ्जकविषयताविशेषः । एवम् दोषविशेषजन्यज्ञानेपि लौकिकत्वं विज्ञेयम् ( ग० सत्प्र० पृ० १६–१७ ) । गन्धादेर्विषयस्य लौकिकत्वं च मानसेतरलौकिकसाक्षात्कारविषयत्वम् विषयताविशेषो वा । चक्षुरादीनां षण्णामिन्द्रियाणां लौकिकत्वं तु लौकिकप्रत्यक्षजनकत्वमेव इति चिन्त्यम् । अत्रेदं बोध्यम् । घटाभावव्याप्यवद्भूतलम् इति विशेषदर्शनदशायामपि घटचक्षुःसंयोगे सति लौकिकसंनिकर्षजन्यस्य भूतलं घटवत् इत्यादिप्रत्यक्षस्योदयात् तदुपनीतभानशाब्दबोधादेश्चानुदयाच्च लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यतद्विशिष्टबुद्धित्वावच्छिन्नं प्रति तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वकल्पनमुचितम् इति ।

**लौकिकवाक्यम्**—मानुषादिप्रणीतवाक्यम् । यथा घटमानय इत्यादि वाक्यम् । अत्र लौकिकत्वं च वैदिकभिन्नत्वम् ( वाक्य० ४ पृ० २२ ) ।

***लौकिकसंनिकर्षः***—*प्रत्यक्षविशेषजनकः संयोगाद्यन्यतमः* । अत्र संनिकर्षे लौकिकत्वं चालौकिकसंनिकर्षभिन्नत्वम् संयोगाद्यन्यतमत्वं वा । ते च षट् संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेत-

समवायः विशेषणविशेष्यभावश्च इति । प्रयोजनादिकं च सविस्तरं इन्द्रियार्थसंनिकर्षशब्दव्याख्यानावसर उक्तमेवेत्यत्रैव विरम्यते ।

**लौकिकाचारः**—लोकमात्रप्रसिद्धाचारः । यथा अलौकिकाविगीतशिष्टाचारविषयत्वम् इत्यादौ भोजनाद्याचारः । अत्र लौकिकत्वं च विधिमन्तरा रागादिप्राप्तत्वम् ( नील० मङ्ग० पृ० २ ) ।

## व.

**वंशः**—दशहस्तपरिमितो वंशः ।

**वचनम्**—१ [ क ] ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः । यथा शिष्यं धर्मं ब्रूते इत्यादौ ब्रूञोर्थः । अत्र धात्वर्थघटके ज्ञाने शिष्यवृत्तित्वस्य शब्दे च धर्मविषयकत्वस्यान्वयः ( ग० व्यु० का० २ ख० १ पृ० ४६ ) । अयमन्वयप्रकारो ब्रुवणशब्दव्याख्याने प्रदर्शितोप्यध्येतृसौकर्यार्थमिह पुनः प्रदर्शितः इति विज्ञेयम् । [ ख ] शाब्दिकास्तु विषयतया ज्ञानानुकूलशब्दप्रयोगरूपो व्यापारः । यथा माणवकं धर्मं ब्रूते इत्यादौ ब्रूञोर्थः इत्याहुः ( ल० म० कार० २ पृ० ९२ ) । २ उपदेशशब्दवदस्यार्थोनुसंधेयः । एवम् वदधात्वर्थोपि ज्ञेयः ( श० प्र० श्लो० ७३ टी० पृ० ९८ ) । ३ वाक्यम् इति काव्यज्ञा आहुः । ४ व्याकरणशास्त्रप्रसिद्धः संख्यार्थकः सुप्तिङ्स्वरूपः प्रत्ययः । यथा बहुषु बहुवचनम् (पा० सू० १।४।२१ ) द्व्येकयोर्द्विवचनैकवचने (पा० सू० १।४।२२ ) इत्यादौ । ५ शुण्ठी इति भिषज आहुः ।

**वधः**—प्राणवियोगफलकव्यापारः । यथा नाततायिवधे दोषोन्यत्र गोब्राह्मणात् स्नातः प्रायश्चित्तं कुर्यात् ( वीरमित्रो० सुमन्तुस्मृतिः पृ० २२–२८ ) इत्यादौ । वधनिष्पादकत्वं च साक्षात्परंपरया वा बोध्यम् । *वधनिष्पादकः पञ्चविधः कर्ता प्रयोजकः अनुमन्ता अनुग्राहकः* निमित्ती चेति । यथाहापस्तम्बः प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफलेषु कर्मसु भागिनः । यो भूय आरभते तस्मिन्फलविशेषः ( आपस्त० धर्मसू० २।११।२९।१–२ ) इति । इषुकारस्तु न वधनिष्पादकः । अन्यत्र

चोक्तम् । बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम् । यद्येको घातकस्तत्र सर्वे ते घातकाः स्मृताः ॥ इति । अन्यच्च अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः ॥ ( मनु० अ० ५ श्लो० ५१ ) इति । वधविषये अधिकप्रपञ्चस्तु हिंसाशब्दव्याख्यानावसरे प्रदर्शयिष्यत इति तत्र द्रष्टव्यः ।

**वनम्**—१ वृक्षसमुदायः । यथा सुवनी संप्रवदत्पिकापि का ( नैष० ) इत्यादौ । यथा वा श्यामायमानानि वनानि पश्यन् ( रघु० स० २ श्लो० १७ ) इत्यादौ । अत्र वनत्वं च तत्तद्वृक्षादिविषयकज्ञानविषयत्वम् ( त० प्र० ख० ४ पृ० ५० ) । २ जलम् । ३ निवासः । ४ प्रस्तरणं चेति काव्यज्ञा आहुः ( हेमच० ) ।

**वरणम्**—सत्कारपुरःसरम् अग्निर्होता इत्यादिप्रार्थना वरणम् ( जै० न्या० अ० १० पा० २ अधि० ११ ) ।

**वराङ्गः**—चतुर्विंशत्यधिकशतत्रयम् ( अतलशब्दे दृश्यम् ) ।

**वर्णः**—१ ( गुणः ) शुक्लादिरूपम् । यथा वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ( भा० प० श्लो० ४० ) इत्यादौ । २ ब्राह्मणादिजातिः । यथा चातुर्वर्ण्यं मया सृष्टम् ( गीता० अ० ४ श्लो० १३ ) इत्यादौ ब्राह्मणक्षत्रियवैश्यशूद्रभेदेन चतुर्विधा इति पौराणिका आहुः । अत्र श्रुतिः ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत इति ( यजुः—३१।११ ) । तेषां पूर्वः पूर्वो जन्मतः श्रेयान् ( आपस्तम्ब—धर्मसू० १।१।१।४ ) । ब्राह्मणस्य श्रैष्ठ्ये कारणमुक्तं मनुना यथा ऊर्ध्वं नाभेर्मेध्यतरः पुरुषः परिकीर्तितः । तस्मान्मेध्यतमं त्वस्य मुखमुक्तं स्वयंभुवा ॥ उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैव धारणात् । सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः ॥ ( मनु० अ० १ श्लो० ९२–९३ ) ( १०।३ ) इति । वर्णधर्मश्च नित्यं मद्यं ब्राह्मणो वर्जयेत् इत्यादिः ( मिता० १।१ पृ० १ ) । ब्राह्मणादिवर्णानां कर्माणि तु शमदमतपोज्ञानादि ब्राह्मणस्य शौर्यं प्रजापालनज्ञानादि क्षत्रियस्य कृषिगोरक्षवाणिज्यं वैश्यस्य परिचर्या शूद्रस्य ( गीता० अ० १८

श्लो० ४२-४४ ) इति । गौतमेनाप्युक्तम् ब्राह्मणस्याधिकं लब्धम् क्षत्रियस्य विजितम् निर्विष्टं वैश्यशूद्रयोः ( मिता० २ पृ० ६१ ) ( मनु० १।८८-९१ ) इति। ३ वैयाकरणास्तु अकाराद्यक्षरम् इत्याहुः। एतेषां वर्णानामुत्पत्तिक्रमः शिक्षायां कथितः पाणिनिना आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णाञ्जनयते तेषां विभागः पञ्चधा मतः॥ स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः इति। तथा प्राणापानान्तरे देवी वाग्वै नित्यं हि तिष्ठति। स्थानेषु विकृते वायौ कृतवर्णपरिग्रहा॥ वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धिनी। केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी॥ प्राणवृत्तिमनुक्रम्य मध्यमा वाक्प्रवर्तते। अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा॥ स्वरूपज्योतिरेवातः परा वागनपायिनी ( महाभार० ) ( वाच० ) इति। वर्णाश्च मतभेदेन त्रिषष्टिश्चतुःषष्टिर्वा शिक्षायामभिहिता वेदितव्याः। गायकास्तु ४ गीतक्रमः ५ तालविशेषश्च इत्याहुः। काव्यज्ञास्तु ६ कुङ्कुमम् ७ स्वर्णम् ८ यशः ९ गुणः १० स्तुतिश्च इत्याहुः। ११ कार्तान्तिकाश्च विवाहप्रयोजकनक्षत्रविशेषकृतं वर्णकूटम् इत्याहुः ( वाच० )।

**वर्ण्यसमः**—( जातिः ) [ क ] स्थापनीयो वर्ण्यो विपर्ययादवर्ण्यस्तावेतौ साध्यदृष्टान्तधर्मौ विपर्यस्यतो वर्ण्यावर्ण्यसमौ भवतः ( वात्स्या० ५।१।४ )। अत्र वर्ण्यत्वं वर्णनीयत्वम्। तच्च संदिग्धसाध्यकत्वादि। अयं वर्ण्यसमस्तु असाधारणदेशनाभासः साधनविकलदृष्टान्तदेशनाभासो वा इति ज्ञेयम् ( गौ० वृ० ५।१।४ )। [ ख ] दृष्टान्ते वर्ण्यत्वस्यापादनम्। अत्रायं भावः। साध्यदृष्टान्तयोर्धर्मविकल्पात् इति। साध्यः साध्यसिद्ध्यभाववान् संदिग्धसाध्यकादिर्वा। तस्य धर्मः संदिग्धसाध्यकादिवृत्तिर्हेतुः। तस्य विकल्पात्सत्त्वाद्दृष्टान्ते वर्ण्यत्वस्य संदिग्धसाध्यकत्वस्यापादनम् वर्ण्यसमा। तदयमर्थः। पक्षवृत्तिहेतुर्हि गमकः। पक्षश्च संदिग्धसाध्यकः। तथा च संदिग्धसाध्यकवृत्तिर्हेतुस्त्वया दृष्टान्तेपि स्वीकार्यः। तथा च दृष्टान्तस्यापि

संदिग्धसाध्यकत्वात्सपक्षवृत्तित्वानिश्चयादसाधारणो हेतुः । हेतुः संदिग्धसाध्यकवृत्तिर्यदि न दृष्टान्ते तदा गमकहेत्वभावात्साधनविकलो दृष्टान्तः स्यात् (गौ० वृ० ५।१।४) इति । सपक्षवर्तिनो हेतोर्यादृग्रूपं विवक्षितम् । पक्षोपि तादृग्घेतुः स्यादन्यथासिद्धिहेतुता ॥ सपक्षत्वात्तदा साध्य इति वर्ण्यसमा क्षतिः (ता० र० २श्लो० १०६–१०७) इति । [ग] वर्ण्यस्य स्थापनीयस्य दृष्टान्तधर्मस्य पक्षे साधनम् । यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवदित्यादौ क्रियाजनकनोदनाख्यसंयोगवत्त्वाल्लोष्टादेर्भवतु क्रियावत्त्वम् । आत्मनस्तु क्रियावत्त्वे तज्जनकनोदनाख्यसंयोगवत्त्वमपि स्यादिति (नील० पृ० ४३) ।

**वर्तमानः**—१ (कालः) [क] येन हि वस्तुना यः कालोवच्छिद्यते स तस्य वर्तमानः (वै० उ० २।२।८) । यथा इदानीं घटोस्ति इत्यादौ घटावच्छेदकः धात्वर्थसत्तावच्छेदको वा इदं शब्दवाच्यः कालो वर्तमानः । अत्र तद्व्यक्तिध्वंसप्रागभावानवच्छिन्नः कालस्तद्व्यक्तेर्वर्तमानकालः इति ज्ञेयम् (त० कौ० कालनि० पृ० ३) । वर्तमानत्वं च स्थितिः । तच्च प्राक्संबन्धस्वभावरहितस्वरूपत्वम् स्वकार्यप्रागभावसंबद्धं वा । [ख] प्राञ्चस्तु वर्तमानध्वंसप्रागभावाप्रतियोग्यवच्छिन्नः काल इत्याहुः । कालस्य संबन्धमात्रत्वमते अवच्छिन्न इति विशेषणं न देयम् (प० मा० कालनि० पृ० ९२) इति । ध्वंसे वर्तमानत्वं तु तत्तच्छब्दप्रयोगाधिकरणकालवृत्तित्वमेव इति निर्वाच्यम् । अतो नात्माश्रयः इति बोध्यम् (नील० १ कालनि० पृ० १०) । [ग] नव्यास्तु तत्तच्छब्दप्रयोगाधिकरणकालः । यथा पचतीत्यत्र लडर्थः इत्याहुः (ग० व्यु० ल० पृ० १३४) (वाक्य० काल० नि०) (वै० सा० द० पृ० १२०) । लडर्थवर्तमानकालश्चतुर्विधः प्रवृत्तोपरतश्चैव वृत्ताविरत एव च । नित्यप्रवृत्तः सामीप्यो वर्तमानश्चतुर्विधः ॥ इति । तत्राद्यः प्रवृत्तोपरतः यथा मांसं न खादतीत्यादौ । अत्र आदौ प्रवृत्तं मांसभोजनं निवर्तयति इत्यर्थः (वाच०) । द्वितीयो वृत्ताविरतः यथा इह कुमाराः क्रीडन्तीत्यादौ । अत्र तदानींतनक्रीडनाभावेपि पूर्वक्रीडानां

बुद्धौ वर्तमानत्वात् तथा प्रयोगः इति भावः । तृतीयो नित्यप्रवृत्तः यथा पर्वतास्तिष्ठन्तीत्यादौ । अत्र पर्वतानां स्थितिर्नित्यप्रवृत्ता इति तथा प्रयोगः । एवम् पर्वतानां स्थितत्वेन वर्तमानत्वेपि भूतभविष्यत्कालाभ्यां संबन्धविवक्षया पर्वतास्तस्थुः स्थास्यन्ति इत्यपि प्रयोगः स्यात् इत्यवधेयम् ( वाच० ) । सामीप्यरूपः चतुर्थो द्विविधः भूतसामीप्यः भविष्यत्सामीप्यश्चेति । तत्राद्यो भूतसामीप्यः यथा एषोहमागच्छामीत्यादौ । अत्र कदा आगतोसि इति प्रश्ने आगतोपि अध्वखेदादेर्वर्तमानत्वात् एषोहमागच्छामि इति वदति इति ज्ञेयम् । द्वितीयो भविष्यत्सामीप्यः यथा एषोहं गच्छामीत्यादौ । अत्र कदा गमिष्यसि इति प्रश्ने गमने क्रियमाणोद्यमोपि एषोहं गच्छामि इति वदति इति विज्ञेयम् ( दुर्गादासः ) ( वाच० ) । जगदीशोप्याह । लडर्थवर्तमानसामीप्यमपि द्विविधम् वर्तमानक्षणोत्तरकालावच्छेद्यत्वम् वर्तमानक्षणाव्यवहितप्राक्कालावच्छेद्यत्वं चेति । तेन चैत्रः कदा गमिष्यति इति जिज्ञासायां एष गच्छति इत्युत्तरस्य वर्तमानक्षणोत्तरकालावच्छेद्यगतिमांश्चैत्रः इत्यर्थः । चैत्रः कदा समागतः इति जिज्ञासायां एष आगच्छति इत्युत्तरस्य तु वर्तमानक्षणाव्यवहितप्राक्कालावच्छेद्यागमनवान् इत्यर्थः इति न प्रश्नोत्तरभावासङ्गतिः इति ( श० प्र० श्लो० ९७ टी० पृ० १४२ ) । अत्र प्राञ्चो वैयाकरणा आहुः । वर्तमानत्वं च प्रारब्धापरिसमाप्तत्वम् भूतभविष्यद्भिन्नत्वं वा । यथा पचतीत्यादौ अधिश्रयणाद्यधःश्रयणान्ते मध्ये पूर्वापरीभूतक्रियासमुदाये वर्तमानत्वमस्ति इति भवति लट्प्रयोगः ( वै० सा० ल० पृ० १२० ) ( ल० म० ) इति । २ शब्दप्रयोगाधिकरणकालवृत्तिः । यथा वर्तमानध्वंसप्रतियोगित्वमतीतत्वम् इत्यादौ ( नील० १ कालनि० पृ० १० ) ।

**वशा**—धेनुः ( पुरु० पृ० ६ ) ।

**वषट्**—( अव्ययम् ) १ स्वाहाशब्दवदस्यार्थोनुसंधेयः । यथा वषडिन्द्रायेत्यादौ ( श० प्र० श्लो० ९३ पृ० १२६ ) । २ वषट् इति करणे । यथा वषट्कारं गृणन् द्विजः ( भाग० स्क० ९ ) इत्यादौ । एवम् वषट्कार वौषट् इति शब्दौ व्याख्येयौ ।

**वसन्तः**—मीनमेषयोर्मेषवृषभयोर्वा वसन्त इति बौधायनोक्तेर्मीनादिसौरमासद्वयात्मको मेषादिसौरमासद्वयात्मको वा वसन्तः ( पु० चि० पृ० ८ )।

**वसु**—१ अष्टमी तिथिः ( पुरु० पृ० ३७ ) । २ धरो ध्रुवस्तथा सोम आपश्चैवानिलोनलः । प्रत्यूषश्च प्रभातश्च वसवोष्टौ प्रकीर्तिताः ॥ ( मिताक्षरा अ० २ श्लो० १०२ ) ।

**वस्तु**—संकेतविषयः । यथा घटगगनादि । वस्तुत्वं च प्रमेयत्वम् स्वरूपसंबन्धविशेषो वा ( म० प्र० ख० २ पृ० २३ ) ( त० प्र० २ पृ० ३९ ) । वस्तु द्विविधम् बाह्यम् अबाह्यं च । तत्र आत्मा तद्योग्यगुणास्तद्वृत्तिजातिः स्वर्गापूर्वादि चैतान्यबाह्यवस्तूनि मनसा श्रुत्यनुमानादिना च वेद्यानि च । एतदन्यानि तु बाह्यवस्तूनि ।

**वह**—( धातुः ) नयनशब्दवदस्यार्थोनुसंधेयः ( ग० व्यु० का० २ पृ० ४६ ) । यथा वहति अवाक्षीत् इत्यादौ । अस्य प्रधानकर्मण्येव लकारादयो भवन्ति । गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् । बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छया ॥ इत्यनुशासनात् । अत्राधिकं च नयनदोहनशब्दव्याख्याने द्रष्टव्यम् ।

**वहनम्**—नयनम् ।

**वह्निः**—१ ( तेजः ) अग्निः । यथा पर्वतो वह्निमान् धूमादित्यादौ साध्यभूतो वह्निः । अयं वह्निस्तु भौतिकः पार्थिवमात्रेन्धनं भौमं तेजः इति विज्ञेयम् । अत्रेदं ज्ञेयम् । वह्नित्वेन धूमत्वेन च सर्वेषां वह्निधूमानां साध्यसाधनभावः । न तु तत्तद्धूमतत्तद्वह्न्यादिव्यक्तीनाम् इति । सामान्यप्रत्यासत्त्या तु सकलवह्निधूमानां ज्ञेयता चेति । अग्निभेदादिकमुक्तं यथा जृम्भको दीपकश्चैव विभ्रमभ्रमशोभनाः । आवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च ॥ अन्वाहार्यो गार्हपत्य इत्येते दश वह्नयः इति । अन्यच्च भ्राजको रञ्जकश्चैव क्लेदकः स्नेहकस्तथा । धारको बन्धकश्चैव द्रावकाख्यश्च सप्तमः ॥ व्यापकः पावकश्चैव श्लेष्मको दशमः स्मृतः इति । श्रौते कर्मणि मुख्याग्नयो यथा गार्हपत्यो दक्षिणाग्निस्तथैवाहवनीयकः । एते-

प्रयस्त्रयो मुख्याः शेषाश्चोपसदस्त्रयः ॥ ( वह्नि–पु० ) इति । शरीरस्थवह्नेर्नामानि यथा वह्नयो दोषदूष्येषु संलीना दश देहिनः इति । दोषदूष्याश्च यथा वातपित्तकफा दोषा दूष्याः स्युः सप्त धातवः ( शा० ति० ) इति । २ तान्त्रिकास्तु रकारः । यथा वर्गाद्यं वह्निसंस्थम् ( श्यामास्तोत्रम् ) इत्यादौ इत्याहुः । ३ भल्लातकः ४ निम्बूकश्च इति भिषज आहुः ( राजनि० ) । ५ वह्निदेवताकं कृत्तिकानक्षत्रम् इति ज्योतिषज्ञा आहुः । ६ आधिदैविकः शाण्डिल्यगोत्रो मेषवाहनो हुताशनः इति कर्मवादिमीमांसका आहुः । ७ वैश्वानराद्यपरनामा परमात्मा इति वेदान्तिन आहुः ।

**वा**—( अव्ययम् ) १ विकल्पः । यथा यवैर्वा व्रीहिभिर्वा यजेत इत्यादौ । २ सादृश्यम् । यथा सिन्धौ वाधोमण्डलं गोर्वा रसः इत्यादौ । यथा वा मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ( सि० कौ० ) इत्यादौ । यथा वा आशीविषो वा संक्रुद्धः इत्यादौ । ३ अवधारणम् । यथा सा वा शंभोस्तदीया वा मूर्तिर्जलमयी मम इत्यादौ । न तृतीया इत्यर्थः । ४ समुच्चयः । यथा वायुर्वा दहनो वा ( गणरत्न० ) इत्यादौ । ५ वितर्कः । यथा ज्वरितेन भवता पीतं वा दुग्धम् कृतं वा अपथ्यं भवेत् इत्यादौ । ६ प्रश्नः । यथा तत्र भवता गम्यते वा इत्यादौ । ७ क्वचित् वाक्यालंकारार्थः । ८ चेत् इत्यर्थः । यथा सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता ( अमरः ) इत्यादौ इति नागेशभट्ट आह शब्देन्दुशेखरे ।

**वाक्छलम्**—( छलम् ) [ क ] अविशेषाभिहितेर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ( गौ० १।२।१२ ) । नवकम्बलोयं माणवक इति प्रयोगः । अत्र नवः कम्बलोस्य इति वक्तुरभिप्रायः । विग्रहे तु विशेषो न समासे । तत्रायं छलवादी वक्तुरभिप्रायादविवक्षितमन्यमर्थम् नव कम्बला अस्येति तावदभिहितं भवता इति कल्पयति । कल्पयित्वा चासंभवेन प्रतिषेधति एकोस्य कम्बलः कुतो नव कम्बलाः इति । तदिदं सामान्यशब्दे वाचि छलं वाक्छलमिति ( वात्स्या० १।२।१२ ) । यत्र

शक्यार्थद्वये संभवति एकार्थनिर्णयैकविशेषाभावादनभिप्रेतशक्यार्थकल्पनेन दूषणाभिधानम् तद्वाक्छलम् ( गौ० वृ० १।२।१२ ) इति। [ख] शक्त्यैकार्थशाब्दबोधतात्पर्यकशब्दस्य शक्त्या अर्थान्तरतात्पर्यकत्वकल्पनया दूषणाभिधानम्। अत्रोच्यते अभिधावैपरीत्येन कल्पितार्थस्य बाधनम् ( ता० र० १ श्लो० ९५ ) इति। यथा नेपालादागतोयं नवकम्बलवत्त्वादित्युक्ते कुतोस्य नवसंख्याकाः कम्बलाः इति। एवम् गौर्विषाणीत्युक्ते कुतो गजस्य शृङ्गम् श्वेतो धावति इति श्वेतरूपवदभिप्रायेणोक्ते श्वेतो (श्वा इतः) न धावति इत्यभिधानम् इत्यादिकमूह्यम् ( गौ० वृ० १।२।१२ )।

**वाक्पारुष्यम्**—देशजातिकुलादीनामाक्रोशं न्यङ्गसंयुतम्। यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते॥ ( मिताक्षरा अ० २।२०४ )।

**वाक्यम्**—[क] पदसमूहः। वाक्यत्वं च विशिष्टार्थपरशब्दत्वम् ( चि० ४ )। वाक्यं द्विविधम् प्रमाणवाक्यम् अप्रमाणवाक्यं चेति। तत्र प्रमाणवाक्यम् आकाङ्क्षायोग्यतासंनिधिमतां पदानां समूहः। यथा गामानय इत्यादि ( त० भा० ४ ) ( त० सं० ) ( सा० द० )। अथवा यादृशशब्दानां यादृशार्थविषयिताकबोधं प्रति अनुकूला परस्पराकाङ्क्षा तादृशशब्दस्तोम एव तथाविधार्थे वाक्यम् ( श० प्र० श्लो० १२ टी० पृ० १४ )। वैयाकरणास्तु एकतिङ् इत्याहुः ( महाभा० )। एकतिङन्तार्थमुख्यविशेष्यकबोधजनकपदसमूहः इत्यर्थः। तेन पचति भवति पश्य मृगो धावति ब्रूहि ब्रूहि देवदत्त इत्यादौ च क्रियापदस्यानेकत्वेपि नैकवाक्यताव्याघातः इति। सुप्तिङन्तचयो वाक्यम् इत्यमरसिंह आह। केचित्तु स्वार्थबोधसमाप्तः पदसमुदायः इत्याहुः। समभिव्याहारो वाक्यम् इति मीमांसका आहुः। तदर्थश्च साध्यत्वादिवाचकद्वितीयाद्यभावेपि वस्तुतः शेषशेषिवाचकपदयोः सहोच्चारणम्। यथा यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति ( तैत्ति० संहिता० ३।५।७ ) इति। लिङादिपदघटितं वाक्यं द्विविधम् विधिः निषेधश्च। तत्र विधिः स्वर्गकामो यजेत इत्यादि वाक्यम्। निषेधस्तु न कलञ्जं भक्षयेत् न सुरां पिबेत् इत्यादि वाक्यम् ( लौ० भा० )। अप्रमाणवाक्यं तु आकाङ्क्षादिरहितं वाक्यम्।

यथा वह्निना सिञ्चति ह्रदो वह्निमान् इत्यादि वाक्यम्। अत्र वाक्यदोषाश्चत्वारः भ्रमः प्रमादः विप्रलिप्सा कर्णापाटवं चेति। तत्र एकपदार्थे अपरपदार्थसंसर्गारोपो भ्रमः। अवाच्ये वाच्यत्वारोपः प्रमादः। अन्यथा ज्ञातस्यार्थस्यान्यथा बोधयितुमिच्छा विप्रलिप्सा। शब्दोच्चारणानुकूलताल्वादिव्यापारशून्यत्वं कर्णापाटवम् इति। आकाङ्क्षायोग्यतासत्तिसत्त्वे भ्रमादिदोषाणामसंभवः इति च बोध्यम् (म० प्र०)। नैयायिकमते वाक्यं त्रिविधम् सुबन्तसमूहः तिङन्तसमूहः सुतिङन्तसमूहश्चेति। तत्राद्यः त्रयः काला इति। द्वितीयः पचति भवति इति। तृतीयस्तु चैत्रः पचतीत्यादि। त्रयः काला इत्यत्र वर्तमानत्वासंभवेन सन्ति इत्येतस्य दुर्ज्ञानत्वेन च ज्ञायन्ते इत्येतस्य नाध्याहारसंभवः। प्रकारान्तरेण वाक्यं द्विविधम् वैदिकं लौकिकं च। तत्र वैदिकमीश्वरोक्तत्वात्सर्वमेव प्रमाणम्। लौकिकं त्वाप्तोक्तं प्रमाणम्। अन्यत् (अनाप्तोक्तम्) अप्रमाणम् (त० सं०)। तत्र वेदघटकं वाक्यं वैदिकम् (वाक्य० ४ पृ० २०)। तस्येश्वरोक्तत्वे प्रमाणमनुमानम्। तच्च वेदः पौरुषेयो वाक्यत्वाद्भारतादिवत् इति (त० दी० ४ पृ० ३२) (सि० च० ४ पृ० ३२)। अत्राधिकं तु वेदशब्दव्याख्याने दृश्यम्। वैदिकं सर्वमेव प्रमाणमित्यत्र सर्वमेवेत्यस्य अबाध्यं वाक्यं सर्वमेवेत्यर्थः। तेन आत्मा वै जायते पुत्रः इति वेदस्याप्रामाण्येपि न क्षतिः। स्मृतिपुराणेतिहाससदाचाराणां वेदमूलकत्वेन प्रामाण्यम्। तन्मूलवेदानामिदानीमनुपलभ्यत्वेन शाखाः काश्चिदुच्छिन्ना एव इति कल्प्यते (सि० च० ४ पृ० ३२) (त० दी० ४ पृ० ३३)। लौकिकं वाक्यं तु यद्धर्मबुद्ध्या आप्तेनोक्तं तदेव प्रमाणमित्यर्थः। तेन बृहस्पतिप्रणीतनास्तिकसूत्रव्युदासः (सि० च० ४ पृ० ३२)। प्रकारान्तरेणापि वाक्यं द्विविधम् महावाक्यम् अवान्तरवाक्यं (खण्डवाक्यम्) चेति। तत्र महावाक्यं च स्वघटकानेकनामलभ्यतादृशार्थबोधकं वाक्यम् (श० प्र० श्लो० ३० टी० पृ० ३८)।

**वाक्यार्थः**—[क] एकपदार्थवदपरपदार्थः (श० प्र० श्लो० ४ टी० पृ० ५)। [ख] पदोपस्थितानां अर्थानाम् मिथः संसर्गः (त०

कौ० ख० ४ पृ० १६ ) । अत्रेदमवधेयम् । वाक्यार्थरूपान्वयविशिष्टे पदानां शक्तिः इति भाट्टा आहुः । तन्न सहन्ते नैयायिकाः । तथा हि । अनन्यलभ्यः शब्दार्थः इति नियमेनान्वयविषयकशाब्दबोधे तत्तदानुपूर्वीज्ञानत्वेन हेतुतया तद्बलादेवान्वयभानोपपत्तावन्वयविशिष्टे शक्तिकल्पनं व्यर्थमेव । शक्यस्यैव शाब्दविषयत्वम् इति नियमस्वीकारे लक्षणोच्छेदापत्तिः ( त० प्र० ख० ४ पृ० २७ ) इति । [ ग ] वाक्यघटकप्रत्येकपदोपस्थितानां पदार्थानामाकाङ्क्षादिज्ञानवशात्परस्परान्वयिभावापन्नोर्थः । यथा गामानय इत्यत्र गोकर्मत्वानयनकृतीनां प्रत्येकं तत्तत्पदोपस्थापितानामाकाङ्क्षाबलात्परस्परमन्वयी गोनिष्ठकर्मत्वनिरूपकानयनानुकूलकृतिमान् इति वाक्यार्थः । [ घ ] शाब्दिकास्तु पदार्थानां मिथोन्वयरूप उद्देश्यविधेयभावसंबन्ध इत्याहुः ।

**वाक्यार्थज्ञानम्**—शाब्दबोधः । स च एकपदार्थे अपरपदार्थसंसर्गविषयकं ज्ञानम् ( वाक्य० ४ पृ० २० ) । यथा घटमानय इत्यादौ धात्वर्थानयनरूपक्रियायां घटम् इति द्वितीयान्तार्थघटकर्मत्वनिरूपकत्वरूपसंसर्गविषयकं ज्ञानम् ( त० सं० ) ।

**वाचकम्**—१ ( पदम् ) [ क ] ईश्वरसंकेतेन ( शक्त्या ) अर्थबोधकं पदम् । यथा गोत्वादिविशिष्टबोधकं गवादिपदम् ( ग० शक्ति० पृ० ३ ) । इदं मुख्यं पदम् इत्युच्यते । इदं च प्राचीनमताभिप्रायेण । तथा हि । प्राचीनमते संकेतो द्विविधः । शक्तिः परिभाषा च । तत्रेश्वरसंकेत एव शक्तिः इत्युच्यते । तेनैवार्थबोधकं पदं वाचकम् इत्युच्यते । परिभाषया अर्थबोधकं तु पदं पारिभाषिकम् इत्युच्यते । नव्यमते तु इच्छामात्रस्य संकेतरूपत्वेन शक्तिपरिभाषयोरैक्यात् परिभाषयाप्यर्थबोधकं पदं वाचकम् इति व्यवह्रियते इति विशेषो ज्ञेयः । [ ख ] शक्त्यार्थबोधकं पदम् । यथा प्रवाहवाचकं गङ्गापदम् । यथा वा गोघटादिव्यक्त्युपस्थापकं गोघटादिपदम् ( त० कौ० ४ पृ० १६ ) । तदुक्तम् साक्षात्संकेतितं योर्थमभिधत्ते स वाचकः ( काव्यप्र० उल्ला० २ श्लो० ७ ) इति । गौणं तु लाक्षणिकं पदम् ( त० कौ० ४ पृ० १६ ) । २ कथकः ।

यथा पुराणादिपाठको वाचको भवति । अत्रोच्यते वाचकः पूजितो येन प्रसन्नास्तस्य देवताः ( पुरा० ) इति । अन्यच्च ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात् । श्रुत्वान्यवर्णजाद्राजन् वाचकान्नरकं व्रजेत् ॥ ( ति० त० ) ( वाच० ) इति ।

**वाचनिकः** } **वाचिकः** }—१ ( नमस्कारः ) उत्कृष्टत्वादिबुद्ध्या प्रयुक्तो नमःपदादिघटितः शब्दः । यथा वन्दे गोविन्दमानन्दज्ञानदेहं पतिं श्रियः ( मणिमञ्ज० ) इति । यथा वा हरये नम इत्यादौ नोत्तरमकारविशेषादिर्वाचनिकः ( मू० म० मञ्ज० १ पृ० १०५ ) । लक्षणं च वाचनिकनमस्कारत्वम् । तच्च नत्वमत्वादिव्याप्या नाना जातयः । नव्यास्तु शाब्दबोधवृत्तिशाब्दत्वव्याप्यजातिविशेषः इत्याहुः ( मू० म० १ पृ० १०५ ) । २ धर्मज्ञास्तु वचननिष्पादितं पापादि इत्याहुः । ३ वाक्यारम्भः इति काव्यज्ञा आहुः ( वाच० ) ।

**वाच्यः**—१ [ क ] वाचकबोध्योर्थः । शक्त्या बोध्यः इत्यर्थः । स एव मुख्यार्थः इत्युच्यते । यथा गवादिर्गोपदवाच्यः ( ग० श० पृ० ३ ) । अत्रोच्यते न चाल्पत्वबहुत्वाभ्यां प्रयोगाणां विशिष्यते । वाच्यवाचकभावोयमक्षपादादिशब्दवत् ॥ बिभीतकेप्यक्षशब्दो यद्यप्यल्पैः प्रयुज्यते । तथापि वाचकस्तस्य ज्ञायते शकटाङ्गवत् ॥ ( म० त० भट्टवा० ) ( वाच० ) इति । [ ख ] मीमांसकास्तु यद्यस्माच्छब्दान्नियमतः प्रतीयते तत्तस्य वाच्यम् । यथा गामानय इत्यस्मिन्वाक्ये गोशब्दस्य गोत्वं वाच्यम् इत्याहुः ( लौ० भा० पृ० ६ ) । २ धर्मज्ञास्तु दूष्यः । यथा परस्परस्पर्धिपरार्ध्यरूपाः पौरस्त्रियो यत्र विधाय वेधाः । श्रीनिर्मितिप्राप्तघुणक्षतैकवर्णोपमावाच्यमलं ममार्ज ॥ ( माघ० स० ३ श्लो० ५८ ) इत्यादौ इत्याहुः ।

**वाजपेयम्**—वाजमन्नम् । तच्च पेयं सुराद्रव्यम् ( जै० न्या० अ० १ पा० ४ अधि० ३ ) ।

**वाटपरिक्षेपः**—शालासमुदायरक्षणाय सर्वतो मार्गप्रतिरोधकं यत्परितः क्षिप्यते तदुच्यते ( भाष्यप्रदीपोद्योते १।१।७ ) ।

**वात्स्यायनः**—१ न्यायसूत्रभाष्यकारः पक्षिलाख्यो मुनिविशेषः । २ कामशास्त्रप्रतिपादकसूत्रकर्ता । ३ वत्सगोत्रापत्यं युवा इति वैयाकरणा वदन्ति ।

**वादः**—१ ( कथा ) [ क ] प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ( गौ० १।२।१ ) । तदर्थश्च प्रमाणाभासत्वप्रकारकज्ञानविषयकरणकसाधनोपालम्भयोग्यान्यः इति । तेन जल्पविशेषे नातिव्याप्तिः । निग्रहस्थानविशेषनियमार्थं सिद्धान्तेत्यादि विशेषणद्वयम् ( गौ० वृ० १।२।१ ) । एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ प्रत्यनीकभावादस्त्यात्मा नास्त्यात्मेति । नानाधिकरणौ विरुद्धौ न पक्षप्रतिपक्षौ । यथा नित्य आत्मा अनित्या बुद्धिरिति । परिग्रहोभ्युपगमव्यवस्था । सोयं पक्षप्रतिपक्षपरिग्रहो वादः । तस्य विशेषणं प्रमाणतर्कसाधनोपालम्भः । प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन्क्रियत इति । साधनं स्थापना । उपालम्भः प्रतिषेधः ( वात्स्या० १।२।१) । सूत्रतात्पर्यं तार्किकरक्षायामुक्तम् तत्र प्रमाणतर्काभ्यां साधनाक्षेपसंयुता । वीतरागकथा वादस्तत्फलं तत्त्वनिर्णयः ॥ ( ता० र० श्लो० ७७ ) इति । वादश्च अष्टनिग्रहाणामधिकरणम् । ते च न्यूनाधिकापसिद्धान्ताः हेत्वाभासपञ्चकं चेत्यष्टौ निग्रहाः ( त० भा० पृ० ४४ ) । [ ख ] प्रमाणाभासत्वप्रकारकज्ञानविषयकरणकसाधनोपालम्भयोग्यान्यत्वे सति पक्षप्रतिपक्षसाधनोद्देश्यकोक्तिप्रत्युक्तिरूपवचनसंदर्भः ( गौ० वृ० १।२।१ ) । [ ग ] नानाप्रवक्तृकः प्रत्यधिकरणसाधनोन्यतराधिकरणनिर्णयावसानो वाक्यसमूहः (वात्स्या० १।१।१ पृ० ८) । [ घ ] तत्त्वनिर्णयफलः कथाविशेषः ( सर्व० पृ० २३९ अक्ष० ) । यथा वादः प्रवदतामहम् ( गीता० १०।३२ ) इत्यादौ । [ ङ ] तत्त्वबुभुत्सोः कथा ( त० भा० पृ० ४४ ) । २ स्वाभिमतार्थकथनम् । अयं वादो द्विविधः सत्कार्यवादः असत्कार्यवादश्च । तत्र सत्कार्यवादोपि द्विविधः परिणामवादः विवर्तवादश्च । तत्र परिणामवादः सांख्यानाम् रामानुजीयानां च ।

तन्मते कारणमेव कार्यरूपेण परिणमते इति कार्यकारणयोरनन्यत्वम् सत्यत्वं च । यथा दुग्धं सदेव दधिरूपेण परिणमते इति दधि कार्यान्तरं दुग्धाद्भिन्नं च न भवति इति । विवर्तवादो मायावादिवेदान्तिनाम् । तन्मते कारणमेव कार्यस्वरूपेण भासते इति कारणस्यैव सत्यत्वम् न तु कार्यस्य सत्यत्वम् । यथा शंकरभारतीमते शुक्तौ इदं रजतम् इति ज्ञानानन्तरमधिष्ठानभूतशुक्तिज्ञाने जाते बाधज्ञानेन पूर्वं ज्ञातं रजतं यथा निवर्तते तद्वत् ब्रह्मज्ञाने जाते सति जगदादिभेदप्रपञ्चो निवर्तते इति । असत्कार्यवादस्तु आरम्भवादः इत्युच्यते । स च नैयायिकानाम् माध्ववेदान्तिनां च । तन्मते असदेव कार्यमुत्पद्यते । यथा पूर्वमसदेव तत्तद्घटादिकार्यं दण्डचक्रचीवरादिसामग्रीसमवहितान्मृदादिकारणाद्भिन्नं सदुत्पद्यते इति । अत्रायं भावः । स्वोत्पत्तेः पूर्वं तत् कार्यं नासीदेव । पश्चात्कारणसामग्रीवशादुत्पद्यते इति कार्यकारणयोरन्यत्वम् परमार्थतः सत्यत्वं च इति । एवम् विज्ञानवादो योगाचारबौद्धानाम् शून्यवादो माध्यमिकबौद्धानाम् स्याद्वाद आर्हतानाम् इत्यादिकं च तत्तच्छास्त्राज्ज्ञेयमित्यत्रैव विरम्यते ।

**वादनम्**—अभिघाताख्यसंयोगावच्छिन्नक्रिया । यथा भेरीमृदङ्गं वादयेत्यादौ णिजन्तवदधात्वर्थः ( दि० ४ पृ० १८३ ) । वाद्यभेदा उच्यन्ते । तालेन राजते गीतं तालो वादित्रसंभवः । गरीयस्तेन वादित्रं तच्चतुर्विधमुच्यते ॥ ततं सुषिरमानद्धं घनमित्थं चतुर्विधम् । ततं तन्त्रीगतं वाद्यं वंशाद्यं सुषिरं तथा ॥ चर्मावनद्धमानद्धं घनं तालादिकं मतम् इति । तत्र अलावनीप्रभृति ततम् इत्युच्यते । वंश पारि मधुरी तित्तिरी इत्यादिकं सुषिरम् इत्युच्यते । मर्दल मुरज पटह ढक्का पणव करटक मठ भेरी इत्यादिकम् आनद्धम् इत्युच्यते । घनं तु अनुरक्तविरक्तभेदेन द्विविधम् । करतालकांस्यतालभेदेन द्वादशविधं चेति । अत्राधिकं लक्षणविभागादिकं तु संगीतदामोदरादौ द्रष्टव्यम् ( वाच० ) ।

**वादी**—१ [ क ] प्रकृतसाध्यसाधनाय न्यायप्रयोगकर्ता । यथा पर्वते वह्निसाधने विपरीतोद्भावकस्य प्रतिवादिनो निवृत्त्यर्थं वादी प्रतिज्ञादि-

घटितपञ्चावयवोपेतं न्यायवाक्यं प्रयुङ्क्ते इति । [ ख ] प्रथमपक्षप्रतिपादकोर्थी इति व्यवहारशास्त्रज्ञा आहुः । २ वादकथाकर्ता । ३ विचारस्वरूपम् ( वाच० ) ।

**वापः**—उदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेपः ( जै० न्या० अ० १० पा० १ अधि० ११ ) ।

**वायवी**—( दिक् ) सुमेरुसंनिहिता उदयगिरिव्यवहिता च उत्तरपश्चिमा दिक् ( वै० वि० २।२।१० पृ० ११६ ) । यथा झळकीग्रामतो वायव्यां मुम्बापुरी ।

**वायुः**—१ ( द्रव्यम् ) [ क ] वायुत्वसामान्यवान् ( त० कौ० ) ( प्रशस्त० ) । वायुश्च पञ्चमहाभूतान्तर्गतः । [ ख ] रूपरहितः स्पर्शवान् । अत्र सूत्रम् स्पर्शवान् वायुः ( वै० २।१।४ ) इति । तल्लक्षणं च स्पर्शेतरविशेषगुणासमानाधिकरणविशेषगुणसमानाधिकरणजातिमत्त्वम् ( वै० उ० २।१।४ ) । अथ वा रूपाभावे सति स्पर्शवत्त्वम् ( वाक्य० १।४ ) । समवायेन रूपवदवृत्तिस्पर्शवत्त्वमित्यर्थः ( ल० व० ) । अथ वा पाकजस्पर्शवदवृत्त्यनुष्णाशीतस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम् ( दि० १ पृ० ८३ ) । अत्र पृथिवीत्ववारणायावृत्त्यन्तम् । जलत्ववारणाय वृत्त्यन्तम् ( राम० १ वायुनि० पृ० ८३ ) । अथ वा त्वगिन्द्रियसमवेतद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम् ( सर्व० पृ० २१८ औद्ध० ) । तादृशी जातिश्च वायुत्वम् । वायोरस्तित्वे प्रमाणमाह यद्यपि वायुरतीन्द्रियस्तथापि विलक्षणशब्दात्मककार्यान्यथानुपपत्त्या स स्वीकरणीयः इति ( प्र० प्र० ) । वायोरप्रत्यक्षत्ववादिमते वायुसिद्धिर्यथा ग्राह्यजातीयविशेषगुणवत्त्वेन स्पर्शवत्त्वाद्द्रव्यान्तरप्रसक्तित्वेन वायुसिद्धिः ( न्या० ली० पृ० ९ ) इति । योयं वायौ वाति सति अनुष्णाशीतः स्पर्शः प्रतीयते स स्पर्शः क्वचिदाश्रितः गुणत्वाद्रूपवत् इत्यनुमानेन किंचिदाश्रितत्वे साधिते यत् किंचित्पदग्राह्यं तदेव वायुः इत्युच्यते ( त० दी० ) ( सि० च० वायुनि० पृ० ८ ) । स चायं वायुर्द्विविधः नित्यः अनित्यश्च । तत्र नित्यः परमाणुलक्षणः । अनित्यः कार्यलक्षणः नाना च । तस्य वायोः अप्रत्यक्ष-

स्यापि नानात्वं संमूर्छनेनानुमीयते । अत्र सूत्रम् वायोर्वायुसंमूर्छनं नानात्वलिङ्गम् ( वै० २।१।१४ ) इति । संमूर्छनं पुनः समानजवयोर्वाय्वोर्विरुद्धदिक्क्रिययोः संनिपातः । सोपि संनिपातः सावयविनोर्वाय्वोरूर्ध्वगमनेनानुमीयते । तच्च वाय्वोरूर्ध्वगमनम् प्रत्यक्षेण तृणादिगमनेन अनुमीयते ( प्रशस्त० वायुनि० पृ० ५ ) ( वै० उ० २।१।१४ ) इति । अत्र भाष्यकारा आहुः । कार्यलक्षणः अनित्यो वायुः चतुर्विधः शरीरम् इन्द्रियम् विषयः प्राणः इति । तत्र ( १ ) अयोनिजमेव शरीरं मरुतां लोके । पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् । ( २ ) इन्द्रियं सर्वप्राणिनां स्पर्शोपलम्भकं पृथिव्याद्यनभिभूतैर्वाय्ववयवैरारब्धं सर्वशरीरव्यापि त्वक् । ( ३ ) विषयस्तूपलभ्यमानस्पर्शाधिष्ठानभूतः स्पर्शशब्दधृतिकम्पलिङ्गः तिर्यग्गमनस्वभावकः मेघादिप्रेरणधारणादिसमर्थः । ( ४ ) प्राणोन्तःशरीरे रसमलधातूनां प्रेरणादिहेतुः एकः सन् क्रियाभेदादिभिरपानादिसंज्ञां लभते ( प्रशस्त० पृ० ५ ) ( प० मा० ) इति । नव्यास्त्वित्थं वदन्ति । अनित्यस्त्रिविधः शरीरम् इन्द्रियम् विषयश्च । तत्र शरीरम् वायुलोके प्रसिद्धम् । पिशाचादीनामपि वायुशरीरम् अयोनिजं च ( मु० १ वायुनि० पृ० ८४ ) ( त० कौ० ) । अत्रेदमवधेयम् । एतच्छरीरस्य पार्थिवभागोपष्टम्भादुपभोगक्षमत्वम् । तेन वायोस्तास्वादिव्यापाराभावात् करचरणाद्यभावेन चाहरणविहरणाद्यभावात् कथं तादृशशरीरस्य भोगायतनत्वम् इत्याशङ्कानवकाशः ( दि० १ पृ० ८४ ) ( प० मा० ) इति । इन्द्रियं स्पर्शग्राहकं पृथिव्याद्यनभिभूतैर्वाय्ववयवैरारब्धं त्वक् सर्वशरीरवृत्ति । विषयो वृक्षादिकम्पनहेतुः उपलभ्यमानस्पर्शाश्रयो महावाय्वादिः ( भा० प० श्लो० ४५ ) ( त० सं० ) । प्राणोपि विषयो वायुः । सोन्तःशरीरे रसमलधातुपित्तकफादीनां प्रेरणधारणादिहेतुः । स चैकोपि हृदादिस्थानरूपोपाधिभेदात् मुखनिर्गमादिक्रियाभेदाच्च पञ्च संज्ञा लभते । तत्र स्थानभेदाद्यथा प्राणोपानो व्यान उदानः समानः इति । तदुक्तम् हृदि प्राणो गुदेपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥ ( अमर० १।६७ टी० ) इति । तथा मुखनासिकाभ्यां निष्क्रमणप्रवेशनात्प्राणः । मलादीनामधो नयनादपानः ।

आहारेषु पाकार्थं वह्नेः समुन्नयनात्समानः । ऊर्ध्वं नयनादुदानः । नाडीमुखेषु विततनाद्व्यानः (प० मा०) (दि० १।२ पृ० ८५) इति । क्रियाभेदाच्चान्या अपि पञ्च संज्ञा यथा नागः कूर्मः कृकलः देवदत्तः धनंजयः इति (सि० च०) (मु० १ पृ० ८५) । तदुक्तम् उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः । कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे ॥ न जहाति मृतं चापि सर्वव्यापी धनंजयः इति । अत्र पुस्तकान्तरे पोषणस्य हेतुर्धनंजयः इत्युक्तम् (सि० च०) । कृकरः इत्यत्र च कृकलः इत्यपि पाठान्तरम् । वायौ नव गुणास्तिष्ठन्ति स्पर्शः संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः परत्वम् अपरत्वम् संस्कारश्चेति (प्रशस्त०) (भा० प०) (त० भा०) । स्पर्शस्त्वत्रापाकजोनुष्णाशीतस्पर्शोभिप्रेतः (मु०) (प्रशस्त० पृ० ५) । परिमाणं परममहत्त्वातिरिक्तम् । संस्कारस्तु वेगः स्थितिस्थापकोपि इति केचिदाहुः (त० कौ) । वायुर्न प्रत्यक्षः किं तु स्पर्शादिना अनुमेयः इति प्राञ्च आहुः । तत्र युक्तिः । वायुर्यदि प्रत्यक्षः स्यात्तदा घटादिवत् तदीयसंख्यादिसामान्यगुणोपलम्भोपि तत्र स्यात् । न चैवम् । तस्मान्न प्रत्यक्षः इति (त० व० १।३।४५) । वायोरप्रत्यक्षत्वं सूत्रकारैरुक्तम् । तथा च सूत्रम् स्पर्शश्च वायोः (वै० २।१।९) इति । तदर्थश्च लिङ्गम् इति शेषः । चकाराच्छब्दधृतिकम्पाः समुच्चीयन्ते । तथा च योयं स्पर्शोनुभूयते स क्वचिदाश्रितः स्पर्शत्वात् पृथिव्यादिस्पर्शवत् इति सामान्यतो दृष्टेन स्पर्शाश्रयसिद्धौ स्पर्शाश्रयो न पृथिव्यादित्रयात्मकः नीरूपत्वात् नाकाशादिपञ्चात्मकः स्पर्शवत्त्वात् इति इतरबाधग्रहसहकृतेन अनुमानेन अष्टद्रव्यातिरिक्तद्रव्यसिद्धिः । एवम् शब्दधृतिकम्पा अपि वायौ लिङ्गानि ज्ञेयानि (वै० उ० २।१।९–१० पृ० ८१–८४) (त० दी०) (मु० १) । प्राचां मते च विषयतासंबन्धेन बहिर्द्रव्यप्रत्यक्षं प्रति समवायेन महत्त्वविशिष्टोद्भूतरूपमुद्भूतस्पर्शश्च कारणम् इति कार्यकारणभावो ज्ञेयः (सि० च० १ पृ० ८) (त० प्र०) । एवं च कारणाभावान्न प्रत्यक्षम् इति बोध्यम् (मु० १ पृ० ११३) । नव्यास्तु वायुः प्रत्यक्षः इत्यङ्गीचक्रुः (त० प्र०) । एतन्मते तु बहिर्द्रव्यप्रत्यक्षं

प्रति महत्त्वविशिष्टविभुव्यावृत्तविशेषगुणः महत्त्वविशिष्टोद्भूतरूपोद्भूतस्पर्शान्यतरद्वा कारणम् इति कार्यकारणभावो ज्ञेयः ( सि० च० पृ० ८ )। बहिर्द्रव्यप्रत्यक्षं प्रति आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं प्रयोजकम् इति वा कार्यकारणभावः । तेन वायोः प्रत्यक्षत्वमुपपद्यते । वायुं स्पृशामि इत्यनुभवाच्च । अत्रेदमधिकं ज्ञेयम् यथा प्रभागतमेकत्वं गृह्यते तथा वायुगतमेकत्वमपि गृह्यत एव । क्वचित् सजातीयसंवलनाभावे द्वित्वपरिमाणादीनि गृह्यन्ते । तद्ग्रहश्च भूयोवयवावच्छेदेन त्वगिन्द्रियसंनिकर्षस्थले बोध्यः । क्वचित् संख्यापरिमाणाद्यग्रहः सजातीयसंवलनादिरूपदोषात् इति । सजातीयसंवलनदशायाम् भूयोवयवावच्छेदेन त्वगिन्द्रियसंनिकर्षाभावे च इत्यर्थः ( दि० १ वायुनि० पृ० ११४ )। फूत्कारादिरूपे वायौ संख्याद्युपलभ्यत इत्यप्यत्र बोध्यम् ( वै० उ० २।१।९ पृ० ८३ ) ( त० व० ३।४६ )। मीमांसका अपि वायुर्बाह्येन्द्रियप्रत्यक्ष इत्यङ्गीचक्रुः ( प० मा० )। तन्मते महदुद्भूतस्पर्शवद्द्रव्यमेव त्वचो योग्यम् न तु केवलमुद्भूतरूपवद्द्रव्यम् इति कार्यकारणभावे निवेश्यमिति भावः ( म० प्र० १० )। एतन्मते प्रभाया अप्रत्यक्षत्व इष्टापत्तिरेव शरणम् इति मन्तव्यम् । तन्न योग्यम् । इह पक्षी नेह पक्षी इति प्रतीतेः प्रभामण्डलरूपदेशविषयिण्याः सर्वानुभवसिद्धायाः संभवात् ( म० प्र० १ पृ० ११ ) इति । पाश्चात्यास्तु प्राणाख्यं वायुं जलस्य समवायिकारणमङ्गीचक्रुः । २ उत्तरपश्चिमविदिगधिपतिर्देवताविशेषः इति पौराणिका आहुः । ३ देहस्थधातुविशेषः इति भिषज आहुः । ४ परमात्मैव इति वेदान्तिनः प्राहुः । वायुत्वं च त्वगिन्द्रियसमवेतत्वे सति द्रव्यत्वसाक्षाद्व्याप्यजातिः ( सर्व० सं० पृ० २१८ औ० )।

**वारणम्**—[ क ] क्रियाधर्मिकनिवृत्त्यनुकूलव्यापारः । यथा कूपादन्धं वारयति विषाद्बालं निवारयतीत्यादौ धात्वर्थो वारणम् । क्रिया च पतनभोजनादिर्विशेषतो ग्राह्या । अत्र धात्वर्थघटकनिवृत्तौ पञ्चम्या कूपादिप्रकारकत्वम् द्वितीयया चान्धादिनिष्ठत्वं प्रत्याय्यते । तथा च अन्धनिष्ठायाः पतनधर्मिककूपप्रकारकनिवृत्तेः बालनिष्ठायाश्च भोजनधर्मिक-

विषप्रकारकनिवृत्तेः अनुकूलव्यापारवान् इत्याकारकस्तत्र बोधः । अत्र तथाविधनिवृत्त्यनुकूलव्यापारश्च स्वार्थधीद्वारा कूपे मा पत विषं मा भुङ्क्ष्व इत्याद्यभिलापरूपः स्फुट एव ( श० प्र० श्लो० ६८ टी० पृ० ८३ ) । अथ वा अभावानुकूलव्यापारो धात्वर्थः । पञ्चम्या वृत्तित्वमर्थः । तस्यान्धेन्वयः । द्वितीयाया अनुयोगित्वं प्रतियोगित्वं वार्थः । तस्य च धात्वर्थतावच्छेदकीभूताभावेन्वयः । अभावश्च कूपादिसमभिव्याहारात् पतनादिजन्याधःसंयोगादिसंबन्धेन । तथा च कूपवृत्त्यन्धप्रतियोगिकाभावानुकूलव्यापारविषयकयत्नवान् इति वाक्यार्थः । एवम् एतस्माद्विषान्नादमुं मित्रं वारयति इत्यादावप्यूह्यः ( का० व्या० पृ० १० )। [ ख ] क्रियाप्रतिषेधः । यथा यवेभ्यो गां वारयति कूपादन्धं वारयतीत्यादौ धात्वर्थो वारणम् ( ग० व्यु० का० ५ पृ० १०७ ) । अत्र क्रिया च भक्षणगमनादिरूपा । तस्याः प्रतिषेधस्तु कर्तृत्वाभावानुकूलव्यापारः । कर्तृत्वाभावरूपधात्वर्थतावच्छेदकफलशालितया गवान्धादेः कर्मता संपद्यते । अत्र वारणार्थानामीप्सितः ( पा० सू० १।४।२७ ) इत्यनेनापादानत्वम् । तदर्थश्च वारणं क्रियाप्रतिषेधः । तदर्थकधातुयोगे तत्तत्क्रियाजन्यफलभागितया तत्तत्क्रियाकर्तुरभिप्रेतः अपादानम् इति । यद्वा यवादिपदोत्तरपञ्चम्यर्थः यवादिगतत्वेनेच्छाविषयफलकत्वम् । तस्य भक्षणादावन्वयः । इच्छा च क्रियाकर्तृनिष्ठा । एवं च यवकूपादिनिष्ठत्वेन गवान्धादीच्छाविषयो यो गलाधःसंयोगोत्तरदेशसंयोगादिः गवादिनिष्ठतत्तत्फलकव्यापारविशेषकर्तृत्वाभावानुकूलव्यापारानुकूलकृतिमान् इत्याकारको बोधः ( ग० व्यु० का० ५ पृ० १०७ ) । मञ्जूषायां चैवमुक्तम् । अभावप्रतियोगिव्यापारजन्यफलाश्रयोत्रापादानम् । वारणार्थानाम् इति सूत्रात् । वारणार्थधात्वर्थफलाश्रयत्वमत्रेप्सितत्वम् । तेन भक्षणसंयोगाद्याश्रयत्वाद्यवादीनामपादानत्वम् । [ ग ] शाब्दिकाश्च प्रवृत्तिविघातो वारणम् । स च संयोगाद्यनुकूलव्यापाराभावानुकूलो व्यापारः । यथा यवेभ्यो गां वारयति अग्नेर्माणवकं वारयति कूपादन्धं वारयति इत्यादौ भक्षणसंयोगादिजनकव्यापाराभावानुकूलो व्यापारो वारयत्यर्थः इत्याहुः ( ल० म० सुबर्थ० पृ० १०९ ) । कश्चित् आनयनधर्मिक-

निवृत्त्यनुकूलव्यापारो वारणम् । यथा परस्वेभ्यः पाणिं निवारयतीत्यत्र निवारणम् । अत्र धात्वर्थघटकनिवृत्तौ पाण्यादेरवच्छेदकत्वेन परस्वादेश्च प्रकारत्वेनान्वयः । तादृशव्यापारः कराकुञ्चनादिरेव ( श० प्र० श्लो० ६८ पृ० ८३ ) । कचिच्च संयोगाभावनिष्ठस्य प्रयोजकव्यापारः । यथा स्वाङ्गाद्बाणं वारयतीत्यादौ वारयत्यर्थो वारणम् । अत्र धात्वर्थघटके संयोगे द्वितीयान्तलभ्यस्य बाणप्रतियोगिकत्वस्य संयोगाभावनिष्ठे च पञ्चम्यन्तलभ्यस्य स्वाङ्गवृत्तित्वस्यान्वयः । कार्याभाव इव तन्निष्ठेधिकरण-विशेषवृत्तित्वेपि प्रतिबन्धकस्य प्रयोजकत्वात् । अत एव मणिः काष्ठे दाहाभावस्य प्रयोजकः न तु पाथसि इत्यादिकः सार्वलौकिकव्यवहारः इति । तथा च बाणसंयोगाभावनिष्ठायाः स्वाङ्गवृत्तितायाः प्रयोजक-बाणापसरणादिरूपव्यापारानुकूलकृतिमान् इत्याकारकस्तत्र बोधः ( श० प्र० श्लो० ६८ टी० पृ० ८३-८४ ) ।

**वारुणम्**—शततारका नक्षत्रम् ( पु० चि० पृ० ३५४ ) ।

**वारुणी**—चैत्रकृष्णत्रयोदश्यां शततारका नक्षत्रं चेत्सा वारुणीत्युच्यते । महावारुणीशब्दे दृश्यम् ।

**वार्तिकम्**—उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते । तं ग्रन्थं वार्तिकं प्राहु-र्वार्तिकज्ञा मनीषिणः ॥ इति ( वाचस्पत्ये पराशरपु० अ० १८ ) ।

**वार्षिकम्**—वर्षाकाले भवं वार्षिकम् । वर्षाकालश्च श्रावणभाद्रपदमासौ ( पुरु० चि० पृ० २९६ ) ।

**वासना**—१ ( गुणः ) स्मृतिहेतुः संस्कारविशेषः ( जटा० ) । २ शक्ति-विशिष्टचित्तोत्पादः ( न्या० वा० १।१।१० पृ० ६९ ) । ३ मिथ्या-ज्ञानजन्यो गौरोहम् इत्यादिमानसज्ञानजनको दोषविशेषः । यथा आत्मा देहाद्यभिन्नः इति ( ग० २ हेत्वाभा० सामान्य० ) । ४ एकसंतान-वर्तिनामालयविज्ञानानां तत्तत्प्रवृत्तिजननशक्तिः इति विज्ञानवादिनो बौद्धा आहुः ( सर्व० पृ० ३७ बौद्ध० ) । ५ ग्रहस्पष्टीकरणाद्युपयोगी संस्कार-विशेषः इति ज्योतिःशास्त्रज्ञा गणका आहुः । ६ ज्ञानम् । ७ प्रत्याशा

इति पौराणिका आहुः । ८ सुरभीकरणम् इत्यालंकारिका आहुः । ९ भगवदिच्छा । प्रकृतिर्वासनेत्येव तवेच्छानन्त कथ्यते । प्रकृतिः प्रकृष्टकरणाद्वासना वासयेद्यतः ॥ ( सर्व० सं० पृ० १४१ पूर्ण० )।

**वासवम्**—धनिष्ठानक्षत्रम् ( पुरु० चि० पृ० ३५४ ) ।

**वि**—( अव्ययम् ) १ विरोधः ( गौ० वृ० १।१।२३ ) । यथा विमर्शः संशयः ( गौ० १।१।२३ ) इत्यादौ । यथा वा वैधर्म्यमित्यादौ विरुद्धो धर्मः (मु० १) इति । २ नाना । यथा विचित्रमित्यादौ । ३ वियोगः । यथा वियुक्तमित्यादौ । ४ अतिशयः । यथा विकीर्ण इत्यादौ । ५ भृशम् । यथा वितटा नदीत्यादौ । ६ मोहः । यथा विमनस्क इत्यादौ । ७ ईशः । यथा विभुरित्यादौ । ८ वाग्युधम् । यथा विवदतीत्यादौ । ९ पैशून्यम् । यथा विगायतीत्यादौ । १० अस्मरणम् । यथा विस्मृत इत्यादौ । ११ भूषा । यथा विभूषित इत्यादौ । १२ ईषदर्थः । यथा विलोपित इत्यादौ । १३ अनाभिमुख्यम् । यथा विमुख इत्यादौ । १४ अनवस्था । यथा विभ्रान्त इत्यादौ । १५ आमुख्यम् । यथा विवृष्ट इत्यादौ । १६ स्थैर्यम् । यथा विश्रान्त इत्यादौ । १७ दर्शनम् । यथा विलोकयतीत्यादौ ( गणरत्न० ) । १८ नियोगः । १९ विशेषः । २० निश्चयः । २१ असहनम् । २२ निग्रहः । २३ हेतुः । २४ अव्याप्तिः । २५ परिभवः । २६ आलम्बनम् । २७ ज्ञानम् । २८ आलस्यम् । २९ पालनम् ( शब्दच० ) ( मेदि० ) । ३० पक्षी । ३१ परमात्मा चेति ( अमरः ) । अत्र उपसर्गाणामर्थविशेषद्योतकत्वमेव न तु वाचकत्वमित्यवधेयम् ।

**विकरणधर्मित्वम्**—( क्रियाशक्तिः ) उपसंहृतकरणस्यापि निरतिशयैश्वर्यसंबन्धित्वम् ( सर्व० सं० पृ० १६७ नकुली० ) ।

**विकरणलाभः**—कायनिरपेक्षाणामिन्द्रियाणामभिमतदेशकालविषयापेक्षवृत्तिलाभः ( सर्व० सं० पृ० ३८४—३८५ पात० ) ।

**विकल्पः**—१ प्रकारता । यथा सविकल्पकं ज्ञानम् इत्यादौ । २ वैचित्र्यम् । तत्र क्वचित्सत्त्वम् क्वचिदसत्त्वम् ( गौ० वृ० ५।१।४ ) । यथा साध्यदृष्टा-

न्तयोर्धर्मविकल्पात् ( गौ० ५।१।४ ) इत्यादौ । ३ द्वैविध्यम् । यथा विकल्पसमा जातिः इत्यादौ ( गौ० वृ० ५।१।४ ) । ४ विभिन्नः कल्पः । ५ विविधः कल्पः । ६ पक्षान्तरबोधकः शब्दः । यथा व्रीहिभिर्वा यवैर्वा यजेत इत्यादिः । विकल्पो द्विविधः व्यवस्थितः ऐच्छिकश्च । सोप्याकाङ्क्षाविरहे युक्तः । तथा च भविष्ये स्मृतिशास्त्रे विकल्पस्तु आकाङ्क्षापूरणे सति इति । इच्छाविकल्पेष्टौ दोषा यथा प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पने । प्रत्युज्जीवनहानिभ्यां प्रत्येकमष्टदोषता ॥ इति । व्रीहिभिर्यजेत यवैर्यजेत इति श्रुतिः । तत्र व्रीहिप्रयोगे प्रतीतयवप्रामाण्यपरित्यागः अप्रतीतयवाप्रामाण्यपरिकल्पनम् । प्रयोगान्तरे यव उपादीयमाने परित्यक्तयवप्रामाण्योज्जीवनम् स्वीकृतयवाप्रामाण्यहानिरिति चत्वारो दोषाः । एवं व्रीहावपि चत्वारः इत्यष्टौ दोषा इच्छाविकल्पे । व्यवस्थितविकल्पस्तु उपोष्य द्वे तिथी इति । अत्र अष्टदोषभिया नेच्छाविकल्पः । किं तु व्यवस्थितविकल्प एव इति विज्ञेयम् ( वाच० ) । ७ योगशास्त्रज्ञास्तु चित्तवृत्तिविशेषः । यथा शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ( पात० सू० पा० १ सू० ९ ) इत्यादौ इत्याहुः । ८ भ्रान्तिः । ९ पक्षतः प्राप्तिश्च । १० कल्पनम् ( मेदि० ) ( वाच० ) ।

**विकल्पसमः**—( जातिः ) [ क ] साधनधर्मयुक्ते दृष्टान्ते धर्मान्तरविकल्पात्साध्यधर्मविकल्पं प्रसजतो विकल्पसमः । यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवत् इत्यादौ । क्रियाहेतुगुणयुक्तं किंचिद्गुरु । यथा लोष्टः । किंचिल्लघु । यथा वायुः । एवं क्रियाहेतुगुणयुक्तं किंचित्क्रियावत्स्याद्यथा लोष्टः । किंचिदक्रियं यथा आत्मा । विशेषो वा वाच्य इति ( वात्स्या० ५।१।४ ) । क्रियाहेतुगुणश्चात्र क्रियाजनकवायुसंयोगादिरेव ( नील० पृ० ४३ ) । विशेषो वाच्य इत्यस्यायमर्थः पूर्वविकल्पो भवति अयं तु न भवति इत्यत्र किं नियामकं स्यात् ( नील० पृ० ४३ ) इति । अत्र सूत्रभागः साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्च विकल्पसमः ( गौ० ५।१।४ ) इति । तदर्थस्तु पक्षे दृष्टान्ते च यो धर्मस्तस्य विकल्पो विरुद्धः कल्पो व्यभिचारित्वम् ।

उपलक्षणं चैतत् अन्यवृत्तिधर्मस्यापि बोध्यम् । व्यभिचारोपि हेतोर्धर्मा न्तरं प्रति धर्मान्तरस्य साध्यं प्रति धर्मान्तरस्य धर्मान्तरं प्रति व (गौ० वृ० ५।१।४)। [ख] कस्यचिद्धर्मस्य कचिद्व्यभिचार दर्शनेन धर्मत्वाविशेषात्प्रकृतहेतोः प्रकृतसाध्यं प्रति व्यभिचारापाद नम् । यथा शब्दः अनित्यः कृतकत्वादित्यत्र कृतकत्वस्य गुरुत्वव्यभि चारदर्शनात् गुरुत्वस्यानित्यत्वव्यभिचारदर्शनात् नित्यत्वस्य मूर्तत्वव्यभि चारदर्शनात् धर्मत्वाविशेषात्कृतकत्वमप्यनित्यत्वं व्यभिचरेदिति (गौ० वृ० ५।१।४)। तथा चोक्तम् धर्मस्यैकस्य केनापि धर्मेण व्यभिचारतः हेतोः साध्याभिचारोक्तौ विकल्पसमजातिता ॥ (ता० र० परि० ३ श्लो० १०९) इति । [ग] दृष्टान्तविकल्पं प्रदर्श्य दार्ष्टान्तिकविकल्प कथनम् (नील० पृ० ४३)। अत्र शिष्टमुदाहरणादिकं तु भाष्य तुल्यमेव नीलकण्ठ्यां प्रतिपादितम् इति तन्नात्र संगृहीतम् इति विज्ञेयम् अनैकान्तिकदेशनाभासोयम् (गौ० वृ० ५।१।४)।

**विकारः**—१ [क] स्वरूपस्य विनाशे अविनाशे वा द्रव्यान्तरारम्भकत्वम् यथा दुग्धादेर्दध्यारम्भकत्वम् बीजादेर्वृक्षाद्यारम्भकत्वं च । सुवर्णादेरपि लोहाघातजन्यावयवसंयोगनाशादवयविनो नाशे सत्येव कुण्डलारम्भः कपालादेश्च स्वरूपाविनाशेन घटाद्यारम्भकत्वम् (गौ० वृ० २।२।४०) सांख्यैश्च पञ्चविंशतितत्त्वमध्ये षोडशपदार्था विकारशब्देनोक्ताः । तदुक्तं षोडशकस्तु विकार इति । अस्यार्थः षोडशसंख्यावच्छिन्नो गण षोडशको विकारः एवेति (सर्व० सं० पृ० ३१८ साङ्ख्य०) [ख] प्रकृतेरन्यरूपः परिणामः (वाच०)। अयं विकारधर्मो द्रव्य सामान्ये । यदात्मकं द्रव्यं मृद्वा सुवर्णं वा तस्यात्मनोन्वये पूर्वो व्यूहो निव र्तते व्यूहान्तरं चोपजायते तं विकारमाचक्षते (वात्स्या० २।२।४५) अत्राधिकं च कर्मशब्दव्याख्याने दृश्यम् । [ग] अन्ये तु स्वरूप परित्यागेन रूपान्तरापत्तिः (गौ० वृ० २।२।५२) इत्याहुः । २ वर्ण विकारस्तु गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यः० (गौ० २।२।५६ इति सूत्रे उक्तः । अत्र केचिदाहुः इको यणचि (पाणि० अ० ६ पा०

सू० ७७ ) इत्यादिना इकारादेर्विकारो यकारादिः इति । परे तु इकारे प्रयोक्तव्ये यकारः प्रयोक्तव्यः इत्यादेशमादिशन्ति ( गौ० वृ० २।२।४० ) । ३ यास्कोक्ता भावविकाराः षट् । जायते अस्ति विपरिणमते वर्धते अपक्षीयते विनश्यति इति षड् भावविकारा भवन्तीति वार्ष्यायणिः ।

**विकार्यम्**—( विकृतिरूपं कर्म ) [ क ] क्रियानिष्पाद्यं यत्तत् । यथा तण्डुलानोदनं पचति कुसुमानि स्रजं करोति काशान्कटं करोतीत्यादौ प्रकृतिभूततण्डुलकुसुमकाशादिपदसमभिव्याहारे ओदनस्रगादि विकार्यरूपं कर्म भवति । अत्र विकार्यपदेन एकव्युत्पत्त्या प्रकृतिविकृत्युभयाबोधनेपि उभयसाधारणरूपावच्छिन्ने पारिभाषिकमेव विकार्यपदम् । अत्रेदं बोध्यम् । ओदनस्रगादेर्यदा कर्मत्वम् तदा तत्प्रकृतिभूततण्डुलकुसुमादीनामपि कर्मत्वं बोध्यते । प्रकृतिविकृतिभावस्थले कर्माख्यातेन प्रकृतेः कर्मत्वमेव प्रत्याय्यते । अतः काष्ठानि भस्मराशिः क्रियन्ते इति प्रयोग उपपद्यते । अत्र भस्मादिनिर्वर्त्यकर्मताया लकारेणानभिधानेपि तत्कर्मताया धात्वर्थे संसर्गतया भानोपगमेन तादृशकर्मोत्तरं प्रथमायाः साधुता । प्रातिपदिकार्थविशेष्यतया कर्मत्वादिविवक्षायामेव द्वितीयादिविभक्तिसाधुत्वात् ( ग० व्यु० का० २ पृ० ६७ ) इति । [ ख ] यल्लक्ष्यं तन्नाशकमेवावस्थान्तरमापद्यते तत् । यथा काष्ठं भस्म करोति सुवर्णं कुण्डलं करोतीत्यादौ काष्ठादि । अत्र काष्ठादिपदलक्ष्यस्य काष्ठावयवादेः स्वनाशकभस्मादिरूपावस्थान्तरप्राप्तेर्लक्षणसमन्वयः । ओदनं पचतीत्यादौ ओदनपदलक्ष्य ओदनावयवः । पच्यर्थो रूपादिपरावृत्त्यवच्छिन्नस्तेजःसंयोगः । तथा च धात्वर्थजन्यफलशालित्वात् सतोवस्थान्तरप्राप्तेश्चोभयविधकर्मत्वमोदनावयवस्येष्टम् ( का० व्या० पृ० ६ ) । [ ग ] शाब्दिकास्तु प्रकृतिविवक्षायां निष्पाद्यम् । काष्ठं भस्म करोतीत्यादौ असत्या एव काष्ठादिरूपप्रकृतेः परिणामित्वेन विवक्षास्ति इत्याहुः । तदुक्तमविकार्यं तु द्वेधा कर्म व्यवस्थितम् । प्रकृत्युच्छेदसंभूतं किंचित्काष्ठादिभस्मवत् । किंचिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् । तल्लक्षणं तु प्रतीयमानप्रकृतिविकृतिभावकत्वे सति क्रियानिर्वाह्यविशिष्टासत्त्व उत्पत्ति एतदन्यतरफलव-

त्त्वम् । घटं करोतीत्यादिनिर्वर्त्ये क्रियानिर्वाह्योत्पत्तिमत्यपि प्रकृतिविकृतिभावाभानान्नातिप्रसङ्गः । किंच प्रकृतिकर्मणः काष्ठादेः तादृशविशिष्टासत्त्ववत्त्वात् विकृतिकर्मणश्च भस्मादेः तादृशोत्पत्त्याश्रयत्वाल्लक्षणसंगतिः । सुवर्णं कुण्डलं करोतीत्यादौ सुवर्णस्य पूर्वरूपविशिष्टासत्त्वफलवत्त्वात् कुण्डलस्य चोत्पत्तिमत्त्वादुभयोरपि विकार्यत्वम् । तदुक्तं भर्तृहरिणा यदसज्जायते सद्वा जन्मना यत्प्रकाश्यते । प्रकृतेस्तु विवक्षायां विकार्यं कैश्चिदन्यथा ॥ इति । प्रकृतिकर्मत्वं च धात्वर्थव्यापारनिर्वाह्याभावप्रतियोगितावच्छेदकधर्मवत्त्वम् । काशान् कटं करोति कुसुमानि स्रजं करोति सुवर्णं कुण्डलं करोति मृदं घटं करोति काष्ठं भस्म करोति तण्डुलानोदनं पचतीत्यादौ धात्वर्थव्यापारनिर्वाह्यो यः पूर्वभावविशिष्टकाष्ठकाशादिप्रतियोगिकः अभावो विशिष्टासत्त्वरूपः तत्प्रतियोगितावच्छेदकवैशिष्ट्यवत्त्वं काशकाष्ठादेः इति तत्प्रकृतौ लक्षणसंगतिः । अत्रेदं बोध्यम् । काष्ठं भस्मेत्यत्र करोतेर्नाश उत्पत्तिश्च फलद्वयम् तदनुकूलव्यापारश्चार्थः । नाशे प्रतियोगितया काष्ठस्य उत्पत्तौ भस्मन आधेयतयान्वयः । काष्ठप्रतियोगिकनाशानुकूलो भस्मोत्पादको वर्तमानो व्यापारः इति वैयाकरणमते बोधः । नैयायिकमते तण्डुलानोदनं पचतीत्यादौ प्रकृतिकर्मबोधकतण्डुलपदोत्तरद्वितीयाया नाशकत्वमर्थः । विकृतिकर्मबोधकौदनपदोत्तरद्वितीयायाश्चोत्पादकत्वमर्थः । तण्डुलाद्यन्वितं नाशकत्वं च पाकेन्वेति । ओदनाद्यन्वितोत्पादकत्वस्य नाशकत्वविशिष्टे पाकेन्वयः । तथा च तण्डुलनाशक ओदनोत्पादको यो व्यापारः तदनुकूलकृतिमान् इति बोधः । एवम् काष्ठं भस्म करोतीत्यादावप्यूह्यम् ( वै० सा० द० सुब० कार० २ ) । इदं च बोध्यम् । भस्म करोतीत्यादौ यदा भस्मप्रकृतिभूतकाष्ठादिसमवधानं नास्ति तदा भस्मादिरूपं विकृतिकर्म निर्वर्त्यम् इत्युच्यते । यदा च तत्समवधानमस्ति तदा तदेव विकृतिरूपं कर्म विकार्यम् इत्युच्यते इति ।

**विकृतिः**—१ विकारः । २ विकार्यम् । ३ मीमांसकास्तु यत्र न सर्वाङ्गोपदेशः सा विकृतिः । यथा सौर्यादिः इष्टिः । तत्र कतिपयाङ्गानामतिदेशेन प्राप्तत्वात् इत्याहुः । अतिदेशेनेत्यस्यार्थस्तु प्रकृतिवद्विकृतिः कर्तव्या

इति चोदकशब्दितातिदेशवाक्येन इति ( लौ० भा० पृ० २२ ) । ४ स्वरविशेषः । यथा श्रीरागे गान्धारो विकृतिस्वरः इति गायकवा आहुः ।

**विक्रयः**—[ क ] मूल्यग्रहणपूर्वकं दानम् । यथा तुरगमस्मै *विक्रीणीत* इत्यादौ धात्वर्थः । अत्र तुरगश्च न मूल्यम् । पणपुराणादेरेव शास्त्रे तथात्वोपदेशात् ( श० प्र० श्लो० ६९ टी० पृ० ८६ ) । अथ क्रयविक्रयविचारे विवादचिन्तामणौ कात्यायनः पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् । ऋतुत्रयस्योपरिष्टात् तद्धनं वृद्धिमाप्नुयात् ॥ इति । मनुः विक्रयाद्यो धनं किंचिद्गृह्णीयात्कुलसंनिधौ । क्रयेण स विशुद्धं हि न्यायतो लभते धनम् ॥ ( मनु० अ० ८ श्लो० २०१ ) । क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयो भवेत् । सोन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत च ॥ ( मनु० अ० ८ श्लो० २२२ ) इति । याज्ञवल्क्यनारदौ राजदैवोपघातेन पण्ये दोषमुपागते । हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ॥ ( याज्ञ० अ० २ श्लो० २६१ ) इति । स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोप्रकाशिते । हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः ॥ ( याज्ञ० अ० २ श्लो० १७३ ) । विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णति । हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥ (याज्ञ० अ० २ श्लो० २६०) इति । [ ख ] मूल्यग्रहणजन्यस्य परस्वत्वस्यानुकूलत्यागः । ग्रामं विक्रीणातीत्यादौ ग्रामनिष्ठस्य मूल्यग्रहणजन्यपरस्वत्वस्यानुकूलो यो ग्रामस्य त्यागः तद्वान् इति बोधः ( श० प्र० श्लो० ७२ पृ० ९६ ) । [ ग ] परस्वत्वजनकमूल्यग्रहणं वा । यथा ग्रामं विक्रीणातीत्यत्र धात्वर्थो विक्रयः । अत्र पक्षे ग्रामं विक्रीणातीत्यादौ ग्रामनिष्ठं यत्परस्वत्वम् तदनुकूलमूल्यग्रहणवान् इति बोधः । मूल्यं च पणपुराणादिकमेव राजनिर्दिष्टम् न तु द्रव्यमात्रम् । तेन तिलादीन् दत्वा माषादीनां विनिमये विप्राणां तिलविक्रयादिदोषस्यानवकाशः ( श० प्र० श्लो० ७२ टी० पृ० ९७ ) । [ घ ] मूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपरस्वत्वजनकत्यागः । यथा गां विक्रीणातीत्यादौ इति प्राञ्च आहुः । अत्र गोवृत्तिमूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपरस्वत्वानुकूलत्यागव्यापारानुकूलकृतिमान् इत्येवं बोधः ( का० व्या० का० ४ पृ० ५ ) ।

**विक्रीयासंप्रदानम्**—विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते । विक्रीयासंप्रदानं तद्विवादपदमुच्यते ॥ ( मिताक्षरा अ० २।२५४ ) ।

**विक्लित्तिः**—तेजःसंयोगादिना जायमानोवयवविभागविशेषः । यथा तण्डुलं पचतीत्यादौ फलीभूतो धात्वर्थस्तण्डुलाद्यवयवविभागप्रभेदः ( श० प्र० श्लो० ७१ टी० पृ० ८९ ) । शाब्दिकास्तु जलतेजःसंयोगाभ्यां जायमानमवयवशैथिल्यम् । तच्च पूर्वारम्भकसंयोगनाशानन्तरशिथिलसंयोगापत्तिः इत्याहुः ( वाच० ) ।

**विक्षिप्तम्**—( चित्तम् ) क्षिप्ताद्विशिष्टं चित्तं विक्षिप्तमिति गीयते ( सर्व० सं० पृ० ३५४–३५५ पात० ) ।

**विक्षेपः**—१ ( निग्रहस्थानम् ) [ क ] कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः ( गौ० ५।२।१९ ) । यत्र कर्तव्यं व्यासज्य कथां व्यवच्छिनत्ति इदं मे करणीयं विद्यते तस्मिन्नवसिते कथयिष्यामि इति । विक्षेपो नाम निग्रहस्थानम् । एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रतिपद्यते ( वात्स्या० ५।२।१९ ) इति । एतत्सूत्रं विवर्तयामास । कार्यव्यासङ्गात् कार्यव्यासङ्गमुद्भाव्येत्यर्थः । ल्यब्लोपे पञ्चमी । कार्यव्यासङ्गश्चासंभवत्कालान्तरकत्वेनारोपितः । तेन तादृशकथाविच्छेदो विक्षेपः । तेन राजपुरुषादिभिराकारणे गृहजनादिभिर्वा आवश्यककार्यार्थमाकारणे स्वगृहदाहादिकं पश्यतो गमने वा शिरोरोगादिना प्रतिबन्धे वा न विक्षेपः । कार्यव्यासङ्गोद्भावनं चोत्तरावसराभावात् । वस्तुतस्तु उत्तरस्फूर्तावपि तद्दूषणसंभावनया विक्षेपसंभवः । यथा क्षितिः सकर्तृका कार्यत्वात् इत्युक्तम् । अत्राङ्कुरे व्यभिचारस्तावन्मयोद्भाव्यः । तत्र चेदयं पक्षसमत्वं ब्रूयात् तदा मे किमुत्तरम् । अतोत्र महार्णवलिखितं मया च विचारितं किंचित्कार्यमुद्भाव्य गृहे गत्वा दृश्यते इत्येवं विक्षेपसंभवात् ( गौ० वृ० ५।२।१९ ) । [ ख ] असंभवत्कालान्तरकत्वेनारोपितं कार्यव्यासङ्गमुद्भाव्य कथाविच्छेदः ( गौ० वृ० ५।२।१९ ) ( नील० पृ० ४६ ) ( दि० १ ) । [ ग ] कथामभ्युपगम्यैव तद्विच्छेदाय कस्यचित् । व्याजस्य वचने प्राहुर्विक्षेपं निग्रहग्रहम् ॥ ( ता० र० परि० ३ श्लो० १४७ ) । तदर्थश्च कथा-

मुपक्रम्य परिषदि श्रोतुमेकाग्रमनसि प्रतियोगिनि च दत्तावधाने संप्रति मे महत्प्रयोजनमस्ति श्वः परश्वो वा कथयिष्यामि इति कस्यचिद्व्याजस्य वचने तस्य विक्षेपलक्षणं नाम निग्रहस्थानमाहुराचार्याः ( सा० सं० पृ० ११५ ) । २ चित्तस्य नवविधो अंशो विक्षेपः इति पातञ्जलयोगशास्त्रज्ञा आहुः । अत्र सूत्रम् व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपाः तेन्तरायाः ( पात० सू० पाद० १ सू० ३० ) इति । ३ मायावादिनस्तु अविद्याशक्तिविशेषः । यथा रज्ज्वज्ञानं स्वावृतरज्जौ स्वशक्त्या सर्पादिकमुद्भावयति इत्यादौ इत्याहुः ( वेदा० सा० ) । ४ विमण्डले यद्ग्रहस्थानम् तस्य क्रान्तिवृत्ताद्यत् तिर्यगन्तरम् स विक्षेपः इति ज्योतिर्विद आहुः ( सि० शि० ) । अयमेव शरः इत्युच्यते । ५ स्त्रीणां सत्त्वजोलंकारविशेषः इत्यालंकारिका आहुः । तदुक्तम् भूषाणामर्धरचना वृथा विश्वगवेक्षणम् । रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके ॥ ( सा० द० परि० ३ श्लो० १०८ पृ० १३१ ) इति । अयं च स्त्रीणां सत्त्वजानामष्टाविंशतिसंख्यकानामलंकाराणामन्यतमः स्वभावजो विक्षेपो नाम विच्छित्तिविशेषं पुष्णाति ( सा० द० परि० ३ श्लो० ९२ पृ० १२१ ) ।

**विगीतत्वम्**—१ वेदनिषिद्धत्वम् ( चि० १ ) । यथा सुरापानादेर्विगीतत्वम् । अत्र निषेधकश्रुतिः न सुरां पिबेत् इत्यादिः । सर्वं मद्यमपेयम् ( आप० स्मृ० ) इति स्मृतिश्च । अत्र वेदपदं स्मृत्याद्युपलक्षणम् । न कुर्यान्निष्फलं कर्म इत्यादिना निष्फलजलताडनादेरपि निषिद्धत्वात् । २ लौकिकविषयकत्वम् । ३ वेदनिषिद्धविषयकत्वम् । यथा मङ्गलं कर्तव्यम् अलौकिकाविगीतशिष्टाचारविषयत्वात् दर्शादिवत् इत्यादौ विगीतत्वम् । ४ पापजनकत्वम् । ५ बलवदनिष्टानुबन्धित्वम् ( मू० म० १ ) ( दि० १ ) ( म० वा० १ ) ।

**विग्रहः**—१ निर्देशे यथावचनम् ( वात्स्या० १।१।१ ) ( न्या० वा० १ पृ० ११ ) । यथा प्रमाणप्रमेयसंशयप्रयोजन इत्यादिसूत्रे प्रमाणानि च प्रमेयं च संशयश्च प्रयोजनं च इत्यादिविग्रहं वर्णयन्ति ( गौ० वृ० १।१।१ ) ।

अत्रेदमधिकं ज्ञेयम् । विग्रह एव समासलभ्यार्थस्य बोधकत्वं तन्नम् न तु समासे विग्रहार्थस्य । विग्रहलभ्ययोर्लिङ्गसंख्ययोर्व्यञ्जकवैधुर्येण प्रायशः समासाबोध्यत्वात् ( श० प्र० श्लो० ३२ पृ० ४० ) इति । केचिच्छाब्दिकाः वृत्त्यर्थावबोधकं वाक्यं विग्रहः इति वदन्ति ( म० प्र० ४ पृ० ४३ ) । अन्ये वैयाकरणास्तु समासादिवृत्तिसमानार्थकवाक्यविशेषः इत्याहुः । २ विशेषज्ञानम् । यथा अविग्रहागतादिस्था यथा ग्रामादिकर्मभिः ( हरिवं० ) इत्यादौ इति पौराणिका आहुः । ३ विस्तारः इत्यमरसिंह आह । ४ युद्धम् इति नीतिशास्त्रज्ञा आहुः । ५ देहः इति काव्यज्ञा वदन्ति ।

**विघातः**—१ ध्वंसः ( दि० १ ) । यथा विघ्नविघाताय मङ्गलम् ( मु० १ ) इत्यादौ । २ आघातः ।

**विघ्नः**—समीहितक्रियास्वरूपप्रतिबन्धकम् । तच्च क्वचित् दुरितम् ( कि० व० ४ ) । यथा सर्वे विघ्नाः शमं यान्ति विघ्नेशस्तवपाठतः इत्यादौ । लक्षणं तु विघ्नत्वम् । तच्च मङ्गलनाश्यतावच्छेदकः अदृष्टनिष्ठो जातिविशेषः । विघ्नकारणं च मङ्गलाभावेतरविघ्नप्रागभावनाशककारणकलापः ( मू० म० १ ) ।

**विचारः**—१ विपरीतोद्भावकपरविजिगीषया न्यायप्रयोगः इत्यस्मद्गुरुचरणाः प्राहुः । यथा परार्थानुमानस्थले पर्वतो वह्निमान् धूमवत्त्वात् इत्यादि । अत्र च पर्वते वह्नौ साधनीये प्रतिवादिना पर्वतो न वह्निमान् इत्यादिविपरीतवाक्ये प्रयुक्ते मध्यस्थस्य संशयो जन्यते । तन्निवृत्तिद्वारा प्रतिवादिपराभवार्थं वादिना पर्वतो वह्निमान् इत्यादिप्रतिज्ञाघटितवाक्यप्रयोगरूपविचारः क्रियते इति विज्ञेयम् । २ तत्त्वनिर्णयः । ३ संदिग्धे वस्तुनि प्रमाणेन तत्त्वपरीक्षायां तदनुगुणो वाक्यसमूहो विचारः ।

**विचिकित्सा**—( दोषः ) संशयशब्दवदस्यार्थोनुसंधेयः ( अमरः १ ) ।

**विच्छिन्नत्वम्**—बलवता क्लेशेनाभिभवः ( सर्व० सं० पृ० ३५९ पात० ) ।

**विजयः**—ईषत्संध्यामतिक्रान्तः किंचिदुद्भिन्नतारकः । विजयो नाम कालोयं सर्वकार्यार्थसाधकः ॥ ( पु० चि० पृ० १४८ ) ।

**विजया**—( सप्तमी ) शुक्लपक्षस्य सप्तम्यां रविवारो भवेद्यदि । सप्तमी विजया ज्ञेया तत्र दत्तं महाफलम् ॥ ( पु० चि० पृ० १०५) ।

**विजातीयम्**—१ लक्ष्यतावच्छेदकसाक्षाद्व्यापकजात्यनवच्छिन्नम् । यथा गोविजातीयो घटः । तथा हि गोर्लक्षणस्य सास्नादिमत्त्वस्य विजातीयव्यावृत्तिप्रयोजनकत्वे गोत्वं लक्षणलक्ष्यतावच्छेदकम् । तस्य साक्षाद्व्यापकं पशुत्वम् । तदनवच्छिन्नो घटो भवति इति विज्ञेयम् ( प्र० च० पृ० ३ ) । २ तद्वृत्त्यसाधारणविशेषधर्मशून्यस्तद्विजातीयः इति तु वयं ब्रूमः ।

**विज्ञानम्**—१ बुद्धिशब्दवदस्यार्थोनुसंधेयः । २ पौराणिकाश्च चतुर्दशविद्याधारणम् इत्याहुः । तदुक्तम् चतुर्दशानां विद्यानां धारणं हि यथार्थतः । विज्ञानमितरद्विद्याद्येन धर्मो विवर्धते ॥ ( कूर्मपु० अ० १४ ) ( वाच० ) इति । ३ मायावादिनस्तु अविद्यावृत्तिविशेषः आत्मैक्यज्ञानं च विज्ञानम् इत्यङ्गीचक्रुः । ४ काव्यज्ञास्तु शिल्पादिज्ञानम् इत्याहुः । ५ विज्ञानवादिनो बौद्धास्तु विज्ञानं द्विविधम् प्रवृत्तिविज्ञानम् आलयविज्ञानं च । तत्राद्यम् अयं घटः इत्याद्याकारकम् । द्वितीयं च अहं जानामि इत्याकारकम् । तदेव आत्मा इत्युच्यते इति वदन्ति । ६ निरवशेषशास्त्रविषयं ग्रन्थतोर्थतश्च सिद्धिज्ञानं विज्ञानम् (सर्व० सं० पृ० १६६ नकुली०)।

**विज्ञानस्कन्धः**—आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहः ( सर्व० सं० पृ० ४० बौ० ) ।

**विज्ञानाकलः**—विज्ञानयोगसंन्यासैर्भोगेन वा कर्मक्षये सति कर्मक्षयार्थस्य कलादिभोगबन्धस्याभावात्केवलमलमात्रयुक्तो विज्ञानाकलः ( सर्व० सं० पृ० १८२ शै० ) ।

**वितण्डा**—( कथा ) [ क ] स प्रतिपक्षस्थापनाहीनो वितण्डा ( गौ० १।२।३ ) । स जल्पो वितण्डा भवति । किंविशेषणः । प्रतिपक्षस्थापनया हीनः । यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ पक्षप्रतिपक्षावित्युक्तौ तयोरेकतरं वैतण्डिको न स्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्तत

इति । अस्तु तर्हि स प्रतिपक्षहीनो वितण्डा । यद्वै खलु तत्परप्रतिषेधवाक्यं स वैतण्डिकस्य पक्षः । न त्वसौ साध्यं कंचिदर्थं प्रतिज्ञाय स्थापयतीति । तस्माद्यथान्यासमेवास्त्विति ( वात्स्या० १।२।३ ) । अभ्युपेत्य पक्षं यो न स्थापयति स वैतण्डिकः इत्युच्यते ( न्या० वा० १ पृ० १६ ) । इयं वितण्डारूपा कथा च परपक्षखण्डनेन जयमुद्दिश्यैव प्रवर्तते । [ ख ] प्रतिपक्षस्थापनाहीना विजिगीषुकथा ( गौ० वृ० १।२।३ ) । [ ग ] स्वपक्षस्थापनाहीना कथा परपक्षदूषणमात्रावसाना ( वात्स्या० १।१।१ ) ( त० भा० ) ( त० दी० ) ( सर्व० पृ० २३९ अक्ष० ) । तदेवोच्यते जल्प एव वितण्डा स्यात् प्रतिपक्षत्वसाधनैः इति ( ता० र० श्लो० ७९ ) । [ घ ] प्रतिपक्षस्थापनाहीनं च वाक्यम् ( न्या० वा० १ पृ० १६ ) ।

**वितर्कः**—१ प्रयोक्तुः संभावनात्मकं ज्ञानम् । यथा किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखम् इत्यादौ किंपदार्थः । अत्र अव्ययकिमर्थस्य संभावनात्मकज्ञानस्य विशेष्यतासंबन्धेन प्रथमान्तपदोपस्थाप्यविशेष्ये अन्वयः । प्रकारितासंबन्धेन तत्र च विशेषणस्य चन्द्रादेरन्वयः ( ग० शक्ति० पृ० १०८ ) । २ आलंकारिकास्तु अर्थालंकारविशेषः इत्याहुः ।

**विद्या**—( बुद्धिः ) १ ज्ञानम् । तच्च कणादनये यथा विशेषणवद्विशेष्यसंनिकर्षलिङ्गपरामर्शादिरूपगुणजन्यो बुद्धिविशेषः ( त० व० २१३ ) । यथार्थज्ञानमिति भावः । विद्याया विभागादिकं तु बुद्धिशब्दव्याख्याने द्रष्टव्यम् । २ विजातीयज्ञानहेतुः शास्त्रम् । यथा आन्वीक्षिकी न्यायविद्या । सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् । आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥ ( वात्स्या० १।१।१ ) इति । न्यायनये विद्याश्चतस्रः आन्वीक्षिकीत्रयीवार्तादण्डनीतिरूपाश्चतस्रो विद्या विद्याप्रस्थाने कथिताः ( गौ० वृ० १।१।१ ) । तदर्थश्च आन्वीक्षिकी न्यायविद्या । त्रयी वेदविद्या । वार्ता नीतिशास्त्रम् । दण्डनीतिस्त्वर्थशास्त्रम् इति । मनुना चोक्तम् त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् । आन्वीक्षिकीं चात्मविद्यां

वार्तारम्भांश्च लोकतः ॥ ( मनु० अ० ७ श्लो० ४३ ) इति । वार्तिके चोक्तम् चतस्र इमा विद्या भवन्ति । ताश्च पृथक्प्रस्थानाः अग्निहोत्रहवनादिप्रस्थाना त्रयी । हलशकटादिप्रस्थाना वार्ता । स्वाम्यमात्यभेदानुविधायिनी दण्डनीतिः । संशयादिभेदानुविधायिन्यान्वीक्षिकी ( न्या० वा० पृ० १३ ) । ३ पौराणिकनये विद्याश्चतुर्दश अष्टादश चापि । ता उच्यन्ते । विद्याश्चतुर्दश प्रोक्ताः क्रमेण तु यथास्थिति । षडङ्गमिश्रिता वेदा धर्मशास्त्रं पुराणकम् ॥ मीमांसा तर्कमपि च एता विद्याश्चतुर्दश ( नन्दिपु० ) इति । पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ ( याज्ञ० १।३ ) इति च । अष्टादश चान्यत्रोक्ताः । ता उच्यन्ते । अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ताः ( विष्णुपु० ) ( वाच० ) । श्रुतौ तु विद्या द्विविधोक्ता परा अपरा च । तत्र परा यया ब्रह्मावगमः सा । ययाक्षरमधिगम्यते सा परा इति श्रुतेः । ऋग्वेदादिलक्षणा अपरा । सा चाध्ययनाध्यापनरूपा ( वाच० ) । विद्याभेदेन देवताभेदाः ( हेमा० व्र० ) विष्णुधर्मोत्तरे उक्ताः तास्तत्रैव द्रष्टव्याः । ४ पशुगुणो विद्या ( सर्व० सं० पृ १६७ नकुली० ) ।

**विद्येश्वरः**—अनन्तश्चैव सूक्ष्मश्च तथैव च शिवोत्तमः । एकनेत्रस्तथैवैकरुद्रश्चापि त्रिमूर्तिकः ॥ श्रीकण्ठश्च शिखण्डी च प्रोक्ता विद्येश्वरा इमे ( सर्व० सं० पृ० १८३ शै० ) ।

**विधवा**—मृतभर्तृका स्त्री । विधवाधर्माश्च ( शु० त० ) विष्णुना उक्ता यथा मृते भर्तरि ब्रह्मचर्यम् तदन्वारोहणं वा । तत्र ब्रह्मचर्यं मैथुनवर्जनं ताम्बूलादिवर्जनं च । यथाह प्रचेताः ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् । यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ॥ अनुयाति न भर्तारं यदि दैवात्कदाचन । तथापि शीलं संरक्ष्यं शीलभङ्गात्पतत्यधः ॥ विधवाकबरीबन्धो भर्तृबन्धाय जायते । शिरसो वपनं तस्मात् कार्यं

विधवया सदा ॥ एकाहारः सदा कार्यो न द्वितीयः कदाचन । त्रिरात्रं पञ्चरात्रं वा पक्षव्रतमथापि वा ॥ मासोपवासं कुर्याद्वा चान्द्रायणमथापि वा । नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ॥ कञ्चुकं न परीदध्याद्वासो न विकृतं वसेत् ( काशीख० अ० ४ ) इति च । मनुरप्याह कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥ मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते ( मनु० अ० ५ श्लो० १५७–१६२ ) इति । अत्र धर्मप्रवृत्तिनिबन्धशिरोमणिशास्त्रप्रदीपादौ बाभ्रव्य आह अज्ञानात्तु द्विजो यस्तु विधवामुद्वहेद्यदि । परित्यज्य विदित्वैनां प्रायश्चित्तं समाचरेत् ॥ अब्दमेकं विधायादाववकीर्णिव्रतं चरेत् । पुत्रश्चेज्जायते तस्यां रण्डगोलक उच्यते ॥ इति । कृते सप्तपदे भर्तुर्वियोगो यदि जायते । न देया पुनरन्यस्मै कलौ कन्या मनीषिभिः ॥ इति च । शिष्टं तु नियोगशब्दव्याख्याने द्रष्टव्यम् । शूद्रादिविषये तु न कुर्यात्केशसंस्कारं गात्रसंस्कारमेव च । केशावली जटारूपा न क्षौरं तीर्थकं विना ॥ तैलाभ्यङ्गं न कुर्वीत न हि पश्यति दर्पणम् ( ब्रह्मवै० पु० ज० ख० अ० ८३ ) इत्यादि । अन्वारोहणं सहगमनम् । अत्रोक्तमङ्गिरसा हारीतेन च साध्वीनामेव नारीणामग्निप्रपतनादृते । नान्यो धर्मो हि विज्ञेयो मृते भर्तरि कर्हिचित् ॥ इत्यादि । साध्वीलक्षणं तु आर्तार्ते मुदिता हृष्टे प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता ॥ इति । बृहन्नारदीये तु बालापत्याश्च गर्भिण्यो ह्यदृष्टऋतवस्तथा । रजस्वला राजसुते नारोहन्ति चितां शुभे ॥ ( वाच० ) इति ।

**विधा**—१ त्वप्रत्ययवदस्यार्थोनुसंधेयः । स च प्रकारीभूतो धर्मः । यथा धूमवान्पर्वतो वह्निमानित्यनुमितौ पक्षतावच्छेदकविधया धूमस्य भानमिति इत्यादौ विधाशब्दार्थः ( दि० १ काल० पृ० ८९ ) । अत्र धूमस्य पक्षतावच्छेदकत्वेन भानमस्ति इत्यर्थो बोध्यः । २ प्रभेदः । यथा द्विविधः त्रिविधः इत्यादौ । ३ प्रकारः । यथा धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि

तद्विधा ( मनु० २।११२ ) इत्यादौ । ४ काव्यज्ञास्तु सादृश्यम् । यथा तथाविधः स्वार्थः ( श० प्र० श्लो० ७ टी० पृ० ८ ) इत्यादौ । यथा वा किमप्यहिंस्यस्तव चेन्मतोहं यशःशरीरे भव मे दयालुः । एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥ (रघु० २।५७) इत्यादौ इत्याहुः ।

**विधानम्**—अप्रवृत्तप्रवर्तनम् । तच्च पुरुषविषयः शब्दव्यापारः ( जै० न्या० अ० २ पा० ३ अधि० १३ ) ।

**विधिः**—१ ( प्रमाणशब्दः ) [क] विधिर्विधायकः ( गौ० २।१।६३ ) । अयं विधिर्ब्राह्मणभागः ( वात्स्या० २।१।६२ ) । अत्राभिधैव लिङर्थः । सैव च प्रवृत्तिहेतुः इति विज्ञेयम् ( त० प्र० ख० ४ पृ० ९४ ) । अत्र विधिशब्दस्य विधिरूपशब्दे इष्टसाधनत्वादिरूपे विध्यर्थे च प्रयोगो दृश्यते । तत्र विधायक इति आद्योर्थः । यद्वाक्यं विधायकं चोदकं स विधिः । विधिस्तु नियोगोनुज्ञा वा । यथा अग्निहोत्रं जुहुयात्स्वर्गकामः ( शतपथ० २ ) इत्यादि ( वात्स्या० २।१।६३ ) । [ख] इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यम् ( गौ० वृ० २।१।६३ ) । [ग] विध्यभिधायकप्रत्ययः तद्घटितवाक्यं वा ( न्या० म० ४ ) । तदर्थश्च विधीयते विधिरूपशब्देन प्रतिपाद्यतेसौ विधिरिष्टसाधनत्वादिः । तस्याभिधायको वाचकः इति । अथ वा अर्थविशेषाभिधायकः प्रत्ययः । स च प्रत्ययो लिङ्लोट्लेट्तव्यकृत्यप्रत्ययरूपः इति ( सि० च० ) ( म० प्र० ४ पृ० ५८ ) ( त० प्र० ख० ४ पृ० ९३ ) । तद्घटितवाक्यमिति द्वितीयं लक्षणं तु तान्त्रिकमते यजेत इत्यादिवाक्यमेव विधिः न तु केवलप्रत्ययः इत्यभिप्रायेण । [घ] प्रवृत्तिपरं वाक्यम् । यथा ज्योतिष्टोमेन स्वर्गकामो यजेत ( शतपथ० ) ओदनकामस्तण्डुलं पचेत इत्यादि । अत्र ज्योतिष्टोमनामको यागः स्वर्गरूपेष्टसाधनम् तण्डुलकर्मकः पाक ओदनरूपेष्टसाधनम् इत्युभयवाक्यार्थः । यजेत पचेतेत्यादिविधिप्रत्ययेनेष्टसाधनत्वोपस्थापनात् ( त० कौ० ) । [ङ] मीमांसकास्तु अज्ञातार्थज्ञापको वेदभागः ( अपूर्वविधिः ) । स च तादृशप्रयोजनवदर्थविधानेनार्थवान् । तादृशं चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते । यथा

अग्निहोत्रं जुहुयात् स्वर्गकामः इत्यादि इत्याहुः । अयं विधिर्मानान्तरेणाप्राप्तं स्वर्गप्रयोजनवद्धोमं विधत्ते । अग्निहोत्रहोमेन स्वर्गं भावयेत् इति वाक्यार्थबोधः ( लौ० भा० पृ० १३ ) । यत्र कर्म मानान्तरेण प्राप्तम् तत्र तदुद्देशेन गुणमात्रं विधत्ते । यथा दध्ना जुहोति ( तै० ब्रा० २।१।५ ) (शतप०) इति । अत्र होमस्य अग्निहोत्रं जुहुयात् इत्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानम् । दध्ना होमं भावयेत् इति वाक्यार्थः । यत्र तूभयमप्राप्तम् तत्र विशिष्टं विधत्ते । यथा सोमेन यजेत ( शतपथ० ) इत्यत्र सोमयागयोरप्राप्तत्वात् सोमविशिष्टयागविधानम् । सोमपदे मत्वर्थलक्षणया सोमवता यागेनेष्टं भावयेत् इति वाक्यार्थबोधः ( लौ० भा० पृ० १३ ) । [ च ] धर्मार्थसाधकव्यापारो विधिः ( सर्व० सं० पृ० १६९ नकुली० ) । [ छ ] अज्ञातस्यानुष्ठेयत्वकथनं विधिः ( जै० न्या० अ० १ पा० ४ अधि० ६ ) । सामान्यतोयं विधिर्द्विविधः लौकिकः वैदिकश्च । तत्र लौकिकः ओदनकामस्तण्डुलं पचेत् इत्यादिः । वैदिकविधिस्तु स्वर्गकामो यजेत ( शतपथ० ) इत्यादिः । विधिः प्रकारान्तरेण त्रिविधः अपूर्वविधिः नियमविधिः परिसंख्याविधिश्च ( न्या० म० ४ ) ( सि० च० ) । तदुक्तं भट्टपादैः विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्यते ॥ ( न्या० म० ४ ) इति । तत्रापूर्वविधिश्चतुर्विधः उत्पत्तिविधिः विनियोगविधिः प्रयोगविधिः अधिकारविधिश्चेति ( लौ० भा० पृ० १६ ) । तत्र प्राथमिकप्रतीतिविषयप्रवृत्तिसाधनेष्टसाधनताबोधकं कर्मस्वरूपज्ञापकं विधिवाक्यम् उत्पत्तिविधिः । यथा स्वर्गकामोश्वमेधेन यजेत ( शतपथ० ) इत्यादिवाक्यम् ( वाच० ) । अत्र शिष्टं तु उत्पत्तिविधिशब्दव्याख्याने दृश्यम् । अधिकारविधिश्च कर्मणः फलसंबन्धबोधको विधिः । यथा ज्योतिष्टोमेन यजेत स्वर्गकामः इत्यादिः ( म० प्र० पृ० ६३ ) । अथ वा कर्मजन्यफलस्वाम्यबोधको विधिः । कर्मजन्यफलस्वाम्यं च कर्मजन्यफलभोक्तृत्वम् । यथा यजेत स्वर्गकामः इत्यादिरूपोधिकारविधिः । अत्र स्वर्गमुद्दिश्य यागं विदधतानेन स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते ( लौ० भा० पृ० ३८ ) । यथा वा यस्याहिताग्नेरग्निर्गृहान् दहेत्सोग्नये क्षामवतेष्टाकपालं निर्वपेत्

( शतपथ० ) ( तै० सं० २।२ ) इति । अत्र अग्निदाहादौ निमित्ते कर्म विदधता अनेन वाक्येन निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते ( लौ० भा० पृ० ३८ ) । एवम् अहरहः संध्यामुपासीत ( बौधायनसू० ) इत्यादीन्यधिकारविधेरुदाहरणानि विज्ञेयानि । अत्र शुचिविहितकालजीविनः संध्योपासनजन्यप्रत्यवायपरिहाररूपफलस्वाम्यं चोद्यते ( लौ० भा० पृ० ३८ ) । कुसुमाञ्जलिटीकायामित्थमुक्तम् । [ ज ] विधिर्नाम विधिप्रत्ययार्थः । अत्र व्युत्पत्तिः विधीयते विधिरूपशब्देन प्रतिपाद्यतेसौ विधिरिष्टसाधनत्वादिः ( म० प्र० ४ पृ० ५८ ) इति । स च प्रवर्तकज्ञानविषयो धर्मः । अयं च धर्मो जरन्नैयायिकानां नये कृतिसाध्यत्वे सति बलवदनिष्टाजनकत्वसहितमिष्टसाधनत्वम् । अत्र कृतिसाध्ये तृप्तिरूपसुखात्मकेष्टसाधने च मधुविषसंपृक्तान्नभोजने प्रवृत्तिवारणाय बलवदनिष्टाजनकत्वं विशेषणमावश्यकम् । अत्र बलवदनिष्टं तु मरणम् । यदा च तादृशभोजनं बलवदनिष्टाननुबन्धित्वेन ज्ञायते तदा स पुरुषः प्रवर्तत एव इति विज्ञेयम् ( न्या० म० ख० ४ पृ० २६–२७ ) । अत्रेदं बोध्यम् । न कलञ्जं भक्षयेत् इत्यादौ नञा बोध्यमानो विशिष्टाभावः ( कृतिसाध्यत्वविशिष्टस्य बलवदनिष्टाजनकत्वविशिष्टस्येष्टसाधनत्वस्याभावः ) विशेष्यवति विशेषणाभावे विश्राम्यतीति ( मु० गु० पृ० २२८ ) । एतन्मते श्येनस्य हिंसारूपत्वं नास्ति इति श्येनेनाभिचरन् यजेत ( अथर्वब्राह्म० ) इत्यादौ बलवदनिष्टाननुबन्धित्वरूपो विध्यर्थो बोध्यते इति हृदयम् । यथा ओदनकामः पचेत स्वर्गकामो यजेतेत्यादौ ओदनस्वर्गादिरूपं यत् फलम् तत्साधनत्वं पाकयागादिक्रियायां प्रतीयते ( कु० टी० ५ ) ( त० प्र० ४ पृ० १०५ ) ( तर्का० ) ( ग० व्यु० ७० पृ० १३८ ) ( त० दी० ) ( मु० गु० ) ( दि० पृ० २२६ ) । नव्यनैयायिकमते तु प्रवर्तकचिकीर्षायां यत्प्रकारकज्ञानस्य हेतुत्वं स विधिः । कृतिसाध्यत्वादिज्ञानेन चिकीर्षा तया च प्रवृत्तिरुत्पद्यते इति समुदितार्थः ( न्या० म० ४ पृ० २७ ) । तादृशं च कृतिसाध्यत्वम् इष्टसाधनत्वम् बलवदनिष्टाननुबन्धित्वं च प्रत्येकमेव । यथा यजेत पचेतेत्यादौ लिङर्थः ( त० प्र० ४ पृ० १०२ ) । कृतिसाध्यत्वादि-

पदानां प्रयोजनं कथ्यते । पङ्गुः समुद्रं न तरेत् इत्यादौ नञादिना समुद्रतरणादेः पङ्गुप्रवृत्तिकृतिसाध्यत्वनिषेधबोधानुरोधादवश्यं कृति-साध्यत्वं लिङर्थः स्वीकार्यः । तृप्तिकामो जलं न ताडयेत् इत्यादौ जल-ताडनादेस्तृप्तिकामेष्टसाधनत्वस्य निषेधान्वयानुपपत्त्येष्टसाधनत्वं लिङर्थो-वश्यं स्वीकर्तव्यः । अपरे तु चैत्यं न वन्देत इति वाक्यप्रामाण्यानुरोधे-नेष्टसाधनत्वस्य विध्यर्थत्वमावश्यकम् इति वदन्ति ( ग० व्यु० क० ) । न कलञ्जं भुञ्जीत इत्यादौ कलञ्जभक्षणादेर्बलवदनिष्टाजनकत्वस्य निषेधा-नुपपत्त्या बलवदनिष्टाननुबन्धित्वं लिङर्थोवश्यं स्वीकर्तव्यः ( श० प्र० श्लो० १०० टी० पृ० १४६ ) । कलञ्जो मांसविशेषः । तथा चोक्तं माध-वाचार्यैर्न्यायमालायाम् विषाक्तशराग्रेण विद्धा ये पशुपक्ष्यादयस्तेषां यन्मांसं तदेव कलञ्जम् इति । रक्तलशुनं कलञ्जम् इति हरदत्त आह । बलवद-निष्टाननुबन्धित्वं चात्र नरकाजनकत्वम् पापाजनकत्वं वा (श० प्र० श्लो० १०० टी० पृ० १५१) । एतेषां बलवदनिष्टाननुबन्धित्वादिषु त्रिषु पृथगेव लिङः शक्तित्रयं वदतां नव्यनैयायिकानां मते श्येनः स्वरूपत एव निषिद्धः इति श्येनेनाभिचरन् यजेत इत्यादौ विधिप्रत्ययेन बलवदनिष्टाननुबन्धित्वं न बोध्यते । अधिकं तु अभिचारशब्दव्याख्याने द्रष्टव्यम् । तथा च न कलञ्जं भक्षयेत् इत्यादौ बलवदनिष्टाजनकत्वं विध्यर्थः । तदभावो नञात्र बोध्यते इति विज्ञेयम् ( मु० ) ( दि० गु० पृ० २२५–२२९ ) । अत्र वदन्ति । द्वेषविषयतावच्छेदकत्वोपलक्षितनरकत्वाद्याश्रयसाधनता-त्वावच्छिन्नप्रतियोगिताकाभावकूटे तादृशभावत्वेनानुगत एकैव विधि-प्रत्ययस्य शक्तिः इति ( ग० व्यु० ल० पृ० १४८ ) । यजेतेत्यादौ यागादिधर्मिकादिष्टसाधनत्वादिनिश्चयादेव यागादिधर्मिकचिकीर्षोत्पत्त्या तत्र प्रवृत्तिः । एवं च यागादिः कृतिसाध्यः इष्टसाधनम् बलवदनिष्टा-ननुबन्धी च इत्याकारको बोधः ( श० प्र० श्लो० १०० टी० पृ० १४६) । उदयनाचार्यास्तु आप्ताभिप्रायो विध्यर्थ इत्याहुः ( कु० ५ ) ( न्या० सि० दी० पृ० ६० ) ( म० प्र० ४ पृ० ५९ ) । तदर्थश्च आप्तस्य परमेश्वरस्य अभिप्राय इच्छा लिङादिना बोध्यते । अत्रोक्तमुदयनाचार्यैः यस्तु वेदे ईश्वरप्रणीतत्वम् नाभ्युपैति तं प्रति विधिरेव तावद्गर्भः श्रुति-

कुमार्याः पुंयोगे मानम् इति ( कि० व० ) ( मु० ) ( म० प्र० ४ ) ( त० कौ० ) । अथ वा वक्रिच्छाविषयत्वम् । यथा घटमानय इत्यादौ लोडर्थो विधिः ( तर्का० ४ पृ० ११ ) ( श० प्र० श्लो० १०१ टी० पृ० १४६ ) । अत्र घटकर्मकमदिच्छाविषयानयनानुकूलकृतिमांस्त्वम् इत्यन्वयबोधः । अत्रेदं बोध्यम् । यजेत स्वर्गकामः न कलञ्जं भक्षयेत् इत्यादौ यागः स्वर्गकामकर्तव्यत्वेनाप्ताभिप्रायविषयः कलञ्जभक्षणं कर्तव्यत्वेनाप्ताभिप्रायविषयो न इति वाक्यद्वयार्थबोधः । यागादौ चाप्ताभिप्रायविषयत्वेनेष्टसाधनत्वादिकमनुमाय प्रवृत्तिः । कलञ्जभक्षणादौ तद्विषयत्वाभावेनानिष्टसाधनत्वमनुमाय निवृत्तिः इति ( म० प्र० ४ पृ० ५९ ) । भट्टमीमांसकास्तु विधिप्रेरणाप्रवर्तनादिशब्दाभिधेयः प्रवृत्त्यनुकूलव्यापार इत्याहुः । तन्मते त्वित्थम् । गामानय इत्याचार्यवाक्यश्रवणानन्तरं शिष्यप्रवृत्तिदर्शनात् शब्दप्रवृत्तौ प्रवर्तनाज्ञानं हेतुः । सा च प्रवर्तना पचेत इत्यादिलौकिकवाक्ये पुरुषनिष्ठोभिप्रायविशेषः । यजेत स्वर्गकामः इत्यादिवैदिकवाक्ये तु पुरुषाभावाच्छब्दनिष्ठैव । न चेश्वरकर्तृकत्वं वेदस्य । ईश्वरस्यैवानभ्युपगमात् । शब्दनिष्ठत्वादेव च शब्दभावना इत्युच्यते । सैव विध्यर्थः । स च लिङ्त्वेनाभिधीयते । अर्थभावना तु प्रवृत्त्यादिव्यापाररूपा । सा चाख्यातत्वेनोपस्थाप्यते इति । तत्रोक्तम् अभिधाभावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः ॥ ( म० प्र० ४ पृ० ५८ ) इति । अयमाशयः । स्वर्गकामो यजेत इत्यादौ लिङादिप्रत्यये अंशद्वयमस्ति लिङ्त्वम् आख्यातत्वं च । तत्र लिङ्त्वांशेन प्रवर्तनाख्यः शब्दनिष्ठो व्यापारो बोध्यते । ईश्वरानभ्युपगमात् । अयं शब्दभावना इत्युच्यते । तेन व्यापारेण च प्रवृत्त्याख्यो यागकर्तृपुरुषनिष्ठो व्यापार आख्यातत्वांशेन बोध्यमान उपस्थाप्यते । अयमेव अर्थभावना इत्युच्यते । एवं च पुरुषनिष्ठायाः प्रवृत्तेरनुकूलः प्रवर्तनाख्यः शब्दनिष्ठो व्यापारो विध्यर्थः इति ( लौ० भा० पृ० ५–१० ) । प्राभाकरास्तु विध्यर्थः कार्यत्वमात्रम् । तच्च कृतिसाध्यत्वम् । तथा हि । यद्विषयिणी बुद्धिः प्रवृत्तिजननीमिच्छां प्रसूते स विधिप्रत्ययप्रतिपाद्यः । प्रवृत्तिजनकेच्छाजनकज्ञानप्रकारः इत्यर्थः ।

प्रवृत्तिजननी च कृतिसाध्यत्वप्रकारकेच्छा । तज्जननी च कृतिसाध्यत्वप्रकारिका बुद्धिः इति यावत् ( न्या० म० ४ पृ० २५ ) । अत्रेदमवधेयम् । प्राभाकरमत इष्टसाधनत्वमपि विध्यर्थो भवत्येव । अत एव तैर्नित्यापूर्वं निषेधापूर्वरूपं पण्डापूर्वमपि संध्यामुपासीत न कलञ्जं भक्षयेत् ( स्मृतिः ) इत्यादिविधिनिषेधयोः कल्प्यते ( त० प्र० ४ पृ० ८९ ) । अत्रेदमधिकं बोध्यम् । प्राभाकरमते अन्यथाख्यातिर्नास्ति इति । एवं च तन्मते कार्यत्वमेव विध्यर्थः । अयमाशयः । प्राभाकरमते कार्यत्वविशिष्टापूर्वस्य विध्यर्थत्वाद्विशेषणांशः कार्यत्वमपि तदर्थः इति ( म० प्र० ४ पृ० ५९ ) । अत्रेदं बोध्यम् । प्राभाकरमते यागस्याशुविनाशित्वेन स्वर्गोत्पत्तिकाले तस्याभावात्तदुत्पत्त्यर्थं यागजन्यमपूर्वं कल्प्यते । तथा च वेदे कार्यत्वविशिष्टापूर्वसंभवेन तत्र शक्तिरेव । परं तु लोके पचेत इत्यादावपूर्वे तात्पर्यासंभवात् कार्यत्वे लक्षणैव । अथ वा लौकिकलिङः कार्यत्वे शक्तिः । वेदे तु स्वर्गकामान्वयानुपपत्त्या क्रियातिरिक्तकार्ये शक्तिः ( त० प्र० ख० ४ पृ० ११९ ) । भट्टास्तु स्थाय्यपूर्वकल्पनापेक्षया यागस्यैव स्थायित्वं कल्पनीयम् इत्याहुः । चिकीर्षाजन्यकृतिसाध्यत्वं कार्यत्वम् ( न्या० सि० दी० पृ० ६५ ) । कार्यत्वं च कृतिसाध्यत्वम् । तज्ज्ञानमेव प्रवर्तकम् । तच्च ज्ञानम् कृतिसाध्यत्वप्रकारकमित्यर्थः । तेन ज्ञानेन कृतिसाध्यत्वप्रकारिकेच्छा जन्यते । तया च प्रवृत्तिर्जन्यते । सा च पाकं यागं वा कुर्याम् इत्याकारिका चिकीर्षेत्यर्थः ( न्या० म० ) ( म० प्र० पृ० ५९ ) । तत्र प्राभाकरमतान्तर्वर्तिन एवमाहुः । कृतिसाध्यत्वप्रकारकज्ञानं चेष्टसाधनतालिङ्गककृतिसाध्यतानुमितिः इष्टसाधनताज्ञानकालीनकृतिसाध्यताज्ञानं वा काम्यस्थले प्रवर्तकम् । नित्यस्थले च अहरहः संध्यामुपासीत इत्यादौ अहमिदानींतनकृतिसाध्यसंध्यावन्दनकः ब्राह्मणत्वे सति विहितसंध्याकालीनशौचादिमत्त्वात् इति शौचादिमत्त्वप्रतिसंधानजन्यं कृतिसाध्यताज्ञानं प्रवर्तकम् इति ( म० प्र० ख० ४ पृ० ५९ ) ( सि० च० ) । तथा च अहरहः संध्यामुपासीत इत्यादौ नित्यतया निष्फले संध्योपासनादाविष्टसाधनत्वस्यायोग्यत्वेनान्वयासंभवान्नेष्टसाधनत्वमपि लिङर्थोऽपूर्वविधिः । नैयायिकास्तु नित्यकर्मस्थलेपि अर्थ-

वादाद्युपस्थापितब्रह्मलोकावाप्तेर्नरकात्यन्ताभावस्यैव वा प्रायश्चित्तसंध्यावन्दनादिफलत्वसंभवादिष्टसाधनत्वमेव लिङर्थः इति प्राहुः । तत्र स्मर्यते । संध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥ इत्यादि (त० प्र० ४ पृ० १०२)। तथोक्तं याज्ञवल्क्येनापि निशायां वा दिवा वापि यदज्ञानकृतं भवेत् । त्रैकाल्यसंध्याकरणात्तत्सर्वं विप्रणश्यति ॥ (याज्ञ० अ० ३ श्लो० ३०८) इति । मिताक्षरायां यमेनाप्युक्तम् यदह्नात्कुरुते पापं कर्मणा मनसा गिरा । आसीनः पश्चिमां संध्यां प्राणायामैर्निहन्ति तत् ॥ इति । शातातपेनाप्युक्तम् अनृतं मद्यगन्धं च दिवा मैथुनमेव च । पुनाति वृषलान्नं च संध्या बहिरुपासिता ॥ (मिताक्ष० अ० ३ श्लो० ३०८ टी० पृ० १४४) इति । २ प्रयोगः । ३ निदर्शनम् । यथा यत्र धूमस्तत्राग्निरिति अग्न्यभावे धूमो न भवति इति च (प्रश० पृ० ४४)। ४ दैवम् । यथा अनुकूलतामुपगते हि विधौ सकलेष्टसाधनमथो भवति इत्यादौ । ५ ब्रह्मदेवः । ६ अर्थालंकारविशेषः ।

**विधिशेषः**—अर्थवादवाक्यम् । एतल्लक्ष्यप्राशस्त्यज्ञानं शाब्दभावनायामितिकर्तव्यतात्वेन संबध्यते ।

**विधेयः**—१ उद्देश्ये प्रकारतया ज्ञायमानो विलक्षणविषयतावान् पदार्थः । यथा पर्वतो वह्निमान् धूमात् इत्यादौ पर्वते वह्निर्विधेयः । यथा वा पचति इत्यादौ पुरुषे पाककृतिर्विधेया । सा च विलक्षणविषयता विधेयतारूपा । विधेयता च यथा वह्निमनुमिनोमि इत्याद्यनुव्यवसायनियामकः पक्षतावच्छेदकव्यावृत्तो विषयताविशेषः (ग० पक्ष० पृ० १९)। केचित्तु प्रत्यक्षादिसाधारणी विशेष्यतावच्छेदकताभिन्ना मुख्यविशेष्यतानिरूपितप्रकारतैव विधेयता इत्याहुः (ग० पक्ष० पृ० २४) (श० प्र०)। शाब्दिकास्तु तदादिशब्दप्रतिपाद्यत्वे सत्युद्देश्यसंबन्धित्वेनापूर्वबोधविषयत्वम् अनुवाद्यभिन्ननिष्ठा विलक्षणविषयता वा विधेयता इत्याहुः । अत्रोक्तम् अनुवाद्यमनुक्त्वा च न विधेयमुदीरयेत् इति । २ मीमांसकास्तु विधिबोध्यार्थः । यथा दध्ना जुहोति इति गुणविधौ होममनूद्य दधिरूपो गुणो

विधेयः । अत्र विधेयत्वं च अज्ञातस्यानुष्ठेयत्वेन प्रतिपाद्यमानत्वम् (लौ० भा० टी० पृ० १५)। २ अधीन इति काव्यज्ञा आहुः ।

**विनयः**—दण्डः ।

**विनश्यदवस्थत्वम्**—स्वप्रतियोगित्व स्वाव्यवहितपूर्ववृत्तित्व एतदुभयसंबन्धेन नाशविशिष्टत्वम् । यथा भावकार्यस्य विनश्यदवस्थत्वम् ।

**विनष्टः**—१ भूतकालोत्पत्तिकनाशप्रतियोगी । यथा विनष्टो घटः इत्यादौ । २ पतितः । यथा विनष्टे वाप्यशरणे पितर्युपरतस्पृहे इति नारदस्मृतौ । ३ स्वदेशादन्यत्र गतः इति च धर्मशास्त्रज्ञा आहुः (दायभागे)।

**विना**—१ अभावः । यथा दण्डं विना न घटः इत्यादौ । एवम् ऋते अन्तरेण इति निपातयोरप्यर्थ ऊह्यः । अत्र प्रतियोगित्वमनुयोगित्वं वा द्वितीयार्थः । तस्य च विनार्थे अभावेन्वयः । विनान्तार्थस्याभावस्य नञर्थे घटाद्यभावे प्रयोज्यतासंबन्धेनैवान्वयः । अत एव रासभं विना न घटः इत्यादयो न प्रयोगाः (ग० व्यु० का० २ ख० २ पृ० ७३)। २ वर्जनम् इति काव्यज्ञा आहुः ।

**विनाडिका**—विनाडिका तु षट् प्राणाः । अहोरात्रशब्दे दृश्यम् ।

**विनाडी**—(प्राणशब्दे दृश्यम्)।

**विनायकः**—चतुर्थी (पु० चि० ८६)।

**विनाशित्वम्**—ध्वंसप्रतियोगित्वम् । यथा घटस्य विनाशित्वम् । अत्रेदमवधेयम् । आशुविनाशित्वं च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् । यथा यागस्याशुविनाशित्वम् (त० प्र० ख० ४ पृ० १०९)। बौद्धास्तु पदार्थमात्रस्य स्वोत्पत्तिद्वितीयक्षण एव नाशाभ्युपगमात् द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वमेव सर्वत्र विनाशित्वम् इत्याहुः ।

**विनिगमना**—अन्यतरपक्षपातिनी युक्तिः (सि० च०) (भवा०) (त० प्र० ख० ४ पृ० ४७–४८)। यथा अयमेव पक्षो ग्राह्यः पक्षान्तरं तु न ग्राह्यम् अत्र का विनिगमना इत्यत्र । यथा वा उदिते जुहोति अनुदिते जुहोति इत्यादिविकल्पस्थले उदित एव हवनं कार्यम् अनुदिते

तु हवनं न कार्यम् इत्यत्र विनिगमनाया अभावः इत्यादौ । स्मृतिं प्रत्यनुभवस्यानुभवत्वेन कारणत्वं ज्ञानत्वेन वा इति विप्रतिपत्तौ ज्ञानत्वेन कारणत्वाङ्गीकारे तस्य सामान्यधर्मत्वेनान्यथासिद्धत्वं स्यात् इति विनिगमनया लाघवेन च ज्ञानत्वेनैव कारणत्वं नव्यैः साधितम् ( मु० स्मृतिनि० पृ० १९० ) इत्यादौ च ।

**विनिमयः**—१ [ क ] तुल्यद्रव्यदानेन द्रव्यान्तरग्रहणम् ( शब्दच० ) । यथा कांस्यपात्रद्वयं दत्वा तस्मात्ताम्रपात्रग्रहणं विनिमयः । [ ख ] मूल्यातिरिक्तद्रव्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपरस्वत्वानुकूलस्त्यागः इत्यन्य आहुः ( का० व्या० का० ४ पृ० ६ ) । २ बन्धकम् इति व्यवहारशास्त्रज्ञा आहुः । तच्च ऋणशोधनार्थं विश्वासहेतुतया आधीकृतः पदार्थः ( गहाण इति प्र० ) । मध्वमतानुयायिवेदान्तिनः ३ कार्यम् । यथा तेजोवारिमृदां यथा विनिमयः ( भाग० १।१।१ ) इत्यादौ इत्याहुः । ४ अन्यस्मिन्नन्यावभासो विनिमयः इति मायावादिवेदान्तिन आहुः ।

**विनियोगः**—१ क्रियासु प्रवर्तनम् । तदुक्तम् अनेनेदं तु कर्तव्यं विनियोगः प्रकीर्तितः ( वाच० ) इति । यथा इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ( ऋ० १।२।१९ ) इति मन्त्रस्य संस्काराङ्गहोमे विनियोगः । यथा वा अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः इत्यस्य समस्तभूतोच्चाटने विनियोगः । २ अनुष्ठानक्रमविधानम् । यथा आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ( योगयाज्ञ० ) इत्यादौ ।

**विनियोगविधिः**—( विधिः ) [ क ] प्रधाने अङ्गसंबन्धबोधको विधिः । यथा दध्ना जुहोति ( शतपथ० ) इति । अत्र अग्निहोत्रहोमे दधिसंबन्धोनेन बोध्यते ( म० प्र० ४ पृ० ६२ ) । [ ख ] अङ्गानां प्रधानैः सह संबन्धस्य बोधको विधिः । यथा दध्ना जुहोति इति । स हि तृतीयया प्रतिपन्नाङ्गभावस्य दध्नो होमसंबन्धं विधत्ते दध्ना होमं भावयेत् इति । गुणविधौ च धात्वर्थस्य साध्यत्वेनैवान्वयः । तथा च धात्वर्थस्य साध्यत्वेनान्वयविवक्षायामयं गुणविधिरपि भवति इति ज्ञेयम् । क्वचिदाश्रयत्वेनापि । यथा दध्नेन्द्रियकामस्य जुहुयात् इति । अत्र होमाश्रयदधि-

करणत्वेनेन्द्रियं भावयेत् इति वाक्यार्थः । तच्च दधिकरणत्वम् किंनिष्ठम् इत्याकाङ्क्षायां संनिधिप्राप्तहोम आश्रयत्वेनान्वेति (लौ० भा० पृ० १६)। [ग] अङ्गप्रधानसंबन्धबोधको विधिर्विनियोगविधिः (मी० न्या० पृ० १२)। विनियोगविधेः सहकारिभूतानि षट् प्रमाणानि सन्ति श्रुतिः लिङ्गम् वाक्यम् प्रकरणम् स्थानम् समाख्या इति (लौ० भा० पृ० १६—२९)। एतत्सहकृतेनानेन विधिना अङ्गत्वं परोद्देशप्रवृत्तकृतिसाध्यत्वरूपपारार्थ्यापरपर्यायं ज्ञाप्यते ।

**विपक्षः**—१ [क] निश्चितसाध्याभाववान् । यथा पर्वते वह्निसाधने ह्रदो विपक्षः (त० सं० २)। विपक्षत्वं च साध्याभावप्रकारकनिश्चयविशेष्यत्वम् (न्या० बो० २) अथ वा विशेष्यतासंबन्धेन साध्याभावप्रकारकनिश्चयवत्त्वम् (वाक्य० २) इति ज्ञेयम्। [ख] वेदान्तिनस्तु साध्यतत्समानधर्मरहितो धर्मी इत्याहुः (प्र० च० पृ० २४)। २ प्रतिकूलपक्षः इति व्यवहारज्ञा आहुः । ३ शत्रुः इति काव्यज्ञा आहुः (अमरः)।

**विपरीतज्ञानम्**—१ संशयः (नील०)। २ भ्रमः ।

**विपर्ययः**—१ (अप्रमा) [क] मिथ्याज्ञानापरपर्यायः अयथार्थनिश्चयः (गौ० वृ० ४।१।३)। अत्र अयथार्थज्ञानमेव नास्ति इति प्राभाकरादय आहुः (प्र० प० पृ० ४)। [ख] वेदान्तिनस्तु विपरीतनिश्चयः (प्र० प० पृ० ४)। अत्र विपरीतत्वं च पुरोवर्तिन्यविद्यमानप्रकारकत्वम् (प्र० प० टी० वेदेशतीर्था० पृ० १०)। विपरीतनिश्चयश्च प्रत्यक्षानुमानागमाभासेभ्यो जायते। तत्र प्रत्यक्षाभासजो यथा शुक्तिकायां इदं रजतम् इत्यादि । अनुमानाभासजो यथा धूलीपटले धूमभ्रमाद्वह्न्यभाववति वह्न्यनुमितिः । आगमाभासजो यथा नदीतीरे पञ्च फलानि सन्ति इति प्रतारकवाक्यजन्यज्ञानम् इत्याहुः (प्र० च० पृ० ८—९)। अत्र प्रत्यक्षाभासविषये विप्रतिपत्तिः । (१) प्रतीतं रजतं देशान्तरे सदेव इति वैशेषिकादय आहुः । (२) ज्ञानस्वरूपमेव इति विज्ञानवादिन आहुः । (३) तत्रैव तात्कालिकमुत्पन्नं सत् इति भास्कर आह ।

(४) न सत् नासत् न सदसत् किं तु अनिर्वचनीयमेव इति मायावादिनो मन्यन्ते। (५) श्रीमदानन्दतीर्थाचार्यास्तु असदेव रजतं प्रत्यभात् इत्युत्तरकालीनानुभवात् शुक्तिरेवात्यन्तासद्रजतात्मना द्रष्टुर्दोषवशात् प्रतिभाति इति प्राहुः (प्र० प० पृ० ४)। [ग] पातञ्जलास्तु पञ्चविधवृत्त्यन्तर्गतो वृत्तिविशेष इत्याहुः (पात० सू० पा० १ सू० ६, ८)। २ संशयः। ३ विपरीतम्। यथा विपर्ययोभूत्सकलं जलौकसः (भाग० स्क० ८ अ० २ श्लो० २९) इत्यादौ।

**विपाकः**—१ अन्यथाभूतस्यान्यरूपेण परिणामः (वाच०)। २ विपाकाः कर्मफलानि जात्यायुर्भोगाः (सर्व० सं० पृ० ३६५ पात०)।

**विप्रः**—१ विद्वान् ब्राह्मणः। अत्रोक्तम् जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते। विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते॥ (प्रा० वि०) (वाच०) इति। यथा विप्राय वेदविदुषे श्रोत्रियाय कुटुम्बिने। नरकोत्तारणार्थाय अच्युतः प्रीयतामिति॥ (वायनमन्त्रः) इत्यादौ विप्रः। २ अश्वत्थवृक्षः (राजनि०)।

**विप्रकर्षः**—[क] संयुक्तसंयोगभूयस्त्वम् (दूरत्वम्) (वै० उ० ७।२।२१)। [ख] बहुतरसंयोगान्तरितत्वम् (दि० गु० पृ० २०८)। यथा मुम्बापुर्याः पुण्यग्राममपेक्ष्य झळकीग्रामस्य विप्रकर्षः। अयं दिक्कृतो विप्रकर्षः इति विज्ञेयम्। विप्रकर्षो द्विविधः दिक्कृतः कालकृतश्च। विप्रकर्षज्ञानं परत्वे निमित्तकारणं भवति। कालकृतविप्रकर्षश्च तदपेक्षया बहुतरतपनपरिस्पन्दान्तरितजन्मत्वम् (वै० उ० ७।२।२१)। तदर्थश्च तज्जन्मक्षणवृत्तिध्वंसप्रतियोगिस्पन्दवृत्तित्वे सति जन्मवत्त्वम् इति (प० मा०)। यथा गौतमर्षेरुदयनाचार्यमपेक्ष्य गङ्गेशोपाध्यायगदाधरभट्टाचार्ययोर्विप्रकर्षः। शिष्टं च परत्वशब्दव्याख्याने दृश्यम्।

**विप्रकृष्टत्वम्**—[क] विप्रकर्षः। [ख] दूरस्थत्वम् इत्येकदेशिन आहुः।

**विप्रतिपत्तिः**—१ [क] व्याहतमेकार्थदर्शनं विप्रतिपत्तिः। इदं च संशयप्रयोजकम्। तथा हि अत्र व्याघातो विरोधोसहभाव इति। अस्त्यात्मा इत्येकं दर्शनम्। नास्त्यात्मा इत्यपरम्। न च सद्भावासद्भावौ सहैकत्र

संभवतः । न चान्यतरसाधको हेतुरुपलभ्यते । तत्र तत्त्वानवधारणं संशयः ( वात्स्या० १।१।२३ ) इति । [ ख ] वेदान्तिनस्तु विरुद्धार्थकवाक्यद्वयजन्यप्रतीतिद्वयम् इत्याहुः ( प्र० प० टी० वेदेशतीर्थी० पृ० ८ ) । [ ग ] विरुद्धकोटिद्वयोपस्थापकः शब्दः ( गौ० वृ० १।१।२३ ) ( दि० गु० ) । स च विरुद्धार्थप्रतिपादकवाक्यद्वयात्मकः पर्वतो वह्निमान् न वा इति संशयापादकः । [ घ ] विरुद्धार्थप्रतिपादकवाक्यद्वयम् ( नील० ४ पृ० ३४ ) । यथा पर्वतो वह्निमान् न वा इति वाक्यद्वयम् । तथा हि । वादिना पर्वतो वह्निमान् इति प्रतिवादिना च पर्वतो वह्न्यभाववान् इति प्रतिज्ञाते मध्यस्थस्य पर्वतो वह्निमान् न वा इति संशय उत्पद्यते । अतस्तस्य संशयाधायकत्वात्तथात्वम् । २ [ क ] विपरीता वा कुत्सिता वा प्रतिपत्तिः विप्रतिपत्तिः । विप्रतिपद्यमानः पराजयं प्राप्नोति । निग्रहस्थानं खलु पराजयप्राप्तिः ( वात्स्या० १।२।१९ ) । [ ख ] विरुद्धा प्रतिपत्तिः ( गौ० वृ० १।२।१९ ) ( दि० गु० ) । अत्रोदाह्रियते परस्परं मनुष्याणां स्वार्थे विप्रतिपत्तिषु ( स्मृतिः ) इति । इयं तु निग्रहस्थानोन्नेया इति विज्ञेयम् । ३ विरोधः । ४ ऊहः इति याज्ञिका आहुः ( कात्या० श्रौ० ) ।

**विप्रतिषेधः**—१ तुल्यबलविरोधः । यथा प्रतिषेधविप्रतिषेधे प्रतिषेधवद्दोषः ( गौ० ५।१।४१ ) इत्यादौ । अत्र भाष्यम् । योयं प्रतिषेधेपि समानो दोषोनैकान्तिकत्वमापद्यते सोयं प्रतिषेधस्य प्रतिषेधेपि समानः । तत्र अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् इति साधनवादिनः स्थापना प्रथमः पक्षः । प्रयत्नकार्यानेकत्वात्कार्यसमः इति दूषणवादिनः प्रतिषेधहेतुना द्वितीयः पक्षः । स च प्रतिषेध इत्युच्यते । तस्यास्य प्रतिषेधस्य प्रतिषेधेपि समानो दोषः इति तृतीयः पक्षः विप्रतिषेध इत्युच्यते । तस्मिन् प्रतिषेधविप्रतिषेधेपि समानो दोषोनैकान्तिकत्वम् चतुर्थः पक्षः ( वात्स्या० ५।१।४१ ) । अत्र वृत्तिः । शब्दः अनित्यः प्रयत्नानन्तरीयकत्वात् इति स्थापनावादिनः प्रथमः पक्षः । प्रयत्नकार्यानेकत्वात्कार्यसमः इति प्रतिवादिनो द्वितीयः पक्षः । प्रतिषेधप्रतिषेधेप्यनैकान्तिकत्वं तुल्यम् इति वादिनस्तृतीयः पक्षो

विप्रतिषेधः । तत्रापि तथैवानैकान्तिकत्वम् तत्समानदोषोद्भावनं वा चतुर्थः पक्षः ( गौ० वृ० ५।१।४१ ) इति । २ शाब्दिकास्तु द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र प्रयोगे युगपदसंभविस्वकार्यसमर्पणम्। यथा विप्रतिषेधे परं कार्यम् ( पा० सू० १।४।२ ) इत्यादौ इति वदन्ति । तथा हि । वृक्षेभ्य इत्यत्र सुपि च ( पा० सू० ७।३।१०२ ) इत्यनेन दीर्घः प्राप्तः । बहुवचने झल्येत् ( पा० सू० ७।३।१०३ ) इत्यनेन च एत्वमपि प्राप्तम् । उभयप्राप्तौ परत्वाद्विप्रतिषेधेनैत्वमेव भवति ( काशिका १।४।२ ) इति ।

**विभक्तिः**—१ विभागः । अत्रोदाह्रियते अविभक्तं स्थावरं यत्सर्वेषामेव तद्भवेत् । विभक्तं स्थावरं प्राह्यं नान्योदर्यैः कथंचन ॥ ( यम० ) इति । २ पदवृत्तिः ( गौ० वृ० २।२।५७ ) । यथा ते विभक्त्यन्ताः पदम् ( गौ० २।२।५७ ) इत्यादौ विभक्तिशब्दार्थः । ३ ( प्रत्ययः ) [ क ] संख्यात्वावान्तरजात्यवच्छिन्नशक्तिमान् यः प्रत्ययः सा विभक्तिः । यथा घटोस्तीत्यत्र घटपदोत्तरवर्तिनी सु इति विभक्तिः । एकत्वत्वाद्यवच्छिन्नशक्तिमानपि तदादिर्न प्रत्ययः इति प्रत्ययश्च तृजादिर्न संख्याशक्तः इति च तदादेः तृजादेश्च व्युदासः ( श० प्र० श्लो० ६० टी० पृ० ७२ )। [ ख ] यः शब्दः स्वार्थे धर्मिणि स्वप्रकृत्यर्थविधेयकान्वयबोधं प्रति समर्थः स वा विभक्तिरित्युच्यते । यथा घटम् घट इत्यादौ । इयं विभक्तिर्द्विविधा सुप् तिङ् चेति । अत्र सुपा ( अमा ) कर्मत्वं घटीयम् इत्यादिरिव पचतीत्यादौ तिङापि कृतिः पाकीया इत्यादिरुद्देश्यविधेयभावेन स्वार्थे प्रकृत्यर्थस्य धीरुत्पाद्यते इति लक्षणसमन्वयो बोध्यः । घट इत्यत्र प्रथमाप्यभेदादौ स्वार्थे प्रकृत्यर्थस्य विधेयभावेन धियं जनयत्येव इति लक्षणसमन्वयो बोध्यः । लक्षणान्तरग्रहणे आवश्यकत्वमाह यद्याख्यातमात्रस्य तदेकवचनस्य वा न संख्याशक्तत्वे प्रमाणम् तदेदं लक्षणान्तरम् इत्यवधेयम् ( श० प्र० श्लो० ६१ टी० पृ० ७३ ) । विभक्तिर्द्वयी नामिकी आख्यातिकी च । तत्र नामिकी सुप् । आख्यातिकी तिङ् । ब्राह्मणः पचतीत्युदाहरणम् । उपसर्गनिपातास्तर्हि न पदसंज्ञाः । लक्षणान्तरं

वाच्यमिति । शिष्यते च खलु नामिक्या विभक्तेरव्ययाल्लोपः तयोः पदसंज्ञार्थमिति (वात्स्या० २।२।५७) ।

**विभजनम्**—[ क ] सामान्यधर्मावान्तरधर्मपुरस्कारेण धर्मिप्रतिपादनम् (ग० २ सव्य०)। [ ख ] सामान्यधर्मस्य साक्षान्न्यूनवृत्तियावद्धर्मप्रकारकज्ञानानुकूलो व्यापारः (वाक्य० १ पृ० २)। स्वसमभिव्याहृतपदार्थतावच्छेदकसाक्षाद्व्याप्यपरस्परविरुद्धधर्मप्रकारकज्ञानानुकूलशब्दप्रयोगः इत्यर्थः। यथा द्रव्यं विभजते इति प्रतिज्ञाय कृतं पृथिव्यापस्तेजो वायुराकाशम् इत्यादिविभजनम् । [ ग ] सामान्यधर्मयुतानां बहूनां परस्परविरुद्धतद्व्याप्यधर्मप्रकारेण प्रतिपादनम् (श्रीकृष्णः) (वाच०)।

**विभवः**—१ विभुत्वम् (वै० उ० ७।१।२२)। यथा विभवान्महानाकाशस्तथा चात्मा (वै० ७।१।२२) इत्यादौ। २ रामाद्यवतारो विभवः इति रामानुजीया वदन्ति (सर्व० पृ० ११५ रामा०)। ३ संवत्सरविशेषः इति मौहूर्तिका वदन्ति। ४ मोक्षः इति वेदान्तिन आहुः। ५ ऐश्वर्यम् इति काव्यज्ञा आहुः।

**विभागः**—१ (गुणः) [ क ] संयोगनाशको गुणः। स च सर्वद्रव्यवृत्तिः अव्याप्यवृत्तिश्च (नील०) (त० सं०)। प्रतियोगितासंबन्धानवच्छिन्ननाशनिष्ठजन्यतानिरूपितजनकतावान् इत्यर्थः इति केचिदाहुः। तेन संयोगस्यापि स्वनाशं प्रति प्रतियोगिविधया कारणत्वेपि संयोगे नातिव्याप्तिः इति विज्ञेयम् । परे तु संयोगनाशत्वावच्छिन्ननिरूपितसमवायावच्छिन्नकारणतावान् इत्यर्थः इत्याहुः (नील० १ पृ० १४)। अयमस्माद्विभजते इति प्रत्यक्षसिद्धोयं विभागगुणः। अतः संयोगनाशेन नान्यथासिद्धः इति ज्ञेयम् (वै० वि० ७।२।१० पृ० ३३२)। अत्राधिकं च एतेन विभागो व्याख्यातः (वै० ७।२।१०) इति सूत्रोपस्कारे दृश्यम्। [ ख ] विभक्तव्यवहारासाधारणकारणम् (मु० गु० पृ० २०७)। (प्र० प्र०)। [ ग ] विभक्तप्रत्ययनिमित्तम् । स च प्राप्तिपूर्विका अप्राप्तिः (प्रशस्त० गु० पृ० ३२)। [ घ ] विभागत्वसामान्यवान् (त० कौ०)। स द्विविधः कर्मजः विभागजश्च (त० दी०)। तत्र

कर्मजो द्विविधः अन्यतरकर्मजः द्विकर्मजश्च । तत्राद्यः श्येनशैलयोर्विभागः । द्वितीयो मेषयोर्विभागः । विभागजोपि द्विधा कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्च । तत्रादिमो यथा कपालद्वयविभागात्कपाल-पूर्वदेशविभागः । द्वितीयस्तु यथा हस्तपुस्तकविभागात्कायपुस्तकविभागः ( भा० प० गु० श्लो० १२०–१२१ ) इति । अत्र द्वितीयविभागे कायकारणस्य हस्तस्य तदकारणस्य पुस्तकस्य च विभागेन हस्तकार्यस्य कायस्य तदकार्यस्य पुस्तकस्य च विभागः इति ज्ञेयम् ( त० व० ) । अत्रेदमाकूतम् । यदा हस्ते कर्मोत्पन्नमवयवान्तराद्विभागमकुर्वदाकाशा-दिदेशेभ्यो विभागानारभ्य प्रदेशान्तरे संयोगानारभते तदा ते कारणा-कारणविभागाः कर्म यां दिशं प्रति कार्यारम्भाभिमुखं तामपेक्ष्य कार्या-कार्यविभागानारभन्ते । तदनन्तरं कारणाकारणसंयोगाच्च कार्याकार्य-संयोगान् आरभन्ते यदि कारणविभागानन्तरं कार्यविभागोत्पत्तिः कार-णसंयोगानन्तरं कार्यसंयोगोत्पत्तिः ( सर्व० पृ० २२८ औलु० ) ( प्रशस्त० गु० पृ० ३३ ) इति । अन्यत्र चैवमुक्तम् । यत्र हस्तक्रियया हस्ततरुविभागः तेन शरीरतरुविभागो जायते । तत्र च शरीरतरुविभागे हस्तक्रिया न कारणम् । व्यधिकरणत्वात् । शरीरे तु तदा क्रिया नास्ति । अवयवक्रियाया यावदवयवक्रियानियतत्वात् । अतस्तत्र कारणाकारण-विभागेन कार्याकार्यविभागो जन्यते इति । अत एव विभागो गुणान्तरम् । अन्यथा शरीरे विभक्तप्रत्ययो न स्यात् ( वै० वि० ७।२।१० ) ( मु० गु० पृ० २०८ ) इति । अत्रेदं बोध्यम् । कार्याविष्टे ( कार्यव्याप्ते ) कारणे कर्मोत्पन्नं यदा तस्यावयवान्तराद्विभागं करोति न तदा आका-शादिदेशात् । यदा त्वाकाशादिदेशाद्विभागं करोति न तदा अवयवान्त-रात् इति स्थितिः (सर्व० पृ० २२६ औलु०) (त० व० पृ० २२४) ( प्रशस्त० गु० पृ० ३२ ) । तथा च प्रथमं यत्रैककपाले कर्म ततः कपालद्वयविभागः ततो घटारम्भकसंयोगनाशः ततो घटनाशः ततस्तेनैव कपालद्वयविभागेन सकर्मणः कपालस्याकाशादिना विभागो जायते ततः कपालाकाशादिसंयोगनाशः तत उत्तरदेशसंयोगः ततः कर्मनाशः ( मु० गु० पृ० २०७ ) (वै० वि० ७।२।१०) इति । अत्र भाष्यम्

विभागः शब्दस्य विभागस्य च हेतुर्भवति ( प्रशस्त० गु० पृ० ३२ ) इति । तत्र विभागः शब्दस्य हेतुर्यथा वंशे पाट्यमाने यः चटचटाशब्दः स विभागजन्यः । तत्र वंशदलद्वयाकाशविभागः असमवायिकारणम् वंशदलद्वयविभागो निमित्तकारणम् इति विज्ञेयम् ( त० कौ० गु० पृ० १९ ) । विभागस्य विभागहेतुत्वं तु समनन्तरमेवोक्तम् । अत्र विनाशस्तु सर्वस्य विभागस्य क्षणिकत्वात् उत्तरसंयोगावधिसद्भावात् । कचित् आश्रयविनाशादेव विनश्यति ( प्रशस्त० गु० पृ० ३४ ) । तथा हि यदा द्वितन्तुककारणावयवेंशौ कर्मोत्पन्नमंश्वन्तराद्विभागमारभते तदैव तन्त्वन्तरेपि कर्मोत्पद्यते विभागाच्च तन्त्वारम्भकसंयोगविनाशः तन्तुकर्मणा तन्त्वन्तराद्विभागः क्रियते इत्येकः कालः । ततो यस्मिन्नेव काले विभागात्तन्तुसंयोगविनाशः तस्मिन्नेव काले संयोगविनाशात्तन्तु-विनाशः । तस्मिन्विनष्टे तदाश्रितस्य तन्त्वन्तरविभागस्य विनाशः ( प्रशस्त० गु० पृ० १९ ) इति । अन्यत्र चैवमुक्तम् । विभागश्च क्षणत्र-यावस्थायी भवति । स च कचित् उत्तरदेशसंयोगात् कचिदाश्रयनाशात् कचिदुभाभ्यां च नश्यति ( त० व० २०७ ) ( त० दी० ) ( सि० च० ) ( प्रशस्त० पृ० १८ ) इति । २ विभजनम्. ( वाक्य० पृ० २ ) । ३ [ क ] व्यवहारशास्त्रज्ञास्तु द्रव्यसमुदायविषयाणामनेक-स्वाम्यानां तत्तदेकदेशे व्यवस्थापनम् ( मिताक्षरा अ० २ श्लो० ११६ टी० पृ० ६१ ) । यथा विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् । ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥ ( याज्ञ० अ० २ श्लो० ११७ ) इत्यादौ ( वीरमित्रो० अ० २ पृ० ५२२ ) इत्याहुः । श्रेष्ठादिविभागश्च मनुनोक्तः ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् । ततोर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः ॥ ( मनु० अ० ९ श्लो० ११२ ) ( आपस्त-सू० २।६।१४।७ ) इति । [ ख ] अन्ये व्यवहारशास्त्रज्ञास्तु पूर्वस्वामिस्वत्वनाशोत्तरं तत्संबन्धाधीनत्वेन जातस्वत्वस्य व्यञ्जको व्यापार-विशेष इत्याहुः ( वाच० ) । ४ कार्यकारणयोगविधिदुःखान्तानां यथा-संभवं लक्षणतः असंकरेणाभिधानं विभागः ( सर्व० सं० पृ० १७१ नकुली० ) ।

**विभाजकोपाधिः**—सामान्यधर्मसाक्षाद्व्याप्यो धर्मः ( मू० म० ) । यथा ज्ञानविभाजकोपाधिर्भ्रमत्वं प्रमात्वं च । यथा वा द्रव्यविभाजकोपाधिः पृथिवीत्वजलत्वतेजस्त्वादिः । अत्र साक्षाद्व्याप्यत्वं च तद्व्याप्याव्याप्यत्वे सति तद्व्याप्यत्वम् ।

**विभु**—अनवच्छिन्नसद्भावं वस्तु यद्देशकालतः । तन्नित्यं विभु चेच्छन्तीत्या-त्मनो विभुनित्यता ॥ ( सर्व० सं० पृ० १८१ शै० ) ।

**विभुत्वम्**—१ [ क ] सर्वगतत्वम् ( गौ० वृ० ४।२।२० ) । [ ख ] परममहत्परिमाणवत्त्वम् ( मु० १ ) । [ ग ] मूर्तेतरद्रव्यत्वम् ( त० प्र० १ ) । [ घ ] सर्वमूर्तद्रव्यसंयोगित्वम् । यथा आकाशस्य विभुत्वम् ( त० दी० १ पृ० १० ) ( वाक्य० १ पृ० ५ ) ( न्या० बो० १ पृ० ३ ) । विभवश्चत्वारः आकाशः कालः दिक् आत्मा चेति ( भा० प० श्लो० २६ ) । अत्रेदं बोध्यम् विभुकार्यं स्वासमवायिकारणा-वच्छिन्नदेशे उत्पद्यते ( वै० उ० ३।२।१ ) इति। विभुद्वयसंयोगश्च सिद्धान्ते नाङ्गीक्रियते । अन्यथा सुषुप्तिर्न प्राप्नुयात् । २ ईशत्वादिगुण-विशिष्टत्वम् इति वेदान्तिप्रभृतय आहुः ।

**विभुविशेषगुणत्वम्**—अकारणगुणोत्पन्नगुणत्वम् ( भा० प० गु० श्लो० ९५ ) ( प० मा० ) ।

**विमतम्**—१ वादिप्रतिवादिनोर्विवादविषयीभूतम् । यथा विमतम् जगत् मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाद्वा शुक्तिरजतवत् इत्यादौ । अत्र मायावादिमतसिद्धानुमाने जगतः सत्यत्वमिथ्यात्वाभ्यां विवादः ( विप्रति-पत्तिः ) । २ विरुद्धमतियुक्तम् । यथा विमतम् ( मायावादिमतम् ) अनारम्भणीयम् अन्यथाप्रतिपादकत्वात् बौद्धादिशास्त्रवत् इत्यादौ ( माया-वादख० ) । ३ संदिग्धम् ।

**विमर्शः**—१ विरोधविषयकं ज्ञानम् । यथा विमर्शः संशयः ( गौ० १।१।२३ ) इत्यादौ । २ विचार इति काव्यज्ञा वदन्ति । ३ वितर्कः ( हेमच० ) । ४ नाटकाङ्गसंधिविशेषः इति नाटकलक्षणज्ञा आहुः । तदुक्तम् यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोधिकः । शापाद्यैः सान्तरायश्च स विमर्श

इति स्मृतः ॥ ( सा० द० परि० ६ श्लो० ७९ ) इति । ५ तस्य चिद्रूपत्वमनवच्छिन्नविमर्शत्वमनन्योन्मुखत्वमानन्दैकघनत्वं माहेश्वर्यमिति पर्यायः । स एव ह्ययं भावात्मा विमर्शः ( सर्व० सं० पृ० १९६ प्रत्यमि० ) ।

**विमलः**—चतुष्पञ्चाशदधिकशतत्रयम् ( अतलशब्दे दृश्यम् ) ।

**विमलीकरणम्**—संचिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत् । मन्त्रे मलत्रयं मन्त्री विमलीकरणं हि तत् ॥ ( सर्व० सं० पृ० ३७० पात० ) ।

**विमोकः**—कामानभिष्वङ्गः ( सर्व० सं० पृ० १२४ रामानु० ) ।

**विमोक्षः**—१ निःश्रेयसशब्दवदस्यार्थोनुसंधेयः । यथा निखिललोकविमोक्षमुख्योपायम् ( न्या० म० १ ) इत्यादौ ( त० प्र० १ ) । २ मोचनम् ।

**विरहः**—१ अत्यन्ताभावः । यथा अथ वा हेतुमन्निष्ठविरहाप्रतियोगिना । साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ( भा० प० २ श्लो० ७० ) इत्यादौ । यथा वा अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ( कु० ३।१ ) इत्यादौ । २ शृङ्गाररसस्य विप्रलम्भाख्योवस्थाविशेषः इति रसिकजना वदन्ति ।

**विरामः**—१ [ क ] प्रागभावसाधारणकृत्यभावस्यानुकूलो व्यापारः । यथा धर्माद्विरमतीत्यादौ विरमतेरर्थः । स च व्यापारोत्र धर्मविषयोपेक्षाविशेष एव । [ ख ] जीवनकालावच्छिन्नः कृत्यसमानाधिकरणकृतिध्वंसः इति केचिदाहुः ( ल० म० सुबर्थ० कार० ५ पृ० १०८ ) । २ वर्णाभावः इति शाब्दिका आहुः । अत्र सूत्रम् विरामोवसानम् ( पाणि० १।४।११० ) इति । ३ विरतिः । ४ निवृत्तिश्च इति काव्यज्ञा आहुः ।

**विरुद्धः**—( हेत्वाभासः ) [ क ] सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ( गौ० १।२।६ ) । यत्र वक्ष्यमाणो विरोधः वक्ष्यमाणं विरुद्धत्वं चास्ति स विरुद्धः इति परमार्थः ( त० भा० ) ( वाक्य० ) । तार्किकरक्षायां तु विरुद्धः स्याद्वर्तमानो हेतुः पक्षविपक्षयोः ( ता० र० श्लो० ८२ ) इत्युक्तम् । अत्र भाष्यम् । तं विरुणद्धीति तद्विरोधी । अभ्युपेतं सिद्धान्तं

व्याहन्तीति । यथा सोयं विकारो व्यक्तेरपैति नित्यत्वविरोधादपेतोप्यस्ति विनाशप्रतिषेधान्न नित्यो विकार उपपद्यते । इत्येवं हेतुर्व्यक्तेरपेतोपि विकारोस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते । कथम् । व्यक्तिरात्मलाभः । अपायः प्रच्युतिः । यद्यात्मलाभात्प्रच्युतो विकारोस्ति नित्यत्वप्रतिषेधो नोपपद्यते । व्यक्तेरपेतस्यापि विकारस्यास्तित्वं तत्खलु नित्यत्वमिति । नित्यत्वप्रतिषेधो नाम विकारस्यात्मलाभात्प्रच्युतेरुपपत्तिः । यदात्मलाभा-त्प्रच्यवते तदनित्यं दृष्टम् । यदस्ति न तदात्मलाभात्प्रच्यवते । अस्तित्वं चात्मलाभात्प्रच्युतिरिति च विरुद्धावेतौ न सह संभवत इति । सोयं हेतु-र्यत्सिद्धान्तमाश्रित्य प्रवर्तते तमेव व्याहन्तीति ( वात्स्या० १।२।६ ) । वृत्तिकार इदं सूत्रमित्थं व्यवृत । अत्र च सिद्धान्तं साध्यम् । प्रतिज्ञाय हि पक्षस्य सिद्धस्यान्ते साध्यमभिधीयते । तथा च साध्यमभ्युपेत्योद्दिश्य प्रयुक्तस्तद्विरोधी साध्याभावव्याप्त इति फलितार्थः । यथा वह्निमान् ह्रदत्वादिति । एतस्य साध्याभावानुमितिसामग्रीत्वेन साध्यानुमितिप्रतिबन्धो दूषकताबीजम् । न च सत्प्रतिपक्षाविशेषः । यतः तत्र हेत्वन्तरं साध्या-भावसाधकम् । इह तु हेतुरेक एव इति विशेषः । साध्याभावसाधक एव हेतुः साध्यसाधकत्वेन त्वयोपन्यस्तः इत्यशक्तिविशेषोन्नायकत्वेन विशे-षश्च ( गौ० वृ० १।२।६ ) ( मु० २ हेत्वा० पृ० १६० ) इति । अत्रायमाशयः । वस्तुगत्या साध्याभावसाधके हेतावेव तव साध्यसाधकत्व-भ्रमः इति स्थापनावादिनं प्रति भ्रमरूपाशक्तिसूचकत्वं विरुद्धस्य । न त्वेवं सत्प्रतिपक्षस्य इति विरुद्धसत्प्रतिपक्षयोर्भेदः ( दि० २ पृ० १६० ) इति । [ ख ] यो ह्यनुमेये विद्यमानेपि तत्सजातीये सर्वस्मिन्नास्ति तद्विपरीते चास्ति स विपरीतसाधनाद्विरुद्धः । यथा यस्माद्विषाणी तस्मादश्वः इति ( प्रशस्त० २ पृ० २९ ) । [ ग ] विपरीतव्याप्तिकश्च विरुद्धः ( वै० उ० ३।१।१५ ) । [ घ ] साध्याभावव्याप्तो हेतुः । यथा अयं गौरश्वत्वात् इति ( त० कौ० ) ( त० सं० ) । अत्र च यत्र यत्राश्वत्वं तत्र तत्र गोत्वाभावः इति साध्याभावव्याप्तेः सत्त्वादश्वत्वं हेतुर्विरुद्धः । विरुद्धत्वज्ञानं च साक्षादनुमितिप्रतिबन्धकम् । गोत्वाभावव्याप्ताश्वत्ववत्ता-ज्ञाने सति गोत्वनिश्चयासंभवात् ( त० कौ० २ ) । तेन हेत्वाभास-

लक्षणं संपद्यते । [ ङ ] साध्यासमानाधिकरणसाध्याभावव्याप्यः । साध्यवदन्योन्याभावव्याप्तो वा ( चि० २ हेत्वाभा० पृ० ९० ) ( न्या० म० २ पृ० २०–२१ ) । यथा शब्दो नित्यः कार्यत्वादित्यादौ कार्यत्वादिर्हेतुर्विरुद्धः ( त० भा० ) ( भा० प० ) ( मु० ) ( वै० वि० ३।१।१५ ) ( त० सं० ) ( वाक्य० ) । यथा वा गौरश्वत्वादित्यादावश्वत्वं विरुद्धम् ( न्या० म० २ पृ० २१ ) । अत्र साध्याभावत्वं साध्यविरोधित्वमात्रं भावाभावसाधारणम् । तेन अभावे साध्ये अभावाभावस्य भावत्वेपि नाव्याप्तिः ( चि० २ हेत्वा० पृ० ९० ) । साध्याभावव्याप्तिश्च साध्याभावस्य पूर्वपक्षीयान्वयव्याप्तिः । सा तु साध्यवदवृत्तिमत्त्वम् इति प्राञ्चः मणिकारादयः आहुः । इदमेव साध्यासमानाधिकरण्यरूपं विरुद्धत्वम् । दीधितिकारादयो नव्यास्तु साध्याभावस्य व्यतिरेकव्याप्तिः । सा तु प्रकृतहेतुनिष्ठं साध्यव्यापकाभावप्रतियोगित्वम् इति वदन्ति । इदं च प्राचीनमते असाधारण्यमेव इति ज्ञेयम् । तथा च प्राचीनमणिकृन्मते साध्यवदवृत्तित्वस्य विरुद्धत्वरूपत्वेपि असाधारण्यस्य निश्चितसाध्यवदवृत्तित्वरूपतया तयोर्नाभेदः । नवीनदीधितिकारमते तु साध्याभावनिरूपिताया व्यतिरेकव्याप्तेः ( साध्यव्यापकीभूताभावप्रतियोगित्वस्य ) विरुद्धत्वरूपत्वेपि साध्यवदवृत्तित्वस्यासाधारण्यतया नासाधारण्यविरुद्धत्वयोरभेदः इति विवेको द्रष्टव्यः ( नील० २ पृ० २५ ) । सत्प्रतिपक्षस्तु साध्याभावव्याप्यं हेत्वन्तरमेव इति तु सर्वेषां नैयायिकानां सिद्धान्तः इति सूक्ष्मतरमेतत् । स चायं विरुद्धः विधिसाधने त्रिविधः ( १ ) साक्षात्साध्याभावव्याप्यत्वात् ( २ ) साध्यव्यापकाभावव्याप्यत्वात् ( ३ ) साध्यव्यापकविरुद्धोपलम्भाच्च । यथा ( १ ) अधूमवानयं योग्यधूमवत्तया अनुपलभ्यमानत्वात् ( २ ) निरग्निकत्वात् ( ३ ) जलाशयत्वात् इति । निषेधसाधनेपि त्रिविधः ( १ ) प्रतियोग्युपलम्भात् ( २ ) साध्यव्यापकाभावोपलम्भात् ( ३ ) साध्यव्यापकविरुद्धोपलम्भाच्च । यथा ( १ ) निरग्निकोयमग्निमत्त्वात् ( २ ) धूमाभावशून्यत्वात् ( ३ ) धूमवत्त्वात् ( चि० २ पृ० ९४ ) इति ।

**विरुद्धत्रिकद्वयम्**—उपादेयत्वम् विधेयत्वम् गुणत्वं चेत्येकं त्रिकम् । उद्देश्यत्वम् अनुवाद्यत्वम् मुख्यत्वं चेत्यपरं त्रिकम् ( जै० न्या० अ० १ पा० ४ अधि० ६ ) ।

**विरुद्धत्वम्**—१ ( हेतुदोषः ) विपक्षमात्रस्पर्शित्वम् । साध्याभावव्याप्तिर्विरुद्धत्वम् इति परमार्थः ( त० भा० ) ( वाक्य० ) । व्याप्तिश्चात्र अन्वयव्याप्तिः पूर्वपक्षीया साध्यवदवृत्तित्वरूपा ( साध्यासामानाधिकरण्यम् ) इति प्राञ्चो मणिकारादय आहुः । नव्या दीधितिकारादयस्तु साध्याभावस्य व्याप्तिस्तु व्यतिरेकव्याप्तिः साध्यव्यापकाभावप्रतियोगित्वरूपा इत्याहुः ( नील० २ पृ० २५ ) ( दीधि० २ हेत्वाभा० पृ० १९७ ) । अथ वा साध्यासामानाधिकरण्यादि । अत्रायमर्थः । साध्यासमानाधिकरणत्वं च साध्यानधिकरणे हेतोर्वर्तमानत्वम् न तु साध्याधिकरणे हेतोरवर्तमानत्वम् । अतः न वह्निमानाकाशादित्यत्र स्वरूपासिद्धेतिव्याप्तिः ( म० प्र० २ पृ० २६ ) इति । इदं विरुद्धत्वं च मणिकृन्मताभिप्रायेणास्ति अन्वयव्याप्तिग्रहविरोधि च भवति इति विज्ञेयम् ( दीधि० २ पृ० १९७ ) ( न्या० म० २ पृ० २० ) । साध्यव्यापकाभावप्रतियोगित्वम् । वृत्तिमतः साध्यवदवृत्तित्वम् । साध्यवद्वृत्तित्वानधिकरणत्वम् । साध्यासमानाधिकरणधर्मत्वम् । साध्यवद्वृत्तित्वानधिकरणधर्मत्वं वा ( चि० पृ० ९२–९३ ) । यथा गौरश्वत्वादित्यादौ ( न्या० म० ) । यथा वा ह्रदो वह्निमाञ्जलादित्यत्र जलस्य विरुद्धत्वम् । २ विरोधित्वशब्दवदस्यार्थोनुसंधेयः ( न्या० सि० दी० पृ० ५६ ) ।

**विरोधः**—१ इष्टार्थभङ्गः ( निग्रहस्थानम् ) ( त० भा० पृ० ५१ ) । २ क्वचित् तद्वत्ताग्रहप्रतिबन्धकज्ञानविषयत्वम् ( ग० सत्प्र० ) । यथा ह्रदे वह्निमत्ताग्रहप्रतिबन्धकनिश्चयविषयस्य वह्न्यभाववद्ध्रदस्य ह्रदो वह्निमान् इत्यनेन सह विरोधः । ३ विरुद्धत्वम् ( त० भा० ) ( वाक्य० ) । ४ विरोधित्वम् ( दीधि० २ ) ( ग० बाध० ) । ५ परस्पराभावव्याप्यत्वाविशेषितयोः परस्परज्ञानप्रतिबन्धकीभूतज्ञानविषयत्वम् । अयं च स्वरूपतो विरोधः इत्युच्यते ( ग० सव्य० ) । यथा घटघटाभावयो-

र्विरोधः । ६ विपरीतार्थकत्वम् । यथा विरोधे त्वनपेक्षं स्यात् असति ह्यनुमानम् ( जै० १।३।३ ) इत्यादौ औदुम्बर्याः सर्ववेष्टनं औदुम्बरीं स्पृष्ट्वोद्गायेत् इति श्रुत्या विरुद्धम् ( शाब० भा० ) । ७ अर्थालंकारविशेषः इत्यालंकारिका आहुः । ८ संवत्सरविशेषः इति ज्योतिषज्ञा वदन्ति । ९ वैरम् इति काव्यज्ञा आहुः ।

**विरोधित्वम्**—[ क ] सहानवस्थायित्वम् ( दीधि० २ ) । यद्येन सह न प्रतीयते तत्तेन सह विरुद्धं यत् तत्त्वम् ( न्या० सि० दी० पृ० ५६ ) । [ ख ] एकसमयावच्छेदेनैकत्रावर्तमानत्वम् ( ग० बाध० ) । यथा घटघटाभावयोर्विरोधित्वम् । [ ग ] सहासंभवः । यथा तत्त्वज्ञानमिथ्याज्ञानयोर्विरोधः ( न्या० वा० १ पृ० २७ ) । [ घ ] सहानवस्थाननियमः ( त० व० पृ० १०० ) ।

**विरोधिपरामर्शः**— ( परामर्शः ) तद्विपरीतव्याप्यवत्तानिर्णयः (ग० सत्प्र०) । यथा ह्रदो वह्निमान्धूमादित्यादौ वह्न्यभावव्याप्यजलवान् ह्रदः इति परामर्शो विरोधिपरामर्शो भवति ।

**विरोधिविषयता**—[ क ] पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावप्रतियोगितावच्छेदककोटौ यद्रूपावच्छिन्नांशे यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविष्टम् तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरविषयता । [ ख ] साध्यवत्पक्षविषयताबहिर्भूतविषयता । यथा ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ध्रदविषयता भवति विरोधिविषयता साध्यवत्पक्षविषयताया निरासश्च भवति ( ग० २ हेत्वाभाससामा० नि० पृ० २४ ) । इयं विषयता च गादाधरीये अत्र वदन्ति इत्येवमुक्तो यः कल्पस्तादृशकल्पोक्तहेत्वाभासलक्षणघटिका इति विज्ञेयम् ।

**विलक्षणम्**—१ [ क ] विजातीयम् । [ ख ] विभिन्नम् । २ स्वच्छन्दताया निष्प्रयोजनस्थितिः । तदुक्तं भागुरिणा विलक्षणं मतं स्थानं यद्भवेन्निष्प्रयोजनम् ( अमर० टी० ३।२।२ ) इति । ३ दानार्थं कल्पितकाञ्चनपुरुषमूर्तियुतशय्याविशेषः ( शु० त० ) ( मत्स्यपु० ) ।

**विवरणम्**—१ [ क ] तत्समानार्थबोधकपदान्तरेण तदर्थकथनम् । यथा पचति इत्यस्य पाकं करोति इति विवरणम् ( मु० ४ ) । विवरणस्य शक्तिग्राहकत्वे प्रमाणमनुमानम् । तच्च यथा आख्यातपदं यत्नत्वावच्छिन्ने शक्तम् यत्नत्वावच्छिन्नशक्तकरोतिधातुप्रतिपादितार्थकत्वात् यद्यद्धर्मावच्छिन्नशक्तप्रतिपादितार्थकं भवति तत्तद्धर्मावच्छिन्ने शक्तं भवति पाकत्वविशिष्टशक्तपाकपदप्रतिपादितार्थकपचधातुवत् इति सामान्यतो दृष्टानुमानम् ( त० प्र० ख० ४ पृ० ७३ ) । [ ख ] पूर्वोच्चरितवाक्यस्योत्तरवाक्येनार्थकथनम् ( त० प्र० ख० ४ पृ० ७३ ) । २ ग्रन्थविशेषः । यथा नागेशकृतं कैयटोपरि विवरणम् ।

**विवर्तः**—१ [ क ] अतात्त्विकोन्यथाभावः । स च अपरित्यक्तपूर्वरूपस्य रूपान्तरप्रकारकप्रतीतिविषयत्वम् ( वै० सा० द० पृ० २ ) । यथा मायावादिमते परब्रह्मणि सर्वस्य जगतो विवर्तः । [ ख ] पूर्वरूपापरित्यागेनासत्यनानाकारप्रतिभासः । यथा शुक्तिकायां रजतस्य रज्ज्वां वा सर्पस्य प्रतीतिः ( अथर्वभाष्ये सायणः ) । शिष्टं तु वादशब्दव्याख्याने दृश्यम् । [ ग ] स्वरूपापरित्यागेन रूपान्तरापत्तिर्विवर्तः ( सर्व० सं० पृ० ४२० शं० ) । २ नृत्यम् इति नर्तका आहुः । ३ समुदायः इति काव्यज्ञा आहुः ( वाच० ) ।

**विवसनः**—( दिगम्बरः नास्तिकः ) अर्हन्नामको जिनः । तन्मते सप्त पदार्थाः जीवः अजीवः आस्रवः संवरः निर्जरः बन्धः मोक्षश्च इति । संक्षेपतस्तु जीवाजीवाख्यौ द्वावेव पदार्थौ । तयोरिममपरं प्रपञ्चमाचक्षते । पञ्चास्तिकाया नाम जीवास्तिकायः पुद्गलास्तिकायः धर्मास्तिकायः अधर्मास्तिकायः आकाशास्तिकायश्चेति । सर्वेषामप्येतेषामवान्तरभेदा बहुविधाः सन्ति विस्तरभयान्नोक्ताः इति । अत्र अस्तिकायशब्दः संकेतितः पदार्थवाची ( शारी० भा० टी० २।२।३३ ) । अस्तीति कायते शब्द्यते इत्यस्तिकायः पदार्थः । एतन्मते जीवः शरीरपरिमाणः । मोक्षस्तु जीवस्योर्ध्वगमनमेव ( शारीरकभाष्ये अ० २ पा० २ सू० ३३–३४ ) । सप्तभङ्गीनयस्तु स्याद्वादशब्दव्याख्यानावसरे संपादयिष्यते । अत्र शिष्टं तु नास्तिक इत्यादितत्तच्छब्दव्याख्याने दृश्यम् ।

**विवादः**—१ विरुद्धो वादः । २ कलहः । अत्रोदाह्रियते ऋणादिदायकलहे द्वयोर्बहुतरस्य वा । विवादो व्यवहारश्च इति स्मृतिः । ३ विप्रतिपत्तिः ।

**विवाहः**—१ भार्यात्वसंपादकं कर्म । यथा अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् । अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् । अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥ ( याज्ञ० अ० १ श्लो० ५२–५३ ) इत्यादौ वहधात्वर्थः । अत्रानन्यपूर्विकामित्यनेन स्त्रीपुनर्विवाहो निषिद्धः इति गम्यते । तथा च श्रुतिरपि तस्मान्नैका द्वौ पती विन्दते इति । तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सह पतयः इति च । शिष्टं तु नियोगशब्दव्याख्याने विधवाशब्दव्याख्याने च संपादितम् तत्र दृश्यम् । चरमसंस्कारः विजातीयसंस्कारो वा विवाहः इत्यन्ये नव्यनैयायिका आहुः । अत्र चरमत्वं च शास्त्रविहितसंस्कारान्तिमत्वम् । संस्कारप्रागभावासहचरितत्वम् इति केचिदाहुः । द्वितीयविवाहस्य संस्कारत्वाभावात् तत्प्रागभावसत्त्वेप्याद्यविवाहे चरमत्वाक्षतिः ( वाच० ) । सप्तपदीसमापनमेव इति तु वयं ब्रूमः । अष्टौ विवाहाः ब्राह्मः दैवः आर्षः प्राजापत्यः आसुरः गान्धर्वः राक्षसः पैशाचश्चेति ( याज्ञ० अ० १ श्लो० ५८–६१ ) । तथा चोक्तं मनुना ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः । गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोधमः ॥ ( मनु० ३।२१ ) इति । अत्र विवाहप्राशस्त्यं तत्तद्विवाहफलादिकं च मनुयाज्ञवल्क्यस्मृत्यादौ दृश्यम् । २ येन ज्ञानेन ममेयं भार्या ममायं पतिः इति व्यवहारो भवति तादृशं ज्ञानम् इति वा विवाहशब्दार्थः । तादृशं ज्ञानं तु संस्कारादिनोत्पद्यते । तच्च संबन्धविशेषेणोभयनिष्ठम् । अत्रेदं विचार्यम् । भार्यात्वसंपादकं ज्ञानम् इत्यत्र भार्यात्वस्योपलक्षणतया निवेशः । तेन नान्योन्याश्रयः इति ।

**विवीतः**—प्रचुरतृणकाष्ठो रक्ष्यमाणः परिगतो भूप्रदेशः ( मिताक्षरा व्य० श्लो० १६० ) ।

**विवृतिः**—१ विवरणम् । २ विस्तारः ( मेदिनी० ) ।

**विवेकः**—१ [ क ] पृथक्त्वेन ज्ञानम्। यथा नीरक्षीरविवेकः। [ ख ] विशेषरूपेण ज्ञानम् इति केचिदाहुः। [ ग ] अन्योन्यधर्मव्यावर्तनेन याथार्थ्येन वस्तुस्वरूपावधारणम्। यथा सांख्यमते प्रकृतिपुरुषयोर्भेदज्ञानम्। २ विचारः। ३ विवेको नामादुष्टादन्नात्सत्त्वशुद्धिः ( सर्व० सं० पृ० १२४ रामानु० )।

**विशिष्टद्वयाघटितत्वम्**—यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति भवति तादृशविशिष्टद्वयाघटितत्वम्। यथा ह्रदो वह्निमान्धूमादित्यादौ वह्न्यभाववद्ध्रदात्मकबाधस्य जलावच्छिन्नवह्न्यभाव जलवद्ध्रद एतद्विशिष्टद्वयाघटितत्वम् ( ग० २ हेत्वा० सामा० पृ० ११ )। विशिष्टद्वयाघटितत्वरूपस्य विशेषणस्य प्रयोजनं च गादाधरीयद्वितीयहेत्वाभाससामान्यलक्षणे ह्रदो वह्निमानित्यादौ वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदरूपविशिष्टे अलक्ष्येतिव्याप्तिवारणम् इति विज्ञेयम्। यद्रूपावच्छिन्नविषयकनिश्चयविशिष्टयद्रूपावच्छिन्नाविषयकयद्रूपावच्छिन्नविषयकनिश्चयत्वं स्वव्यापकत्व स्वाभाववद्वृत्तित्व एतदुभयसंबन्धेन स्वावच्छिन्नविषयताव्यापकप्रतिबन्धकताविशिष्टान्यज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्ति भवति तत्तद्रूपावच्छिन्नाविषयकप्रतीतिविषयत्वं फलितोर्थः। तेन नातिव्याप्त्यव्याप्त्यादयो दोषाः इत्यस्मद्गुरुचरणाः प्राहुः।

**विशिष्टम्**—१ विशेषणवद्विशेष्यम् ( चि० १ )। यथा द्रव्यं गुणवदित्यादौ द्रव्यं गुणविशिष्टम्। अत्रायं विशेषः। विशिष्टज्ञानं प्रति विशेषणज्ञानं कारणम इति कार्यकारणभावो नैयायिकसिद्धान्तसिद्धो ज्ञातव्यः। अत्रेदमधिकं ज्ञेयम्। विशिष्टाभावस्त्रिविधः विशेषणाभावप्रयुक्तः विशेष्याभावप्रयुक्तः उभयाभावप्रयुक्तश्चेति। तत्राद्यो यथा वायौ रूपविशिष्टस्पर्शस्याभावः। द्वितीयो यथा वायौ स्पर्शविशिष्टरूपस्याभावः। तृतीयो यथा वायौ रूपविशिष्टघटत्वस्याभावः इति। अत्र वैशिष्ट्यं च साहित्यं सामानाधिकरण्यं वा ज्ञेयम्। तत्राद्ये स्पर्शे रूपं विशेषणम्। तस्य वायावभावात् स्पर्शसत्त्वेपि रूपविशिष्टस्पर्शस्याप्यभावो मन्तव्यः।

द्वितीये रूपे स्पर्शो विशेषणम् । तथा च स्पर्शात्मकविशेषणस्य वायौ सत्त्वेपि विशेष्यभूतस्य रूपस्याभावात् स्पर्शविशिष्टरूपस्याप्यभावो मन्तव्यः । तृतीये घटत्वे रूपं विशेषणम् । तथा च विशेषणस्य रूपस्य विशेष्यस्य घटत्वस्य च वायावभावेन रूपविशिष्टघटत्वस्याप्यभावो मन्तव्यः । २ विशेषयुक्तः । यथा संज्ञा कर्म त्वस्मद्विशिष्टानां लिङ्गम् (वै० २।१।१८) इत्यादावस्मद्विशिष्टा ईश्वरमहर्षयः ।

**विशिष्टविशेषणकज्ञानम्**—१ विशेषणवद्विशेष्यस्य धर्मिणि वैशिष्ट्यविषयकं ज्ञानम् । यथा दण्डवान् पुरुषः इति ज्ञानम् । तद्विविधम् विशेषणोपलक्षितप्रतियोगिकवैशिष्ट्यावगाहि विशेषणविशिष्टप्रतियोगिकवैशिष्ट्यावगाहि चेति । तत्राद्ये विशेषणज्ञानासंसर्गाग्रहयोरेवापेक्षा न तु विशेषणतावच्छेदकप्रकारकधियोप्यपेक्षा (ग० बाध०) । द्वितीये तु विशेषणतावच्छेदकप्रकारकधियोपेक्षा । २ क्वचित् विशेष्ये यद्विशेषणम् तत्रापि विशेषणान्तरम् इति रीत्या जायमानं ज्ञानं भवति । यथा दण्डवान् पुरुषः इति ज्ञानम् । अत्र ज्ञाने पुरुषांशे दण्डः दण्डे च दण्डत्वम् विशेषणतया भासते न तु दण्डत्वं पुरुषांशे विशेषणतावच्छेदकतया भासते । अत्र विशृङ्खलोपस्थितिः प्रयोजिका इति विज्ञेयम् । ३ क्वचित् एकत्र द्वयम् इति रीत्या जायमानं ज्ञानं भवति । यथा दण्डवान् पुरुषः इति ज्ञानम् । अत्र ज्ञाने च एकस्यां व्यक्तौ (पुरुषे) पुरुषत्वं दण्डश्च एतदुभयं विशेषणतयैव भासते । न तु विशेषणविशेष्यतावच्छेदकभावेन इति । अत्र विशेषणत्वेनोभयोपस्थितिः प्रयोजिका इति बोध्यम् । ४ क्वचित् विशिष्टवैशिष्ट्यावगाहि ज्ञानं भवति । अत्र ज्ञाने च विशेषणतावच्छेदकप्रकारकं ज्ञानं कारणं भवति इति ध्येयम् । यथा दण्डवान् पुरुषः इति ज्ञानम् । अत्र च दण्डत्वात्मकविशेषणावच्छिन्नप्रतियोगिकवैशिष्ट्याख्यः संबन्धः संसर्गतया पुरुषांशे भासते । इदमेव ज्ञानं विशिष्टविशेषणकज्ञानप्रभेदः विशेषणविशिष्टप्रतियोगिकवैशिष्ट्यावगाहि भवति विशेषणोपलक्षितप्रतियोगिकवैशिष्ट्यावगाहिज्ञानाद्भिद्यते च इति बोध्यम् । अत्रेदं बोध्यम् । विशिष्टवैशिष्ट्यावगाहिशाब्दबोधे त्वयं भेदः । व्युत्पत्ति-

वैचित्र्येण उद्देश्यतावच्छेदकविधेययोर्धर्मिपारतन्त्र्येण परस्परं प्रयोज्यप्रयोजकभावेनान्वयः । यथा धनवान् सुखी इत्यत्र धनप्रयोज्यत्वस्य सुखेन्वयः । सुरापः पतति इत्यत्र च सुरापानस्य पतने प्रयोज्यत्वेनान्वयः (ग० सव्य०) इति । ५ क्वचित् विशिष्टज्ञानम् । विशेषणवद्विशेष्यविषयकं ज्ञानम् इत्यर्थः ( चि० १ पृ० ८२१ ) । यथा अयं दण्डी इति ज्ञानम् । अत्र ज्ञाने च इदंपदार्थविशेष्यांशे दण्डात्मकविशेषणप्रतियोगिकसंबन्धः संसर्गतया भासते विशेषणज्ञानं कारणं च भवति इति विज्ञेयम् ।

**विशिष्टाद्वैतम्**—सूक्ष्मचिदचिदात्मकशरीरविशिष्टस्य कारणस्य परमात्मनः स्थूलचिदचिदात्मकशरीरविशिष्टस्य कार्यस्य परमात्मनश्चैक्यम् । यथा रामानुजमते विशिष्टाद्वैतम् । अत्र विशिष्टयोरद्वैतम् इति षष्ठीतत्पुरुषो ज्ञेयः । द्वैतविशिष्टमद्वैतम् इत्यन्य आहुः । अत्र नियम्यनियामकभावेन शरीरशरीरिभावो विज्ञेयः । तत्र चिदचिदात्मकं शरीरं नियम्यम् । तदन्तर्यामी परमात्मा तन्नियामकः । अत्र श्रुतिः यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ( शतप० बृह० १४।६।७।७ ) इत्यादिः । अत्रेदं विज्ञेयम् । रामानुजाचार्यस्य जन्म द्रविडदेशे भूतपुरीत्यपरनाम्न्यां प्रेमधुलाख्यायां ( पेरंबुदूर ) पुरि एकोनपञ्चाशदधिके सहस्रे ( शाके १०४९ ) वर्षे समजनि । तस्य पिता केशवभट्टः । माता कान्तिमती । मातुलो यादवप्रकाशः । स एव विद्यागुरुश्च इति । अत्र श्रूयते । शापवशाच्छूद्रजन्म प्राप्तेन शठकोपनाम्ना ( नम्मालवार ) द्रविडेन द्रविडभाषया वेदान्तप्रबन्धा विरचिताः । ततस्तान् प्रबन्धाननुरुध्य बोधायनाद्यद्रविडब्राह्मणकृतां ब्रह्मसूत्रवृत्तिं च सहकृत्य गीर्वाणभाषया ब्रह्मसूत्रस्य श्रीभाष्यमकारि रामानुजाचार्येण । रामानुजमते चित् जीवः १ अचित् जडः २ ईश्वरः नियन्ता परमात्मा ३ इति त्रयः पदार्थाः । ईश्वरो जगत उपादानं निमित्तं च । सत्कार्यवादः । परिणामवादः । मोक्षदशायामपि जीवब्रह्मणोर्भेदः पारमार्थिकः । तथापि परमभगवत्साम्यरूपमोक्षदशायां जीवब्रह्मणोरानन्दतारतम्यं यथा मध्वमतेस्ति तथा नास्ति इति । तथापि

तदा जीवस्य जगत्कर्तृत्वं नास्ति इत्यादि ज्ञेयम् । मोक्षे भगवत्साम्यमित्यत्र निरञ्जनः परमं साम्यमुपैति ( मु० ३।१।३ ) इति श्रुतिः प्रमाणम् । मध्वमते तु अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः । आदघ्नास उपकक्षास उत्वे ह्रदा इव स्नात्वा उत्वे ददृश्रे ( ऋग्० संहि० मण्ड० १०।७१।७ ) इति श्रुतिः प्रमाणम् । केचित्तु प्रकृतिविशिष्टस्य ब्रह्मणः अद्वयत्वम् शरीरशरीरिणोर्भेदविशिष्टाभेदो वा विशिष्टाद्वैतशब्दार्थ इति मन्यन्ते ।

**विशिष्टान्तराघटितत्वम्**—[ क ] अनुमितिप्रतिबन्धकतायां यादृशरूपावच्छिन्नविषयकत्वमवच्छेदकम् ( अनतिरिक्तवृत्ति ) तादृशं यत् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकम् तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् स्वम् तदवच्छिन्नत्वम् । यथा ह्रदो धूमवान्वह्नेरित्यादौ व्यभिचारस्य बाधादिरूपविशिष्टान्तराघटितत्वम् । विशिष्टान्तराघटितत्वरूपविशेषणप्रयोजनं च गादाधरीयद्वितीयहेत्वाभाससामान्यलक्षणस्य धूमवान्वह्नेः इत्यादिस्थले प्रमेयत्वविशिष्टव्यभिचारादौ ( प्रमेयत्वविशिष्टधूमाभाववद्वृत्तिवह्नौ ) अतिव्याप्तिवारणरूपं बोध्यम् । स्वावच्छिन्नेत्यत्र यद्रूपावच्छिन्ने लक्षणं संगमनीयम् तदेव स्वपदार्थः । ह्रदो धूमवान्वह्नेरित्यादौ धूमाभाववद्वृत्तिवह्नित्वं व्यभिचारः । बाधस्तु धूमाभाववद्ध्रदः । तथा चात्र व्यभिचारत्वावच्छिन्नाविषयकत्वं बाधविषयकप्रतीतौ बाधत्वावच्छिन्नाविषयकत्वं च व्यभिचारविषयकप्रतीतावस्ति इति बाधत्वं व्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकम् ह्रदो धूमवान् इत्यनुमितिनिरूपितप्रतिबन्धकतायामनतिरिक्तवृत्तित्वरूपावच्छेदकतावच्च भवति तादृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं स्वं ( व्यभिचारत्वम् ) भवति। व्यभिचारत्वावच्छिन्नत्वं तु व्यभिचारे वर्तत इति लक्षणसमन्वयो बोध्यः । प्रमेयत्वविशिष्टव्यभिचारादौ तु शुद्धव्यभिचाररूपविशिष्टान्तरघटितत्वेन तादृशलक्षणाभावान्नातिव्याप्तिश्च ( ग० २ हेत्वा० सामा० पृ० १२ ) । [ ख ] केचित्तु स्वसमानाधिकरणहेत्वाभासविभाजकरूपसमानाधिकरणं यत् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तादृशं

रूपम् तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् स्वम् तदवच्छिन्नत्वम् इत्याहुः ( न्या० र० सामा० )। अत्र तादृशं रूपं च विपरीतव्यभिचारत्वादिकमेव इति बोध्यम्। तथा हि। स्वं धूमाभाववद्वृत्तिवह्नित्वत्वम्। तत्समानाधिकरणं हेत्वाभासविभजकं रूपं तु व्यभिचारत्वं भवति। तत्समानाधिकरणं यद्धूमाभाववद्वृत्तिवह्नित्वत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तादृशं रूपं तु वह्निनिष्ठधूमाभाववद्वृत्तित्वत्वमेव भवति। तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं तु धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वत्वं भवति तदवच्छिन्नत्वं धूमाभाववद्वृत्तिवह्नित्वेस्ति इति लक्षणसमन्वयो बोध्यः। इदं च गदाधर्यो स्वसजातीयविशिष्टान्तराघटितत्वम् इत्युच्यते अयोगोलकं धूमवद्वह्नेः इत्यादौ बाधविशिष्टव्यभिचारादावतिव्याप्तिसंपादकं च भवति इति ज्ञेयम् ( ग० हेत्वा० सामा० पृ० १५–१६ )। अयं च केचित्तु इत्यादिनोक्तो यः कल्पस्तद्विषये एवं श्रूयतेस्मद्गुरुमुखात्। अयं कल्पस्तु समासतो गदाधरेण विरचितः व्यासतः परिष्कृतवद्भ्यो गाडगीळ इत्युपाह्वेभ्यो वाराणसीग्रामनिवासिजगन्नाथशास्त्रिभ्यः संगृह्य पुण्यग्रामनिवासिभिः गोडबोले इत्युपनामकमेरुशास्त्रिभिः सम्यक् विरचय्य प्रकटीकृतः इति। [ ग ] विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधिकरणताकत्वम्। तादृशोभयाभावश्च प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्व साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्व एतदुभयाभावः। इदं च सिद्धान्तसिद्धम् विशिष्टान्तराघटितत्वम् इत्युच्यते। यथा धूमव्यभिचारिवह्निमान्धूमवान्वह्नेरित्यादावपि व्यभिचारघटितबाधस्य व्यभिचाररूपविशिष्टान्तराघटितत्वम्। तथा हि। विशिष्टान्तर ( केवलव्यभिचार ) विषयित्वाप्रयोज्या स्व( व्यभिचारघटितबाध )विषयिताप्रयोज्या या तादृशोभयाभावप्रयोजिका अभावाधिकरणता ( पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता ) तत्कत्वं धूमाभाववद्धूमव्यभिचारिवह्निमति व्यभिचारघटिते बाधे वर्तते इति तत्र लक्षणसमन्वयो बोध्यः ( ग० हेत्वा० सामा० पृ० २०–२५ )।

**विशुद्धिः**—१ [ क ] उद्दिष्टपदार्थसंबन्धराहित्यम्। यथा मायावादिनां वल्लभानां च मते परब्रह्मणो विशुद्धिर्मायासंबन्धराहित्यम्। [ ख ] मिथ्या-

ज्ञानादीनामत्यन्तव्यपोहो विशुद्धिः ( सर्व० सं० पृ० १६४ नकु० ) । [ ग ] धर्मज्ञास्तु दोषराहित्यं विशुद्धिरित्याहुः । २ शोधनम् ( प्रायश्चित्तम् ) ( कुल्लू० ) । यथा इयं विशुद्धिरुदिता ( मनु० अ० ११ श्लो० ८९ ) इत्यादौ इत्याहुः । अधिकं तु शुद्धिशब्दे दृश्यम् ।

**विशृङ्खलत्वम्**—पार्थक्यम् । यथा घटवद्भूतलमित्यादौ घटः इति भूतलम् इति चोपस्थित्योः परस्परं निरूप्यनिरूपकभावानापन्नविषयतावत्त्वेन तत्तदर्थविषयकत्वाद्विशृङ्खलत्वम् ।

**विशेषः**—१ ( पदार्थः ) [ क ] अन्योन्याभावविरोधिसामान्यरहितः समवेतः पदार्थविशेषः ( सर्व० पृ० २१७ औलू० ) । [ ख ] जातिरहितत्वे सति नित्यद्रव्यमात्रवृत्तिः । तथा चोक्तम् अजातिरेकवृत्तिश्च विशेष इति शिष्यते ( ता० र० श्लो० ५२ ) इति । एकद्रव्यः स्वभावसन् ( न्या० ली० पृ० ५ ) इति न्यायलीलावतीकाराः । स च अन्त्यो नित्यद्रव्यसमवेतः । अन्ते अवसाने वर्तत इत्यन्त्यः । तदपेक्षया विशेषो नास्तीत्यर्थः । एकमात्रवृत्तिरिति फलितोर्थः ( मु० १।१ पृ० ३७ ) । किंच स विशेषः अत्यन्तव्यावृत्तिहेतुः ( भा० प० ) ( त० सं० ) । तथा हि । घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः सिद्ध्यति । परमाणूनां परस्परं भेदको विशेष एव । स तु स्वत एव व्यावृत्तः । तेन तत्र विशेषान्तरापेक्षा नास्ति इति भावः ( मु० १ ) । अत्र प्रयोगः एतद्विशेषस्तद्विशेषाद्भिद्यते तादात्म्येनैतद्विशेषात् इति । एवम् स्वतोव्यावर्तकत्वानुमानप्रयोगोपि विज्ञेयः ( सि० च० पृ० ३ ) । सूत्रे चोक्तम् अन्यत्रान्त्येभ्यो विशेषेभ्यः ( वै० १।२।६ ) इति । अन्ते भवा अन्त्याः । स्वाश्रयविशेषत्वाद्विशेषाः । विनाशारम्भरहितेषु नित्येष्वण्वाकाशकालदिगात्ममनःसु प्रतिद्रव्यमेकैकशो वर्तमाना अत्यन्तव्यावृत्तबुद्धिहेतवः । यथास्मदादीनां गवादिष्वश्वादिभ्यस्तुल्याकृतिगुणक्रियावयवसंयोगनिमित्ता प्रत्ययव्यावृत्तिर्दृष्टा । यथा गौः शुक्लः शीघ्रगतिः ककुद्मान् महाघट इति तथास्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनःसु चान्यनिमित्तासंभवात् येभ्यो निमि-

तेभ्यः प्रत्याधारम् अयमस्माद्विलक्षणः इति व्यावृत्तिप्रत्ययः देशकालविशिष्टे च परमाणौ स एवायम् इति प्रत्यभिज्ञानं च भवति यतः तेन्त्या विशेषा इति। एते च विशेषाः नित्यद्रव्याणां परस्परभेदसाधकाः (नील० पृ० ९४)। अथान्त्यविशेषेष्विव परमाणुषु कस्मान्न स्वतः एव व्यावृत्तिप्रत्ययः प्रत्यभिज्ञानं वा कल्प्यते इति चेत् न। तादात्म्यात्। इह तादात्म्यकल्पनानिमित्तप्रत्ययो भवति। यथा श्वमांसादीनां स्वत एवाशुचित्वम् तद्योगादन्येषाम्। तथेहापि तादात्म्यादन्त्यविशेषेषु स्वत एव व्यावृत्तिप्रत्ययः। तद्योगात् परमाण्वादिष्विति (प्रशस्त० पृ० ६४—६५)। अत्यन्तव्यावृत्तिहेतुरित्यस्य अयमस्माद्व्यावृत्तः इति व्यावृत्तिबुद्धिमात्रहेतुरित्यर्थः इति कौमुदीकाराः (त० कौ०)। ते खल्वत्यन्तव्यावृत्तिहेतुत्वाद्विशेषा एव (प्रशस्त० पृ० २) इति भाष्यम्। अत्र कन्दलीकार आह। खलुशब्दो निश्चये। नित्यद्रव्यवृत्तयो ये विशेषास्ते विशेषा एव निश्चिताः। न तु सामान्यान्यपि भवन्तीत्यर्थः। अत्यन्तं सर्वदा व्यावृत्तेरेव स्वाश्रयस्येतरस्माद्व्यवच्छेदस्यैव हेतुत्वात् कारणत्वात् (न्या० क० पृ० १४) इति। [ग] विशेषो नामान्योन्याभावविरोधिसामान्यरहितः समवेतः (सर्व० सं० पृ० २१७ औ०)। विशेषपदार्थस्वीकारस्यावश्यकत्वमिदानीं प्रदर्श्यते। घटादीनां सावयवपदार्थानां कपालसमवेतत्वादिकं पटादिभेदकमस्ति। परमाणूनां तु निरवयवत्वात्परस्परभेदकं न किंचिदस्ति। अतोनायत्या विशेष आश्रयितव्यः। अथ वा विशेषानभ्युपगमे समानजातिगुणकर्मवतां परमाणूनां मिथो व्यावृत्तिबुद्धिः न स्यात्। तादृशी बुद्धिस्तु समानजातिगुणकर्मकाः परमाणवः अन्योन्यव्यावर्तकधर्मसंबन्धिनः व्यावृत्तज्ञानविषयत्वात् द्रव्यत्वाद्वा गवादिवत् इत्यानुमानिकी ज्ञेया (न्या० ली० पृ० ५३)। व्यावृत्तिबुद्ध्यभावस्येष्टापत्तौ योगिनोपि तादृशपरमाणूनां ज्ञानसंकरः स्यात् इत्यतस्तद्व्यावृत्तिबुद्ध्यर्थं विशेषोङ्गीकर्तव्यः (त० कौ० पृ० २८) (प्र० प्र०) इति। स च विशेषः शब्दसमवायिकारणतावच्छेदकतयापि सिध्यति (सि० च०)। तथा ह्यनुमानम् शब्दसमवायिकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात् दण्डनिष्ठघटकारणतावत् इति। स च धर्मो विशेष एव। विशेष-

लक्षणं तु सामान्यशून्यत्वे सति सामान्यभिन्नत्वे च सति समवेतत्वम् । यद्वा नित्यसमवेतवृत्तिजन्यसमवेतावृत्तिपदार्थविभाजकोपाधिमत्त्वम् ( त० व० )। एकमात्रसमवेतत्वे सति सामान्यशून्यत्वं वा ( प० मा० ) । स्वतो व्यावृत्तत्वं वा ( वाक्य० ) ( त० प्र० १ ) । स्वतो व्यावर्तकत्वं वा । अत्र व्यावर्तकत्वं नाम व्यावृत्तिजनकत्वम् । व्यावृत्तिश्चेतरभेदः तज्ज्ञानं वा ( सि० च० १ पृ० ३ ) । स्वतो व्यावर्तकत्वं च स्वभिन्नलिङ्ग-जन्यस्वविशेष्यकस्वसमानजातीयेतरभेदानुमित्यविषयत्वम् ( दि० १।१ पृ० ३७) । अथ वा स्वेन रूपेण भेदानुमापकत्वम् । यथा एकपरमाणौ परमाण्वन्तरभेदसाधने विशेषस्य तत्तद्व्यक्तित्वेनैव हेतुत्वेन स्वतो व्यावर्तक-त्वम् । अत्र तु तत्तद्व्यक्तित्वं च तादात्म्यसंबन्धेन सैव व्यक्तिः ( राम० ) । नव्यनैयायिकाः भट्टकुमारिलः प्राभाकराः मध्वमतानुयायिवेदान्तिनश्च एतादृशविशेषपदार्थं नाङ्गीचक्रुः । यथैव विशेषाणां स्ववृत्तिधर्मं विना व्यावृत्तत्वं तथैव नित्यद्रव्याणामपि इति ( दि० १ पृ० ३७ ) ( प्र० प० पृ० ११ ) ( ता० र० श्लो० ५५ ) । २ विशेषकशब्दस्य अर्थ-वदस्यार्थोनुसंधेयः । यथा पुरुषत्वव्याप्यकरादिमान् इत्यादौ पुरुषत्वादे-र्विशेषः करादिधर्मः । ३ प्रभेदशब्दवदस्यार्थोनुसंधेयः । ४ व्याप्यधर्मः ( वै० १।२।५ ) । यथा सत्तामपेक्ष्य द्रव्यत्वम् । द्रव्यत्वमपेक्ष्य च पृथिवीत्वं विशेषः ( व्याप्यधर्मः ) । ५ तद्वृत्तिधर्मः । यथा पदार्थविशेषः ( मू० म० १ ) इत्यादौ । अत्र पदार्थविशेषः इत्यस्य पदार्थवृत्तिधर्मः इत्यर्थो ज्ञेयः । स च पदार्थत्वव्याप्यः । ६ निश्चायकोसाधारणधर्मः । यथा विशेषादर्शनं कोटिद्वयस्मरणं च संशयमात्रहेतुः इत्यादौ स्थाणुत्व-निश्चायकं वक्रकोटरादिमत्त्वम् पुरुषत्वनिश्चायकं करादिमत्त्वं च विशेषः ( सि० च० पृ० ३४ ) । ७ आधेयोनिर्वचनीयश्च कश्चिद्धर्मविशेषः ( अतिशयः ) । यथा अङ्कुरजननयोग्यबीजादौ विशेषः इति केचित्तत्त्व-व्यवस्थापका आहुः । अत्रेदं विज्ञेयम् । कुसूलस्थबीजादिभिर्नाङ्कुरो-त्पत्तिः । अतः कृष्टक्षेत्रादावुप्तबीजादौ सलिलपवनादियोगेन कश्चिद्विशेषो-वश्यमाधेयः इति ।

**विशेषकः**—१ इतरव्यावर्तकधर्मः ( गौ० वृ० ३।२।३८)। यथा गवादेः सास्नादिमत्त्वं विशेषकः। २ एकवाक्यतापन्नं श्लोकत्रयं विशेषकम् इति कवय आहुः। ३ ललाटे अलंकारभूतस्तिलकः भूषणं च इति काव्यज्ञा वदन्ति ( माघ० ३।६३ )।

**विशेषगुणत्वम्**—[ क ] द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिगुणवृत्तिजातिमत्त्वम् ( त० दी० ४ पृ० ३९ )। तदर्थश्च पृथिवीत्वजलत्वाद्यात्मकं यद्द्रव्यविभाजकोपाधिद्वयम् प्रत्येकं तत्समानाधिकरणाः द्वित्वद्विपृथक्त्वसंयोगादयः तदवृत्तिजातिमद्गुणत्वम् इति। तथा च विशेषगुणेषु लक्षणसमन्वयः क्रियते। रूपादिषु चतुर्षु तादृशलक्षणघटकजातिम् रूपत्वादिकामादाय सांसिद्धिकद्रवत्वे च द्रवत्वत्वावान्तरजातिम् स्नेहादिषु दशसु स्नेहत्वादिकाम् भावनायां संस्कारत्वावान्तरजातिं चादाय लक्षणसमन्वयः। अत्र प्रवदन्त्यभिज्ञा निष्कृष्टार्थम्। यद्रूपावच्छिन्नसमानाधिकरणं यत्किंचिद्द्रव्यविभाजकोपाधिद्वयम् तद्भिन्ना स्थितिस्थापकवृत्तिभिन्ना च या जातिः तद्वत्त्वे सति गुणत्वम् इति। तेन एकत्वादिसंख्यायाम् परिमाणादौ च नातिव्याप्तिः ( नील० गु० पृ० ३९ ) इति। विशेषगुणाश्च षोडश रूपम् रसः गन्धः स्पर्शः सांसिद्धिकद्रवत्वम् स्नेहः शब्दः बुद्धिः सुखम् दुःखम् इच्छा द्वेषः प्रयत्नः धर्मः अधर्मः भावना चेति ( भा० प० गु० श्लो० ९१–९२ )। [ ख ] भावनान्यो यो वायुवृत्तिवृत्तिस्पर्शावृत्तिधर्मसमवायी तदन्यत्वे सति गुरुत्वाजलद्रवत्वान्यगुणत्वम्। अत्रत्यपदानां प्रयोजनानि कथ्यन्ते। जात्यादावतिव्याप्तिवारणाय गुरुत्वाजलेत्यादि विशेष्यदलम्। गुरुत्वनैमित्तिकद्रवत्वयोर्वारणाय गुरुत्व इत्यादि। सांसिद्धिकद्रवत्वसंग्रहाय अजल इति। संयोगादिवारणाय सत्यन्तं दलम्। भावनायामव्याप्तिवारणायाद्यम् अन्यान्तं सत्यन्तघटकसमवायिविशेषणम्। सत्तादिकमादायासंभववारणाय स्पर्शसंग्रहाय च स्पर्शावृत्ति इति ( दि० गु० पृ० १९३ )।

**विशेषणम्**—१ विशेषणतावत्। विशेषणता च द्विविधा। तत्र प्रथमा यथा घटाभाववद्भूतलमित्यत्र घटाभावे विशेषणता। इयं विशेषणता च स्वरूप-

संबन्धरूपः संनिकर्षविशेषः ( नील० १ पृ० १९ ) ( मु० म० १ ) । इयमभावप्रत्यक्षे हेतुर्भवति इति ध्येयम् । यथा घटाभाववद्भूतलम् इति चाक्षुषप्रत्यक्षे हेतुभूतो भूतलांशे घटाभावस्य विशेषणतारूपः संनिकर्षः । अत्र अभावस्य स्वोपरक्तबुद्धिजनकत्वं यत्स्वरूपम् तदेव विशेषणत्वम् इति ज्ञेयम् ( त० भा० पृ० २० ) । सा च विशेषणता पुनः द्विविधा इन्द्रियविशेषणता इन्द्रियसंनिकृष्टविशेषणता च । आद्यया शब्दाभावो गृह्यते । अन्त्यया भूतलादौ घटाभावो गृह्यते ( न्या० म० १ ) । स्वरूपसंबन्धावच्छिन्नाधेयतारूपा वेयं विशेषणता ( नील० १ पृ० १८ ) । यथा नैयायिकमते विशेषणतया समवायस्य प्रत्यक्षम् इत्यादौ विशेषणता । वैशेषिकमते तु समवायो न प्रत्यक्ष इत्यन्यत् । द्वितीया विशेषणता यथा नीलो घट इत्यादौ नीलत्वे विशेषणता । इयं विशेषणता तु प्रकारताख्यो विषयताविशेषः । अथ वा तत्पदजन्यबोधविषयत्वेन शक्तिविषयत्वम् ( दि० ४ ) । यथा दण्डवान् पुरुषोस्तीत्यादौ दण्डस्य विशेषणता । अत्रेदमधिकं विज्ञेयम् । विशेषणतावच्छेदकं तु विशेषणे यद्विशेषणम् तत् ( मु० ) । यथा दण्डवान्पुरुष इत्यत्र दण्डत्वं विशेषणतावच्छेदकम् इति । अत्र व्युत्पत्तिः विशिष्यते भिद्यते अनेन ( ल्युट् ) इति विशेषणम् भेदकम् । व्यावर्तकम् प्रकारो वा विशेषणं भवति । तत्र प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकं व्यावर्तकम् । समुदायार्थस्तु यद्व्यावृत्त्यधिकरणतावच्छेदकं तदेव तत्र विशेषणम् इति । व्यावृत्तिरन्योन्याभावः ( मु० म० १ पृ० ८३२ ) । दण्डी पुरुषः इति ज्ञानानन्तरं दण्डवत्यदण्डव्यावृत्तिरवगम्यते इति प्रत्याय्यव्यावृत्त्यधिकरणता पुरुषस्य दण्डेनावच्छिद्यते इति दण्डो विशेषणम् । तदाहुराचार्याः सदसद्वा समानाधिकरणं व्यवच्छेदकं विशेषणम् (चि० १ पृ० ८३४) इति । अथ वा विवक्षितान्वयप्रतियोगितावच्छेदकम् । यथा दण्डिनमानयेत्यादौ दण्डो विशेषणम् । यदन्विततया ज्ञात एव विशेष्ये तात्पर्यविषयेतरान्वयधीः तद्व्यवच्छेदकम् । विशेष्यान्वयिना यस्यावश्यमन्वयः तदवच्छेदकम् । यद्व्यावर्तकं विशेष्यान्वयिनान्वीयते तत् । तात्पर्यविषयान्वयप्रतियोगी धर्मः । उद्देश्यान्वयप्रतियोगी धर्मो वा ( चि० १ पृ० ८३४–८३८ ) । अत्रेदं बोध्यम् । विद्यमानं सद्व्या-

वर्तकम् विशेषणम् । यथा पुरुषादौ वर्तमानकालावच्छेदेन विद्यमानो दण्डादिर्विशेषणम् ( ग० व्यु० का० ३ पृ० ९२ ) । यथा वा यदा देवदत्तगृहे काकवत्ता तदा काको विशेषणम् ( वै० उ० ७।२।८ ) । अयं भावः । यत्राश्रये यत्कालीना वृत्तिः प्रत्याय्या तत्कालीनतदधिकरणवृत्तिर्विशेषणम् । अन्यदुपलक्षणम् । एवं च काककालीनगृहव्यावृत्तिपरे प्रयोगे काको विशेषणमेव । सामान्यतो गृहविशेषव्यावृत्तिपरे प्रयोगे तु उपलक्षणमेव सः इति निष्कर्षः ( प० च० पृ० ५० ) । विशेषणं त्रिविधम् व्यावर्तकम् विधेयम् हेतुगर्भं चेति । तत्राद्यम् नीलो घट इत्यादौ नीलः । द्वितीयं यथा पर्वतो वह्निमानस्ति इत्यादौ वह्निर्विधेयः । यथा वा न्यक्कारो ह्ययमेव मे यदरयः ( हनुमन्नाट० ) इत्यादौ न्यक्कारो विधेयः । तृतीयं च स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् (रघु० २।१२ ) इत्यादौ मारुतपूर्णरन्ध्रत्वं हेतुगर्भं विशेषणम् । यथा वा सुरापः पतति इत्यादौ सुरापानं हेतुगर्भं विशेषणम् ।

**विशेषणविशेष्यभावः**—१ ( इन्द्रियार्थसंनिकर्षः ) स्वरूपसंबन्धावच्छिन्नाधाराधेयभावः ( नील० १ पृ० १८ ) । यथा घटाभाववद्भूतलम् इत्याद्यभावप्रत्यक्षे कारणभूतो विशेषणविशेष्यभावः संनिकर्षः । अत्राधिकं तु इन्द्रियार्थसंनिकर्षशब्दव्याख्यानावसरे संपादितम् तत्र द्रष्टव्यम् । २ विषयताविशेषः । यथा दण्डी पुरुषः इति शाब्दबोधे दण्डपुरुषयोर्विशेषणविशेष्यभावः । अत्र विग्रहः विशेषणं च विशेष्यं च विशेषणविशेष्ये । तयोर्भावः इति । निरूप्यनिरूपकभावापन्नं विशेषणत्वं विशेष्यत्वं चेत्यर्थः ।

**विशेषणासिद्धः**—( हेत्वाभासः ) यो हेतुः स्वघटकविशेषणविशिष्टः सन्पक्षे न तिष्ठति न सिद्ध्यति च सः । यथा शब्दो नित्यः द्रव्यत्वे सत्यस्पर्शत्वात् इत्यत्र हेतुर्विशेषणासिद्धः । अत्र द्रव्यत्वविशिष्टास्पर्शत्वं हेतुः । स च शब्दे नास्त्येव । अस्पर्शत्वरूपविशेष्यस्य शब्दे सत्त्वेपि द्रव्यत्वरूपविशेषणस्य बाधात् इति बोध्यम् । अत्र विशेषणेनासिद्धः इति विग्रहः । स च विशेषणासिद्धः स्वरूपासिद्धप्रभेदः (त० भा० पृ० ४६) ।

**विशेषविधिः**—सामान्यविशेषयोर्मध्ये विशेषे विधानम् । यथा ब्राह्मणेभ्यो दधि दीयताम् कौण्डिन्याय तक्रम् इत्यत्र कौण्डिन्यस्य ब्राह्मणविशेषत्वेन तद्विषये दधिदानापवादेन तक्रदानविधिर्विशेषविधिर्भवति । अत्रोच्यते अल्पः स्याद्विषयो यस्य स विशेषविधिर्मतः ( व्या० का० ) इति ।

**विशेषसमः**—( जातिः ) धर्मेणैकेन केषांचिदविशेषप्रसञ्जनम् । साधन-प्रतिबन्धाय स विशेषसमो मतः ॥ ( ता० र० परि० २ श्लो० १२१ )। अत्रापेक्षणीयोदाहरणादिकं तु अविशेषसमः इति शब्दव्याख्याने ( पृ० ९५) यत् प्रदर्शितम् तदेवात्र ग्राह्यम् । अत्र धर्मेणैकेनेत्युक्तश्लोके अविशेषसमः इत्यपि पाठः ।

**विशेषितम्**—१ विशिष्टम् । यथा याप्यते ग्राममजा इत्यादौ स्वनिर्वाह्य-कर्तृतानिरूपकत्वसंबन्धेन व्यापारविशेषितधात्वर्थः कर्तृत्वेन्वेति ( ग० व्यु० का० २ पृ० ४८) इत्यादौ विशेषितशब्दस्यार्थो विशिष्टं भवति । २ भेदितम् । ३ विशेषयुक्तम् ।

**विशेष्यः**—विशेष्यतावान् । यथा भूतले घटो नास्ति इति प्रत्यक्षे घटा-भावो विशेष्यः । अत्र विशेष्यता च स्वरूपसंबन्धावच्छिन्नाधाराधेयभावः संनिकर्षविशेषः ( नील० १ पृ० १८ ) । स्वरूपसंबन्धावच्छिन्नाधेयता-संसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यता इति तु वयं ब्रूमः । यथा वा नीलो घटः इत्याकारकशाब्दबोधे घटो विशेष्यः । अत्र इयं विशेष्यता केनचिदपि संबन्धेनावच्छिन्ना न भवति इति वदन्ति । विशेष्यता चात्र तत्तज्ज्ञानीयो यत्किंचित्प्रकारतानिरूपितः संसर्गताभिन्नो विषयताविशेषः इति केचित् । भासमानवैशिष्ट्यानुयोगित्वमिति संप्रदायः (कु० ४) । अत्र वैशिष्ट्यं च संबन्धविशेषः । अत्रेदमवधेयम् । मध्यवर्तिविषयतयो-रैक्यमेव इति जगदीशचक्रवर्तिनः पक्षः । मध्यवर्तिविषयतयोर्भेद एवेति गदाधरभट्टाचार्याणां पक्षः । यथा हि दण्डवान् पुरुष इत्यत्र पुरुषे दण्डः प्रकारः दण्डे च दण्डत्वं प्रकारः इति स्थितिः । एवं च दण्डत्व-निष्ठप्रकारतानिरूपिता विशेष्यता पुरुषनिष्ठविशेष्यतानिरूपिता प्रकारता च एतद्द्वयं दण्डे तिष्ठति । तथा च मध्यवर्तिनोस्तयोर्द्वयोर्विषयतयोरैक्यम्

इति जगदीश आह । गदाधरमते तु तयोर्भेद इत्यवच्छेद्यावच्छेदकभावः स्वीकर्तव्यः । स चेत्थम् । दण्डत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ना या पुरुषनिष्ठविशेष्यतानिरूपिता दण्डनिष्ठा प्रकारता तद्वान् दण्डो भवतीति । एवं वैपरीत्येनापि पुरुषनिष्ठविशेष्यतानिरूपितदण्डनिष्ठप्रकारत्वावच्छिन्ना या दण्डत्वनिष्ठप्रकारतानिरूपिता दण्डनिष्ठविशेष्यता तद्वान् दण्डो भवतीति ।

**विशेष्यता**—व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता ( सर्व० सं० पृ० ४४२ शां० ) ।

**विशेष्यासिद्धः**—( हेत्वाभासः ) यो हेतुः स्वघटकविशेष्यविशिष्टः सन्पक्षे न तिष्ठति न सिध्यति च सः । यथा शब्दो नित्यः अस्पर्शत्वे सति द्रव्यत्वादित्यादौ हेतुर्विशेष्यासिद्धः । अत्र अस्पर्शत्वविशिष्टं द्रव्यत्वं हेतुः । स च शब्दे नास्त्येव । शब्दे अस्पर्शत्वरूपविशेषणस्य सत्त्वेपि द्रव्यत्वात्मकस्य विशेष्यस्याभावात् इति । अत्र विग्रहः विशेष्येणासिद्धः इति । स च विशेष्यासिद्धः स्वरूपासिद्धप्रभेदः (त० भा० पृ० ४६) ।

**विशोका**—( सिद्धिः ) सर्वभावाधिष्ठातृत्वादिरूपा ( सर्व० सं० पृ० ३८५ पात० ) ।

**विश्वासः**—१ वञ्चकत्वाभावसंभावना । यथा न विश्वसेदविश्वस्तम् ( पञ्चत० ) इत्यादौ । २ इदमित्थम् इत्याकारश्चित्तवृत्तिविशेषः इत्येके वदन्ति ।

**विषयः**—१ विषयतावान् । यथा अयं घटः इति ज्ञाने घटत्वम् विषयः । जगत् प्रमेयम् इति ज्ञाने प्रमेयत्वेन जगद्विषयः । विषयता चात्र विषयः इत्याकारकप्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः ( न्या० म० ख० १ पृ० ४ ) । घटो ज्ञानविषयः पटो ज्ञानविषयः इत्यनुगतप्रतीतिसाक्षिको ज्ञानविषयस्वरूपसंबन्धविशेषः इत्यर्थः ( त० प्र० ) । अत्र ज्ञानविषयत्वं च ज्ञानसंबन्ध एव इति । इयं विषयता त्रिविधा विशेष्यता प्रकारता संसर्गता चेति । यथा अयं घटः इति प्रत्यक्षे घटत्वे प्रकारता इदमर्थे विशेष्यता समवायादौ संबन्धे च संसर्गता (कु० ४ ) ( त० प्र० ) इति । विषयता च पदार्थान्तरमेव । तथा च विषयता विषयिता च न स्वरूप-

संबन्धविशेषः किंतु सप्तपदार्थातिरिक्तैव इत्येकदेशिन आहुः । भट्टास्तु ज्ञातो घटः इति प्रतीतिसिद्धा ज्ञानजन्या विषयनिष्ठा प्राकट्यापरनाम्नी पदार्थे ज्ञातता सैव च विषयता ज्ञानविषययोः संबन्धरूपा इत्याहुः ( प० मा० ) ( न्या० म० १।४ ) । विषयता ज्ञानादिवत् सविषयका प्रसिद्धविषयतातोन्या इत्यतिरिक्तविषयतावाद्याह ( दीधि० हेत्वाभा० बाध० पृ० २१८ ) । विषयो हि द्विविधः अपरोक्षः परोक्षश्चेति । तत्राद्यः प्रत्यक्षस्य विषयः । द्वितीयस्त्वनुमानस्य विषयः शब्दस्य विषयश्च ( प्र० च० पृ० ४१ ) इति । २ प्रतीयमानभोगसाधनम् । यथा अनित्यपृथिवीजलतेजोवायुभागो द्व्यणुकादिर्विषयः । विषयता चात्र लौकिकसाक्षात्कारविषयकार्यद्रव्यत्वम् । वस्तुतस्तु लौकिकसाक्षात्कारविषयत्वमेव द्रव्यगुणकर्मसामान्याभावसाधारणं विषयत्वम् ( वै० उ० ४।२।१ पृ० २०९ ) । अथ वा साक्षात्परंपरया वोपभोगसाधनत्वे सति जन्यद्रव्यत्वम् ( वै० वि० ४।२।१ ) । अत्रायं नियमः यच्च कार्यं यददृष्टाधीनम् तत् तदुपभोगं साक्षात्परंपरया वा जनयत्येवेति ( मु० १ ) । यद्वा शरीरेन्द्रियभिन्नत्वे सति भोगसाधनत्वम् ( वाक्य० १ पृ० ३ ) । ज्ञायमानत्वे सति आत्मनो भोगसाधनत्वम् ( त० कौ० ) इति वा । ३ ग्रन्थस्य प्रतिपाद्योर्थो विषयः ( म० प्र० ४ ) । ४ पौराणिकास्तु इन्द्रियजन्यज्ञानविषयः । यथा शब्दस्पर्शरूपरसगन्धा विषयाः इत्याहुः । अत्रार्थे विग्रहः विषण्वन्ति स्वात्मकतया विषयिणं निरूपयन्ति संबध्नन्ति वा विषयाः इति । अत्रोच्यते विषयाशामहापाशाद्यो विमुक्तः सुदुस्त्यजात् । स एव कल्पते मुक्त्यै नान्यः षट्शास्त्रवेद्यपि ॥ ( विवेकचूडामणौ ) इति । ५ नियामकः इति भट्ट आह । अत्रार्थे व्युत्पत्तिं प्रदर्शयति विशब्दो हि विशेषार्थः सिनोतिर्बन्धनार्थकः । विशेषेण सिनोतीति विषयोतो नियामकः ॥ ( भट्टका० ) इति । ६ आलंकारिकास्तु आरोपाश्रयः । यथा गौर्वाहीक इत्यादौ वाहीको विषयः इत्याहुः ( काव्यप्र० उ० २ ) । ७ मीमांसकाश्च [ क ] अधिकरणावयवविशेषो विचारार्हवाक्यम् । [ ख ] आपाततः प्रतीतः संदिग्धोर्थो विषयः ( जै० न्या० अ० १ पा० १ अधि० १ ) इत्याहुः । अत्रोच्यते विषयो विशयश्चैव

पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति शास्त्रेस्मिन् पञ्चाधिकरणं स्मृतम् ॥ ( मीमांसा० ) इति । निर्णयः सिद्धान्तः । ८ देशः इति काव्यज्ञा आहुः ।

**विषयि**—१ विषयितावत् । यथा विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ( भा० प० श्लो० ६६ ) इत्यादौ ज्ञानं विषयि भवति । अत्रार्थे व्युत्पत्तिः विषयोस्त्यस्य स्वनिष्ठविषयतानिरूपितविषयितावत्त्वसंबन्धेन इति विषयि । इयं विषयितापि ज्ञानेच्छाकृतिभावनान्यतमनिष्ठा विषयतावत्स्वरूपसंबन्धविशेषः । विषयिता च नियमेन विषयतानिरूपिता भवति इति वस्तुस्थितिः । अत्रेदं बोध्यम् । विषयितापि त्रिविधा विशेषणतानिरूपिता प्रकारिता संसर्गतानिरूपिता संसर्गिता विशेष्यतानिरूपिता विशेष्यिता चेति । यथा घटवद्भूतलम् इति ज्ञाने घटनिष्ठप्रकारतानिरूपिता प्रकारिता संयोगनिष्ठसंसर्गतानिरूपिता संसर्गिता भूतलनिष्ठविशेष्यतानिरूपिता विशेष्यिता एताः प्रकारितासंसर्गिताविशेष्यिताः सन्ति इति । सर्वत्रैवमेवोह्यम् । अत्रेदमधिकं विज्ञेयम् । गदाधरादीनां मते विषयितात्रैविध्याङ्गीकारेण विषयितैव अनुमित्यादिप्रतिबन्धकतावच्छेदिका हेत्वाभासलक्षणादौ भवति । जगदीशचक्रवर्तिमते तु त्रिविधविषयतानिरूपिताया अप्येकस्या एव विषयिताया अभ्युपगमेन विषयतैव निरूपकतासंबन्धेन तादृशप्रतिबन्धकतावच्छेदिका भवति इति मतभेदो द्रष्टव्यः । ययोर्विषयतयोर्निरूप्यनिरूपकभावः तन्निरूपितविषयितयोरेवावच्छेद्यावच्छेदकभावः इति सिद्धान्तोप्यङ्गीकर्तव्यः । तेन तद्वद्विशेष्यकतत्प्रकारकत्वरूपस्य तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वपर्यवसन्नस्य यथार्थज्ञानलक्षणस्य रङ्गत्वेन रजतावगाहिनि रजतत्वेन च रङ्गावगाहिनि इमे रङ्गरजते इत्याकारकसमूहालम्बनभ्रमे यथाश्रुतस्य तद्वद्विशेष्यकतत्प्रकारकत्वस्य ( रङ्गविशेष्यकत्वरङ्गत्वप्रकारकत्वयोः रजतविशेष्यकत्वरजतत्वप्रकारकत्वयोश्च ) सत्त्वेपि रङ्गत्वप्रकारतायां रङ्गविशेष्यतानिरूपितत्वस्य रजतत्वप्रकारतायां च रजतविशेष्यतानिरूपितत्वस्य चासत्त्वेन रङ्गविशेष्यकत्वावच्छिन्नरङ्गत्वप्रकारकत्वरजतविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वयोरभावात् तादृशभ्रमे नातिव्याप्तिः ( नील० १ पृ० १५ ) । २ इन्द्रियम् । अत्रार्थे स्वविषयक-

ज्ञानजनकत्वसंबन्धेन विषयोस्त्यस्य इति विषयि इत्यनुसंधेयम् । ३ विषयासक्तः इत्यालंकारिका आहुः । ४ राजा विषयी इति काव्यज्ञा वदन्ति ।

**विषवेगः**—धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः ( याज्ञ० स्मृ० टी० मिता० २।१११ ) ।

**विषादः**—[ क ] इष्टनाशकृतो मनोभङ्गः ( रघु० टी० मल्लि० ) । यथा विषादलुप्तप्रतिपत्तिविस्मितम् ( रघु० ३।४० ) इत्यादौ । तदुक्तम् विषादश्चेतसो भङ्ग उपायाभावनाशयोः ( रघु० स० ३ श्लो० ४० टी० ) इति । [ ख ] वेदान्तिनस्तु मोहनिमित्ताच्छोकाद्यन्मनोदौर्बल्यम् यस्मिन् सति सर्वव्यापारोपरमो भवति स विषाद इत्याहुः ( गीता अ० १ श्लो० २८ भाष्ये राघवेन्द्र० ) ।

**विष्टम्भः**—१ [ क ] प्रतिबन्धः । [ ख ] क्वचित् उत्तरदेशगतिप्रतिबन्धः ( गौ० वृ० ४।२।२० ) । यथा अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ( गौ० ४।२।२० ) इत्यादौ विष्टम्भः । २ रोगविशेषः इति भिषज आहुः ।

**विष्टुतिः**—तिसृभ्यो हिंकरोति स प्रथमया तिसृभ्यो हिंकरोति स मध्यमया तिसृभ्यो हिंकरोति स उत्तमया इति सूक्तत्रयपठितानां नवानामृचां गानं त्रिभिः पर्यायैः कर्तव्यम् । तत्र प्रथमे पर्याये त्रिषु सूक्तेष्वाद्यास्तिस्र ऋचः । द्वितीये पर्याये मध्यमाः । तृतीये पर्याये चोत्तमाः । सेयं यथोक्तप्रकारोपेता गीतिस्त्रिवृत्स्तोमस्य विष्टुतिः स्तुतिप्रकारविशेषः ( जै० न्या० अ० १ पा० ४ अधि० ३ ) ।

**विष्णुः**—द्वादशी ( कामशब्दे दृश्यम् ) ।

**विष्णुशृङ्खलः**—द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदा । स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः ॥ ( पु० चि० पृ० २१६ ) ।

**विसंवादः**—१ समयविरुद्धवादः । २ अन्यथास्थितस्य वस्तुनोन्यथाकथनम् । ३ प्रमाणानुसरणाभावः इति केचिदाहुः ( वाच० ) । ४ विप्रलम्भः ( वञ्चनम् ) इति काव्यज्ञा वदन्ति ।

**विसर्गः**—१ त्यागः । २ शाब्दिकास्तु विसर्जनीयाख्यो वर्णविशेष इत्याहुः । ३ सूर्यस्यायनविशेषः इति ज्योतिर्विद आहुः । ४ प्रलयः । ५ विशेषसृष्टिश्चेति पौराणिका आहुः ।

**विस्तरः**—पञ्चानां पदार्थानां प्रमाणतः पञ्चाभिधानम् ( सर्व० सं० पृ० १७१ नकु० ) ।

**विहितत्वम्**—[ क ] इष्टसाधनत्वेन वेदबोधितत्वम् ( वाक्य० गु० पृ० २१ ) । यथा स्वर्गकामो यजेत इत्यादौ यज्ञादिकर्मणो विहितत्वम् । यथा वा नैयायिकानां मते अहरहः संध्यामुपासीत इत्यादौ संध्योपासनाया विहितत्वम् । एतन्मते संध्योपासनाया दुरितनिवृत्त्यादि फलमङ्गीकृतम् इति विहितत्वं संगच्छते । अत्र वेद इत्युपलक्षणम् । तेन वेदमूलकस्मृत्याद्यपि संगृह्यते । [ ख ] बलवदनिष्टाननुबन्धित्वेन वेदबोधितत्वम् इति मीमांसका आहुः ( मू० म० १ ) । एतन्मते नित्यकर्मणां फलाभावेनेष्टासंभवेपि बलवदनिष्टाजनकत्वरूपलक्षणदलस्य समन्वयो भवति । शिष्टं तु विधिशब्दव्याख्याने द्रष्टव्यम् । [ ग ] धर्मोत्पादकत्वम् इति केचिदाहुः ।

**वीतम्**—१ अनुमानविशेषः । अन्वयमुखेन प्रवर्तमानमनुमानम् इत्यर्थः ( सांख्य० कौ० कारि० ५ पृ० १० ) । २ युद्धासमर्थं सैन्यम् इति नीतिशास्त्रज्ञा आहुः । ३ शान्तम् । ४ गतं चेति काव्यज्ञा आहुः ।

**वीप्सा**—[ क ] सकलधर्मिप्रत्यायनेच्छा । यथा—कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव प्रसीद । यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे भद्रं भद्रं वितर भगवन्भूयसे मङ्गलाय ॥ ( मालतीमाध० १।३ ) इत्यादौ यत्पदे वीप्सा ( ग० २ अवय० हेतु० पृ० ७४ ) ( चि० २ अव० पृ० ८१ ) । यथा वा—यां यां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव ( माघ० स० ३ श्लो० १६ ) इत्यादौ यत्तत्पदयोर्वीप्सा । [ ख ] व्याप्तेर्व्यापकत्वस्य वा बोधनेच्छा । यथा यो यो धूमवान्स वह्निमान् इत्यत्र यत्पदे वीप्सा । अत्रेदं बोध्यम् । नित्यवीप्सयोः ( पाणि० ८।१।४ ) इत्यनेन

विहिताया द्विरुक्तेर्नित्यतया यत्पदे द्विरुक्तिसत्त्वेपि तथा तत्पदे द्विरुक्तेः साधुत्वेपि च न्याये प्रयुज्यमानेधिकस्यानपेक्षितत्वेन तत्पदे द्विरुक्तेर्नावश्यकत्वम् (ग० २ हेतु० पृ० ७४) इति । अत्र च वीप्सया महानसं धूमवद्वह्निमच्च महानसान्यद्धूमवद्वह्निमच्च इति वाक्यार्थचतुष्टयविषयकबोधः धूमवान्धूमव्यापकवह्निमान् इति विशिष्टैकार्थबोधो वा जायते इति बोध्यम् (ग० २ अव० न्यायलक्ष० पृ० ६) । अत्र वीप्साप्रयोजनं च क्वचिद्व्यभिचारधीवारणमिति प्राञ्च आहुः । उद्देश्यमानसव्याप्तिज्ञानविरोधिव्यभिचारधीवारणम् इत्यर्थः । तथा चायं भावः । यावद्धेत्वधिकरणे साध्यवत्त्वनिश्चये तेन व्यभिचारशङ्कानिवर्तनेन साधनाधिकरणे साध्याभाववत्त्वरूपव्यभिचारग्रहप्रतिबन्धो भवति । [ग] अनवयवेन द्रव्याणामभिधानमेव वीप्सार्थः इति महाभाष्यकारः पतञ्जलिराह ।

**वीरुत्**—छिन्ना अपि या विविधं प्ररोहन्ति ता लताः गुडूचीप्रभृतयः ।

**वृत्तिः**—१ [क] शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलः पदपदार्थयोः संबन्धः (चि० ४) (मु० ४ पृ० १७४) । सा च पदवृत्तिः इत्युच्यते इति विज्ञेयम् (ग० शक्ति० पृ० २) । अत्र वृत्तित्वं च शक्तिलक्षणान्यतरत्वम् (त० प्र० ख० ४ पृ० ३४) । परे तु शाब्दबोधजनकपदपदार्थसंबन्धत्वम् इत्याहुः (ल० म० स्फोट० पृ० १३) । अत्रेदं बोध्यम् । वृत्तिस्तात्पर्यनिर्वाहिका भवति । तात्पर्यं चात्र त्रिविधम् औत्सर्गिकम् आपवादिकम् नियतं चेति । तत्राद्यम् शक्तिं कल्पयति । यथा घटादिपदप्रयोक्तुरुत्सर्गतो घटादावेव तात्पर्यमस्ति इति तस्य तत्र शक्तिः । द्वितीयम् लक्षणां कल्पयति । यथा गङ्गापदस्य मुख्यार्थान्वयबाधे तीरादौ तात्पर्यग्रहो भवति इति तस्य तत्र लक्षणा । तृतीयम् निरूढिलक्षणां कल्पयति । निरूढलाक्षणिकस्यानुपपत्तिज्ञानमन्तरापि लक्ष्ये तात्पर्यग्रहनियमात्तत्र निरूढिलक्षणा । यथा कटं करोतीत्यादौ कटशब्दस्य कटावयवे । कटस्य सिद्धत्वे करणं न संभवति असिद्धे च कर्मत्वं न इति अनुपपत्तिज्ञानविरहेपि कटावयवान् कटवत्तया करोति इति ततो बोधात् । अथ वा वह्निमान्धूमादित्यादौ हेतुपदे तज्ज्ञाने निरूढिलक्षणा (म० प्र०

ख० ४ पृ० ४०–४१ ) । शाब्दिकमते वृत्त्या संस्कारो जन्यते । संस्कारकल्पिका च वृत्तिस्मृतिः शाब्दबुद्धिरेव वा इति ज्ञेयम् ( ल० म० स्फोट० पृ० २ ) । [ ख ] शक्तिलक्षणान्यतरात्मकः संबन्धः ( मु० ४ ) ( दि० ४ पृ० १७४ ) ( न्या० बो० ) । यथा घटपदस्य कम्बुग्रीवादिमत्यर्थे वृत्तिः ( शक्तिः ) । [ ग ] शाब्दिकास्तु शाब्दबोधप्रयोजकस्तत्तदर्थनिरूपितः शब्दधर्मः इत्याहुः ( ल० म० स्फोट० पृ० २ ) । न्यायमते वृत्तिर्द्विविधा संकेतः लक्षणा चेति ( ग० शक्ति० ) ( तर्का० ४ पृ० १० ) । प्रकारान्तरेण वृत्तिर्द्विविधा मुख्या गौणी च । तत्राद्या शब्दशक्तिः । सैव संकेत इत्युच्यते । द्वितीया तु लक्षणा इति । प्राचीनशाब्दिकमते योगादिभेदात् षड्विधा शब्दवृत्तिः । वृत्तिभेदाच्च शब्दभेदः । तदुक्तम् यौगिको योगरूढश्च शब्दः स्यादौपचारिकः । मुख्यो लाक्षणिको गौणः शब्दः षोढा निगद्यते ॥ ( म० प्र० ४ पृ० ४१–४२ ) इति । लक्षितलक्षणापि वृत्त्यन्तरम् इति प्राञ्चो नैयायिका आहुः । सा च लक्षितलक्षणा जहल्लक्षणैव नातिरिक्ता वृत्तिः इति नव्या आहुः । व्यञ्जनाख्यं तृतीयमपि वृत्त्यन्तरमैच्छन्नालंकारिकाः शाब्दिकाश्च । तदुक्तम् वाच्योर्थोभिधया बोध्यो लक्ष्यो लक्षणया मतः । व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य वृत्तयः ॥ ( सा० द० परि० २ श्लो० ११) इति । तत्र व्यङ्ग्योर्थो यथा—गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शुभाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ इत्यादौ व्यञ्जनया वृत्त्या प्रियाया मरणम् । अत्र हे प्रिय तव गमनोत्तरं मे प्राणवियोगो भविष्यति अतो न गन्तव्यम् इत्यर्थो व्यज्यते । नैयायिकास्तु गच्छसि इत्युक्तेः मा गाः इति तात्पर्यमुन्नीयते संभाव्यते वा न तु मा गाः इति निर्णीयते इति कृतं वृत्त्यन्तरेण इत्याहुः (न्या० म० ४ पृ० १७)। अत्र अधिकं तु व्यञ्जनाशब्दव्याख्याने द्रष्टव्यम् । गौणीं वृत्त्यन्तरमैच्छन्मीमांसकाः । यथा अग्निर्माणवकः इत्यादौ माणवकेग्निसादृश्यबोधाद्गौणी वृत्त्यन्तरमेव ( सि० च० ४ पृ० ३१ ) । यथा वा यजमानः प्रस्तरः इत्यादौ यजमानशब्दः स्वार्थनिष्ठयागसाधकत्वरूपगुण-

योगात् प्रस्तरे प्रयुक्तो यजमानकार्यकारणत्वेन प्रस्तरमुपस्थापयति । यथा वा सिंहो माणवकः इत्यादौ सिंहशब्दः स्वार्थनिष्ठचापल्यादिगुणयोगान्माणवकं तेन रूपेणोपस्थापयति । तथा च तन्मते शक्तिलक्षणाभ्यामतिरिक्तैव गौणी वृत्तिः ( म० प्र० ४ पृ० ४१ ) । शक्यस्य साक्षात्संबन्ध एव लक्षणा न तु परंपरासंबन्धरूपा । तेन गङ्गायां घोषः इत्यत्र तीरे शक्यस्य प्रवाहस्येव अग्निर्माणवकः इत्यादौ माणवके शक्यस्याग्नेः साक्षात्संबन्धो न संभवति इति सादृश्यात्मकस्य परंपरासंबन्धस्यातिरिक्तवृत्तित्वमङ्गीकर्तव्यम् इति मीमांसकानामभिप्रायः । नैयायिकास्तु तन्न सहन्ते । शक्यस्य साक्षात्संबन्धस्येव परंपरासंबन्धस्यापि लक्षणात्वस्वीकारे क्षतिविरहाद्गौण्या न वृत्त्यन्तरत्वम् । तथा च अग्निर्माणवकः इत्यादौ लक्ष्यमाणगुणसंबन्धरूपा लक्षणैव ( वेदा० प० ) । तदर्थश्च लक्ष्यमाणो यो गुणः शुचित्वादिः तत्संबन्धरूपा इति । तथा च अग्निर्माणवकः इत्यादौ शक्यस्याग्नेः स्वनिष्ठशुचित्ववत्त्वसंबन्ध एव लक्षणा ( नील० ४ पृ० ३० ) । वाक्यार्थबोधने तात्पर्याख्यां वृत्तिमङ्गीचक्रुरभिहितान्वयवादिनः तार्किकाः । तेषामयमाशयः । अभिधाया एकैकपदार्थबोधेन विरमात् वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका तात्पर्याख्या वृत्तिरङ्गीकर्तव्या । तदुक्तम् तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने ( सा० द० उ० २ श्लो० २० ) इति । २ संनिकर्षः । ३ ज्ञानम् ( वात्स्या० १।१।३ ) ४ आधेयत्वम् । यथा भूतलवृत्तिर्घटः इत्यादौ घटे भूतलाधेयत्वम् । यथा वा सिद्धान्तसिद्धव्याप्तिस्वरूपे निरूपणीये हेतुमति निष्ठा वृत्तिर्यस्य स तथा विरहः अभावः इत्यादौ वृत्तिशब्दस्यार्थ आधेयत्वम् ( मु० २ पृ० १४० ) । ५ आधेयतावान् । यथा तत्र वृत्तिर्यः अभावः इत्यादौ । यथा वा सपक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ( भा० प० २ श्लो० ७१ ) इत्यादौ वृत्तिशब्दस्यार्थ आधेयतावान् । ६ वैयाकरणास्तु विग्रहवाक्यार्थाभिधानम् परार्थाभिधानं वा वृत्तिः ( महाभा० ) । यथा राज्ञः पुरुष इत्यत्र राजपुरुषः इति समासो वृत्तिः । ताश्च वृत्तयः कृत्तद्धितसमासैकशेषसनाद्यन्तधातवः पञ्च इत्याहुः । परार्थाभिधानमित्यस्यार्थस्तु परस्य शब्दस्योपसर्जनार्थकस्य यत्र शब्दान्तरेण प्रधानार्थकपदेनार्थाभिधानं

विशेषणत्वेन ग्रहणम् सा वृत्तिः । अथ वा परार्थस्य प्रधानार्थस्याप्रधानपदैर्यत्र स्वार्थविशेष्यत्वेन ग्रहणं सा वृत्तिः । राजपुरुष इत्यत्र पुरुषपदेन वाक्यावस्थायामनास्कन्नो राजार्थो राजपदेन वा पुरुषार्थं आस्कन्द्यते । तत्संवलितः स्वार्थ उपस्थाप्यत इति यावत् ( ल० म० वृत्तिनि० पृ० ८ )। अत्रेदं विज्ञेयम् । वृत्तिविषयं समर्थः पदविधिः ( पाणि० २।१।१ ) इति सूत्रम् । सामर्थ्यं चात्रैकार्थीभावः । पृथगर्थानामेकार्थीभावः सामर्थ्यम् । राज्ञः पुरुषः इति वाक्ये पृथगर्थानि पदानि राजपुरुषः इति समासे एकार्थानि इति भाष्यात् । एवं च यत्किंचित्पदजन्यपृथगुपस्थितिविषयार्थकत्वेन लोकदृष्टानां विशिष्टविषयैकशक्त्यैकोपस्थितिजनकत्वमेकार्थीभावः इति फलितम् ( ल० म० वृत्तिविचा० पृ० १ ) ( काशिका २।१।१ ) । ७ सांख्यास्तु महदादीनामिन्द्रियाणां च व्यापारो वृत्तिः । यथा अध्यवसायो ( बुद्धेर्वृत्तिः ) बुद्धिः ( सां० सू० २।१३ ) इत्यादौ इत्याहुः । तत्रोक्तम् रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः । वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ ( सांख्य० का० श्लो० २८ ) इत्यादि । अत्र योगशास्त्रप्रवर्तकः पतञ्जलिः सूत्रयामास वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः । प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ( योगसू० १।६–७ ) इति । ८ अन्तःकरणपरिणामो वृत्तिः इति मायावादिनो वेदान्तिन आहुः । अन्तःकरणवृत्तेः स्वरूपप्रयोजनादिकं यथा । यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते । स एव परिणामो वृत्तिः इत्युच्यते । अनुमित्यादिस्थले तु नान्तःकरणस्य वह्न्यादिदेशगमनम् । वह्न्यादेश्चक्षुराद्यसंनिकर्षात् । इन्द्रियजन्यवृत्तिश्चावरणभङ्गार्था संबन्धार्था इति मतद्वैधम् ( वेदा० प० परि० ७ )। ९ साहित्यशास्त्रज्ञास्तु नाटकादौ रचनाविशेषो वृत्तिः । सा च कैशिकी सात्त्वती भारती आरभटी इत्येवं चतुर्विधा इत्याहुः । तदुक्तम् शृङ्गारे कैशिकी वीरे सात्त्वत्यारभटी पुनः । रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ॥ चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः ( सा० द० परि० ६ श्लो० १२२, १२३ ) ( प्रतापरुद्रे० प्रक० २

पृ० ८–९ ) इति । १० व्यवहारशास्त्रज्ञास्तु जीविका वृत्तिः इत्याहुः । वृत्तिहरणे निन्दा दृश्यते स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः । स कृतघ्न इति ज्ञेयः फलं तच्छृणु भूमिप ॥ यावन्तो रेणवः सिक्ता विप्राणां नेत्रबिन्दुभिः । तावद्वर्षसहस्रं च घृतपाके स तिष्ठति ॥ ( ब्रह्मवै० प्र० अ० ४९ ) इत्यादि । ११ स्थितिः । १२ विवरणं चेति काव्यज्ञा आहुः । १३ पञ्चमलघूकरणार्थं मानामानविरोधिनोन्नार्जनोपाया वृत्तयो भैक्ष्योत्सृष्टयथालब्धाभिधाः ( सर्व० सं० पृ० १६४ नकु० ) इति ।

**वृत्तिनियामकसंबन्धः**—( संबन्धः ) अविशिष्टव्यावृत्तविशिष्टधीनियामकः संबन्धः ( चि० खण्ड० १ समवायवादः पृ० ६५२ ) । आधारत्वाधेयत्वान्यतरावच्छेदकः इति यावत् । यथा घटवद्भूतलम् इत्यादौ घटभूतलयोः संयोगो वृत्तिनियामकः । यथा वा गुणक्रियाजातिविशिष्टबुद्धौ विषयीभूतः समवायो वृत्तिनियामकः ( चि० १ पृ० ६५१ ) । वृत्तिनियामकसंबन्धाश्च संयोगसमवायस्वरूपकालिकदैशिकविशेषणतादयः । एतद्व्यतिरिक्तास्तु वृत्त्यनियामका बोध्याः । ते च गगनादिसंयोगाङ्गुलिद्वयसंयोगकुण्डबदरसंयोगविषयत्वविषयित्वानुयोगित्वप्रतियोगित्वनिरूपकत्वनिरूप्यत्वतादात्म्यादयोनन्ता एव । अत्रेदं बोध्यम् । प्राचीनाः वृत्त्यनियामकसंबन्धस्याप्यभावप्रतियोगितावच्छेदकत्वं स्वीकुर्वन्ति । तथा हि । धनेन कुलमित्यादौ कुले धनस्य हेतुत्वम् । विप्राय गां ददातीत्यादौ गवि द्विजस्य संप्रदानत्वम् । वृक्षात्पर्णं पततीत्यादौ पतने वृक्षस्यापादानत्वम् । वह्निमान् धूमादित्यादौ धूमेन वह्निरित्यादौ वा वह्नौ धूमस्य ज्ञापकत्वम् । चैत्रस्य धनमित्यादौ धने चैत्रस्य स्वामित्वम् । भूतले घट इत्यादौ घटे भूतलस्याधिकरणत्वम् । इत्यादिप्रतीत्या निरूपकत्वस्यापि संबन्धस्य क्वचिद्वृत्तिनियामकत्वमावश्यकम् । न हि कुलादिनिरूपितं हेतुत्वादिकमेव धनादिनिष्ठत्वेन तासु भासते । धनादिनिष्ठहेतुत्वादेः संबन्धविशेषेण निरूपकत्वादिना कुलादिवृत्तिताया अप्यनुभावकत्वात् ( श० प्र० श्लो० ९२ पृ० १२१ ) । तथा च सति नञ्समभिव्याहारस्थले न धनेन कुलमित्यादौ प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ इति न्यायेन निरू-

पकत्वसंबन्धावच्छिन्नप्रतियोगिताकधननिष्ठहेतुत्वाद्यभावः कुलादौ प्रतीयते। विप्राय गां न ददाति इत्यादौ निरूपकत्वसंबन्धावच्छिन्नप्रतियोगिताकद्विजनिष्ठसंप्रदानत्वाभावो गवि प्रतीयते इति। एवमग्रेप्यूह्यम्। नव्यास्तु तन्न स्वीकुर्वन्ति। पूर्वोक्तस्थलेषु जन्यत्वसंप्रदेयत्वादिकमेव तृतीयार्थः। तथा च स्वरूपसंबन्धावच्छिन्नप्रतियोगिको धनजन्यत्वाद्यभाव एव तत्र प्रतीयते ( ग० व्यु० का० १ ) इति।

**वृथाचेष्टा**—स्वकर्तव्यताप्रयोजकेच्छाविषये स्वरूपायोग्यकर्म ( मू० म० १ )। यथा वृथाचेष्टां न कुर्वीत इत्यादौ स्वर्गोद्देशेन कृतं चैत्यवन्दनं वृथाचेष्टा।

**वृद्धिः**—१ [ क ] कारणवतो द्रव्यस्यावयवोपचयः। अवर्धत गौरिति ( वात्स्या० २।२।५९ )। [ ख ] अवयवोपचयः ( दि० १ )। २ आकार ऐकार औकार एते त्रयो वर्णा वृद्धिः इति शाब्दिका वदन्ति। ३ व्यवहारज्ञास्तु उत्तमर्णस्य स्वदत्तद्रव्यमपेक्ष्याधमर्णाकारितोधिकलाभो ( व्याज वड्डि सुद ) वृद्धिः इत्याहुः। अत्रोक्तं नारदेन वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधान्यैः प्रकीर्तिता। षड्विधान्यैः समाख्याता तत्त्वतस्तां निबोधत॥ कायिका कालिका चैव चक्रवृद्धिरतोपरा। कारिता सशिखा वृद्धिर्भोगलाभस्तथैव च॥ (वीरमित्रो० अ० २ ऋणादान० पृ० २९४) इति। वार्धुषिके अशीतिभागो वृद्धिः स्यात् इति पुरुषार्थचिन्तामणिः ( पृ० २८ )। ४ जननाशौचम्। वृद्धिर्नाम पुत्रजन्मादिनिमित्तोपलक्षितः कालः ( पु० चि० पृ० ३७७ )। ५ भिषजस्तु औषधिविशेषः। ६ रोगविशेषश्च इत्याहुः ( भावप्र० )।

**वृश्चिकी**—( विष्टिः ) असिते सर्पिणी ज्ञेया सिते विष्टिस्तु वृश्चिकी। सर्पिण्यास्तु मुखं त्याज्यं वृश्चिक्याः पुच्छमेव च॥ ( पुरु० पृ० ३१२ )।

**वेगः**—१ ( गुणः संस्कारः ) [ क ] वेगत्वजातिमान् ( त० दी० गु० ) ( त० कौ० )। लक्षणं च क्रियाजन्यत्वे सति क्रियाजनकत्वम्। अत्र गुरुत्वादिवारणाय सत्यन्तं दलं दत्तम्। विभागादिवारणाय विशेष्यदलं दत्तम् इति ज्ञेयम्। अथ वा मूर्तमात्रवृत्तितावच्छेदकसंस्कारविभाजकोपाधिमत्त्वम् ( वाक्य० गु० पृ० २१–२२ ) ( भा० प० ) ( व० भा० )।

तीक्ष्णगतिजनकगुणत्वम् इति कश्चिदाह ( ल० व० ) । [ ख ] द्वितीयपतनासमवायिकारणम् ( सि० च० गु० पृ० ३५ ) । अत्र प्रथमपतनस्यासमवायिकारणं तु गुरुत्वमेव इति तद्व्युदासाय द्वितीयपदम् । [ ग ] द्वितीयादिक्रियाहेतुः ( प्र० प्र० ) ( त० दी० ) । [ घ ] कर्मजः संस्कारः । यथा यष्ट्यग्रे च समं स्थितो ध्वजपटः प्रान्ते च वेगानिलात् ( विक्रमोर्व० १।४ ) इत्यादौ वेगः । स च वेगो मूर्तमात्रवृत्तिः ( प्र० प्र० ) ( भा० प० ) ( त० सं० ) ( त० कौ० ) । अत्र भाष्यम् वेगो मूर्तिमत्सु पञ्चसु द्रव्येषु निमित्तविशेषापेक्षात्कर्मणो जायते । नियतदिक्क्रियाप्रबन्धहेतुः स्पर्शवद्द्रव्यसंयोगविरोधी । क्वचित् कारणगुणपूर्वप्रक्रमेणोत्पद्यते ( प्रशस्त० २ गुण० पृ० ५३ ) इति । वेगो द्विविधः कर्मजः वेगजश्च । तत्राद्यः शरादौ नोदनजनितेन कर्मणा जायमानो वेगः प्रसिद्धः । तेन च पूर्वकर्मनाशः । तत उत्तरकर्म । एवमग्रेपि । वेगं विना कर्मणः कर्मप्रतिबन्धकत्वात् पूर्वकर्मनाश उत्तरकर्मोत्पत्तिश्च न स्यात् ( मु० गु० पृ० २३२ ) इति । वेगजो वेगस्तु वेगवत्कपालजन्यघटे प्रसिद्धः ( भा० प० श्लो० १५९ ) ( मु० ) ( सि० च० गु० पृ० ३५ ) ( त० व० पृ० २३० ) । मीमांसकास्तु निरन्तरो गतिसंतान एव वेग इत्याहुः ( प० मा० ) । तन्न सहन्ते नैयायिकाः । वेगोपि गुणान्तरम् न क्रियासंततिमात्रम् । मन्दगतौ वेगप्रतीत्यभावात् । क्रियाक्षणानामाशूत्पादनिमित्तो वेगव्यवहार इति चेन्न । अलातचक्रादिषु क्रियाक्षणानां निरन्तरोत्पादव्ययवतां प्रत्येकमन्तराग्रहणेनाशूत्पादस्य प्रत्यक्षेणाप्रतीतेः । वेगप्रत्ययस्य च भावात् । व्यक्ता च लोके क्रियावेगयोर्भेदावगतिः । वेगेन गच्छति इति प्रतीतेः ( न्या० क० साधर्म्य० पृ० २२ ) ( दि० गु० पृ० २३३ ) । २ शारीरकशास्त्रज्ञा भिषजस्तु मूत्रविष्ठादिनिःसारणयत्नः इत्याहुः । अत्र प्रसङ्गत उदाह्रियते स्वभावतः प्रवृत्तानां मलादीनां जिजीविषुः । न वेगं धारयेद्धीरः कामादीनां च धारयेत् ॥ ( राजनि० ) इति । ३ समूहः इति काव्यज्ञा आहुः ।

**वेदः**—१ ( शब्दः ) [ क ] लौकिकवाक्यभिन्नवाक्यम् ( कु० टी० ५ ) । तच्च ज्ञानसाधनं धर्मब्रह्मप्रतिपादकं शास्त्रम् मन्त्रब्राह्मणभेदेन द्विविधं च ।

तच्च स्वतः प्रमाणम् । अत्र सूत्रम् त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा ( आपस्त० सू० २।९।३।९ ) इति । मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ( गौ०२।१।६८ ) इति च । स्वतःप्रामाण्यं च प्रमाणान्तरानधीनप्रमितिजनकत्वम् । वेदस्य स्वतःप्रामाण्यव्यवस्थापनं तु धर्मब्रह्ममीमांसादौ तत्र तत्राचार्यैः कृतम् विस्तरभयात्तन्नात्र संगृहीतम्। किं च तद्वेदवाक्यम् अनेकविद्याधर्मस्थानम् देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतुभूतं च । यथा अग्निमीळे पुरोहितम् (ऋग्वे०) इषे त्वोर्जे त्वा (यजुर्वे०) अग्न आयाहि वीतये (सामवे०) शं नो देवीरभिष्टय आपो भवन्तु पीतये (अथर्ववे०) इत्यादि । वेदत्वं च विजातीयधर्मजनकाध्ययनप्रतियोगित्वम् ( कु० टी० ५ ) । अथ वा शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम् ( कु० टी० ५ ) ( चि० ४ ) ( व० उ० ६।१।१ ) ( वै० वि० ६।१।१ ) । अत्र लक्षणदोषं वारयति ईश्वरप्रमाया अजन्यत्वात् वेदार्थस्यानुमानविषयत्वेप्यनुमानादेर्वेदोपजीवकतया स्मृतीनां भारतादिभागस्य च वेदसमानार्थकत्वेपि शब्दजन्यधीजन्यत्वात् वेदादर्थं प्रतीत्यैव तत्प्रणयनात् ( चि० ४ )। अथ वा ऋग्यजुःसामाथर्वान्यतमत्वम् ( वै० वि० ६।१।१ ) । अपूर्वार्थप्रतिपादकत्वे सति नित्यसर्वज्ञप्रणीतवाक्यत्वं वा। वेदत्वं च अखण्डोपाधिः इति प्राञ्च आहुः ( म० प्र० ४ पृ० ६६ )। [ ख ] अपौरुषेयं वाक्यं वेदः इति मीमांसकाः प्रतिपेदिरे ( लौ० भा० पृ० १३ ) ( सर्व० पृ० २७० जैमि० ) । वेदस्य नित्यत्वेनापौरुषेयत्वम् । तत्र प्रमाणं तु वाचा विरूपनित्यया इति श्रुतिः । यो ब्रह्माणं विदधाति पूर्वम् यो वै वेदांश्च प्रहिणोति तस्मै ( श्वे० ६।१८ ) इति च श्रुतिः । नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् । अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा इति स्मृतिः ( प्र० च० परि० १ पृ० ४१ ) ( माध० भाष्य० ) ( शाब० भा० १।१।२३ ) । अपौरुषेयत्वं तु प्रमाणान्तरेणार्थमुपलभ्य विरचितं यत् तद्भिन्नत्वम् इति चिन्त्यम् । अत्र शङ्कते जैमिनिराचार्यः वेदांश्चैके संनिकर्षं पुरुषाख्याः ( जैमि० अ० १ पा० १ सू० २७ ) इति । तदर्थस्तु पुरुषेण हि समाख्या-

यन्ते वेदाः । काठकं कालापकम् पैप्पलादकं मौदुलकम् (शाब० भा० १।१।२७) इति । अथ वा तत्तच्छाखाकर्तृत्वेन पुरुषा आख्यायन्ते काठकम् कौथुमम् तैत्तिरीयम् इति । अत्र समाधत्ते उक्तं तु शब्दपूर्वत्वम् । आख्या प्रवचनात् (जैमि० १।१।२९-३०) इति । तदर्थस्तु वेदानां प्राचीनत्वम् उपाध्यायप्रवचनरूपसंप्रदायप्रवर्तकत्वेन समाख्या इति । पुनः शङ्कते अनित्यदर्शनाच्च (जैमि० १।१।२८) इति । तदर्थस्तु जननमरणवन्तश्च वेदार्थाः श्रूयन्ते बबरः प्रावाहणिरकामयत कुसुरुविन्द औद्दालकिरकामयत इत्येवमादयः। उद्दालकस्यापत्यं गम्यत औद्दालकिः इति (शाब० भा० १।१।२८)। अत्र समाधत्ते परं तु श्रुतिसामान्यमात्रम् (जैमि० १।१।३१) इति। तदर्थस्तु बबरध्वनियुक्तप्रवहणस्वभावो वायुरेव । न तु प्रवहणनामकः पुरुषः। असिद्धत्वात् (शाब० भा० १।१।३१) इति । नैयायिकास्तु वेदस्येश्वरकर्तृकत्वं मन्यन्ते। तत्कर्तृत्वे प्रमाणमनुमानम्। तच्च वेदः पौरुषेयो वाक्यत्वाद्भारतादिवत् इति (चि० ४) (सर्व० पृ० २७० जैमि०)। अस्मिन्ननुमाने श्रूयमाणकर्तृकत्वं स्मर्यमाणकर्तृकत्वं चोपाधिमुद्भावयन्ति मीमांसकादयः। तन्न सहन्ते नैयायिकाः । अत्रत्यविषयस्तर्कशास्त्रादौ द्रष्टव्यः इत्यलमतिप्रसङ्गेन । अत्र पौरुषेयत्वं च पुरुषाधीनोत्पत्तिकत्वम् (वेदान्तप० आगमपरि० पृ० ५४)। वर्णानामनित्यत्वादेव वेदस्याप्यनित्यत्वम् (गौ० वृ० २।२।१३)। वेदस्येश्वरकर्तृकत्वे मानं च विधिरेव तावद्गर्भे इव श्रुतिकुमार्याः पुंयोगे मानम् इत्याचार्याः प्राहुः (कि० व० १।१ पृ० ३९) (मु० गु०) (त० कौ० ४)। अन्ये त्वाहुः। वेदवाक्यानां बुद्धिमत्कर्तृकत्वे इतरबाधात् ईश्वरकर्तृकत्वं सेत्स्यति (त० व०) इति। अत्र सूत्राणि बुद्धिपूर्वा वाक्यकृतिर्वेदे (वै० ६।१।१) बुद्धिपूर्वो ददातिः (वै० ६।१।३) इत्यादीनि। अत्रायं भावः। वेदवाक्यरचना वक्तृयथार्थवाक्यार्थज्ञानपूर्वा वाक्यरचनात्वात् नदीतीरे पञ्च फलानि सन्ति इत्यस्मदादिवाक्यरचनावत् इत्यनुमानम् । न च अस्मदादिबुद्धिपूर्वकत्वेनान्यथासिद्धिः । स्वर्गकामो यजेत इत्यादाविष्टसाधनतायाः कार्यताया

वास्मदादिबुद्ध्यगोचरत्वात् । तेन स्वतन्त्रपुरुषपूर्वकत्वं वेदे सिध्यति ( वै० उ० ६।१।१ ) ( वात्स्या० २।१।६८ ) इति । किं च वेदस्याप्रामाण्यशङ्कानिवारणमपि कृतम् न कर्मकर्तृसाधनवैगुण्यात् ( गौ० २।१।५८ ) इति । एवं च परमाप्तसर्वज्ञेश्वरप्रणीतत्वेन वेदस्य प्रामाण्यं सिध्यति इति । [ ग ] केचिद्वेदान्तिनस्तु अपौरुषेयत्वे सति समयबलेन परोक्षानुभवसाधनं वेदः इत्याहुः ( माध० भाष्य० ) । अत्र पौरुषेयत्वं च सजातीयोच्चारणानपेक्षोच्चारणविषयत्वम् । तादृशोच्चारणजातीयत्वं वा । तथा च सर्गाद्यकाले परमेश्वरः प्राणिनां भोगभूतये लीलाविग्रहं परिगृह्य पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीकं वेदं विरचितवान् न तु तद्विजातीयं वेदम् इति न पौरुषेयत्वं वेदस्य । भारतादीनां तु सजातीयोच्चारणमनपेक्ष्यैवोच्चारणम् इति तेषां पौरुषेयत्वम् (वेदान्तप० आगमपरि० पृ० ५५) ( मथुराना० ) इति । वेदस्येश्वरकर्तृकत्वे प्रमाणम् अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः (बृ० २।४।१०) तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत इति च । इदं सर्वमसृजत ऋचो यजूंषि सामानि इति तेपानात्त्रयो वेदा अजायन्त इति च । परं तु ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात् इत्यादिश्रुतेः ईश्वरस्याग्न्यादिप्रेरकत्वेन निर्मातृत्वं गम्यते । अत्र प्रतिमन्वन्तरं चैषा श्रुतिरन्याभिधीयते इत्यागमोपि द्रष्टव्यः ( चि० ४ ) । अत्रान्येत्यस्य तद्भिन्ना तत्सदृशी इत्यर्थः । तेन पूर्वमन्वन्तरस्थत्वं निषिध्यते । प्रत्येकं मन्त्रब्राह्मणवन्तो वेदाश्चत्वारः ऋग्वेदः यजुर्वेदः सामवेदः अथर्ववेदश्चेति । तत्र ऋग्वेदस्य शाकलादयो दश भेदाः ( शाखाः ) भवन्ति । यजुर्वेदस्य चरकादयः षडशीतिर्भेदा भवन्ति । तत्र वाजसनेयानां जाबालादयः सप्तदश भेदा भवन्ति । तैत्तिरीयाणां द्विभेदा भवन्ति औक्ष्याः खाण्डिकेयाश्चेति । तत्र खाण्डिकेयानां पञ्च भेदा भवन्ति । आपस्तम्बी बौधायनी सत्याषाढी ( हिरण्यकेशी ) भारद्वाजी वाधूली चेति । सामवेदस्य किल सहस्रं भेदा आसन् राणायनीयाः कौथुमाः इत्यादयः ( १००० ) । अत्रोक्तम् अनध्यायेष्वधीयानास्ते शतक्रतुवज्रेणा-

भिहताः प्रनष्टाः ( वाच० ) इति । अथर्ववेदस्य पैप्पलादयो नव भेदा भवन्ति इति । वेदाङ्गानि षट् शिक्षा कल्पः व्याकरणम् निरुक्तम् छन्दः ज्योतिषं चेति ( आपस्त० सू० २।४।८।११ ) । उपाङ्गानि तु चत्वारि पुराणन्यायमीमांसाधर्मशास्त्राणि इति । यूपलक्षणछागलक्षणादिभेदेनाष्टादश परिशिष्टानि यजुषः । सर्वेषां वेदानामुपवेदा भवन्ति । तत्र ऋग्वेदस्यायुर्वेद उपवेदः यजुर्वेदस्य धनुर्वेदः सामवेदस्य गान्धर्ववेदः अथर्ववेदस्य शस्त्रशास्त्राणि भवन्ति इति । अथर्ववेदस्य स्थापत्यम् ( अर्थशास्त्रम् ) उपवेदः इत्यपि पाठो ग्रन्थान्तरे दृश्यते । ऋग्वेदस्यात्रेयं गोत्रं वासुदेवं विदुर्बुधाः । काश्यपं च यजुर्वेदं रुद्रदेवं तु तं विदुः । सामवेदोपि गोत्रेण भारद्वाजः पुरंदरम् । अधिदेवं विजानीयात् वैतानं तु अथर्वणः ॥ इति । शिष्टं तु विष्णुपुराणे ( अंश० ३ अ० ५–६ ) द्रष्टव्यम् । अत्रेदं विज्ञेयम् । वेदस्य छिन्नमूलग्रन्थतया उच्छिन्नत्वेपि अविगीतशिष्टाचारादेव तदनुमानम् । प्रलये पूर्वस्मृत्याचारयोरुच्छेदात् सर्गादौ नित्यसर्वज्ञेश्वरप्रणीतवेदमूलत्वं स्मृत्याचारयोः ( चि० ४ ) इति । अत्र पुनरपि श्रुतीनां नित्यत्वस्वतःप्रामाण्येश्वरोच्चरितत्वादौ प्रमाणयन्ति स पर्यगाच्छुक्रमकायमव्रणम् (ई० ८) । यथेमां वाचं कल्याणीम् ( यजुः ) । यो ब्रह्माणं विदधाति पूर्वम् यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ( श्वे०६।१८ ) । अत एव च नित्यत्वम् ( ब्र० सू० १।३।२९ ) । उक्तं तु शब्दपूर्वत्वम् ( जै० सू० १।१।२९ ) । निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम् ( सांख्यसू० ५।५१ ) । युगान्तेन्तर्हितान् वेदान् सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ( स्मृतिः ) । तद्वचनादाम्नायस्य प्रामाण्यम् ( वै० १।१।३ ) (१०।२।९) इत्यादीनि । चत्वारोपि वेदाः प्रत्येकं द्विधा मन्त्रः ब्राह्मणं चेति । तत्र प्रमाणम् मन्त्रब्राह्मणयोर्वेदनामधेयम् ( बौधा० सू० ) ( आपस्तम्ब० ) इति । तत्र ऋग्वेदस्यैतरेयब्राह्मणम् यजुर्वेदस्य तैत्तिरीयशतपथब्राह्मणे । सामवेदस्य गोपथब्राह्मणम् । अथर्ववेदस्य ताण्ड्यब्राह्मणम् इति । ब्राह्मणं त्रिधा विधिवचनम् अर्थवादवचनम् अनुवादवचनं चेति

( गौ० ) ( वात्स्या० २।१।६२ ) (गौ० वृ० २।१।६२) । मीमांसकास्तु विधिमन्त्रनामधेयनिषेधार्थवादभेदात्पञ्चविधो वेदः इत्याहुः ( लौ० भा० पृ० १२ ) । सांख्यास्त्वित्थं वदन्ति । न नित्यत्वं वेदानाम् । कार्यत्वश्रुतेः ( सांख्य० सू० ५।४५ ) । स तपोतप्यत (तै० २।६।१) तस्मात्तपस्तेपानात्त्रयो वेदा अजायन्त इति श्रुतेश्च । वेदनित्यतावाक्यानि च सजातीयानुपूर्वीप्रवाहानुच्छेदपराणि इति ( सां० भा० ५।४५ पृ० १८२ ) । अत्रायं विशेषो ज्ञेयः । आर्षं छन्दो दैवतं च विनियोगस्तथैव च । वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥ अविदित्वा तु यः कुर्याद्यजनाध्ययनं जपम् । होममन्तर्जले दानं तस्य चाल्पफलं भवेत् ॥ ( याज्ञव० ) ( वाच० ) इत्यादिः । २ विष्णुः ( विष्णुसं० ) । ३ ज्ञानम् । शास्त्रीयज्ञानं वा । ४ शास्त्रोक्तं चरित्रम् ( मेदि० ) । ५ दर्भमुष्टिकृतः पदार्थविशेषः । यथा वेदं कृत्वा वेदिं कुर्यात् ( श्रुतिः ) इत्यादौ । ६ ज्ञापकम् । अत्रार्थे व्याकरणम् वेदयति विद् णिच् अच् वेदः इति । ७ ज्ञाता । यथा वेदोसि येन त्वं देवेभ्यो वेदोभवस्तेन मह्यं वेदो भूयाः इत्यादौ ( यजुः० २।२१ ) । अत्र कर्कभाष्यम् पत्नी वेदं प्रमुञ्चति वेदोसि इति । हे कुशमुष्टिनिर्मितपदार्थ त्वं वेदोसि ऋगाद्यात्मकोसि । यद्वा वेत्तीति वेदः । ज्ञातासि । देवेभ्यो देवानां वेदोभवो ज्ञापकोभूः इति ( वाच० ) ।

**वेदनास्कन्धः**—प्रागुक्तस्कन्धद्वयसंबन्धजन्यः सुखदुःखादिप्रत्ययप्रवाहः ( सर्व० सं० पृ० ४० बौ० ) ।

**वेदवाक्यम्**—प्रमाणान्तरागोचरार्थप्रतिपादकं वाक्यम् ( सर्व० सं० पृ० २७३–२७४ जै० ) ।

**वेदान्तः**—वेदशिरोभागो ब्रह्मप्रतिपादक उपनिषद्रूपो ग्रन्थविशेषः । यथा ऐतरेय ब्रह्मवल्ली नारायण ईश बृहदारण्यक छान्दोग्य प्रश्न माण्डूक्य इत्यादय उपनिषदः । वेदान्त उत्तरमीमांसा इति व्यवह्रियते । कर्मकाण्डानन्तरविचार्यत्वात् इति ज्ञेयम् । अत्र व्युत्पत्तिः वेदानां ऋगादीनाम् अन्तश्चर-

मभागः इति वेदानामन्तो निर्णयो यत्र सः इति वा वेदान्तः । अत्र उपनिषदर्थनिर्णायकत्वेन ब्रह्मसूत्राणामपि वेदान्तत्वमुपचर्यते इति विशेषम् । अत्रेदं बोध्यम् । श्रीपूर्णप्रज्ञाचार्यैः ( मध्वाचार्यैः ) विरचिताद्भाष्यात्प्राक् ब्रह्मसूत्राणां व्याख्यातार एकविंशतिसंख्यका आसन् । ते च भारतीविजयः १ संविदानन्दः २ ब्रह्मघोषः ३ शतानन्दः ४ उद्धतः ५ विजयः ६ रुद्रभट्टः ७ वामनः ८ यादवप्रकाशः ९ रामानुजः १० भर्तृप्रपञ्चः ११ द्रविडः ( शठकोपः ) १२ ब्रह्मदत्तः १३ भास्करः १४ पिशाचः १५ वृत्तिकारः ( बौधायनः ) १६ विजयभट्टः १७ विष्णुक्रान्तः १८ वादीन्द्रः १९ माधवदासः २० शंकरभारती २१ (मध्वविज०) इति । ततः पूर्णप्रज्ञाचार्यः २२ राघवेन्द्रस्वामी २३ वल्लभाचार्य २४ श्चेति । तत्र शंकरभारती रुद्रस्य मणिमतो वावतारः । तस्य जन्म विक्रमशाके ८४५ वर्षे केरलदेशे कालपी ( कालडी ) ग्रामे मातापितृभ्यामार्याम्बाशिवभट्टाख्याभ्यामभूत् । तस्य दैशिकाचार्यो गोविन्दभट्टः । परमगुरुर्गौडपादः । गौडपादस्य तु वक्रनामा बौद्धो गुरुः । शंकरभारत्या अध्यापको ब्रह्मदत्तः । मतं तु मायावादः इति । रामानुजस्य च शेषावतारत्वाभिमतस्य जन्म शाके १०४९ वर्षे चोलदेशे भूतपुर्यां प्रेमधुलाख्यायां ( पेरंबुदूर इति ग्रामे ) मातापितृभ्यां कान्तिमतीकेशवाख्याभ्यां समजनि । एतस्याध्यापकस्तु मातुलो यादवप्रकाश एव । मतं विशिष्टाद्वैतम् । विशिष्टाद्वैतमतप्रवर्तकः कूटस्थस्तु शठकोपाचार्यः इति । वायोरवतारस्य मध्वाख्यपूर्णप्रज्ञाचार्यस्य च जन्म शाके ११०० वर्षे कर्णाटदेशे रजतपीठाख्ये ( उडपी ) ग्रामे मातापितृभ्यां वेदवेदीमध्यगेहाख्याभ्यां समजनि । एतस्याध्यापकोच्युतप्रेक्ष्याचार्यः । मतं तु द्वैतवादः इति । वल्लभाचार्यस्य कृष्णस्वरूपत्वाभिमतस्य तु जन्म संवत् १५३५ वर्षे आन्ध्रदेशे काङ्करवाख्ये ग्रामे मातापितृभ्यां यल्लम्मालक्ष्मणाभ्यां समभवत् । एतस्याध्यापको नारायणभट्टः । मतं तु शुद्धाद्वैतम् इति ।

**वेदिः**—आहवनीयगार्हपत्यमध्यवर्तिनी चतुरङ्गुलखाता भूमिः ( जै० न्या० अ० १ पा० ३ अधि० ४ ) ।

**वेधः**—पक्षद्वयेपि तिथयस्तिथिं पूर्वां तथोत्तराम् । त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योयं विधिः स्मृतः ॥ ( पु० चि० पृ० ३८ ) ।

**वेश्या**—वेश्याख्या काचिज्जातिरनादिः । वेश्यायामुत्कृष्टजातेः समानजातेर्वा पुरुषादुत्पन्ना पुरुषसंभोगवृत्तिर्वेश्या ( मिताक्षरा अ० २।२९० ) ।

**वैतण्डिकः**—वितण्डया प्रवर्तमानः पुरुषः ।

**वैद्यः**—१ पण्डितः । यथा नाविद्यानां तु वैद्येन देयं विद्याधनात्कचित् ( दायभा० ) इत्यादौ । २ भिषग्विशेषः । वैद्योत्पत्तिश्च वैद्योश्विनीकुमारेण जातश्च विप्रयोषिति । वैद्यवीर्येण शूद्रायां बभूवुर्बहवो जनाः ॥ ते च ग्रामगुणज्ञाश्च मन्त्रौषधिपरायणाः । तेभ्यश्च जातः शूद्रायां ते व्यालग्राहिणो भुवि ॥ ( ब्रह्मवै० पु० अ० १० ) इति ।

**वैद्यकम्**—आयुर्वेदः । यथा सुश्रुतचरकादि वैद्यकम् । तदुत्पत्त्यादिकं यथा ऋग्यजुःसामाथर्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः । विचिन्त्य तेषामर्थं चैवायुर्वेदं चकार सः ॥ कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः । स्वतन्त्रां संहितां तस्माद्भास्करश्च चकार सः ॥ भास्करश्च स्वशिष्येभ्य आयुर्वेदं स्वसंहिताम् । प्रददौ पाठयामास ते चक्रुः संहितास्ततः ॥ तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च । व्याधिप्रणाशबीजानि साध्वि मत्तो निशामय ॥ धन्वन्तरिर्दिवोदासः काशीराजस्तथाश्विनौ । नकुलः सहदेवार्की च्यवनो जनको बुधः ॥ जाबालो जाजलिः पैलः कवथोगस्त्य एव च । एते वेदाङ्गवेदज्ञाः षोडश व्याधिनाशकाः ॥ ( ब्रह्मवै० पु० अ० १६ ) ( वाच० ) इति ।

**वैधम्**—विधिबोधितम् । यथा अहरहः संध्यामुपासीत इत्यनेन बोधितं संध्योपासनं वैधं भवति ।

**वैधर्म्यदृष्टान्तः**—( दृष्टान्तः ) व्यतिरेकव्याप्तिग्रहणस्थलम् । यथा पर्वते धूमेन वह्न्यनुमाने महाह्रदः । यत्र वह्निर्नास्ति तत्र धूमोपि नास्ति यथा महाह्रदः इति ( प्र० च० परि० १ पृ० २८ ) ।

**वैधर्म्यनिदर्शनम्**—[ क ] व्यतिरेक्युदाहरणम् । [ ख ] अनुमेयलिपर्यये

लिङ्गस्याभावदर्शनम् । तद्यथा यदद्रव्यम् तत् क्रियावन्न भवति यथा सत्ता इति ( प्रशस्त० २ पृ० ३० ) ।

**वैधर्म्यनिदर्शनाभासाः**—लिङ्गानुमेयोभयाव्यावृत्ताश्रयासिद्धाव्यावृत्तविपरीतव्यावृत्ताः । तद्यथा नित्यः शब्दः अमूर्तत्वात् यदमूर्तं तन्नित्यं दृष्टं यथा परमाणुः यथा कर्म यथा स्थाली यथा तमोम्बरवत् । यद्द्रव्यं तत्क्रियावद्दृष्टमिति च ( प्रशस्त० २ पृ० ४८ ) ।

**वैधर्म्यम्**—१ [ क ] व्यावृत्तो धर्मः ( वै० उ० १।१।४ पृ० १६ ) । विरुद्धो धर्मः इति फलितोर्थः ( मु० १ ) । [ ख ] अवर्तमानो धर्मः । यथा यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ( प्रशस्त० १।१ पृ० ३९ ) ( भा० प० श्लो० २९ ) इत्यादौ अभावस्य समवायिकारणत्वं वैधर्म्यम् । यदुक्तमित्यस्यार्थश्च ज्ञेयत्वादिकं विहाय यस्य पदार्थस्य यत्साधर्म्यमुक्तम् तदितरस्य तद्वैधर्म्यम् इति । ज्ञेयत्वादिकं तु न कस्यापि वैधर्म्यम् । केवलान्वयित्वात् इति भावः ( मु० १ ) । अत्र साधर्म्यनिरूपणं तु साधर्म्यशब्दव्याख्यानावसरे संपादयिष्यते । [ ग ] तद्विरोधिधर्मवत्त्वम् । यथा पाकस्थले श्यामघटवैधर्म्यं रक्तघटे ( वै० उ० ७।२।२ पृ० ३१२ ) । २ व्यतिरेकः ( गौ० वृ० १।१।३५) । यथा तथा वैधर्म्यात् ( गौ० १।१।३५ ) इत्यादौ ।

**वैधर्म्यसमः**—( जातिः ) [ क ] वैधर्म्येणोपसंहारे तद्धर्मविपर्ययोपपत्तेर्वैधर्म्यसमः ( गौ० ५।१।२ ) । तदर्थश्च उपसंहारे साध्यस्योपसंहरणे वादिना कृते तद्धर्मस्य साध्यरूपधर्मस्य यो विपर्ययो व्यतिरेकः तस्य वैधर्म्येण केवलेन व्याप्त्यनपेक्षेण यदुपपादनं ततो हेतोर्वैधर्म्यसम उच्यते । अत्र वैधर्म्यत्वमात्रं गमकतौपयिकम् इत्यभिमानात् सत्प्रतिपक्षदेशनाभासोयम् । अनैकान्तिकदेशनाभासो वायम् ( न्या० वा० ) इति वार्तिके अनैकान्तिकपदं सत्प्रतिपक्षपरम् ( गौ०वृ० ५।१।२) । [ ख ] वादिनान्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिनो वैधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनम् । यथा शब्दः अनित्यः कृतकत्वाद्घटवत् व्यतिरेकेणाकाशवद्वा इति स्थापनायाम् अनित्यघटवैधर्म्यादमूर्तत्वान्नित्यः स्यात् विशेषो

वा वक्तव्यः (गौ० वृ० ५।१।२) इति । यथा वा क्रियाहेतुगुणयुक्तो लोष्टः परिच्छिन्नो दृष्टो न च तथा आत्मा तस्मान्न लोष्टवत्क्रियावानिति । न चास्ति विशेषहेतुः क्रियावत्साधर्म्यात्क्रियावता भवितव्यम् न पुनः क्रियावद्वैधर्म्यादक्रियेण इति विशेषहेत्वभावाद्वैधर्म्यसमः ( वात्स्या० ५।१।२ ) ( नील० ) । [ ग ] वैधर्म्येण स्थापनाहेतुदूषकमुत्तरम् । यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवत् । क्रियाहेतुगुणश्चात्र क्रियाजनकवायुसंयोगादिरेवेति स्थापनायाम् उत्तरम् क्रियावतो लोष्टस्य साधर्म्याद्यदि क्रियावानात्मा तदा विभुत्वरूपतद्वैधर्म्यान्निष्क्रिय एव किं न स्यात् । न हि तत्साधर्म्यात्क्रियावता भवितव्यम् तद्वैधर्म्यान्निष्क्रियेण न भवितव्यम् इत्यत्र किंचिन्नियामकमस्ति ( नील० पृ० ४३ ) इति ।

**वैधर्म्योदाहरणम्**—व्यतिरेक्युदाहरणम् ।

**वैधर्म्योपनयः**—व्यतिरेक्युपनयः ।

**वैनाशिकः**—१ क्षणिकः पदार्थः । २ सर्वस्य क्षणभङ्गुरत्वप्रतिपादको बौद्धागमः । ३ बौद्धागमाभिज्ञः । केचित्तु मायावादिनः तार्किकस्यार्धवैनाशिकत्वं मेनिरे । ४ ज्योतिषज्ञास्तु षण्नाडीचक्रस्थं जन्मनक्षत्रावधि त्रयोविंशं नक्षत्रम् इत्याहुः । ५ परतन्त्रः । ६ ऊर्णनाभिः ( मेदि० ) ( वाच० ) ।

**वैभाषिकः**—१ बौद्धविशेषः । अत्राधिकं च बौद्धः इति शब्दव्याख्याने दृश्यम् । २ शाब्दिकास्तु विभाषा निषेधविकल्पौ । तया प्रवृत्तो वैभाषिकः । यथा गिरति गिलति इत्यादौ लत्वं वैभाषिकम् । यथा वा शुशाव शिश्वाय शुशुवतुः शिश्वियतुः इत्यादौ संप्रसारणं वैभाषिकम् इत्याहुः (काशिका) । अत्रार्थे प्रमाणं सूत्रम् न वेति विभाषा ( पा० सू० १।१।४४ ) इति ।

**वैयधिकरण्यम्**—व्यधिकरणत्वम् ।

**वैयर्थ्यम्**—व्यर्थत्वम् ।

**वैरम्**—विरोधः । अत्रायं विशेषः । वैरं पञ्चसमुत्थानं मुनिभिः परिकीर्तितम् । स्त्रीकृतं वास्तुजं वाग्जं ससापत्नापराधजम् ॥ इति । तत्र स्त्रीकृतं कृष्णचेदिपयोः । वास्तुजं कुरुपाण्डवयोः । वाग्जं द्रोणद्रुपदयोः । सापत्नं नैसर्गिकमहिनकुलयोः । अपराधजं पूजनीब्रह्मदत्तयोः इति ( भार० ) ( वाच० ) ।

**वैराग्यम्**—[ क ] दोषदर्शनाद्विषयत्यागेच्छा ( प्रशस्त० २ पृ० ३३ ) । [ ख ] भोगानभिषङ्गः ( न्या० वा० १ पृ० २७ ) । [ ग ] योगशास्त्रज्ञास्तु दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ( पात० यो० सू० १।१५ ) । ऐहिकपारत्रिकविषयादौ दोषदर्शनान्निरभिलाषस्य ममैते विषया वश्याः नाहमेतेषां वश्यः इति विमर्शः इत्याहुः ( सर्व० सं० पृ० ३६६ पात० ) । वैराग्यं च तत्त्वज्ञानाद्विषयदोषदर्शनाद्भवति ( न्या० वा० १ पृ० २७ ) । तच्च वैराग्यम् शमदमानन्तरं ज्ञानद्वारा मोक्षहेतुश्च भवति ( विवेकचूडामणौ ) ।

**वैलक्षण्यम्**—भेदकधर्मः । शिष्टं तु विलक्षणशब्दे द्रष्टव्यम् ।

**वैशिष्ट्यम्**—१ [ क ] संबन्धः । यथा भूतलं घटविशिष्टम् इत्यादौ घटभूतलयोः संयोगनामा संबन्धो वैशिष्ट्यम् । [ ख ] यस्य यत्र यः संबन्धः स एव तत्र तस्य वैशिष्ट्यम् । यथा दण्डी पुरुषः इति ज्ञाने दण्डसंबन्धः पुरुषेवगम्यते ( चि० १ निर्विक० पृ० ८१२ ) । २ वैलक्षण्यम् ३ भेदो वा । ४ आधेयोतिशयविशेषः इति केचिद्वादिनः स्वीकुर्वन्ति ।

**वैशेषिकम्**—१ कणादप्रणीतं शास्त्रम् । अत्रेदं विज्ञेयम् । कश्यपगोत्रोत्पन्नः कणादमुनिः अथातो धर्मं व्याख्यास्यामः इत्यारभ्य तद्वचनादाम्नायस्य प्रामाण्यमिति इत्येतत्पर्यन्तं दशाध्यायात्मकं सूत्रोपनिबद्धं वैशेषिकदर्शनाख्यं तर्कशास्त्रं प्रणिनाय इति । अत्र कणादशब्दस्य व्युत्पत्तिः । तस्य कापोतीं वृत्तिमनुतिष्ठतो रथ्यानिपतितांस्तण्डुलकणानादाय प्रत्यहं कृताहारनिमित्ता कणादसंज्ञा । अत एव निरवकाशः कणान्वा भक्षयतु इत्युपालम्भस्तत्रभवताम् ( न्या० क० पृ० २ ) । शास्त्ररूपार्थे वैशेषिकशब्दस्य व्युत्पत्तिः विशेषं पदार्थभेदमधिकृत्य कृतो ग्रन्थः इति । २ तच्छास्त्राभिज्ञः । यथा प्रशस्तपादोद्योतकराचार्यादिर्वैशेषिकः । अत्रोक्तम् द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे । यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः ॥ ( सर्व० सं० पृ० २२० औलू० ) इति । ३ विशेषसंज्ञकः गुणः । यथा आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः

(भा० प० १ श्लो० ४५) इत्यत्र शब्दो वैशेषिकोस्ति । ४ व्यवच्छेदकः । यथा भूतात्मनां वैशेषिकगुणवत्त्वं साधर्म्यम् ( प्रशस्त० ) इत्यादौ । अत्र व्युत्पत्तिः । विशेषो व्यवच्छेदः । विशेषाय स्वाश्रयस्येतरेभ्यो व्यवच्छेदाय प्रभवति इति वैशेषिकः ( न्या० क० पृ० २४ ) ।

**वैश्वदेवः**—( कर्मनामधेयम् ) चातुर्मास्ययागस्य चत्वारि पर्वाणि वैश्वदेवः वरुणप्रघासः साकमेधः शुनासीरीयश्चेति । तेषु प्रथमे पर्वण्यष्टौ यागा विहिताः आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुम् सावित्रं द्वादशकपालम् सारस्वतं चरुम् पौष्णं चरुम् मारुतं सप्तकपालम् वैश्वदेवीमामिक्षाम् द्यावापृथिवीमेककपालम् इति । एतेषामष्टानां संनिधौ वैश्वदेवेन यजेत इति पठितत्वात्पूर्वोक्तानामष्टानां यागानां वैश्वदेव इति संज्ञा बोध्या ( जै० न्या० अ० १ पा० ४ अधि० ११ ) ।

**वैष्णवः**—१ [ क ] विष्णूपासकत्वाद्विष्णुसेवकः सात्त्विकचेतनः । यथा निम्नगानां यथा गङ्गा देवानामच्युतो यथा । वैष्णवानां यथा शंभुः पुराणानामिदं तथा ॥ ( भाग० स्क० १२ अ० १३ श्लो० १६ ) इत्यादौ । यथा वा श्रीमध्वाचार्यो वैष्णवः । वैष्णवमार्गप्रवर्तका विष्णुस्वामिनिम्बार्करामानुजमध्वाख्याश्चत्वार आचार्याः इति वल्लभीयाः मन्यन्ते । अत्र व्युत्पत्तिः विष्णुर्देवतास्य इति विष्णोरयमिति वा वैष्णवः । अत्र विष्णुस्तु परब्रह्मैव । तत्र प्रमाणानि यमन्तःसमुद्रे कवयोवयन्ति यदक्षरे परमे प्रजाः । यतः प्रसूता जगतः प्रसूती तोयेन जीवान्विससर्ज भूम्याम् । तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम् (म० ना० १।१-२ ) । तन्नो विष्णुः प्रचोदयात् । अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वा भुवनानि तस्थुः ( मध्व० भाष्योदाहृतश्रुतयः ) इति । विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि रजांसि विममे इत्यादिना तस्य महिमा । [ ख ] परमापदमापन्नो हर्षे वा समुपस्थिते । नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी ॥ समात्मा सर्वजीवेषु निजाचारादविप्लुतः । विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यते ॥ ( पु० चि० पृ० १५३ ) । २ श्रवण-

नक्षत्रं विष्णुदेवताकत्वात् वैष्णवशब्देनोच्यते इति पुरुषार्थचिन्तामणिः (पृ० ३५४)।

**वौषट्**—देवोद्देश्यकहविस्त्यागः । अत्र शिष्टं तु वषट्शब्दे द्रश्यम् ।

**व्यक्तिः**—१ पदार्थमात्रम् । यथा जात्यादिरपि व्यक्तिः । तल्लक्षणं च व्यक्तित्वम् । तच्च प्रमेयत्वमेव (गौ० वृ० २।२।६६) । एवं च सिद्धान्ते सर्वेषां पदार्थानां व्यक्तिः इति संज्ञा इत्याशयः । २ [क] व्यक्तिर्गुणविशेषाश्रयो मूर्तिः (गौ० २।२।६६) । इदं लक्षणं च जात्याकृतिशक्तिविषयव्यक्तेरेव इति विज्ञेयम् (गौ० वृ० २।२।६६) । व्यज्यत इति व्यक्तिरिन्द्रियग्राह्येति न सर्वद्रव्यं व्यक्तिः । यो विशेषगुणानां स्पर्शान्तानां गुरुत्वघनत्वद्रवत्वसंस्काराणामव्यापिनः परिमाणस्याश्रयो यथासंभवं तद्द्रव्यम् । मूर्तिः मूर्छितावयवत्वादिति (वात्स्या० २।२।६६) । [ख] जात्याकृतिसमानाधिकरणः संख्यादिभिन्नो यो गुणस्तदाश्रयः । यथा गवादिर्व्यक्तिः । परे तु जात्याश्रयो द्रव्यम् व्यक्तिः इत्याहुः । अन्ये तु परिच्छिन्नपरिमाणस्याश्रयो मूर्तिः सैव व्यक्तेर्लक्षणम् इत्याहुः (गौ० वृ० २।२।६६) । संख्यादिविशिष्टा व्यक्तिः इति मञ्जूषाकृदुक्तिः । ३ पृथगात्मतारूप एकैकविशेष इत्यमरसिंह आह । ४ प्रकाशः (प्रकटीभावः)। ५ जनः इति काव्यज्ञा आहुः ।

**व्यक्त्यभेदः**—[क] स्वाश्रयव्यक्तेरैक्यम् । इदं चाकाशत्वादेर्जातित्वे बाधकम् इति बोध्यम् (नील० १ पृ० ६) (दि० १) । तदुक्तमुदयनाचार्यैः व्यक्तेरभेदस्तुल्यत्वं संकरोथानवस्थितिः । रूपहानिरसंबन्धो जातिबाधकसंग्रहः ॥ (कि० व० द्रव्यनि०) इति । [ख] एकव्यक्तिकत्वम् (दि० १) । एकाश्रयकत्वमित्यर्थः । स्वाश्रयनिष्ठभेदाप्रतियोग्याश्रयकत्वम् इति फलितोर्थः (राम० १ सामान्यनि० पृ० ३५) । अनुगमस्तु स्वप्रतियोगिवृत्तित्व स्वसामानाधिकरण्य एतदुभयसंबन्धेन भेदाविशिष्टान्यत्वम् इति । यथा आकाशत्वस्य व्यक्त्यभेदः इति आकाशत्वं न जातिः । अयं भावः बहुवृत्त्येकधर्मस्य सामान्यतया सर्वसिद्धत्वात् एकव्यक्तौ जातिरनभ्युपेया (दि० १ सामान्यनि० पृ० ३४) इति ।

**व्यङ्ग्यः**—१ बोध्यः । २ प्रकाश्यः । ३ आलंकारिकास्तु व्यञ्जनाख्यया वृत्त्या बोध्योर्थः । यथा गङ्गायां घोषः इत्यादौ शैत्यपावनत्वादिरूपोर्थो गङ्गापदव्यङ्ग्यः इत्याहुः । अत्र शिष्टं च व्यञ्जनशब्दे दृश्यम् ॥

**व्यञ्जकम्**—१ ज्ञानजनकम् । यथा चक्षुस्तैजसम् परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत् ( मु० १ तेजोनि० पृ० ७९ ) इत्यादौ चक्षू रूपव्यञ्जकम् । २ नर्तकास्तु प्रकाशकम् । यथा हृद्गतभावादेर्व्यञ्जकः ( प्रकाशकः ) हस्तचेष्टादिरूपोभिनयः इत्याहुः । ३ आलंकारिकाश्च व्यञ्जनया वृत्त्या अर्थबोधकः शब्दः । यथा गङ्गायां घोषः इत्यादौ गङ्गाशब्दः शैत्यपावनत्वादेरर्थस्य व्यञ्जकः इत्याहुः । शिष्टं तु व्यञ्जनशब्दव्याख्याने दृश्यम् ।

**व्यञ्जनम्**—१ ज्ञानम् । यथा चक्षुषा रूपव्यञ्जनम् इत्यादौ । २ पाकशास्त्रज्ञास्तु ओदनभोजनोपकरणम् । यथा सूपशाकादि व्यञ्जनम् इत्याहुः । अत्रार्थे विशेषेणाज्यते ( वि अञ्ज् ल्युट् ) इति व्यञ्जनशब्दस्य व्युत्पत्तिर्द्रष्टव्या । ३ वैयाकरणाश्च अर्धमात्राकालेनोच्चार्यो हल्वर्णः । यथा व्यञ्जनं चार्धमात्रकम् ( शिक्षा० ) इत्यादौ क् ख् इत्यादि इत्याहुः । ४ काव्यज्ञास्तु चिह्नम् । ५ अवयवश्च इत्याहुः । ६ [ क ] आलंकारिकास्तु इत्थं वदन्ति । शब्दस्य वृत्तिविशेषो व्यञ्जना । तदुक्तम् विरतास्वभिधाद्यासु ययार्थो बोध्यतेपरः । सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥ ( सा० द० परि० २ श्लो० १२ ) इति । यथा भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य । यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोभूत् ॥ ( काव्यप्रका० उ० २ श्लो० १२ वृत्तौ ) इत्यादौ । आलंकारिकाणां मते व्यञ्जना च व्यञ्जनध्वननद्योतनगमनप्रत्यायनादिशब्दैर्व्यपदिश्यते । आलंकारिकैश्च व्यञ्जनाया इत्थं भेदाः प्रकल्पिताः । व्यञ्जना द्वेधा शब्दनिष्ठा अर्थनिष्ठा च । आद्या तु द्वेधा अभिधामूला लक्षणामूला च । अभिधामूला यथा भद्रात्मनः इत्यादौ । लक्षणामूला यथा गङ्गायां घोषः इत्यादौ

( काव्यप्र० उ० २ श्लो० १८ वृ० )। अर्थनिष्ठा व्यञ्जना तु गतोऽस्तमर्कः इत्यादौ। माए घरोवअरणम् ( का० प्र० २।६ ) इत्यादौ च विज्ञेया। आलंकारिकैर्हि अभिधालक्षणयोरिव व्यञ्जनाया अपि वृत्त्यन्तरत्वमगत्या स्वीक्रियते । तथा हि । गङ्गातीरे घोषः इति प्रयोगे स्वायत्ते सत्यपि गङ्गायां घोषः इत्यनन्वितामिधानं शैत्यपावनत्वादिप्रतिपत्त्यर्थम् इत्यङ्गीकर्तव्यम् । न च सा प्रतीतिर्लक्षणयाप्युपपद्यते। केवलतीरलक्षणयैवानुपपत्तिपरिहारे शैत्यपावनत्वादिविशिष्टलक्षणायां मानाभावात् । मुख्यार्थबाधादित्रयाभावात् । तस्मात् शैत्यपावनत्वादिप्रतिपत्त्यर्थं व्यञ्जना आवश्यकी । एवम् गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ इत्यत्रापि तव गमने मम मरणं भविता इत्यतः त्वं मा गाः इति व्यज्यते इति व्यञ्जनाख्यातिरिक्ता वृत्तिरवश्यमङ्गीकर्तव्या इति ( काव्यप्रकाश उल्ला० २ श्लो० १४—२० ) ( त० प्र० ४ पृ० ६९ ) ( नील० ख० ४ पृ० ३० )। नैयायिकास्तु तन्न सहन्ते । तथा हि । व्यञ्जना शक्तौ लक्षणायां चान्तर्भवति । अत्रायं भावः । सा व्यञ्जना शब्दशक्तिमूला अर्थशक्तिमूला चेति द्विविधा । तत्र शब्दशक्तिमूला यथा नानार्थकस्थले दूरस्था भूधरा रम्या इत्यादौ भूधरशब्देन पर्वतानामिव राज्ञामपि शक्त्यैव प्रतीतिः संभवति इत्यत्रत्या आलंकारिकमतप्रसिद्धा अभिधामूला शाब्दी व्यञ्जना शक्तावन्तर्भवति । एवम् भद्रात्मनः इत्यादावपि ज्ञेयम् । गङ्गायां घोषः इत्यादौ तु शैत्यपावनत्वादिविशिष्टतीरप्रतीतिरपि लक्षणासाम्राज्यादेव संभवति । तत्र लक्षणाकल्पिकायास्तात्पर्यानुपपत्तेरेव सद्भावात् किमतिरिक्तव्यञ्जनया इत्यत्रत्या आलंकारिकमतप्रसिद्धा लक्षणामूला शाब्दी लाक्षणिकपर्यायपरिवृत्त्यसहत्वलक्षणा व्यञ्जना लक्षणायामन्तर्भवति । अर्थशक्तिमूला लक्षणा यथा गच्छ गच्छसि इत्यादौ । अत्र हे प्रिय तव गमनोत्तरं मे प्राणवियोगो भविष्यति अतस्त्वया न गन्तव्यम् इत्याद्यर्थोनुमानादिना गम्यते इत्यत्रत्या आलंकारिकमतप्रसिद्धा आर्थी व्यञ्जना अनुमानेन्तर्भवति ( नील० ख० ४ पृ० ३० ) इति । तत्रानुमानप्रकारस्तु इयं मदीयगमनोत्तरकालिक-

प्राणवियोगवती विलक्षणशब्दप्रयोक्तृत्वात् इत्यादिरूपः ( नील० ४ पृ० ३० ) । अत्रेदं बोध्यम् । तात्पर्यानुपपत्तिरेव लक्षणाबीजम् । तथा च गच्छ गच्छसि इत्यत्रापि मा गाः इत्यर्थे गमनाभावप्रतीतीच्छयोच्चरितत्व-रूपतात्पर्यमात्रमुन्नीयते संभाव्यते वा । तेन लक्षणया तत्र शाब्दबोधोप-पत्तौ व्यञ्जनाया वृत्त्यन्तरत्वं नास्त्येव ( त० प्र० ख० ४ पृ० ६९ ) इति । एवम् वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ( काव्य-प्रका० उ० २ श्लो० ४ टी० ) इत्यादावप्यूह्यम् । [ ख ] वैया-करणास्तु मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसंबद्धासंबद्धसाधा-रणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कार-विशेषः इत्याहुः ( ल० म० आकाङ्क्षादिवि० पृ० १७—१८ ) ।

**व्यतिरेकः**—१ अभावः । [ क ] अत्यन्ताभावः ( न्या० बो० २ पृ० १५ ) ( वाक्य० २ पृ० १५ ) । यथा पदस्य पदान्तरव्यतिरेकप्रयु-क्तान्वयाननुभावकत्वमाकाङ्क्षा इत्यादौ । यथा वा अन्वयेन व्यतिरेकेण च व्याप्तिमत् ( त० सं० ) इत्यादौ व्यतिरेकः अभावः । यथा वा स्वव्य-तिरेकेण धूमव्यतिरेकानुमानात् इत्यादौ व्यतिरेकः अभावः ( म० प्र० २ पृ० ३०–३१ ) ( वै० ५।१।२ ) । [ ख ] भिन्नत्वम् । यथा यत-स्तद्व्यतिरेकेण नान्यत्किंचिदिहाप्यते इत्यादौ । २ साध्याभावहेत्वभावयोः साहचर्यम् । यथा व्यतिरेकव्याप्तिः इत्यादौ व्यतिरेकः ( सि० च० २ पृ० २६ ) । ३ क्वचित् व्यतिरेकव्याप्तिः । यथा अन्वयव्यतिरेकि लिङ्गम् इत्यादौ व्यतिरेकः ( वाक्य० २ पृ० १५ ) । ४ [ क ] कारणाभावकार्याभावयोः साहचर्यम् । [ ख ] कारणाभावाधिकरणे कार्यासत्त्वम् ( राम० १ पृ० ५२ ) । यथा यदभावे यदभावः इति । स यथा चक्रचीवरादिघटितस्य दण्डस्यासत्त्वे घटस्यासत्त्वम् इति व्यति-रेकः । अयं व्यतिरेकः कारणत्वग्रहजनकः इति ज्ञेयम् ( त० प्र० मङ्ग-ल० पृ० १ ) । ५ अत्यन्ताभावप्रतियोगित्वम् । तदर्थस्तु यस्यात्यन्ता-भावः प्रसिद्ध्यति तत्त्वम् इति । यथा व्यतिरेकिसाध्यकस्थले वह्निमानि-त्यादौ वह्नेर्व्यतिरेकः । ६ क्वचित् निश्चितकोटिद्वयव्यावृत्तत्वज्ञानम् ( ग०

सत्प्र० पृ० २१ ) । तच्च ज्ञानम् प्राचीनमते असाधारणधर्मवत्ताज्ञानविधया कोटिद्वयोपस्थापकतया फलीभूतसंशयं प्रति प्रयोजकम् इति विज्ञेयम् । यथा अनैकान्तिके अन्वयाद्व्यतिरेकाद्वा कोट्युपस्थापकतया संशयः फलम् ( चि० २ सत्प्र० ) इत्यादिग्रन्थे धूमवान्वह्नेः इत्यादौ धूमधूमाभावव्याप्यावृत्तवह्निमान् इति ज्ञानं व्यतिरेकः । ७ सजातीयाधिक्यम् । यथा वैश्येभ्यः क्षत्रियाः शूराः शूद्रेभ्यो धनिनो विशः इत्यत्र पञ्चम्यर्थो व्यतिरेकः । अत्र वैश्यशौर्यादधिकशौर्यवन्तः क्षत्रियाः शूद्रधनादधिकधनवन्तो वैश्याः इत्यर्थो बोध्यते ( श० प्र० श्लो० ९३ पृ० १२८ ) । ८ विना इत्यस्यार्थः । ९ अर्थालंकारविशेषः इत्यालंकारिका आहुः । १० विशेषेणातिक्रमः इति काव्यज्ञा आहुः ।

**व्यतिरेकदृष्टान्तः**—वैधर्म्यदृष्टान्तः ।

**व्यतिरेकव्यभिचारः**—( कार्यकारणभावभङ्गलक्षणो व्यभिचारः ) कार्यसत्त्वे कारणाभावः ( ग० ) । तदर्थश्च कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्यतावच्छेदकावच्छिन्नयत्किंचिद्व्यक्त्यधिकरणयावद्व्यक्तिषु कारणाभाववत्त्वम् ( दि० गु० ) । अथ वा कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्यप्रदेशे कारणाभावः ( त० प्र० ख० ४ पृ० १२९ ) । यथा तर्कदीपिकायाम् समाप्तिं प्रति मङ्गलस्य कारणत्व उक्ते किरणावल्यादावाशङ्कितो व्यभिचारो व्यतिरेकव्यभिचारो भवति । तथा हि किरणावल्यादिष्वनास्तिकग्रन्थविशेषे समाप्तिरूपकार्यसत्त्वेपि मङ्गलस्याभावः इति ।

**व्यतिरेकव्याप्तिः**—( व्याप्तिः ) [ क ] साध्याभावव्यापकीभूताभावप्रतियोगित्वम् ( मु० २ ) ( नील० २ पृ० २३ ) ( न्या० बो० २ पृ० १५ ) । व्यतिरेकः साध्याभावहेत्वभावयोः साहचर्यम् । तत्प्रयोज्या व्याप्तिर्व्यतिरेकव्याप्तिः इति व्यतिरेकव्याप्तिशब्दः संगमनीयः ( सि० च० २ पृ० २६ ) । यद्वा व्यतिरेकेण व्याप्तिः इति विग्रहः । व्यतिरेकनिरूपिता व्याप्तिरित्यर्थः ( कु० ३ ) । आचार्यास्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते । न च व्यतिरेकव्याप्तिज्ञानमपि अनुमितौ

कारणम् इति वदन्ति । मध्याचार्यानुयायिनोप्याहुः । व्यतिरेकव्याप्तिः प्रकृतसाध्यसिद्धावनुपयोगान्न स्वीकर्तव्या । जीवच्छरीरं सात्मकं प्राणादिमत्त्वादित्यादौ केवलव्यतिरेकित्वेन प्रसिद्धे हेतावप्यन्वयव्याप्तिरेव । यद्यप्यन्वयव्याप्तिर्दृष्टान्तानुपलम्भान्न युक्ता तथाप्यनुमानेन तां साधयितुं व्यतिरेकव्याप्तिरुपन्यस्यते । तथा हि । प्राणादिमत्त्वं सात्मकत्वेन व्याप्तम् । तदभावव्यापकाभावप्रतियोगित्वात् । यद्यदभावव्यापकाभावप्रतियोगि तत्तेन व्याप्तम् यथा धूमवत्त्वमग्निमत्त्वेन इति ( प्र० प० पृ० १८ ) ( ग० सामा० ) ( कु० ३ ) । पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभावव्यापकीभूताभावप्रतियोगित्वरूपा यत्र वह्निर्नास्ति तत्र धूमो नास्ति यथा महाह्रदः इति धूमे वह्नेर्व्यतिरेकव्याप्तिः । पृथिवी इतरेभ्यो जलादिभ्यः भिद्यते गन्धवत्त्वादित्यादौ केवलव्यतिरेकिणि इतरत्वव्यापकीभूताभावप्रतियोगित्वरूपा यदितरभिन्नं न भवति न तद्गन्धवत् यथा जलादि इति व्यतिरेकव्याप्तिः ( त० सं० ) । अत्र जलादित्रयोदशान्योन्याभावानां त्रयोदशसु प्रत्येकं प्रसिद्धानां कूटं पृथिव्यां साध्यते । तत्र त्रयोदशत्वावच्छिन्नभेदस्यैकाधिकरणवृत्तित्वाभावान्नान्वयित्वासाधारण्ये । प्रत्येकाधिकरणप्रसिद्ध्या साध्यविशिष्टानुमितिः व्यतिरेकव्याप्तिनिरूपणं च इति सर्वं सुस्थम् (त० दी० ख० २ पृ०२४) । अयं भावः । अनुमितेः पूर्वं निश्चितसाध्यतावच्छेदकावच्छिन्नवत्तो धर्मिण एवाप्रसिद्धाः न तत्र हेतोः सत्त्वासत्त्वनिबन्धने अन्वयित्वासाधारण्ये । तथा प्रत्येकं प्रसिद्धौ अपेक्षाबुद्धिविशेषविषयत्वरूपसमुदायत्वविशिष्टज्ञानं संभवति । तथा च विशेषणतावच्छेदकप्रकारकनिर्णयस्य सद्भावात् साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाह्यनुमितिः व्यतिरेकव्याप्तिज्ञानं च संभवति ( नील० पृ० २३–२४ ) इति । अत्र इतरभेदाभावात्मकस्य साध्याभावस्य अन्योन्याभावाभावस्य स्वप्रतियोगिभेदप्रतियोगितावच्छेदकस्वरूपत्वम् इति नियमादितरत्वस्वरूपत्वम् इति बोध्यम् । जीवच्छरीरं सात्मकम् प्राणादिमत्त्वात् इत्यादावप्रसिद्धसाध्यककेवलव्यतिरेकिणि हेतौ सात्मकत्वाभावव्यापकाभावप्रतियोगित्व-

रूपा यत्र यत्र सात्मकत्वाभावस्तत्र तत्र प्राणादिमत्त्वाभावः यथा घटादौ इति व्यतिरेकव्याप्तिरेवास्ति ( त० कौ० २ पृ० १२ ) । [ ख ] केचित्तु हेत्वभावसाध्याभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः । सा च साध्याभावनिरूपिता हेत्वभावनिष्ठा व्यापकत्वरूपा । व्यापकत्ववत्त्वं च हेतोः स्वाश्रयप्रतियोगित्वसंबन्धेन । तेन व्याप्तेर्हेतुनिष्ठत्वमुपपद्यते । अन्यत्र चैवमुक्तम् । ननु अन्यनिष्ठव्याप्त्या कथं साधनादनुमितिः इति चेदत्राहुः । साध्याभावव्यापकीभूताभावप्रतियोगित्वेन साधनस्य पक्षवृत्तित्वज्ञानं सहकारि ( सि० च० २ पृ० २६ ) इति । अत्रार्थे व्यतिरेकः अभावः । अर्थात्साध्यस्य । तथा च साध्याभावनिरूपिता व्याप्तिर्व्यतिरेकव्याप्तिः इति व्यतिरेकव्याप्तिशब्दः संगमनीयः ( वाक्य० २ पृ० १५ ) । यथा पर्वतो वह्निमान्धूमादित्यादौ यो यो वह्न्यभाववान् स धूमाभाववान् इति ( वाक्य० २ पृ० १५ ) । अत्रोक्तम् । व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते । तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥ अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते । साध्याभावोन्यथा व्याप्यो व्यापकः साधनात्ययः ॥ ( सि० च० २ पृ० २६ ) ( प्र० प्र० ) । व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम् । एवं परीक्षितां व्याप्तिः स्फुटीभवति तत्त्वतः ॥ ( त० कौ० २ ) इति ।

**व्यतिरेकि**—१ अत्यन्ताभावप्रतियोगि । यथा व्यतिरेकिसाध्यकस्थले व्यतिरेकिहेतुकस्थले च इत्युक्ते पर्वतो वह्निमान्धूमादित्यादौ वह्नेर्धूमस्य च व्यतिरेकित्वम् । २ पूर्वोक्तेन व्यतिरेकेण विशिष्टम् । ३ व्यतिरेकव्याप्तिविशिष्टहेतुकमनुमानम् । यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् इत्याद्यनुमानम् । अत्राधिकं तु केवलव्यतिरेकिशब्दे दृश्यम् ।

**व्यतिरेकिहेतुः**—( अवयवः ) [ क ] तथा वैधर्म्यात् ( गौ० १।१।३५ ) । उदाहरणवैधर्म्याच्च साध्यसाधनं हेतुः । कथम् अनित्यः शब्द उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकं नित्यम् यथा आत्मादि द्रव्यम् ( वात्स्या० १।१।३५ ) इति । [ ख ] ज्ञातव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवः । [ ग ] अप्रतीतान्वयव्याप्तिकहेतुबोधको हेत्ववयवः ( गौ० वृ०

१।१।३५ ) । यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ गन्धवत्त्वात् इति शब्दो व्यतिरेकिहेतुः ।

**व्यतिरेक्युदाहरणम्**—( अवयवः ) [ क ] तद्विपर्ययाद्वा विपरीतम् ( गौ० १।१।३७ ) । तदर्थश्च साध्यसाधनव्यतिरेकव्याप्तिप्रदर्शनात् ( गौ० वृ० १।१।३७ ) इति । व्यतिरेक्युदाहरणत्वं च साध्यसाधनाभावसंबन्धबोधकत्वम् ( चि० अव० २ पृ० ८० ) । अथ वा व्यतिरेकव्याप्तिबोधकत्वम् ( दीधि० २ पृ० १७७ ) । अत्र भाष्यम् । साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणमिति । अनित्यः शब्द उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकं नित्यमात्मादि । सोयमात्मादिर्दृष्टान्तः साध्यवैधर्म्यादनुत्पत्तिधर्मकत्वादतद्धर्मभावी । योसौ साध्यस्य धर्मः अनित्यत्वम् स तस्मिन्न भवतीति । अत्रात्मादौ दृष्टान्ते उत्पत्तिधर्मकत्वस्याभावादनित्यत्वं न भवति इत्युपलभमानः शब्दे विपर्ययमनुमिनोति उत्पत्तिधर्मकत्वस्य भावादनित्यः शब्दः इति ( वात्स्या० १।१।३७ ) । [ ख ] साध्यसाधनव्यतिरेकव्याप्त्युपदर्शकोदाहरणम् । यथा जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् यन्नैवं तन्नैवं यथा घटः इति ( गौ० वृ० १।१।३७ ) । यन्नैवमित्यस्यार्थस्तु यन्न सात्मकं तन्न प्राणादिमत् इति ।

**व्यतिरेक्युपनयः**—( अवयवः ) उदाहरणापेक्षो न तथेति साध्यस्योपसंहारः ( गौ० १।१।३८ ) । साध्यवैधर्म्ययुक्ते उदाहरणे आत्मादिद्रव्यमनुत्पत्तिधर्मकं नित्यं दृष्टम् न च तथा शब्दः इत्यनुत्पत्तिधर्मकत्वस्योपसंहारप्रतिषेधेनोत्पत्तिधर्मकत्वमुपसंह्रियते । उपसंह्रियतेनेनेति चोपसंहारो वेदितव्यः ( वात्स्या० १।१।३८ ) इति । साध्यस्य पक्षस्य उदाहरणापेक्ष उदाहरणानुसारी य उपसंहार उपन्यासः । प्रकृतोदाहरणोपदर्शितव्यतिरेकव्याप्तिविशिष्टहेतुविशिष्टपक्षबोधजनको न्यायावयवः इति तात्पर्यम् । व्यतिरेक्युपनयत्वं च साध्याभावव्यापकीभूताभावप्रतियोगिमत्पक्षबोधकावयवत्वम् ( चि० अवय० २ पृ० ८१ ) । यथा पर्वतो वह्निमान्धूमादित्यादौ वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवांश्चायम् इति न तथायम् इति वा वाक्यमुपनयः ( गौ० वृ० १।१।३८ ) ।

**व्यतिहारः**—१ [क] परस्परकरणम् ( ल० म० ) । [ख] परस्परैकजातीयक्रियाकरणम् । यथा केशाकेशि दण्डादण्डि इत्यादौ । अत्र परस्परं केशेषु केशेषु गृहीत्वेदं युद्धं प्रवर्तते इति दण्डैश्च दण्डैश्च गृहीत्वेदं युद्धं प्रवर्तते इति चार्थो बोध्यते । यथा वा अन्योन्यं ताडयत इत्यादौ व्यतिहारः । २ परिवर्तनम् ( विनिमयः ) ( हेमच० ) ।

**व्यतीपातः**—श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः । अमा चेद्रविवारेण व्यतीपातः स उच्यते ॥ ( पु० चि० पृ० ३१७ ) ।

**व्यधिकरणत्वम्**—१ [क] तदनधिकरणवृत्तित्वम् ( त० प्र० २ ) ( मु० २ ) ( ग० २ चतु० चक्र० ) । यथा कपिसंयोगाभावस्य स्वप्रतियोगिकपिसंयोगव्यधिकरणत्वम् । [ख] तदधिकरणावृत्तित्वम् ( मू० म० १ ) । यथा घटत्वाभावस्य स्वप्रतियोगिघटत्वव्यधिकरणत्वम् । २ क्वचित् साध्यतावच्छेदकसंबन्धसामान्ये स्वप्रतियोगिप्रतियोगिकत्व हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्य एतदुभयाभावः तत्कत्वम् ( दीधि० २ व्याप्ति० सिद्धा० ) । अत्र स्वपदेनाभावो ग्राह्यः । इदं व्यधिकरणत्वं तु सिद्धान्तसिद्धव्याप्तिघटकाभावनिष्ठम् प्रतियोगिवैयधिकरण्यशब्देन व्यवह्रियते इति विज्ञेयम् ।

**व्यधिकरणधर्मावच्छिन्नाभाववादी**—प्रतियोग्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववादी । यथा सौन्दडोपाध्यायः ( ग० २ व्याप्ति० चतु० अवतरणे० ) । स च घटत्वेन पटाभावम् घटत्वेन वाच्यत्वाभावम् घटत्वपटत्वोभाभ्यां प्रमेयसामान्याभावं च एवमादीन् व्यधिकरणधर्मावच्छिन्नाभावानङ्गीकरोति । गङ्गेशोपाध्यायादयस्तु तादृशाभावान्नाङ्गीचक्रुः इति विज्ञेयम् । व्यधिकरणधर्मावच्छिन्नाभावनिराकर्तुः प्रतिज्ञावाक्यं च प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदको भवति ( चि० २ व्याप्ति-नि० ) इति विज्ञेयम् ( ग० चतु० खण्ड० पृ० ६७ ) ।

**व्यपदेशः**—१ शब्दप्रयोगः ( दि० १।२ पृ० १०८ ) । यथा अव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ( गौ० १।१।४ )

इत्यादौ व्यपदेशः । २ शाब्दिकास्तु मुख्यव्यवहारः । यथा व्यपदेशिवदेकस्मिन् ( व्या० परि० ) इत्यादौ इति वदन्ति । अत्र व्यपदेशिना तुल्यं वर्तते ( वतिः ) इति विग्रहः । समुदितार्थस्तु एकस्मिन् असहायेपि व्यपदेशिवत् मुख्यवत् कार्यं कर्तव्यम् इति । यथा अस्यापत्यम् इः इत्यत्र अत इञ् ( पाणि० ४।१।९५ ) इति सूत्रेण विधीयमानोदन्तप्रकृतिकोपि इञ् केवलात् अशब्दादपि भवति । ३ संज्ञा ( त्रिका० ) । ४ कापट्यम् ( हेमच० ) ( वाच० ) । ५ व्यपदेशो विरुद्धानुष्ठानम् ( जै० सू० वृ० अ० २ पा० ४ सू० २४ ) ।

**व्यपवर्गः**—समाप्तिः ( जै० सू० वृ० अ० २ पा० ४ सू० ४ ) ।

**व्यपेक्षा**—१ अपेक्षा । २ वैयाकरणास्तु सामर्थ्यविशेषः । स च स्वार्थपर्यवसायिपदानामाकाङ्क्षादिवशात् यः परस्परं संबन्धः सा व्यपेक्षा इत्याहुः । अन्ये तु अवयवार्थापेक्षणम् इत्याहुः । अत्रेदं विज्ञेयम् । व्यपेक्षायां समासो न भवति । किंतु एकार्थीभाव एव समासो भवति इति । तत्प्रपञ्चस्तु समासशब्दव्याख्याने दृश्यः ।

**व्यभिचरितत्वम्**—व्यभिचारः ।

**व्यभिचारः**—१ ( अनैकान्तिकत्वरूपो हेतुदोषः ) एकत्राव्यवस्था । यथा नित्यः शब्दः अस्पर्शत्वात् ( वात्स्या० १।२।५ ) इति । यथा वा धूमवान्वह्नेरित्यादौ वह्नेर्धूमव्यभिचारः । शिष्टं च सव्यभिचारत्वशब्दव्याख्याने दृश्यम् । व्यभिचारलक्षणं च साध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्याप्तिग्रहप्रतिबन्धकतानतिरिक्तवृत्तित्वम् ( दीधि० २ पृ० २०३ ) ( ग० २ हेत्वाभा० सामा० ) । अत्रेदं बोध्यम् । व्यभिचारत्वस्य साधारणत्वासाधारणत्वानुपसंहारित्वात्मकेषु त्रिषु हेतुदोषेषु वर्तमानत्वेपि साधारणत्व एवार्थे व्यभिचारशब्दं प्रायशः प्रयुञ्जते इदानींतना नैयायिकाः इति । अत्रेदं प्रसङ्गतोधिकं बोध्यम् । व्यभिचारज्ञानविरहसहकृतसहचारज्ञानं व्याप्तिग्राहकम् । तत्र व्यभिचारज्ञानं द्विविधम् यथार्थम् अयथार्थं च । अयथार्थमपि द्विविधम् निश्चयः शङ्का च । व्यभिचार-

शङ्काविरहः क्वचित् तर्कात् क्वचित् स्वतःसिद्ध एव इति ( सि० च० २ पृ० २४ ) (त० दी० २ पृ० २१)। तत्र तर्कादित्यस्य तर्काभावेतरनिखिलकारणसमवधानस्थले इत्यर्थः । स्वतःसिद्ध एवेत्यस्य इतरकारणविरहस्थले तादृशकारणविरहप्रयुक्त एवेत्यर्थः ( नी० २ पृ० २१ ) । २ कार्यकारणभावभङ्गः । अयं व्यभिचारो द्विविधः अन्वयव्यभिचारः व्यतिरेकव्यभिचारश्च । तत्राद्यः कारणसत्त्वे कार्याभावात् । द्वितीयः कार्यसत्त्वे कारणाभावात् ( ग० ) । ३ धर्मज्ञास्तु निन्दिताचारः । यथा पत्नी पत्युर्धनहारिणी या स्यादव्यभिचारिणी इत्यादौ जारकर्म व्यभिचारः इत्याहुः ( मिताक्ष० कात्याय० पृ० ७५ ) । अत्र विशेष उच्यते हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् । परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ॥ ( याज्ञ० अ० १ श्लो० ७० ) इति ।

**व्यभिचारी**—१ व्यभिचारवान् । २ आलंकारिकास्तु रसप्रादुर्भावाङ्गभूतनिर्वेदादिः संचारिभावः इत्याहुः । तदुक्तम् विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः । स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच तद्विदाः ॥ ( सा० द० परि० ३ श्लो० १४० ) इति । तदर्थश्च स्थिरतया वर्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भावतिरोभावाभ्यामाभिमुख्येन चरणाद्व्यभिचारिणः कथ्यन्ते इति । ते के इत्याह निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः स्वप्नापस्मारगर्वा मरणमलसतामर्षनिद्रावहित्थाः । औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसंत्रासलज्जा हर्षासूयाविषादाः सधृतिचपलता ग्लानिचिन्तावितर्काः ॥ ( सा० द० प० ३ श्लो० १४१ ) इति । एवम् रत्यादयोप्युपलक्षणतया ग्राह्याः ( सा० द० प० ३ श्लो० १७२ ) ।

**व्यर्थत्वम्**—१ स्वसमानाधिकरणावश्यक्लृप्तधर्मान्तरघटितत्वम् । यथा प्रमेयत्वविशिष्टसास्नादिमत्त्वस्य गोर्लक्षणत्वे वाच्ये व्यर्थत्वम् । अत्र केवलसास्नादिमत्त्वेनैव गोर्लक्षणत्वनिर्वाहे अप्रयोजनकप्रमेयत्वपदार्थघटितस्य प्रमेयत्वविशिष्टसास्नादिमत्त्वस्य वैयर्थ्यम् इति विज्ञेयम् । २ निष्फलत्वम् इति काव्यज्ञा आहुः ।

**व्यर्थविशेषणत्वम्**—विशेषणं विनापि यत्र व्याप्तिग्रहः तत्र व्यर्थविशेषणत्वम्। यथा वह्निमान् नीलधूमात् कालो नित्यः शरीराजन्यत्वादित्यादौ व्यर्थविशेषणत्वम् ( चि० १ निर्वि० पृ० ८२१ )। इदं च व्याप्यत्वासिद्धिरूपे हेत्वसिद्धौ वा हेत्वाभासेऽन्तर्भवति इति विज्ञेयम्।

**व्यवधानम्**—१ यत्किंचिद्वस्तूत्तरत्वविशिष्टं वस्त्वन्तरपूर्वत्वम्। तच्च द्विविधम् दैशिकम् कालिकं चेति। अन्ये तु २ द्रव्यान्तरेण द्रव्यान्तरस्याच्छादनम् इत्याहुः ( हेमच० )।

**व्यवसायः**—१ ज्ञानविषयीभूतं ज्ञानम्। पूर्वज्ञानम् इति यावत्। यथा व्यवसायात्मकं प्रत्यक्षम् ( गौ० १।१।४ ) इत्यादौ। अत्र घटचाक्षुषप्रत्यक्षानन्तरं जायमानेन घटं साक्षात्करोमि इत्यनुव्यवसायेन गम्यो घटसाक्षात्कारः सविकल्पकज्ञानरूपः व्यवसायः। अत्र भाष्यम्। सर्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेण व्यवसायः। पश्चात् मनसा अनुव्यवसायः। उपहतेन्द्रियाणामनुव्यवसायाभावात् ( वात्स्या० १।१।४ ) इति। एवमनुमानादिविषयेपि स्वयमूह्यम्। २ काव्यज्ञास्तु उद्यमः (रघु० ८।६५)। यथा किं दूरं व्यवसायिनाम् इत्यादौ इत्याहुः।

**व्यवस्था**—मर्यादा। सा च क्वचित् शास्त्रविहितस्य विषयान्तरपरिहारेण विषयविशेषे स्थापनम्। वैयाकरणास्तु स्वाभिधेयापेक्षावधिनियम इत्याहुः ( सि० कौ० )। तदर्थश्च दिग्देशकालैरवधिनियमरूपा व्यवस्था इति। व्यवस्थायां च सर्वनामता भवति।

**व्यवस्थितत्वम्**—[ क ] अयोगान्ययोगाभ्यां परिच्छेदः। यथा व्यवस्थितः पृथिव्यां गन्धः ( वै० २।२।२ ) इत्यादौ पृथिव्यां गन्धस्य व्यवस्थितत्वम्। भवति हि पृथिवी गन्धवत्येव पृथिव्येव गन्धवती इति ( वै० उ० २।२।२ )। यथा वा व्यवस्थितविकल्पः इत्यादौ। [ ख ] बाधकाभावादवधारणम् ( वै० वि० २।२।२ )।

**व्यवहारः**—१ [ क ] शब्दप्रयोगः ( न्या० बो० १ पृ० ६ )। यथा व्यवहरन्ति जना इत्यादौ। [ ख ] बुबोधयिषापूर्वकवाक्यप्रयोगः।

यथा सर्वव्यवहारहेतुर्ज्ञानं बुद्धिः इत्यादौ व्यवहारः ( वाक्य० १ पृ० ९ ) ( त० प्र० ४ पृ० १३३ ) । [ग] तद्रूपावच्छिन्नबोधकशब्दः । यथा अयं गौः इति शब्दः । अत्रायं कार्यकारणभावो बोध्यः व्यवहारे व्यवहर्तव्यज्ञानं हेतुः इति ( नील० १ पृ० ५ ) ( त० प्र० ) । प्राभाकरास्तु व्यवहारे व्यवहर्तव्यतावच्छेदकासंसर्गाग्रह एव कारणम् न तु व्यवहर्तव्यतावच्छेदकप्रकारकं ज्ञानं कारणम् इत्याहुः ( त० प्र० ख० ४ पृ० १३३ ) । तेन शुक्तौ इदं रजतम् इति व्यवहार उपपद्यते इति ज्ञेयम् । २ प्राज्ञो व्यवहारशास्त्रज्ञाः अन्यविरोधेन स्वसंबन्धितया कथनं व्यवहारः । वादिप्रतिवादिनोर्विवादः इत्यर्थः ( वीर० २ पृ० ४ ) । यथा कश्चित् इदं क्षेत्रादि मदीयम् इति कथयति । अन्योपि तद्विरोधेन मदीयम् इति इत्याहुः ( मिताक्ष० अ० २ श्लो० १ ) । नव्यास्तु ऋणादानादिलौकिकार्थविषया कथा व्यवहारः इत्याहुः ( वीरमित्रो० अ० २ पृ० ३ ) । अयं व्यवहारश्चतुष्पादः भाषापादः उत्तरपादः क्रियापादः साध्यसिद्धिपादश्चेति ( मिता० ) । कात्यायनहारीताभ्यां व्यवहारस्वरूपमुक्तम् । प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे । साध्यमूलस्तु यो वादो व्यवहारः स उच्यते ॥ इति । अत्र निरुक्तिः कात्यायनेन कृता । वि नानार्थेऽव संदेहे हरणं हार उच्यते । नानासंदेहहरणाद्व्यवहार इति स्मृतः ॥ ( वीर० २ पृ० ६ ) इति । व्यवहारलक्षणं तु परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु । वाक्यन्यायाद्व्यवस्थानं व्यवहार उदाहृतः ॥ ( मिताक्षरा० अ० २ श्लो० ८ ) । ३ धर्मज्ञास्तु सहासनभोजनादिर्व्यवहारः । यथा न पतितैः संव्यवहारो विद्यते ( आपस्त० धर्मसू० ७।२१।५ ) इत्यादौ इत्याहुः । ४ लोकयात्रा इति लौकिकजना आहुः ।

**व्यवहारपदम्**—व्यवहारविषयः । यथा व्यवहारशास्त्रे ऋणादानादीन्यष्टादश व्यवहारपदानि । तल्लक्षणमुक्तं याज्ञवल्क्येन स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ ( याज्ञ० स्मृ० अ० २ श्लो० ५ ) इति । तथा च प्रतिज्ञोत्तरसंशय-

हेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको व्यवहारः तस्य पदं विषयः इति तदर्थः । स च द्विविधः शङ्काभियोगः तत्त्वाभियोगश्चेति ( मिता० अ० २ श्लो० ५ पृ० ३ ) । व्यवहारपदानि चाष्टादश मनुनोक्तानि तेषामाद्यमृणादानं ( १ ) निक्षेपो ( २ ) ऽस्वामिविक्रयः ( ३ ) । संभूय च समुत्थानं ( ४ ) दत्तस्यानपकर्म ( ५ ) च ॥ वेतनस्यैव चादानं ( ६ ) संविदश्च व्यतिक्रमः ( ७ ) । क्रयविक्रयानुशयो ( ८ ) विवादः स्वामिपालयोः ( ९ ) ॥ सीमाविवादधर्मश्च ( १० ) पारुष्ये दण्डवाचिके ( ११ ) । स्तेयं ( १२ ) च साहसं ( १३ ) चैव स्त्रीसंग्रहण ( १४ ) मेव च ॥ स्त्रीपुंधर्मो ( १५ ) विभागश्च ( १६ ) द्यूत ( १७ ) माह्वय ( १८ ) एव च । पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥ ( मनु० अ० ८ श्लो० ४–७ ) इति ।

**व्यसनी**—व्यसनमिष्टवियोगोनिष्टप्राप्तिः । तज्जनितं दुःखमपि व्यसनम् । तद्वान्व्यसनी ( मिताक्षरा० अ० २ श्लो० ३२ ) ।

**व्याकरणम्**—१ [ क ] पूर्वपूर्वव्याकरणतः शब्दगुणदोषविद्भिरभियुक्तैः प्रकृतिप्रत्ययादिपरिकल्पनया कृतं शब्दसाधुत्वाख्यायकम् शास्त्रम् ( चि० ४ ) । यथा अग्नेर्ढक् ( पाणि० ४।२।३३ ) इत्यादि । अनेन शास्त्रेण अग्निर्देवतास्य हविषः इत्यर्थे अग्निशब्दाड्ढक्प्रत्ययकल्पनया आग्नेयम् इति शब्दस्य साधुत्वमाख्यायते । अत्रार्थे व्युत्पत्तिः व्याक्रियन्ते व्युत्पाद्यन्ते अर्थवत्तया प्रतिपाद्यन्ते शब्दा येन इति व्याकरणम् । करणे ल्युट् प्रत्ययः । [ ख ] शाब्दिकास्तु निःश्रेयसमुख्यफलकं शब्दानुशासनम् । यथा पाणिनिशाकटायनादिप्रणीतं व्याकरणम् इत्याहुः । [ ग ] आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः । प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः ॥ ( सर्व० सं० पृ० २९५ पाणि० ) । व्याकरणस्य मुख्यफलं च एकः शब्दः सुष्ठु प्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके कामधुग्भवति इति । अत्रावान्तरफलं तु रक्षोहागमलघ्वसंदेहाः प्रयोजनम् इति महाभाष्योक्तं ज्ञेयम् । अत्रोक्तम् अथ व्याकरणं वक्ष्ये कात्यायन समासतः । सिद्धशब्दविवेकाय बालव्युत्पत्तिहेतवे ॥ इत्यादि ।

अधिकं तु गारुडे (अ० २०९) द्रष्टव्यम् । २ मायावादिनस्तु स्थूला सृष्टिः (रत्नप्रभा) । यथा नामरूपे व्याकरवाणि (श्रुतिः) इत्यादौ व्याकरणम् इत्याहुः ।

**व्याख्यानम्**—[क] विवरणम् (हलायु०) । [ख] अप्रतिपत्त्यादिनिवारणप्रयोजनकं तत्समानार्थकपदान्तरेण विस्तरेण तदर्थकथनम् । यथा न्याये तत्त्वचिन्तामणेर्दीधितिर्मथुरानाथी च व्याख्यानम् । वेदान्ते तु ब्रह्मसूत्रार्थप्रतिपादकानुव्याख्यानस्य न्यायसुधा व्याख्यानम् । [ग] पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपेषु समाधानं व्याख्यानं पञ्चलक्षणम् ॥ (पराशरपु० अ० १८) । आक्षेपोथ समाधानं व्याख्यानं षड्विधं मतम् इत्यन्यत्र पाठान्तरम् । सर्वत्र व्याख्याने बीजं तु अप्रतिपत्तिः विप्रतिपत्तिः अन्यथाप्रतिपत्तिश्च इत्यनुसंधेयम् ।

**व्याघातः**—१ असंबद्धार्थकं वाक्यम् । तद्यथा यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता । माता तु मम वन्ध्यासीदपुत्रश्च पितामहः ॥ इति वाक्यम् । २ प्रतिबन्धः । यथा व्याघातावधिराशङ्का (कुसु०) इत्यादौ । ३ तर्कविशेषः इति प्राञ्चो नैयायिका आहुः । ४ आलंकारिकास्तु अर्थालंकारविशेष इत्याहुः । ५ मौहूर्तिकाश्च विष्कम्भादिसप्तविंशतियोगमध्ये त्रयोदशो (१३) योगविशेष इत्याहुः । ६ अन्तरायः ७ प्रहारश्च इति काव्यज्ञा आहुः ।

**व्याधिः**—दोषत्रयवैषम्यनिमित्तो ज्वरादिः (सर्व० सं० पृ० ३५५ पात०) ।

**व्यानः**—(प्राणवायुः) [क] नाडीमुखेषु वितननाद्व्यानः (दि० १।२) (सि० च०) । [ख] सर्वशरीरव्यापकः प्राणान्तर्गतो वायुविशेषः । यथा व्यानः सर्वशरीरगः इत्यादौ । [ग] विष्वग्गमनवान् वायुर्व्यान इत्यभिधीयते । अत्रोक्तम् व्यानो हि व्यानयत्यन्नं सर्वव्याधिप्रकोपनः । महारजतसुप्रख्यो ह्यानोपादानकारणम् ॥ स चाक्षिकर्णयोर्मध्ये कट्यां वै गुल्फयोरपि । घ्राणे गले स्फिग्गुदेशे तिष्ठत्यत्र निरन्तरम् ॥ स्कन्दयत्यधरं वक्रं गात्रनेत्रे प्रकोपनः (पदार्थादर्शे) (वाच०) इति ।

**व्यापकत्वम्**—१ [क] तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् (न्या० बो०)। अत्र व्युत्पत्तिः विशेषेणाप्नोति (वि आप् ण्वुल्) इति व्यापकः। तस्य भावो व्यापकत्वम्। अनया व्युत्पत्त्या व्याप्तिकर्तृत्वं लभ्यते। तच्च व्याप्तिनिरूपकत्वम्। यथा पर्वते धूमेन वह्निसाधने वह्नेर्धूमनिष्ठव्याप्तिनिरूपकत्वरूपं व्यापकत्वम् (प्र० च० २ पृ० १९)। [ख] तद्वन्निष्ठभेदप्रतियोगितानवच्छेदकत्वम्। तदर्थः यत् यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं न भवति तत् तद्व्यापकम् इति (न्या०सि० दी० पृ० ५६)। यथा वह्नेर्धूमव्यापकत्वम्। तथा हि धूमसमानाधिकरणो योन्योन्याभावः न वह्निमद्भेदः अपि तु जलवद्भेद एव। तत्प्रतियोगितानवच्छेदको वह्निर्भवति इति वह्निर्धूमव्यापको भवति। [ग] तत्समानाधिकरणा यावन्तो धर्मा यत्समानाधिकरणाः तत्त्वम् (न्या० म० २ पृ० १६)। यथा मनुष्यत्वसमानाधिकरणयावद्धर्माणां प्राणित्वसामानाधिकरण्यात्प्राणित्वस्य मनुष्यत्वव्यापकत्वम्। [घ] स्वप्रतिबद्धबुद्धिजनकत्वं यत्स्वरूपम् तदेव व्यापकत्वम् इति प्राञ्च आहुः (त० भा०)। [ङ] निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व यद्धर्मावच्छिन्नत्व एतदुभयाभावः तेन संबन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वम् (दीधि० २ व्याप्तिनि०) (मु० २ व्याप्तिनि०)। निरुक्तप्रतियोगीत्यस्य प्रतियोगितावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताको यादृशः अभावो लक्षणघटकत्वेनाभिमतः तस्य प्रतियोगीत्यर्थः। इदं च साध्यस्य हेतुव्यापकत्वम् इति बोध्यम्। यथा पर्वतः संयोगेन वह्निमान् धूमादित्यादौ वह्नेर्धूमव्यापकत्वम्। अत्रायं नियमः व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते। तयोरभावयोस्तस्माद्विपरीतः प्रतीयते॥ अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते। साध्याभावोन्यथा व्याप्यो व्यापकः साधनात्ययः॥ व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम्। एवं परीक्षिता व्याप्तिः स्फुटीभवति तत्त्वतः॥ (त० भा० २) (त० कौ० २) इति। [च] यन्निरूपितसाध्यतावच्छेदकताघटकसंबन्धसामान्ये

प्रतियोगित्वाधिकरणयत्किंचिद्व्यक्त्यनुयोगिकत्वाभावः तदन्यत्वम् ( ग० व्याप्तिनि० कूट० ) । अत्र यत्पदं साध्यतावच्छेदकपरम् । इदं व्यापकत्वं तु प्रतियोगिताव्यापकत्वम् इति व्यवह्रियते । अत्र च वह्नि-धूमोभयवान्धूमादित्यादौ यदा पर्याप्तिसंबन्धेनोभयत्वस्य साध्यतावच्छेद-कता विवक्षिता तदाप्यनेन परिष्कारेण व्यापकत्वं निर्वहति इति विज्ञेयम् । [ छ ] अधिकदेशवृत्तित्वम् । यथा द्रव्यत्वस्य पृथिवीत्वाद्य-पेक्षया व्यापकत्वम् ( परत्वम् ) ( मु० १ पृ ३७ ) । २ स्वरूपतः सर्वदेशसंबद्धत्वम् । यथा सामान्यस्य व्यापकत्वम् ( वै० उ० १।२।३ पृ० ५३ ) । ३ क्वचित् परममहत्परिमाणयोगः । यथा आकाशादे-र्व्यापकत्वम् ( वै० उ० ७।१।२२ ) । ४ आधेयत्वम् ( वृत्तित्वम् ) । यथा शरीरव्यापकं स्पर्शग्राहकं त्वगिन्द्रियम् इत्यादौ । ५ तान्त्रिकास्तु सर्वाङ्गसंबन्धित्वम् । यथा अङ्गुलिव्यापकन्यासौ ( तन्त्रसा० ) इत्यादौ न्यासविशेषे व्यापकत्वम् इत्याहुः ( वाच० ) । ६ आच्छादकत्वम् इति काव्यज्ञा आहुः ।

**व्यापारः**—१ यं जनयित्वैव यस्य यज्जनकत्वम् स तद्व्यापारः (त० प्र० २ ) । यथा लौकिकप्रत्यक्षे इन्द्रियस्येन्द्रियार्थसंनिकर्षषट्कं व्यापारः । तथा हि संनिकर्षं जनयित्वैवेन्द्रियस्य प्रत्यक्षजनकत्वम् इति प्रत्यक्षे संनि-कर्ष इन्द्रियस्य व्यापारः । व्यापारत्वं च द्रव्यान्यत्वे सति भावत्वे सति तज्जन्यत्वे च सति तज्जन्यजनकत्वम् ( न्या० म० १ पृ० २ ) ( त० दी० ) ( सि० च० ) ( त० कौ० ) । करणजन्यत्वे सति करणज-न्यफलजनकत्वम् इत्यर्थः ( म० प्र० १ पृ० ५ ) । शिवादित्यमिश्रास्तु व्यापारत्वमखण्डोपाधिः इत्याहुः ( न्या० म० १ पृ० २ ) । संनिकर्ष-षट्कं च इन्द्रियेण जन्यते इन्द्रियजन्यं प्रत्यक्षं जनयति च इति व्यापारल-क्षणाक्रान्तं भवति इति विज्ञेयम् । अनुमित्यादौ तु व्याप्तिज्ञानस्य परा-मर्शादिर्व्यापारः । यथा वा कुठारेण दारु छिनत्ति इत्यादौ छिदाकरण-परशोर्दारुसंयोगो व्यापारः ( प्र० प्र० ) । तथा हि परश्वात्मकेन छिदा-करणेन जन्यः तेनैव जन्यायाः फलीभूतायाश्छिदात्मकक्रियाया जन-

कश्च भवति इति परशुदारुसंयोगो व्यापारो भवति इति । एवम् यागादेर्व्यापारः अदृष्टमित्याद्यूह्यम् । शिष्टं तु करणशब्दे दृश्यम् । २ [ क ] प्रवृत्तिविषयः । यथा देवदत्तो ग्रामं गच्छतीत्यादौ गमधातुनोत्तरदेशसंयोगानुकूला या क्रिया बोध्यते स व्यापारः । एवम् सर्वत्र शाब्दबोधे धात्वर्थव्यापार ऊह्यः । [ ख ] शाब्दिकास्तु पदान्तरसमभिव्याहाराप्रयोज्यसाध्यत्वप्रकारकाभिधानविषयो व्यापारः इति वदन्ति । स च व्यापारः भावयितुरुत्पादनक्रिया । तदुक्तं भर्तृहरिणा व्यापारो भावना सैवोत्पादना सैव च क्रिया ( वाक्यपदीये ) इति । ३ आधुनिकवैश्यास्तु अर्थजनक उद्यमो व्यापार इत्याहुः ।

**व्यापारित्वम्**—व्यापारविशिष्टत्वम् । तच्च क्वचित् जनकतासंबन्धेन व्यापारविशिष्टत्वम् । यथा न हि व्यापारेण व्यापारिणोन्यथासिद्धिः ( त० प्र० १ ) इत्यादौ इन्द्रियाद्यात्मकस्य करणस्य व्यापारित्वम् ।

**व्यापित्वम्**—व्यापकत्वम् ।

**व्याप्तत्वम्**—१ व्याप्तिविशिष्टत्वम् । यथा धूमो वह्निना व्याप्तः इत्यादौ । यथा वा साध्याभावव्याप्तो हेतुर्विरुद्धः (त० सं०) समेन यदि नो व्याप्तः ( उदयनः ) इत्यादौ व्याप्तत्वम् । २ पूर्णत्वम् । ३ समाक्रान्तत्वं चेति वेदान्तिन आहुः । ४ ख्यातत्वम् । ५ स्थापितत्वं चेति काव्यज्ञा आहुः ।

**व्याप्तिः**—संबन्धविशेषः । अत्र केचिदाहुः । केवलान्वयिनि केवलान्वयिधर्मसंबन्धः । व्यतिरेकिणि साध्यवदन्यावृत्तित्वं व्याप्तिः । एतयोरनुमितिविशेषजनकत्वम् । अनुमितिमात्रे तु पक्षधर्मतैव प्रयोजिका । न चातिप्रसङ्गः । विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्यजनकत्वम् इति नियमात् इति ( चि० २ पृ० ५ ) । स च साध्यसाधनस्थले [ क ] अनौपाधिकः संबन्धः । स चानुमित्यौपयिकः साधननिष्ठः साध्यस्य संबन्धः इति विज्ञेयम् । अत्र अनौपाधिकत्वं तु यावत् स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यम् । अथ वा यावत्स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिप्रतियोगिकात्यन्ताभावासमानाधिकरणसाध्यसामा-

माधिकरण्यम् (वै० उ० ३।१।१४ पृ० १५२)। अत्र गङ्गेशोपाध्याया आहुः एतादृशात्यन्ताभावासामानाधिकरण्यं यस्य तस्य तदेवानौपाधिकत्वम् इति (चि० २ पृ० ८)। [ख] स्वाभाविकः साध्यहेत्वोः संबन्धः (त० भा०)। [ग] उपाधिविधुरः संबन्धः (सर्व० सं० पृ० ७ चार्वा०) (ता० र० श्लो० १४) [घ] यद्विशिष्टसमानाधिकरणा यावन्तः साध्यसमानाधिकरणास्तद्वत्त्वम् (न्या० म० २ पृ० १६)। यथा इदं वाच्यं ज्ञेयत्वात् पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् पर्वतो वह्निमान् धूमात् इत्यादिषु केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिषु त्रिष्वपि हेतुषु तादृशाः संबन्धाः सन्तीति व्याप्तिसामान्यस्वरूपाणि संगच्छन्ते। भवति च धूमत्वविशिष्टसमानाधिकरणा यावन्तो धर्माः वह्निसमानाधिकरणा इति धूमे वह्निव्याप्तिः। न तु वह्नौ धूमस्य। न हि वह्नित्वविशिष्टसमानाधिकरणा यावन्तो धूमसमानाधिकरणा भवन्ति। अयःपिण्डत्वस्य वह्नित्वविशिष्टसमानाधिकरणस्य धूमासमानाधिकरणत्वात्। अस्ति चेदं केवलान्वयिनि। अभिधेयत्वविशिष्टसमानाधिकरणानां यावतां ज्ञेयत्वसमानाधिकरणत्वात् (न्या० म० २ पृ० १६)। अन्वयव्यतिरेकव्याप्तिसाधारणं व्याप्तित्वं तु हेतुतावच्छेदकनिष्ठप्रकारताभिन्ना यानुमितिजनकतावच्छेदकतावच्छेदकीभूता प्रकारता तद्वत्त्वम् इति। तथा हि केवलान्वयिस्थले इदं वाच्यं ज्ञेयत्वादित्यादौ उक्तलक्षणघटकतादृशप्रकारता च हेतुव्यापकसाध्यसामानाधिकरण्यनिष्ठा निरूप्यनिरूपकभावापन्ना प्रकारता भवति। अन्वयव्यतिरेकिस्थले वह्निमान् धूमादित्यादौ तादृशी प्रकारता तु हेतुव्यापकसाध्यसामानाधिकरण्यनिष्ठप्रकारता साध्याभावव्यापकीभूताभावप्रतियोगित्वनिष्ठप्रकारता च भवति। केवलव्यतिरेकिस्थले पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ जीवच्छरीरं सात्मकं प्राणादिमत्त्वादित्यादौ चाप्रसिद्धसाध्यकस्थलेपि तादृशी प्रकारता च हेतुव्यापकसाध्यसामानाधिकरण्यनिष्ठप्रकारता भवति इति सर्वत्र व्याप्तौ लक्षणसमन्वयो बोध्यः। अत्र हृदयम्। साध्याप्रसिद्धावपि अनुमितेः पूर्वं पक्षातिरिक्ते यत्किंचिदधिकरणे साध्यनिश्चयाभावेपि सात्मकत्वादिरू-

प्त्साध्यस्य खपुष्पशशशृङ्गादिवत्तुच्छत्वाभावेन हेतुव्यापकसाध्यसामानाधिकरण्यग्रहोत्पत्तौ बाधकाभावः इति । सा व्याप्तिः द्विविधा अन्वयव्याप्तिः व्यतिरेकव्याप्तिश्च । तत्रान्वयव्याप्तिरपि द्विविधा पूर्वपक्षव्याप्तिः सिद्धान्तसिद्धव्याप्तिश्चेति । उभयविधान्वयव्याप्तिज्ञाने व्यभिचारज्ञानाभावः सहचारज्ञानं च कारणम् । व्यतिरेकव्याप्तिज्ञाने तु साध्याभावे हेत्वभावस्य साहचर्यज्ञानं व्यभिचारज्ञानाभावश्च कारणम् इति विवेकः (भा० प० श्लो० १३८)। व्याप्तिग्रहस्तु नानाव्यक्तिसाध्यहेतुकस्थले वह्निमान् धूमादित्यादौ सामान्यलक्षणप्रत्यासत्त्या सकलवह्निधूमादिविषयको जन्यते (चि० २ पृ० १७)। अत्राहुः। व्याप्तिग्राहकं तु उपाध्यभावग्रहणजनितसंस्कारसहकृतेन भूयोदर्शनजनितसंस्कारसहकृतेन साहचर्यग्राहिणा प्रत्यक्षेणैव व्याप्तिरवधार्यते (त० भा० पृ० १०)। अथ वा व्यभिचारज्ञानविरहसहकृतं हेतुसाध्यसहचारदर्शनं व्याप्तिग्राहकं भवति । व्यभिचारज्ञानं च निश्चयः शङ्का वा । सा च क्वचिदुपाधिसंदेहात् क्वचिद्विशेषादर्शनसहितसाधारणधर्मदर्शनादुत्पद्यते । तद्विरहश्च क्वचिद्विपक्षबाधकतर्कात् क्वचित् स्वतःसिद्ध एव (चि० २ पृ० १३–१४) (त० कौ० २) (त० दी० २)। यद्वा व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारणम् । व्यभिचारग्रहस्य व्याप्तिग्रहे प्रतिबन्धकत्वात्तदभावः कारणम् । एवम् अन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता । भूयोदर्शनं तु न कारणम् । व्यभिचारास्फूर्तौ सकृद्दर्शनेपि क्वचिद्व्याप्तिग्रहात् । क्वचित् व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते । यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षबाधकतर्कोपेक्षितः । तथा हि वह्निविरहिण्यपि धूमः स्यात् इति यद्याशङ्का भवति तदा सा वह्निधूमयोः कार्यकारणभावस्य प्रतिसंधानान्निवर्तते । यद्ययं वह्निमान्न स्यात्तदा धूमवान्न स्यात् कारणं विना कार्यानुत्पत्तेः (मु०) इति । वेदान्तिनस्त्वत्राहुः । प्रत्यक्षं व्याप्तिग्राहकम् । तथा च साहचर्यग्राहिणः प्रत्यक्षस्य भूयोदर्शनव्यभिचारादर्शनोपाध्यभावनिश्चयाः सहकारिणः । एवमनुमानागमावपि व्याप्तिग्राहकौ । तत्राग-

मेन व्याप्तिग्रहस्तु ब्राह्मणो न हन्तव्यः गौर्न पदा स्प्रष्टव्या इति । अत्र दृष्टान्तापेक्षा नास्ति । अत्रेदं बोध्यम् । कार्यं कारणमात्रमनुमापयति । कारणं तु समग्रमेव कार्यम् (प्र० प० पृ० १४—१६) इति । तत्र पूर्वपक्षीयान्वयव्याप्तिश्च (१) साध्याभाववदवृत्तित्वम् । (२) साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम् । (३) साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम् । (४) सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम् । (५) साध्यवदन्यावृत्तित्वं वा (चि० २ पृ० २) । यथा पर्वतो वह्निमान् धूमादित्यादौ वह्नेरत्यन्ताभाववति वह्निमद्भिन्ने वा जलादौ धूमो नास्ति इति धूमादौ वह्नेर्व्याप्तिः । अत्र प्रथमलक्षणस्य साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकप्रतियोगिव्यधिकरणसाध्याभावाधिकरणनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः इति समुदितार्थः । अत्र प्रतियोगिवैयधिकरण्यं च प्रतियोगितावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यं विज्ञेयम् (न्या० बो० २ पृ० १४) । एतानि च पञ्च अव्यभिचरितत्वपदप्रतिपाद्यानि॰व्याप्यलक्षणानि व्याप्तिस्वरूपाणि च पञ्चलक्षणी इति नैयायिकैर्व्यवह्रियन्ते । द्वितीयलक्षणे साध्यवद्भिन्ने वर्तमानः यः साध्याभावः तद्वदवृत्तित्वम् इति विग्रहो ज्ञेयः । अत्र लक्षणे कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावात् अव्याप्तिः । अतो द्वितीयलक्षणे अस्वारस्यमास्थाय तृतीयलक्षणमुक्तं साध्यवत् इति । अत्र तृतीये लक्षणेपि हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेश्चतुर्थमुक्तं सकलेति । साकल्यं साध्याभाववति साध्ये च विशेषणं बोध्यम् । साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः । तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः । न वा नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः । चतुर्थलक्षणानास्थायां कारणं तु यत्रैकव्यक्तिकं साध्यं विपक्षो वा तत्र निर्धूमत्वादिव्याप्ये तत्त्वेन साध्ये निर्वह्नित्वादौ चाव्याप्तिः । तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वात् । अतः पञ्चममुक्तं साध्यवत् इति (दीधि०

२ पृ० ११—१२ ) । साध्यतावच्छेदकसंबन्धावच्छिन्नं यत्साध्यवत्त्वं तदवच्छिन्नप्रतियोगिताकस्यान्योन्याभावस्य स्वप्रतियोगितावच्छेदकवत्त्व-बुद्धिविरोधिताघटकसंबन्धेन यदधिकरणम् तन्निरूपितहेतुतावच्छेदक-संबन्धावच्छिन्नवृत्तितानवच्छेदकहेतुतावच्छेदकधर्मवत्त्वम् इति समुदि-तार्थः ( वै० वि० ३।१।१४ ) ( मु० २ ) । ( ६ ) साध्यासामाना-धिकरण्यानधिकरणत्वम् । तस्य निष्कृष्टार्थस्तु साध्यनिष्ठाधेयत्वानिरूप-काधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वम् इति । तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः ( दीधि० २ पृ० १३ ) । इदं लक्षणं सिंहलक्षणम् इत्युच्यते । ( ७ ) साध्यवैयधिकरण्यानधिकरण-त्वम् ( चि० २ पृ० २ ) । इदं लक्षणं व्याघ्रलक्षणम् इत्युच्यते । एतावन्ति सप्त लक्षणान्यन्वयव्यतिरेकिकेवलव्यतिरेकिणोर्हेत्वोर्लक्षणानि । न तु केवलान्वयिनो हेतोः । तत्र साध्याभावाद्यप्रसिद्धेः । अग्रिमलक्ष-णानि तु केवलान्वयिसाधारणान्यपि इति बोध्यम् । ( ८ ) यत्समाना-धिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तः अभावाः प्रतियोगिसमानाधिकरणाः तत्त्वम् । साध्यतावच्छेद-कावच्छिन्नव्यापकतावच्छेदिका या या प्रतियोगिता तत्तदाश्रयसामानाधि-करण्यं यत्र कचिद्यावदधिकरणान्तर्भावेन तत्त्वम् इति समुदितार्थः ( ग० चतु० ) । अत्र यावन्तः अभावाः इत्यनेन केवलान्वयिनि वाच्य-त्वादौ साध्ये समवायितया वाच्यत्वाभावम् वह्निमान् धूमादित्यादौ तु घटत्वेन वह्न्यभावादिकं व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणसम-न्वयः कर्तव्यः इति विज्ञेयम् । इदं लक्षणं च दीधितिकृता स्वयं कृतम् इति प्रथमं स्वलक्षणम् इत्युच्यते । एतल्लक्षणमारभ्य चतुर्दश-लक्षणानि सौन्दडोपाध्यायाभिमतव्यधिकरणधर्मावच्छिन्नाभावाभिप्राय-काणि चतुर्दशलक्षणीसंज्ञकानि च भवन्ति इति बोध्यम् । ( ९ ) यत्समा-नाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्न-प्रतियोगिताकानां यावदभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधि-करण्यम् तत्त्वं वा । अत्र केवलान्वयिसाध्यकस्थले ज्ञेयत्वत्वादिना वाच्य-

त्वादीनामभावः सुलभः ( दीधि० २ )। वह्निमान् धूमादित्यादौ तु वह्नित्वेन घटाभावः सुलभः इति विज्ञेयम् । इदमपि च लक्षणं दीधितिकृता स्वयं कृतम् इति द्वितीयं स्वलक्षणम् इत्युच्यते इति बोध्यम् ।

चक्रवर्तिकृतं लक्षणत्रयं चेत्थम् । ( १० ) व्याप्यवृत्तेर्हेतुसमानाधिकरणस्य साध्याभावस्य प्रतियोगिताया अनवच्छेदकं यत् साध्यतावच्छेदकम् तदवच्छिन्नसामानाधिकरण्यम् । यादृशप्रतियोगितासंबन्धावच्छिन्नप्रकारतावच्छेदकयत्किंचिद्धर्मावच्छिन्नानधिकरणत्वं हेतुमतः तदनवच्छेदकावच्छिन्नसामानाधिकरण्यम् इति पर्यवसितोर्थः ( ग० चतु० चक्र० ) । ( ११ ) हेतुसमानाधिकरणस्य व्याप्यवृत्तेरभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत् साध्यतावच्छेदकम् तदवच्छिन्नसामानाधिकरण्यम् । ( १२ ) हेतुसमानाधिकरणस्य प्रतियोगिव्यधिकरणस्याभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत् साध्यतावच्छेदकम् तदवच्छिन्नसामानाधिकरण्यं वा । एतानि त्रीणि लक्षणानि चक्रवर्तिलक्षणानि इत्युच्यन्ते ( ग० चतु० ) । ( १३ ) साध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणसाध्याभावत्वकत्वम् । साध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यानतिरिक्तवृत्ति यद्धर्मविशिष्टसमानाधिकरणसाध्याभावत्वम् तद्धर्मवत्त्वम् इति समुदितोर्थः ( ग० चतु० पृ० ३० ) । ( १४ ) यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति तत्त्वम् । एते च द्वे प्रगल्भलक्षणे इत्युच्येते ( ग० चतु० ) । ( १५ ) साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति तत्त्वम् । यन्निष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयितासामान्ये प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वाभावः तत्त्वम् इति समुदितार्थः ( ग० चतु० पृ० ३१ ) । इदं च विशारदलक्षणम् इत्युच्यते ।

अथ मिश्रकृतं लक्षणत्रयं प्रदर्श्यते । (१६) यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीया ये तत्तदधिकरणनिरूपितवृत्तित्वाभावाः तद्वत्त्वम् । स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नव्यापक-

तावच्छेदकरूपावच्छिन्ना यावन्त्यः प्रतियोगिताः प्रत्येकं तत्तदवच्छेदकावच्छिन्नतदाश्रयनिष्ठप्रतियोगितावच्छेदकताकभेदाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकतत्प्रतियोगितानिरूपकाभावसजातीयाभाववत्त्वम् इति समुदितार्थः (ग० चतु० पृ० ४२)। अत्र साजात्यं च समानासमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण ग्राह्यम् (दीधि० २ पृ० १७)।(१७) यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वम्।(१८) यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तत्प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं वा। (१९) परे तु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावाः तद्वत्त्वम् इत्याहुः। इदं लक्षणं च कूटाघटितलक्षणम् इत्युच्यते (ग० चतु० पृ० ४७)।(२०) अन्ये तु वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमुदायाधिकरणवृत्तित्वाभावाः तद्वत्त्वम् इत्याहुः। इदं लक्षणं तु कूटघटितलक्षणम् इत्युच्यते (ग० चतु० पृ० ५२)। (२१) साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्तिस्वसमानाधिकरणयावदभावाधिकरणवृत्तित्वाभावा वृत्तिमद्वृत्तयो यावन्तः तद्वत्त्वम् (दीधि० २ चतुर्दशल० पृ० १४–२१)। इदं लक्षणं तु पुच्छलक्षणम् इत्युच्यते इति विशेषम्। यथा अन्वयव्यतिरेकिणि पर्वतो वह्निमान्धूमादित्यादौ केवलान्वयिसाध्यकस्थले इदं वाच्यं ज्ञेयत्वादित्यादौ केवलव्यतिरेकिणि पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ च सद्धेतौ धूमादिहेतुनिष्ठा वह्न्यादिसाध्यनिरूपिता व्याप्तिः। पर्वतो वह्निमानित्यत्र घटत्वावच्छिन्नप्रतियोगिताकवह्न्यभाववह्नित्वावच्छिन्नप्रतियोगिताकघटाभावघटत्वाद्यवच्छिन्नप्रतियोगिताकवृत्तित्वाभावाद्यात्मकान् व्यधिकरणधर्मावच्छिन्नाभावान् यथायथमादाय पूर्वोक्तानां सर्वेषां चतुर्दशलक्षणानां समन्वयः कर्तव्यः। इदं वाच्यमित्यत्र च समवायित्वावच्छिन्नप्रतियोगिताकवाच्यत्वाभावज्ञेयत्वत्वावच्छिन्नप्रतियोगिताकवाच्यत्वाभावघटत्वाद्यवच्छिन्नप्रतियोगिताकवृत्तित्वाभावा-

धात्मकान् व्यधिकरणधर्मावच्छिन्नाभावान् यथायथमादाय पूर्वोक्तानां सर्वेषां चतुर्दशलक्षणानां समन्वयः कर्तव्यः । अत्राधिकं तु गदाधर्यादौ चतुर्दशलक्षण्यां दृश्यम् । विस्तरभयान्नात्र दर्शितम् इति विरम्यते । अथ सिद्धान्तव्याप्तयः प्रदर्श्यन्ते । तत्र सिद्धान्तसिद्धान्वयव्याप्तिस्तु ( १ ) व्यापकस्य व्याप्याधिकरण उपाध्यभावविशिष्टः संबन्धः । इयं सिद्धान्तसिद्धा व्याप्तिश्च हेतुनिष्ठा साध्यनिरूपिता च अन्वयव्याप्तिः इत्युच्यते इति विज्ञेयम् ( न्या० बो० २ पृ० १४ ) । ( २ ) अव्यभिचरितसाध्यसामानाधिकरण्यम् । अस्ति चेदं पर्वतो वह्निमान् धूमवत्त्वात् इत्यादिसद्धेतौ । यत्र यत्र धूमस्तत्र वह्निः इति नियमस्य सत्त्वात् । नास्ति चेदं पर्वतो धूमवान् वह्निमत्त्वात् इत्याद्यसद्धेतौ । यत्र यत्र वह्निस्तत्र तत्र धूमः इति नियमस्यासत्त्वात् । तप्तायःपिण्डे वह्निसत्त्वेपि धूमासत्त्वात् ( त० कौ० २ पृ० ११ ) । ( ३ ) साधनत्वाभिमतसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकसाध्यकत्वम् ( न्या० सि० दी० पृ० ५५ ) । यथा वह्निमान् धूमात् इदं वाच्यं ज्ञेयत्वादित्यादौ सद्धेतौ व्याप्तिः । अस्य समन्वयः क्रियते । वह्निमान्धूमादित्यादौ साधनत्वाभिमतः धूमः । तस्य समानाधिकरणः तस्याधिकरणे पर्वते वर्तमानः अन्योन्याभावः । न हि वह्निमद्भेदो भवति किं तु घटादिमद्भेद एव । तस्य प्रतियोगिताया अवच्छेदको घटादिरेव । अनवच्छेदकस्तु साध्यात्मको वह्निः । तत्कत्वं तत्सामानाधिकरण्यम् धूमेस्ति इति । इदं वाच्यं ज्ञेयत्वात् इत्यादिकेवलान्वयिसद्धेतुस्थले तु ज्ञेयत्वाधिकरणं घटः । तत्र वर्तमानोन्योन्याभावः । न हि वाच्यत्ववद्भेदः किं तु पटत्ववद्भेदः । तस्य प्रतियोगिताया अवच्छेदकं पटत्वम् । अनवच्छेदकं तु साध्यात्मकं वाच्यत्वम् । तत्कत्वं ज्ञेयत्वेस्ति इति । ( ४ ) प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यम् । अत्र भावत्वं च इदमिह नास्ति इदमिदं न भवति इति प्रतीतिनियामको भावाभावसाधारणः स्वरूपसंबन्धविशेषः । अतः न अभावसाध्यकव्यभिचारिण्यतिप्रसङ्गः ( दीधि० २ पृ० ४१ ) ।

तथा अवच्छेदकत्वमिह पारिभाषिकमेव प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वरूपं ग्राह्यम् । तच्च तदवच्छिन्नप्रतियोगिताकाभाववदसंबद्धस्वविशिष्टसामान्यकत्वम् । अथ वा स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वम् । यद्वा स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वम् ( दीधि० २ अवच्छेदकनिरु० पृ० ४२ ) । अत्र यन्न भवति इत्येतत्पर्यन्तेन ग्रन्थेन यत्पदार्थस्य व्यापकत्वं बोध्यते । तेन व्यापकसामानाधिकरण्यं व्याप्तिः इति फलितम् । एवम् उत्तरत्रापि ज्ञेयम् । इयमेव सर्वोपसंहारप्रवृत्तव्याप्तिः इत्युच्यते । तदर्थस्तु सकलहेत्वधिकरणान्तर्भावेन साध्यसत्त्वनिर्वाह्यव्याप्तिः इति ( ग० बाध० ) । ( ५ ) प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्मः तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिः । स्वावच्छिन्नत्व साध्यतावच्छेदकसंबन्धावच्छिन्नत्व एतदुभयाभाववत्तादृशप्रतियोगितासामान्यको यो धर्मः तदवच्छिन्नसामानाधिकरण्यम् इति फलितोर्थः ( ग० सिद्धा० ) । दण्ड्यादौ साध्ये परंपरासंबद्धं दण्डत्वादिकमेव साध्यतावच्छेदकम् । अतः तत्तद्दण्ड्यभावमादाय नाव्याप्तिः ( दीधि० २ पृ० ३२ ) । ( ६ ) विशेषणताविशेषावच्छिन्नयद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं तत्संबन्धावच्छिन्नसाधनसमानाधिकरणात्यन्ताभावप्रतियोगितासामान्ये नास्ति साधने तद्धर्मविशिष्टसामानाधिकरण्यं व्याप्तिः ( दीधि० २ पृ० ३२—४३ ) । (७)यादृशप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्ननिरूपकताकाधिकरणतावदन्यत्वं हेतुतावच्छेदकसंबन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतावतः तन्निरूपितसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताशून्यं यत् साध्यतावच्छेदकम् तदवच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तिवृत्ति यत् हेतुतावच्छेदकं तद्वत्त्वम् ( वै० वि० ३।१।१४ पृ० १५२ ) ( मु० २ ) । (८) यद्धर्मविशिष्टानधिकरणत्वं हेत्वधिकरणस्य तद्धर्मभिन्नसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यम्

( दि० २ व्याप्तिनि० ) । ( ९ ) प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना सामानाधिकरण्यम् । ( १० ) यत्समानाधिकरणान्योन्याभावप्रतियोगि यद्वन्न भवति तेन समं तस्य सामानाधिकरण्यं वा । अन्यवृत्तिवह्नितद्वतोरन्यवृत्तिधूमवन्निष्ठात्यन्ताभावान्योन्याभावप्रतियोगित्वाद्यधिकरणवह्निधूमयोर्न व्याप्तिः । किं तु तत्तद्धूमस्य समानाधिकरणतत्तद्वह्निना ( चि० २ पृ० ६—७ ) । ( ११ ) स्वसमानाधिकरणान्योन्याभावाप्रतियोगि यद्वत् तत्कत्वं वा । ( १२ ) यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यत् तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणं यत् तेन समं सामानाधिकरण्यम् । समुदायार्थस्तु साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदका यावन्तो धर्मा यद्धर्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकाः तद्धर्मावलीढसामानाधिकरण्यम् इति । एतदेव यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यम् अनौपाधिकत्वम् गीयते ( चि० २ पृ० ८ ) । (१३) यद्वा यावद्यत्समानाधिकरणात्यन्ताभावाप्रतियोगिप्रतियोगिकात्यन्ताभावासामानाधिकरण्यं यस्य तस्य तदेवानौपाधिकत्वरूपा व्याप्तिः (चि० २ पृ० ६—८) । समुदितार्थश्च साध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वव्यापकस्वसामानाधिकरण्यसामान्याभावकत्वम् इति ( दीधि० २ पृ० ५७ ) । ( १४ ) यद्वा यत्संबन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिः ( चि० २ पृ० ८ ) । यथा वह्निसाध्यकधूमहेतुकस्थले वह्निमान् धूमादित्यादौ यत्र धूमस्तत्राग्निः इति साहचर्यनियमो व्याप्तिः ( त० भा० ) ( मू० म० १ ) ( भा० प० ) ( मु० २ ) ( त० सं० ) । तथा हि धूमस्य वह्निसंबन्धित्वे धूमत्वमवच्छेदकम् । धूममात्रस्य वह्निसंबन्धित्वात् लक्षणसमन्वयः । वह्नेस्तु धूमसंबन्धे न वह्नित्वमवच्छेदकम् । वह्नेर्धूमासंबन्धिनि तप्तायःपिण्डे गतत्वात् । अतस्तत्र नातिव्याप्तिः (चि २ पृ० ८) । अत्र यदन्यूनवृत्तिसाध्यम् तत्त्वम् स्वव्यापकसाध्यसंबन्धित्वपर्यवसन्नम् इति लघुभूतः परिष्कारो विज्ञेयः ( दीधि० २ पृ० ६१ ) । अत्र नियमः व्याप्यस्य

ग्रहणं पूर्वं व्यापकस्य ततः परम् । एवं परीक्षिता व्याप्तिः स्फुटीभवति तत्त्वतः ॥ इति । यत्र धूमस्तत्राग्निः इति साहचर्यनियमो व्याप्तिः । एतद्वाक्ययोजना त्वित्थम् । यत्र धूमस्तत्राग्निः इतीत्यत्र इतिपदं तादृशवाक्यपरम् । तत्तात्पर्यग्राहकं यत्रेत्यादि वाक्यम् । इतिपदार्थस्य च बोध्यतासंबन्धेन साहचर्यनियमेन्वयः ( वाक्य० २ पृ० १३ ) इति । साहचर्यनियम इत्यस्यार्थश्च साहचर्यं सामानाधिकरण्यम् । तस्य नियमः । हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम् इत्यर्थः ( त० दी० २ पृ० २० ) । तथा च हेतौ नियतसामानाधिकरण्यम् । तच्च साधनव्यापकसामानाधिकरण्यम् ( दीधि० २ ) ( प्र० प्र० ) । एवं च हेतोर्व्यापकं यत्साध्यं तत्सामानाधिकरण्यं हेतौ व्याप्तिः इति सुगमः पर्यवसितोर्थः । यथा पर्वतो वह्निमान् धूमादित्यादौ सद्धेतौ धूमस्य व्यापको वह्निः तत्सामानाधिकरण्यं धूमे वर्तते इति लक्षणसमन्वयो बोध्यः । अत्र धूमसमानाधिकरणो योत्यन्ताभावः घटात्यन्ताभावः न तु वह्न्यत्यन्ताभावः । तथा च तदप्रतियोगी वह्निः तत्सामानाधिकरण्यं धूमे वर्तते । धूमवान्वह्नेरित्यादौ असद्धेतौ तु धूमसामान्याभावस्यापि हेतुसमानाधिकरणतया तत्प्रतियोग्येव धूमः इति नातिव्याप्तिः ( नील० २ पृ० २० ) । अथ वा नियतसाहचर्यं व्याप्तिः । नियतत्वं व्यापकत्वम् । साहचर्यं सामानाधिकरण्यम् । तथा च धूमनियतवह्निसामानाधिकरण्यम् ( न्या० बो० २ पृ० १४ ) इति । यद्वा साहचर्यं साध्यनिष्ठहेतुसामानाधिकरण्यम् । तन्नियमस्तन्मात्रसत्त्वम् । तद्विरोध्यसत्त्वम् इति यावत् । तथा च साध्यनिष्ठहेतुव्यापकत्वं स्वाश्रयसामानाधिकरण्यसंबन्धेन हेतुसंबद्धम् । व्यापकताश्रयसामानाधिकरण्यम् इति पर्यवसितोर्थः (वाक्य० २ पृ० १३)। वेदान्तिनस्तु साहचर्यं हेतोः साध्येन संबन्धमात्रम् । तस्य नियमो नियतत्वम् । अव्यभिचरितसंबन्ध इत्यर्थः इत्याहुः ( प्र० च० पृ० २९ ) । टीकाकृतो वेदेशतीर्थचरणास्तु साहचर्यं स्वदेशकालविशेषगतस्य हेतोः स्वदेशकालविशेषगतेन साध्येन संबन्धमात्रम् । न तु सामानाधिकरण्यम् । अधोदेशनदीपूरादाव-

व्याप्तेः । नियमः अव्यभिचारः । तथा च अव्यभिचरितसाध्यसंबन्धो व्याप्तिः इत्युक्तं भवति इत्याहुः ( प्र० प० टी० वेदेश० पृ० ३० ) । व्याप्यव्यापकयोर्वैयधिकरण्येपि कचिद्व्याप्तिः । सा च उपरि सविता भूमेरालोकवत्त्वादित्यादावनुपपत्त्या स्वीक्रियते ( म० प्र० ४ पृ० ६९ ) । अत्रेदं बोध्यम् । ( १ ) कयोश्चित् हेतुसाध्ययोः समानदेशकालयोर्व्याप्तिः । यथा रसस्य रूपेण । ( २ ) कयोश्चित्समानदेशत्वेपि भिन्नकालयोः । यथा धूमस्याग्निना । ( ३ ) कयोश्चित्समानकालत्वेपि भिन्नदेशयोः । यथा कृत्तिकोदयस्य रोहिण्युदय आसत्त्या । ( ४ ) कयोश्चिद्भिन्नदेशकालयोः । यथा अधोदेशे नदीपूरस्य ऊर्ध्वदेशे वृष्ट्या । ( ५ ) कस्यचित्कादाचित्कस्य समानदेशत्वेपि सार्वकालीनेन । यथा पतनस्य गुरुत्वेन । ( ६ ) कस्यचित्समानदेशत्वेपि सार्वकालिकस्य कादाचित्केन । यथा शरीरत्वस्य विनाशित्वेन । ( ७ ) कस्यचित्प्रदेशवर्तिनो व्याप्यवर्तिना । यथा संयोगस्य द्रव्यत्वेन । ( ८ ) कस्यचिद्व्याप्यवर्तिनः प्रदेशवर्तिना । यथा रूपस्य संयोगेन । ( ९ ) कयोश्चिदेकावर्तिनोर्व्याप्यवर्तिनोरप्यवयवभेदेन । यथा तुलोन्नमनावनमनयोः इत्यादि ( प्र० प० पृ० १३—१४ ) । तथा च व्याप्तिस्मरणसहकृतलिङ्गस्य सम्यग्ज्ञानम् सम्यग्ज्ञातं वा लिङ्गम् व्याप्तिप्रकारानुसारेण समुचितदेशादौ लिङ्गप्रमां जनयत् अनुमानम् इत्युक्तं भवति । अनुमानस्य द्विविधं सामर्थ्यम् व्याप्तिः समुचितदेशादौ सिद्धिश्च । न तु पक्षधर्मतानियमः ( प्र० प० पृ० १४ ) । व्याप्यस्य पक्षधर्मत्वं नाम समुचितदेशादिवृत्तित्वम् ( प्र० च० पृ० १९ ) ।

**व्याप्यत्वम्**—१ [ क ] व्याप्त्याश्रयत्वम् ( मु० २ ) । अत्रार्थे विग्रहः । व्याप्यते इति व्याप्यम् (वि आप् ण्यत् ) । तस्य भावो व्याप्यत्वम् व्याप्तिकर्मत्वम् इति । यथा वह्निव्याप्यो धूमः इत्यादौ धूमस्य व्याप्यत्वम् । [ ख ] यत्सामानाधिकरण्यावच्छेदकावच्छिन्नं यस्य स्वरूपं तत्तस्य व्याप्यम् । यथा वह्निसामानाधिकरण्यं धूमे धूमत्वेनावच्छिद्यते । सोपाधौ तूपाधिना । अत एव साधनतावच्छेदकभिन्नेन येन साधनताभिमते

साध्यसंबन्धोवच्छिद्यते स एव तत्र साधने विशेषणमुपाधिः इति वदन्ति । अत एव च साधनाव्यापकत्वे सति साधनावच्छिन्नसाध्यव्यापकत्वं लक्षणं ध्रुवम् ( चि० २ पृ० ८ ) । अत्रेदं बोध्यम् । उपपत्तिः युक्तिः । लिङ्गम् व्याप्यम् व्याप्तम् इति पर्यायः ( प्र० प० पृ० ११ टी० पृ० २९ ) ( प्र० च० पृ० १९ ) इति । [ ग ] यत्समानाधिकरणान्योन्याभावप्रतियोगिता येनावच्छिद्यते तत् तस्य व्याप्यम् ( न्या० सि० दी० पृ० ५६ ) । यथा अयोगोलकाद्यन्तर्भावेन वह्निसमानाधिकरणान्योन्याभावप्रतियोगिता धूमेनावच्छिद्यत इति धूमो वह्नेर्व्याप्यः । [ घ ] व्यभिचारित्वाभावः । यथा सोपाधिको व्याप्यत्वासिद्धः इत्यादौ व्याप्यत्वशब्दस्यार्थः ( न्या० बो० ) । २ [ क ] न्यूनवृत्तित्वम् । यथा द्रव्यत्वव्याप्या जातिः इत्यादौ व्याप्यत्वशब्दस्यार्थः । [ ख ] अल्पदेशवृत्तित्वम् । यथा द्रव्यत्वस्य सत्तापेक्षया व्याप्यत्वम् ( अपरत्वम् ) ( मु० १ पृ० ३७ ) ।

**व्याप्यत्वासिद्धः**—( हेत्वाभासः ) [ क ] यत्र व्याप्तिर्नावगम्यते सः ( त० भा० पृ० ४७ ) । स चासिद्धप्रभेदः इति बोध्यम् । लक्षणं तु वक्ष्यमाणा व्याप्यत्वासिद्धिरेव । व्याप्तेरग्रहो द्विधा संभवति । तदुच्यते । सत्या एव क्वचिद्व्याप्तेरग्रहात्कुत्रचित्पुनः । व्याप्तेरभावादित्यस्य द्वैविध्यं तद्विदो विदुः ॥ ( त० व० २।३।४४ ) इति । [ ख ] साध्यव्याप्यतावच्छेदकरहितो हेतुः । यथा पर्वतो वह्निमान् काञ्चनमयधूमादित्यादौ हेतुर्व्याप्यत्वासिद्धः ( प्र० प्र० ) ( त० कौ० २ पृ० १५ ) । अत्र च व्याप्यतावच्छेदकत्वेनाभिमतं काञ्चनमयत्वम् तद्धूमे नास्ति इति धूमो हेतुर्व्याप्यत्वासिद्धः । एतज्ज्ञानं च परामर्शप्रतिबन्धकम् । धूमे काञ्चनमयत्वं नास्ति इति ज्ञाने सति वह्निव्याप्यकाञ्चनमयधूमवान् पर्वतः इति परामर्शासंभवात् । एतस्य परामर्शस्य धूमे काञ्चनमयत्वसंबन्धावगाहित्वात् ( त० कौ० २ पृ० १५ ) इति । तथा च अनुमितिप्रतिबन्धकताघटितं हेत्वाभाससामान्यलक्षणमसिद्धहेतौ संपद्यते इति भावः । अत्र प्रसङ्गत इदं विज्ञेयम् । स्वसमानाधिकरणव्याप्यता-

वच्छेदकधर्मान्तराघटितधर्मस्यैव व्याप्यतावच्छेदकत्वम् इति नियमः । अत एव केषांचिन्मते वह्निमान्नीलधूमादित्यादौ धूमत्वस्य व्याप्यतावच्छेदकत्वसंभवेन तद्घटितनीलधूमत्वं गुरुतया न व्याप्यतावच्छेदकम् (मु० २ पृ० १६२) । अत्र नियमे धर्मे तदघटितत्वं च तदविषयकप्रतीतिविषयत्वम् (दीधि० २ पृ० ५९) । व्याप्यत्वासिद्धो द्विविधः एको व्याप्तिग्राहकप्रमाणाभावमात्रात् अपरस्तूपाधिसद्भावात् । तत्र प्रथमो यथा यत्सत्तत्क्षणिकं यथा प्रदीपादि । द्वितीयो यथा क्रत्वन्तर्वर्तिनी हिंसा अधर्मः हिंसात्वात्क्रतुबाह्यहिंसावत् इति (त० भा०) (प्र० प०) (प्र० च० पृ० १९) । अत्र निषिद्धत्वमुपाधिः । अन्यत्र चोक्तम् । व्याप्यत्वासिद्धो द्विविधः साध्येनासहचरितः सोपाधिकसाध्यसंबद्धश्च । सोपाधिके व्याप्यत्वासिद्धशब्दस्य समन्वयः क्रियते । व्याप्यत्वस्यासिद्धिर्यस्मात् इति व्युत्पत्त्योपाधिरेव व्याप्यत्वासिद्धिस्तद्वान् इति । सोपाधिकसाध्यसंबद्धो हेतुश्च अनैकान्तिकोपि इति मतान्तरम् (प्र० प्र०) । प्रथमो यथा यत्सत्तत्क्षणिकं यथा घनः संश्च विवादास्पदीभूतः शब्दादिः इति । अत्र हि शब्दादिः पक्षः । तत्र क्षणिकत्वं साध्यम् । सत्त्वं हेतुः । न च अस्य हेतोः क्षणिकत्वेन सह व्याप्तौ प्रमाणमस्ति इति विज्ञेयम् (त० भा० हेत्वा० पृ० ४७) । द्वितीयो यथा स श्यामो मैत्रीतनयत्वात् परिदृश्यमानमैत्रीतनयस्तोमवत् इत्यत्र मैत्रीतनयत्वात् इति हेतुर्व्याप्यत्वासिद्धः । अत्र मैत्रीतनयत्वेन श्यामत्वं साध्यम् । तेन मैत्रीतनयत्वं श्यामत्वे न प्रयोजकम् । किंतु शाकाद्याहारपरिणाम एव । प्रयोजकश्च उपाधिः इत्युच्यते । अतः मैत्रीतनयत्वस्य श्यामत्वेन संबन्धे शाकाद्याहारपरिणाम उपाधिः । यथा अग्नेर्धूमसंबन्ध आर्द्रेन्धनसंयोगः । अत्रोपाधिसंबन्धाद्व्याप्तिर्नास्ति (त० भा० हेत्वा० पृ० ४७) । यथा वा पर्वतो धूमवान् वह्निमत्त्वादित्यत्र वह्निमत्त्वं व्याप्यत्वासिद्धम् (त० सं०) (त० भा० २ पृ० ४७) । अत्रार्द्रेन्धनसंयोग उपाधिः । भवति चार्द्रेन्धनं साध्यस्य धूमस्य व्यापकम् साधनस्य वह्नेः अव्यापकं च इति (प्र० प्र०) (त० सं०) ।

व्यभिचारितासंबन्धेन तादृशोपाधिविशिष्टं वह्निमत्त्वं व्याप्यत्वासिद्धम् इति भावः। उपाधित्वज्ञानेन व्यभिचारानुमित्या व्याप्तिग्रहप्रतिबन्धः फलम् ( वाक्य० २ पृ० १८ )। अत्रानुमानप्रकारश्च वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वाद्घटत्वादिवत्। यो यद्व्यापकव्यभिचारी सोपि तद्व्यभिचारी भवतीति ( न्या० बो० २-१८ )। अत्र च पक्षस्यैव विपक्षत्वप्राप्त्या तत्र विद्यमानो हेतुरनैकान्तिकोपि भवति इति मतान्तरम् ( प्र० च० पृ० ३२ ) ( प्र० प्र० )। अत्रायमर्थः। धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेत् धूम आर्द्रेन्धनसंयोगव्याप्यत्वं तुल्यवित्तिवेद्यतया गृह्यते। एवम् वह्नेरव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेत् वह्नौ तदव्याप्यत्वं गृह्यते। तदेव व्यभिचरितत्वम्। अर्थात् उपाधिव्यभिचरितत्वं साधने गृहीतं चेत् उपाधिभूतार्द्रेन्धनसंयोगव्याप्यधूमव्यभिचरितत्वं गृह्यत एव इति। एवं च प्रकृतानुमानहेतुभूतपक्षे वह्नौ साध्यव्यभिचारोत्थापकतया दूषकत्वमुपाधेः फलम्। तथा च धूमाभाववदवृत्तित्वाभावरूपे धूमव्यभिचारे गृहीते वह्नौ धूमाभाववदवृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम्। न च व्याप्यत्वासिद्धेर्व्यभिचाराभेद इति वाच्यम्। धूमाभाववद्वृत्तित्वाभावाभावत्वेन व्याप्यत्वासिद्धित्वम् धूमाभाववद्वृत्तित्वत्वेन व्यभिचारत्वम् इति भेदात् (न्या० बो० २ पृ० १८—१९)। शिष्टं तु उपाधिशब्दव्याख्याने दृश्यम्। वेदान्तिनस्तूदाजह्रुः। व्याप्यत्वासिद्धो द्विविधः साध्यसंबन्धरहितः सोपाधिकसंबन्धश्च। तत्राद्यो यथा सर्वं क्षणिकं सत्त्वात् इति। अत्र सर्वस्य पक्षत्वेन पक्षातिरिक्तसपक्षाभावात् साध्यसंबन्धाभावो ज्ञेयः। द्वितीयो यथा वैधी हिंसा पापसाधनं हिंसात्वाद्ब्राह्मणहिंसावत् इति। अत्र हिंसात्वपापसाधनत्वयोः संबन्धे निषिद्धत्वमुपाधिः ( प्र० च० पृ० ३१ )।

**व्याप्यत्वासिद्धिः**—( हेत्वाभासः हेतुदोषः ) [ क ] आश्रयासिद्धि स्वरूपासिद्धि एतदुभयभेदद्वयविशिष्टासिद्धिः ( म० प्र० २ पृ० २७ )। यथा वह्निसाध्यकधूलिपटले धूमनिष्ठव्याप्त्यभावो व्याप्यत्वासिद्धिः ( न्या० म० २ पृ० २१ )। [ ख ] सविपयवृत्तिप्रकृतसाध्यसाधन-

ग्रहविरोधितानवच्छेदकप्रकृतपक्षप्रकृतसाधनवैशिष्ट्यग्रहविरोधितावच्छेदकरूपशून्यस्य ज्ञानस्य विषयः असिद्धिः ( दीधि० २ पृ० २१७ ) । यथा पर्वतो वह्निमान् काञ्चनमयधूमात् इत्यादौ धूमनिष्ठः काञ्चनमयत्वाभावो व्याप्यत्वासिद्धिः । प्राचीनास्तु [ ग ] व्यर्थविशेषणघटितं हेतुतावच्छेदकम् ( वै० वि० ३।१।१५ पृ० १५७ ) । स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितमित्यर्थः ( दीधि० २ पृ० ५९ ) । इदं च हेत्वसिद्धिः इत्युच्यते । हेत्वसिद्धिस्तु साधनाप्रसिद्धिरेव इति विज्ञेयम् । यथा पर्वतो वह्निमान् प्रमेयधूमादित्यादौ प्रमेयधूमत्वादिकं प्रमेयत्वरूपव्यर्थविशेषणघटिततया व्याप्यत्वासिद्धम् । [ घ ] हेतुतावच्छेदके व्याप्यतानवच्छेदकत्वमपि भवति व्याप्यत्वासिद्धिः । तल्लक्षणं तु साध्यसंबन्धितावच्छेदकत्वप्रकारकहेतुतावच्छेदकविशेष्यकग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वम् ( ल० व० ) । यथा पर्वतो वह्निमान्नीलधूमात् इत्यादौ नीलधूमत्वस्य गुरुतया व्याप्यतानवच्छेदकत्वं व्याप्यत्वासिद्धिः इति वदन्ति । अयमत्र प्राचामभिप्रायः । नीलधूमत्वं हि समानाधिकरणलघुधूमत्वघटितम् इति धूमत्वमेव व्याप्यतावच्छेदकम् न तु नीलधूमत्वम् । अतस्तदवच्छिन्नव्याप्तेरसिद्धिः ( म० प्र० २ पृ० २७–२८ ) इति । अथ वा नीलधूमत्वादेर्न व्याप्यतावच्छेदकत्वम् समानाधिकरणसंभवदवच्छेदकान्तरमपेक्ष्य गुरुत्वात् ( दीधि० २ पृ० २१८ ) इति । यद्वा व्याप्तिर्हि साध्यसंबन्धितावच्छेदकरूपा । गुरुधर्मश्च साध्यसंबन्धितानवच्छेदकः । अतो नीलधूमत्वादेः साध्यसंबन्धितानवच्छेदकत्वान्न व्याप्तिस्वरूपत्वम् ( गौ० वृ० १।२।८ ) इति । अत्रायमभिप्रायः । गुरुधर्मस्य हेतुतावच्छेदकत्वस्थले सर्वत्र पशुमान् सास्नादिमतः इत्यादावपि प्राचीनैर्व्याप्यत्वासिद्धिर्नाङ्गीक्रियते । अपि तु स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितस्थल एव ( राम० २ पृ० १६२ ) इति । अत्र नव्यास्त्वेतन्नाङ्गीकुर्वन्ति । तथा हि व्यर्थविशेषणस्थले न व्याप्यत्वासिद्धिर्हेत्वाभासः । पुरुषस्त्वधिकेन निगृह्यते इति ( दीधि० ) ( दि० २

पृ० १६२ )। व्याप्यत्वासिद्धिश्च साध्याप्रसिद्धि साधनाप्रसिद्धि अव्यभिचरितसामानाधिकरण्याभाव इत्यादिभेदेनानेकविधा ( दीधि० २ पृ० २१८) (गौ० वृ० १।२।८) (मु०) (दि० २ पृ० १६२) (वै० वि० ३।१।१५)। तथा च साध्याप्रसिद्धिहेत्वप्रसिद्धिसाधनाप्रसिद्धिव्याप्तिविशिष्टपक्षधर्मतादिविरहादयश्च व्याप्यत्वासिद्धिप्रभेदा एव नातिरिक्ताः (दीधि० २ पृ० २१७–२१८) (न्या० म० २ पृ० २१)। व्याप्यत्वासिद्धिव्याप्योपि व्याप्यत्वासिद्धिरेव न पृथग्भूतः इति। शिष्टं तु हेत्वाभासशब्दव्याख्याने दृश्यम्।

**व्याप्यवृत्तित्वम्**—[ क ] प्राचीनमते स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् (दीधि०)। यथा घटत्वद्रव्यत्वादीनां व्याप्यवृत्तित्वम्। [ ख ] नवीनमते तु अनवच्छिन्नाधारतावत्त्वम् (ग० पक्ष०) [ ग ] निरवच्छिन्नवृत्तिकत्वम् (ग० २ चक्र०)। यथा रूपस्य व्याप्यवृत्तित्वम्।

**व्यावर्तकम्**—१ आश्रयाणां परस्परभेदानुमितिजनकम्। यथा विशेषस्तत्तत्परमाणूनां व्यावर्तकः। तथा हि। अयं पृथिवीपरमाणुरितरपरमाणुभ्यो भिद्यते एतद्विशेषात् इत्यनुमाने विशेषस्य हेतुत्वं बोध्यम् (वाक्य० पृ० २२)। यथा वा सास्नादिमत्त्वं महिष्यादेर्व्यावर्तकम्। इतरभेदविधेयकानुमितिजनकतावच्छेदकविषयताविशेषाश्रयः इति तदर्थः (नील० १ पृ० ४)। २ क्वचित् विशेष्यतावच्छेदकसमानाधिकरणाभावप्रतियोगि। एतच्च व्यावर्तकं द्विविधम् विशेषणम् उपलक्षणं चेति। तत्राद्यं यथा पुरुषादौ वर्तमानकालावच्छेदेन विद्यमानो दण्डादिः। द्वितीयं यथा जटाभिस्तापस इत्यादौ तापसादेः कालान्तरीणजटादिकं व्यावर्तकम् (ग० व्यु० का० ३ पृ० ९१)। शिष्टं तु तृतीया विशेषण उपलक्षण एतच्छब्दव्याख्यानेषु दृश्यम्।

**व्यावहारिकम्**—(सत्त्वम्) व्योमादेर्व्यावहारिकम् (सर्व० सं० पृ० ४४६ शां०)।

**व्यावृत्तत्वम्**—१ अवृत्तित्वम् । यथा यस्तूभयस्माद्व्यावृत्तः स त्वसाधारणो मतः ( भा० प० श्लो० ७४ ) इत्यादौ सपक्षविपक्षव्यावृत्तो हेतुरसाधारणः इत्यादौ च व्यावृत्तत्वमवृत्तित्वम् । २ विरोधः । यथा अनुवृत्तत्वव्यावृत्तत्वाभ्यां वह्नितदभावोपस्थापकस्य धूमस्य ( दीधि० ) इत्यादौ व्यावृत्तत्वशब्दस्यार्थो विरोधः ( ग० सव्य० पृ० ९ ) । ३ क्वचित् अन्योन्याभावप्रतियोगित्वम् । यथा नराणां क्षत्रियः शूरः नरेषु वा इत्यत्र निर्धारणविभक्त्यर्थो व्यावृत्तत्वम् । इदं च अभेदान्वयिविधेयसमभिव्याहारस्थले विज्ञेयम् ( ग० व्यु० का० ६ पृ० ११४ ) । अत्र विशेषस्तु निर्धारणशब्दव्याख्याने दृश्यः । ४ अत्यन्ताभावप्रतियोगित्वम् । यथा नराणां क्षत्रिये शौर्यम् नरेषु वा इत्यत्र निर्धारणविभक्त्यर्थो व्यावृत्तत्वम् । इदं तु भेदान्वयिविधेयसमभिव्याहारस्थले विज्ञेयम् (ग० व्यु० का० ६ पृ० ११४) । ५ इतरभेदानुमितिविशेष्यत्वम् । यथा गौरितरेभ्यो व्यावृत्ता इत्यादौ गोर्व्यावृत्तत्वम् । यथा वा स तु विशेषः स्वत एव व्यावृत्तः ( मु० १ पृ० ३६—३७ ) इत्यादौ विशेषपदार्थस्य व्यावृत्तत्वम् । ६ काव्यज्ञास्तु निवृत्तत्वम् ( कुमा० टी० ) । यथा व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ( कुमार० स० २ श्लो० ३५ ) इत्यादौ इत्याहुः । ७ कृतवरणत्वम् इति याज्ञिका आहुः ( अमरः ३।१।९२ ) ।

**व्यावृत्तिः**—१ [ क ] तत्तद्धर्मावच्छिन्नेतरभेदः ( नील० पृ० ५ ) । यथा व्यावर्तकस्यैव लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चातिव्याप्तिः ( त० दी० ) इत्यादौ व्यावृत्तिशब्दस्यार्थः । [ ख ] इतरभेदानुमितिः । यथा व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम् इत्यत्र व्यावृत्तिशब्दस्यार्थः पृथिवीतरेभ्यो भिद्यते इत्यनुमितिः । तथा हि गन्धाभाव इतरत्वव्यापकत्वग्रहे सति गन्धवती पृथिवी इति पक्षधर्मताग्रहे पृथिवीतरेभ्यो भिद्यते इत्यनुमितिरुत्पद्यते सैव व्यावृत्तिः (वाक्य० पृ० २) । २ अत्यन्ताभावः । यथा यद्व्यावृत्त्या यस्य साधनस्य साध्यं निवर्तते स धर्मस्तत्र हेतावुपाधिः ( चि० २ पृ० २८ ) इत्यादौ व्यावृत्तिशब्दस्यार्थोऽत्यन्ताभावः ।

२ प्रयोजनम् । यथा एतद्विशेषणदानस्य व्यावृत्तिः कथ्यते इत्यादौ व्यावृत्तिशब्दस्यार्थः प्रयोजनम् ।

**व्यासः**—१ विस्तारः ( अमरः ३।२।२२ ) । यथा समासव्यासयोगतः इत्यादौ ( प्र० च० परि० २ पृ० ५४ ) । २ वैयाकरणास्तु [ क ] समासादिसमानार्थकं विग्रहवाक्यम् । यथा राजपुरुष इत्यत्र राज्ञः पुरुषः इति व्यासवाक्यम् इत्यादौ व्यासशब्दस्यार्थः । [ ख ] पदानां समासाभावः इत्यप्याहुः । ३ सत्यवत्यां पराशराज्जातः श्रीनारायणस्य सप्तदशोवतारविशेषः ( ब्रह्मवै० पु० अ० ४ ) । यथा व्यासो नारायणः साक्षात् इत्यादौ व्यासशब्दस्यार्थः । स च उत्सन्नशाखं प्रनष्टं च वेदं संकलितवान् अष्टादशपुराणानां ब्रह्मसूत्राणां च कर्ता इति विज्ञेयम् । तदुक्तम् अष्टादशपुराणानां कर्ता सत्यव्रतीसुतः इति । भागवते चोक्तम् ततः सप्तदशे जातः सत्यवत्यां पराशरात् । चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोल्पमेधसः ॥ (भाग० १।३।२१) इति । ४ ततोन्यो मुनिविशेषः । तत्रोक्तम् प्रह्लादनारदपराशरपुण्डरीकव्यासाम्बरीषशुकशौनकभीष्मदाल्भ्यान् । रुक्माङ्गदार्जुनवशिष्ठविभीषणादीन् पुण्यानिमान्परमभागवतान् स्मरामि ॥ इति । ५ मानविशेषः ( परिमाणम् ) ( शब्द० र० ) । ६ लीलावतीकारस्तु वृत्तक्षेत्रस्य मध्यस्थरेखा । यथा व्यासे भनन्दाग्निहते इत्यादौ इत्याह । ७ पौराणिकास्तु पुराणपाठको विप्र इत्याहुः । तदुक्तम् य एवं वाचयेद्विप्रः स ब्रह्मन् व्यास उच्यते इति ।

**व्यासङ्गः**—[ क ] कार्यान्तरत्यागेनैकपरत्वम् । [ ख ] मनसो विषयान्तरानासक्तिः । [ ग ] इन्द्रियाणां स्वस्वविषयसंबन्धे सति यत्किंचिदिन्द्रियजन्यज्ञाने सत्यपीन्द्रियान्तरजन्यज्ञानाभाव इति केचिद्वदन्ति ।

**व्यासज्यवृत्तित्वम्**—१ स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम् ( ग० २ चतु० मिश्र० ) । समानाधिकरणभेदप्रतियोगितावच्छेदकत्व तादात्म्य एतदुभयसंबन्धेन यत्किंचित्पदार्थविशिष्टत्वम् इत्यर्थः । यथा उभयत्वस्य व्यासज्यवृत्तित्वम् । २ अपेक्षाबुद्धिविशेषविषयत्वम्

अपेक्षाबुद्धिजन्यत्वं वा । यथा द्वित्वत्रित्वादीनां व्यासज्यवृत्तित्वम् ( ग० व्यु० का० १ ) ।

**व्युत्पत्तिः**—१ विशेषेणोत्पत्तिः । २ शास्त्रजन्यः शब्दार्थज्ञानादिसंपाद्यः संस्कारविशेषः । ३ शब्दानामर्थबोधकशक्तिः । ४ यां बुद्धिमासाद्य पदार्थविशेषबोधः सा ( चि० २ पृ० १६ ) । ५ शब्दशक्तिग्रहः ( नील० ४ पृ० २९ ) । यथा व्युत्पित्सुर्बालो गोपदस्य गोत्वविशिष्टे शक्तिः अश्वपदस्याश्वत्वविशिष्टे शक्तिः इति व्युत्पद्यते ( त० दी० ४ ) इत्यादौ व्युत्पत्तिः । ६ विग्रहवाक्यम् । यथा पदस्यार्थः पदार्थः इति व्युत्पत्तिः ( त० दी० १ ) इत्यादौ व्युत्पत्तिशब्दस्यार्थः । ७ व्यवहारः । यथा लोकव्युत्पत्तिरित्यत्र व्युत्पत्तिशब्दस्यार्थः ( नील० ) । ८ नियमः । यथा पदार्थः पदार्थेनैवान्वेति न तु पदार्थतावच्छेदकेन इति व्युत्पत्तिः इत्यादौ व्युत्पत्तिशब्दस्यार्थः । यथा वा नव्यमते यत्र समभिव्याहृतपदार्थतावच्छेदकफलाश्रयत्वबोधः तत्र द्वितीया इति व्युत्पत्तिः इत्यादौ व्युत्पत्तिशब्दस्यार्थः ( त० प्र० ४ पृ० ८४ ) ।

**व्युद्धृत्यसादनम्**—कपालेभ्यः पुरोडाशं पृथक्कृत्यान्तर्वेद्यवस्थापनम् ( जै० न्या० अ० १० पा० १ अधि० ११ ) ।

**व्यूहः**—१ निःश्वासादिः ( गौ० वृ० ३।१।३१) । यथा मतान्तरे मानुषादिशरीरपरीक्षणे गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ( गौ० ३।१।३१ ) इत्यत्र व्यूहशब्दस्यार्थः । २ प्रतिहतस्य परावर्तनम् ( गौ० वृ० ४।२।२० ) । यथा अव्यूहाविष्टम्भविभुत्वान्याकाशधर्माः ( गौ० ४।२।२०) इत्यत्र व्यूहशब्दस्यार्थः । ३ वासुदेवसंकर्षणप्रद्युम्नानिरुद्धसंज्ञकश्चतुर्विधो व्यूहः इति रामानुजीया वदन्ति ( सर्व० पृ० ११७ रामा० ) । ४ समूहः इति काव्यज्ञा आहुः । ५ निर्माणम् । ६ सम्यक् तर्कः । ७ देहः । ८ सैन्यम् । ९ नीतिशास्त्रज्ञास्तु युद्धार्थं सैन्यनिवेशविशेष इत्याहुः । अत्रोक्तम् । व्यूहभेदाश्च चत्वारो दण्डो भोगस्तु मण्डलम् । असंहतश्च निर्णीता नीतिसारादिसंमताः ॥ अन्येपि प्रकृतिव्यूहाः

कौञ्चचक्रादयः क्वचित् । तिर्यग्वृत्तिश्च दण्डः स्यात् भोगोन्यावृत्तिरेव च ॥ मण्डलं सर्वतो वृत्तिः पृथग्वृत्तिरसंहतः ( शब्दर० ) इति । तद्भेदादिकं तु शुक्रनीतिसारादौ ज्ञेयम् ।

**व्रतम्**—१ भक्षणविशेषनियमः । पुण्यसाधनीभूत उपवासादिनियमविशेषः । तथा हि । व्रतं च सम्यक्संकल्पजनितानुष्ठेयक्रियाविशेषरूपम् । तच्च प्रवृत्तिनिवृत्त्युभयरूपम् । तत्र द्रव्यविशेषभोजनपूजादिकं प्रवृत्तिरूपम् । उपवासादिकं च निवृत्तिरूपम् । तच्च निवृत्तिरूपम् नित्यम् नैमित्तिकम् काम्यं चेति त्रिविधम् । तत्र नित्यमेकादश्यादि व्रतम् । नैमित्तिकं चान्द्रायणादि व्रतम् । काम्यं तत्तत्तिथ्युपवासादिरूपम् । अत्रोक्तं भविष्यत्पुराणे सम्यक्संसाधनं कर्म कर्तव्यमधिकारिणा । निष्कामेन महावीर काम्यं कामान्वितेन च ॥ इति । अत्र विविधपुराणोक्ता व्रतभेदास्तु हेमाद्रौ व्रतखण्डे व्रतार्कादौ च दृश्याः । २ मानसव्यापारो व्रतशब्दार्थः ( जै० सू० वृ० अ० ६ पा० २ सू० २२ ) । ३ चर्या । भस्मस्नानशय्योपहारजपप्रदक्षिणानि व्रतम् (सर्व० सं० पृ० १६९ नकु० ) ।

---

## श.

**शक्तम्**—शक्तिमत् । तच्च निरूपकतासंबन्धेन शक्तिमत् । यथा घटपटादिपदं कम्बुग्रीवादिमदर्थविशेषे शक्तम् (न्या० बो० ४ पृ० १९ ) । शक्तिश्चात्र वक्ष्यमाणा पदशक्तिर्ग्राह्या । समर्थम् इति काव्यज्ञा आहुः ।

**शक्तिः**—१ [ क ] कारणनिष्ठः कार्योत्पादनयोग्यो धर्मविशेषः । स च धर्मः प्रतिबन्धकाभावादिरूपकारणत्वात्मकः (त० दी० ४ पृ० ४६)। यथा वह्नौ दाहानुकूला शक्तिः । अयं भावः । प्रतिबन्धकाभावस्य कार्यमात्रं प्रति कारणत्वेन दाहं प्रति तदुत्तेजकाभावविशिष्टमणिः प्रतिबन्धकः तदभावः कारणम् इति कार्यकारणभावोवश्यं स्वीकार्यः । तथा च तादृशकारणस्वरूपैव शक्तिः इति ( चि० २ परिशिष्ट० पृ० ३४ ) ( नील० पृ० ४६ ) । [ ख ] कारणत्वम् । तच्च स्वस्वव्याप्येतरसकलसंपत्तौ कार्याभावव्यापकाभावप्रतियोगित्वम् ( चि० २ ) । [ ग ] मीमांसक-

विशेषाः प्राभाकरास्तु शक्तिः पदार्थान्तरमेव न तु कारणत्वरूपा इत्याहुः ( नील० पृ० ४६ ) ( दि० १ पृ० २२ ) । अत्रैवं शक्तिं साधयन्ति प्राभाकराः । ईश्वरवत्कार्येणैव शक्तिरप्यनुमीयते । तथा चानुमानम् वह्निर्दाहानुकूलादृष्टातीन्द्रियधर्मसमवायी दाहरूपकार्यजनकत्वादात्मवत् इति ( प० मा० ) । अयं भावः । यादृशादेव करानलसंयोगाद्दाहो जायते तादृशादेव सति प्रतिबन्धके न जायते । अतः यदभावात्कार्याभावः तद्वह्न्यादावभ्युपेयम् । तेन विना तदभावात् । तथा च व्यतिरेकमुखेन शक्तिसिद्धिः इति ( चि० २ परिशि० पृ० २४ ) । अत्र वदन्ति । इयं शक्तिर्न द्रव्यात्मिका । गुणादिवृत्तित्वात् । अत एव न गुणात्मिका कर्मात्मिका वा । न च सामान्याद्यन्यतमरूपा । उत्पत्तिमत्त्वे सति विनाशित्वात् इति शक्तिपक्षः ( दि० १।१ पृ० २३ ) । अत्र संग्रहश्लोकः न द्रव्यं गुणवृत्तित्वाद्गुणकर्मबहिष्कृता । सामान्यादिषु सत्त्वेन सिद्धा भावान्तरं हि सा ॥ इति । एवम् ज्ञातता वैशिष्ट्यं सादृश्यं च पदार्थान्तरमूह्यम् ( न्या० ली० पृ० २ ) । नैयायिकास्तन्न सहन्ते । तथा हि तृणारणिमणिफूत्कारादिव्यक्तीनामानन्त्येन प्रतिव्यक्ति भावहेतुजानन्तशक्तिस्वीकारे गौरवम् । तावदनन्तव्यक्तिजन्यावान्तरवह्निव्यक्तिषु विशेषजातिकल्पने लाघवम् इति तदेव कल्प्यते ( चि० २ परिशिष्ट ईश्वरवादः पृ० २३–२४ ) ( नी० ल० पृ० ४६ ) इति सहजशक्तिनिरासः । एवम् मीमांसकाभिमता व्रीह्यादिषु प्रोक्षणादिसंस्कारजन्याधेयशक्तिरपि निरस्ता वेदितव्या । पादाहतो युवतिभिर्विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः । आलिङ्गितः कुरबको विकसत्यजस्रमालोकितस्तिलक उत्कलिको विभाति ॥ इत्युक्तरीत्या कामिनीचरणाभिघातदोहदादिभिः अशोकपुष्पोत्कर्षदर्शनादपि नाधेयशक्तिः । समयविशेषावच्छिन्नचरणदोहदादिसंयोगध्वंसस्यैव कारणत्वात् । अथ वा चरणाभिघाताकृष्टभागान्तजनितवृक्षादेव तदुपपत्तिः । कालान्तरे पुष्पाद्युत्कर्षात् । दुःखावयवोपचयावश्यंभावेन वृक्षभेदावश्यकत्वात् । नापि ताम्रकांस्यादावम्लभस्मसंयोगादिजन्यशुद्धिरूपा आधेयशक्तिः । तत्संयो-

गध्वंसस्य संयोगसमानकालीनास्पृश्यस्पर्शादिप्रतियोगिकयावदनादिसंसर्गाभावसहितस्य शुद्धिपदार्थत्वात् । अभिमन्त्रितपयःपल्लवादावपि समयविशेषावच्छिन्नाभिमन्त्रणध्वंस एव व्यथाद्यपनायकः । तत्तन्मन्त्रदेवतासंनिधिरेव वा । कलमबीजादीनामापरमाण्वन्तभङ्गे तत्र चावान्तरजात्यभावे नियतकलमजातीयादिसिद्धिरपि परमाणुपाकजविशेषादेव । कार्यवृत्तिरूपादिसजातीयस्य पूर्वरूपादिविजातीयस्य परमाणौ पाकजरूपादेरुभयसिद्धत्वात् । यथा हि कलमबीजं यवादिजात्या व्यावर्त्यते तथा तत्परमाणवोपि पाकजैरेव इत्याद्यूहनीयमित्यलं विस्तरेण ( चि० २ परिशि० शक्ति० पृ० ३८ ) । २ पौराणिकास्तु स्त्रीदेवता शक्तिः । यथा वैष्णवी ब्राह्मी गौरी च इत्याहुः । अत्रोक्तम् इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी । त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति ॥ ( गोरक्षसं० ) ( वराहपु० ) इति । ३ तान्त्रिकास्तु पीठाधिष्ठातृदेवताविशेषः इत्याहुः । ४ नीतिशास्त्रज्ञास्तु राज्ञः प्रभावोत्साहमन्त्रजातं सामर्थ्यरूपं शक्तित्रयम् इत्याहुः । ५ वृत्तिविशेषः । अर्थस्मृत्यनुकूलः पदपदार्थसंबन्धः । स च पदशक्तिसमयसंगतिसंकेतवाचकत्वादिभिर्व्यवह्रियते ( प्र० प० पृ० ३९ ) । अत्र वैयाकरणा आलंकारिकाश्चाहुः । सैषा शक्तिः संयोगादिभिर्नानार्थकशब्देषु नियम्यते इति । तदुक्तं हरिणा संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥ सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ इति । तदर्थश्च एते संयोगादयः शब्दार्थस्यानवच्छेदे संदेहे तदपाकरणद्वारेण विशेषस्मृतिहेतवो निर्णयहेतवः इति । उपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनिर्णयद्वारा तन्मात्रार्थविषयकान्वयबोधजनकाः इति भावः ( ल० म० पृ० १२ ) । नैयायिकास्तु प्रकरणादीनामिव संयोगादीनामपि तात्पर्यग्राहकत्वमेव । यथा सशङ्खचक्रो हरिः इत्यादौ शङ्खचक्रादिविशेषणम् इत्याहुः । अत्रेदं विज्ञेयम् । शक्तिग्रहः शाब्दबोधे जननीये पदजन्यपदार्थोपस्थितौ ( स्मृतौ ) उपयुज्यते । अयं भावः । शक्तिर्हि

एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम् इति रीत्या पदार्थस्मारिका । तथा चायमर्थः । येन रूपेण चोपस्थितयोः पदपदार्थयोः संबन्धज्ञानम् तद्रूपावच्छिन्नज्ञानात्संबन्धांश उद्बुद्धसंस्कारसहकृतात्तद्रूपावच्छिन्नस्मरणम् । यथा हस्तिहस्तिपकयोः पाल्यपालकभावसंबन्धज्ञानेन हस्तिज्ञानाद्धस्तिपकस्मरणम् ( त० प्र० ख० ४ पृ० ३३ ) । तथा च शक्तिग्रहः शाब्दबोधजनिकायां पदजन्यपदार्थोपस्थितौ सहकारी भवति ( न्या० म० ४ ) इति । पदपदार्थयोः संबन्धश्च [ क ] इदं पदममुमर्थं बोधयतु इत्याकारक ईश्वरसंकेतः ( मु० ४ ) ( न्या० म० ४ पृ० ३ ) ( त० सं० ) । तदर्थश्च एतत्पदजन्यबोधविषयोयमर्थः इत्याकारकेश्वरेच्छा शक्तिः ( नील० ) इति । एतत्पदजन्यत्वप्रकारतानिरूपितैतदर्थबोधविशेष्यताशालीच्छा इति वा ( त० प्र० ख० ४ पृ० १४ ) ( ग० शक्ति० ) । अत्र ईश्वरसंकेतो नामेश्वरेच्छा ( न्या० बो० ४ पृ० १९ ) । ईश्वरसंकेत इत्यस्यायं भावः । द्वादशेहनि पिता नाम कुर्यात् इति श्रुतिः । तथा च द्वादशाहःकालीनपित्राद्युच्चारितनामत्वादिना नामवाच्यः शिशुः इत्याकारकेच्छयेश्वरेण तादृशश्रुतिप्रणयनादाधुनिकसंकेतितचैत्रादिशब्देषु ईश्वरसंकेतोस्त्येव ( त० प्र० ४ पृ० १५ ) इति । [ ख ] अस्माच्छब्दादयमर्थो बोद्धव्यः इत्यनादिसंकेतः ( त० कौ० ) । यथा घटाद्यर्थविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसंकेतः ( न्या० बो० ४ पृ० १९ ) । [ ग ] इच्छामात्रं शक्तिः इति नव्या आहुः ( मु० ४ ) ( वात्स्या० २।१।५४ ) । तथा च ईश्वरसंकेत एव न शक्तिः । किं त्वभियुक्तसंकेतमात्रं शक्तिः इति ( म० प्र० ४ पृ० ३८ ) । आधुनिके तु संकेतिते न शक्तिः इति संप्रदायः । नव्यास्तु ईश्वरेच्छैव न शक्तिः । किं तु इच्छैव । तेन आधुनिकसंकेतितेपि सास्ति इति वदन्ति ( मु० ४ ) । [ घ ] मीमांसकास्तु अभिधा नाम पदार्थान्तरं संकेतग्राह्यम् शक्तिः इत्याहुः ( न्या० म० ३ ) ( त० दी० ) ( ग० शक्ति० ) । संकेतग्रहजन्यग्रहविषयः इत्यर्थः । मीमांसकमते इयं शब्दसहकारिग्रहविषयः इति ज्ञेयम् ( त० प्र० ४ पृ० १४ ) ।

[ ङ ] पदपदार्थयोर्वाच्यवाचकभावनियामकं संबन्धान्तरं शक्तिः इति शाब्दिका वदन्ति ( वै० सा० द० ) ( ल० म० ) । [ च ] अविनाभाव एव शक्तिः इति प्राञ्चः अङ्गीचक्रुः ( त० प्र० ख० ४ पृ० ३७ ) । न्यायमते शक्तिस्त्रिविधा योगः रूढिः योगरूढिश्चेति । तत्राद्या पाचकादिपदेषु । द्वितीया घटादिपदेषु । तृतीया पङ्कजादिपदेषु ( त० दी० ) । अत्र यौगिकरूढिस्तुरीयापि शक्तिरस्ति इति केचिद्वदन्ति । माध्ववेदान्तिनस्तु महायोगाख्यामपि वृत्तिमङ्गीचक्रुः ( प्र० च० पृ० ३९ ) । प्राभाकरास्त्वेवं पदशक्तिं विभजन्ते । पदशक्तिर्द्विविधा आनुभाविका स्मारिका च । आनुभाविका शाब्दानुभवजनिकेत्यर्थः । स्मारिका पदार्थस्मृतिजनिकेत्यर्थः ( त० प्र० ४ पृ० २८ ) । तत्राद्या कार्यान्विते । पदात्कार्यान्वितस्यैवानुभवात् । द्वितीया तु जातौ ( न्या० म० ४ पृ० ७—८ ) ( दि० ४ ) ( प्र० च० ३९ ) । पदाज्जात्युपस्थितेरेवानुभूयमानत्वात् इति भावः ( म० प्र० ४ पृ० ४० ) । अथ तत्तन्मते तत्तदर्थेषु पदानां शक्तेर्दिगिदानीं प्रदर्श्यते । गवादिपदानां जात्याकृतिविशिष्टव्यक्तौ शक्तिः इति संप्रदायविदो नैयायिकाः प्राहुः । जातौ व्यक्तौ वैशिष्ट्ये च एका शक्तिः इत्यर्थः ( त० प्र० ख० ४ पृ० २५ ) । आकाशपदे तु निरवच्छिन्नैव शक्तिः । व्यक्तीनामानन्त्याभावेनानुगमकधर्मानपेक्षणात् ( त० प्र० ४ पृ० ३२ ) इति । व्यक्तावेव शक्तिः न तु गोत्वादिजातावपि इति नव्या आहुः । जातिविशिष्टव्यक्तौ शक्तिः इत्यपरे अङ्गीचक्रुः । अत्र जातिशब्दः शब्दप्रवृत्तिनिमित्तपरः । तथा च आकाशादयः सर्वेपि शब्दाः प्रवृत्तिनिमित्तविशिष्टवस्तुवाचिनो भवन्ति इत्याशयः । घटशब्दो घटघटत्वयोः शक्तः । शुक्लशब्दो गुणगुणिनोः शक्तः । गतशब्दः क्रियातदाश्रययोः शक्तः । दण्डिशब्दो दण्डदेवदत्तयोः शक्तः इत्यन्ये आहुः । वेदान्तिनस्तु गवादिपदानां विशेष्यतया व्यक्तय एव वाच्याः । आनयनादिकं तु विशेषणत्वादिना वाच्यम् इत्याहुः । एके तु गवादिशब्देषु जातिः देवदत्तादिसंज्ञाशब्देषु व्यक्तिः सास्नादिमच्छब्देषु आकृतिः इत्येवं त्रितयमपि

वाच्यम् इत्याहुः (प्र० च० ४ पृ० ३८) । जात्याकृतिव्यक्तिषु तिसृषु शक्तित्रयम् इति शाब्दिका मन्यन्ते । आकृतावेव शक्तिः इति पतञ्जलिप्रभृतय आहुः । जातावेव शक्तिर्व्यक्तिलाभस्त्वाक्षेपात् इति तौतातिता ( तुतातभट्टानुयायिनः ) प्राभाकराः कुमारिलभट्टादयश्चाहुः । अयं भावः । गोत्वं हि स्वाश्रयं विना अनुपपन्नम् इति स्वाश्रयम् आक्षिपति इति । अत्र अर्थापत्तिराक्षेपः इति भट्टमतम् । समानवित्तिवेद्यत्वमाक्षेपः इति प्राभाकरमतम् इति विज्ञेयम् ( न्या० म० ४ पृ० ६ ) । अत्र व्यक्तेः प्राधान्यानुभवाल्लक्षणा व्यक्तौ । आक्षेपे तूपसर्जनता स्यात् इति भट्टैकदेशिन आहुः । अत्रोक्तं भट्टपादैः आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषतः । न व्यक्तावाकृतौ तु स्यात्सर्वमेतत्समञ्जसम् ॥ अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः । आकृतेः प्रथमं ज्ञाने तस्या एवाभिधेयता ॥ व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता । लिङ्गसंख्यादिसंबन्धः सामानाधिकरण्यधीः ॥ सर्वोपपन्ना च यतस्तस्मात्तत्रैव कल्पयेत् (जै० सू० वृ० अ० १ पा० ३ सू० ३५) इति । पदानामन्वयविशिष्टे शक्तिः इत्यप्याहुः । अयं भावः । जातौ अन्विते ( अन्वयविशिष्टे वाक्यार्थे ) चाभिधारूपा शक्तिः इति । तत्र प्राभाकरास्तु सिद्धार्थस्यानुभावकत्वं नास्ति इति कार्यत्वान्वितव्यक्तौ ( इतरान्विते ) शक्तिः इत्याहुः (त० दी० पृ० ३२) । अत्रोपहसितं श्रीहर्षमिश्रैः गुरुर्धियमभावस्य स्थाने स्थानेभिषिक्तवान् । प्रसिद्ध एव लोकेस्मिन् बुद्धबन्धुः प्रभाकरः ॥ इति । न्यायसिद्धान्तमञ्जरीकारः स्वयमप्युपजहास प्रतारको वर्णव्यत्यासलिपिसादृश्याभ्यां प्रभाकरः इति गृहीतो लोकैः इति युक्तमुत्पश्यामः इति ( न्या० म० ४ पृ० ९ ) । अत्रायमर्थः प्रतारकः इत्यत्र रेफककारयोर्व्यत्यासः । तकारलिप्यां भकारसादृश्यम् । तेन प्रभाकरः इति लोके प्रसिद्धः ( म० प्र० ४ पृ० ४० ) इति । अर्थवादवाक्यानां कार्यतावाचकलिङाद्यघटितत्वेन कार्यत्वाद्यबोधकत्वाच्छाब्दानुभवजनकत्वाभावेनाप्रामाण्यमेव इति तन्मतम् ( न्या० म० ४ ) ( त० प्र० ४ पृ० २९ ) ( चि० ४ ) । विध्येकवाक्यतया अर्थवत्त्वात्

प्रामाण्यम् इति मीमांसकसिद्धान्तः । जातौ व्यक्तौ चोभयत्र शक्तिः। किं तु जात्यंशे ज्ञाता व्यक्त्यंशे स्वरूपसती प्रत्यायिका इत्यन्ये मीमांसका आहुः। अत्राहुः गुरुमततत्त्ववेदिनः। विशिष्टगोचरा एकैव शक्तिः। किं तु जातिनिष्ठतया सा शक्तिः ज्ञातोपयुज्यते। व्यक्तौ सा स्वरूपसती। समानवित्तिवेद्यतया च व्यक्तेरपि भानम् इति (न्या० सि० दी० पृ० १२)। अत्र व्यक्तेरन्वयप्रकारतया भानम् इति गुरुमतैकदेशिन आहुः। समासस्य विशिष्टार्थे शक्तिः इति शाब्दिका आहुः। तन्न। तत्रावयवलक्षणयैवोपपत्तौ समुदायशक्तौ मानाभावः इति नैयायिकाः प्राहुः। मीमांसकास्तु समुदाये (वाक्ये) लक्षणा। स्वबोध्यसंबन्धस्यैव लक्षणापदार्थत्वादित्याहुः (न्या० म० ख० ४ पृ० ११—१२)। गोपदस्य गोत्वे शक्तिः व्यक्तौ लक्षणा इति मण्डनमिश्राः स्वीचक्रुः। धातोश्च फलावच्छिन्नव्यापारे शक्तिः इति नव्यनैयायिकाः प्राहुः। फले व्यापारे च पृथक् शक्तिः इति शाब्दिका आहुः। तदुक्तम् व्यापारो भावना सैवोत्पादना सैव च क्रिया। कृञोकर्मकतापत्तेर्न हि यत्नोर्थ इष्यते॥ (वै० सा० कारि० ५ पृ० २५) इति। फल एव शक्तिः इति मीमांसकविशेषाः मण्डनादयः आहुः। व्यापारे शक्तिः इति रत्नकोशकृतः प्राचीनतार्किकाः आहुः। तथा च क्रियामात्रं (न तु फलावच्छिन्नम्) धात्वर्थः इति प्राचां नैयायिकानामाशयः (ग० व्यु० का० २)। आख्यातस्य तु कृतौ शक्तिः इति नैयायिकाः प्राहुः। लः कर्मणि च (पाणि० सू० ३।४।६९) इति सूत्रात् कर्तरि कर्मणि भावे च शक्तिः इति शाब्दिका आहुः। व्यापारमात्रे शक्तिरिति मीमांसका आहुः। उत्पादकतायां शक्तिरिति रत्नकोशकृत आहुः। आलंकारिकास्तु जातिगुणक्रियासंज्ञार्थेषु चतुर्विधा शक्तिरित्याहुः। आलंकारिकमतं दर्शितं यथा जातिद्रव्यगुणस्पन्दैर्धर्मैः संकेतवत्तया। जातिशब्दादिभेदेन चातुर्विध्यं परे जगुः॥ (श० प्र० श्लो० १८) इति। तदर्थश्च गोगवयादीनां गोत्वादिजात्या पश्वाढ्यादीनां लाङ्गूलधनादिद्रव्येण धन्यपिशुनादीनां पुण्यद्वेषादिगुणेन चलचपलादीनां च शब्दानां कर्मणा अवच्छि-

शक्तिमत्त्वाच्चातुर्विध्यमेव रूढानाम् इति । यदुक्तं दण्ड्याचार्यैः । शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः । चातुर्विध्यादमीषां तु शब्द उक्तश्चतुर्विधः ॥ इति । तदेतच्छब्दशक्तिप्रकाशे खण्डितम् तदेतत् जडमूकमूर्खादीनामन्यशून्यादीनां च शब्दानामपरिग्रहापत्त्या परित्यक्तमस्माभिः ( श० प्र० श्लो० १८ टी० पृ० १७ ) इति । अपोहार्थे शक्तिरिति बौद्धा मन्यन्ते । अत्रेदं बोध्यम् । प्रथमतः शक्तिग्रहो व्यवहारात् घटानयनादिरूपात् भवति । तथा हि घटमानय इति केनचित् प्रयोजकवृद्धेन नियुक्तः कश्चन प्रयोज्यवृद्धः तद्वाक्यतोऽर्थं प्रतीत्य घटमानयति । तच्चोपलभमानो बालस्तया क्रियया तस्य प्रयोज्यस्य प्रयत्नमनुमिनोति । तेन च घटानयनगोचरप्रयत्नेन तस्य ज्ञानं घटानयनगोचरम् अनुमिनोति । स्वप्रयत्ने तेन तथा निश्चयात् । ततस्तद्धेत्वाकाङ्क्षायाम् उपस्थितत्वाच्छब्दमेव कल्पयति । तदनन्तरम् घटादिपदानां प्रत्येकमावापोद्वापाभ्यां घटपदं घटधीजनकम् इति कल्पयति । कृते च तस्मिन् अतिप्रसङ्गभङ्गाय तज्जननानुकूलसंकेतरूपं संबन्धं कल्पयति । अत्रातिप्रसङ्गस्तु घटपदं घटधीजनकमिव पटधीजनकमपि स्यात् इति अगृहीतशक्तिकानामपि घटबोधः स्यात् इति वा बोध्यः ।* तत आद्यशक्तिग्रहानन्तरम् उपमानादिभिः शक्तिग्रहो भवति ( न्या० म० ४ पृ० ५ ) । अत्रोक्तमभियुक्तैः । शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥ ( मु० ४ ) ( त० प्र० ४ पृ० ७२ ) इति । तत्र ( १ ) व्याकरणाच्छक्तिग्रहो यथा कर्मणि द्वितीया कर्तरि परस्मैपदम् इत्यनुशासनात्कर्मत्वादौ द्वितीयादेः शक्तिग्रहः । धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति इति । ( २ ) उपमानाच्छक्तिग्रहो यथा गवादिपदशक्ति धीसाचिव्येन गोसादृश्यातिदेशवाक्याद्गवयपदवाच्यत्वबोधोत्तरं गवयत्वजात्यवच्छिन्ने गोसादृश्यग्रहात् गवयो गवयपदवाच्यः इत्याकारः । गोसदृशो गवयपदवाच्यः इति सादृश्यज्ञानाद्गवयपदस्य गवये शक्तिग्रहो भवति इति वा । क्वचित्तु ( ३ ) कोशादपि शक्ति-

ग्रहो यथा स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः इत्यादिना नाकादिपदस्य स्वर्गे शक्तिग्रहः । गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति सुषीमः शिशिरो जडः चूर्णे क्षोदः इत्यादितश्च कोशाच्छक्तिग्रहः इति । ( ४ ) आप्तवाक्यादपि शक्तिग्रहो यथा कोकिलः पिकपदवाच्यः इत्याद्याप्तवाक्यात् पिकादिपदानां कोकिले शक्तिग्रहः इति । ( ५ ) व्यवहारादपि शक्तिग्रहो यथा घटं नय गामानय इत्याद्यावापोद्वापाभ्यां पार्श्वस्थबालस्य घटादिपदस्य घटमात्रे शक्तिग्रहो भवति इति । ( ६ ) वाक्यशेषादपि शक्तिग्रहो यथा यवमयश्चरुर्भवति इत्यत्र यवपदस्य दीर्घशूकविशेषे कङ्गौ वा शक्तिः इति संदेहे वाक्यशेषाद्दीर्घशूकविशेषे शक्तिर्निर्णीयते । वाक्यशेषस्तु यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति इति । वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ।। (मु० ४ पृ० १७७) इति च । यथा वा स्वाराज्यकामोग्निष्टोमेन यजेत इत्यादिविधिशेषीभूतेभ्यः यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ।। इत्यादिवाक्येभ्यः स्वरादिपदस्य स्वर्गसुखादौ शक्तिग्रहः ( श० प्र० टी० पृ० २४)। (७) क्वचित् विवरणादपि शक्तिग्रहो यथा घटोस्ति इत्यस्य कलशोस्ति इत्यनेन विवरणाद्घटपदस्य कलशे शक्तिग्रहः । यथा वा पचति इत्यस्य पाकं करोति इत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्प्यत इति । कल्पनं तु आख्यातं यत्नत्वविशिष्टे शक्तम् यत्नत्वविशिष्टशक्तकरोतिप्रतिपादितार्थप्रतिपादकत्वात् इति ( दि० ४ पृ० १७७ ) । ( ८ ) प्रसिद्धपदस्य सांनिध्यादपि शक्तिग्रहो यथा इह सहकारतरौ मधुरं पिको रौति इत्यादौ पिकपदस्य मधुरादिप्रसिद्धपदसांनिध्यात्कोकिले शक्तिग्रहः । यथा वा नीरूपः स्पर्शवान् वायुः निःस्पर्शो मूर्तिमन्मनः इत्यादौ रूपशून्यस्पर्शवदादिषु वाय्वादिपदस्य शक्तिग्रहः । यथा वा स्वलंकृतां कन्यां ददानः ककुदः स्मृतः इत्यादावुक्तरीत्या कन्यादानादिषु ककुदादिपदस्य शक्तिग्रहः ( मु० ४ पृ० १७७ ) ( श० प्र० श्लो० २० टी० पृ० २३–२४ ) इति । ( १० ) वेदान्तिनस्तु अङ्गुली-

प्रसारणादिपूर्वकं निर्देशेन शक्तिग्रहो भवति । यथा बाल तवेयं माता तवायं पिता अयं ते भ्राता कन्दलीफलमभ्यवहरति इति निर्देशेन बालस्य मात्रादौ शक्तिग्रहः इत्याहुः ( प्र० च० परि० १ पृ० ३८ )। शिष्टं च समयशब्दव्याख्यानावसरे संपादनीयमित्यत्रैव विरम्यते ।

**शक्यत्वम्**—१ विषयतासंबन्धेन शक्त्याश्रयत्वम् ( न्या० बो० ४ पृ० १९ )। यथा गवादेरर्थस्य गोपदशक्यत्वम् । २ समर्थनीयत्वम् इति काव्यज्ञा आहुः ।

**शक्यप्राप्तिः**—पदवाक्यप्रमाणानां ज्ञानजननप्रयोजकत्वम् । इयं शक्यप्राप्तिश्च अतिप्राचीननैयायिकानां मते दशानां न्यायावयवानामन्तर्गता ( वात्स्या० १।१।३२ ) ( गौ० वृ० १।१।३२ ) ( म० प्र० २ पृ० ३३ )।

**शतकृष्णलम्**—सुवर्णशकलशतम् ( जै० सू० वृ० अ० ८ पा० २ सू० २५ )।

**शतृ**—( प्रत्ययः ) प्रकृतधात्वर्थकर्ता ( तर्का० ४ पृ० १२ ) । यथा पचन् इत्यादौ शतृप्रत्ययार्थः ।

**शपथः**—[ क ] स्वाभिप्रायबोधानुकूलशपथकरणम् । यथा गोपी कृष्णाय शपते इत्यादौ शपेरर्थः । अत्र कृष्णसंप्रदानकबोधानुकूलं शपथकरणम् इति बोधः ( ल० म० )। [ ख ] सत्यताकरणाय दिव्यविशेषकरणम् । यथा एतद्यदि मिथ्या स्यात्तदा म एतदनिष्टं स्यात् इत्यादि ।

**शब्दः**—( गुणः ) [ क ] श्रोत्रग्रहणो योर्थः स शब्दः । शब्दलक्षणं च श्रोत्रग्राह्यगुणविभाजकधर्मवत्त्वम् ( वाक्य० ४ ) । अथ वा श्रवणेन्द्रियजन्यलौकिकप्रत्यक्षविषयवृत्तिगुणत्वव्याप्यजातिमत्त्वम् । तादृशी जातिश्च शब्दत्वरूपा । गुणत्वव्याप्यजातिघटितलक्षणकरणेन अश्रुतशब्दे नाव्याप्तिः । न वा सत्त्वगुणत्वादिकमादाय गुणान्तरेऽतिव्याप्तिश्च ( वै० वि० २।२।२१ )। शब्दस्त्वाकाशमात्रवृत्तिः बाह्यैकेन्द्रियग्राह्यः द्विक्षणावस्थायी तृतीयक्षणे नश्यति च । अत एवानित्यः इति नैयायि-

कराक्रान्तः । पृथिव्यादिषु पञ्चसु शब्दस्तिष्ठति इति सांख्या वेदान्तिनश्चाहुः । स्वतन्त्रास्तु भेर्यां शब्दः मृदङ्गे शब्दः इति व्यवहारात्पृथिव्यामेव शब्दमिच्छन्ति ( सि० च० १ पृ० १८ ) । शब्दो न स्पर्शवद्विशेषगुणः । प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वात् । अयावद्द्रव्यभावित्वात् । आश्रयादन्यत्र श्रोत्रदेशे उपलब्धेश्च । शब्दो गुणो भूत्वाकाशस्याधिगमे लिङ्गम् ( प्रशस्त० पृ० ७ ) ( मु० ख० १ ) इति । शब्दोम्बरगुणः श्रोत्रग्राह्यः क्षणिकः कार्यकारणोभयविरोधी संयोगविभागशब्दजः प्रदेशवृत्तिः समानासमानजातीयकारणकः ( प्रशस्त० गुणनि० पृ० ५५ ) इति । कार्यकारणविरोधीत्यस्यार्थश्च कार्यमुत्तरशब्दः । कारणं संयोगविभागशब्दाः । एतदुभयेनाप्ययं विरुध्यते इति । [ ख ] श्रोत्रग्राह्यो गुणः । [ ग ] येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः । स च शब्दो द्विविधः बुद्धिहेतुकः अबुद्धिहेतुकश्च । तत्र अबुद्धिहेतुको मेघादिशब्दः । बुद्धिहेतुकश्च द्विविधः स्वाभाविकः काल्पनिकश्च । उभयत्रापि ध्वनेरुपकारकत्वाद्ध्वन्यात्मकता । तत्र स्वाभाविको वर्णविशेषानभिव्यञ्जको हसितरुदितादिरूपः प्राणिमात्रसाधारणः । काल्पनिकोपि त्रिविधः वाद्यादिशब्दः गीतिरूपः वर्णात्मकश्च । तत्र भेरीशब्दादिर्वाद्यादिशब्दः । माधवादिरागाभिव्यञ्जकनिषादादिस्वरशब्दो गीतिरूपः । ध्वनिविशेषसहकृतकण्ठताल्वाद्यभिघातजन्यश्च वर्णात्मकः ( शब्दार्थरत्ने० ) ( वाच० ) । अन्यत्र चेत्थं विभाग उक्तः । शब्दो द्विविधः ध्वन्यात्मकः वर्णात्मकश्च । तत्राद्यो भेरीमृदङ्गादौ प्रसिद्धः । द्वितीयः संस्कृतभाषादिरूपः शब्दः । अत्र भाष्यम् स च द्विविधः वर्णलक्षणः अवर्णलक्षणश्च । तत्र अकारादिर्वर्णलक्षणः । ध्वनिलक्षणश्चावर्णलक्षणः । अत्र पाठान्तरम् संख्यादिनिमित्तः अवर्णलक्षणः इति ( प्रशस्त० गुण० पृ० ५५ ) । तत्र वर्णलक्षणस्योत्पत्तिः । आत्ममनसोः संयोगात्स्मृत्यपेक्षाद्वर्णोच्चारणेच्छा । तदनन्तरम् प्रयत्नः । तमपेक्षमाणादात्मवायुसंयोगाद्वायौ कर्म जायते । स च वायुरूर्ध्वं गच्छन् कण्ठादीनभिहन्ति । ततः स्थानवायुसंयोगापेक्षात्स्थानाकाश-

संयोगाद्वर्णोत्पत्तिः । अथ ध्वनिलक्षणोपि (१) भेरीदण्डसंयोगाद्वेगापेक्षाद्भेर्याकाशसंयोगादुत्पद्यते । (२) वेणुपर्वविभागापेक्षाद्वेण्वाकाशविभागाच्च । (३) शब्दाच्च शब्दनिष्पत्तिः । शब्दात्संयोगविभागनिष्पन्नाद्वीचीसंतानवच्छब्दसंतानः इत्येवं संतानेन श्रोत्रप्रदेशमागतस्यान्त्यशब्दस्य ग्रहणम् । श्रोत्रशब्दयोर्गमनागमनाभावात् (संयोगगमनाभावात्) अप्राप्तस्य चानुपलब्धेः परिशेषात्संतानसिद्धिः (प्रशस्त० गुणनि० पृ० ५५–५६) (वै० २।२।३१) । अत्र शाब्दिका आहुः । वर्णात्मकश्च शब्दो वस्तुत एकोपि तत्तद्वर्णसंस्कारैः प्रतिबिम्बिततत्तद्रूपोनन्तपदरूपतामिवापन्न इति सर्वपदरूपः सर्वार्थाभिधानशक्तिः । सा शक्तिर्योगिप्रत्यक्षगम्या नास्मज्ज्ञानगम्या । यत्रैवं व्यवहारादिना तज्ज्ञानं तस्यैवास्माकं बोधः इति मर्यादा (ल० म० आका० पृ० ४९) । अत्रेयं व्युत्पत्तिः । शब्दयतेनेनार्थ इत्यभिधीयते ज्ञाप्यते इति (वात्स्या० १।१।२) । अत्र वैयाकरणा आहुः । परा पश्यन्ती मध्यमा वैखरी इति चत्वारि वाचः पदानि । एकैव नादात्मिका वाङ्मूलाधारादुदिता सती परा इत्युच्यते । सैव हृदयाभिगामिनी पश्यन्ती इत्युच्यते । सैव बुद्धिं गता विवक्षां प्राप्ता मध्यमा इत्युच्यते । अथ यदा सैव वक्त्रे स्थिता ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा वैखरी इत्युच्यते । अत्र श्रुतिः गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति (ऋ० १।१६४।४५) इति । ध्वन्यात्मकवर्णात्मकौ द्विविधावपि प्रत्येकं त्रिविधौ संयोगजौ विभागजौ शब्दजौ चेति । तत्राद्यौ भेर्यामभिहन्यमानायां भेरीदण्डसंयोगाद्ध्वन्यात्मकः । वायुकण्ठताल्वादिसंयोगाद्वर्णात्मकश्च । द्वितीयौ वंशे पाट्यमाने दलद्वयविभागात् चटचटात्मको ध्वन्यात्मकः ओष्ठद्वयविभागाद्वर्णात्मकश्च । तृतीयौ च द्वितीयशब्दादिचरमशब्दान्तौ (वै० २।२।३१) । तत्र संयोगजे ध्वन्यात्मके भेर्याकाशसंयोगोसमवायिकारणम् । भेरीदण्डसंयोगो निमित्तकारणम् । समवायिकारणं तु सर्वत्रैवाकाशम् इति ज्ञेयम् । विभागजे ध्वन्यात्मके तु वंशदलद्वयाकाशविभागोसमवायिकारणम् । वंशदलद्वयवि-

भागो निमित्तकारणम् (त० कौ०) (वै० उ० २।२।३१)। शब्दजशब्दविषये तु वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा ये द्वितीयादयः शब्दाः ते शब्दजाः। तत्रोत्तरोत्तरशब्दे पूर्वपूर्वशब्दोसमवायिकारणम्। अनुकूलवातादिकं निमित्तकारणम् (त० कौ०) इति। वर्णात्मकः शब्दो द्रव्यम् इति मध्वमतानुयायिन आहुः (प्र० प्र० पृ० ११)। वर्णात्मकः पुनर्द्विविधः सार्थकः निरर्थकश्च। तत्र सार्थकः शब्दस्त्रिविधः प्रकृतिः प्रत्ययः निपातश्चेति (श० प्र० श्लो० ६)। निरर्थकस्तु कचटतप इत्यादिः। पुनरपि वर्णात्मको द्विविधः प्रमाणशब्दः अप्रमाणशब्दश्च। प्रमाणशब्द इत्यस्यार्थश्च शाब्दप्रमितिकरणज्ञानविषयः शब्द इति (त० प्र० प० ४ पृ० ६) (त० कौ०) (प्र० प्र०)। अयमर्थश्च शाब्दबोधं प्रति पदज्ञानस्य करणतामते संगच्छते। मणिकृतस्तु प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्द इत्याहुः (त० प्र० प० ४ पृ० ५)। यथाश्रुतार्थस्य शाब्दप्रमितिकरणरूपस्याङ्गीकारे स चार्थः शाब्दबोधं प्रति ज्ञायमानं पदं करणम् इति मते संगच्छते इति विज्ञेयम्। प्रमाणशब्दत्वं च शाब्दप्रमितिकरणत्वम् (न्या० म० ४)। इदं लक्षणं च ज्ञायमानं पदं करणम् इति मताभिप्रायेणास्ति (म० प्र० ४)। अथ वा प्रकृतवाक्यार्थविषयकयथार्थशाब्दबोधविषयकतात्पर्यजन्यवाक्यत्वम्। (वाक्य० ४)। परे तु प्रमोपधायकशब्दत्वम् इति वदन्ति (मू० म० १)। तत्र प्रमाणशब्द आप्तोपदेशः। तदर्थश्च आप्तः यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा। तस्य शब्दः (वात्स्या० १।१।७)। अथ वा प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः (चि० ४)। सोपि द्विविधः लौकिकः वैदिकश्च। तत्राद्यो लौकिकः विधिनिषेधार्थवादभेदेन त्रिविधः। तत्र विधिर्यथा पाकं कुर्यात् इत्यादिः। निषेधश्च इदमनिष्टं न कुर्यात् इत्यादिः। अर्थवादस्तु अयं ब्राह्मणः स्वमहिम्ना सर्वं जगत्पवित्रं करोति इत्यादिः स्वरूपः। नद्यास्तीरे पञ्च फलानि सन्ति इत्यादिरूपो वा (प्र० प्र०)। द्वितीयस्तु वैदिकः पञ्चविधः विधिः मन्त्रः नामधेयम् निषेधः अर्थवादश्चेति। तत्र

लौकिकः शब्द आप्तोक्त एव प्रमाणभूतः । वैदिकस्तु सर्व एव प्रमाणभूतः । परमाप्तेन भगवता प्रणीतत्वात् । प्रकारान्तरेणापि प्रमाणशब्दो द्विविधः दृष्टार्थः अदृष्टार्थश्च । तत्राद्यो घटोस्ति इत्यादिरूपः । द्वितीयः स्वर्गनरकापूर्वादिशब्दः इति । अप्रमाणशब्दस्तु वह्निना सिञ्चेत् गौरश्वः पुरुषो हस्ती इत्यादिरूपः इति । अत्र शब्दो न प्रमाणम् । शाब्दज्ञानं तु लैङ्गिकमेव । तथा च शब्दोनुमान एवान्तर्भवति इति वैशेषिकमतम् ( वै० ९।२।३ ) । वैशेषिकादीनामाशयस्तु प्रमाणशब्दव्याख्यानावसरे ( पृ० ५५४ ) प्रकटीकृतः । नैयायिकास्तु पृथगेव शब्दो मानम् । तत्र प्रमाणं सूत्रम् आप्तोपदेशसामर्थ्याच्छब्दादर्थसंप्रत्ययः ( गौ० २।१।५२ ) इति । न त्वनुमानविधया मानम् । शब्दस्यार्थाव्याप्यत्वात् । न हि यत्र शब्दस्तत्र घटानयनादिरूपोर्थः इति व्याप्तिः । शब्दस्याकाशवृत्तित्वात् । घटादेश्च तदवृत्तित्वात् ( न्या० म० ४ ) । तथा च शब्दो व्यतिरिक्तं प्रमाणम् । तच्च शब्दात्प्रत्येमि इत्यनुव्यवसायगम्यज्ञानस्य प्रत्यक्षानुमित्यादिप्रतीतितो विलक्षणत्वेन तादृशज्ञानकरणत्वेन सिद्ध्यति इत्याहुः ( त० दी० ) । अत्र शब्दस्य साधुत्वं च शक्तत्वमेव । अपभ्रंशादितः ( गाव्यगगर्यादिशब्दतः ) शक्तिभ्रमाच्छाब्दबोधः इति नैयायिकमीमांसकादय आहुः । वैयाकरणास्तु यः शब्दो यत्रार्थे व्याकरणे व्युत्पादितः स तत्र साधुः । अपभ्रंशानामपि शक्तत्वमस्त्येव इत्याहुः ( वै० सा० शक्तिविचा० पृ० १५१ ) । अत्र शब्दस्यार्थविशेषान्वयबोधने साधुत्वं च व्याकरणैकव्यञ्जिका पुण्यजनकतावच्छेदकजातिः ( वै० सा० द० पृ० १०३ ) । शब्दो द्रव्यम् इति भट्टमीमांसका आहुः । अत्रानुमानं प्रमाणम् शब्दो द्रव्यम् साक्षादिन्द्रियसंबन्धवेद्यत्वात् घटवत् इति । श्रोत्रं द्रव्यग्राहकम् निरवयवेन्द्रियत्वात् मनोवत् इति च । गुणवत्त्वाच्च शब्दो द्रव्यम् । संख्यादयोपि हि शब्दधर्मा अनुभूयन्ते ( न्या० ली० गु० पृ० ४९ ) । शाब्दिकास्तु शब्दमुभयस्वरूपमिच्छन्ति । तारत्वादयो गुणाः शब्दनिष्ठास्तदाश्रयत्वाच्छब्दस्य द्रव्यत्वम् आकाशरूपद्रव्याश्रयत्वाद्गुणत्वं

ष इति ( ल० म० ) । तन्न सहन्ते वैशेषिकाः । एकद्रव्यत्वान्न द्रव्यम् ( वै० २।२।२३ ) इति । तदर्थस्तु शब्दो न द्रव्यम् । एकद्रव्यत्वादेकमात्राश्रितत्वात् । न ह्येकमात्राश्रितं किमपि द्रव्यं प्रसिद्धम् इति ( वै० वि० २।२।२३) । शब्दो नित्यः इति प्राभाकरा भट्टाश्चाहुः । एतन्मते शब्दस्य नित्यत्वे प्रमाणमनुमानम् । तच्च शब्दो नित्यो व्योममात्रगुणत्वाद्व्योमपरिमाणवत् इति । अथ वा शब्दो नित्यः । अद्रव्यद्रव्यत्वात् । प्रत्यभिज्ञानाच्च इति च (न्या० म० ४ पृ० ३१ ) (त० प्र० ४ पृ० १२४)( न्या० ली० गु० पृ० ४९ ) । अथ वा शब्दो नित्यः निःस्पर्शद्रव्यत्वादात्मवदिति । अत्रायमाशयः । सोयं गकारः इति प्रत्यभिज्ञाबलात् शब्दस्य नित्यत्वम् । अस्यां प्रत्यभिज्ञायाम् एतत्कालीनगकारे पूर्वकालीनगकाराभेदो भासते । अतो नित्य इति भावः ( त० प्र० ख० ४ पृ० १२४ ) । गकार उत्पन्नः विनष्टश्च इति प्रत्ययस्तु शब्दव्यञ्जकवायूत्पत्तिविषयक एव इति ( न्या० म० ४ पृ० ३१ ) ( वै० २।२।३४—३५ ) । अत्र शब्दव्यञ्जकवायुरेवोत्पद्यते न तु शब्द उत्पद्यते इति भावः ( त० प्र० ख० ४ पृ० १२४ ) । प्रयत्नेन शब्दमुच्चारयतः पुंसो वायुर्नाभेरुत्थितः उरसि विस्तीर्णः कण्ठे विवर्तितो मूर्धानमाहत्य परावृत्तो विचरन्नानाविधाञ्छब्दानभिव्यनक्ति इति मीमांसकसिद्धान्तः । नानाविधाञ्छब्दान् निष्पादयति इति तार्किकपाठः ( म० प्र० ४ पृ० ६४ ) । नैयायिकास्तु शब्दः अनित्यः इत्याहुः ( वै० २।२।२८ ) । अयमाशयः । सोयं गकारः इति प्रत्यभिज्ञायां पूर्वकालीनगकारसादृश्यमेवैतद्गकारे भासते । यदि प्राभाकरमतानुरोध्यभेदो भासेत तदा सोयं घटः इति प्रत्यभिज्ञायामप्यभेदस्यैव तुल्यन्यायेन भासनस्यावश्यकतया घटस्यापि नित्यत्वापत्तिः । अतः शब्दस्यानित्यत्वमेव । शब्दस्यानित्यत्वे प्रमाणमनुमानम् । तच्च शब्दः अनित्यः सामान्यवत्त्वे सति बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वाल्लौकिकप्रत्यक्षविशेष्यत्वाद्वा घटवत् इति ( गौ० वृ० २।२।१३ ) । तथा च सूत्रम् आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च ( गौ० २।२।१३ ) इति । शब्दोत्पत्तिर्द्विधा केषां-

चिन्नैयायिकानां मते वीचीतरङ्गन्यायेन तदुत्पत्तिः । केषांचिन्मते तु कदम्बकोरकन्यायेन तदुत्पत्तिः (भा० प० श्लो० १६७)। तत्राद्या तदुत्पत्तिर्यथा आद्यया वीच्यान्यो महानेकस्तरङ्गो जन्यते । तेन तरङ्गेण च महत्तरं तरङ्गान्तरम् । तद्वत् आद्यशब्देन बहिर्दशदिगवच्छिन्नोन्यशब्दस्तेनैव शब्देन जन्यते तेन चापरस्तद्व्यापकः शब्दः इत्येवं क्रमेण श्रोत्रोत्पन्नः शब्दो गृह्यते । भेरीदण्डाद्यभिघातात्तद्देशावच्छेदेनाद्यशब्दस्योत्पत्तिः । अनन्तरम् तद्बहिर्दशदिगवच्छेदेन प्रथमशब्दात्तद्व्यापको द्वितीयः शब्दः । ततस्तद्बहिर्दशदिगवच्छिन्नस्तृतीयः शब्दो द्वितीयशब्दाद्भवति इत्येवं क्रमेण चतुर्थादिशब्दानामप्युत्पत्तिर्बोध्या । द्वितीया तदुत्पत्तिर्यथा कदम्बपुष्पस्य सर्वावयवेषु युगपत्कोरकाणामुत्पत्तिः तद्वत् आद्यशब्दाद्दशसु दिक्षु दश शब्दा उत्पद्यन्ते तैश्चान्ये दश शब्दा उत्पद्यन्ते इत्येवं सर्वासु दिक्षूपर्युपरि शब्दानामुत्पत्तिः (मु० गु० पृ० २३६) इति । द्वितीयादिशब्दो नैकः न वा दशदिगवच्छिन्नः । किं तु दशसु दिक्षु द्वितीयाद्याः शब्दा दश उत्पद्यन्ते इत्येतन्मते विशेषः (वै० वि० २।२।३७)। वायुगतेः समानत्वे प्रथमः पक्षः। असमानत्वं द्वितीय इति बोध्यम् । वैयाकरणास्तु वर्णः अकारादिः नित्यः इत्याहुः (न्या० म० ४ पृ० ३१) (चि० ४) (त० सं०) (सि० च०) (त० दी०) (नील०)। तन्मते वर्णानां नित्यत्वे प्रमाणमनुमानम् । तच्च वर्णो नित्यो ध्वन्यन्यशब्दत्वात् स्फोटवत् (न्या० म० ४ पृ० ३१) इति । तत्र अर्थबोधकशब्दं स्फोटात्मकमिच्छन्ति वैयाकरणाः । तथा च पञ्चाशद्वर्णाः अष्टाक्षरो मन्त्रः त्र्यक्षरो मन्त्रः अष्टाक्षरानुष्टुप् इत्यादिसंख्याप्युपपद्यते इति । तन्न सहन्ते वैशेषिकाः । पञ्चाशदादिसंख्यायाः सद्भावः कत्वगत्वादिजातित एवोपपद्यते इति न वर्णानां नित्यत्वम् इति (वै० २।२।३७)। शब्दो न प्रमाणम् इति सौगता आहुः (प्र० प्र० ४)। मीमांसकास्तु वैदिकशब्दः प्रमाणम् लौकिकस्त्वनुवादकः इत्याहुः (म० प्र० ४)। अत्र मध्वमतानुयायिवेदान्तिनस्तु वेदान्तोपयोगित्वेनैवं शब्दं विभजन्ते । शब्दो द्विविधः प्रमाणशब्दः अप्रमाणशब्दश्च । तत्र प्रमाण-

शब्दो निर्दोषशब्दत्वात् आगमः इत्युच्यते । आगमो द्विविधः अपौरुषेयः पौरुषेयश्चेति । तत्रापौरुषेय ऋगादिः सदागमः । पौरुषेयो महाभारतादिः सदागमः इति । तदुक्तम् आगमो द्विविधो ज्ञेयो नित्योनित्यस्तथैव च । ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम् ॥ मूलरामायणं चैव पुराणं चैतदात्मकम् । ये चानुयायिनस्तेषां सर्वे ते च सदागमाः ॥ दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दनः ( प्र० च० परि० १ पृ० ४१ ) इति । अत्र अपौरुषेयत्वादिविचारणं तु वेदशब्दव्याख्यानावसरे कृतम् इति तत्तत्र दृश्यम् । अप्रमाणशब्दस्तु दोषवत्त्वात् आगमाभासः इत्युच्यते । शब्ददोषास्तु अबोधकत्वम् विपरीतबोधकत्वम् ज्ञातज्ञापकत्वम् अप्रयोजनवत्त्वम् अनभिमतप्रयोजनवत्त्वम् अशक्यसाधनप्रतिपादनम् लघूपाये सति गुरूपायोपदेशनम् इत्याद्याः । तत्र अबोधकत्वं द्वेधा निरभिधेयत्वेन अन्वयाभावेन चेति । तत्राद्यस्योदाहरणम् कचटतपानां जबगडदत्वात् इति । द्वितीयस्योदाहरणम् गौरश्वः पुरुषो हस्ती कुण्डमजाजिनं दश दाडिमानि षडपूपाः इत्यादि । विपरीतबोधकत्वस्योदाहरणम् विमतं मिथ्या शूद्राणां वेदविद्याधिकारोस्ति ब्राह्मणानां नास्ति इत्यादि । ज्ञातज्ञापकत्वस्योदाहरणम् पुरस्तादादित्य उदेति पश्चादस्तमेति मधुरो गुडः तिक्तं निम्बफलम् इत्यादि । अप्रयोजनवत्त्वस्योदाहरणम् काकस्य कति वा दन्ता मेषस्याण्डं कियत्पलम् । कम्बले कति रोमाणि का वार्ता चोलमण्डले ॥ इत्यादि । अनभिमतप्रयोजनवत्त्वस्योदाहरणम् विरक्तं प्रति वाणिज्योपदेशः इत्यादि । अशक्यसाधनप्रतिपादनस्योदाहरणम् मृतमुद्दिश्य मृतिहरहिममहीधरोत्तरसानुसिद्धमृतसंजीवनीकथनादि । लघूपाये सति गुरूपायोपदेशनस्योदाहरणम् नखेन जायमानं कार्यं कुठारेण कुरु इति तृषितं प्रति गीर्वाणतरङ्गिणीतीरे कूपखननोपदेशः इत्यादि ( प्र० च० परि० १ पृ० २६ ) ।

**ब्दपुनरुक्तम्**—( पुनरुक्तम् निग्रहस्थानम् ) [ क ] शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ( गौ० ५।२।१४ ) । [ ख ] समानार्थकसमानानुपूर्वीकशब्दप्रयोगः । यथा घटो घटः (गौ० वृ० ५।२।१४) इति ।

यथा वा नित्यः शब्दो नित्यः शब्दः इति ( वात्स्या० ५।२।१४ )। अन्ये तु शब्दपुनरुक्तं द्विविधम् तस्यैव शब्दस्य पुनरभिधानम् तस्यैव शब्दस्य पर्यायेणाभिधानं च इत्याहुः ( गौ० वृ० ५।२।१५ ) ।

**शब्दाध्याहारः**—( अध्याहारः ) आकाङ्क्षितशब्दानुसंधानम् ( नील० ४ पृ० ३१ ) । यथा पिधेहि इत्युक्ते द्वारम् इति द्वितीयान्तपदाध्याहारः । अत्राप्यर्थाध्याहार एव न तु पदाध्याहारः कर्तव्यः इति प्राभाकरा आहुः । नैयायिकास्तन्न सहन्ते । घटमानय इति वाक्यादिव घटः कर्मत्वम् आनयनम् कृतिः इति वाक्यादपि घटनिष्ठकर्मतानिरूपकानयनानुकूलकृतिमान् इति विशिष्टार्थविषयकशाब्दबोधोत्पत्त्यापत्तिवारणाय वृत्त्या पदविशेषजन्याया एव पदार्थोपस्थितेः शाब्दबोधं प्रति हेतुत्वस्य कल्पनीयतया शब्दाध्याहार एवावश्यकः नार्थाध्याहारः ( त० दी० ४ पृ० ३१ ) इति ।

**शब्दानुशासनम्**—व्याकरणम् । अनेन हि वैदिकाः शब्दाः शं नो देवीरभिष्टय इत्यादयः तदुपकारिणो लौकिकाः शब्दा गौरश्वः पुरुषो हस्ती शकुनिरित्यादयश्चानुशिष्यन्ते व्युत्पाद्य संस्क्रियन्ते प्रकृतिप्रत्ययविभागवत्तया बोध्यन्ते (सर्व० सं० पृ० २८८–२८९ पाणि०) ।

**शब्दार्थः**—अर्थशब्दव्याख्यानावसरे अस्य प्रपञ्चः संपादितः ( चि० ) ( ग० शक्ति० पृ० ३ ) ।

**शब्दोपजीवि**—( प्रमाणम् ) शब्दसहकृतेन येन प्रमितिर्जन्यते तत् ( कु० ५)। यथा स्मृतिपुराणादि । तत्तु वेदोपजीवि प्रमाणं भवति इति बोध्यम् ।

**शम्या**—१ मुसलाकारकाष्ठम् ( जै० न्या० अ० ३ पा० १ अधि० ६)। २ रूक्षा इत्यर्थोपि ( अ० ४ पा० १ अधि० १२ ) ।

**शरीरम्**—[ क ] चेष्टेन्द्रियार्थाश्रयः शरीरम् ( गौ० १।१।११ ) ( त० भा० प्रमेय० पृ० २५ ) । अत्र व्युत्पत्तिः शीर्यते इति ( शॄ ईरन् ) । प्रतिक्षणं क्षीयमाणं देहं शरीरम् । शरीरत्वं तु न जातिः । पृथिवीत्वादिना संकरात् ( वै० वि० ४।२।१ ) ( मु० १ परि० २ ) । शरीरत्वं च प्रयत्नवदात्मसंयोगासमवायिकारणवत्क्रियावदन्त्यावयवित्वम्

( वै० उ० ४।२।१ ) । अथ वा अन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वम् ( वै० वि० ४।२।१ ) ( प० मा० ) । अत्रत्यपदप्रयोजनमुच्यते । हस्तत्वपृथिवीत्वद्रव्यत्वसत्त्वादिवारणाय अन्त्यावयविमात्रवृत्ति इति पदं दत्तम् । घटत्वादिवारणाय चेष्टावद्वृत्ति इति पदम् । घटशरीरसंयोगादिवारणाय जाति इति पदम् । एवं च मनुष्यत्वचैत्रत्वादिजातिमादाय मानुषादिशरीरे लक्षणसमन्वयः । कल्पभेदेन नृसिंहशरीरस्य नानात्वान्नृसिंहत्वजातिमादाय तत्र लक्षणसमन्वयः । अथ वा अवच्छेदकतासंबन्धेन भोगाश्रयत्वम् ( वाक्य० ) । यद्वा चेष्टावदन्त्यावयवीतरावृत्तिजातिमत्त्वम् । भोगायतनवृत्त्यन्त्यावयविमात्रवृत्तिजातिमत्त्वं वा ( प० मा० ) । जीवशरीरमात्रलक्षणं तु आत्मविशेषगुणजनकमनःसंयोगावच्छेदकत्वम् ( त० भा० ) । अथ चेष्टेन्द्रियार्थाश्रय इत्यस्यार्थ उच्यते । अत्र आश्रयपदस्य प्रत्येकमन्वयाच्चेष्टाश्रयत्वादि लक्षणत्रयम् । इन्द्रियाश्रयत्वं चावच्छेदकताख्यस्वरूपसंबन्धविशेषेण । चक्षुष्मान् देवदत्तोयम् इत्यादिप्रतीतेः । अर्थाश्रयत्वम् इत्यत्रार्थशब्दः सुखदुःखान्यतरपरः ( गौ० वृ० १।१।११ ) । यद्वा शरीरानुविधानमिन्द्रियाश्रयत्वम् । शरीरस्योपघातानुविधानमित्यर्थः ( न्या० वा० १।१।११ पृ० ७१ ) । [ ख ] आत्मनो भोगायतनम् ( वात्स्या० १।१।९ ) ( त० भा० पृ० २५ ) ( वाक्य० ) । यदवच्छिन्नात्मनि भोगो जायते तद्भोगायतनमित्यर्थः ( त० दी० ) । हस्ताद्यवयवानां शरीरत्वानङ्गीकारे त्वन्त्यावयवित्वं देयम् । तथा चोक्तं भोगायतनमन्त्यावयवि शरीरम् ( त० कौ० ) इति । शरीरमन्त्यावयवि चेष्टाभोगेन्द्रियाश्रयः ( ता० र० परि० १ श्लो० २८ ) इति च । यथा अस्मदादीनां पार्थिवशरीरम् ( त० सं० ) । तच्च शरीरं न पाञ्चभौतिकम् ( जलादिपरमाणुद्वयसंयोगासमवायिकारणकम् ) । पृथिवीत्वजलत्वादिजातीनां परस्परसांकर्यप्रसङ्गात् । किं तु पार्थिवमेव । स्वाभाविकगन्धवत्त्वात् । अत्र सूत्रम् पार्थिवं गुणान्तरोपलब्धेः ( गौ० ३।१।२८ ) इति । श्रुतिरपि सूर्यं ते चक्षुर्गच्छतात् इत्यत्र मन्त्रे पृथिवीं

ते शरीरम् इति श्रूयते ( वात्स्या० ३।१।३२ ) । मानुषादिशरीरेषु क्लेदपाकादीनां जलादिविकाराणामुपलब्धिस्तु पञ्चानां भूतानां परस्परमुपष्टम्भकसंयोगादेव ( वै० ४।२।२–४ ) ( गौ० ३।१।३१ ) इति । एवं जलीयतैजसवायवीयशरीरेष्वपि विज्ञेयम् । शरीरं द्विविधम् योनिजम् अयोनिजं च ( वै० ४।२।५ ) । शुक्रशोणितसंनिपातजन्यं योनिजम् ( प्रशस्त० पृ० ४ ) । अयोनिजं च शुक्रशोणितसंनिपातानपेक्षम् ( वै० उ० ४।२।५ ) ( प्रशस्त० पृ० ४ ) । योनिजमयोनिजं च पार्थिवशरीरम् । तदुक्तं योगार्णवे देहश्चतुर्विधो जन्तोर्ज्ञेय उत्पत्तिभेदतः । उद्भिज्जः स्वेदजोण्डोत्थश्चतुर्थश्च जरायुजः ॥ उद्भिद्य भूमिं निर्गच्छन्नुद्भिज्जः स्थावरश्च यः । उद्भिज्जाः स्थावरा ज्ञेयास्तृणगुल्मादिरूपिणः ॥ ( वाच० ) इति । आप्यं तैजसं वायवीयं चायोनिजमेव वरुणादित्यवायुलोकेषु प्रसिद्धं च ( वै० उ० ४।२।११ ) । तत्र प्रमाणमनुमानम् । तच्च जलत्वाद्यपि सामान्यं शरीरसमवायिगम् । द्रव्यारम्भकनित्यस्थजातित्वात्पृथिवीत्ववत् ॥ (त० व० प्रमाणपरि० पृ० ११६) इति । तत्र योनिजं पार्थिवशरीरम् द्विविधम् जरायुजम् अण्डजं च । जरायुजं मानुषपशुमृगाणाम् । अण्डजं पक्षिसरीसृपाणाम् ( प्रशस्त० पृ० ४ ) । कीटमत्स्यादयोपि सरीसृपवदेव ( वै० उ० ४।२।५ ) । अयोनिजं पार्थिवशरीरं च त्रिविधम् स्वेदजम् उद्भिज्जम् अदृष्टविशेषजन्यं च । अत्रेदं बोध्यम् । अयोनिजपार्थिवशरीराणामुत्पत्तिर्धर्मविशेषसहितेभ्योणुभ्य एव स्वीक्रियते ( दि० १ ) ( त० कौ० ) । अहंकारेभ्यः समभवदङ्गिराः इत्यन्वर्थसंज्ञाया आगमेपि दर्शनात् (त० व० पृ० ११७) इति । तत्र स्वेदजं शरीरं यूकालिक्षादीनाम् । उद्भिज्जं वृक्षतृणगुल्मादीनाम् । अदृष्टविशेषजन्यं मन्वादीनां देवर्षिनारदादीनां च ( त० कौ० )। यद्यपि वृक्षादीनां शरीरत्वमस्त्येव । तथापि चेष्टावत्त्वमिन्द्रियवत्त्वं च नोद्भिदां स्फुटतरम् । अतो न शरीरव्यवहारः ( वै० उ० ४।२।५ ) । अतः केचित् वृक्षादीनां शरीरत्वं नेच्छन्ति (त० व० पृ० ११६) । अथ वृक्षादीनां शरीरत्वे प्रमाणमनुमानं प्रदर्श्यते । वृक्षादावपि चेष्टास्त्येव । आध्यात्मि-

कवायुसंबन्धात् । अन्यथा तादृशवायुसंबन्धानङ्गीकारे भग्नक्षतसंरोहणादिकं न स्यात् । किं च वृक्षादयोपि शरीरभेदा एव । भोगाधिष्ठानत्वात् । न खलु भोगाधिष्ठानत्वमन्तरेण जीवनस्मरणस्वप्नजागरणभेषजप्रयोगबीजसजातीयानुबन्धानुकूलोपगमप्रतिकूलापगमादयः संभवन्ति । भोगोपपादकः प्राणवायुः । तदुपपादकं तु वृद्धिक्षतभग्नसंरोहणादिकम् इति । आगमोप्यस्ति प्रमाणम् नर्मदातीरसंभूताः सरलार्जुनपादपाः । नर्मदातोयसंस्पर्शात्ते यान्ति परमां गतिम् ॥ गुरुं हुंकृत्य तुंकृत्य विप्रं निर्जित्य वादतः । श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः ॥ (वै० उ० ४।२।५) (दि० १।२) इत्यादि । तथा शरीरजैः कर्मदोषैर्याति स्थावरतां नरः (याज्ञ०) (त० व० पृ० ११६) इत्यादि । मन्वादिविषये तु श्रूयते ब्रह्मणो मानसा मन्वादयः पुत्राः इति । ब्राह्मणमपि प्रजापतिः प्रजा अनेका असृजत् । स तपोतप्यत । प्रजाः सृजेयमिति । स मुखतो ब्राह्मणमसृजत् । बाहुभ्यां राजन्यम् । ऊरुभ्यां वैश्यम् । पद्भ्यां शूद्रम् (वै० उ० ४।२।११) इति । दुर्वासःप्रभृतयो मानसाः अहंकारेभ्यः समभवदङ्गिराः इति समाख्या (वै० ४।२।८) (प० मा०) । केचित्तु देवादीनां शरीरं तैजसमाहुः (त० व०) । अत्रेदं बोध्यम् । क्षुद्रजन्तूनामूष्मजानां मशकादीनां तु यातनाशरीरमप्ययोनिजमेव (वै० उ० ४।२।५) (मु० १) (सि० च०) इति । एतच्छरीरं स्वधर्मविशेषसहितेभ्योणुभ्य एव जायते इति ज्ञेयम् (वै० ४।२।७) (प० मा०) । सुश्रुते विशेष उक्तः । द्रव्याणि पुनरोषधयः । ता द्विविधाः स्थावराः जङ्गमाश्च । तासां स्थावराश्चतुर्विधाः वनस्पतयः वृक्षाः वीरुधः ओषधयश्च इति । जङ्गमा अपि चतुर्विधाः जरायुजाण्डजस्वेदजोद्भिज्जाः । तत्र पशुमनुष्यव्यालादयो जरायुजाः । खगसर्पसरीसृपप्रभृतयोण्डजाः । क्रिमिकीटपिपीलिकाप्रभृतयः स्वेदजाः । इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः इति ।

**शरीरी**—जीवात्मा । यथा अथाकाशशरीरिणाम् (भा० प० श्लो० २७) इत्यादौ शरीरिशब्दस्यार्थः । तत्स्वरूपं भावप्रकाशे सुश्रुतादौ चोक्तं

यथा गर्भाशयगतं शुक्रमार्तवं जीवसंज्ञकः । प्रकृतिः सविकारा च तत्सर्वं गर्भसंज्ञकम् ॥ कालेन वर्धितो गर्भो यदाङ्गोपाङ्गसंयुतः । भवेत्तदा स मुनिभिः शरीरीति निगद्यते ॥ इति । तल्लक्षणादिकं तु जीवशब्दव्याख्याने दृश्यम् ।

**शर्कराः**—मृत्तिकामिश्राः क्षुद्रपाषाणाः शर्कराः ( जै० न्या० अ० १ पा० ४ अधि० १९ ) ।

**शस्त्रम्**—अप्रगीतमन्त्रसाध्या स्तुतिः ( जै० न्या० अ० २ पा० १ अधि० ५ ) ।

**शांकरम्**—आर्द्रा ( पु० चि० पृ० ३५३ ) ।

**शांभवी**—( कल्याणीशब्दे दृश्यम् ) ।

**शाक्यः**—बुद्धः । शाक्यशब्दनिरुक्तिरन्यथोक्ता । यथा शाकवृक्षप्रतिच्छन्नं वासं यस्मात्प्रचक्रिरे । तस्मादिक्ष्वाकुवंश्यास्ते भुवि शाक्या इति श्रुताः ॥ इति भरतधृतवचनम् । इयमत्राख्यायिका । पितृशप्ताः केचिदिक्ष्वाकुवंश्या गोतमवंशजकपिलमुनेराश्रमे योगाभ्यासाय शाकवृक्षे कृतवासाः शाक्य इति ख्यातिमापन्नाः इति (वाच० ) । शिष्टं तु बुद्धशब्दे दृश्यम् ।

**शाक्यायनम्**—( यागः ) षट्त्रिंशत्सु संवत्सरेष्वनुष्ठेयं शाक्यायनम् ( जै० न्या० अ० ३ पा० ८ अधि० २३ ) ।

**शाठीसमः**—( जातिः ) त्वत्पक्षे किंचिद्दूषणं भविष्यति इति शङ्का ( गौ० वृ० ५।१।३७ ) । अयं शाठीसमश्च सूत्रानुक्तोपि कार्यसमप्रभेदः इति वृत्तिकृता प्रतिपाद्यते इति विज्ञेयम् ।

**शानच्**—( प्रत्ययः ) १ प्रकृतधात्वर्थकर्ता कर्तृशानचोर्थः ( तर्का० ४ पृ० १२ ) । यथा पचमानः इत्यादौ । २ धात्वर्थजन्यफलवान् कर्मशानचोर्थः । यथा पच्यमान इत्यादौ । एवं कृतामप्यर्था ऊह्याः । भावकृतां ल्युट्घञादीनां तु प्रयोगसाधुत्वमात्रं प्रयोजनम् इति विज्ञेयम् ।

**शान्तिः**—१ उपद्रवनिवारणम् । यथा शान्ता पृथिवी शान्तं पापम् इत्यादौ । २ वेदान्तिनस्तु कामक्रोधादिजयः विषयेभ्यो मनसो निवारणं

च इत्याहुः । ३ दुर्गादेवी इति शाक्ता आहुः । ४ दैवज्ञास्तु पूजाहोमजपदानादिद्वारा गोचरविलग्नादिस्थग्रहदौस्थ्यदुःस्वप्नादिसूचितैहिकानिष्टहेतुपापनिवृत्तिः । तदुक्तम् यथा शस्त्रप्रहाराणां कवचं विनिवारकम् । तथा दैवोपघातानां शान्तिर्भवति वारणम् ॥ ( मलमासधृतवाक्यम् ) । यथा उदकशान्तिः वास्तुशान्तिः भुवनेश्वरीशान्तिः इत्याहुः । आलंकारिकास्तु शमस्थायिभावकनिर्वेदव्यभिचारिभावकशान्ताख्यरसविशेषनिष्ठो धर्मविशेषः इत्याहुः । तदुक्तम् शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः । कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ॥ ( सा० द० परि० ३ श्लो० २४५ पृ० १८४ ) इत्यादि ।

**शाब्दज्ञानम्**—शाब्दबोधशब्दवदस्यार्थोनुसंधेयः ।

**शाब्दबोधः**—( अनुभवः ) पदज्ञानकरणकं ज्ञानम् ( मु० १ ) । तच्च वाक्यार्थज्ञानम् ( त० सं० ४ ) । अत्र व्युत्पत्तिः शब्दाज्जायमानो बोधः शाब्दबोधः इति । तत्र बोधे शाब्दत्वं च शब्दात्प्रत्येमि इत्यनुभवसिद्धो जातिविशेषः । अथ वा जन्यपदधीजन्यत्वव्यभिचार्यनुभवत्वाव्यापकजातिशून्यत्वे सति पदविषयकत्वाव्यभिचारिजातिशून्यधीत्वम् । विग्रहश्च जन्यपदधीजन्यत्वव्यभिचारिणी अनुभवत्वाव्यापिका च या जातिः प्रत्यक्षत्वादिः तच्छून्यत्वे सति पदविषयकत्वाव्यभिचारिणी या जातिः उपमितित्वम् तच्छून्यधीत्वम् ( त० प्र० परि० ४ पृ० ३ ) इति । अत्र पदप्रयोजनम् सत्यन्तं प्रत्यक्षानुमितिस्मृतीनां वारणाय । उपमितावतिव्याप्तिवारणाय शून्यान्तम् (न्या० म० परि० ४१ पृ० १–२) । शाब्दबोधलक्षणं तु शक्तिलक्षणान्यतरसंबन्धेन पदजन्यपदार्थस्मृतित्वावच्छिन्नकारणतानिरूपितकार्यत्वम् ( वाक्य० ४ ) । शाब्दबोधे च पदज्ञानं करणम् । पदार्थोपस्थितिर्व्यापारः । शाब्दबोधः फलम् । पदज्ञानस्य च शक्तिज्ञानम् आकाङ्क्षायोग्यतासंनिधीनां ज्ञानं च सहकारि इति नव्यनैयायिकानां मतम् । अत्र विज्ञेयम् । तस्यां पदार्थोपस्थितौ वृत्तित्वेन वृत्तिज्ञानं सहकारि न तु शक्तित्वेन लक्षणात्वेन वा प्रातिस्विकरूपेण ज्ञानं सहकारि इति । प्राञ्चां मतं तु तत्र शाब्दबोधे ज्ञायमानं पदमेव

करणम् । न तु पदज्ञानं करणम् ( त० प्र० ख० ४ पृ० १ ) ( मु० ४ पृ० १७४ ) ( भा० प० ) ( त० कौ० ) इति । अत्र नव्या आहुः । ज्ञायमानपदस्य करणत्वाङ्गीकारे पदाभावेपि मौनिश्लोकादिना हस्तचेष्टादिना च शाब्दबोध उत्पद्यते स न स्यात् । अतस्तत्र शाब्दबोधोपपत्तये पदज्ञानमेव करणम् न तु ज्ञायमानं पदं करणम् इत्यवश्यमङ्गीकर्तव्यम् ( मु० ४ पृ० १७४ ) इति । वाक्यार्थज्ञानमित्यस्य एकपदार्थेपरपदार्थसंसर्गविषयकं ज्ञानम् इत्यर्थः ( वाक्य० ४ ) । यथा गामानय इति वाक्यजन्यः गोकर्मकानयनानुकूलकृतिमांस्त्वम् इति शाब्दबोधः । अत्रेयं शाब्दबोधप्रक्रिया । प्रथमं गवादिपदानां गवादौ गवादिर्गवादिपदशक्यो लक्ष्यो वा इति संबन्धज्ञानम् । ततः कालान्तरे केनचित् गामानय त्वम् इत्युक्ते गवादिपदेभ्यो गवादीनर्थान्स्मरति । आकाङ्क्षादीज्ञानतस्तदनन्तरं गोकर्मकानयनानुकूलकृतिमांस्त्वम् इति शाब्दबुद्धिर्जायते ( वाक्य० ४ ) इति । अत्र पदस्य पदार्थस्मारकत्वं च एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम् इति न्यायेन बोध्यम् ( त० प्र० ४ पृ० ९२ ) । यथा वा चैत्रस्तण्डुलं पचति देवदत्तो ग्रामं गच्छति इत्यादितश्च शाब्दबोधः । नैयायिकमते कर्त्राख्यातस्थले चैत्रः पचतीत्यादौ पाकानुकूलकृतिमांश्चैत्रः इति शाब्दबोधः । कर्माख्यातस्थले तु चैत्रेण पच्यते तण्डुल इत्यादौ तृतीयाया आधेयत्वमर्थः । फलावच्छिन्नव्यापारो धात्वर्थः । आख्यातबलाच्च कृतेर्लाभः । तथा च चैत्रनिष्ठकृतिजन्यपाकजन्यफलशाली तण्डुलः इत्यन्वयबोधः ( त० प्र० ख० ४ पृ० ८५ ) । देवदत्तो ग्रामं गच्छतीत्यत्र द्वितीयाया अर्थः कर्मत्वम् । धातोरर्थो गमनम् । जनकत्वं संसर्गमर्यादया लभ्यम् । लटो वर्तमानत्वमर्थः । आख्यातस्य कृतिरर्थः । तत्संबन्धः संसर्गमर्यादालभ्यः । एकवचनाद्युपस्थापितमेकत्वादि सर्वत्र प्रथमान्तपदोपस्थापितेन्वेति । एवं च ग्रामकर्मकगमनजनकवर्तमानकृतिमान् एकत्वविशिष्टो देवदत्तः इत्यन्वयबोधः । यत्र कर्तरि कृतेर्बाधस्तत्राख्यातस्य व्यापारादौ लक्षणा । यथा रथो गच्छतीत्यत्र गमनजनकवर्तमानव्यापारवान् इत्यर्थः । देवदत्तेन

गम्यते ग्रामः इत्यस्य देवदत्तवृत्तिकृतिजन्यगमनजन्यफलशाली ग्रामः इत्यर्थः । तथा हि वृत्तित्वं संसर्गमर्यादया लभ्यम् । तृतीयायाश्च कृतिरर्थः । जन्यत्वं संसर्गः । गमनं धात्वर्थः । जन्यत्वं संसर्गः । फलं कर्मात्मनेपदार्थः । शालित्वं संसर्गः इति । भावप्रत्यये तु देवदत्तेन सुप्यते इत्यस्य देवदत्तवृत्तिकृतिजन्यः स्वापः इत्यर्थः । भावप्रत्ययस्थले फलाभावादात्मनेपदार्थो न भासते (तर्को० ४ पृ० ११)। शाब्दबोधो द्विविधः यथार्थः अयथार्थश्च । तत्राद्यः शाब्दप्रमा । सा च यथा नद्यास्तीरे पञ्च फलानि सन्ति इत्यादिवाक्यार्थगोचरयथार्थज्ञानम् । अत्र फलवत्प्रवृत्तिजननयोग्यत्वं यथार्थत्वम् इति विज्ञेयम् (त० कौ० १ पृ० ७)। द्वितीयः अग्निना सिञ्चति इत्याद्ययोग्यवाक्यजन्यः शाब्दबोधः । द्विविधोपि शाब्दबोधः प्रत्येकं द्विविधः भेदान्वयविषयकः अभेदान्वयविषयकश्च । तत्राद्यो राज्ञः पुरुषः इत्यादिवाक्यजन्यः । द्वितीयो नीलो घटः इत्यादिवाक्यजन्यः । अत्र अभेदान्वयबोधं प्रति समानविभक्तिलिङ्गवचनकत्वं प्रयोजकम् इति सामान्यनियमो विज्ञेयः । तत्र समानविभक्तिकत्वं च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम् विरुद्धविभक्तिराहित्यं वा (ग० व्यु० १)। शिष्टं तु समानविभक्तिकत्वशब्दे दृश्यम् । अत्र विप्रतिपत्तिः । सामान्यतः शाब्दबोधश्च धात्वर्थमुख्यविशेष्यकः प्रथमान्तार्थमुख्यविशेष्यको वा इति । तत्र धात्वर्थमुख्यविशेष्यक एव भवति इति वैयाकरणा आहुः । तत्र प्रमाणं तु भावप्रधानमाख्यातम् इति यास्कमुनिवचनम् । नैयायिकास्तु शाब्दबोधः प्रथमान्तार्थमुख्यविशेष्यक एव ज्यायान् इति प्राहुः । नैयायिकानां मते तु भावप्रधानमाख्यातम् इति निरुक्तस्य भावः धात्वर्थः प्रधानं विशेष्यः यस्य आख्यातार्थस्य इति शाब्दिकादिसंमतं बहुव्रीहिमनादृत्य भावस्य प्रधानम् इति षष्ठीतत्पुरुष आश्रीयते । लाघवात् । तत्र धात्वर्थमुख्यविशेष्यकशाब्दबोधाङ्गीकर्तृवैयाकरणमते तादृशबोधोपपादकमुख्योदाहरणानि च चैत्रेण सुप्यते पश्य मृगो धावति पचति भवति शृणु मेघो गर्जति इत्यादीनि । अत्र चैत्रेण सुप्यते इत्यादौ चैत्रकर्तृकः स्वापः इति क्रियामुख्य-

विशेष्यकः सर्वतन्त्रसिद्धो बोधः । पश्य मृगो धावति इत्यादौ मृगाभिन्नकर्तृकं धावनं पश्य इति क्रियामुख्यविशेष्यको बोधः । अत्र वैयाकरणानामयमाशयः । धावनक्रियाया एव दृशिक्रियायां कर्मतयान्वयो विवक्षितः । तस्याश्च प्रातिपदिकार्थत्वाभावान्न धावतिपदोत्तरं द्वितीया । नैयायिकमते तु मृगपदार्थस्य दृशिक्रियायामन्वयेन तस्य प्रातिपदिकार्थत्वेन च मृगपदोत्तरं द्वितीयापत्तिः इति । पचति भवति इत्यादौ पाकाभिन्नकर्तृकं भवनम् इति क्रियामुख्यविशेष्यको बोधः । शृणु मेघो गर्जति इत्यादौ तु मेघाभिन्नकर्तृकं गर्जनं शृणु इति गर्जनरूपधात्वर्थमुख्यविशेष्यकः शाब्दबोधो वैयाकरणानां संमतः । अत्रायं भावः । श्रुधात्वर्थश्रवणक्रियायां शब्दरूपस्य गर्जनस्यैव योग्यतयान्वयः । न तु नैयायिकमत इव गर्जनकर्तृमेघस्य कर्मतासंबन्धेनान्वयः । अयोग्यत्वात् इति । प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधाङ्गीकर्तृनैयायिकमते तादृशबोधोपपादकमुख्योदाहरणानि तु घटो न भवति पटः त्रयः कालाः पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः । अश्वो गच्छत्यानय इत्यादीनि द्रष्टव्यानि । घटो न भवति पटः इति वाक्यात् घटभेदवान् पटः इति प्रथमान्तार्थमुख्यविशेष्यको बोधः । त्रयः कालाः इत्यत्र त्रित्वविशिष्टाः कालाः इति कालमुख्यविशेष्यक एव बोधः । अत्र नैयायिकानामयमाशयः । त्रयः कालाः इत्यत्र क्रियासमभिव्याहाराभावान्न क्रियामुख्यविशेष्यको बोधः । कालत्रयस्य जीवेन ज्ञातुमशक्यत्वेन जीवेन ज्ञायन्ते इत्यध्याहारासंभवः । ईश्वरेण ज्ञायन्ते इत्यध्याहारे क्रियमाणे तु मानाभावः । अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोप्यस्ति इति महाभाष्योक्त(२।३।२) नियमानुसारेण सन्ति इत्यस्य तु नाध्याहारः संभवति । इदानीं त्रयाणां कालानामविद्यमानत्वात् इति । परमधार्मिको बकः पश्य इत्यादौ परमधार्मिकत्वविशिष्टबकं पश्य इति बोधः । अत्रायं भावः । परमधार्मिकत्वविशिष्टबकस्य वाक्यार्थत्वेन पदार्थत्वाभावात्प्रातिपदिकार्थत्वमेव नास्ति इति न बकपदोत्तरं द्वितीयापत्तिः । एवमेव पश्य मृगो धावति इत्यादावप्युपपत्तिर्द्रष्टव्या । पचति भवति इत्यादौ तु तथा भाष्यप्रयोगादेव क्रियामुख्यवि-

शेष्यकबोधः स्वीक्रियते। न तु आधुनिकप्रयोगात्तथाबोधोस्माभिः स्वीक्रियते। अश्वो गच्छत्यानय इत्यादौ च गमनकर्त्रश्वमानय इति प्रथमान्तार्थमुख्यविशेष्यक एव शाब्दबोधो नैयायिकानामभिमतः। अत्रायं भावः। शृणु मेघो गर्जति इत्यादौ वैयाकरणमते मेघकर्तृकगर्जनस्य श्रवणक्रियायामन्वयोपपत्तावपि अश्वो गच्छत्यानय इत्यादौ तन्मते अश्वकर्तृकगमनस्यानयनक्रियायामन्वयायोग्यतया बाधादन्वयानुपपत्तिः। अतः गमनकर्त्रश्वस्यैवानयनक्रियायामन्वयः स्वीकार्यः इति लब्धोयं प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधो नैयायिकानाम्। किं च शृणु मेघो गर्जति नटो गायति शृणु घटो नश्यति पश्य इत्यादौ श्रवणादिक्रियायां मेघाद्यन्वयासंभवेपि सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमनुभवतः इति न्यायेन विशेषणेषु गर्जनगाननाशेषु श्रवणदर्शनान्वयसंभवः। अत एव शङ्खाः श्रूयन्ते भेर्यः श्रूयन्ते इति महाभाष्यम् अश्रूयत पाञ्चजन्यः इति माघप्रयोगश्च ( स० ३ श्लो० २१ ) संगच्छते इति। वैयाकरणास्त्वेवमत्रोपपत्तिं चक्रुः अश्रूयत पाञ्चजन्यः वीणा श्रूयते पुष्पाण्याघ्रायन्ते इत्यादौ धर्मधर्मिणोरभेदोपचाराच्छ्रवणाद्यन्वय उपपद्यते ( माघ० टी० ३।२१ ) इत्यलं विस्तरेण। मीमांसकास्तु सर्वत्राख्यातार्थव्यापारमुख्यविशेष्यक एव शाब्दबोधो भवति इत्यङ्गीचक्रुः।

**शाब्दिकः**—व्याकरणशास्त्राभिज्ञः। यथा पाणिनिः शाब्दिकः। अत्र व्युत्पत्तिः शब्दसाधुताज्ञापकं शास्त्रं वेत्त्यधीते वा (ठक्) इति। अष्टौ शाब्दिकाः इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः। पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥ ( कविकल्पद्रुमे ) इति।

**शाब्दी भावना**—पुरुषप्रवृत्त्यनुकूलभावकव्यापारविशेषः ( मी० न्या० पृ० १ )।

**शारदः**—अपराद्धः ( पु० चि० पृ० ३५२ )।

**शालग्रामः**—१ पर्वतविशेषः। २ तत्रत्यो विष्णुमूर्तिविशेषः। ३ गण्ड-

क्या नद्या एकदेशस्थलविशेषजातो विष्ण्वादिदेवचक्रयुतशिलाविशेषः । यथा ब्राह्मणगृहे नित्यं पूजनीयाः श्रीवासुदेवहयग्रीवश्रीलक्ष्मीनृसिंहसीतारामाख्याः शालग्रामाः । शालग्रामोत्पत्तिप्रकारस्तु कीटयोनिं प्रपद्येथाः इति गण्डक्याः सुरान् प्रति शापे तेन कर्मविपाकेन जडा कृष्णा नदी भव इति देवानां गण्डकीं प्रति शापे च जाते विष्णुना तत्समाधानायोक्तं यथा शृणु ब्रह्मन् महादेव शृणु देव गजानन । मद्रणौ ब्राह्मणौ ग्राहमातङ्गौ शापतोत्र वै ॥ भविष्यतस्तयोर्मोक्षं वदिष्यामि कलेवरम् । शीर्णं भविष्यति यदा तन्मेदोमज्जसंभवाः ॥ पाषाणान्तर्गताः कीटाः वज्राख्याः प्रभविष्यथ ( ब्रह्मवै० अ० १९ ) इत्यादि । वासुदेवादिनामफलभेदास्तु वराहपुराणे ज्ञेयाः । अत्र प्रशंसा शालग्रामशिलास्पर्शं ये कुर्वन्ति दिने दिने । वाञ्छन्ति करसंस्पर्शं तेषां देवाः सवासवाः ॥ इति ।

**शासनम्**—१ [ क ] प्रवर्तकव्यापारः । स च धर्मं कुरु इत्यादिविधिघटितोपदेशरूपः । यथा माणवकं धर्मं शास्ति इत्यादौ शास्तेरर्थः ( ल० म० ) । [ ख ] निकृष्टस्य हितसाधनं प्रवर्तनम् । २ राजदत्तभूमिः । ३ राजलेख्यविशेषः । ४ शिक्षा ( दण्डः ) इति व्यवहारज्ञा आहुः ।

**शास्त्रम्**—[ क ] प्रमाणादिवाचकपदसमूहः व्यूहविशिष्टः । यथा पञ्चाध्यायी न्यायदर्शनम् शास्त्रम् ( न्या० वा० पृ० १–२ ) । अत्र व्युत्पत्तिः शिष्यतेनेन ( शास-ष्ट्रन् ) इति शास्त्रम् । [ ख ] ज्ञानविशेषाधायकग्रन्थः । यथा वैशेषिकदर्शनम् । [ ग ] ऋग्यजुःसामाथर्वा च भारतं पञ्चरात्रकम् । मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥ ( सर्व० सं० पृ० १५७ पूर्णप्र० ) । [ घ ] शास्ति च त्रायते चेति शास्त्रम् । यच्छास्ति वः क्लेशरिपूनशेषान् संत्रायते दुर्गतितो भवाच्च । तच्छासनात्त्राणगुणाच्च शास्त्रमेतद्द्वयं चान्यमतेषु नास्ति ॥ ( नागार्जुनकृतकारिका ५ बौद्धदर्शने ) । शास्त्रं द्विविधम् सच्छास्त्रम् असच्छास्त्रं च । तत्र सच्छास्त्रं हितानुशासनग्रन्थः । यथा ऋगादिशास्त्रम् । तदुक्तं स्कान्दे ऋग्यजुःसामाथर्वा च भारतं पञ्चरात्रकम् । मूलरामायणं चैव

शास्त्रमित्यभिधीयते॥ यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्। अतोन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्॥ (मध्वभाष्य० १।१।३ पृ० १५) इति। असच्छास्त्रं तु बौद्धचार्वाकादिप्रणीतशास्त्रम्। सांख्ययोगादिकं पाशुपतादिशास्त्रं च स्वबुद्धिरचितत्वेनासदेवेति विभावनीयम्। तद्यथोक्तम् अतो वेदविरुद्धार्थशास्त्रोक्तं कर्म संत्यजेत्। स्वबुद्धिरचितैः शास्त्रैः प्रतार्येह च बालिशान्॥ विघ्नन्ति श्रेयसो मार्गं लोकनाशाय केवलम्। निन्दन्ति देवता वेदांस्तपो निन्दन्ति सद्विजान्॥ तेन ते निरयं यान्ति ह्यसच्छास्त्रनिषेवणात्। श्रुतिस्मृतिसदाचारविहितं कर्म शाश्वतम्॥ स्वं स्वं धर्मं प्रयत्नेन श्रेयोर्थीह समाचरेत्। स्वबुद्धिरचितैः शास्त्रैर्मोहयित्वा जनं नराः॥ तेन ते निरयं यान्ति युगानां सप्तविंशतिम् (पद्मपु० अ० १७) (वाच०) इति। तामसशास्त्राणि च पद्मपुराणे पार्वतीं प्रतीश्वरेणोक्तानि यथा शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम्। येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि॥ प्रथमं हि मयैवोक्तं शैवं पाशुपताभिधम्। मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम्॥ कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत्। गौतमेन तथा न्यायं सांख्यं तु कपिलेन वै॥ द्विजन्मना जैमिनिना पूर्वं वेदमपार्थतः। निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम्॥ धिषणेन च संप्रोक्तं चार्वाकमतिगर्हितम्। दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा॥ बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम्। मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च॥ मयैव कथितं देवि कलौ ब्राह्मणरूपिणा। अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम्॥ कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते। सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र चोच्यते॥ परात्मजीवयोरैक्यं मयात्र प्रतिपाद्यते। ब्रह्मणोस्य परं रूपं निर्गुणं दर्शितं मया॥ सर्वस्य जगतोप्यस्य नाशनार्थं कलौ युगे। वेदार्थवन्महाशास्त्रं मायावादमवैदिकम्॥ मयैव कथितं देवि जगतां नाशकारणात् (सांख्यप्रवचनभाष्यप्रस्तावनायां धृतानि पद्मपुराणवचनानि पृ० ६—७) (वाच०)।

**शिक्षा—१ [ क ]** कर्तव्यत्वेन ज्ञानम् (राम०)। यथा ग्रन्थारम्भे

शिष्या अपि मङ्गलं कुर्युः इति शिष्यशिक्षायै निबन्धं कुर्वन् ( दि० १ पृ० १ ) इत्यादौ शिक्षाशब्दस्यार्थः । [ ख ] प्रवृत्तिप्रयोजकेष्टसाधनताज्ञानम् । यथा शिष्यशिक्षार्थं मङ्गलं निबध्नाति इत्यादौ शिक्षाशब्दस्यार्थः । २ [ क ] स्वस्य विद्याप्राप्त्यनुकूलव्यापारः ( विद्योपादानम् ) । यथा अशिक्षतास्त्रं पितुरेव मन्त्रवत् ( रघु० ३।३१ ) इत्यादौ । [ ख ] अध्यापनम् । यथा शिक्षक इत्यादौ । ३ वैदिकास्तु वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा ( वेदाङ्गम् ) । छान्दसत्वादिकारस्य दीर्घोपि भवति । यथा शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम संतानः । इत्युक्तः शीक्षाध्यायः ( तैत्ति० उप० ) इति । अस्याः शिक्षायाश्च पाणिनिशिक्षानारदशिक्षाव्यासशिक्षादयो ग्रन्थाः सन्ति ।

**शिथिलः**—( गुणः ) अदृढः संयोगविशेषः । स च तूलकादौ परिमाणं जनयति ( भा० प० गु० श्लो० ११३ ) । अत्र शिष्टं तु प्रचयशब्दव्याख्याने दृश्यम् ।

**शिरा**—स्थूलनाडी ( संगीतरत्नाकरे ) ।

**शिवः**—शिवशब्देन शिवत्वयोगिनां मन्त्रमन्त्रेश्वरमहेश्वरमुक्तात्मशिवानां सवाचकानां शिवत्वप्राप्तिसाधनेन दीक्षादिनोपायकलापेन सह पतिपदार्थे संग्रहः ( सर्व० सं० पृ० १८० शै० ) । शिवत्वं च पाशजालापोहने नित्यनिरतिशयदृक्क्रियारूपचैतन्यात्मकत्वम् (सर्व० सं० पृ० १८२ शै०)।

**शिष्टः**—१ [ क ] फलसाधनत्वांशे भ्रान्तिरहितः ( दि० १ पृ० ५ ) । अत्र शिष्टत्वं च क्षीणदोषपुरुषत्वम् । यथा मन्वादीनां शिष्टत्वम् इति प्राञ्च आहुः ( न्या० सि० दी० पृ० २ ) । [ ख ] इष्टसाधनत्वांशे अभ्रान्तः ( मू० म० १ ) । यथा मन्वादिः शिष्टः ( म० वा० १ ) । [ ग ] धर्मज्ञास्तु स्वीकृतवेदप्रमाणभावः । सर्वे वेदाः स्वस्वतात्पर्यविषयार्थे प्रमाणम् इत्याकारकानाहार्यनिश्चयवान् इत्यर्थः । अत्र बालकपतितान्त्यजाद्यतिरिक्तः इति विशेषणमस्ति ( मू० म० १ पृ० १०६–१०८ ) । [ घ ] वेदप्रामाण्याभ्युपगन्तृत्वे सति यो यदा

वेदनिषिद्धाकर्ता स इत्याहुः ( चि० मङ्ग० १।१०६-१०८ ) । यथा शुकोद्दालकादिः शिष्टः । अत्राभिधीयते । न पाणिपादचपलो न नेत्रचपलो मुनिः । न च वागङ्गचपल इति शिष्टस्य लक्षणम् ॥ ( भार० आश्व० ) इति । धर्मो नातिगतो यैस्तु वेदः सपरिबृंहितः । ते शिष्टा ब्राह्मणाः प्रोक्ता नित्यमात्मगुणान्विताः ॥ ( कूर्मे० उप० १ अ० ४) इति । विशेषशब्दनिष्ठस्तु शेषः शिष्टः प्रकीर्त्यते । मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्मिकाः ॥ मनुः सप्तर्षयश्चैव लोकसंतानकारणात् । तिष्ठन्तीह च धर्मार्थं तान्शिष्टान् परिचक्षते ॥ तैः शिष्टैः स्थापितो धर्मः स्थाप्यते वै युगे युगे ॥ ( मत्स्यपु० अ० १२० ) इति । [ ङ ] कर्मज्ञाश्च वेदोक्ततत्त्वज्ञानेन वेदविहितकर्मकारी ( नील० पृ० २ ) ( सि० च० ) । यथा जनकश्वेतकेत्वादिः शिष्ट इत्याहुः । २ कृतशासनः । ३ अवशिष्टः पदार्थः ।

**शिष्टाचारः**—सद्व्यवहारः । यथा मङ्गलं वेदबोधितकर्तव्यताकम् अलौकिकाविगीतशिष्टाचारविषयत्वात् दर्शादिवत् ( त० दी० १ ) इत्यादौ शिष्टाचारशब्दस्यार्थः । अत्राहुः । शिष्टाचारत्वं च शिष्टेन परलोकानुकूलतया क्रियमाणत्वम् । प्रतिबन्धकदुरितवारणमुद्दिश्य क्रियमाणत्वं वा । अश्वमेधकारीर्यादौ व्याप्तिः सुप्रसिद्धा इति । अथ वा यत्कार्यं प्रति यस्य कारणत्वमन्वयव्यतिरेकोपजीवनेन न गृह्यते तत्कार्यमुद्दिश्य शिष्टेन तस्य क्रियमाणत्वम् ( न्या० सि० दी० पृ० २ ) इति । अत्रेदं बोध्यम् । आचारश्चैव साधूनाम् ( २।६ ) इति मनुना आचारस्य धर्मे प्रामाण्यमुक्तम् । स च वेदाविरुद्ध एव प्रमाणम् । श्रुतिस्मृत्योर्भिन्नविषयत्वे सदाचारेण तत्र धर्मो निर्णेयः । श्रुतिविरोधे स्मृतेरप्रामाण्यवत् स्मृतिविरोधे सदाचारस्य न धर्मनिर्णायकत्वम् । तेन दाक्षिणात्यानां मातुलकन्यापरिणयस्य शिष्टैराचर्यमाणत्वेपि न प्रामाण्यम् । तदेतत् विरोधे त्वनपेक्षं स्यात् असति ह्यनुमानम् ( जैमिनि० अ० १ पा० ३ सू० ३ ) इत्यनेन निर्णीतम् । वसिष्ठेनापि तदभावे शिष्टाचारः प्रमाणम् इत्युक्तम् । ततश्च शिष्टाचारेण मूलस्मृतिरनुमीयते । यथा होलिकाद्याचारात् । ततः स्मृत्या

मूलश्रुतिरनुमातव्या ( अधिकरणमाला १।३ अधि० ४ ) इति । अत्राभिधीयते । ततः स्मार्तः स्मृतो धर्मो वर्णाश्रमविभागशः । एवं वै विविधो धर्मः शिष्टाचारः स उच्यते ॥ त्रयी वार्ता दण्डनीतिः प्रजावर्णाश्रमेज्यया । शिष्टैराचर्यते यस्माच्छिष्टाचारः स शाश्वतः ॥ दानं सत्यं तपोलोभो विद्येज्या पूजनं दमः । अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम् ॥ शिष्टमस्माचरन्त्येनं मनुः सप्तर्षयश्च ये । मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः ॥ श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः । शिष्टाचारविरुद्धस्तु स धर्मः साधुसंमतः ॥ ( मत्स्यपु० अ० १२५ ) इति । तपोलोभ इत्यत्र तपः अलोभः इति पदच्छेदः ।

**शिष्यः**—शिक्षणीयः ( उपदेश्यश्छात्रः ) । यथा श्रीसत्यवतीसुतबादरायणव्यासस्य शिष्यः श्रीपूर्णप्रज्ञाचार्यः ( मध्वाचार्यः ) । शिष्यलक्षणं च शान्तो विनीतः शुद्धात्मा श्रद्धावान् धारणे क्षमः । समर्थश्च कुलीनश्च प्राज्ञः सच्चरितो धनी ॥ एवमादिगुणैर्युक्तः शिष्यो भवति नान्यथा ( तन्त्रसा० ) इति । अत्रोच्यते गुरुता शिष्यता वापि तयोर्वत्सरवासतः इति । तथा चोक्तं सारसंग्रहे सद्गुरुः स्वाश्रितं शिष्यं वर्षमात्रं प्रतीक्षयेत् । वर्षेकेन भवेद्योग्यो विप्रो गुणसमन्वितः ॥ इत्यादि । आचारं शासयेद्यस्तु स आचार्य उदाहृतः । य आचार्यपराधीनस्तद्वाक्यं धार्यते हृदि ॥ शासने स्थिरवृत्तिश्च शिष्यः सद्भिरुदाहृतः ( पद्मपु० उ० अ० २५ ) ।

**शीतः**—१ ( गुणः ) स्पर्शविशेषः । यथा शीतस्पर्शवत्य आपः ( त० सं० ) इत्यादौ । अत्र शीतत्वं च स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः इति ज्ञेयम् । २ शीतस्पर्शयुक्तः पदार्थः । यथा शीतं शिलातलम् ( मु० १ ) इत्यादौ शीतशब्दस्यार्थः । ३ वृक्षविशेषः ।

**शुक्रम्**—१ मज्जातश्चरमधातुः । अत्रोक्तम् रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते । मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य संभवः ॥ ( भावप्र० ) इति । ततः स्थूलो भागो रसो मासेन पुंसां शुक्रम् स्त्रीणां चार्तवं शुक्रं च भवति । उक्तं च सुश्रुते एवं मासेन रसः शुक्रो भवति स्त्रीणां चेति । एवं च रस एव केदारकुल्यान्यायेन सर्वान् धातून् पूरयन् मासेन नव-

दण्डोत्तरेण शुक्रसार्तवं च भवति इति सिद्धान्तः ( वाच० ) । अथ शुक्रस्य स्थानमाह । यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा । एवं हि सकले काये शुक्रं तिष्ठति देहिनाम् ॥ इति । कण्डराणां प्ररोहः स्यात् स्थानं तद्वीर्यमूत्रयोः । स एव गर्भस्याधानं कुर्याद्गर्भाशये स्त्रियाः ॥ वृषणौ भवतः सारात् कफासृग्भ्यां च मेदसाम् । वीर्यवाहिसिराधारौ तौ मतौ पौरुषावहौ ॥ ( भावप्र० ) । अथ शुक्रस्य क्षरणमार्गमाह । द्व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्य चाप्यधः । मूत्रस्रोतःपथे शुक्रं पुरुषस्य प्रवर्तते ॥ ( भावप्र० ) ( वृद्धवाग्भट० ) इति । २ दैत्यगुरुः । अस्य शुक्र इति नाम्नि कारणमाह नन्दिनापहृते शुक्रे गिलिते च विषादिना इत्युपक्रम्य तेन शब्देन महता शुक्रः शंभूदरे स्थितः इत्यभिधाय शाम्भवेनाथ योगेन शुक्ररूपेण भार्गवः । चस्कन्द च स नामापि ततो देवेन भाषितः ॥ ( काशीखण्ड० ) इत्याद्युक्तम् । अयं ग्रहविशेषः । ३ अग्निः । ४ ज्येष्ठमासः । ५ विष्कम्भादिषु (२७) योगेषु चतुर्विंशो योगविशेषः ।

**शुक्लपक्षः**—चन्द्रकलावृद्ध्यधिकरणकालः ( पु० चि० पृ० २१ ) ।

**शुचिः**—१ शुक्लवर्णः । २ स्नानादिजन्यपुण्यविशेषवान् । अत्र शुचिस्तत्कालजीवी कर्म कुर्यात् इत्यनया श्रुत्या शौचस्य कर्माङ्गत्वमुक्तम् । ३ शौचापरपर्यायशुद्धिमान् । अत्रोच्यते । रूपगन्धरसस्पर्शैः शास्त्रोक्तैर्युक्तमुत्तमम् । प्रोक्षिताभ्युक्षितं द्रव्यं शुच्यन्यदशुचि स्मृतम् ॥ स्वतः शुच्यपि वाग्दुष्टं भावदुष्टमथापि वा । अशुचि स्यात् ( त० स० पृ० २३२ ) इति । अत्राधिकं च शुद्धिशब्दव्याख्याने द्रष्टव्यम् । ४ सूर्यः । ५ अग्निः । ६ अर्कवृक्षः । ७ आषाढमासः ।

**शुद्धत्वम्**—१ तदितरधर्मानाक्रान्तत्वम् । यथा शुद्धपर्वतत्वावच्छिन्नोद्देश्यतानिरूपितशुद्धसंयोगसंबन्धावच्छिन्नशुद्धवह्नित्वावच्छिन्नविधेयताकानुमितिं प्रति ( ग० २ संश० पक्ष० ) इत्यादौ पर्वतत्वादेः शुद्धत्वम् । अयमाशयः । पर्वतो वह्निमान् धूमात् इत्यादौ सामानाधिकरण्यसंबन्धेन सौन्दर्यविशिष्टं पर्वतत्वमपेक्ष्य केवलपर्वतत्वस्य शुद्धत्वम् । सौन्दर्य-

विशिष्टपर्वतत्वं तु न शुद्धम् । तस्य पर्वतत्वातिरिक्तसौन्दर्यरूपधर्माक्रान्तत्वात् इति । २ शुद्धियुतम् ।

**शुद्धा**—( लक्षणा ) [ क ] स्वशक्येन साक्षात्संबन्धः । यथा आयुर्घृतम् इत्यादौ । अत्रायं भावः । आयुर्घृतयोः सामानाधिकरण्यानुपपत्त्या आयुःपदमायुःसाधनं लक्षयति । तत्र आयुःपदे शक्यजीवनकालसाधनत्वरूपसाक्षात्संबन्धस्य सत्त्वात् ( म० प्र० ४ पृ० ४१ ) इति । इयं लक्षणा जहल्लक्षणायामजहल्लक्षणायां चान्तर्भवति इति नातिरिक्ता इति ज्ञेयम् ( न्या० म० ४ पृ० १० ) । [ ख ] सादृश्याद्भिन्नः शक्यसंबन्धः । यथा आयुर्घृतम् इत्यादौ आयुःपदे लक्षणा । अत्र सादृश्यादन्यः शक्यसंबन्धश्च जन्यजनकभावः । तथा चात्र आयुःपदस्यायुर्जनके लक्षणा । तत्र आयुःपदशक्यसंबन्धो जनकत्वरूपो बोध्यः । तेन आयुर्जनकाभिन्नं घृतम् इत्यन्वयबोधः ( त० प्र० ख० ४ पृ० ३६ ) । यथा वा गङ्गायां घोषः इत्यादौ गङ्गापदे लक्षणा । अत्र सादृश्यादन्यः शक्यसंबन्धस्तु संयोग एव । स च प्रवाहप्रतियोगिकतीरानुयोगिकः इति विज्ञेयम् । सा च शुद्धा लक्षणा द्विविधा जहल्लक्षणा अजहल्लक्षणा चेति ( न्या० म० ४ पृ० १० ) । एते एव लक्षणे लक्षणलक्षणा उपादानलक्षणा चेत्यालंकारिकैर्व्यवह्रियेते ( काव्यप्र० उ० २ श्लो० १० ) ।

**शुद्धाद्वैतम्**—वेदान्तमतविशेषः । यथा वल्लभाचार्यमतं शुद्धाद्वैतम् । अत्र व्युत्पत्तिः शुद्धयोः कार्यकारणयोर्जीवब्रह्मणोः अद्वैतम् ऐक्यम् यत्र तत् इति । अत्र शुद्धत्वं च मायासंबन्धराहित्यम् । तच्च इतरसंबन्धानवच्छिन्नकार्यकारणादिरूपद्वित्वप्रकारकज्ञानप्रतियोगिकाभाववत्त्वम् इति । केचित्तु शुद्धं च तत् अद्वैतं च इति कर्मधारयसमासमङ्गीचक्रुः । एतन्मते भक्तिमार्गः जीवब्रह्मणोरंशांशिभावः सत्कार्यवादः अहिकुण्डलवत्परिणामवादः जगतः सत्यत्वम् आविर्भावतिरोभावौ च एतानि स्वीक्रियन्ते इति ज्ञेयम् । अत्र स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि

भूतानि व्युच्चरन्ति (बृह० उप० २।१।२०) इति श्रुतिरंशांशिभावे प्रमाणम् । तथा प्रपञ्चः संसारश्चेति द्विविधा सृष्टिः । तत्र प्रपञ्चस्य भगवत्कार्यत्वेन सत्यत्वं नित्यत्वं च । संसारस्य तु मायाकार्यत्वेन मिथ्यात्वमेव इति । एतन्मते अभावमात्रं न स्वीक्रियते इति हृदयम् । अत्र संग्रहः शुद्धाद्वैतप्रचारेण मायावादनिवर्तकान् । श्रीमदाचार्यचरणान् प्रणमामि पुनः पुनः ॥ इति । वल्लभाचार्यैः षोडश ग्रन्थाः कृताः इति ज्ञेयम् ।

शुद्धिः—१ मार्जनम् नैर्मल्यसंपादनं वा । तच्च [क] भस्मादिसंयोगसमानकालीनास्पृश्यस्पर्शप्रतियोगिकयावदभावसहितभस्मादिसंयोगध्वंसः । यथा भस्मना कांस्यादिपात्रादिशुद्धिः (त० दी०) । अत्र कालीनान्तं यावत्त्वं चाभावविशेषणम् । तादृशाभावसाहित्यं च ध्वंसविशेषणम् इति बोध्यम् । यावदभावसहितेत्यत्र साहित्यं च संबन्धविशेषनियन्त्रितं सामानाधिकरण्यम् (नील० पृ० ४६–४७) । अत्रान्ये आहुः । भोजनादिरूपकार्यार्हतारूपा कांस्यादावाधेयशक्तिः पदार्थान्तरमेव शुद्धिः । यद्वा शुद्धिजनकत्वाभिमतेनाम्लादियोगेन ताम्रादौ तत्तद्द्रव्ये देवतासंनिधिरेव शुद्धिः । एवम् प्रतिमादौ प्रतिष्ठादिना देवतासंनिधिरेव शुद्धिः । तथा घटादावपि शुद्धप्रतिज्ञादिकमपेक्ष्य प्रतिष्ठाविधिना जयप्रयोजकीभूतो धर्मो जन्यते । अशुद्धप्रतिज्ञामपेक्ष्य भङ्गप्रयोजकः अधर्मो जन्यते इत्याद्यूह्यम् इति । एवम् परमाणुगतपाकजविशेषगुणात्पार्थिवकार्यविशेषो द्रष्टव्यः । जलादावदृष्टादिनिमित्तभेदात्कार्यवैजात्यमूहनीयम् (चि०) । एवम् शुद्ध्यन्तरमपि स्वयमूह्यम् । [ख] तत्तत्समयावच्छेदेन भस्मादिसंयोगप्रतियोगिकानादिसंसर्गाभावः । स च तत्तत्समानकालीनचाण्डालादिस्पर्शादिप्रतियोगिकयावदनादिसंसर्गाभावसमानाधिकरणः (न्या० सि० दी० पृ० २०) । २ धर्मज्ञास्तु वैदिककर्मयोग्यत्वसंपादकसंस्कारविशेष इत्याहुः । अत्र केचिदाहुः स च संस्कारो भस्मादिप्रयोक्तृनिष्ठ एव इति । तदर्थस्तु भस्मादिसंयोगजनितः कांस्याद्युपभोक्तृनिष्ठः संस्कारः इति । अत्रेदमधिकं बोध्यम् । शुद्ध्यशुद्धी शास्त्रज्ञाप्ये संस्काररूपे ।

यथोक्तम् । शुद्ध्यशुद्ध्योः संस्काररूपत्वेनैकपुरुषस्यैकदोभयस्थितिर्घटते । शुद्धेर्भावरूपत्वे अशुद्धेस्तदभावरूपत्वे नैतत् घटते । विरोधात् । अत एव शङ्खः ततः श्राद्धमशुद्धौ तु कुर्यादेकादशे तथा । कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥ इति । अशुद्धौ चतुर्थाहादौ इत्यर्थः । तात्कालिकी श्राद्धविधानाक्षेपात् तन्मात्रनिष्ठा शुद्धिः कल्प्यते इत्यर्थः । कर्मान्तरे त्वशुद्ध एव सः । एवम् शुद्धेर्भावरूपत्वे अशौचस्य तदभावरूपत्वे विरोधः । तथात्वे अशौचसंकरोपि न स्यात् । एकस्मिञ्छुद्ध्यभावरूपे अशौचे सत्यपरस्य तद्रूपस्य तदानीं तत्पुरुषीयशुद्धिरूपप्रतियोग्यन्तराभावादनुपपत्तेः । तस्माच्छुद्ध्यशुद्ध्योर्भावरूपत्वम् ( श्रा० वि० ) ( शुद्धितत्व० ) ( वाच० ) । अत्राधिकं तु पद्मपुराणे ( उत्त० ख० अ० १९ ) द्रष्टव्यम् । २ दुर्गा देवी इति शाक्ता आहुः ( देवीपु० ) । ४ विशुद्धिशब्दवदस्यार्थोनुसंधेयः ।

**शून्यम्**—१ अत्यन्ताभाववत् । यथा ज्ञानशून्यः पुरुषः इत्यादौ । २ निर्जनस्थानम् । ३ आकाशः ( शब्दच० ) । ४ बिन्दुमात्रम् (हेमच०) । ५ असंपूर्णम् । ६ ऊनम् । ७ तुच्छं च ( त्रिं० अमरः ) ।

**शृङ्गारः**—१ रसविशेषः । स च स्त्रीपुंसयोरन्योन्यसंयोगं प्रतीच्छाविशेषः । अत्र व्युत्पत्तिः शृङ्गमृच्छति इति शृङ्गारः । अत्रार्थे शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः । उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ॥ ( सा० द० परि० ३ श्लो० १८३ ) इति । अयं शृङ्गारो द्विविधः विप्रलम्भः संभोगश्चेति ( सा० द० परि० ३ श्लो० १८६ ) । अत्रोक्तम् पुंसः स्त्रियां स्त्रियः पुंसि संयोगं प्रति या स्पृहा । सा शृङ्गार इति ख्याता रतिक्रीडादिकारणम् ॥ इति । २ भूषणम् । ३ लवङ्गम् । ४ सिन्दूरम् ( वाच० ) ।

**शृङ्गारणम्**—रूपयौवनसंपन्नां कामिनीमवलोक्यात्मानं कामुकमिव यैर्विलासैः प्रदर्शयति तच्छृङ्गारणम् ( सर्व० सं० पृ० १७० नकु० ) ।

**शेषः**—१ अवशेषः । स च कश्चित् कार्यम् व्यतिरेको वा । यथा पूर्ववच्छेषवत्सामान्यतो दृष्टं च ( गौ० १।१।५ ) इत्यादौ शेषशब्दार्थः ।

२ परिशेषः । यथा सदनित्यमित्येवमादिना द्रव्यगुणकर्मणामविशेषेण सामान्यविशेषसमवायेभ्यो निर्भक्तस्य शब्दस्य तस्मिन्द्रव्यकर्मगुणसंशये न द्रव्यमेकद्रव्यत्वात् न कर्म शब्दान्तरहेतुत्वात् यस्तु शिष्यते सोयम् इति शब्दस्य गुणत्वप्रतिपत्तिः ( वात्स्या० १।१।५ ) । ३ शाब्दिकास्तु उक्तादन्यः शेषः । तदर्थश्च उक्तात् कर्मत्वकरणत्वसंप्रदानत्वापादानत्वाधिकरणत्वादिभ्यः अन्यः संबन्धादिः शेषः इति । कारकाणामविवक्षेति भावः । यत्र न कारकं कारकार्थो वा विवक्ष्यते स शेषः । तद्यथा ब्राह्मणस्य कमण्डलुः ( न्या० वा० १ पृ० ११ ) इति । यथा वा प्रमाणादीनां तत्त्वम् राज्ञः पुरुषः इत्यादौ । अत्र षष्ठी शेषे ( पाणि० २।३।५० ) इति सूत्रेण शैषिकी षष्ठी । तदर्थश्च कर्मादिकारकेभ्योन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिसंबन्धादिः शेषः तत्र षष्ठी स्यात् । यथा राज्ञः पुरुषः पशोर्मुखम् पितुः पुत्रः ( काशिका० ) । यथा वा चैत्रस्य वासः इत्यादौ षष्ठी ( ग० व्यु० का० ६ ) । ४ धर्मशास्त्रज्ञास्तु क्वचित् उपयुक्तेतरपदार्थः अवशिष्टः ( अजपालः ) । यथा श्राद्धशेषः भुक्तशेषः इत्यादौ इत्याहुः । अत्र प्रसङ्गतः शेषरक्षणनिषेधः संगृह्यते । ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च । पुनः पुनः प्रवर्धन्ते तस्माच्छेषं न कारयेत् ॥ ( गरुडपु० ) इति । ५ व्यवहारशास्त्रज्ञास्तु तदितरः ( मनु० टी० सर्वज्ञनारा० ९।१०५ ) । यथा ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः । शेषास्तमुपजीवेयुर्यथैव पितरं तथा ॥ ( मनु० अ० ९ श्लो० १०५ ) इत्यादौ इत्याहुः । ६ मीमांसकास्तु [ क ] परोद्देशेन प्रवर्तमानो गुणीभूतः पदार्थः शेषः ( अङ्गम् ) । यथा बादरिमते द्रव्यगुणसंस्काराः शेषभूताः । जैमिनिमते तु कर्माण्यपि शेषभूतानीत्याहुः ( शाबरभा० ३।१।४ ) । अत्र शेषत्वं च तदुद्देश्यकेच्छाविषयत्वम् । शेषित्वं तूद्देश्यत्वमेव इति बोध्यम् ( वै० सा० कारके० ४ पृ० १९५ ) । अत्र सूत्रम् शेषः परार्थत्वात् ( जैमि० ३।१।२ ) इति । तत्र भाष्यम् यः परस्योपकारे वर्तते स शेषः ( शाबरभा० ३।१।२ ) इति । तथा द्रव्यगुणसंस्कारेषु बादरिः ( जै० ३।१।३ ) इति कर्माण्यपि जैमिनिः फलार्थत्वात्

( जैमि० ३।१।४ ) इति च। [ख] यः परार्थः स शेषः ( जै० सू० वृ० ३।१।२ )। पारार्थ्यं च परोद्देशप्रवृत्तकृतिव्याप्यत्वम्। ७ पौराणिकास्तु भगवतो मूर्तिविशेष इत्याहुः। तदुक्तम् एका भगवतो मूर्तिर्ज्ञानरूपा शिवाऽमला। वासुदेवाभिधाना सा गुणातीता सुनिष्कला॥ द्वितीया कालसंज्ञा च तामसी शेषसंज्ञिता। निहन्ति सकलांश्चान्ते वैष्णवी परमा तनुः॥ ( कूर्मपु० अ० ४८ ) इति। ८ तान्त्रिकास्तु प्रसादान्निजनिर्माल्यदाने शेषेति कीर्तिता इत्याहुः। ९ काव्यज्ञास्तु सर्पराज इत्याहुः।

**शेषवत्**—( अनुमानम् ) १ यत्र कार्येण कारणमनुमीयते तत्। यथा पूर्वोदकविपरीतमुदकम् नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा स्रोतसोनुमीयते भूता वृष्टिः इति (वात्स्या० १।१।५)। अत्र वृत्तिकार इत्थं व्यवृत। शेषः कार्यम् तल्लिङ्गकं शेषवत्। यथा नदीवृद्ध्या वृष्ट्यनुमानम्। अथ वा शेषो व्यतिरेकः। तद्वत्केवलव्यतिरेकीत्यर्थः। यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् इत्यादि (गौ० वृ० १।१।५)। २ शेषवन्नाम परिशेषः। स च प्रसक्तप्रतिषेधेन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः। यथा सदनित्यमित्येवमादिना द्रव्यगुणकर्मणामविशेषेण सामान्यविशेषसमवायेभ्यो निर्भक्तस्य शब्दस्य तस्मिन्द्रव्यकर्मगुणसंशये न द्रव्यम् एकद्रव्यत्वात् न कर्म शब्दान्तरहेतुत्वात् यस्तु शिष्यते सोयम् इति शब्दस्य गुणत्वप्रतिपत्तिः ( वात्स्या० १।१।५ )।

**शोकः**—( दोषः ) [क] इष्टवियोगे तल्लाभानर्हताज्ञानम् ( गौ० वृ० ४।१।३ )। *यथा अशोच्यानन्वशोचस्त्वम्* ( *गीता* २।४५ ) इत्यादौ। यथा वा निवसति तरुणी ते कोक शोकं विमुञ्च ( मुकु० भाण० ) इत्यादौ च शोकशब्दस्यार्थः। [ख] केचित्तु इष्टवियोगजातो दुःखानुगुणश्चित्तवृत्तिविशेष इत्याहुः ( वाच० )। [ग] इष्टविषयवियोगे सति तत्प्राप्त्यशक्यप्रार्थना शोकः ( न्या० वा० )।

**शोषणम्**—१ वातादिना रसाद्यपहारेण काठिन्यापादनम्। यथा पृथिवीं शोषयति इत्यादौ। २ चोषणेन रसाकर्षणम् ( हेमच० )। ३ कामस्य

बाणविशेष इत्यालंकारिका आहुः। तदुक्तम् उन्मादनः शोषणश्च तापनः स्तम्भनस्तथा। मारणश्चेति विज्ञेयाः पञ्च कामस्य सायकाः॥ ( जटा० ) ( वाच० ) इति। ४ शोणाकवृक्षः ( भावप्र० )। ५ शुण्ठी इति भिषज आहुः।

शौचम्—१ शुद्धिशब्दवदस्यार्थोनुसंधेयः। शौचं मानुषं द्विविधमुक्तं व्याघ्रपादेन। शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा। मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम्॥ ( वाच० ) इति। पञ्चविधं चोक्तं बृहस्पतिना। मलशौचं मनःशौचं शौचमिन्द्रियनिग्रहः। सर्वभूतदया शौचं जलशौचं तु पञ्चमम्॥ इति। अन्यच्च अद्भिर्गात्राणि शुद्ध्यन्ति मनः सत्येन शुद्ध्यति। विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति॥ (मनु० अ० ५ श्लो० १०९ ) इति। तत्र विधिमाहतुर्मनुदक्षौ। एका लिङ्गे गुदे तिस्रस्तथैकत्र करे ( वामे ) दश। उभयोः ( करयोः ) सप्त दातव्या मृदः शुद्धिमभीप्सता॥ ( मनु० अ० ५ श्लो० १३६ ) ( विष्णुपु० ) ( यम० ) ( पैठीनसि० ) ( हारीत० ) ( शंखस्मृ० ) इति। २ धर्मविशेषः। तत्रोक्तम् अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः। स्वधर्मे च व्यवस्थानं शौचमित्यभिधीयते॥ ( वाच० ) इति।

शौर्यम्—बलवतोपि परस्य पराजयाय प्रत्युत्साहः। स च प्रयत्नविशेष एव न तु गुणान्तरम् ( न्या० कन्द० पृ० १० )।

श्रद्धा—१ [ क ] फलावश्यंभावनिश्चयः ( त० प्र० २ पृ० ६ ) ( सि० च० )। यथा केशवः श्रद्धया गम्यो ध्येयः पूज्यश्च सर्वदा ( अग्निपु० ) इत्यादौ श्रद्धाशब्दस्यार्थः। [ ख ] विश्वास्यत्वेन ज्ञानम् ( म० प्र० पृ० १६ )। यथा कः श्रद्धास्यति भूतार्थं सर्वो मां तुलयिष्यति इत्यादौ श्रद्धाशब्दस्यार्थः। [ ग ] वेदादिबोधितफलावश्यंभावनिश्चयः ( कि० व० पृ० ४ )। अत्रोक्तम्। प्रत्ययो धर्मकृत्येषु तथा श्रद्धेत्युदाहृता। नास्ति ह्यश्रद्दधानस्य धर्मकृत्ये प्रयोजनम्॥ ( स्मृतिः ) (वाच०) इति। सत्कृतिश्चानसूया च सदा श्रद्धेति कीर्तिता ( देवलस्मृ० ) इति च। श्रद्धाफलमाह याज्ञवल्क्यः। श्रद्धाविधिसमा-

युक्तं कर्म यत् क्रियते नृभिः । सुविशुद्धेन भावेन तदानन्त्याय कल्पते ॥ इति । अश्रद्धाप्रयोजनं च भगवद्गीतायाम् अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह ॥ ( गीता अ० १७ श्लो० २८ ) इति । अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ( गीता ४।४० ) इति च । इयं श्रद्धा त्रिविधा । त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ ( गीता अ० १७ श्लो० २ ) इति । [ घ ] आस्तिक्यबुद्धिः श्रद्धा इति पौराणिका वदन्ति । २ आदरः । ३ शुद्धिः । ४ स्पृहा । ५ चित्तप्रसादः ।

**श्रपणम्**—रूपादिपरावृत्त्युपलक्षिताधःसंतापनम् । यथा कृष्णलं श्रपयेत् इत्यादौ श्रपयत्यर्थः । कृष्णलो यवत्रयमितं सुवर्णम् ( म० प्र० ४ पृ० ५६ ) ।

**श्रवणम्**—१ श्रोत्रेन्द्रियजन्यं शब्दविषयकं ज्ञानम् । यथा श्रूयते सुपुरुषचरितं किं तद्यन्न हरन्ति काव्यालापाः इत्यादौ । २ श्रुतिवाक्योत्थं ज्ञानम् । यथा आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ( बृ० २।४।५ ) इत्यादौ ( म० प्र० १ ) । यथा वा श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः इत्यादौ । अत्र श्रवणं च श्रुतिपदपक्षिका संसर्गज्ञानानुमितिः ( प० च० प० २० ) । ३ अशेषशब्दविषयं सिद्धिज्ञानं श्रवणम् ( सर्व० सं० पृ० १६६ नकु० ) । ४ शब्दग्राहकमिन्द्रियम् श्रोत्रम् । ५ मौहूर्तिकास्तु अश्विन्यादिषु द्वाविंशो ( २२ ) नक्षत्रविशेष इत्याहुः । ६ मुण्डरिकावृक्षः ( वाच० ) ।

**श्राद्धपक्षः**—अर्के नभस्यकन्यास्थे श्राद्धपक्षः प्रकीर्तितः ( देवलः ) ( पु० चि० पृ० २१ ) ।

**श्राद्धम्**—[ क ] अदनीयस्य तत्स्थानीयस्य वा द्रव्यस्य प्रेतोद्देशेन श्रद्धया त्यागः । अत्र व्युत्पत्तिः श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते इति । श्राद्धं द्विविधम् पार्वणम् एकोद्दिष्टं चेति । तत्र त्रिपुरुषोद्देशेन यत्क्रियते तत्पार्वणम् । एकपुरुषोद्देशेन क्रियमाणमेकोद्दिष्टम् । पुनश्च श्राद्धं

त्रिविधम् नित्यम् नैमित्तिकम् काम्यं चेति । तत्र नित्यम् नियतनिमित्तोपाधौ चोदितम् । यथा अहरहरमावास्याष्टकादिषु विहितं श्राद्धम् । अनियतनिमित्तोपाधौ चोदितं नैमित्तिकम् । यथा पुत्रजन्मादिषु विहितं श्राद्धम् । फलकामनोपाधौ विहितं काम्यम् । यथा स्वर्गादिकामनायां कृत्तिकादिनक्षत्रेषु विहितं श्राद्धम् । पुनश्च पञ्चविधम् अहरहः श्राद्धम् पार्वणम् वृद्धिश्राद्धम् एकोद्दिष्टम् सपिण्डीकरणं चेति ( मिता० अ० १ श्लो० २१६ ) । [ ख ] पित्राद्युद्देश्यको यागः ( का० व्या० पृ० ५ ) । संबोधनपदोपनीतान् पित्रादीन् चतुर्थ्यन्तपदेनोद्दिश्य पुत्रादिभिर्मन्त्रद्वारा श्रद्धयान्नादेर्दानं श्राद्धम् इत्यर्थः । अत्र विभक्तिनियमश्च संकल्पासनयोः षष्ठी द्वितीयावाहने तथा । अन्नदाने चतुर्थी स्याच्छेषाः संबोधने स्मृताः ॥ इति । श्राद्धस्य यागत्वं विज्ञाय श्राद्धकाले ब्राह्मणा इमां स्मृतिं पठन्ति चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥ इति । तदर्थस्तु चतुर्भिः ( आश्रावय इत्यध्वर्युप्रयोज्यैश्चतुरक्षरैः ) चतुर्भिः ( अस्तु श्रौषट् इत्याग्नीध्रप्रयोज्यैश्चतुरक्षरैः ) द्वाभ्याम् ( यज इत्यध्वर्युप्रयोज्याभ्यां द्वाभ्यामक्षराभ्याम् ) पञ्चभिः ( ये यजामहे इति होतृप्रयोज्यैः पञ्चभिरक्षरैः ) द्वाभ्याम् ( वौषट् इति होतृप्रयोज्याभ्यां द्वाभ्यामक्षराभ्याम् ) एभिः सप्तदशभिरक्षरैर्यो हूयते हवनकर्मीक्रियते स विष्णुः मे मम प्रसीदतु प्रसन्नो भवतु इति । अत्र यजुःश्रुतिः प्रमाणम् आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तो य एवं वेद प्रति यज्ञेन तिष्ठति ( तैत्तिरीयसंहि० काण्ड० १ अ० ६ अनु० ११ ) इति । श्राद्धे ब्राह्मणसंख्यानियमो याज्ञवल्क्येनोक्तः । यथा द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा । मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ ( याज्ञ० अ० १ श्लो० २२८ ) इत्यादि । श्राद्धदेवाश्च दशविधा गणदेवताभेदाः । यथोक्तम् वसुसत्यौ क्रतुदक्षौ कालकामौ धुरिः कुरुः । पुरूरवा मार्दवाश्च विश्वेदेवाः प्रकीर्तिताः ॥ ( वाच० पृ० ४९२५ ) इति । अन्यच्च क्रतुर्दक्षो वसुः सत्यः कामः कालस्तथा धुरिः । रोचनो माद्र-

साश्चैव तथा चान्यः पुरूरवाः ॥ विश्वेदेवा भवन्त्येते दश श्राद्धेषु पूजिताः इति । [ ग ] श्रद्धाहेतुकदानरूपकर्मविशेषः । तदाहापस्तम्बः अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच ( आपस्त० धर्मसू० २।७।१६।१ पृ० ७६ ) । तदर्थश्च श्राद्धम् इति शब्दो वाचको यस्य तत्कर्म (श्राद्धविवेकः) इति । पुलस्त्योप्याह संस्कृतं व्यञ्जनाद्यं च पयोदधिघृतान्वितम् । श्रद्धया दीयते यस्मात् तेन श्राद्धं निगद्यते ॥ (श्राद्धतत्त्व०) इति । अस्मिंश्च कर्मणि यागादाविन्द्रादीनामिव पित्रादेर्देवतात्वम् । तदुद्देशेन मन्त्रद्वारा द्रव्यत्यागात् । तथा च यागादौ मन्त्राहूता इन्द्रादयः शक्तिमात्रेण तत्स्थले आविर्भूता यजमानत्यक्तद्रव्यदर्शनेन तृप्यन्तस्तेषामभीष्टफलं यथा साधयन्ति तथा श्राद्धेपि मन्त्राहूताः पित्रादयः समागताः पुत्रादित्यक्तद्रव्यभोगेन तृप्यन्तो विशिष्टफलप्रदाः भवन्ति इत्येवं कल्पनीयम् इति । अत्रेदं बोध्यम् । देवदत्तादिशब्दस्य यथा न केवलं देहमात्रम् न वा जीवमात्रमर्थः । किंतु तत्तद्देहाभिमानी जीव एवार्थः । तथा पित्रादिशब्दस्य उत्पादकदेहाभिमानी केवलं जीवोपि नार्थः । किं तु वसुरुद्रादित्यदेवाधिष्ठिततादृशजीव एवार्थः । तथा चोक्तम् वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः । प्रपितामहाश्चादित्याः श्रुतिरेषा सनातनी ॥ प्रेतानुद्दिश्य यत्कर्म क्रियते मानुषैरिह । तृप्यन्ति देवतास्तेन न प्रेताः पितरः स्मृताः ॥ (श्राद्धकल्पे देवल०) इति । तथा च यथा काचिद्गर्भिणी सुहृदा दत्तं दोहदं भुञ्जाना स्वयं तृप्यन्ती स्वाश्रयं गर्भं च तर्पयन्ती दोहददातारमप्युपकरोति तथा वस्वादयोपि श्राद्धान्नदर्शनमात्रतृप्ताः स्वाधिष्ठितपित्रादीन् तर्पयन्तः श्राद्धकर्तुरपीष्टदातारो भवन्ति इति ज्ञेयम् ( वाच० ) । अत्र छान्दोग्यश्रुतिः तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ( छा० उ० ३।६।१ ) इति । ब्राह्मणादिसंप्रदानकक्रियाया इव श्राद्धकर्मण एव स्वजन्यपुण्यद्वारा विशिष्टफलजनकता । तत्र कालान्तरभावितत्तत्फलदानाय तत्कर्मसाक्षिणः परमेश्वरस्यैव तत्साधनत्वम् । तथा च यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ ( गीता अ० ७

श्लो० २१ ) इति गीतायामुक्तम् । श्राद्धभेदाश्च विश्वामित्रप्रयुक्ताः नित्याद्योवगन्तव्याः । यथा नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ( एकोद्दिष्टम् ) । पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् । कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् । यात्रास्वेकादशं ( घृतश्राद्धं ) प्रोक्तं पुष्ट्यर्थं द्वादशं ( औपचारिकम् ) स्मृतम् ॥ इति । बृहस्पतिना तु नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं तथैव च । पार्वणं चेति मनुना श्राद्धं पञ्चविधं स्मृतम् ॥ इति उक्तम् । एवं कूर्मपुराणेपि । मत्स्यपुराणे च नित्यं नैमित्तिकं काम्यं त्रिविधं श्राद्धमुच्यते इति । अत्र द्वादशविधानां पञ्चविधानां च श्राद्धानां त्रिष्वेवान्तर्भावः इत्यभिप्रायः । श्राद्धदेशा यथा—शुचिं देशं विविक्तं च गोमयेनोपलेपयेत् । दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत् ॥ अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि । विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा ॥ (मनु० ३।२०६–२०७) इति । चोक्षाः स्वभावशुचयोरण्यादिप्रदेशाः । श्राद्धनिन्दितदेशानाह विष्णुः । न म्लेच्छविषये श्राद्धं कुर्याद्गच्छेच्च तत्र न । चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते ॥ तं म्लेच्छदेशं जानीयादार्यावर्तमतः परम् इति । वायुपुराणे च त्रिशङ्कोर्वर्जयेद्देशं सर्वं द्वादशयोजनम् । उत्तरेण महानद्या दक्षिणेन तु कीकटात् ॥ देशस्त्रैशङ्कवो नाम श्राद्धकर्मणि गर्हितः । पारस्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च ॥ प्रनष्टाश्रमधर्माश्च देशा वर्ज्याः प्रयत्नतः इत्यादि । एवं ब्रह्मपुराणेपि विशेषो ज्ञेयः । पारस्करा देशविशेषाः । कीकटो मगधः । सिन्धुर्नदीविशेषः ( वाच० ) ।

**श्रावणम्**—१ श्रोत्रेन्द्रियजन्यं प्रत्यक्षम् । यथा शब्दस्य प्रत्यक्षम् । २ मासविशेषः । ३ बार्हस्पत्यो वर्षविशेषः । ४ वृक्षविशेषः ।

**श्रीः**—१ लक्ष्मीः । २ लवङ्गम् । ३ शोभा । ४ वाणी । ५ वेषरचना । ६ सरलवृक्षः । ७ धर्मार्थकामाः । ८ संपत्तिः । ९ प्रकारः । १० उपकरणम् । ११ बुद्धिः । १२ विभूतिः । १३ अधिकारः । १४ प्रभा । १५ कीर्तिः । १६ वृद्धिः । १७ सिद्धिः । १८ कमलम् । १९ बिल्ववृक्षः । २० औषधिविशेषः । २१ वेवादीनां सम्बोधनाय

उपाधिविशेषः । तत्रोक्तम् देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम् । सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत् ॥ इति । २२ रागविशेषः इति गायका आहुः । अत्रोच्यते श्रीरागश्च सुन्दरपुरुषाकृतिः हेमन्तेपराह्णे गेयः । तस्य पञ्च रागिण्यः मानश्रीः भारवी धनश्रीः वसन्तरागिणी आशाचरी चेति ( संगीतदा० ) ( वाच० ) । रागशब्दव्याख्याने याः संगृहीतास्तदन्या एता रागिण्यः इति विज्ञायते ।

**श्रुतम्**—ज्ञानावरणक्षयोपशमे सति मतिजनितं स्पष्टं ज्ञानम् ( सर्व० सं० पृ० ६३ आर्ह० ) ।

**श्रुतिः**—१ श्रोत्रशब्दवदस्यार्थोनुसंधेयः । २ श्रोत्रेन्द्रियजन्यं ज्ञानम् । ३ मीमांसकास्तु निरपेक्षो रवः श्रुतिः । सा च त्रिविधा विधात्री अभिधात्री विनियोक्त्री चेति । तत्र विधात्री लिङाद्यात्मिका । अभिधात्री व्रीह्यादिश्रुतिः । यस्य च शब्दस्य श्रवणादेव संबन्धः प्रतीयते सा विनियोक्त्री इत्याहुः । स च संबन्धः विनियोज्यविनियोजकभावः शेषशेषिणोः संबन्धो वा ( लौ० भा० टी० पृ० १७ ). । विनियोक्त्री श्रुतिरपि पुनः त्रिविधा विभक्तिरूपा एकाभिधानरूपा एकपदरूपा चेति। तत्र विभक्तिश्रुत्या अङ्गत्वं ज्ञाप्यते । यथा व्रीहिभिर्यजेत इति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वं ज्ञाप्यते । समानाभिधाना यथा पशुना यजेत इति । अत्र एकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वं ज्ञाप्यते । यजेत इत्याख्याताभिहितसंख्याया आर्थीभावनाङ्गत्वं समानाभिधानश्रुतेः । एकपदश्रुत्या च यागाङ्गत्वं ज्ञाप्यते ( लौ० भा० पृ० १६–१८ ) इति । अत्रेदं बोध्यम् । श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः । ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ ( मनु० अ० २ श्लो० १० ) इति । वेदस्तु विधिमन्त्रनामधेयनिषेधार्थवादभेदात्पञ्चविधः । शिष्टं तु वेदशब्दव्याख्याने द्रश्यम् । ४ क्रमपरवचनं श्रुतिः । तच्च द्विविधम् केवलक्रमपरं क्रमविशिष्टपदार्थपरं चेति । तत्र वेदं कृत्वा वेदिं करोतीति केवलक्रमपरम् । वषट्कर्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरम् ( मी० न्या० पृ० ३७ ) । ५ गणकास्तु अङ्क-

शास्त्रोक्तत्रिभुजक्षेत्रादिः भुजकोट्योः संयुज्यमानो रेखाविशेष इत्याहुः (लीला०)। ६ मौहूर्तिकास्तु श्रवणनक्षत्रम् इत्याहुः। ७ संगीतशास्त्रज्ञा गायकास्तु षड्जरागाद्यारम्भकावयवशब्दविशेषः श्रुतिः इत्याहुः। तत्रोक्तम् प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः। सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा ॥ (मल्लिना०) इति। संगीतदामोदरे श्रुतिसंख्यानियमश्च दर्शितो यथा चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः। द्वे द्वे निषादगान्धारौ त्रिस्त्रिर्ऋषभधैवतौ ॥ इति। श्रुतिभेदास्तु (२२) नान्दी चालनिका रसा च सुमुखी चित्रा विचित्रा घना मातङ्गी सरसाऽमृता मधुकरी मैत्री शिवा माधवी। बाला शार्ङ्गरवी कला कलरवा माला विशाला जया मात्रेति श्रुतयः पुराणकविभिर्द्वाविंशतिः कीर्तिताः ॥ इति। संगीतरत्नाकरे तु तीव्रा कुमुद्वती मन्दा छन्दोवत्यस्तु षड्जगाः। दयावती रञ्जनी च रतिका ऋषभे स्थिता ॥ रौद्री क्रोधा च गान्धारे वज्रिका च प्रसारिणी। प्रीतिश्च मार्जनीत्येताः श्रुतयो मध्यमाश्रिताः ॥ क्षितिरक्ता च सांदीपिन्यालापी चैव पञ्चमे। मदन्ती रोहिणी रम्येत्येता धैवतसंश्रयाः ॥ उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती इति।

**श्रेणिः**—नानाजातीनामेकजातीनामप्येकजातीयकर्मोपजीविनां संघातः (मिताक्षरा अ० २ श्लो० ३०)।

**श्रोत्रम्**—(इन्द्रियम्) [क] शब्दोपलब्धिसाधनमिन्द्रियम् (त० भा० पृ० २६) (न्या० म० पृ० १४)। तच्च विशिष्टादृष्टोपगृहीतकर्णशष्कुल्यवच्छिन्नो नभोदेशः (वै० उ० ८।२।६) (त० भा० प्रमे० पृ० २६) (त० सं०)। अत्रावच्छिन्नत्वं च संयोगविशेषः (प० मा०)। अत्रेदं बोध्यम्। श्रोत्रं शब्दवत् शब्दग्राहकत्वात्। यदिन्द्रियं रूपादिषु पञ्चसु मध्ये यं गुणं गृह्णाति तदिन्द्रियं तद्गुणवत्। यथा गन्धग्राहकं घ्राणं गन्धवत् इति व्याप्तिरत्र द्रष्टव्या (प्र० प्र०) (त० भा० प्रमे० पृ० २६)। अथ वा श्रोत्रस्य शब्दवत्त्वं च बहिरिन्द्रियाणां ग्राह्यजातीयविशेषगुणवत्त्वम् इति नियमात्सिद्ध्यति (वै० उ० ८।२।६)। शब्दश्च नभोवृत्तिरेव। न च वायोरेव कारणगुणपूर्वकशब्दवत्त्वमङ्गीकार्यम् इति वाच्यम्। शब्दस्या-

यावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात् ( मु० १ आकाशनि० पृ० ८८ ) इति । [ ख ] वने सिंहनादः इति शब्दप्रत्यक्षासाधारणकारणम् । तच्च कर्णशष्कुल्यवच्छिन्नं नभः ( प्र० प्र० ) ( न्या० म० १ पृ० १४ ) ( त० कौ० ) । अत्र भाष्यम् । श्रोत्रं पुनः श्रवणविवरसंज्ञको नभोदेशः । शब्दनिमित्तोपभोगप्रापकधर्माधर्मोपनिबद्धः । तस्य च नित्यत्वे सत्युपनिबन्धकवैकल्याद्बाधिर्यम् ( प्रशस्त० पृ० ७ ) इति । नव्यास्तु ईश्वर एव श्रोत्रेन्द्रियम् नेश्वरादतिरिक्तम् इत्याहुः ( राम० १ पृ० ११८ ) । सांख्या वेदान्तिनश्च सात्त्विकांशसूक्ष्मांशः श्रोत्रम् इत्याहुः । तन्मते शब्दस्य पञ्चभूतगुणतया शब्दाधारवायुना झटिति कर्णदेशे यथावेगं धावमानेन कर्णप्रापणसंभवः । तेन शब्दोपलम्भः इति । तन्मते श्रवणेन्द्रियस्य प्राप्यकारित्वम् इत्युक्तिरप्येतत्परा इति बोध्यम् ( वाच० ) । काव्यज्ञास्तु श्रोत्रेन्द्रियाधारो गोलकं कर्णः श्रोत्रम् इत्याहुः ।

श्लाघनम्—बोधविषया स्तुतिः । यथा गोपी स्मरात्कृष्णाय श्लाघते इत्यादौ श्लाघतेरर्थः । अत्र धात्वर्थघटकबोधाश्रयस्य श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ( पाणि० १।४।३४ ) इति सूत्रेण संप्रदानत्वम् । ज्ञीप्स्यमानपदेन प्रधानभूतण्यर्थकर्मणो ग्रहणम् । अत्र श्लाघधात्वर्थैकदेशस्य बोधस्य फलतावच्छेदकः संबन्धो वृत्तिता । स्तुतिस्तु गुणवत्त्वप्रतिपादकशब्दप्रयोगादिः । स्मरात् इति हेतौ पञ्चमी । एवं च गोपीकर्तृका स्मरहेतुकृष्णसंप्रदानिका अर्थात् कृष्णवृत्तिबोधविषया स्तुतिः इति बोधः ( ल० म० कारक० ४ पृ० १०२ ) ।

श्वासः—१ वायुव्यापारविशेषः । यथा मनुष्यस्य पृथगेकैकस्मिन्दिन एकविंशतिः सहस्राणि षट् शतानि च ( २१६०० ) श्वासा भवन्ति इति । श्वासो नाम बाह्यस्य वायोरन्तरानयनम् ( सर्व० सं० पृ० ३७६ पात० ) । २ रोगविशेषः इति भिषज आहुः । श्वासहेतुरुक्तः यस्तु यज्ञं समासाद्य पशुश्वासं निरुद्ध्य च । हन्ति खादति वा तं स महाश्वासेन मुच्यते ॥ इति । पौराणिककथामध्ये यस्तु वाचाम्यथा वदेत् । स ऊर्ध्व-

श्वासमासाद्य दुनोत्यहरहर्निशम् ॥ ( भृगु-भार० ) ( वाच० ) इति च ।
२ शाब्दिकास्तु शिक्षोक्तो वर्णोच्चारणार्थो बाह्यप्रयत्नविशेष इत्याहुः ।

---

## ष.

**षडहः**—अहोरात्रसाध्य एकः सोमयागो वेदे अहःशब्देनोच्यते । तादृशानां षण्णामहर्विशेषाणां गणः षडहः । पञ्चभिः षडहैर्मासो भवति । तत्र चत्वारः षडहा अभिप्लवसंज्ञाः । पञ्चमः पृष्ठ्यसंज्ञः ( पुरु० पृ० १० ) ।

**षष्ठी**—१ ( विभक्तिः ) [ क ] यत्किंचिद्धात्वर्थे स्वार्थान्वयाबोधिका सुप् । यथा चैत्रस्येदम् इत्यादौ षष्ठी । अत्र संबन्धविवक्षायां कारकविभक्त्यप्रसक्तेः षष्ठी शेषे ( पाणि० २।३।५० ) इत्यनेन सूत्रेण चैत्रस्येदम् इत्यादौ षष्ठी । चैत्रस्य द्रव्यम् इत्यादौ स्वत्वस्य चैत्रस्य स्वम् घटस्य कारणम् चैत्रस्य हस्तः इत्यादौ निरूपितत्वावयवत्वादीनां संबन्धत्वेनैव षष्ठ्यर्थता न तु विशिष्य निरूपितत्वत्वावयवत्वत्वादिना । शक्त्यानन्त्यप्रसङ्गात् । संयोगादिसंबन्धसत्त्वेपि चैत्रस्य नेदं वासः इत्यादौ स्वत्वादिसंबन्धविशेषबोधतात्पर्येण यत्र नञ् प्रयुज्यते तत्र विशेषरूपेण षष्ठ्याः लक्षणैव । इत्थमेव च संबन्धत्वेन कर्मत्वादिविवक्षया मातुः स्मृतम् इत्यादौ अधीगर्थदयेशां कर्मणि ( पाणि० २।३।५२ ) इत्यनुशासनस्य नियमपरतया सार्थक्योपपादनं वृत्तिकृतामुपपद्यते । एवमेव नाग्निस्तृप्यति काष्ठानां न पुंसां वामलोचनाः इत्यादौ करणत्वादेः संबन्धत्वेन विवक्षायां षष्ठ्युपपत्तिः । अत एव च आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते इत्यत्र पक्वम् इत्यत्रानुषज्यमानायाः षष्ठ्याः संबन्धत्वेन कर्तृत्वमर्थः न तु स्वत्वम् । शूद्रकर्तृकवृषोत्सर्गे चरुहोमानुपपत्तेः इति नवीनस्मार्तानां मतमप्युपपद्यते ( ग० व्यु० का० ६ पृ० ११२ ) । [ ख ] शाब्दिकादयस्तु संबन्धसामान्ये स्वत्वादौ वा शक्ता सुप् । यथा राज्ञः पुरुषः चैत्रस्य धनम् इत्यादौ षष्ठी इति वदन्ति । ग्रामं गच्छति पटं ददाति इत्यादौ च धात्वर्थतावच्छेदकीभूते संयोगस्वत्वादौ द्वितीययाधेयत्वमेव बोध्यते न तु संबन्धसामान्यं बोध्यते इति न तत्रातिप्रसङ्गः ( श० प्र०

श्लो० ६६ पृ० ७६ ) इति । अत्रेदं शाब्दिकमतं विज्ञेयम् । षष्ठ्यर्थः संबन्धत्वेन तत्तद्रूपेण च स्वस्वामिभावादिः संबन्धः संबन्धत्वेन क्रियाकारकभावश्च । अत एवानेकसंबन्धसत्त्वेपि स्वत्वादिसंबन्धविशेषतात्पर्येण चैत्रस्य नेदं वासः इति प्रयुज्यते । अत एव एकशतं षष्ठ्यर्थाः इति षष्ठी स्थानेयोगा ( पाणि० १।१।४९ ) इति सूत्रस्थं भाष्यं संगच्छते । द्वितीयादितश्च क्रियाकारकभावस्य तत्तद्रूपेणैव बोधः । तथैवानुभवात् । मातुः स्मरति इत्यादौ च तत्तद्रूपेण बोधे द्वितीयादीनां बाधिकानां सत्त्वात्संबन्धत्वेनैव बोधः मातृसंबन्धि स्मरणम् इति नव्या आहुः । प्राञ्चस्तु अत्रापि क्रियाकारकभावमूलकं विशेषणत्वरूपं विषयत्वमेव निमित्तत्वमेव वा तत्त्वेन संबन्धत्वेन वा विवक्षितम् । क्रियाकारकभावसंबन्धः कारणम् । शेषसंबन्धस्तु फलभूतः । यथा राज्ञः पुरुष इत्यत्र राजपुरुषौ कर्तृसंप्रदानरूपावभूताम् राजा पुरुषाय ददाति इति । तन्मूलकस्वस्वामिभावप्रतीतौ कर्त्रादिविशेषरूपतानवगमः इत्याहुः ( ल० म० कार० ६ पृ० ११३ )। अत्रायं विवेकः। षष्ठी द्विविधा कारकषष्ठी शेषषष्ठी चेति । शब्दशक्तिप्रकाशिकाकृन्मते यया धात्वर्थे प्रकारतया कर्तृत्वकर्मत्वादि बोध्यते सा कारकषष्ठी । यया तु धात्वर्थातिरिक्ते स्वार्थशेषः संबन्धः बोध्यते सा शेषषष्ठी । गदाधरादीनां मते तु यया धात्वर्थे स्वार्थकर्तृत्वकर्मत्वादि संबन्धत्वेनैव बोध्यते न तु प्रकारतया सा कारकषष्ठी । यया तु धात्वर्थातिरिक्ते स्वार्थः संबन्धत्वेनैव बोध्यते सा शेषषष्ठी इति चिन्तनीयः । अत्रेदमवधेयम् । क्रियाप्रकारीभूतोर्थः कारकम् । तत्रार्थे षष्ठी कारकषष्ठी इत्युच्यते । यथा सा लक्ष्मीरुपकुरुते यया परेषाम् । पद्मस्यानुकरोत्येष कुमारीमुखमण्डलः । गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैः इत्यादावपि मातुः स्मरति चौरस्य हिनस्ति जलस्योपस्कुरुते इत्यादाविव क्रियाविशेषयोगे कारकार्थैव षष्ठी । तण्डुलस्य पाचकः मैत्रस्य भोक्तव्यम् इत्यादावपि षष्ठी कारकषष्ठ्येव ( श० प्र० पृ० ७८ )। सा लक्ष्मीरित्यत्र प्रयोगदृष्ट्या प्रत्यनूपेभ्यः करोतेः कर्मण्यपि वैकल्पिकः षष्ठीविधिर्वक्तव्यः इति

विज्ञेयम् ( श० प्र० श्लो० ६७ टी० पृ० ७८ )। गुरुविप्रतपस्वि-दुर्गतानामित्यत्र शाब्दिकास्तु विपत्तौ इति अध्याहृतनामार्थे षष्ठ्यर्थान्वयः इति नेयं कारकषष्ठी इत्याहुः ( का० व्या० )। तण्डुलस्य पाचक इत्यत्र धात्वर्थे पचनादौ कृद्योगे कर्तृकर्मणोः षष्ठ्यनुशिष्टेः कर्मत्वकर्तृत्वादिकं कारकमेव इति कारकार्थैव षष्ठी इति ज्ञेयम् ( श० प्र० पृ० ७८ )। यद्वा अत्र कर्मणि द्वितीया ( पाणि० २।३।२ ) कर्तृकरणयोस्तृतीया ( पाणि० २।३।१८ ) इत्याभ्यां सूत्राभ्यां विहिताभ्यां द्वितीयातृतीयाभ्यां शक्त्या बोधिते कर्तृत्वकर्मत्वे कर्तृकर्मणोः कृति ( पाणि० २।३।६५ ) इति सूत्रेण विहिता षष्ठी लक्षणया बोधयति इति ज्ञेयम्। लक्षणाबीजं तु तादृशयोः कर्तृत्वकर्मत्वयोः संबन्धत्वेन बोधने तात्पर्यानुपपत्तिरेव। प्रकारतया बोधन एव तात्पर्यादिति हृदयम्। अत्रायं विशेषोनुसंधेयः। कारकविभक्तिभिन्नविभक्त्यर्थस्य क्रियायामनन्वयः इति नियमो नास्ति। तथा हि मणिकारमते तस्माज्जानाति इत्यादौ ज्ञानादिरूपधात्वर्थे हेतुविभक्त्यर्थस्यान्वयः। तस्मात्स्थीयते इत्यादौ च सर्वमत एव धात्वर्थस्थित्यादौ हेतुविभक्त्यर्थस्यान्वयः। गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैः इत्यादौ तु षष्ठ्यर्थसंबन्धस्यापि धात्वर्थेन्वयो दृष्टः इति तादृशनियमो नास्ति ( ग० व्यु० का० २ ख० २ पृ० ५६ ) इति। गुरुविप्रेत्यत्र शाब्दिकानुयायिनस्तु रोगे इति नामाध्याहृत्य तदर्थे षष्ठ्यर्थस्य संबन्धस्यान्वयः कर्तव्यः। तथा च संबन्धस्य कारकत्वाभावेन क्रियायोगाभावान्नेयं कारकषष्ठी इत्याहुः ( का० व्या० पृ० १ )। शेषषष्ठीत्यस्यायमर्थः। शेषः कारकादवशिष्टः स्वस्वामिभावावयवावयविभावादिः संबन्धः कारकादन्यो वा। तत्रार्थे षष्ठी शेषषष्ठी इत्युच्यते। यथा राज्ञः पुरुषः रजकस्य वस्त्रं ददाति इत्यादौ षष्ठी। राज्ञ इत्यत्र षष्ठ्या स्वत्वरूपः संबन्धो बोध्यते। स च न कारकम्। न वा तदर्थिका षष्ठ्यादिः कारकविभक्तिः इति ज्ञेयम्। रजकस्येत्यत्र च परिष्कार्यत्वादिलक्षणः संबन्धो वस्त्रादावेव षष्ठ्यानुभाव्यते इति शेषषष्ठी इति विज्ञेयम् ( श० प्र० श्लो० ६७ टी० पृ० ७७ )। २ मौहूर्तिकास्तु चन्द्रमसः षष्ठकलाया ह्रासवृद्धिरूपक्रियात्मकस्थितिविशेषः इत्याहुः।

३ पौराणिकास्तु ब्रह्मकन्या देवसेनाख्यः स्कन्दभार्यात्मको मातृकाविशेषः इत्याहुः । तदुक्तम् मातृकासु पूज्यतमा सा च षष्ठी प्रकीर्तिता । शिशूनां प्रतिबिम्बेषु प्रतिपालनकारिणी ॥ ( ब्रह्म० वै० प्र० अ० १ ) ( स्कन्दपु० ) ( वाच० ) इत्यादि । ताश्च षोडश मातृकाः गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ शान्तिः पुष्टिर्धृतिस्तुष्टिः कुलदेवात्मदेवताः इति । अन्या अपि सप्त ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः ॥ इति ।

**षाट्पौरुषम्**—( श्राद्धम् ) महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च । नवदैवतमत्रेष्टं शेषं षाट्पौरुषं विदुः ॥ ( पु० चि० पृ० ३८४ ) ।

---

## स.

**स**—१ विष्णुः । २ सर्पः । ३ ईश्वरः । ४ विहगः । ५ समासे पूर्वपदस्थः सहार्थः । यथा सपितृकः इत्यादौ । ६ समानार्थः । यथा सरूपः इत्यादौ । ७ छन्दःशास्त्रज्ञास्तु अन्तगुरुक आदिलघुद्वयको यो वर्णगणः तस्य स इति नाम इत्याहुः । तदुक्तम् आदिमध्यावसानेषु यरता यान्ति लाघवम् । भजसा गौरवं यान्ति मनौ तु गुरुलाघवम् ॥ ( श्रुतबो० ) इति ।

**संकरः**—१ [ क ] परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः ( दि० १ ) ( वै० वि० १।२।३ ) । एतत्संकरलक्षणं च परस्परात्यन्ताभावसमानाधिकरणपदार्थद्वयसामानाधिकरण्यत्वम् इति ( ल० व० ) । स्वसामानाधिकरण्य स्वाभावसामानाधिकरण्य स्वसमानाधिकरणाभावप्रतियोगित्व एतत्त्रितयसंबन्धेन यत्किंचिज्जातिविशिष्टत्वं समुदितार्थः इति गुरुचरणाः ( भिकुशास्त्री गोडबोले ) प्राहुः । अयं संकरश्च जातित्वे बाधकः इति विज्ञेयम् ( नील० ) । श्रीहर्षकृतखण्डने त्वेवं प्रतिपादितम् न सांकर्यस्य सर्वथा जात्यभावकल्पकत्वम् । मानाभावात् । एवं च भूतत्वमूर्तत्वे पृथिवीत्वशरीरत्वे च जातिरूपे एव । क्रियासमवायिकारणतावच्छेदकतया मूर्तत्वादेरिव भूतादिपदशक्यतावच्छेदकतया भूतत्वादे-

रपि जातित्वात् ( ल० म० ) इति । [ ख ] परस्परात्यन्ताभावसामानाधिकरण्ये सति जात्यन्तरेण सामानाधिकरण्यम् । यथा भूतत्वस्य मूर्तत्वादिना संकरः ( दि० १ ) ( वै० उ० १।२।३ ) । तथा हि मनोन्तर्भावेनाकाशान्तर्भावेन च परस्परं स्वस्वात्यन्ताभावसमानाधिकरणयोर्भूतत्वमूर्तत्वयोः पृथिव्यादिचतुष्टये समावेशः इति भूतत्वं न जातिः इति विज्ञेयम् । भूतत्वाभाववति मनसि मूर्तत्वं तिष्ठति । तथा मूर्तत्वाभाववति चाकाशे भूतत्वं तिष्ठति । पृथिव्यादिभूतचतुष्टये तु भूतत्वं मूर्तत्वं चोभे तिष्ठतः इति संकरो ज्ञेयः । २ धर्मान्तरस्य समावेशः । विभिन्नधर्मवतोपि धर्म्यैक्यं वा । यथा उपधेयसंकरेप्युपाधेरसंकरः इत्याद्यभियुक्तोक्तौ ( चि० १ ) ( ग० सामा० ) ( भवा० ) काञ्चनमयह्रदो वह्निमान् धूमात् इत्यादौ धूमरूपैकहेतौ बाधातिरिक्तस्याश्रयासिद्ध्यादेरपि समावेशः संकरः । ३ अभेदः ( मू० म० प्रामाण्य० पृ० ४२० ) । यथा अतिरिक्तविषयतापक्षे प्रकारभेदेनैकत्र विषयताभेद इति लक्षणद्वयसमावेशात्प्रमाभ्रमसंकरः ( चि० १ प्रामा० पृ० ४१८ ) इत्यादिग्रन्थे संकरशब्दस्यार्थः अभेदः । ४ स्मृतिशास्त्रकृतस्तु एकवर्णपुरुषाद्विवाहितवर्णान्तरस्त्रियां जातो जातिविशेषः । यथा मूर्धावसिक्तसूतादिः इत्याहुः । अत्रेदं विज्ञेयम् अनुलोमजानामुपनयनादिसंस्कारार्हत्वम् प्रतिलोमजानां तु तदनर्हत्वम् इति । वर्णसंकरजातिश्च अनुलोमजा प्रतिलोमजापि नानाविधा । यथा विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् । जातोम्बष्ठस्तु शूद्रायां निषादः पार्षदोपि च ॥ ( गरुडपु० अ० ९६ ) इत्यादि । ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते । निषादः शूद्रकन्यायां यः पारशव उच्यते ॥ ( मनु० अ० १० श्लो० ८–४१ ) ( याज्ञ० अ० १ श्लो० ९१–९२ ) इत्यादि । अत्रेदमधिकं ज्ञेयम् । व्यभिचारेण वर्णानामवेद्यावेदनेन च । स्वकर्मणां च त्यागेन जायन्ते वर्णसंकराः ॥ ( मनु० अ० १० श्लो० २४ ) इति । स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ( गीता अ० १ श्लो० ४१ ) इति च । ५ आलंकारिकास्तु अलंकारविशेष इत्याहुः । तदुक्तम् अङ्गाङ्गित्वेलंकृतीनां तद्वदेकाश्रयस्थिता । संदिग्धत्वे च भवति संकरस्त्रिविधः पुनः ॥

(सा० द० परि० १० श्लो० ९९) इति । ६ धर्मज्ञास्तु अस्पृश्यस्पर्शादिरूपः संसर्गः । यथा चाण्डालादिसंकर इत्याहुः । अथ चाण्डालसंकरप्रायश्चित्तम् । तत्र च्यवनः चाण्डालसंकरेषु भवनदहनं पूरणं सर्वभाण्डभेदनं दारवाणां तक्षणं शङ्खशुक्तिरजतचेलानामद्भिः प्रक्षालनं कांस्यताम्राणामाकरशुद्धिः सौवीरपयोदधितक्राणां परित्यागः शेषरसयवसद्रव्यरक्षणं गोमूत्रयावकाहारो मासं क्षपयेत् बालवृद्धस्त्रीणामर्धं प्रायश्चित्तम् इति । तथा आपस्तम्बोपि अन्त्यजातिरविज्ञातो निवसेद्यस्य वेश्मनि । स वै ज्ञात्वा तु काले तु कुर्यात्तत्र विशोधनम् ॥ चान्द्रायणं पराकं वा द्विजातीनां विशोधनम् । प्राजापत्यं तु शूद्राणां तथा संसर्गदूषणे ॥ इत्यादि । स्वल्पकालविषये सुमन्तुः अगम्यागमनस्त्रीवधचाण्डालसंपर्केषु कृच्छ्रत्रयम् इति । परंपरासंसर्गे तु वृद्धशातातपः अशुचिं संस्पृशेद्यस्तु एक एव स दुष्यति । तत्स्पृष्टोन्यो न दुष्येत सर्वद्रव्येष्वयं विधिः ॥ इति । देवलोपि संस्पृश्याशुचिसंस्पृष्टं तृतीयं वापि मानवः । हस्तौ पादौ च प्रक्षाल्य तोयेनाचम्य शुद्ध्यति ॥ इत्यादि । ७ संमार्जन्यादिभिः क्षिप्तं रज इति काव्यज्ञा आहुः ।

**संकल्पः**—१ अनासन्नक्रियेच्छा । यथा अनागतेषु सर्पव्याघ्रादिषु संकल्पजं दुःखम् (प्रशस्त० २ पृ० ५१) इत्यादौ । २ धर्मज्ञास्तु कर्मसाधनायाभिलापवाक्यम् । यथा मनसा संकल्पयति वाचाभिलपति कर्मणा चोपपादयति (ति० त० रघु०) (वाच०) इत्यादौ इत्याहुः । अत्रोक्तम् संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः । व्रतानि यमधर्माश्च सर्वे संकल्पजाः स्मृताः ॥ (एका० त०) । संकल्पेन विना राजन् यत्किंचित्कुरुते नरः । फलं स्यादल्पकं तस्य धर्मस्यार्धक्षयो भवेत् ॥ (ब्रह्मपु०) इति । ३ कर्मज्ञाश्च अभीष्टसिद्धये इदमित्थमेव कार्यम् इत्येवंरूपो मानसो व्यापारविशेष इत्याहुः । तत्रोक्तम् आशास्य च शुभं कार्यमुद्दिश्य च मनोगतम् इति । संकल्पश्च द्विविधः भावविषयः अभावविषयश्च । तत्राद्यः मयैतत्कर्तव्यम् इत्येवंरूपः । यथा पूजादिसंकल्पः । द्वितीयस्तु मयैतन्न कर्तव्यम् इत्येवंरूपः । यथा उपवासादिसंकल्पः इति ।

**संकीर्णत्वम्**—१ संकरवत्त्वम् । यथा संकीर्णजातिः इत्यादौ । २ एकत्र विजातीयमेलनम् । यथा असंकीर्णबाधः इत्यादौ । ३ अशुद्धत्वप्रयोजको धर्मः इति धर्मज्ञा वदन्ति ।

**संकेतः**—१ (पदवृत्तिः) [क] इदं पदममुमर्थं बोधयतु इति अस्मात्पदादयमर्थो बोद्धव्यः इति वेच्छा (चि० ४) (ग० शक्ति०पृ० ३) (त० प्र० ४) (न्या० बो० ४)। यथा घटपदस्य कम्बुग्रीवादिमत्यर्थे संकेतः । इदं पदमित्यादेरर्थश्च इदं पदमेतदर्थविषयकबोधजनकं भवतु इति । अस्मादित्यादेरर्थस्तु अयमर्थ एतत्पदजन्यबोधविषयतावान् भवतु (ग० शक्ति० टी० पृ० ३) इति । संकेतग्रहस्तु व्याकरणवृद्धव्यवहारादितो भवति (मु० ख० ४) (श० प्र० श्लो० २० पृ० २२) (वै० वि० ७।२।२०) । तत्प्रपञ्चस्तु शक्तिशब्दव्याख्याने दृश्यः । [ख] पतञ्जलिस्तु पदपदार्थयोरितरेतराध्यासरूपः (स्मृत्यात्मकः) । यथा योयं शब्दः सोर्थः योर्थः स शब्दः इति संकेतः इत्याह । संकेतस्य च लोके दर्शनेन तादृशेश्वरसंकेतस्याप्यनुमानम् । अत एव न्यायवाचस्पत्ये उक्तम् सर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः संकेतस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्संकेतः इति (ल० म०) । [ग] अन्ये शाब्दिकास्तु अर्थबोधजनकः शब्दव्यापार इत्याहुः । अत्र मतभेदाः । संकेतश्च जात्यादिचतुष्के इति वैयाकरणा आलंकारिकाश्चाहुः । तदुक्तम् संकेतो गृह्यते जातौ गुणद्रव्यक्रियासु च (भर्तृहरिः) इति । शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः । चातुर्विध्यादमीषां तु शब्द उक्तश्चतुर्विधः ॥ (काव्यादर्शे) इति । जातिद्रव्यगुणस्पन्दैर्धर्मैः संकेतवत्तया । जातिशब्दादिभेदेन चातुर्विध्यं परे (शाब्दिकाः) जगुः ॥ (श० प्र० श्लो० १८ पृ० १७) इति । जात्याकृतिविशिष्टव्यक्तौ इति नैयायिका आहुः । अत्राधिकं च शक्तिशब्दव्याख्याने दृश्यम् । संकेतो द्विविधः आधुनिकसंकेतः ईश्वरसंकेतश्च । तत्राद्यः परिभाषा इत्युच्यते । द्वितीयः शक्तिः इत्युच्यते (ग० शक्ति० पृ० ३) (वै० वि० ७।२।२०) । तदुक्तं भर्तृहरिणा आजानिकश्चाधुनिकः संकेतो द्विविधो मतः । नित्य

आजानिकस्तत्र या शक्तिरिति गीयते ॥ कादाचित्कस्त्वाधुनिकः शास्त्रकारादिभिः कृतः (श० प्र० श्लो० २३ टी० पृ० २६)। इदं च प्राचीनमताभिप्रायेण । नव्यमते च परिभाषापि शक्तिः इत्युच्यत इति बोध्यम् । २ नर्तकास्तु मनोगतभावव्यञ्जनाय कृतो हस्तादिचेष्टाविशेष इत्याहुः । ३ साहित्यशास्त्रज्ञाश्च प्रियसंगमार्थं व्यवस्थापितं गुप्तस्थानम् इत्याहुः ।

**संकोचः**—१ अवयवाकर्षणम् । यथा मतविशेषे मनसः संकोचविकाशशालित्वात् (भा० प० श्लो० ८५ मुक्ता०) इत्यादौ संकोचशब्दस्यार्थः आकुञ्चनम् । २ शाब्दिकास्तु बहुविषयकवाक्यस्याल्पविषयकतया व्यवस्थापनम् इत्याहुः । ३ मीमांसकाश्च सामान्यशब्दस्य विशेषपरत्वं संकोचः । यथा न हिंस्यात् इत्यस्य काम्यहिंसातिरिक्तहिंसापरत्वम् इत्यङ्गीचक्रुः । काव्यज्ञास्तु ४ जडीभावः । ५ बोधः । ६ बन्धः । ७ मत्स्यविशेषः । ८ कुङ्कुमम् इत्याहुः (वाच०)।

**संक्षेपः**—१ एकस्मिन्ननेकेषां शब्दानामर्थानां वा संग्रहः । संक्षेपो द्विविधः शब्दसंक्षेपः अर्थसंक्षेपश्चेति (राम०)। तत्र शब्दसंक्षेपश्च भूयसोर्थस्याल्पवाक्यादिना प्रकाशनम् । अर्थसंक्षेपश्चानुगमः । स च अनुगमशब्दस्यार्थवदनुसंधेयः । २ लघुत्वम् ।

**संख्या**—१ (गुणः) [क] एकत्वादिव्यवहारहेतुर्गुणविशेषः (प्रशस्त० पृ० १३) (त० सं०)। तथा चोक्तम् गुणत्वे सति हेतुत्वं तत्तद्धीव्यवहारयोः (ता० र०) इति । सा च संख्या एकत्वादिपरार्धपर्यन्ता नवद्रव्यवृत्तिः चक्षुरिन्द्रियेण त्वगिन्द्रियेण च गृह्यते । संख्याप्रपञ्चस्तु उपस्कारे (वै० उ० ७।२।८) द्रष्टव्यः । मीमांसकास्तु संख्या गुणादावपि प्रतीतेः पदार्थान्तरमेव इत्याहुः । अत्रेदमनुसंधेयम् संख्या तु व्यञ्जकाभावादव्यक्ता प्रातरादिवत् । यत्र तु व्यञ्जकं किंचित्तत्र संख्या प्रकाशते ॥ इति । [ख] संख्यात्वसामान्यवती । [ग] गणनाव्यवहारासाधारणकारणम् । सा चैकत्वद्वित्वबहुत्वभेदात्त्रिविधा । एकत्वादिपरार्धपर्यन्ता च (त० सं) (प्र० प्र०) (त० कौ०)। अत्रेदं

बोध्यम् । यत्रानियतैकत्वज्ञानं तत्र त्रित्वादिभिन्ना बहुत्वसंख्योत्पद्यते । यथा सेनावनादौ इति कन्दलीकार आह । आचार्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते । तथा च त्रित्वत्वादिव्यापिका बहुत्वत्वजातिर्नातिरिच्यते । सेनादौ चोत्पन्नेपि त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात् ( मु० गु० ) इति । शिष्टं च बहुत्वशब्दव्याख्याने संपादितम् । तत्तत्र दृश्यम् । ब्रह्माण्डपुराणे चेत्थमुक्तम् एकं दश शतं चैव सहस्रमयुतं तथा । लक्षं च नियुतं चैव कोटिरर्बुदमेव च ॥ वृन्दः खर्वो निखर्वश्च शङ्खपद्मौ च सागरः । अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथोत्तरम् ॥ ( सि० च० ) इति । तत्र एकादिसंख्यावाचकस्य संख्यासंख्येयोभयपरता । तेन घटानां पञ्च घटाः पञ्चेति प्रयोगद्वयं साधु । तत्र दशान्तसंख्यायाः प्रायः संख्येये प्रयोगो दृश्यते । किं तु संख्यात्वजातिविशिष्टायामेव शक्तिः । संख्यायुक्ते निरूढलक्षणा इति विवेकः । तेषां विशेषसंज्ञा लीलावत्यामपि दर्शिता यथा एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः । अर्बुदमब्जः ( शङ्खः ) खर्वनिखर्वमहापद्मशङ्कवस्तस्मात् ॥ जलधिश्चान्त्यं मध्यं परार्धमिति दशगुणोत्तराः संज्ञाः । संख्याव्यवहारार्थं कृताः पूर्वैः ( वाच० ) इति । तत्रैकादिदशान्ताः शब्दास्त्रिलिङ्गाः । विंशत्याद्यास्तु नियतस्त्रीलिङ्गादिकाः । तत्रापि विंशत्यादिशब्दानां बहुत्वसंख्यावाचकत्वेपि एकवचनान्ततैव । एकशेषेण तु बहुवचनान्ता अपि पञ्च विंशतयः षट् शतानि इत्यादयः प्रयोगाः साधवः । सा च संख्या प्रकारान्तरेण द्विविधा एकवृत्तिः अनेकवृत्तिश्च । तत्रैकत्वमेकवृत्ति । तच्च नित्यगतं नित्यम् । अनित्यगतमनित्यमेव । द्वित्वादिकं परार्धान्तमनेकवृत्ति । तच्चापेक्षाबुद्धिजन्यं तन्नाशनाश्यं च । परमाणुद्व्यणुकादावतीन्द्रिये तु द्वित्वादिकं भगवदपेक्षाबुद्धिजन्यम् अदृष्टनाशनाश्यं च ( प्रशस्त० पृ० १३ ) ( त० कौ० १ ) ( मु० ) । अत्र भाष्यम् सा संख्या पुनरेकद्रव्या अनेकद्रव्या च । तत्रैकद्रव्यायाः सलिलादिपरमाणुरूपादीनामिव नित्यानित्यत्वनिष्पत्तयः । अनेकद्रव्या तु द्वित्वादिका परार्धान्ता । अत्रेदं विज्ञेयम् द्वित्वादिर्व्यासज्यवृत्तिसंख्या च पर्याप्तिसंबन्धेनानेकाश्रिता समवायेन तु प्रत्येकाश्रिता (भा० प० श्लो० १०९)

( मु० गु० ) इति । द्वित्वादिसंख्यायाः खल्वेकत्वेभ्योनेकविषयबुद्धिसहितेभ्यो निष्पत्तिः । अपेक्षाबुद्धिविनाशाद्विनाशः इति । क्वचिच्चाश्रयविनाशाद्वित्वविनाशः ( प्रशस्त० पृ० २५–२६ ) इति । [ घ ] शाब्दिकास्तु नियतविषयपरिच्छेदहेतुः संख्या इति वदन्ति । २ ज्ञानविशेषः ( सम्यग्बुद्धिः ) । यथा सांख्यः इत्यादौ संख्याशब्दार्थः । ३ विचारः ( राजनि० ) ।

**संगतिः**—१ [ क ] एकवाक्यतापन्नत्वे सति अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयोर्थः । यथा प्रत्यक्षनिरूपणकार्यत्वमनुमाननिरूपणे संगतिः ( दीधि० २ पृ० २ ) ( म० प्र० पृ० १५ ) ( राम० २ पृ० १३४ ) । यथा वा सद्धेतुनिरूपणानन्तरमसद्धेतुनिरूपणे व्याप्तिपक्षधर्मत्वविरहरूपप्रसङ्गसंगतिः ( ग० २ हेत्वा० सामा० पृ० १ ) । संगतिश्च कस्यचिद्वस्तुनो निरूपणे ह्युपयुज्यते । अत्र व्याप्तिरनुसंधेया यद्यदनन्तरं निरूप्यं भवति तत्तत्संगतं भवति ( राम० २ पृ० १३४ ) इति । असंगतत्वज्ञानेन हि ग्रन्थादेरुन्मत्तप्रलपितत्वशङ्का उत्पद्यते । संगतत्वज्ञानेन तु तन्निवृत्तिः । तत एकवाक्यताप्रतिपत्तिः । तदेव संगतेः प्रयोजनम् ( भवा० ) । अत एव प्रमाणमपि नासंगतं प्रयुञ्जीत इत्यभियुक्तोक्तिः ( राम० २ पृ० १३४ ) । पूर्वापरग्रन्थैकवाक्यताप्रतिपत्तिः एकप्रयोजनवत्ताज्ञानफलिका प्रयोजनम् ( दीधि० २ पृ० १ ) ( वै० सा० द० ) । संगतिलक्षणं तु प्रसङ्गाद्यन्यतमत्वम् ( भवा० ) । जायते च कार्ये कारणे वा ज्ञाते कारणत्वस्य कार्यत्वस्य वा ज्ञानात् किमस्य कारणं कार्यं वा इति जिज्ञासा । अतस्तयोर्द्वयोरपि संगतित्वम् ( दीधि० २ पृ० १–२ ) । तथा हि । प्रत्यक्षाभिधानानन्तरमनुमानाभिधानं निरूपणात्मकम् । तत्प्रयोजकजिज्ञासा प्रत्यक्षकार्यज्ञानं भवतु इत्याकारा । तज्जनकज्ञानं प्रत्यक्षकार्यज्ञानमिष्टसाधनम् इत्याकारकम् । तद्विषयः प्रत्यक्षकार्यत्वम् । इति कार्यत्वे लक्षणसमन्वयः । एवं कारणत्वादावपि संगतित्वमूह्यम् ( न्या० म० २ पृ० १५ ) । जिज्ञासायाः प्रयोजकत्वं चेत्थम् । प्रथमं ज्ञानेष्टसाधनता-

ज्ञानाज्जिज्ञासा । ततो ज्ञानसाधनीभूतवाक्येच्छा । ततो वाक्यसाधनीभूतकण्ठाद्यभिघातेच्छा । ततस्तत्र प्रवृत्तिः । ततः कण्ठाद्यभिघातः । ततोनन्तराभिधानं निरूपणीयस्य ( म० प्र० २ पृ० १५ ) इति । [ ख ] अनन्तराभिधानप्रयोजकजिज्ञासाजनकं यत्संगतिनिरूपकज्ञानप्रयोज्यं ज्ञानं तद्विषयस्मरणानुकूलसंबन्धः । संगतिः षड्विधा प्रसङ्गः १ उपोद्घातः २ हेतुत्वम् ३ अवसरः ४ निर्वाहकैक्यम् निर्वाहकत्वं वा ५ कार्यैक्यम् एककार्यत्वं वा ६ इति । तदुक्तम् सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा । निर्वाहकैक्यकार्यैक्ये षोढा संगतिरिष्यते ॥ ( राम० २ पृ० १३४ ) ( वै० सा० द० ) इति । वेदान्तिनस्तु शास्त्रेऽध्याये तथा पादे न्यायसंगतयस्त्रिधा इति । अवान्तरसंगतयस्तु आक्षेपसंगतिः दृष्टान्तसंगतिः प्रासङ्गिकसंगतिः मीमांसासंगतिः एवमादिभेदेनानेकविधा इत्याहुः ( वाच० ) । २ संगमः । ३ संमेलनम् इति काव्यज्ञा आहुः ।

**संगीतम्**—१ दर्शनार्थं नाट्यगीतवाद्यत्रिकम् ( हेमच० ) । यथा संगीतरसमाधुर्यम् इत्यादौ संगीतशब्दस्यार्थः । अत्र प्रशंसा पशुर्वेत्ति शिशुर्वेत्ति वेत्ति गानरसं फणी । संगीतरसमाधुर्यं शंकरो वेत्ति वा न वा ॥ इति । अत्र धूर्तबकाः प्रलपन्ति वानवा इत्येकं पदम् । तथा च वानवा विदुरः प्रोक्तः इति कल्पितप्रमाणात् शंकरो वेत्ति विदुरोपि वेत्ति इति वाक्यार्थो भवति इति । २ तादृशत्रिकप्रतिपादको ग्रन्थः । संगीतशास्त्राणि च नानाविधानि । तत्र मूलग्रन्थकर्तारश्चत्वारः भरतः हनुमान् सोमेश्वरः कलानाथश्चेति । तत्र हनुमद्ग्रन्थस्यैव लोकेधुना बहुलप्रचारः । तद्ग्रन्थस्य च सप्ताध्यायाः स्वराध्यायः रागाध्यायः तालाध्यायः नृत्याध्यायः भावाध्यायः कोकाध्यायः हस्ताध्यायश्चेति । अत्रत्यः संगीतसारादौ विस्तारो दृश्यः ।

**संग्रहः**—१ [ क ] स्नेहद्रवत्वकारितः संयोगविशेषः पिण्डीभावरूपः । यथा सक्तुकादिसंयोगविशेषः । स च जलेनापि सक्तुसिकतादौ दृश्यमानः स्नेहं जले द्रढयति ( वै० उ० २।१।२ पृ० ७२ ) । द्रवत्वसहितः स्नेहस्तु संग्रहे निमित्तं कारणम् ( भा० प० गु० श्लो० १५७ )

इत्यन्यत्रोक्तम् । [ ख ] द्रवत्वसहितस्नेहकारितः संयोगविशेषः ( वै० वि० २।१।२ पृ० ७२--७३ ) ( प० मा० ) । तथा हि । स हि संग्रहः न द्रवत्वमात्रकारितः । काचकाञ्चनद्रवत्वेन संग्रहानुपपत्तेः । नापि स्नेहमात्रकारितः । स्त्यानैर्घृतादिभिः संग्रहानुपपत्तेः । तस्मात् अन्वयव्यतिरेकाभ्यां स्नेहद्रवत्वकारितः ( वै० उ० २।१।२ पृ० ७२ ) । तेन द्रुतसुवर्णादीनां न संग्रहः ( भाषाप० श्लो० १५६ मु० ) इति । २ संक्षेपेण स्वरूपकथनम् । लक्षणस्वरूपविभागप्रकारकज्ञानानुकूलः संक्षिप्तो व्यापार इत्यर्थः ( वाक्य० ) । यथा तर्कसंग्रहः इत्यादौ संग्रहशब्दस्यार्थः ( त० दी० ) । ३ अनेकेषामेकत्र स्थापनं संग्रह इति काव्यज्ञा वदन्ति । ४ बह्वर्थकवाक्यानामेकत्र संकलनम् । अत्रोक्तम् विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः । निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः ॥ इति । ५ ग्रहणम् । ६ संक्षेपः । ७ महोद्योगः । ८ व्याडिप्रणीतो व्याकरणग्रन्थविशेषः ।

**संग्रहणम्**---[ क ] सहासनं विविक्तेषु परस्परमुपाश्रयः । केशाकेशिग्रहं चैव सम्यक् संग्रहणं स्मृतम् ॥ स्त्रीपुंसयोर्मिथुनीभावः संग्रहणम् ( मिताक्षरा अ० २।२८२ ) । [ ख ] साहसशब्दवाच्यानां रहसि क्रियमाणानां संग्रहणशब्दवाच्यत्वम् ( मिताक्षरा अ० २ श्लो० ७२ ) ।

**संघः**---१ प्रव्रजितविशेषोपग्रहेण वर्तमानपरिषत् ( न्या० वा० १।१।१४ पृ० ७९ ) । २ सजातीयप्राणिसमूहः । यथा संघे शक्तिः कलौ नृणाम् इत्यादौ संघशब्दस्यार्थः । ३ जन्तुविशेषः ।

**संघातः**---पदार्थसमुदायसंयोगः । यथा दिव्येन तेजसा संयुक्तानामाप्यानां परमाणूनां परस्परसंयोगो द्व्यारम्भकः संघाताख्यः । स च हिमकरकादिपरमाणुद्रवत्वप्रतिबन्धकः ( प्रशस्त० द्रवत्वनि० पृ० ५२ ) । एवमन्येषामपि संघात ऊह्यः ।

**संज्ञः**---१ संहतजानुकः । २ गन्धद्रव्यविशेषः ।

**संज्ञा**---१ बुद्धिः । २ आख्या । ३ चेतना । ४ हस्तैरर्थसूचनम् । ५ गायत्री । ६ सूर्यपत्नी । ७ संकेतवत्प्रातिपदिकम् ( विशिष्टनाम )

(प० मा०) । यथा संज्ञा कर्म त्वस्मद्विशिष्टानां लिङ्गम् (वै० २।१।१८) इत्यादौ यव वराह वेतस स्वर्ग वायु इत्यादिशब्दः (वै० उ० २।१।१८) (वै० वि० २।१।१८ पृ० ९३)। यथा संज्ञासंज्ञिसंबन्धज्ञानमुपमितिः इत्यादौ गवयादिशब्दः संज्ञा (नील० ३)। एवम् घटादिशब्दोपि । रूढं संकेतवन्नाम सैव संज्ञेति कीर्त्यते (श्लो० १७) इति शब्दशक्तिप्रकाशिकायामुक्तम् । संज्ञा त्रिविधा नैमित्तिकी पारिभाषिकी औपाधिकी चेति । केचिद्दण्ड्याचार्यप्रभृतयस्तु रूढनाम्नो जातिद्रव्यगुणक्रियात्मकार्थचतुष्टयभेदेन चातुर्विध्यमङ्गीचक्रुः । तथा हि । गोगवयादीनां शब्दानां गोत्वादिजात्या पश्वाढ्यादीनां शब्दानां लाङ्गूलधनादिद्रव्येण धन्यपिशुनादीनां शब्दानां पुण्यद्वेषादिगुणेन चलचपलादीनां च शब्दानां कर्मणा अवच्छिन्ने शक्तिमत्त्वाच्चातुर्विध्यमेव शब्दानाम् इति । तच्च शब्दशक्तिप्रकाशिकाकृद्भिः परित्यक्तम् । तत्र कारणं तु जडमूकमूर्खादीनां शब्दानाम् अन्यशून्यादीनां शब्दानां चासंग्रहः (श० प्र० श्लो० १८ टी० पृ० १७) इति । अन्ये तु पूर्वं विभक्तायास्त्रिविधसंज्ञाया अन्यथोदाजह्रुः । संज्ञा त्रिविधा पारिभाषिकी नैमित्तिकी औपाधिकी चेति । तत्र आधुनिकसंकेतशालिनी अनुगतप्रवृत्तिनिमित्तशून्या च संज्ञा पारिभाषिकी । यथा चैत्रमैत्रादिः आकाशादिश्च । तत्तच्छरीरनिष्ठचैत्रत्वादेराकाशत्वादेश्चाननुगतस्यैवात्र प्रवृत्तिनिमित्तत्वात् इति भावः (म० प्र० ४ पृ० ४६)। अनादिसंकेतशालिनी अनुगतप्रवृत्तिनिमित्तिका च संज्ञा नैमित्तिकी । यथा पृथिवीजलादिः पशुभूतादिश्च । पशुत्वादेरुपाधित्वेपि रोमवल्लाङ्गूलवत्त्वं पशुत्वम् बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं भूतत्वम् इत्याद्यनुगतत्वात् इति भावः । यौगिकी संज्ञा औपाधिकी । यथा पाचकपाठकादिः (म० प्र० पृ० ४।४६) इति । पङ्कजादियोगरूढानां तु नैमित्तिकत्वेप्यौपाधिकत्वमविरुद्धम् । रूढ्या पद्मत्वादिमतो योगेन च पङ्कजनिकर्तुरुपस्थितौ पद्मं पङ्कजनिकर्तृ इत्येव शाब्दबोधात् इति । अत्रायं विशेषः । करणाधिकरणशब्दाश्च संकेतिता एव । पाचकपाठकादयस्तु संकेतशून्यत्वान्न संज्ञाः । तेषामपि संज्ञात्वे तु अनुगतप्रवृत्तिनिमित्तशून्यसंकेतवती पारिभाषिकी संकेतशून्यत्वे सति यौगिकी औपा-

धिकी अनुगतप्रवृत्तिनिमित्तसंकेतवती नैमित्तिकी इति निर्वाच्याः इति । अन्यत्र चैवमुक्तम् । संज्ञा त्रिविधा पारिभाषिकी औपाधिकी नैमित्तिकी चेति । तत्राद्या आधुनिकसंकेतशालिनी । यथा चैत्रादिः । द्वितीया उपाधिप्रवृत्तिनिमित्तिका । यथा पशुभूताकाशादिः । तृतीया जातिप्रवृत्तिनिमित्तिका । यथा पृथिवीजलादिः । भाष्यकृतस्तु आकाशादिसंज्ञाः पारिभाषिक्य एव इत्याहुः ( प० मा० ) । शिष्टं तु रूढशब्दव्याख्याने संपादितमेव इति नात्र कथितम् ।

**संज्ञास्कन्धः**—गौरित्यादिशब्दोल्लेखिसंवित्प्रवाहः ( सर्व० सं० पृ० ४० बौ० ) ।

**संज्ञी**—संज्ञाशब्दप्रतिपाद्योर्थः । यथा संज्ञासंज्ञिसंबन्धज्ञानमुपमितिः इत्यादौ गवयादिरूपोर्थः संज्ञी ( नील० ) ।

**संततिः**—१ अविच्छिन्नधारा । इयं संततिर्द्विविधा दैशिकी कालिकी चेति । तत्र दैशिकी मूर्तानामेव । यथा तैलादीनाम् । कालिकी संततिस्तु ज्ञानत्वसुखत्वादीनाम् । अत्र दैशिकसंततित्वं च स्वाधिकरणदेशीयनानावच्छेदकवृत्तिधर्मत्वम् । तथा कालिकसंततित्वं च नानाकालीनकार्यमात्रवृत्तिधर्मत्वम् ( चि० २ परिशि० मुक्तिवादः पृ० ४५ ) । काव्यज्ञास्तु २ गोत्रम् । ३ पुत्रः दुहिता च । ४ विस्तारः । ५ पङ्क्तिश्च इत्याहुः ।

**संतर्दनम्**—परस्परं संयोगः ( जै० सू० वृ० अ० ३ पा० ३ सू० २४ ) ।

**संतानः**—१ एकधर्मावच्छिन्नत्वेन ज्ञानम् ( गौ० वृ० २।२।१७ ) । यथा बौद्धमते आलयविज्ञानसंतानः । २ वंशः इति काव्यज्ञा वदन्ति ।

**संदंशः**—एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वम् । यथाभिक्रमणम् ( मी० न्या० पृ० २९ ) ।

**संदर्भः**—१ कथनम् । अत्रोक्तम् गूढार्थस्य प्रकाशश्च सारोक्तिः श्रेष्ठया गिरा । नानार्थवत्त्वं वेद्यत्वं संदर्भः कथ्यते बुधैः ॥ इति । २ वक्तृतात्पर्यविशेषः । ३ रचना । ४ ग्रथनम् । ५ प्रबन्धः ।

**संदिग्धः**—१ ( हेत्वाभासः ) [ क ] अनैकान्तिकशब्दवदस्यार्थोनुसंधेयः ( वै० २।२।३६,३।१।१५ ) ( त० व० २।३।४८ ) । तदुक्तम् विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोब्रवीत् ( वै० उ० २।२।३६ ) ( प्रशस्त० गुणनि० ) इति । [ ख ] यस्तु सन्ननुमेये तत्समानासमानजातीययोः साधारणः स सन्नेव संदेहजनकत्वात्संदिग्धः । यथा यस्माद्विषाणी तस्माद्गौः इति । [ ग ] एकस्मिंश्च द्वयोर्हेत्वोर्यथोक्तलक्षणयोर्विरुद्धयोः संनिपाते संशयदर्शनादयमन्यः संदिग्धः इति केचिदाहुः । यथा मूर्तत्वामूर्तत्वं प्रति मनसः क्रियावत्त्वास्पर्शत्वयोः ( प्रशस्त० २ पृ० ४७ ) ( वै० ३।१।१५ ) इति । २ संदेहविषयः । यथा संदिग्धासिद्धः ( न्या० बिन्दु० टी० ) इत्यादौ संदिग्धशब्दार्थः । ३ संलिप्तः इति काव्यज्ञा आहुः ।

**संदिग्धानैकान्तिकत्वम्**—१ ( हेत्वाभासः ) साध्यतदभावसंशयकत्वम् । २ पक्षांशे साध्याभावसंशयात्मकं पक्षवृत्तित्वावगाहि व्यभिचारज्ञानम् । अथ वा हेतौ व्यभिचारसंशयः ( ग० बाध० ) । यथा धूमो वह्न्यभाववद्वृत्तिर्न वा इत्यादिसंशयः । यथा वा बौद्धमते सर्वज्ञः कश्चिद्वक्तृत्वात् ( न्या० बिन्दु० टी० ) इत्यादौ ।

**संदिग्धैकादशी**—उदयात्प्राक्त्रिघटिकाव्यापिन्येकादशी यदा । संदिग्धैकादशी नाम वर्जयेद्धर्मवृद्धये ॥ ( पु० चि० पृ० १५२ ) ।

**संदेहः**—१ संशयशब्दवदस्यार्थोनुसंधेयः । २ आलंकारिकाश्च अर्थालंकारविशेष इत्याहुः । तदुक्तं काव्यप्रकाशे ससंदेहस्तु भेदोक्तौ तदनुक्तौ च संशयः ( का० प्र० उ० १० श्लो० ६ ) इति ।

**संधिः**—१ संयोगः ( अमरः ३।२।११ ) । २ नृपाणां षड्गुणान्तर्गतो मैत्रीकरणरूपव्यापार इति नीतिशास्त्रज्ञा आहुः । अत्रोक्तम् संधिविग्रहयानानि संस्थाप्यासनमेव च । द्वैधमाश्रयणं चैव षड्गुणा नीतिवर्णने ॥ इति । संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ( अमरः २।८।१८ ) इति च । अत्राधिकं तु शुक्रनीतियुक्तिकल्पतरुहितोपदेशादौ द्रष्टव्यम् । ३ वैयाकरणास्तु वर्णद्वयजातो वर्णविकारः । यथा अच्संधिः हल्संधिः

इत्याहुः । श्री ईश इति स्थिते श्रीश इत्यच्संधिः । तत् लय इति स्थिते तल्लय इति हल्संधिः । ४ नाटकाङ्गविशेषः इत्यालंकारिका आहुः । अत्रोक्तम् अन्तरैकार्थसंबन्धः संधिरेकान्वये सति (सा० द० परि० ६ श्लो० ७५) इति । ५ अस्थिद्वयसंयोगस्थानम् इति शारीरज्ञा आहुः । ६ धर्मशास्त्रज्ञास्तु यस्मिन् काल आदित्यस्य खण्डमण्डलस्योपलब्धिः सः । यथा अहोरात्रयोः संधिः इत्यादावित्याहुः (मिता० १) । ७ चौरादिकृतसुरङ्गा । यथा संधिं कृत्वा तु मे चौर्यम् (स्मृतिः) इत्यादौ । ८ भगः । ९ संघट्टनम् । १० सत्यादियुगादीनामाद्यन्तौ कालौ इति पौराणिका आहुः । अत्रोक्तम् ससंधयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश । कृतप्रमाणः कल्पादौ संधिः पञ्चदशः स्मृतः ॥ इति । तत्र सत्ययुगस्य चत्वारि वर्षशतानि संध्या संध्यांशश्च । त्रेतायास्त्रीणि वर्षशतानि संध्या संध्यांशश्च । द्वापरस्य द्वे वर्षशते संध्या संध्यांशश्च । कलेरेकवर्षशतं संध्या संध्यांशश्च (मनु० अ० १ श्लो० ६९—७०) ।

**संध्या**—१ एकरूपकालोत्तरभाविपररूपकालयोरवकाशविशेषः । यथा दिवारात्रस्य मध्यवर्तिकालः संध्या भवति । स च कालः दिवाशेषदण्डसहितरात्रिप्रथमदण्डात्मकः कालः । तयोश्चतुर्दण्डात्मककालश्च । तथा च त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टये । नाडीनां तदुभे संध्ये दिवसाद्यन्तसंज्ञिते ॥ इति । युगस्य तु पूर्वा संध्या उत्तरश्च संध्यांशः (मनु० टी० कुल्लू० १।६९) । तं चान्यरीत्याप्याहुः पूर्वदिवसीयरात्रिशेषदण्डादिपरदिनसूर्योदयपर्यन्तः सूर्यास्तात्पूर्वोत्तरदण्डात्मकः कालः इति । संध्याद्वयकालस्तु अहोरात्रसंबन्धिमुहूर्तात्मकः । तथा च दक्ष आह अहोरात्रस्य यः संधिः सूर्यनक्षत्रवर्जितः । सा च संध्या समाख्याता मुनिभिस्तत्त्ववादिभिः ॥ (पुरु० चि० पृ० ४५८) इति । तथा नक्षत्रदर्शनात्संध्या सायं तत्परतः स्थितम् । तत्परा रजनी ज्ञेया तत्र धर्मान्विवर्जयेत् ॥ (पुरु० चि० पृ० ४६) इत्युक्तम् । २ सायाह्नः । ३ संध्याकालः उपास्यदेवताविशेषः । अत्रार्थे प्रमाणम् संध्यामुपासते ये तु नियतं शंसितव्रताः इति स्मृतिः । ४ संध्योपासना । यथा अनर्हः

कर्मणां विप्रः संध्याहीनो यतः स्मृतः ( स्मृतिः ) इत्यादौ संध्याशब्दस्यार्थः । अत्र व्यास आह उपास्ते संधिवेलायां निशाया दिवसस्य च । तामेव संध्यां तस्मात्तु प्रवदन्ति मनीषिणः ॥ इति । संध्यात्रयसाधारणलक्षणमाह योगियाज्ञवल्क्यः त्रयाणां चैव देवानां ब्रह्मादीनां समागमः । संधिः सर्वसुराणां च तेन संध्या प्रकीर्तिता ॥ इति । एतत्संध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम् । यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥ ( छन्दोगप० ) ( वाच० ) इति । संध्याफलं पापव्यपोहः ( मनु० २।१०२ ) । ५ वेदान्तिनस्तु प्रबोधगाढनिद्रावस्थयोः संधिभवः स्वप्नः । यथा संध्ये सृष्टिराह हि ( ब्रह्मसू० ३।२।१ ) इत्यादौ संध्यशब्दस्यार्थ इत्याहुः । अत्रार्थे व्युत्पत्तिः जाग्रत्सुषुप्तिसंधौ भवति इति संध्यः स्वप्नः ( तत्त्वप्रकाशिका ३।२।१ ) ।

**संनिकर्षः**—१ प्रत्यक्षजनकः संबन्धः । यथा चाक्षुषप्रत्यक्षे चक्षुर्विषययोः संसर्गः । संनिकर्षो द्विविधः लौकिकः अलौकिकश्चेति । वार्तिककारैश्चेत्थमुक्तम् । योयं संनिकर्षशब्दः संयोगसमवायविशेषणविशेष्यभावव्यापकत्वादुपात्त इति सोयं संनिकर्षः प्रत्यक्षस्य कारणं भवति ( न्या० वा० १ पृ० ३३ ) । विशेषणविशेष्यभावोत्र न विषयतारूपः । अपि तु स्वरूपसंबन्धावच्छिन्नाधाराधेयभावः ( नील० १ पृ० १८ ) । मध्वमतानुयायिभिरयं षड्विधसंनिकर्षो नाङ्गीक्रियते । किं तु सर्वेन्द्रियाणां स्वस्वविषये साक्षादेव रश्मिद्वारा संनिकर्षः ( प्र० प० पृ० ११ ) । शिष्टं तु इन्द्रियार्थसंनिकर्षशब्दव्याख्याने दृश्यम् ( प्रशस्त० गु० पृ० ४२–४३ ) । २ संनिकृष्टत्वशब्दवदस्यार्थोनुसंधेयः ( वै० उ० ७।२।२१ ) ।

**संनिकृष्टत्वम्**—सांनिध्यम् । अत्रायं कार्यकारणभावः संनिकृष्टत्वबुद्धिरपरत्वे निमित्तकारणम् इति ( वै० उ० ७।२।२१ पृ० ३४२ ) । एतेन वैशेषिकमते संनिकृष्टत्वविप्रकृष्टत्वे ( दूरत्वसमीपत्वे ) परत्वापरत्वाभ्यामतिरिक्ते एव । नव्यमते तु ते ताभ्यामनतिरिक्ते एव इत्युक्तम् इति विज्ञेयम् । सांनिध्यं च १ संयुक्तसंयोगाल्पत्वम् । तच्च दिक्कृतं

संनिकृष्टत्वम् इति विज्ञेयम् । अथ वा अल्पसंयोगान्तरितत्वम् ( वै० उ० ७।२।२१ पृ० ३४२ ) ( दि० गु० पृ० २०८ ) । यथा पञ्चवर्षाक्ष्यम्बकेश्वरमपेक्ष्य जनस्थानसंनिकृष्टत्वम् । यथा वा सहृत्संनिकर्षो हि क्षणार्धमपि मन्यते ( पुराणम् ) इत्यादौ संनिकर्षशब्दस्यार्थः । २ तदपेक्षयाल्पतरतपनपरिस्पन्दान्तरितजन्मत्वम् ( वै० उ० ७।२।२१ पृ० ३४३ ) । तदर्थस्तु तदधिकरणकालध्वंसाधिकरणक्षणवृत्तिजन्मवत्त्वम् ( प० मा० ) इति । एतच्च कालकृतं संनिकृष्टत्वम् इति विज्ञेयम् । यथा युधिष्ठिरमपेक्ष्यार्जुनस्य भीमसंनिकृष्टत्वम् । शिष्टं च अपरत्वशब्दव्याख्यानावसरे संपादितम् इत्यत्र विरम्यते । ३ निकटसंबन्धः ।

**संनिधानम्** } **संनिधिः** } —१ अव्यवधानम् ( मु० ४ ) । यथा संनिधानं तु पदस्यासत्तिरुच्यते ( भा० प० ४ श्लो० ८४ ) इत्यादौ संनिधानशब्दार्थः । २ सामीप्यम् ( संनिकृष्टत्वम् ) । ३ अविनाभाववृत्तिः संनिधिः ( वात्स्या० २।२।५८ ) । यथा तदर्थे व्यक्त्याकृतिजातिसंनिधावुपचारात्संशयः ( गौ० २।२।५८ ) इत्यादौ संनिधिशब्दस्यार्थः । अत्र वृत्तिकारस्तु सामीप्यम् मेलनम् संनिधिः इत्याह ( गौ० वृ० २।२।५८ ) । ४ इन्द्रियविषयता इति केचिदाहुः ( मेदि० ) ।

**संनिपत्योपकारकम्**—कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म । यथावघातप्रोक्षणादि ( मी० न्या० पृ० ३४ ) ।

**संनिपातः**—१ पतनम् । यथा दृष्टिसंनिपात इत्यत्र । २ शाब्दिकास्तु संश्लेषः ( संबन्धः ) । यथा संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य ( व्याक० परिभा० ) इत्यादौ संनिपातशब्दस्यार्थ इत्याहुः । ३ भिषजस्तु कफादिधातुत्रयस्य वैषम्यरूपत्रिदोषजनितो ज्वरविशेष इत्याहुः । संनिपातज्वरावस्थं प्रकृत्याह तदवस्थं तु तं दृष्ट्वा मूढो व्याहरते जनः । धर्षितो राक्षसैर्नूनमवेलायां चरन्ति ये ॥ अम्बया मुक्त केचिद्यक्षिण्या ब्रह्मराक्षसैः । पिशाचैर्गुह्यकैश्चैव तथान्यैर्मस्तके हतम् ॥ कुलदेवार्चनाहीनं धर्षितं कुलदेवतैः । नक्षत्रपीडामपरे गरकर्मेति चापरे ॥ संनि-

पातमिमं प्राहुर्भिषजः कूटपाल्कम् इति । कारणपूर्विकां संनिपातज्वरसंप्राप्तिमाह त्रिदोषजनकैर्वातपित्तश्लेष्मणामगेहगाः । बहिर्निरस्य कोष्ठाग्निं रसगा ज्वरकारिणः ॥ ( भावप्र० ) इति । ४ गायकास्तु तालविशेष इत्याहुः । अत्रोक्तम् एक एव गुरुर्यत्र संनिपातः स चेष्यते ( संगीतदा० ) इति ।

संनिवापः—सर्वेषामग्नीनां मेलनम् ( जै० सू० वृ० अ० ६ पा० ६ सू० ३२ ) ।

संनिहितत्वम्—१ संनिकृष्टत्वम् । २ संनिधिः ३ सम्यक्प्रस्थापनम् ।

संन्यासः—१ [ क ] काम्यकर्मत्यागः ( कि० व० पृ० १३ ) । तदुक्तं गीतायाम् काम्यानां कर्मणां न्यासं ( त्यागम् ) संन्यासं कवयो विदुः ( गीता० अ० १८ श्लो० २ ) इति । [ ख ] वेदान्तिनस्तु सर्वसमर्पणम् विहितकर्मणां विधानेन फलानिच्छया काम्यकर्मत्यागो वा संन्यास इत्याहुः । २ काम्यकर्मत्यागोपयोगिचतुर्थाश्रमः । चतुर्थाश्रमिणां धर्मभेदेन नामभेदा दश यथा तीर्थाश्रमवनारण्यगिरिपर्वतसागराः । सरस्वती भारती च पुरीति दश कीर्तिताः ॥ ( बृहच्छंकरविजये विद्यारण्यधृतं वाक्यम् ) इति । ३ पौराणिकाश्च चैत्रे मासि क्षत्रियादिकर्तव्यः शिवव्रतविशेष इत्याहुः । ४ जटामांसी ( दम्भवर्तनम् ) ( शब्दच० ) ।

संपत्तिः—१ ज्ञानम् । मायावादिनस्तु भ्रमात्मकं ज्ञानम् । यथा संपदात्मा इत्यादौ इत्याहुः । २ प्राप्तिः । ३ ऐश्वर्यं च इति काव्यज्ञा वदन्ति । अत्र संपत्तिस्तु अनुरूपात्मभावे यस्य यद्रूपतोचिता तस्य तथाभवनम् ( सि० च० ) ।

संपूर्णा—( तिथिः ) आदित्योदयवेलाया आरभ्य षष्टिनाडिका । या तिथिः सा तु संपूर्णा कथिता पूर्वसूरिभिः ॥ ( पु० चि० हे० वा० पृ० १४८ ) ।

संप्रज्ञातसमाधिः—एकाग्रचेतसि प्रमाणादिवृत्तीनां बाह्यविषयाणां निरोधः ( सर्व० सं० पृ० ३५६ पात० ) ।

**संप्रतिपत्तिः**—१ निश्चयः ( गौ० वृ० २।१।३ ) । यथा विप्रतिपत्तौ च संप्रतिपत्तेः ( गौ० २।१।३ ) इत्यादौ संप्रतिपत्तिशब्दस्यार्थो निश्चयः । २ प्रत्यभिज्ञा ( वै० उ० २।२।३५ ) । यथा संप्रतिपत्तिभावाच्च (वै० २।२।३५) इत्यादौ संप्रतिपत्तिशब्दस्यार्थः प्रत्यभिज्ञा । ३ उत्पत्तिः ( गौ० वृ० ३।१।१९ ) । यथा पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसंप्रतिपत्तेः ( गौ० ३।१।१९ ) इत्यादौ संप्रतिपत्तिशब्दस्यार्थ उत्पत्तिः । ४ तदनुभवः संप्रतिपत्तिः ( न्या० वा० ) । ५ व्यवहारज्ञास्तु वाद्युक्तार्थविषयस्वीकारः सत्योत्तररूप उत्तरविशेष इत्याहुः । तदुक्तम् श्रुत्वाभियोगं प्रत्यर्थी यदि तं प्रतिपद्यते । सा तु संप्रतिपत्तिः स्यात् इति स्मृतिः । तथा मिथ्या संप्रतिपत्तिश्च प्रत्यवस्कन्दनं तथा । प्राङ्न्यायश्चोत्तराः प्रोक्ताश्चत्वारः शास्त्रवेदिभिः ॥ इति च कात्यायनस्मृतिः ( मिताक्षरा अ० २ श्लो० ७ ) ।

**संप्रदानत्वम्**—( कारकम् ) [ क ] गत्यादिभिन्ने यद्धातूपस्थाप्ये यादृशार्थे विग्रहस्थचतुर्थ्या यः स्वार्थो बोधयितुं शक्यते स तद्धातूपस्थाप्यतादृशक्रियायां संप्रदानत्वमुच्यते । यथा ब्राह्मणाय दानं धनस्य इत्यादौ ब्राह्मणस्य संप्रदानत्वम् । ग्रामाय गतः इत्यादौ विग्रहस्थचतुर्थ्या धात्वर्थे बोध्यमपि कर्मत्वं न गत्यादिभिन्ने चतुर्थ्या बोधयितुं शक्यते । वृक्षाय सेचकः इत्यादौ गत्यादिभिन्ने चतुर्थ्या बोधनीयोपि संवर्धयितुं इत्यादितुमर्थो न विग्रहस्थया इति न तत्र प्रसङ्गः । संप्रदानशब्दस्तु स्वाश्रयगोचरत्यागजन्यस्वत्वस्य प्रतियोगिन्येव शक्तः इति स्वत्वप्रतियोगित्वं संप्रदानत्वम् इत्यादिको न प्रयोगः । ब्राह्मणाय दानमित्यत्र ददातेः स्वत्वजनकस्त्यागोर्थः । तन्निविष्टे च स्वत्वे ब्राह्मणादेः प्रतियोगित्वं निरूपितत्वं वा चतुर्थ्या बोध्यते इति तदेव तत्र संप्रदानत्वम् । ब्राह्मणप्रतियोगिकं ब्राह्मणनिरूपितं वा यद्धनवृत्ति स्वत्वम् तज्जनकस्त्यागः इत्येवं तत्र प्रत्ययात् । धात्वर्थतावच्छेदकीभूतस्वत्वाख्यफलवत्तया धनादेर्दानकर्मत्वात् ( श० प्र० श्लो० ७० टी० पृ० ८४–८५ ) । [ ख ] धात्वर्थतावच्छेदकफलभागित्वेनोद्देश्यत्वम् । यथा विप्राय गां ददाति इत्यादौ

विप्रस्य संप्रदानत्वम् । अत्र संबन्धित्वेन परेच्छाविषयत्वं चतुर्थ्यर्थः । स च धात्वर्थतावच्छेदकफलेऽन्वेति । वृत्तित्वं द्वितीयार्थः । तथा च विप्रसंबन्धिपरेच्छाविषयगोवृत्तिस्वस्वत्वध्वंसपरस्वत्वानुकूलत्यागानुकूलकृतिमान् । इत्यन्वयधीः । अत्र चैत्राय यच्छति इत्यादिप्रयोगवारणाय पर इति पदं दत्तम् (का० व्या० कार० ४ पृ० ८) । कर्मणा यमभिप्रैति स संप्रदानम् (पाणि० १।४।३२) इति सूत्रेण विप्रस्य संप्रदानसंज्ञा । तदर्थश्च तत्क्रियाकरणीभूतेन तत्क्रियाकर्मणा यमभिप्रैति संबन्धुमिच्छति सः फलभागित्वेनोद्देश्यः संप्रदानसंज्ञकः इति । अत्र गौणमुख्यसाधारणे संप्रदाने चतुर्थी भवति (वाच०) । पितृस्वर्गोद्देशेन कृतगोदानादिस्थले दानजन्यस्वर्गात्मकफलभागित्वेन पितुरुद्देश्यत्वेपि पितृस्वर्गादिकस्य धात्वर्थतावच्छेदकत्वाभावेन न पित्रादेः संप्रदानत्वम् इति पित्रे गां ददाति इति न प्रयोगः (का० व्या० कार० ४ पृ० ८) । [ग] क्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वम् (ग० व्यु० का० २ पृ० ४३) । ब्राह्मणाय गां ददाति इत्यादौ क्रिया च दानम् । तज्जन्यं फलं तु स्वत्वम् । तथा च दानस्य स्वत्वहेतुत्वे प्रमाणम् सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः । प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥ (मनु० अ० १० श्लो० ११५) इत्यादि । प्रदानं स्वाम्यकरणम् इति च । अत्रायमाशयः । ब्राह्मणाय त्यक्तायां गवि गौरियं ब्राह्मणस्य न तु मम इत्यादिः सार्वजनीनप्रतीतिरेव तत्र प्रमाणम् (श० प्र० श्लो० ७० टी० पृ० ८५) इति । [घ] धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलसंबन्धविशिष्टतयेष्टत्वम् । यथा ब्राह्मणाय गां ददाति इत्यादौ ब्राह्मणस्य संप्रदानत्वम् । तथा चात्र निरूपितत्वेन कर्तुरिच्छाविषयत्वं चतुर्थ्यर्थः । स्वस्वजनकत्यागो ददात्यर्थः । निरुक्तचतुर्थ्यर्थस्य द्वितीयान्तार्थगोवृत्तित्वस्य च धात्वर्थतावच्छेदकस्वत्वेऽन्वयः । एवं च ब्राह्मणनिरूपितत्वेनेच्छाविषयगोनिष्ठस्वत्वजनकत्यागकर्ता इति बोधः । धात्वर्थतावच्छेदकेत्यत्र संबन्धस्तादृशाश्रयत्वभिन्नोवश्यं ग्राह्यः । तेन विप्राय गां ददाति इत्यादौ स्वस्वत्वध्वंसविशिष्टायाः परस्वत्वजनकेच्छाया दाधात्वर्थत्वे गोर्धात्वर्थतावच्छेदकीभूतपरस्वत्वात्मकफलाश्रयत्वेनेष्टत्वेपि नातिव्याप्तिः ।

तत्राश्रयत्वभिन्नो यो धात्वर्थतावच्छेदकफलसंबन्धः स निरूपकत्वम् । तादृशसंबन्धवत्त्वेनेष्टत्वं च ब्राह्मणस्यैव न तु गोः इति ( ग० व्यु० का० ४ ) । [ ङ ] शाब्दिकास्तु प्रकृतधात्वर्थे यत्कर्म तत्संबन्धित्वेनेच्छोद्देश्यत्वम् इति वदन्ति । संप्रदानं त्रिविधम् प्रेरकम् अनुमन्तृ अनिराकर्तृ ( उदासीनं ) चेति । तदुक्तं वाक्यपदीये अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् । प्रेरणानुमतिभ्यां च लभते संप्रदानताम् ॥ इति । अत्र प्रेरकत्वं च प्रकृतधात्वर्थक्रियाजन्यफलभागितयेच्छाविषयत्वे सति कर्तृसंबन्धित्यागादिविषयकेष्टसाधनताबोधौपयिकव्यापारवत्त्वम् । अनुमन्तृत्वं च जातेष्टसाधनताबोधे अप्रामाण्यशङ्कया शिथिलस्य कर्तुस्तादृशशङ्काविधूननक्षमप्रमाणोपन्यासेन प्रवर्तनम् । कर्मनिष्ठस्वत्वादिफलाभ्युपगममात्रानुकूलव्यापारवत्त्वं वा । अनिराकर्तृत्वं च प्रकृतधात्वर्थक्रियाजन्यफलभागितयेच्छाविषयत्वे सति कर्तृप्रवृत्तिनिवृत्त्यन्यतरानुकूलव्यापाराभाववत्त्वम् ( वै० सा० द० ) । तत्राद्यम् विप्राय ( याचकाय ) गां ददाति इत्यादौ विप्रः । द्वितीयम् उपाध्यायाय गां ददाति इत्यादावुपाध्यायः । तृतीयं च देवता । यथा सूर्यायार्घ्यं ददाति इत्यादौ सूर्यः ( ल० म० का० ४ पृ० १०१ ) । नात्र सूर्यः प्रार्थ्यते नानुमन्यते न निराकरोति इति सूर्यस्योदासीनता विज्ञेया ( वै० सा० द० पृ० २०० ) । क्वचित् विषयित्वम् चतुर्थ्यर्थः । यथा चैत्राय कुप्यति क्रुध्यति इत्यादौ चतुर्थ्यर्थः संप्रदानत्वम् । एवम् पटाय यतते इत्यादौ उद्देश्यत्वरूपं संप्रदानत्वं चतुर्थ्यर्थो धात्वर्थकृतौ बोध्यते । अत्रेदं बोध्यम् मित्रं द्रुह्यति शिष्यमीर्ष्यति पुत्रमसूयति इत्यपि प्रयोगात् द्रोहादिकर्मणः संप्रदानत्वं वैकल्पिकमुन्नीयते इति । कोपपूर्वकस्य द्रोहादेः द्रुहादिधातुवाच्यत्वे तत्कर्मणः संप्रदानत्वम् । द्रोहादिमात्रस्य तथात्वे तु कर्मत्वमेव इति पुनः कौमारा आहुः । अत्रेदं बोध्यम् । सोपसर्गयोः क्रुधद्रुहोः कर्मणः कर्मतैव न तु संप्रदानता । अत एव शिष्यस्याभिक्रोद्धा मित्रस्याभिद्रोग्धा इत्यादौ कृद्योगे कर्मणि षष्ठ्येव प्रमाणम् ( श० प्र० श्लो० ७० टी० पृ० ८७ ) ।

**संप्रदायः**—गुरुपरंपरागतः सदुपदेशः । यथा वैष्णवसंप्रदायान्तर्गतो मध्वसंप्रदायः । ईश्वर एव सर्वसंप्रदायप्रद्योतकः । तथा हि ईश्वरो भूतावेशन्यायेन निर्माणकायमधिष्ठाय सर्वसंप्रदायप्रद्योतकः ( कु० ) इति पातञ्जला आहुः । मध्वशरीरात्कथं वेदघटादिशब्दव्यवहारसंप्रदायः । उच्यते । सर्गादावदृष्टोपगृहीतभूतभेदान्मीनशरीरोत्पत्तावदृष्टवदात्मसंयोगाददृष्टसहकृतप्रयत्नवदीश्वरसंयोगाद्वा सकलवेदार्थगोचरज्ञानाद्विवक्षासहितान्मीनकलेवरकण्ठताल्वादिक्रियाजन्यसंयोगाद्वेदोत्पत्तिः । एवम् कुलालादिशरीरावच्छेदेनादृष्टसहकृतप्रयत्नवदीश्वरसंयोगात् तद्बुद्धीच्छासहितचेष्टोत्पत्तौ सकलघटानुकूलव्यापाराद्घटोत्पत्तिः । एवम् प्रयोज्यप्रयोजकज्ञानाय व्यापाराभिमतशरीरावच्छेदेनापि अदृष्टसहकृतेश्वरज्ञानेच्छाप्रयत्नादेव वाग्व्यवहारः । ततस्तत्सुशीलो बालो व्युत्पद्यते सोयं भूतावेशन्यायः ( चि० २ परिशिष्टे ईश्वरवादः पृ० २३ ) इति । संप्रदायप्रवर्तकभेदास्तु पद्मपुराणे श्रीमन्नारायणो ब्रह्मा नारदो व्यास एव च । श्रीलमध्वः पद्मनाभो नृहरिर्माधवस्तथा ॥ अक्षोभो जयतीर्थश्च ज्ञानसिंधुर्महानिधिः । विद्यानिधिश्च राजेन्द्रो जयधर्ममुनिस्तथा ॥ पुरुषोत्तमो ब्रह्मण्यो व्यासतीर्थमुनिस्तथा । श्रीमल्लक्ष्मीपतिः श्रीमान्माधवेन्द्रपुरी तथा ॥ संप्रदायविहीना ये मन्त्रास्ते निष्फला मताः ॥ अतः कलौ भविष्यन्ति चत्वारः संप्रदायिनः ॥ श्रीमध्वरुद्रसनका वैष्णवाः क्षितिपावनाः ( पद्मपु० ) ( वाच० ) इति । तन्त्रोक्ता वैष्णवादिसंप्रदाया यथा श्रीशिव उवाच । वैखानसः सामवेदी श्रीराधावल्लभी तथा । गोकुलेशो महेशानि तथा वृन्दावनी भवेत् ॥ पञ्चरात्रः पञ्चमः स्यात् षष्ठः श्रीवीरवैष्णवः । रामानन्दी हविष्याशी निम्बार्कश्च महेश्वरि ॥ ततो भागवतो देवि दश भेदाः प्रकीर्तिताः । शिखी मुण्डी जटी चैव द्वित्रिदण्डी क्रमेण च ॥ एकदण्डी महेशानि वीरशैवस्तथैव च । सप्त पाशुपताः प्रोक्ता दशधा वैष्णवा मताः ॥ ( शक्तिसंग० त० ) ( वाच० ) इत्यादि ।

**संप्रधारणा**—१ संप्रश्नः । २ समर्थनम् ( वै० सा० द० ल० पृ० १३१ ) ( अमर० २।८।२५ ) । ३ स्पर्धा ।

**संप्रश्नः**—( लिङर्थः ) संप्रधारणम् ( पाणि० सू० ३।३।१६१ काशिका )। तच्च उपस्थितक्रिययोर्मध्य एकतरक्रियाधर्मिकेष्टसाधनत्वनिर्णयेच्छा । यथा किं भो वेदमधीयीय उत तर्कम् इत्यादौ लिङर्थः । अत्र स्वोद्देश्यकत्वसंबन्धेन संबोध्यविशिष्टा मन्निष्ठा च वेदाध्ययनतर्काध्ययनान्यतरभावना इष्टसाधनत्वप्रकारकनिर्णयेच्छाविषयः इति बोधः ( वै० सा० द० लका० पृ० १३१ ) ।

**संप्रसादः**—१ सम्यक् प्रसन्नता । २ योगशास्त्रज्ञास्तु चित्तस्य नैर्मल्यसंपादको यत्नविशेष इत्याहुः । ३ वेदान्तिनस्तु सुषुप्तिस्थानम् प्राणः ( शारी० भा० ) । ४ पूर्णसुखम् ( मध्वभा० ) । अत्रायं विवेकः । ॐ भूमा संप्रसादादध्युपदेशात् ॐ ( ब्रह्मसू० १।३।८ ) इत्यधिकरणे स वा एष एतस्मिन् संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति इति बृहदारण्यके ( ४।३।१५–१७ ) स्वप्नजागरितस्थानाभ्यां सह प्रयोगात् संप्रसादः सुषुप्तिस्थानमुच्यते इति शंकरभारतीमतम् ( शारी० भा० टी० रत्नप्र० १।३।८ ) । मध्वाचार्यमते तु तत्र यो वै भूमा तत्सुखम् नाल्पे सुखमस्ति भूमैव सुखम् इति छान्दोग्यश्रुतौ ( ७।२३ ) भूम्नः पूर्णसुखरूपत्वाभिधानात् संप्रसादः पूर्णसुखम् ( मध्वभा० टी० तत्त्वप्र० १।३।८ ) इति । ५ जीवः । यथा य एष संप्रसादोस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच ( छान्दो० उप० ८।३।४ ) इत्यादौ इत्याहुः ( ब्रह्मसू० भा० १।३।१८ ) ।

**संबन्धः**—१ [ क ] संबन्धिभिन्नत्वे सति संबन्ध्याश्रितः । [ ख ] स्वभिन्नसंबन्ध्याश्रितः स्वभिन्नप्रतियोगिकः पदार्थः ( सि० च० १ पृ० ३ ) । यथा घटभूतलयोः संयोगः । यथा वा प्रत्यक्षस्थल इन्द्रियार्थसंनिकर्षः । [ ग ] संबद्धव्यवहारहेतुः ( सि० च० ) । यथा घटवद्भूतलम् इति शाब्दबोधस्थले संयोगः । संबन्धत्वं च यत्किंचित्पदार्थानुयोगिकत्वविशेषः ( ग० २ व्याप्ति० सिद्धा० ) । अथ वा सांसर्गिकविषयताश्रयत्वम् ( राम० १ पृ० ४० ) । संबन्धो द्विविधः

वृत्तिनियामकः वृत्त्यनियामकश्चेति । तत्र वृत्तिनियामकश्च संयोगसमवायस्वरूपकालिकादिभेदेनानेकविधः । वृत्त्यनियामकस्तु विषयविषयिभावप्रतियोग्यनुयोगिभावाधाराधेयभावस्वस्वामिभावतादात्म्यादिभेदेनानेकविधः । तत्र संयोगसमवायावेव मुख्यौ । तद्भिन्ना गौणाः । वृत्तिनियामकस्तु कदाचिद्विरोधितानियामको भवति । तथा हि । साध्यतावच्छेदकसंबन्धेन साध्यवत्ताबुद्धिं प्रति येन संबन्धेन साध्याभावप्रकारकनिश्चयः प्रतिबन्धकः सः । यथा पर्वते संयोगेन वह्निसाधने दैशिकविशेषणतासंबन्धः । अयं साध्यवत्ताग्रहविरोधितानियामकसंबन्धः इति जेगीयते । अथ वा स्वीययादृशप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिज्ञानं प्रति येन संबन्धेन स्वप्रकारकं ज्ञानं विरोधि सः । यथा संयोगेन घटवत्ताबुद्धिविरोधितानियामको दैशिकविशेषणतासंबन्धः इत्यादिरूह्यः । स्वप्रकारकमित्यत्र स्वशब्देनाभावो ग्राह्यः । अयं च स्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्धः इत्युच्यते । २ धर्मशास्त्रज्ञास्तु गोत्रजत्वादिः । यथा योनिसंबन्धः इत्यादौ संबन्धशब्दस्यार्थ इत्याहुः । ३ नीतिशास्त्रज्ञास्तु नृणां संसर्गः । स च त्रिविधः विद्याजन्यः योनिजन्यः प्रीतिजन्यश्च इत्याहुः । अत्रोक्तम् संबन्धस्त्रिविधः पुंसां विप्रेन्द्र जगतीतले । विद्याजो योनिजश्चैव प्रीतिजश्च प्रकीर्तितः ॥ मैत्रं तु प्रीतिजं प्रोक्तं स संबन्धः सुदुर्लभः ( ब्रह्मवै० ब्रह्मख० अ० १० ) ( वाच० ) इति । ४ समृद्धिः । ५ हितम् इत्यजय आह । ६ सम्यग्बन्धः संबन्धः इति काव्यज्ञा आहुः ।

**संबन्धि**—संबन्धस्य प्रतियोग्यनुयोगि च । यथा घटवद्भूतलम् इत्यादौ संयोगस्य घटः प्रतियोगी भूतलं त्वनुयोगि भवति ( राम० १ पृ० ३९ ) । अत्र संबन्धिता च आधारानाधारसंबन्धिमात्रसाधारणः स्वरूपसंबन्धविशेष इति विज्ञेयम् ( मु० म० १ ) ।

**संबोधनम्**—[ क ] वक्तुरव्यवहितशब्दजन्यबोधाश्रयत्वेनेच्छा । यथा चैत्र त्वया भुज्यताम् इत्यादौ चैत्रपदोत्तरवर्तिप्रथमाविभक्तेरर्थः । अत्र संबोधने च ( पाणि० २।३।४७ ) इत्यनेन सूत्रेण प्रथमा संबोधनमेवाह । तथा च प्रथमार्थतादृशेच्छायाः प्रकृत्यर्थविशेष्यतया भानम् । अत्रेदं

ज्ञेयम् संबोधनविभक्त्यन्तप्रकृत्यर्थोऽन्यत्र विशेषणतया नान्वेति (ग० व्यु० संबु० पृ० ११७–११८) इति । शाब्दिकास्तु [ख] क्रियाविनियोगफलकाभिमुखीकरणम् (ल० म०) । [ग] अनभिमुखस्याभिमुखीकरणं संबोधनम् (काशिका०) इत्याहुः । संबोधनपदार्थस्य क्रियायामेवान्वय उक्तो हरिणा संबोधनपदं यच्च तत्क्रियाया विशेषणम् (वाक्यप०) इति । स्थितस्याभिमुखीभावमात्रं संबोधनं विदुः । प्राप्ताभिमुख्यः पुरुषः क्रियासु विनियुज्यते ॥ (वाक्यप०) इति च । [घ] अन्यत्रासक्तस्याभिमुखीकरणलक्षणोऽभीष्टक्रियासु विनियोगाय ज्ञापनादिरूपव्यापारविशेषः (वाच०) इति ।

**संबोध्यत्वम्**—१ [क] क्रियाकरणाय वक्त्रभिप्रेतत्वम् । वक्तृनिष्ठविलक्षणबोधविशेष्यत्वं वा । यथा चैत्र व्रज इत्यादौ प्रथमार्थः । अत्रोक्तं हरिणा प्राप्ताभिमुख्यः संबोध्यः क्रियासु विनियुज्यते (वाक्यप०) इति । अत्र तादृशसंबोध्यत्ववांश्चैत्रोऽनुमतव्रजनवान् इत्याकारको बोधः । [ख] शाब्दिकास्तु संबोधनविषयत्वम् इत्याहुः (ल० म०) । २ प्रशंस्यत्वम् । यथा सुमित्रामात नैतत्ते विचित्रं चित्रयोधिनः इत्यादौ संबुद्धिसुबर्थः । अत्र मातृशब्दस्य ऋकारादेरकारादेशः ।

**संभवः**—१ (अनुमानम्) [क] अविनाभाववृत्त्या च संबद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणम् । तदप्यनुमानमेव (गौ० वा० २।२।२) । अत्र संभवः प्रमाणान्तरम् इति पौराणिका आहुः । संभवोऽप्यनुमानमेव न तु प्रमाणान्तरम् इति वैशेषिका नैयायिकाश्च प्राहुः (त० व० पृ० १००) (नील० पृ० ३४) । अत्र भाष्यम् संभवोऽप्यविनाभावित्वात् (व्याप्तिमूलकत्वात्) अनुमानमेव (प्रशस्त० २ पृ० २८) इति । [ख] भूयःसहचाराधीनज्ञानम् । यथा संभवति ब्राह्मणे विद्या संभवति सहस्रे शतम् (गौ० वृ० २।२।१) (त० दी०) (त० व० पृ० ९९) इति । [ग] अविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम् । यथा द्रोणस्य सत्ताग्रहणादाढकस्य सत्ताग्रहणम् । आढकस्य सत्ताग्रहणात् प्रस्थस्य (वात्स्या० २।२।१) इति ।

खार्यां द्रोणाढकप्रस्थाद्यवगमः । स चानुमानमेव । खारीत्वं हि द्रोणाद्यविनाभूतं प्रतीतं खार्यां द्रोणादिसत्त्वमवगमयति इत्यनुमानान्तर्गततया प्रमाणान्तरत्वं दूषितम् । तथा हि खारीत्वं खारीपरिमाणम् । महापरिमाणे ह्यवान्तरपरिमाणसमावेशोनुभवसिद्धः । तथा च खारीपरिमाणं द्रोणादिपरिमाणव्यापकम् इति व्यापकस्थित्या व्याप्यस्थितेरावश्यकत्वादनुमानेनैव गतार्थता ( तत्त्वकौमुदी० ) ( वाच० ) इति । [ घ ] वेदान्तिनस्तु अल्पप्रमासाधनं बहुलज्ञानम् । यथा शतमस्यास्ति इति ज्ञाने पञ्चाशज्ज्ञानम् इत्याहुः ( प्र० च० परि० १ पृ० ४४ ) । संभवो द्विधा संभावनात्मकः निर्णयात्मकश्चेति । तत्रादिमो न प्रमाणम् । अनिश्चायकत्वात् । यथा ब्राह्मणेषु चतुर्दशविद्याभिज्ञत्वं संभवति इति । द्वितीयस्तु शते पञ्चाशत् इति ( सि० च० ) । अत्र शतवान् इत्युक्ते पञ्चाशद्वान् इति ज्ञानं संभवति । तस्यानुमानेनैव निर्वाहात् । शतस्य पञ्चाशद्व्याप्यत्वात् इति भावः ( नील० पृ० ३४ ) । अत्रायं प्रयोगः शतं पञ्चाशद्वत् तद्घटितत्वात् ( त० व० पृ० १०० ) इति । देवदत्तः पञ्चाशद्वान् शतवत्त्वात् यथाहम् इति च । २ उत्पत्तिः । ३ आधेयस्याधारे समावेशनयोग्यत्वरूपो व्यापारः । ४ उत्कटकोटिकसंदेहः ( गदा० ) । ५ संकेतः । ६ अपायः इत्यजय आह । ७ हेतुः ( वाच० ) ।

**संभावना**—१ [ क ] उत्कटैकतरकोटिकसंशयः ( त० प्र० ४ पृ० ६९ ) ( नील० ४ पृ० ३१ ) ( त० व० ) । यथा गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ इत्यादौ मरणसंभावना ( नील० ४ पृ० ३० ) । अत्र औत्कट्यं च विषयताविशेषः ( नील० ४ पृ० ३१ ) ( ग० सत्प्र० ) । [ ख ] वैयाकरणास्तु क्रियासु योग्यताध्यवसायः ( लिङर्थविशेषः ) । यथा सर्पिषोपि स्यात् इत्यादौ लिङर्थ इत्याहुः । [ ग ] माध्ववेदान्तिनोप्याहुः बाह्यालीप्रदेशेषु पुरुषेणानेन भवितव्यम् इत्यूहापरनामकं संभावनाज्ञानम् अन्यतरकोटिप्रापकप्राचुर्यनिमित्तोन्यतरकोटिप्रधानकः संशय एव ( प्र० प० पृ० ५ ) इति । २ आलंकारिकास्तु अर्थालंकारविशेष इत्याहुः ।

**संमुखी**—( तिथिः ) संमुखी नाम सायाह्नव्यापिनी दृश्यते यदा । प्रतिपत्संमुखी कार्या या भवेदापराह्णिकी ॥ ( पु० चि० पृ० ५४ ) ।

**संमूर्छनम्**—मोहः । तत्स्वरूपं च प्राक् (पृ० ६५६ पं० १३) प्रदर्शितम् ।

**संयमः**—एकवस्तुविषयकं धारणाध्यानसमाधिरूपं त्रयम् । यथा अस्मान् साधु विचिन्त्य संयमधनान् ( शाकुन्त० ४।१६ ) इत्यादौ संयमशब्दस्यार्थः । अत्र सूत्रम् त्रयमेकत्र संयमः ( पात० पाद० ३ सू० ४ ) इति । तत्र भाष्यम् एकविषयाणि त्रीणि साधनानि संयमः इत्युच्यते इति ।

**संयोगः**—१ ( गुणः ) [ क ] संयुक्तप्रत्ययनिमित्तम् ( प्रशस्त० गुण० पृ० ३० ) । विभागजनककर्मजगुणवृत्तिगुणत्वव्याप्यजातिमत्त्वं संयोगलक्षणम् ( ल० व० ) । संयोगं प्रति युतसिद्धिः प्रयोजिका ( वै० ७।२।१३ ) ( वै० उ० ७।२।९ ) । संयोगः अव्याप्यवृत्तिरनित्यः सर्वद्रव्यवृत्तिश्च ( वाक्य० ) । विभुनोर्नित्यत्वात्तत्संयोगः स्वीक्रियते चेत्स नित्यः स्यात् । परं त्वकिंचित्करः स इत्यतो न विभुद्वयसंयोगः । अतः सर्वः संयोगः अनित्यः इति भावः । विभुनोस्तु न संयोगः । कर्मयुतसिद्ध्यादिरूपकारणाभावात् ( वै० उ० ७।२।९ ) इति । संयोगो द्रव्यगुणकर्महेतुः । तत्र द्रव्यारम्भे निरपेक्षः गुणकर्मारम्भे तु सापेक्षः । संयुक्तसमवायादग्नेर्वैशेषिकम् ( वै० १०।२।७ ) । अग्नेर्वैशेषिकं विशेषगुण औष्ण्यं संयुक्तसमवायात्पाकजेषु निमित्तकारणम् ( वै० उ० ७।२।९ ) ( प्रशस्त० पृ० ३० ) । संयोगस्य गुणहेतुत्वमुच्यते । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दतूलपरिमाणोत्तरसंयोगनैमित्तिकद्रवत्वपरत्वापरत्वपाकजाश्च एते संयोगासमवायिकारणकगुणाः । तत्र भावनान्तेषु गुणेषु आत्ममनोयोगो हेतुः । शब्दविभागाजन्ये शब्दे भेर्याकाशसंयोगः असमवायिकारणं भवति । स च अभिघातः इत्युच्यते ( वै० वि० ७।२।९ ) । तथा तूलपरिमाणे प्रचयः उत्तरसंयोगे संयोगजसंयोगे अवयवसंयोगः नैमित्तिकद्रवत्वे तेजःसंयोगः परत्वापरत्वयोर्दिक्कालसंयोगः पाकजे रूपादौ तेजःसंयोगः असमवायिकारणं भवति ( प० मा० ) । कर्मणि हेतुभूतः संयोगस्तु नोदनादिः ( वै०

उ० ५।२।१ ) ( प्रशस्त० गु० पृ० ३१ ) । संयोगप्रपञ्चश्चान्यत्र ( वै० उ० ७।२।९ ) द्रष्टव्यः । अत्रेदं बोध्यम् । संयोगस्तु विरोधी स्याद्गुणत्वे सति कर्मणः ( ता० र० श्लो० ४३ ) इति । [ ख ] संयुक्तव्यवहारहेतुः ( त० सं० ) । यथा घटभूतलसंयोगः । संयुक्तव्यवहारासाधारणकारणम् इत्यर्थः ( त० कौ० ) । असाधारणत्वविशेषणेन साधारणकारणकालादिव्यावृत्तिः ( त० दी० ) । [ ग ] अप्राप्तयोः प्राप्तिः ( भा० प० गु० ) ( प्रशस्त० गु० पृ० ३१ ) । [ घ ] अप्राप्तिपूर्विका प्राप्तिः ( वै० उ० ७।२।९ ) । संयोगो द्विविधः कर्मजः संयोगजश्चेति । तत्र कर्मजोपि द्विविधः अन्यतरकर्मजः उभयकर्मजश्च । तत्राद्यः अन्यतरकर्मजः श्येनशैलादिसंयोगः । द्वितीय उभयकर्मजः मेषयोर्मल्लयोर्वा मेघयोर्वा संनिपातः । अत्राद्यः क्रियावता निष्क्रियस्य । यथा स्थाणोः श्येनेन विभूनां च मूर्तैः सह संयोगः । द्वितीयस्तु विरुद्धदिक्क्रिययोः संनिपातः ( प्रशस्त० पृ० ३१ ) । संयोगजस्तु अवयवसंयोगजन्यः । स च उत्पन्नमात्रस्यैव चिरोत्पन्नस्य वा निष्क्रियस्य कारणसंयोगिभिरकारणैः कारणाकारणसंयोगपूर्वकः कार्याकार्यगतः संयोगः । स च एकस्मात् द्वाभ्याम् बहुभ्यश्च भवति । एकस्मात्तावत् तन्तुवीरणसंयोगाद्द्वितन्तुकवीरणसंयोगः । द्वाभ्यां तन्त्वाकाशसंयोगाभ्यां द्वितन्तुकाकाशसंयोगः । बहुभ्यश्च तन्तुतुरीसंयोगेभ्य एकः पटतुरीसंयोगः । अत्रेदं बोध्यम् । उत्पन्नमात्रस्य निष्क्रियस्य द्वितन्तुकस्य पटस्य कारणसंयोगिना ( कारणस्य तन्तोः संयोगिना ) अकारणेन वीरणेन तृणविशेषेण यः संयोगः स एकस्मात् कारणस्य तन्तोरकारणेन वीरणेन संयोगात् कार्ये द्वितन्तुकपटे अकार्ये वीरणे जायते । एवमग्रेपि । चिरोत्पन्नस्य यथा अङ्गुलीतरुसंयोगात्कायतरुसंयोगादिः । कपालतरुसंयोगात्तरुकुम्भयोः संयोगः । इदं च बोध्यम् । नास्त्यजः संयोगः । परमाणुभिराकाशादीनां प्रदेशवृत्तिरन्यतरकर्मज एव संयोगः । विभूनां तु परस्परं संयोगो नास्ति । युतसिद्ध्यभावात् । विनाशस्तु सर्वस्य संयोगस्यैकार्थसमवेताद्विभागात् । क्वचिच्च आश्रयविनाशादपि । तथा हि । तन्त्वोः संयोगे सति अन्यतरतन्त्वा-

म्भकेंशौ ( तन्त्ववयवे ) कर्मोत्पद्यते । तेनांशन्तराद्विभागः क्रियते । विभागाच्च तन्त्वारम्भकसंयोगविनाशः । संयोगविनाशात्तन्तुविनाशे तदाश्रितस्य तन्त्वन्तरसंयोगस्य विनाशः ( प्रशस्त० पृ० ३२ ) इति । संयोगजश्च चतुर्विधः । क्वचित् एकसंयोगजन्य एकसंयोगः संयोगद्वयजन्य एकसंयोगः बहुसंयोगजन्य एकसंयोगः एकसंयोगजन्यं संयोगद्वयं चेति । तत्राद्यः तन्तुवीरणसंयोगात्पटवीरणसंयोगः । द्वितीयः द्वाभ्यां तन्तुभ्यामाकाशस्य यौ द्वौ संयोगौ ताभ्यां जायमानो द्वितन्तुकपटाकाशसंयोगः । तृतीयः दशभिस्तन्तुभिराकाशस्य ये दश संयोगास्तैर्जायमानो दशतन्तुकपटस्यैक आकाशसंयोगः । चतुर्थस्तु द्रव्यानारम्भको यः पार्थिवजलपरमाण्वोः संयोगस्तेन जायमानौ द्व्यणुकारम्भकौ द्वौ संयोगाविति । अयमाशयः । यत्र द्रव्यानारम्भकः पार्थिवजलपरमाण्वोः संयोगस्ततो द्व्यणुकारम्भकौ द्वौ संयोगौ । ततो युगपद्द्व्यणुकद्वयं ( पार्थिवजलद्व्यणुकद्वयम् ) उत्पद्यते । तत्र पार्थिवद्व्यणुकस्य जलपरमाणुनैकः संयोगः जलद्व्यणुकस्य पार्थिवपरमाणुना अपरः संयोगश्चैतदुभयं पूर्वोक्तानारम्भकसंयोगेनैकेनैवोत्पद्यते । कारणाकारणसंयोगेन कार्याकार्यसंयोगजननावश्यंभावादिति ( प्रशस्त० गु० पृ० ३१ ) ( त० व० परि० ११ पृ० २०० ) । संयोगस्तु विभागादाश्रयनाशाद्वा नश्यति ( वै० ७।२।९ ) ( भा० प० गु० श्लो० ११६–१२० ) ( न्या० म० १ ) ( त० दी० ) । आश्रयनाशात्संयोगनाशस्तु यत्र तन्तुद्वयं चिरसंयुक्तमनुत्पन्नक्रियं च वर्तते तत्र तावत् संयुक्ततन्तुद्वयस्यैकतन्त्ववयवे कर्म । ततो विभागः । तत आरम्भकसंयोगनाशः । ततस्तन्तुनाशः । ततः संयोगनाशः इति बोध्यम् ( त० व० परि० ११ पृ० २०१ ) । २ धर्मशास्त्रज्ञास्तु उदयात्प्राग्दशम्याः शेषः संयोग इत्याहुः । तदुक्तम् उदयात्प्राग्दशम्यास्तु शेषः संयोग उच्यते । उपरिष्टात्क्लेशस्तु तस्मात्तं परिवर्जयेत् ॥ ( ति० त० ) ( वाच० ) इति ।

**संवत्सरः**—द्वादशमासात्मकः कालविशेषः । द्वादश मासाः संवत्सर इति श्रुतेर्वसन्ति मासादयोस्मिन्निति व्युत्पत्त्या च । स च त्रिविधः चान्द्र-

सावनसौरचान्द्रभेदात् । तत्र चान्द्रः चैत्रशुक्लप्रतिपदादिफाल्गुनदर्शान्तः । सावनः षष्ट्युत्तरशतत्रयाहोरात्रात्मकः । सौरस्तु मेषादिमीनान्तः ( पु० चि० पृ० ९ ) ।

**संवरः**—आस्रवनिरोधः । येनात्मनि प्रविशत्कर्म प्रतिषिध्यते स गुप्तिसमित्यादिः ( सर्व० सं० पृ० ७८ आर्ह० ) ।

**संवादः**—१ समयवादः ( वात्स्या० ४।२।४५ ) । यथा ज्ञानग्रहणाभ्यासस्तद्विद्यैः सह संवादः ( गौ० ४।२।४५ ) इत्यादौ संवादशब्दस्यार्थः । २ संमतिः । ३ अविरुद्धार्थज्ञानम् ।

**संवादकः**—पूर्वोक्तसंवादकर्ता । पूर्वमुपदर्शितमर्थं प्रापयन्संवादक उच्यते इति बौद्धा आहुः ( न्या० बि० टी० पृ० ३ ) ।

**संवाहः**—प्राकारपरिखायुक्तः श्रेणीधर्मान्वितो देशः ( कैयटः ७।३।१४ ) ।

**संवित्**—अत्रोच्यते द्वयी संविद्वस्तुनो भूतशालिनः । एका सा स्पष्टविषया तन्मात्रविषया परा ॥ तन्मात्रविषया वापि द्वयी साथ निगद्यते । प्रतियोगिनि दृश्ये च घटादिप्रतियोगिनः ॥ (सर्व० सं० पृ० ४३० शां०)।

**संवृतिः**—असत्प्रकाशनशक्तिरविद्या संवृतिरिति पर्यायाः ( सर्व० सं० पृ० ४३९ शां० ) ।

**संशयः**—१ [क] एकस्मिन्धर्मिणि विरुद्धनानाकोटिकं ज्ञानम् ( त० सं० )। इदं तु बोध्यम् । संशयश्च प्रत्यक्षरूपः संनिकर्षजन्यत्वात् इति । अत एवोक्तम् परोक्षज्ञानमनाहार्यं निश्चयश्चेति सिद्धान्तात् इति । संशयो न्यायस्याङ्गं भवति । यस्मान्नानुपलब्धे न निर्णीते न्यायः प्रवर्तते अपि तु संदिग्धे (न्या० वा० १ पृ० १४) । अत्र विशेषादर्शनम् कोटिद्वयस्मरणम् धर्मिज्ञानं च संशयमात्रे हेतुः इति विज्ञेयम् ( सि० च० ) ( त० प्र० ४ पृ० १३१ ) । संशयलक्षणं तु स्वीयैककोटिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतापरकोटिप्रकारताशालिज्ञानत्वम् (दि० गु० ) । अत्र संशयीयविषयतायाः प्रतिबन्धकतावच्छेदकत्वकथनं च संशये विशेष्यताद्वयम् इति पक्षाभिप्रायेणेति विज्ञेयम् । संशये च उभय-

प्रकारतानिरूपिता विशेष्यता एकैव। समुच्चये तु विशेष्यताद्वयम् इति संशयसमुच्चययोर्भेद इति च विज्ञेयम्। यद्वा अवच्छेद्यावच्छेदकभावापन्नविषयतावत्त्वम् (ग० सत्प्र०)। संशयीयविशेष्यतयोरवच्छेद्यावच्छेदकभावस्तु समुच्चयज्ञानव्यावर्तनायावश्यं स्वीकर्तव्य इति सूक्ष्मदर्शिभिर्विज्ञेयम्। अत्र संशयलक्षणं च सूत्रकारैरुक्तम् समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः (गौ० १।१।२३) (ता० र० श्लो० ५६)। तत्र (१) समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशयः इति। स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन् पूर्वदृष्टं च तयोर्विशेषं बुभुत्समानः किंस्वित् इत्यन्यतरन्नावधारयति। तदनवधारणं ज्ञानं (विमर्शः) संशयः। वस्तुस्वरूपानवधारणात्मकः प्रत्यय इत्यर्थः (न्या० वा० १ पृ० १३)। समानमनयोर्धर्ममुपलभे विशेषमन्यतरस्य नोपलभे इत्येषा बुद्धिरपेक्षा संशयस्य प्रवर्तिका वर्तते। तेन विशेषापेक्षो विमर्शः संशयः। (२) अनेकधर्मोपपत्तेरिति। समानजातीयमसमानजातीयं चानेकम्। तस्यानेकस्य धर्मोपपत्तेर्विशेषस्योभयथा दृष्टत्वात्। समानजातीयेभ्योसमानजातीयेभ्यश्चार्था विशिष्यन्ते। गन्धवत्त्वात्पृथिव्यबादिभ्यो विशिष्यते गुणकर्मभ्यश्च। अस्ति च शब्दे विभागजत्वं विशेषः। तस्मिन् द्रव्यं गुणः कर्म वा इति संदेहः। विशेषस्योभयथा दृष्टत्वात् किं द्रव्यस्य सतो गुणकर्मभ्यो विशेषः आहोस्विद्गुणस्य सत इति अथ कर्मणः सत इति विशेषापेक्षा अन्यतमस्य व्यवस्थापकं धर्मं नोपलभे इति बुद्धिरिति। (३) विप्रतिपत्तेरिति। व्याहतमेकार्थदर्शनं विप्रतिपत्तिः। व्याघातो विरोधोसहभाव इति। अस्त्यात्मेत्येकं दर्शनम्। नास्त्यात्मेत्यपरम्। न च सद्भावासद्भावौ सहैकत्र संभवतः। न चान्यतरसाधको हेतुरुपलभ्यते। तत्र तत्त्वानवधारणं संशय इति। (४) उपलब्ध्यव्यवस्थातः खल्वपि सच्चोदकमुपलभ्यते तडागादिषु। मरीचिषु चाविद्यमानमुदकमिति। ततः क्वचिदुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सदुपलभ्यते अथासत् इति संशयो भवति। (५) अनुपलब्ध्यव्यवस्थातः सच्च नोपलभ्यते मूलकीलकोदकादि। असच्चानुत्पन्नं निरुद्धं वा। ततः

क्वचिदनुपलभ्यमाने संशयः । किं सन्नोपलभ्यत उतासत् इति संशयो भवति । विशेषापेक्षा पूर्ववत् । पूर्वः समानोनेकश्च धर्मो ज्ञेयस्थः । उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे । एतावता विशेषेण पुनर्वचनम् । समानधर्माधिगमात् समानधर्मोपपत्तेर्विशेषस्मृत्यपेक्षो विमर्श इति । स्थानवतां लक्षणवचनमिति समानम् (वात्स्या० १।१।२३)। वार्तिककृतस्तु समानो हि धर्मः यो विवक्षिततज्जातीयवृत्तित्वे सति अन्यजातीयवृत्तिः सः । अयं साधारणो धर्म उपलभ्यमानः संशयहेतुः (न्या० वा० १।२३ पृ० ९३) इत्याहुः । अत्रायं विशेषः । समानधर्मवत्तया धर्मिज्ञानस्यान्वयव्यतिरेकाभ्यां संशयहेतुत्वमवधार्यते (न्या० म० ४ पृ० ३४)। तदर्थश्च तत्कोटिसाधारणधर्मवत्तया धर्मिज्ञानस्य तत्कोटिसंशयहेतुत्वमवधार्यते । अन्वयव्यतिरेकेति तुरगादौ वेगेन गच्छतोनेकवृक्षेन्द्रियसंनिकर्षेपि यस्यैव धर्मिणो ज्ञानं तत्रैव पनसत्वादिसंशयः नान्यत्र इति धर्मिनियमार्थम् । धर्मिज्ञानस्योत्कटकोटिकसंशयहेतुत्वमिति भावः (त० प्र० ख० ४ पृ० १३०–१३१)। अनेकप्रत्ययहेतुधर्मोनेकधर्मः । यत एव प्रत्ययो भवति इदमेकमनेकम् इति । तत्रैकप्रत्ययहेतुरभेदः । अनेकप्रत्ययहेतुधर्मो विशेषः । यथा शब्दस्य विभागजत्वम् । सामान्यविशेषसमवायेभ्यः शब्दस्य सदादिना विशेषेण निर्भक्तस्य तस्मिंस्तु द्रव्यं गुणः कर्म वा इति विभागजत्वात्संशय इत्याहुः (न्या० वा० १।२३ पृ० ९५)। विप्रतिपत्तिजन्यसंशयस्योदाहरणान्तरं यथा एको ब्रूते शब्दो नित्यः इति । अपरः अनित्यः इति । तयोर्विप्रतिपत्त्या मध्यस्थस्य पुंसो विशेषमपश्यतो भवति संशयः किमयं शब्दः अनित्य उत नित्यः इति (त० भा० पृ० ४२)। संशयस्य निर्णायकाभावसहकृताः साधारणधर्मासाधारणधर्मविप्रतिपत्त्युपलब्ध्यनुपलब्धयः पञ्च कारणानि इति न्यायभाष्यकृतो वात्स्यायनाः पक्षिलस्वामिनः आहुः (त० व० परि० १०)। तद्यथा (१) स्थाणुपुरुषयोः साधारणधर्ममूर्ध्वतादिलक्षणं पुरोवर्तिन्युपलभ्य स्थाणुपुरुषौ स्मृत्वा विशेषजिज्ञासायां स्थाणुत्वनिश्चायकं वक्रकोटरादिकं पुरुषत्वनिश्चायकं शिरःपाण्यादिकं चानुपलभमानस्य दोलायमानं संशयज्ञानमुत्पद्यते किमयं स्थाणुर्वा पुरुषो वा इति । (२) शब्दे

न्याकाशविशेषगुणत्वमसाधारणधर्ममुपलभमानस्य निर्णायकमजानतः संशयो भवति किं शब्दो नित्यो न वा इति । (३) इन्द्रियेषु वैशेषिकसांख्ययोर्भौतिकत्वाभौतिकत्वरूपां विप्रतिपत्तिं पश्यतो निश्चायकं चापश्यतः संशयो भवति किमिन्द्रियाणि भौतिकानि उताभौतिकानि इति । (४) कूपखननानन्तरं जलोपलब्धौ सत्यां निर्णायकाभावे संशयो भवति किं प्राक् सदेवोदकं कूपखननेनाभिव्यक्तमुपलभ्यते उतासदेवोत्पन्नम् इति । (५) अस्मिन् वटे पिशाचोस्ति इति वार्तां श्रुतवतो वटसमीपं गतस्य पुरुषस्य पिशाचानुपलब्धौ निर्णायकाभावे संशयो भवति किं विद्यमान एव पिशाचोन्तर्धानशक्त्या नोपलभ्यते उताविद्यमान एव इति । अत्र उपलब्ध्यनुपलब्ध्योः साधारणधर्म एवान्तर्भावः । तथा च त्रीण्येव कारणानि इति न्यायवार्तिककृत आहुः । असाधारणविप्रतिपत्त्योरपि साधारणधर्म एवान्तर्भावः । अतः साधारणधर्मेणैव सर्वत्र संशयः इति वैशेषिका आहुः (प्र० प० पृ० ३–४) (त० व० परि० १२ पृ० २१४–२१५)। [ख] धर्मितावच्छेदकावच्छेदेनान्यतरकोट्यवगाहि ज्ञानम् (त० प्र०)। [ग] विरुद्धोभयारोपसामग्रीद्वयसमाजादुभयारोप एक एव भवति सः (चि० १)। धर्मिज्ञानसहितविरुद्धोभयविशिष्टबुद्धिसामग्रीसमाजादेवोभयविषयकारोप एको भवति स एव संशयः इति समुदितार्थः (मू० म० १)। [घ] एकधर्मिकविरुद्धभावाभावप्रकारकज्ञानम् (गौ० वृ० १।१।२३) (मु० गु०)। [ङ] एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यज्ञानम् । यथा पर्वतो वह्निमान् न वा इति ज्ञानं संशयः । समुदितार्थश्च एकधर्मावच्छिन्नविशेष्यकभावाभावप्रकारकज्ञानम् (न्या० बो०)। अथ वा यत्किंचिद्धर्मिनिष्ठविशेष्यतानिरूपितविरुद्धनानाधर्मनिष्ठप्रकारतानिरूपितप्रकारिताशालिज्ञानम् (वाक्य०) (रु० व०) इति । [च] प्रसिद्धानेकविशेषयोः (स्थाणुपुरुषयोः) सादृश्यमात्रदर्शनात् उभयविशेषानुस्मरणात् अधर्माच्च किंस्वित् इत्युभयावलम्बी विमर्शः संशयः (प्रशस्त० गुणनि० पृ० २९)। यथा दूरवर्तिनि उच्चैस्तरे अयं स्थाणुर्वा पुरुषो वा इति ज्ञानम् (त० सं०) (वै० उ० २।२।१७) (त० कौ०)। अयं संशया-

कारस्तु विरुद्धभावद्वयकोटिकसंशयाङ्गीकारेणोपपद्यते । परे तु स्थाणुत्व-तदभावपुरुषत्वतदभावकोटिक इति तद्वाक्यार्थ इत्याहुः ( नील० ) । [ छ ] अनवधारणात्मकं ज्ञानं संशयः ( सर्व० सं० पृ० २२७ अक्षपा० ) । [ ज ] विरुद्धकोटिद्वयावगाहिज्ञानं संशयः ( सर्व० सं० पृ० ३५५ पात० )। न्यायवार्तिककृन्नये संशयस्त्रिविधः असति विशेष-दर्शने साधारणधर्मज्ञानजन्यः विशेषादर्शने सति असाधारणधर्मज्ञान-जन्यः विशेषादर्शने सति विप्रतिपत्तिजन्यश्चेति । आद्यो यथा ऊर्ध्व-त्वं स्थाणुत्वसाधारणं ज्ञात्वा अयं स्थाणुर्न वा इति संदिग्धे । स्थाणुः पुरुषो वा इति वा ज्ञानम् । द्वितीयो यथा शब्दत्वं नित्यानित्यव्यावृत्तं शब्दे गृहीत्वा शब्दो नित्यो न वा इति संदिग्धे । यथा वा नित्याद-नित्याच्च व्यावृत्तेन भूमात्रासाधारणेन गन्धवत्त्वेन विशेषमपश्यतो भवति भुवि नित्यत्वानित्यत्वसंशयः । अत्र वैशेषिका आहुः । असाधारणधर्मः संशायको भवन् व्यावृत्त्यैव भवति । यथा शब्दत्वव्यावृत्तिर्नित्ये अनित्ये चास्तीति शब्दो नित्यो न वा इति संशयः । व्यावृत्तिश्च साधारणधर्म एव इति नाधिक्यम् । तथा च सिद्धान्तः साधारणधर्मादेकस्मादेव सर्वत्र संशयः इति ( त० व० परि० १२ पृ० २१४—२१५ ) । तृतीयो यथा यत्र शब्देन कोटिद्वयोपस्थितिद्वारा प्रामाण्यं स्वतो ग्राह्यं परतो ग्राह्यं वा इति मानसः संशय उत्पद्यते ( न्या० वा० ) ( त० भा० पृ० ४१—४२ ) ( त० प्र० ) ( गौ० वृ० १।१।२३ ) ( मु० ) ( सि० च० ) । कणादनये द्विविधः संशयः बहिर्विषयकः अन्तर्विषयकश्च । एतन्मते द्विविधोपि संशयः साधारणधर्मवत्त्वाज्ञानादेव भवति नान्यस्मात् इति विज्ञेयम् । तत्र बहिर्विषयकोपि द्विविधः दृश्य-मानधर्मिकः अदृश्यमानधर्मिकश्च । तत्र दृश्यमानधर्मिको यथा ऊर्ध्वत्व-विशिष्टस्य धर्मिणो दर्शनात् अयं स्थाणुः पुरुषो वा इति । अत्र भाष्यम् प्रत्यक्षविषयेपि स्थाणुपुरुषयोरूर्ध्वतामात्रदर्शनात् वक्रकोटरादिविशेषानु-पलब्धितः स्थाणुत्वादिसामान्यविशेषानभिव्यक्तावुभयविशेषानुस्मरणा-दुभयत आकृष्यमाणस्यात्मनः प्रत्ययो दोलायते किं नु खल्वयं स्थाणुः स्यात् पुरुषो वा ( प्रशस्त० गु० पृ० २४ ) इति । अदृश्यमानधर्मिको

यथा अरण्ये झाटाद्यन्तरिते गोगवयादिपिण्डे विषाणमात्रदर्शनात् अयं गौर्गवयो वा इति (वै० उ० २।२।१८)। अत्र भाष्यम् अप्रत्यक्षविषये तावत् साधारणलिङ्गदर्शनात् उभयविशेषानुस्मरणात् अधर्माच्च संशयो भवति । यथा अटव्यां विषाणमात्रदर्शनात् गौर्गवयो वा (प्रशस्त० गुणनि० पृ० ४९) इति। वस्तुतः तत्रापि विषाणधर्मिक एव संदेहः विषाणमिदं गोसंबन्धि गवयसंबन्धि वा इति। विवक्षामात्रात्तु द्वैविध्याभिधानम् (वै० उ० २।२।१८)। आन्तरसंशयो हि विद्याविद्याभ्यां भवति । यथा मौहूर्तिकः सम्यगादिशति चन्द्रोपरागादि असम्यगपि। तत्र स्वज्ञाने सम्यगादिष्टमुपरागादि असम्यग्वा इति संशयो जायते (वै० २।२।२०) (त० व० परि० १२ पृ० २१६)। अत्र भाष्यम् अन्तस्तावत् आदेशिकस्य सम्यक् मिथ्या चादिश्य पुनरादिशतस्त्रिषु कालेषु संशयो भवति किं नु सम्यक् मिथ्या वा (प्रशस्त० गुणनि० पृ० ३९) इति। २ (पक्षता) [क] बाधप्रतिबध्यतावच्छेदकीभूतस्वनिष्ठविषयितावटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपिता या साध्यवत्तानिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्ना प्रतिबध्यता तच्छालिज्ञानम्। यथा पर्वते धूमेन वह्निसाधने पर्वतो वह्निमान्न वा इति संशयः पक्षता। बाधप्रतिबध्यतेत्यादेः सुगमार्थस्तु बाधस्य प्रतिबध्या या संशयीयैका कोटिः तस्याः प्रतिबध्या या साध्यस्य प्रतिबध्या च संशयीया अपरकोटिः तद्विषयकं ज्ञानम् इति। वह्निमान् धूमादित्यादौ बाधस्य वह्न्यभावस्य प्रतिबध्या कोटिः वह्निः तस्य प्रतिबध्या साध्यस्य वह्नेः प्रतिबध्या चापरकोटिः वह्न्यभावः तद्विषयकं पर्वतो वह्निमान्न वा इति ज्ञानम् इति लक्षणसमन्वयः। अत्रेदं बोध्यम्। स्वनिष्ठविषयितायां च बाधप्रतिबध्यतावच्छेदकत्वमावश्यकम्। तेन वह्निव्याप्यसाध्यकस्थले पर्वतो वह्निव्याप्यवान् इत्यादौ वह्निमान् न वा पक्षः इत्येतादृशसंशयव्युदासः। तत्र वह्निव्याप्याभावाभावत्वेन वह्निव्याप्यस्य पृथग्भानेपि संशयत्वघटकीभूतस्वनिष्ठवह्निमत्पक्षविषयितायां वह्निव्याप्याभावनिश्चयप्रतिबध्यतावच्छेदकत्वविरहात् इति । विषयितायां

१ अविद्येति पदच्छेदः।

स्वनिष्ठत्वनिवेशनेन अवच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकसामानाधिकरण्यमात्रेण कोटिद्वयावगाहिनिश्चयस्य अवच्छेदकावच्छेदेन साध्यादिमत्तानिश्चयप्रतिबध्यत्वेपि पक्षतात्ववारणम् इति । शुद्धवह्नित्वावच्छिन्नसाध्यकस्थले पर्वतो वह्निमान् इत्यादौ वह्न्यभाववान् पर्वतः इत्येतादृशबाधप्रतिबध्यस्य महानसीयवह्निमान्न वा पक्षः इत्येतादृशस्य संशयस्य पक्षतात्ववारणाय साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्नत्वं प्रतिबध्यतायां निवेशनीयम् ( ग० पक्ष० पृ० ४ ) । पक्षता चेयं पूर्वपक्षीया आचार्यमतसिद्धा च इति बोध्यम् ( वाच० ) । [ ख ] अथ वा स्वघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूता या स्वनिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपितविरोधविषयतानिरूपितविषयतानिरूपिता प्रकारिता सामानाधिकरण्यसंबन्धेन तद्विशिष्टप्रकारितावज्ज्ञानम् । एतल्लक्षणस्यावतरणिका चेत्थमुक्ता । व्याप्यवृत्तित्वविशिष्टकोटिद्वयावगाहिज्ञानं संशयः इति मते संशये समुच्चयव्यावृत्तविषयितां प्रदर्श्य एकधर्मिकनानाविरुद्धकोट्यवगाहिज्ञानं संशयः इति मते संशयत्वं निर्वक्ति अथ वा इत्यादिना ग्रन्थेन इति । अत्र स्वपदेन संशयविषयैककोटिनिरूपिता प्रकारिता ग्राह्या । [ ग ] केचित्तु साध्यनिश्चयसाध्याभावनिश्चयप्रतिबध्यतावच्छेदकविशेष्यताशालिज्ञानं संशयः इत्याहुः । अयं भावः । संशये च धर्मिणि उभयप्रकारतानिरूपितैकविलक्षणविषयता समुच्चयवैलक्षण्यायोपगम्यते इति तादृशविषयताया विभिन्नरूपेणोभयनिश्चयप्रतिबध्यतावच्छेदकतया नासंभवः ( ग० पक्ष० पृ० ४ ) इति । एतच्चिन्त्यम् । चिन्ताबीजं तु वह्नित्ववह्न्यभावत्वोभयपुरस्कारेण वह्न्यभावावगाहिनि पर्वतो वह्न्यात्मकवह्न्यभाववान् इति समुच्चयेतिव्याप्तिः इति । शिष्टं तु पक्षताशब्दव्याख्याने दृश्यम् ।

**संशयसमः**—( जातिः ) [ क ] सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमः ( गौ० ५।१।१४ ) । अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदित्युक्ते हेतौ संशयेन प्रत्यवतिष्ठते सति प्रयत्नानन्तरीयकत्वेस्त्येवास्य नित्येन सामान्येन साधर्म्यमैन्द्रियकत्वम् अस्ति च

घटेनानित्येन । अतो नित्यानित्यसाधर्म्यादनिवृत्तः संशयः ( वात्स्या० ५।१।१४ ) इति । अत्र नित्यानित्यसाधर्म्यात् इति पदं संशयकारणोपलक्षणम् । हेतुज्ञाने अप्रामाण्यशङ्काधानद्वारा साध्यसंशयात् सत्प्रतिपक्षदेशनाभासोयम् ( गौ० वृ० ५।१।१४ ) । [ ख ] यत्र समानो धर्मः संशयकारणं हेतुत्वेनोपादीयते स संशयसमः सव्यभिचार एव ( वात्स्या० १।२।७ ) । [ ग ] समानधर्मदर्शनादियत्किंचित्संशयकारणवत्त्वात्संशयेन प्रत्यवस्थानम् । यथा शब्दः अनित्यः कार्यत्वाद्घटवदित्युक्ते सामान्ये गोत्वादौ दृष्टान्ते घटे चैन्द्रियकत्वं तुल्यम् । यथा कार्यत्वान्निर्णायकादनित्यत्वं निर्णीयते तथैन्द्रियकत्वात्संशयकारणादनित्यत्वं संदिह्यताम् ( गौ० वृ० ५।१।१४ ) । तथा चोक्तम् संदेहहेतुसद्भावात्सति निर्णयकारणे । संशयस्य प्रसङ्गो यः स संशयसमो मतः ॥ ( ता० र० प० २ श्लो० ११६ ) इति । [ घ ] साधारणधर्मं प्रदर्श्य संशयोद्भावनम् । यथा शब्दः अनित्यः कार्यत्वादित्यादौ शब्दस्यानित्येन घटेन सह कार्यत्वरूपं साधर्म्यं यथा अस्ति तथा नित्येन शब्दत्वेन सह श्रावणप्रत्यक्षविषयत्वं साधर्म्यमस्ति इत्युभयसाधर्म्यदर्शनात्संशयः स्यात् । एकपरिशेषे नियामकाभावात् ( नील० पृ० ४४ ) इति ।

**संसर्गः**—१ [ क ] संबन्धः । यथा पक्षे साध्यसंसृष्टत्वज्ञानमनुमितिकारणम् ( मु० २ ) इत्यादौ । [ ख ] संसर्गताख्यविषयतावान् । यथा शाब्दबोधे चैकपदार्थे अपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते ( ग० व्यु० १ ) इत्यादौ घटवद्भूतलम इति शाब्दबोधीयः संयोगाख्यः संसर्गः । २ व्यवहारशास्त्रज्ञास्तु विभागानन्तरं यत्तव मम च धनं तदावयोः इति कृतसमयेनैकत्रावस्थानरूपो धनसंबन्धः ( संसृष्टिः ) संसर्गः इत्याहुः । ३ धर्मज्ञास्तु पातकिसंबन्ध इत्याहुः । पातकिसंसर्गस्य पापहेतुत्वमाह मनुः ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥ ( मनु० अ० ११ श्लो० ५४ ) यो येन पतितेनैषां संसर्गं याति मानवः । स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये ॥ ( मनु० अ० ११ श्लो० १८१ ) । प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा ।

न संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥ (मनु० अ० ११ श्लो० ४७) इति । विष्णुः यश्च येन पापात्मना सह संसृज्येत स तस्यैव प्रायश्चित्तं कुर्यात् इति । एवं गौतमोपि । के ते संसर्गप्रकारा इत्याहतुर्मनुबृहस्पती एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम् । याजना-ध्यापनं योनिस्तथा च सहभोजनम् ॥ नवधा संकरः प्रोक्तो न कर्तव्यो-धमैः सह (मनु० अ० ११ श्लो० १८०) इति । कूर्मपुराणे व्यासः महापातकिनस्त्वेते यश्च तैः सह संवसेत् । संवत्सरं तु पतितैः संसर्गं कुरुते तु यः ॥ यानशय्यासनैर्नित्यं जानन्वै पतितो भवेत् इति । अत्रेदं बोध्यम् । महापातकिसंसर्गस्यैव कलौ पापहेतुत्वम् नान्यपापिसंसर्गस्य । यथोक्तं पराशरेण कृते संभाषणात्पापं त्रेतायां चैव स्पर्शनात् । द्वापरे चान्नमादाय कलौ पतति कर्मणा ॥ इति । अत्र सर्वस्मृतिशास्त्रैकवाक्यतना-द्वयं ब्रूमः । कलावपि महापातकिसंसर्गस्येवान्यपापिसंसर्गस्यापि पाप-हेतुत्वमस्त्येव । परंतु तत्पापं स्वल्पमेव । तन्निर्णेजनाय तदनुगुणं प्राय-श्चित्तं कार्यमेव इति ।

**संसर्गमर्यादा**—[क] समभिव्याहारज्ञानकार्यतावच्छेदककोटिप्रविष्टसंब-न्धता (कृष्णं०)। यथा शाब्दबोधे चैकपदार्थे अपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते (ग० व्यु० का० १) इत्यादौ संसर्गमर्यादा-शब्दस्यार्थः । [ख] आकाङ्क्षादिसहकारिसहकृता पदशक्तिः इति वैयाकरणादयः आहुः (काव्यप्र० कमला० उल्ला० २)।

**संसर्गाभावः**—(अभावः) [क] तादात्म्यातिरिक्तसंसर्गारोपजन्यप्रतीति-विषयाभावः (त० प्र० ख० ४ पृ० ५६)। अत्रार्थे संसर्गाभाव-पदस्य व्युत्पत्तिः संसर्गेण तादात्म्यातिरिक्तेन संबन्धेन अवच्छिन्नप्रतियो-गिताकः अभावः इति । मध्यमपदलोपी समासः शाकपार्थिववज्ज्ञातव्यः । अयं भावः । ध्वंसप्रागभावयोरपि किंचित्संबन्धावच्छिन्नप्रतियोगिताकत्व-मस्ति इत्यभिप्रायेणेयं व्युत्पत्तिः । संसर्गाभावस्य लक्षणं च तादात्म्य-संबन्धानवच्छिन्नप्रतियोगिताकाभावत्वम् (ग० २ सिद्धान्त०)। अथ वा अन्योन्याभावभिन्नाभावत्वम् (मु० १ पृ० ४२)। अन्ये तु

संसर्गाभावत्वं च संसर्गारोपजन्यप्रतीतिविषयाभावत्वमेव अखण्डोपाधिर्वेत्याहुः (त० प्र० ४ पृ० ५७) । संसर्गाभावग्रहे प्रतियोगियोग्यतैव तन्त्रम् । यत्तु संसर्गाभावग्रहे प्रतियोग्यधिकरणोभययोग्यत्वं तन्त्रम् इति कैश्चिदुक्तम् । तन्न समीचीनम् । आकाशे रूपात्यन्ताभावप्रत्यक्षस्य निवृत्तः कोलाहलः इति ध्वंसप्रत्यक्षस्य चानुपपत्त्या तद्ग्रहे अधिकरणयोग्यतापेक्षा नास्ति (सर्व० पृ० २३१ औद्धु०) (वै० उ० ९।१।८) (वै० वि० ९।१।८ पृ० ३८१)। अत एव त्वक्संयुक्तकालविशेषणतया वायुस्पर्शनाशप्रत्यक्षं पक्षधरमिश्रैः स्वीकृतम्। [ ख ] अन्योन्याभावभिन्नः अभावः (त० प्र०) (मु० १ पृ० ४२)। यथा नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः (वै० ९।१।१०) इति सूत्रे प्रतिपाद्यः अभावः । ध्वंसप्रागभावयोः किंचित्संबन्धावच्छिन्नप्रतियोगिताकत्वानङ्गीकारे तु इदं लक्षणान्तरम् इति विज्ञेयम् । लक्षणस्यायमर्थः । गेहे घटस्य यः संसर्गः संयोगस्तस्य प्रतिषेधः । स च यदि कदाचिदपि न घटस्तदात्यन्ताभाव एव भविष्यतः प्रागभावः भूतस्य प्रध्वंसाभावः इति वैशेषिका आहुः (वै० उ० ९।१।१०)। अथ वा सतः पूर्वं तत्र वर्तमानस्य घटस्यैव गेहसंसर्गप्रतिषेधः गेहे संसर्गाभावः । तद्विशेषोत्यन्ताभावः नास्ति गेहे घटः इति प्रत्यक्षविषयः इति समुदितसूत्रार्थः इति नैयायिका आहुः (वै० वि० ९।१।१० पृ० ३८४) । अत्रेदं बोध्यम् । संसर्गाभावश्च नञादिनिपातेन धातुना च बोध्यते । तत्र निपातेन प्रातिपदिकार्थाभावस्य बोधने अनुयोगिनि सप्तम्यपेक्षा । यथा गेहे घटो नास्ति इत्यादौ । विभक्त्यर्थसंसर्गाभावस्य धात्वर्थादौ बोधने तु नायं नियमः । यथा गगनं न पश्यति न कलञ्जं भक्षयेत् इत्यादौ । तत्र दर्शने गगनकर्मत्वस्य कलञ्जभक्षणे च बलवदनिष्टासाधनत्वस्य नञा संसर्गाभावस्य बोधनात् न तत्र सप्तम्यपेक्षा इति । प्रातिपदिकार्थस्यात्यन्ताभावबोधस्थलेनुयोगिनि सप्तम्यपेक्षा । कश्चित् नञर्थस्य सुबर्थाभावस्य अस्ति क्रियाविशेष्यतावच्छेदकतया भानम् । यथा नास्ति गेहे घटः इत्यादौ घटस्य गृहवृत्तित्वाभावो बोध्यते इत्याहुः (वै० वि० ९।१।१०

पृ० २८५ ) । [ ग ] अधिकरणे प्रतियोग्यारोपहेतुकनिषेधधीविषयः अभावः । संसर्गाभावस्त्रिविधः प्रागभावः ध्वंसः अत्यन्ताभावश्चेति ( भा० प० श्लो० १२–१३ ) । केचित्तु उत्पादविनाशशाली सामयिकनामा चतुर्थोपमभाव इत्याहुः ( मु० १ पृ० ४३ ) ( वै० वि० ९।१।५ ) । अयं भावः । यत्र भूतले पूर्वमपसारितं घटादिकं पुनरानीतं च तत्रायमभावः इति । नैयायिकास्तु तत्र घटकालस्याभावसंबन्धाघटकत्वात् घटसत्त्वकाले न घटात्यन्ताभावबुद्धिः । तथा च तत्रात्यन्ताभाव एव प्रतीयते । कालविशेषविशिष्टस्वरूपस्य ( घटानधिकरणकालीनस्वरूपस्य ) संसर्गत्वोपगमादेव घटवति घटो नास्ति इति प्रतीत्यभावोपपत्तौ चतुर्थसंसर्गाभावे मानाभावः ( दि० पृ० ४३ ) इति वदन्ति ।

**संसर्पः**—अंहस्पतिशब्दे दृश्यम् ।

**संसारः**—१ [ क ] दुःखादीनां कार्यकारणभावः । स चानादिः । पूर्वापरकालानियमात् । दुःखादयो मिथ्याज्ञानपर्यवसाना अविच्छेदेन वर्तमानाः संसारः ( न्या० वा० १ पृ० २६ ) इति । मिथ्याज्ञानादयो दुःखान्ता अविच्छेदेन वर्तमानाः संसारशब्दार्थः ( सर्व० पृ० २४६ अक्ष० ) । अयं भावः । धाता यथापूर्वमकल्पयत् इति वेदे खण्डप्रलयस्य प्रसिद्धत्वेन संसारस्य प्रवाहानादित्वं प्रकल्पनीयम् ( त० प्र० ४ पृ० १८ ) इति । [ ख ] जन्ममरणप्रबन्धः प्रेत्यभावापरनामा ( वै० उ० ६।२।१५ ) । यथा संसारसागरनिमग्नमनन्तदीनमुद्धर्तुमर्हसि हरे पुरुषोत्तमोसि इत्यादौ संसारशब्दस्यार्थः । जन्ममरणप्रवाहः प्रेत्यभावः । स एव पुंसां बन्धलक्षणः । तस्य च अजरंजरीभावः इति नामान्तरमागमे ( वै० वि० ६।२।१५ ) । संसारित्वं च क्रमेण दुःखोत्पादः ( न्या० ली० गु० मोक्षनि० पृ० ४२ ) । यथा शरीराभिमानिनो जीवस्य संसारित्वम् । सांसारिकं सुखं तु धर्मारब्धदेहावच्छेद्यं सुखम् ( प० च० ) । [ ग ] वल्लभीया मायावादिनो वेदान्तिनश्च मिथ्याज्ञानजन्यसंस्काररूपवासना देहारम्भकादृष्टविशेषो वा स्वादृष्टोपनिबद्धदेहपरिग्रहो वा संसार इत्याहुः । अत्र संसारगतिप्रकारस्तु

ॐ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॐ (ब्रह्मसू० ३।१।१) इत्यादिनोक्तो द्रष्टव्यः । [ घ ] मध्वाचार्यास्तु भूतबन्धः संसार इत्याहुः । तदुक्तं वाराहे भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम् ( मध्वभा० ३।१।१ ) इति । [ ङ ] सांख्यास्तु सूक्ष्म(लिङ्ग-)शरीरं पूर्वपूर्वस्थूलशरीरत्यागपूर्वकमभिनवस्थूलशरीरं यदुपादत्ते स संसार इत्याहुः । तदुक्तम् संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ( सांख्यका० ४० ) इति । [ च ] आत्मानं देहेनैकीकृत्य स्वर्गनरकमार्गयोः सरति येन पुरुषः स संसारः ( सर्व० सं० पृ० ४०२ शां० ) । समित्येकीकरणे । [ छ ] संसारो नामाज्ञानम् । २ विश्वम् । ३ संगतिः ( वाच० ) ।

**संसारी**—[ क ] भवाद्भवान्तरप्राप्तिमन्तः संसारिणः ( सर्व० सं० पृ० ७० आर्ह० ) । [ ख ] एष प्रमाता मायान्धः संसारी कर्मबन्धनः ( सर्व० सं० पृ० १९९ प्रत्य० ) ।

**संसृष्टिः**—१ संसर्गः ( संबन्धः ) ( राम० २ पृ० १६४ ) । यथा पक्षे साध्यसंसृष्टत्वज्ञानम् ( मुक्ता० २ पृ० १६ ) इत्यादौ संसृष्टिशब्दस्यार्थः । २ अलंकारविशेषः । एकार्थसमवायस्वभावा संसृष्टिः इत्यालंकारिका आहुः । तदुक्तं काव्यप्रकाशे सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ( काव्यप्र० १०।१३९ ) इति । ३ व्यवहारशास्त्रज्ञास्तु विभागानन्तरं मैत्र्यात् पुनः स्वस्वधनेषु भ्रात्रादीनां कृतः संसर्गः । विभक्तधनस्य मिश्रीकरणमिति यावत् । यथा संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ( याज्ञव० २।१४३ ) इत्यादौ संसृष्टिशब्दस्यार्थ इत्याहुः । अत्रोक्तं बृहस्पतिना विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः । पितृव्येणाथ वै प्रीत्या स तु संसृष्ट उच्यते ॥ ( याज्ञ० २।१४३ मिताक्षरा ) इति । ४ वमनादिना संशुद्धिः इति भिषज आहुः ( वाच० ) ।

**संस्कारः**—१ ( गुणः ) [ क ] संस्कारत्वजातिमान् ( त० दी० ) ( प्र० प्र० ) ( त० कौ० ) । संस्कारः अनित्यः ( वाक्य० गु० पृ० २२ ) । स च त्रिविधः वेगः भावना स्थितिस्थापकश्चेति । [ ख ]

सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमान् ( सि० च० पृ० ३५ ) । तस्यायमर्थः । सामान्यगुणो वेगः स्थितिस्थापको वा । आत्मविशेषगुणस्तु भावना । एतदुभयवृत्तिः गुणत्वव्याप्या च या जातिः तद्वान् संस्कार इति । सा च जातिः संस्कारत्वात्मिका भवति इति विज्ञेयम् ( त० दी० पृ० ३८ ) । संस्कारत्वं न जातिः इति व्यवस्थापने प्रायतन्त चषकादौ ( वाच० ) । [ ग ] यज्जातीयात्समुत्पाद्यस्तज्जातीयस्य कारणम् । स्वयं यस्तद्द्विजातीयः संस्कारः स गुणो भवेत् ॥ ( ता० र० श्लो० ४८ ) । अनुबन्धो भावना स्मृतिहेतुः संस्कार इति न्यायवार्तिके उक्तम् । त्रिविधसंस्कारमध्ये भावना विशेषगुणः । वेगः स्थितिस्थापकश्च सामान्यगुण इति विज्ञेयम् । २ धर्मज्ञास्तु सतो गुणान्तराधानात्मकः प्रतियत्नः । यथा अलंकारादेरुद्दीपनम् अन्नादेर्निशातनम् वस्त्रादेर्मार्जनम् दर्पणादेर्निर्मलीकरणम् व्रीह्यादेश्च यज्ञाङ्गतासंपादनाय वैदिकमार्गेण प्रोक्षणादिः संस्कार इत्याहुः । अत्र मतभेदाः । प्रोक्षणाभ्युक्षणादिषु संस्कारः पुरुषस्यैव धर्म इति नैयायिका आहुः ( कु० ) । प्रोक्षिता एव व्रीहयः पुरोडाशाय कल्पन्ते नाप्रोक्षिताः इति प्रोक्षणादिजन्यसंस्कारो यज्ञाङ्गव्रीहिषु इति स द्रव्यधर्म एव इति मीमांसका मन्यन्ते । एवम् स्नानाचमनादिजन्याः संस्कारा देह उत्पद्यमाना अपि तदभिमानिजीवे कल्प्यन्ते इति वेदान्तिन आहुः ( वाच० ) । ३ काव्यप्रकाशकृन्मम्मटभट्टस्तु शास्त्राभ्यासजन्यव्युत्पत्तिः इत्याह । ४ वैयाकरणास्तु व्याकरणोक्तदिशा शब्दानां साधनप्रकार इत्याहुः । ५ कर्मज्ञास्तु विप्रादीनां वैदिककर्मार्हत्वप्रयोजको गर्भाधानादिक्रियाकलापः संस्कार इत्याहुः । ते चेदानींतनानां संस्कारा दशविधा एव विशिष्यन्ते । गर्भाधानम् पुंसवनम् सीमन्तोन्नयनम् जातकर्म नामकरणम् निष्क्रमणम् अन्नप्राशनम् चूडाकर्म उपनयनम् विवाहश्च इति । अन्ते त्वौर्ध्वदैहिकसंस्कारोप्येकादशो विज्ञेयः । एवम् विप्रादीनां देहसंस्काराश्चाष्टाचत्वारिंशद्ग्रन्थान्तरेषु ज्ञेयाः । एवम् मन्त्राणां सिद्धिदानाय दशविधाः संस्कारास्तन्त्रादौ द्रष्टव्याः ( सर्व० सं० पृ० ३६९ पात० ) ।

**संस्कारशेषः**—सर्ववृत्तिप्रत्यस्तमये परं वैराग्यमाश्रितस्य आत्मविरोधिनां क्लेशानां निरोधसमर्थो निर्बीजः समाधिरसंप्रज्ञातपदवेदनीयः संस्कारशेषता-व्यपदेश्यश्चित्तस्यावस्थाविशेषः । तदुक्तम् विरामप्रत्ययाभ्यासपूर्वः संस्कार-शेषोन्यः (पात० सू० १।१८) ( सर्व० सं० पृ० ३८६ पात० ) इति ।

**संस्कारस्कन्धः**—वेदनास्कन्धनिबन्धना रागद्वेषादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ च संस्कारस्कन्धः (सर्व० सं० पृ० ४० बौ० )।

**संस्त्यायः**—निवासः ( कैय० ७।३।१४ ) ।

**संस्थानम्**—१ [ क ] अवयवसमुच्चयः । यथा सहजसंस्थानशून्यचरणवान् खञ्जः इत्यादौ संस्थानशब्दस्यार्थः (श० प्र० श्लो० ९४ टी० पृ० ११८)। [ ख ] केचित्तु अवयवारम्भकसंयोगविशेष इत्याहुः । [ ग ] अवयव-रचनाविशेषः । [ घ ] प्रचयाख्यः संयोगः ( न्या० बा० १।१४ पृ० ८१ ) । २ सम्यक् स्थितिः । ३ आकारः । ४ चिह्नम् इत्यजय आह । ५ मृत्युः । ६ चतुष्पथश्च इति काव्यज्ञा आहुः ।

**संहतम्**—१ मिलितम् । सांख्यास्तु आरम्भकसंयोगयुक्तम् इत्याहुः ( सांख्यभा० १।६६ ) । २ संघातः ।

**संहारः**—१ [ क ] प्रलयः ( हेमच० ) । यथा चतुर्णां महाभूतानां सृष्टिसंहारविधिरुच्यते ( प्रशस्त० ) इत्यादौ संहारशब्दस्यार्थः । [ ख ] ध्वंसशब्दवदस्यार्थोनुसंधेयः । २ संक्षेपः । ३ नरकविशेषः । ४ विस-र्जनम् । ५ कालिकाभैरवविशेषः इति तान्त्रिका आहुः । ते चाष्टौ असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त एव च । कपाली भीषणश्चैव संहारश्चाष्टभैरवाः ॥ ( तन्त्रसा० ) ( वाच० ) इति ।

**संहिता**—१ मन्वादिप्रणीतं धर्मशास्त्रम् पुराणम् इतिहासादि च । २ वेदभागः । यथा ऋक्संहिता यजुःसंहिता सामसंहिता चेति । स च क्वचिन्मन्त्ररूपः क्वचिच्च कर्मप्रतिपादकः क्वचित्तु गानरूपः इति विज्ञेयम् । ३ शाब्दिकास्तु स्वारसिकार्धमात्राकालव्यवायेनैवोच्चारणम् । यथा सुद्ध्यु-पास्यः दध्यत्र इति संहिता इत्याहुः । तथा च सूत्रम् परः संनिकर्षः संहिता ( पाणि० १।४।१०९ ) इति । अत्र व्याकरणनियमः संहितैक-

पदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ इति ।

**सकर्मकः**—( धातुः ) [ क ] आश्रयानवच्छिन्नफलावच्छिन्नव्यापारबोधकः । यथा चैत्रो ग्रामं गच्छतीत्यादौ संयोगानुकूलव्यापारबोधको गम्धातुः सकर्मकः ( ग० व्यु० का० २ ) ( वै० सा० पृ० ६०—६१ ) । अत्र अग्नौ जुहोति इत्यादौ अग्न्यादिनिष्ठफलं गृहीत्वा धातोः सकर्मकत्ववारणाय आश्रयानवच्छिन्न इति फलविशेषणम् । परे तु धातोः फलं व्यापारश्च द्वयमर्थ इति धातोः स्वार्थफलावच्छिन्नस्वार्थक्रियान्वयबोधकत्वं सकर्मकत्वम् । जानाति इत्यादौ सकर्मकत्वव्यवहारो भाक्तः इत्याहुः । जानात्यादीनां धातूनां तु नामार्थान्वितोद्देश्यत्वातिरिक्तविषयत्वरूपविभक्त्यर्थान्वय्यर्थकत्वात्मकं गौणं सकर्मकत्वम् इति ज्ञेयम् ( का० व्या० पृ० ३ ) । प्राञ्चस्तु सर्वत्र क्रियामात्रं धात्वर्थः । द्वितीयासाकाङ्क्षतुमन्तधातुत्वप्रयुक्त एव च धातूनां सकर्मकत्वव्यपदेशः । न तु फलावच्छिन्नक्रियावाचित्वप्रयुक्तः । ज्ञाप्रभृतावव्याप्तत्वात् इत्याहुः ( श० प्र० श्लो० ७३ पृ० ९३ ) ( त० प्र० ख० ४ पृ० ८३ ) । अत्रायं विशेषः । वृक्षात्पर्णं पततीत्यादावपि अधःसंयोगावच्छिन्नस्पन्दस्य पतधात्वर्थत्वेन धात्वर्थतावच्छेदकसंयोगात्मकफलशालिनो भूतलादेरपि कर्मत्वविवक्षायां वृक्षात्पर्णं भूमितलं पतति इति प्रयोग इष्ट एव । अत एव द्वितीया श्रितातीतपतित० ( पाणि० २।१।२४ ) इत्यादिसूत्रे पतितशब्दप्रयोगे द्वितीयासमासविधानम् तदुदाहरणं च नरकं पतितः नरकपतितः इति साधु संगच्छते । परे तु यदि च तत्र सकर्मकत्वव्यवहारो नेष्टः तदा कर्तृभिन्नान्वयिफलावच्छिन्नव्यापारबोधकस्यैव धातोः सकर्मकत्वम् । यथा गम्यादेः । न तु पतेः । अधःसंयोगरूपफलस्य पर्णे कर्तरि एवान्वितत्वात् । अधः इत्यस्य संबन्धिसाकाङ्क्षतया संबन्धित्वेन पर्णस्यैवान्वयात् इत्याहुः ( का० व्या० पृ० ४ ) ( ग० व्यु० का० २ ) । [ ख ] फलान्वितव्यापारबोधकः इति प्राञ्चो नैयायिका आहुः । [ ग ] शाब्दिकास्तु व्यापारानधिकरणवृत्तिफलबोधको धातुः

सकर्मकः । अथ वा स्वार्थफलव्यधिकरणव्यापारवाची स्वार्थव्यापारव्यधिकरणफलवाची वा धातुः सकर्मकः इत्याहुः (वै० सा० ) । स्वार्थफलेत्यत्र स्वशब्देन धातुर्ग्राह्यः । व्यधिकरणत्वं च कर्तृभिन्नतदधिकरणावृत्तित्वम् । तथा च ग्रामं गच्छति इत्यादौ संयोगरूपं फलं ग्रामे तदनुकूलव्यापारस्तु कर्तरि चैत्रे तिष्ठति इति फलव्यापारयोर्वैयधिकरण्यं संगच्छते इति। अत्रोक्तम् फलव्यापारयोरेकनिष्ठतायामकर्मकः। धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः ॥ इति । स्वार्थव्यापारेत्यत्र व्यधिकरणत्वं च तदधिकरणावृत्तित्वम् ( वै० सा० द० ) । व्यापाराधिकरणमात्रावृत्तिफलवाचकत्वम् इति परमार्थः । तथा हि पच्यादेर्व्यापाराधिकरणावृत्तिविक्लित्तिरूपफलस्य बोधकतया सकर्मकत्वम् । कर्तृकर्मोभयनिष्ठफलबोधकस्यापि गम्यादेर्व्यापाराधिकरणमात्रावृत्तिफलबोधकतया सकर्मकत्वम् । भूप्रभृतीनां तु व्यापाराधिकरणमात्रवृत्तिफलबोधकतया न सकर्मकत्वम् । फलस्य सत्तायाः तत्संबन्धरूपव्यापारस्य चैकस्मिन्नेव धर्मिणि घटोस्तीत्यत्र घटादौ सत्त्वात् ( वाच० ) । अत्रोक्तं भर्तृहरिणा आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते । अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः ॥ इति वाक्यपदीये । आत्मानं जानाति इच्छतीत्यादौ चेत्थं सकर्मकत्वव्यवस्था । द्वावात्मानौ शरीरात्मा अन्तरात्मा चेति । तत्रान्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवतीति कर्मवत्कर्मणा तुल्यक्रियः ( पाणि० ३।१।८७ ) इति सूत्रीयभाष्योक्तरीत्या भिन्नाधिकरणनिष्ठतामादाय सकर्मकत्वमवधेयम् ( वै० सा० पृ० ४३ ) । अत्राधिकं तु धातुशब्दव्याख्यानावसरे संपादितं तत्तत्र दृश्यम् । [ घ ] प्राञ्चो वैयाकरणास्तु व्याकरणशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थको धातुः सकर्मकः इत्याहुः । तेन अध्यासिता भूमयः इत्यादिप्रयोगः सिद्ध्यति इति विज्ञेयम् ( ल० म० धा० पृ० ५ ) । [ ङ ] मीमांसकास्तु प्रत्ययार्थव्यापारव्यधिकरणफलवाचको धातुः सकर्मकः इत्याहुः ।

**सकलः**—मलमायाकर्मात्मकबन्धत्रयसहितः सकलः ( सर्व० सं० पृ० १८३ शै० ) ।

**सकलम्**—१ सर्वशब्दवदस्यार्थोनुसंधेयः। २ कलासहितः सकलः इति शब्दव्युत्पत्तिज्ञा आहुः।

**सकला**—यां तिथिं समनुप्राप्य उदयं याति भास्करः। सा तिथिः सकला ज्ञेया स्नानदानजपादिषु॥ यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः। सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ( पु० चि० पृ० ४१ )।

**सखण्डोपाधिः**—( उपाधिः सामान्यम् ) बहुपदार्थघटितो धर्मः। यथा शिष्टत्वेन्द्रियत्वविषयत्वादिरूपः प्रमेयत्वकुण्डलित्वादिरूपश्च धर्मः सखण्डोपाधिः ( सि० च० १ पृ० ३ ) ( ल० व० ) ( त० कौ० पृ० २० )। एतच्चोपलक्षणम् भावत्वाभावत्वशरीरत्वकारणत्वाकाशत्वकालत्वदिक्त्वादेः। सखण्डोपाधिश्चायं क्लृप्तपदार्थेन्तर्भवति। न त्वखण्डोपाधिवत् सप्तपदार्थातिरिक्तः पदार्थ इति विज्ञेयम् ( सि० च० १ पृ० ३ )।

**सङ्गः**—१ कर्तृत्वाभिमानः। यथा सङ्गं त्यक्त्वा फलानि च इत्यादौ सङ्गशब्दस्यार्थः ( ल० म० )। २ अनुरागः। ३ संबन्धः। ४ परस्परप्राप्तिमात्रं सङ्गः ( सर्व० सं० पृ० ८१ आर्ह० )।

**सजातीयम्**—१ तद्वृत्तियत्किंचिद्धर्मवत्। यथा घटत्वेन वृत्तित्वाभावो घटत्वावच्छिन्नवह्न्यभावसजातीयः ( ग० चतु० मिश्र० )। अत्र च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वेन साजात्यं बोध्यम् ( दीधि० २ व्याप्तिनिरू० )। विस्तरश्च सादृश्यशब्दव्याख्यानावसरे व्यक्तीभविष्यति। २ क्वचित् लक्ष्यतावच्छेदकसाक्षाद्व्यापकजात्यवच्छिन्नम्। यथा गोसजातीयोश्वः। अत्र साक्षाद्व्यापकत्वं च तद्व्यापकाव्यापकत्वे सति तद्व्यापकत्वम् ( प्र० च० )। तथा हि गोर्लक्षणस्य सास्नादिमत्त्वस्य सजातीयव्यावृत्तिप्रयोजनकत्वे गोत्वं लक्षणलक्ष्यतावच्छेदकम्। तस्य साक्षाद्व्यापकं पशुत्वम्। तदवच्छिन्नोश्वो भवति ( प्र० च० पृ० ३ ) इति।

**सत्**—१ सत्यं वस्तु। यथा नैयायिकमते घटपटादि सर्वं जगत्सत्। अत्र सत्ताविशिष्टं सत् इत्यर्थो बोध्यः। न्यायमते घटादीनामुत्पत्तिनाशवत्त्वेपि मिथ्यात्वाभावेन कालसंबन्धित्वरूपं सत्यत्वं संगच्छते इति विज्ञेयम्। मायावादिमते तु परं ब्रह्मैव सत्। तन्मते तत्र सत्यत्वं च त्रिकाला-

बाध्यत्वमेव । २ साधु । ३ प्रशस्तम् । यथा सत्स्वभाव इत्यादौ । ४ विद्यमानम् । यथा सच्चिदानन्दः इत्यादौ इति माध्वा आहुः । ५ उत्पादव्ययध्रौव्ययुक्तं सत् ( सर्व० सं० पृ० ५१ आर्ह० ) ।

**सत्कार्यवादः**—( वादः ) कार्यस्य सत्त्वनिर्णायकः कथाविशेषः । तत्प्रपञ्चस्तु वादशब्दे द्रष्टव्यः ।

**सत्ता**—१ ( सामान्यम् ) द्रव्यगुणकर्मसमवेता ( सर्व० २२० औलू० ) । इयं च वैशेषिकमते परसत्ता परसामान्यं वा इत्युच्यते द्रव्यगुणकर्मवृत्तिश्चेति बोध्यम् ( भा० प० ) । तत्र प्रमाणम् भावोनुवृत्तेरेव हेतुत्वात्सामान्यमेव ( वै० १।२।४ ) इति । इयं सत्ता द्रव्यं सत् गुणः सन् इत्याद्यनुगतप्रतीत्यैव सिद्ध्यति । अत्र सूत्रम् सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ( वै० १।२।७ ) इति । तथा चानुमानम् सत्ता न द्रव्याद्यात्मिका विलक्षणबुद्धिवेद्यत्वात् ( वै० उ० ७।२।२७ ) ( वै० वि० ७।२।२७ ) ( वै० १।२।८–१७ ) इति । इयं सत्ता वैशेषिकमत एव प्रसिद्धा । नव्यास्तु इमां सत्तां न स्वीचक्रुः । अयमाशयः । सन् इति प्रतीतिविषयो भावत्वमेव । अत एव सामान्यादिष्वपि सत् इति व्यवहारः । न त्वतिरिक्ता द्रव्यादित्रिकवर्तिनी सत्ताख्या जातिः इति । तेन परमपरं सामान्यम् परं सत्ता इति वैशेषिकविभागो निर्युक्तिकत्वादनादेयः ( दि० १ पृ० ३६ ) इति । २ विद्यमानत्वम् । तच्च कालसंबन्धः । यथा घटो भवति इत्यादौ भूधात्वर्थः । यथा वा भूतले घटसत्त्वादशायाम् इत्यादौ सत्ताशब्दस्यार्थः । मायावादिमते सत्ता त्रिविधा पारमार्थिकी व्यावहारिकी प्रातीतिकी ( प्रातिभासिकी ) चेति ( वेदा० सा० ) । तत्र पारमार्थिकी ब्रह्मणः सत्ता । त्रिकालाबाध्यत्वात् । व्यावहारिकी च घटादीनां सत्ता । व्यवहारकाले अबाध्यत्वात् । सा तु तत्त्वज्ञाननाश्या । प्रातिभासिकी तु शुक्तौ रजतादेः । अधिष्ठानज्ञानबाध्यत्वात् । प्रतिभासकालमात्रसत्त्वाच्च इति । सा चाधिष्ठानसाक्षात्कारनाश्या । ब्रह्मसत्तयैव सर्वेषां सत्ताव्यवहारः । सद्रूपत्वात् ( वेदा० प० ) इति । ३ आत्मधारणानुकूलव्यापारः सत्ता इति शाब्दिका

भवन्ति । अत्रोक्तं भर्तृहरिणा आत्मानमात्मना बिभर्तीति व्यवच्छिद्यते । अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः ॥ (वाक्यप० ) इति । ४ अर्थक्रियाकारित्वम् । यथा यत्सत् तत्क्षणिकम् इत्यादौ इति बौद्धा आहुः । ५ प्रामाणिकत्वम् इत्यन्य आहुः ।

सत्यंकारः—सत्यस्य कारः ( बिसार इति प्र० ) ( मिताक्षरा व्य० २ श्लो० ६१ ) ।

सत्यत्वम्—यत्र द्रष्टा च दृश्यं च दर्शनं चाविकल्पितम् । तस्यैवार्थस्य सत्यत्वमाहुस्त्रय्यन्तवेदिनः ॥ ( सर्व० सं० पृ० ३०९ पाणि० ) ।

सत्यम्—१ प्रमितिविषयः । यथा घटपटादि सर्वं जगत् सत्यम् । यथा वा वेदान्तिमते भूतपञ्चकम् । अत्रार्थे व्युत्पत्तिः सन्ति पृथिव्यस्तेजांसि च त्यौ वाय्वाकाशौ च इति । तथा च श्रुतिः सच्च त्यच्च भूतपञ्चकम् तं च सत्यमित्याचक्षते ( बृह० उ० २।३।१–३ ) ( तैत्ति० उ० २।६।१ ) इति । २ यथार्थकथनम् । यथा सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ( मनु० ४।१३८ ) इत्यादौ सत्यशब्दस्यार्थः । तदुक्तं ब्रह्मपुराणे यथार्थकथनं यच्च सर्वलोकसुखप्रदम् । तत्सत्यमिति विज्ञेयमसत्यं तद्विपर्ययः ॥ इति । ३ नान्दीमुखश्राद्धीयो देवताविशेषः । अत्रोक्तम् इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः ( श्राद्धत० ) इति । ४ कृतयुगम् । अत्रेदमधिकं ज्ञेयम् संध्यासंध्यंशाभ्यां सहितं सत्ययुगमानं तु दैवमानेन ४८०० वर्षाः मनुष्यमानेन १७२८००० वर्षाः इति । ५ शपथः । शपथरूपसत्यस्यापालने दोषो यथा कृत्वा शपथरूपं यः सत्यं हन्ति न पालयन् । स कृतघ्नः कालसूत्रे वसेदेव चतुर्युगम् ॥ ( ब्रह्मवै० पु० प्र० अ० २८ ) इति । ६ यथार्थज्ञानम् । यथा सत्यरजते इदं रजतम् इति ज्ञानम् । अत्र याथार्थ्यं च तद्वति तत्प्रकारकत्वमात्रम् । तदेव ज्ञाने सत्यत्वम् इति ज्ञेयम् । ७ त्रिकालाबाध्यम् । यथा सत्यं ज्ञानमनन्तं ब्रह्म ( तै० उप० २।१ ) इत्यादौ परमात्मा सत्यः इति वेदान्तिन आहुः । ८ तपोलोकादूर्ध्वस्थो लोकविशेषः इति पौराणिका आहुः । अत्रोच्यते पद्मपुराणे तपोलोकात्सत्यलोको

विराजते । अपुनर्मारका यत्र ब्रह्मलोकाभिधः स्मृतः ॥ (विष्णुपु० अंश० २ अ० ७) इति । ९ स्वीकारः । अत्रार्थे सत्यमित्यव्ययम् इति विज्ञेयम् ।

सत्त्वम्—१ सत्ताशब्दवदस्यार्थोनुसंधेयः । २ सांख्यास्तु प्रकाशादिसाधनं प्रकृत्यवयवः (प्रकृतेः सत्त्वगुणः) पदार्थः । यथा सत्त्वात्संजायते ज्ञानम् इत्यादौ सत्त्वशब्दस्यार्थ इत्याहुः । तदुक्तम् सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः । गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ (सांख्यका० १३) इति । अत्र लघुत्वं प्रकाशकत्वं च सत्त्वस्य लक्षणम् (सांख्यचन्द्रि० १३) इति । ३ वैयाकरणाश्च द्रव्यम् । यथा सत्त्वे निविशतेपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोसत्त्वप्रकृतिर्गुणः ॥ (व्या० का०) सत्त्वप्रधानानि नामानि (निरुक्त०) इत्यादौ सत्त्वशब्दस्यार्थ इत्याहुः । सत्त्वे निविशत इत्यस्यार्थश्च वोतो गुणवचनात् (पाणि० सू० ४।१।४४) इति सूत्रे तत्त्वबोधिन्यां स्त्रीप्रत्ययप्रकरणे द्रष्टव्यः । ४ योगशास्त्रज्ञास्तु चित्तम् । यथा सत्त्वे तप्यमाने तत्संक्रान्तः पुरुषोपि तप्यते (पात० भा०) इत्यादौ सत्त्वशब्दस्यार्थ इत्याहुः । ५ प्राणाः इत्यौपनिषदा आहुः । ६ पिशाचादिः इति मान्त्रिका आहुः । ७ आयुः इति भिषज आहुः । ८ व्यवसायः । ९ बलं चेति काव्यज्ञा आहुः । १० स्वभावः । ११ आत्मा । १२ जन्तुश्च इत्यन्ये वदन्ति (शब्दच०) । १३ जगत्कारणे येयं सुखात्मकता तत्सत्त्वम् (सर्व० सं० पृ० ३२६ सां०) । १४ अर्थक्रियाकारित्वं सत्त्वम् (सर्व० सं० पृ० ५० आर्ह०) । १५ त्रिविधं सत्त्वम् परमार्थसत्त्वं ब्रह्मणः । अर्थक्रियासामर्थ्ये सत्त्वं मायोपाधिकमाकाशादेः । अविद्योपाधिकं सत्त्वं रजतादेः (सर्व० सं० पृ० ४४६ शां०) ।

सत्प्रतिपक्षः—१ (हेत्वाभासः दुष्टहेतुः) अयं च प्रकरणसमः इत्युच्यते (म० प्र० २ पृ० २७) (त० भा० पृ० ४९) । अत्र तुल्यबलयोरेव सत्प्रतिपक्षत्वम् नातुल्यबलयोः इति नियमः । तेन एकतरत्र तर्कादिबलसत्त्वे तस्यैवेतरबाधकता इति बोध्यम् । [क] बाधोप-

स्थितिसमर्थपरामर्शकालीनसाध्यसिद्धिसमर्थपरामर्शविषयः (दीधि० २)। यथा पर्वतो वह्निमान्धूमान्महानसवत् पर्वतो वह्न्यभाववान् पाषाणमयत्वात् कुड्यवत् (त० कौ० २ पृ० १४) इति। अयं च प्राचीनमतानुसारी व्यावहारिकः सत्प्रतिपक्ष इत्युच्यते। अत एव सन् विद्यमानः प्रतिपक्षो विरोधिव्याप्त्यादिमत्तया परामृश्यमानो हेतुः विरोधिपरामर्शो वा यस्य परामृश्यमानस्य हेतोरसौ सत्प्रतिपक्षः इति विग्रहमपि वर्णयन्ति। अतस्तदनुसारेणैव व्यवहारौपयिकं लक्षणमाह मणिकारः (दीधि० २ पृ० २०८)। अत एव इत्यस्यार्थस्तु प्रकृतपरामर्शस्य विरोधिपरामर्शस्यासत्त्वदशायां सत्प्रतिपक्षव्यवहारविरहादेव इति। सत्प्रतिपक्षत्वं च साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिङ्गत्वम्। बलं च व्याप्तिपक्षधर्मते। अथ वा विरोधिबोधकान्यगमकतौपयिकरूपसंपत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यकत्वम् (चि० २ पृ० ९४–९५)। अत्र उपस्थितौ समानबलत्वं चानाप्तोक्तत्वेनानिश्चितत्वम् प्रकृतसाध्यानुमापकबलशालित्वे सति प्रकृतसाध्याभावानुमापकबलशालिहेत्वन्तरकत्वं वा इति विज्ञेयम्। साध्यविरोधीत्यादेरर्थस्तु साध्यस्य साध्यसिद्धेः विरोधिन्याः पक्षो न साध्यवान् इत्याद्युपस्थितेः यद्वा साध्यविरोधी साध्यवत्ताज्ञानप्रतिबन्धकज्ञानविषयः बाधः साध्याभावादिमत्पक्षादिः तदुपस्थितेर्वा जननयोग्यया समानया बलोपस्थित्या तथाविधव्याप्त्यादिबुद्ध्या प्रतिरुद्धं कार्यं यस्य तादृशलिङ्गत्वम् इति। अत्र समानबलत्वं चागृहीताप्रामाण्यकसाध्यसिद्ध्यौपयिकपरामर्शकालीनत्वम् (दीधि० २ हेत्वा० पृ० २०८–२०९)। निष्कृष्टार्थस्तु प्रकृतानुमितिविरोध्यनुमितियोग्यपरामर्शप्रयुक्ताग्रिमक्षणावच्छिन्नानुत्पादप्रतियोगिप्रकृतानुमितिजनकतावच्छेदकीभूतपरामर्शीयविषयताविशेषविशिष्टत्वम् (ग० व्यावहारि० सत्प्र० निर० पृ० ७) इति। अत्रेदमवधेयम्। पर्वतो वह्निमान् धूमात् इत्यादिसद्धेतुस्थलेपि वह्निव्याप्यधूमवान् वह्न्यभावव्याप्यपाषाणमयत्ववांश्च पर्वतः इति परामर्शद्वयसंवलनदशायां प्रकृतोयं धूमो हेतुः सत्प्रतिपक्षितः इति व्यवह्रियत इत्यनुभवमनुरुध्येदमुक्तम्। एतस्य दूषकताबीजं च समानबलविरोधिसामग्रीप्रतिबन्धेन निर्णयाजनकत्वम्। एकत्र व्याप्तिभङ्गज्ञानद्वारा वास्त

दूषकत्वम् ( चि० २ पृ० ९५ ) । एतज्ज्ञानं च साक्षादनुमितिप्रतिबन्धकम् । वह्निव्याप्यधूमवान् वह्न्यभावव्याप्यपाषाणमयत्ववांश्च पर्वतः इति द्विविधपरामर्शे सति एकस्मादप्यनुमितेरसंभवात् परस्परं प्रतिबन्धात् ( त० कौ० २ पृ० १४ ) इति । अत्र च परस्परानुमितिप्रतिबन्ध एव फलम् तदेव दूषकताबीजम् इति बोध्यम् ( म० प्र० २ पृ० २७ ) । परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः फलम् ( मु० २ पृ० १६० ) । अत्र च द्वयोरपि हेत्वोः परस्परसाध्याभावसाधकत्वात् मिथः सत्प्रतिपक्षत्वम् । रत्नकोषकारास्तु सत्प्रतिपक्षाभ्यां विरोधिपरामर्शद्वयेन प्रत्येकं स्वसाध्यानुमितिः संशयरूपा जन्यते । विरुद्धोभयज्ञानसामग्र्याः संशयजनकत्वात् । संशयद्वारास्य दूषकत्वम् इत्याहुः ( चि० २ पृ० ९६ ) । एतन्मते तद्वत्ताबुद्धौ तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वं नास्तीत्यवधेयम् । [ ख ] अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वेनोपस्थितिकालीनागृहीताप्रामाण्यकतदभावव्याप्यवत्त्वेनोपस्थितिविषयः ( मु० २ पृ० १६० ) । अत्रत्यपदप्रयोजनमुच्यते । नित्यत्वव्याप्यशब्दत्ववत्ताज्ञानशून्यकालीनानित्यत्वव्याप्यकृतकत्वपरामर्शसत्त्वेपि सत्प्रतिपक्षव्यवहाराभावात् कालीनान्तं तदुपस्थितिविशेषणम् । गृहीताप्रामाण्यकनित्यत्वव्याप्यवत्ताज्ञानकालीनानित्यत्वव्याप्यकृतकत्वपरामर्शसत्त्वेपि तद्व्यवहाराभावात् अगृहीताप्रामाण्यक इति प्रथमोपस्थितिविशेषणम् । तादृशकालीनानित्यत्वव्याप्यवत्त्वापरामर्शसत्त्वेपि तत्राप्रामाण्यग्रहकाले तथा व्यवहाराभावात् अगृहीताप्रामाण्यक इति द्वितीयोपस्थितिविशेषणम् ( दि० २ हेत्वा० पृ० १६० ) । [ ग ] यस्य साध्याभावसाधकं हेत्वन्तरम् स सत्प्रतिपक्षः । यथा शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत् शब्दः अनित्यः कार्यत्वात्पटवत् ( त० सं० ) इति । अत्रानुमानद्वये श्रावणत्वं हेतुः सत्प्रतिपक्ष इति विज्ञेयम् । एतल्लक्षणार्थं प्राञ्च आहुः । यत्संबन्धि यत्साध्यं तदभावव्याप्यहेत्वन्तरस्य ज्ञानं पक्षेऽस्ति स सत्प्रतिपक्षः इति । अस्यायमाशयः । प्रकृतसाध्यव्याप्यत्वेन ज्ञायमानो यः प्रकृतहेतुः ततोऽन्यस्मिन्हेतौ साध्याभावव्याप्यत्वज्ञानदशायामेव तस्य सत्प्रतिपक्षता इति । एवमनुमानस्य हेत्वन्तर इति ।

नवीनाः पुनरेवं वर्णयन्ति । यत्संबन्धिसाध्याभावव्याप्यहेत्वन्तरस्य सत्त्वं पक्षे स सत्प्रतिपक्ष इत्यर्थः ( नील० २ पृ० २६ ) इति । सत्प्रतिपक्ष-शब्दस्य व्युत्पत्त्यादिकं प्रदर्शयन्ति साध्याभावसाधकहेत्वन्तरं प्रतिपक्षः तद्वान् सत्प्रतिपक्षः ( त० कौ० ) इति । २ ( हेतुदोषः ) [ क ] पक्षे साध्यधीप्रतिबन्धकपरामर्शः । यथा जलमुष्णं स्पर्शत्वादित्यादौ नेदमुष्णमतेजस्त्वादित्यादिः ( न्या० म० २ पृ० २१ ) ( मा० प० श्लो० ७८ ) । [ ख ] साध्याभावव्याप्यवत्पक्षः साध्यवदन्यत्वव्याप्यवत्पक्षः पक्षनिष्ठः साध्याभावव्याप्यः पक्षनिष्ठः साध्यवद्भेदव्याप्यः ( दीधि० ) ( दि० २ पृ० १६० ) । साध्यवदवृत्तिव्याप्यवत्पक्षः पक्षनिष्ठः साध्यवदवृत्तिव्याप्यः पक्षवृत्त्यभावप्रतियोगित्वव्याप्यवत्साध्यम् साध्यनिष्ठः पक्षवृत्त्यभावप्रतियोगित्वव्याप्यश्च । यथा ह्रदो वह्निमान् धूमात् इत्यादौ वह्न्यभावव्याप्यवद्ध्रदादिः सत्प्रतिपक्षः ( ग० २ ) । एतेषामष्टानां सत्प्रतिपक्षस्वरूपाणामन्यतमत्वादिनानुगमकरणान्न सत्प्रति-पक्षविभागव्याघातः ( दि० २ हेत्वा० पृ० १६० ) इति ।

सत्यम्—सत्त्यशब्दो द्रष्टव्यः ।

सदाचारः—[ क ] मन्वाद्युक्तदेशप्रचलिताचारः । अत्र व्युत्पत्तिविग्रहौ साधवः क्षीणदोषाश्च सच्छब्दः साधुवाचकः । तेषामाचरणं यत्तु सदा-चारः स उच्यते ॥ इति । मनुना चेत्थमुक्तम् सरस्वतीदृषद्वत्योर्देवनद्योर्यद-न्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥ तस्मिन् देशे य आचारः पारंपर्यक्रमागतः । वर्णानां सान्तरालानां स सदाचार उच्यते ॥ ( मनु० अ० २ श्लो० १७–१८ ) इति । यथा वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ ( मनु० २।१२ ) इत्यादौ सदाचारशब्दस्यार्थः । स्वधर्मत्यागे हानिरुक्ता तस्मात्स्वधर्मं न हि संत्यजेच्च न हापयेच्चापि तथात्मवंशम् । यः संत्यजेच्चापि निजं हि धर्मं तस्मै प्रकुप्येत दिवाकरश्च ॥ ( वामनपु० अ० १४ ) इति । [ ख ] शिष्टाचारः । यथा आधुनिकशिष्टानामाचारः । तथा च तत्त्वचिन्तामणौ स्मृतिः यस्मिन्देशे य आचारः पारंपर्यक्रमागतः । श्रुतिस्मृत्यविरोधेन सदाचारः स उच्यते ॥ ( चि० १ मङ्गलवा० पृ० ११२ ) इति ।

**सद्धेतुः**—( हेतुः ) [ क ] पञ्चरूपोपपन्नो हेतुः । पञ्च रूपाणि तु पक्षसत्त्वम् सपक्षसत्त्वम् विपक्षासत्त्वम् अबाधितविषयत्वम् असत्प्रतिपक्षत्वं चेति । अत्रेदं बोध्यम् पञ्चरूपोपपन्न एव हेतुः स्वसाध्यं साधयितुं क्षमते न त्वेकेनापि रूपेण हीनः ( त० भा० प्रमाणनि० पृ० १३ ) इति । [ ख ] व्याप्त्यादिविशिष्टहेतुः ( नील० २ पृ० २४ ) । [ ग ] प्रमितव्याप्तिपक्षधर्मताको हेतुः । स्वसाध्यानुमित्यौपयिकप्रमात्मकपरामर्शवान् इति यावत् ( ग० सत्प्र० ) । यथा पर्वतो वह्निमान् धूमात् इत्यादौ धूमः सद्धेतुः । अत्रायमर्थः । पर्वतत्वसामानाधिकरण्येन वह्नेः साध्यत्वविवक्षायामेव धूमः सद्धेतुर्भवति न तु पर्वतत्वावच्छेदेन वह्नेः साध्यत्वविवक्षायां धूमः सद्धेतुः । तत्र पर्वतत्वावच्छेदेन वह्नेरभावात् इति । अयं भावः । अवच्छेदकावच्छेदेन वह्नेः साध्यत्वे सामानाधिकरण्येन वह्न्यभावस्य प्रसिद्धत्वेन तस्य च बाधरूपत्वात्तत्रत्यो हेतुर्हेत्वाभास एव भवति । अतः सामानाधिकरण्येनैव वह्नेः साध्यत्वं विवक्षणीयम् । तथा च सति तत्र सामानाधिकरण्येन वह्न्यभावस्य सत्त्वेपि तद्विषयकनिश्चयस्य तत्रत्यसाध्यवत्ताबुद्धिं प्रत्यप्रतिबन्धकत्वेन हेत्वाभासलक्षणानाक्रान्तत्वान्न तस्य बाधत्वम् । अवच्छेदकावच्छेदेन वह्न्यभावविषयकनिश्चयस्य प्रतिबन्धकत्वेपि तादृशवह्न्यभावस्य चाप्रसिद्धत्वेन तत्र न कोपि हेत्वाभासदोषः इति सामानाधिकरण्येन वह्निसाध्यकस्थलीयधूमः सद्धेतुर्भवति इति सूक्ष्मदर्शिभिः सुधीभिर्विभावनीयम् ( ग० २ हेत्वा० सामान्यनि० ) । अत्रेदं बोध्यम् । उक्तानि पञ्चरूपाणि धूमवत्त्वादावन्वयव्यतिरेकिण्येव हेतौ विद्यन्ते । तथा हि ( १ ) धूमवत्त्वं पक्षस्य पर्वतस्य धर्मः । तस्य पर्वते विद्यमानत्वात् । ( २ ) एवं सपक्षे सत्त्वम् । सपक्षे महानसे विद्यमानत्वात् । ( ३ ) एवम् विपक्षात् महाह्रदात् व्यावृत्तिः । तत्र धूमो नास्ति इति । ( ४ ) एवम् अबाधितविषयं धूमवत्त्वम् । तथा हि धूमवत्त्वस्य हेतोर्विषयः साध्यो धर्मः । तच्चाग्निमत्त्वम् । तत्केनापि प्रमाणेन न बाधितम् न खण्डितम् इत्यर्थः । ( ५ ) एवम् असन् प्रतिपक्षो यस्य इत्यसत्प्रतिपक्षं धूमवत्त्वम् । तथा हि साध्यविपरीत-

साधकं हेत्वन्तरं प्रतिपक्षः इत्युच्यते । स च धूमवत्त्वे हेतौ नास्त्येव । अनुपलम्भात् (त० भा० प्रमाणनि० पृ० १४) इति ।

सद्यः—(अव्ययम्) १ तत्क्षणम् । यथा सद्यः शौचं विधीयते इत्यादौ । २ क्वचित् एकं दिनम् ।

सन्—(धात्वंशः प्रत्ययः) अयं धातुप्रकृतिकः प्रत्ययः । [क] कर्तुरिच्छा (तर्का० ४ पृ० ११)। स्वसामानाधिकरण्यस्वनिष्ठविषयतानिरूपितविषयित्वोभयसंबन्धेन प्रकृतधात्वर्थप्रधानीभूतव्यापारविशिष्टेच्छा इत्यर्थः । यथा घटं चिकीर्षति इत्यादौ सन्प्रत्ययार्थः । यथा वा पिपठिषति इत्यादौ सन्प्रत्ययार्थः (ल० म०) । अत्रेदं बोध्यम् । सन्नुत्तराख्यातस्याश्रयत्वे लक्षणा । सविषयकार्थकप्रकृतिकाख्यातस्य आश्रयत्वे लक्षणाया घटं जानाति इत्यादौ कृप्तत्वात् (तर्का० ४ पृ० ११) इति । अत्र सन्नर्थेच्छायां धात्वर्थस्य कर्मत्व समानकर्तृकत्व एतदुभयसंबन्धेन विशेषणता बोध्या (ल० म०) । [ख] इच्छा । यथा पाकं चिकीर्षति ओदनं बुभुक्षते इत्यादौ सन्प्रत्ययार्थः । अत्र सन्प्रत्ययार्थेच्छायां द्वितीयान्तेन लभ्यस्य पाकादिविशेष्यताकत्वस्य स्वरूपसंबन्धेन धात्वर्थस्य तु कृत्यादेः स्वसाध्यत्वादिप्रकारिनिष्ठत्वसमानकर्तृकत्वसंबन्धेन अन्वयात् पाकधर्मिका निरुक्तसंबन्धेन कृतिमती या इच्छा तद्वान् इत्यादिरर्थः । अत्र समानकर्तृकत्वस्य निवेशात् अन्यदीयकृतिविषयपाकादाविच्छावति अयं चिकीर्षति पिपक्षति इत्यादिको न प्रयोगः इति चिन्तामणिकृत आहुः । सौन्दडस्तु प्राह । पाकं चिकीर्षतीत्यादौ द्वितीयार्थस्य विषयत्वस्य मूलधात्वर्थ एवान्वयः । तदर्थस्य तु समानकर्तृकत्वविषयत्वाभ्यां सन्नर्थेच्छायाम् । तथा च पाकविषयताककृतिसमानकर्तृकतद्गोचरेच्छावान् इत्यादिरेषार्थः । कारकविभक्तेः क्रियायामेव स्वार्थबोधकत्वात् । अत एव गृहं तिष्ठासति इत्यादिको न प्रयोगः । स्थितेर्गृहकर्मकत्वबाधात् । अन्यथा गृहधर्मिकां स्थितिप्रकारकेच्छां बोधयन्नयमेव प्रमाणं स्यात् । न तु गृहे तिष्ठासति इत्यादिः (श० प्र० श्लो० १०९ टी० पृ० १७०-१७१) इति । [ग] धात्वर्थविशेष्यकेच्छा । यथा पाकं

चिकीर्षति इत्यादौ कृतिविशेष्यकेच्छा चिकीर्षापदार्थः । सा च मत्कृतिर्भवतु इतीच्छैव ( ग० व्यु० का० २ पृ० ५९ ) ॥

**सपक्षः**—१ [ क ] निश्चितसाध्यधर्मा धर्मी ( त० भा० प्रमाणनि० पृ० १५ ) ( चि० २ पक्ष० ) । [ ख ] निश्चितसाध्यवान् । यथा पर्वते धूमेन वह्निसाधने महानसः सपक्षः ( त० सं० ) ( त० भा० पृ० १५ ) । तल्लक्षणं च साध्यप्रकारकनिश्चयविशेष्यत्वम् ( न्या० बो० २ पृ० १७ ) । अथ वा विशेष्यतासंबन्धेन साध्यप्रकारकनिश्चयवत्त्वम् ( वाक्य० २ पृ० १६ ) । [ ग ] वेदान्तिनस्तु साध्यसमानधर्मवान् धर्मी सपक्ष इत्याहुः ( प्र० च० पृ० २३ ) । काव्यज्ञास्तु २ समानपक्षः ३ पक्षसहितश्चेत्याहुः ।

**सपिण्डता**—[ क ] दायाशौचादिग्रहणप्रयोजको ज्ञातिधर्मविशेषः । अत्र व्युत्पत्तिः । समान एकः पिण्डः पिण्डदानक्रिया मूलपुरुषशरीरं वा यस्य स सपिण्डः । तस्य भावः सपिण्डता ( धर्मसि० परि० ३ पूर्वा० पृ० ५० ) इति । तथा हि पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह सापिण्ड्यम् । एवम् पितामहादिभिरपि पितृद्वारेण तच्छरीरान्वयात्सापिण्ड्यम् । एवम् मातृशरीरावयवान्वयेन मात्रा । तथा मातामहादिभिरपि मातृद्वारेण । तथा मातृष्वसृमातुलादिभिरपि । एकशरीरावयवान्वयात् । तथा पितृव्यपितृष्वस्रादिभिरपि । तथा पत्या सह पत्न्या एकशरीरारम्भकतया । एवम् भ्रातृभार्याणामपि परस्परमेकशरीरारब्धैः सहैकशरीरारम्भकत्वेन ( मिताक्ष० अ० १ श्लो० ५२ ) इति । [ ख ] साक्षात्परंपरया वैकदेहारम्यदेहत्व श्राद्धदेयैकपिण्डान्वयप्रयोज्यत्व एतदन्यतरवत्त्वम् । यथा पुत्रादीनां मातुलादीनां च सपिण्डता । तथा च सापिण्ड्यं द्विविधम् । तत्रैकम् एकशरीरावयवान्वयेन सापिण्ड्यम् । इदं च पुत्रादिमातृसंतानभ्रातृपितृव्यादिपुत्रान्तेषु संभवति । निर्वाप्यपिण्डान्वयेन सापिण्ड्यं च द्वितीयम् । निर्वाप्यपिण्डान्वयः श्राद्धीयान्नपिण्डसंबन्धः इत्यर्थः । इदं तु पुत्रादिभ्रातृभार्यापर्यन्तेष्वेव संभवति । न तु मातृसंतानभ्रातृपितृव्यादिपुत्रादिषु ( मिता० १।५२ ) । तत्रोक्तम्

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्त्वेषां सापिण्ड्यं साप्तपौरुषम् ॥ (मत्स्यपु० ) इति । तत्र शरीरावयवान्वयसापिण्ड्यम् आशौच विवाह दायग्रहण एतेषु त्रिष्वप्युपयुज्यते इति हेमाद्रिमाधवविज्ञानेश्वरस्मृतिचन्द्रिकाकारमित्रमिश्रकमलाकरादीनां मतम् । अत्रोक्तम् वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः । पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते ॥ इति धर्मसिन्धौ धृतं वाक्यम् । पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ( याज्ञ० १।५३ ) इति । तथा च पित्रादयः षट् सपिण्डाः पुत्रादयश्च षट् आत्मा च सप्तमः ( मिता० १।५३ ) इति । कामधेनुहारलताकल्पतरुपारिजातकारादीनां तन्मतानुसारिजीमूतवाहनस्य च मतं तु सपिण्डता हि विषयभेदेन त्रिविधा आशौचोपयोगिनी विवाहोपयोगिनी दायग्रहणोपयोगिनी च । तथा च शरीरान्वयसापिण्ड्यमाशौचे विवाहे चोपयुज्यते । निर्वाप्यपिण्डान्वयसापिण्ड्यं तु दायग्रहणे उपयुज्यते इति । यथोदाहृतं ( शु० त० ) रघुनन्दनेन लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्त्वेषां सापिण्ड्यं साप्तपौरुषम् ॥ ( मत्स्यपु० ) इति । हारलतायां कूर्मपुराणे च सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने ॥ पिता पितामहश्चैव तथैव प्रपितामहः । लेपभाजश्चतुर्थाद्याः सापिण्ड्यं साप्तपौरुषम् ॥ इति । भ्रात्रादीनामपि सापिण्ड्यमुक्तं बौधायनेन प्रपितामहः पितामहः पिता स्वयम् सोदर्यभ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्रो वा एतानविभक्तदायादान् सपिण्डानाचक्षते । विभक्तदायादान् सकुल्यानाचक्षते असत्स्वङ्गजेषु तद्गामी ह्यर्थो भवति इति । किंच स्त्रीणामपि भर्तृसापिण्ड्येन सापिण्ड्यम् । अनूढायाः कन्यायास्तु त्रिपौरुषं सापिण्ड्यम् । तथा च गोत्रैक्ये सति पिण्डलेपयोर्दातृत्वभोक्तृत्वान्यतरवत्त्वमाशौचसापिण्ड्यम् । साक्षात्परंपरया वा सप्तमपर्यन्तदेहसंबन्धवत्त्वं विवाहसापिण्ड्यम् । त्रिपुरुषपर्यन्तं देयपिण्डदातृत्वभोक्तृत्वान्यतरवत्त्वं दायग्रहणे सापिण्ड्यम् इति वङ्गदेशीयानां जीमूतवाहनादीनां मतं बोध्यम् ( वाच० ) । अधिकं तु तत्तद्धर्मशास्त्रग्रन्थेष्वन्वेषणीयम् इत्यलं विस्तरेण ।

**सप्तदशस्तोमः**—एकस्मिन्सूक्ते विद्यमानानां तिसृणामृचां ब्राह्मणोक्तविधानेन सप्तदशधाभ्यासः ( जै० न्या० अ० ७ पा० ३ अधि० ३ ) ।

**सप्तभङ्गिनयः**—स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च स्यादवक्तव्यः स्यादस्ति चावक्तव्यः स्यान्नास्ति चावक्तव्यः स्यादस्ति च नास्ति चावक्तव्यः इति न्यायः ( सर्व० सं० पृ० ८२ आर्ह० ) ।

**सप्तमी**—( विभक्तिः ) अधिकरणतायामाधेयत्वे वा शक्ता सुप् ( श० प्र० श्लो० ६६ टी० पृ० ७६ ) । यथा गेहे पचति इत्यादौ गेहपदोत्तरवर्तिनी सप्तमी । अत्र आधेयत्वं सप्तम्यर्थः । तस्य च क्रियायामन्वयः । भुवि गच्छति इत्यादौ तु कर्तृघटितपरंपरासंबन्धावच्छिन्नाधारत्वमेव सप्तम्यर्थः ( ग० व्यु० का० ७ पृ० ११६ ) । गेहे पचतीत्यत्र सप्तमीत्वं च पचधात्वर्थतावच्छेदकरूपावच्छिन्नधर्मिकस्वार्थाधेयत्वबोधानुकूलसुप्सजातीयत्वम् । चैत्रधर्मिकस्वार्थाधिकरणत्वान्वयबोधकसुप्समानानुपूर्वीकत्वं वा इत्यपि वदन्ति । ग्राममध्यास्ते इत्यादौ अधिकरणत्वं बोधयन्त्यपि द्वितीयादिः न तत्र शक्ता । ग्रामाय गच्छति इत्यादौ कर्मत्वादिष्वेव चतुर्थ्यादिः शक्ता इति द्वितीयाचतुर्थ्यादीनां निरासः ( श० प्र० श्लो० ६६ टी० पृ० ७६ ) । अथ सप्तम्यर्थ उच्यते । १ न्यायमते आधारत्वम् आधेयत्वं वा सप्तम्यर्थः । तच्चाखण्डोपाधिः इति प्राञ्च आहुः ( वै० सा० द० पृ० ८६ ) । नव्यास्तु स्वरूपसंबन्धविशेष एव तत् इत्याहुः । अत्र विप्रतिपत्तिः सप्तम्यर्थ आधारत्वं वा आधेयत्वं वा इति । तत्र अधिकरणत्वमात्रं सप्तम्यर्थः । तथा च भूतलनिष्ठाधिकरणतानिरूपको घटः इत्याकारको बोधः । तत्र निष्ठत्वम् निरूपकत्वं च संसर्गमर्यादया भासते इति प्राञ्चो नैयायिका आहुः । नव्यनैयायिकास्तु प्राग्भिरुक्तं युक्तं न । तथाङ्गीकारे तु निरूपकत्वसंबन्धस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वात् भूतले न घटः इत्यादौ नञर्थान्वयासंभवः । अतः तत्राधेयत्वमात्रं सप्तम्यर्थः । तथा च भूतलनिरूपिताधेयत्वाश्रयो घटः इत्यन्वयबोधः स्वीकार्यः । तत्र निरूपितत्वम् आश्रयत्वं च संसर्गः । इत्थं च भूतले न घटः इत्यादौ आश्रयता-

संबन्धावच्छिन्नाधेयताप्रतियोगिकः अभावः नञा बोध्यते इति सर्वं सुस्थम् इति प्राहुः (का० व्या० पृ० ११)। आधारत्वं च कर्तृकर्मद्वारा बोध्यम्। तत्र कारकत्वनिर्वाहार्थं परंपरासंबन्धस्यापि क्रियान्वयित्वरूपकारकत्वघटकतावश्यकी। यथा भूतले घटोस्ति इत्यादौ भूतलपदोत्तरसप्तम्यर्थः। अत्र भूतलवृत्तिघटो वर्तमानसत्ताश्रयः इति बोधः। नञ्समभिव्याहारे तु तादृशसप्तम्यर्थाभावो घटांशे भासते इति नैयायिकानां मतम् (वै० सा० द० सुबर्थ० पृ० ८७)। वैयाकरणमते तु आश्रयः (अधिकरणम्) सप्तम्यर्थः। कर्तृकर्मद्वारा धात्वर्थाश्रयः इत्यर्थः। यथा भूतले घटोस्ति गेहे तण्डुलं पचति इत्यादौ भूतलादिपदोत्तरसप्तम्यर्थः। अत्र सप्तम्यधिकरणे च (पाणि० २।३।३६) इति सूत्रम्। तदर्थश्च शाब्दिकमते कर्तृकर्मान्यतरद्वारा क्रियाश्रयोधिकरणम् तत्र सप्तमी इति। गेहे चैत्र ओदनं पचति स्थाल्यामोदनं पचति इत्यादौ गेहस्य कर्तृद्वारा स्थाल्याश्च कर्मद्वारा क्रियाश्रयत्वादधिकरणत्वम्। तथा च क्रियारहितं वाक्यमप्रमाणम् इति परंपरया क्रियाश्रयात्मकाधिकरणस्यैव सप्तम्यर्थत्वम्। इत्थं च यत्र न क्रियाश्रवणम् गेहे घट इत्यादौ तत्र कारकत्वनिर्वाहाय क्रियाध्याहार आवश्यकः। एवं च गेहे घटः इत्यादौ क्रियापदाध्याहारेणैवाधिकरणत्वबोधः इति। तार्किकमते तु यत्राधिकरणत्वमाधेयत्वादि वा सप्तम्या बोध्यते तद्वाचकपदात्सप्तमी इति सूत्रार्थः। तथा च अधिकरणत्वमात्रम् आधेयत्वमात्रं वा सप्तम्यर्थः। स च यत्र क्रियायामन्वेति तत्र कारकत्वव्यवहारः। भूतले घटः इत्यक्रियवाक्यादपि शाब्दबोधस्यानुभवसिद्धत्वात्। तद्वदेव गेहे घटः इत्यादावपि क्रियापदं विनापि गेहाधेयत्ववान् घटः इति बोधो नानुपपन्न इति अत्रत्या सप्तमी न कारकविभक्तिः अपि तु कारकार्थान्यैव (का० व्या० पृ० ११) इति। अत्र प्रमाणम् सप्तम्यधिकरणे च (पाणि० २।३।३६) इत्यत्र चकारेणाकारकाधारवाचिनोपि सप्तमी विधीयत इति। अत एव साध्यवन्निन्ने यः साध्याभावः (दीधि० व्याप्तिनि०) इति सप्तमीतत्पुरुषेण व्याख्यानं संगच्छते (ग० व्यु० का ७ पृ० ११६)। अधिकरणं च त्रिविधम् औपश्लेषिकम् वैषयिकम् अभिव्यापकं चेति। तत्राद्यस्योदाहरणं

कटे शेते गुरौ वसति इत्यादि । द्वितीयस्योदाहरणं मोक्षे इच्छास्तीति । तृतीयस्योदाहरणं तु तिलेषु तैलम् इति । अत्राद्यं सामीप्यसंबन्धनिबन्धनम् । आधेयव्याप्यतावच्छेदकयत्किंचिदवयवकम् इति यावत् । द्वितीयं विषयतासंबन्धनिरूपकम् । तृतीयमाधेयव्याप्यतावच्छेदकयावदवयवकम् । कटे शेते इत्यत्र परम्परया कटाभिन्नाश्रयकः शयनानुकूलो व्यापारः इति बोधः । एवमन्यत्राप्यूह्यम् ( वै० सा० द० सुबर्थ० पृ० ८६ ) । २ क्वचित् निरूपकत्वम् निरूप्यत्वं वा सप्तम्यर्थः । यथा भूतले वर्तते घटः इत्यादौ भूतलपदोत्तरवर्तिसप्तम्या अर्थः । यथा वा इति हेतुस्तदुद्भवे ( काव्यप्र० १ ) इत्यादौ हेतुतायाम् उद्भवपदार्थोत्पत्तिनिरूपितत्वं सप्तम्या बोध्यते । ३ क्वचित् अवच्छेद्यताविशेषः । यथा वीणायां शब्दः कर्णे शब्दः वृक्षाग्रे कपिसंयोगः इत्यादौ सप्तम्यर्थः ( ग० व्यु० का० ७ पृ० ११६ ) । ४ निमित्तत्वम् । यथा चर्मणि द्वीपिनं हन्ति मशकनिवृत्तौ धूमं करोति इत्यादौ सप्तम्यर्थः ( का० व्या० पृ० ११ ) । अत्र चर्मोद्देश्यकद्वीपिकर्मकहननकर्ता इति बोधः । अधिकं तु निमित्तत्वशब्दव्याख्याने दृश्यम् । ५ उत्पत्तिः । यथा शरदि पुष्यन्ति सप्तच्छदाः इत्यादौ सप्तम्यर्थः । अत्र शरदुत्पत्तिकपुष्पाश्रयाः सप्तच्छदाः इति वाक्यार्थः ( का० व्या० पृ० १२ ) । ६ समानाधिकरणत्वम् । तच्च द्विविधम् क्वचित् कालिकम् क्वचित्तु दैशिकम् । तत्राद्यं समानकालीनत्वादिकम् । यथा गोषु दुह्यमानासु गतः इत्यादौ ( का० व्या० पृ० १२ ) । यथा वा घने वर्षति चौर आगतः इत्यादौ सप्तम्यर्थः ( म० प्र० पृ० ६–७ ) । अत्र वृष्टिसमानकालीनागमनाश्रयश्चौरः इति बोधः ( म० प्र० पृ० ७ ) । अत्रार्थे यस्य च भावेन भावलक्षणम् ( पाणि० २।३।३७ ) इत्यनेन सूत्रेण सप्तम्यनुशिष्यते । सूत्रार्थस्तु यस्य धर्मेण धर्मान्तरं निरुक्तस्वसामानाधिकरण्येन प्रतिपाद्यते तत्र सप्तमी इति ( का० व्या० पृ० १२ ) । यद्विशेषणकृदन्तार्थविशेषणतापन्नक्रियया क्रियान्तरस्य लक्षणं व्यावर्तनं तद्वाचकपदात्सप्तमी इति वा । अत्रेदमधिकं विज्ञेयम् । वर्तमानार्थककृत्समभिव्याहारस्थले गोषु दुह्यमानासु गत इत्यादौ समानकालीनत्वम् । गोषु दोग्धव्यासु गत इत्यादिभविष्यदर्थककृत्स्थले

प्राक्कालीनत्वम् । गोषु दुग्धासु गत इत्यादावतीतार्थकक्तस्थले उत्तरकालीनत्वं संबन्धतया भासत इति । एवम् पाथसि पीते तृषा शाम्यति इत्यादावतीतार्थकक्तसमभिव्याहारात्कार्यकारणभावोपि संबन्धतया भासत इत्यादिकमूहनीयम् । अत्र सप्तम्यर्थे समानकालीनत्वे गोविशेषणकर्मताविशेषणस्य गोदोहनस्यान्वयः । इत्थं च तादृशगोदोहनसमानकालीनातीतगमनानुकूलकृतिमान् इत्यर्थः ( का० व्या० पृ० १२ ) । अथ वा समभिव्याहृतदोहनादिक्रियैव सप्तम्यर्थः । तस्याश्च समानकालीनत्वादिकं क्रियान्तरे संबन्धः इति ( ग० व्यु० का० ७ पृ० ११७ ) । द्वितीयं तु दैशिकसामानाधिकरण्यम् । यथा इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वात् ( ग० अवयवे ) इत्यादौ सतिसप्तम्यर्थः । अत्र सति इत्यनन्तरं सतः इत्यध्याहार्यम् । अन्यथा लक्षणीयक्रियाया अभावेनोक्तसूत्राविषयतया सप्तम्यनुपपत्तेः । तथा च तत्र अस्धातोरर्थे आधारता । गुणान्यत्वाद्याधारतायाश्च सत्ताधारतायां तद्वन्निष्ठत्वं संबन्धतया भासत इति चिन्तामणिकारोक्तसामानाधिकरण्यलाभनिर्वाहः ( ग० व्यु० का० ७ पृ० ११७ ) । तथा चात्र गुणकर्मान्यत्वसमानाधिकरणसत्त्वात् इति शाब्दबोधः । एवं द्रव्यकर्मान्यत्वे सति सामान्यवान् गुणः इत्यादावपि बोध्यम् ( म० प्र० पृ० ६–७ ) ।

**सम्**—( अव्ययम् ) १ सम्यगर्थः । २ प्रकर्षः । ३ संगतिः । ४ शोभनम् ( शब्दच० ) । ५ समुच्चयः ( हेमच० ) ।

**समनियतत्वम्**—व्याप्यत्वे सति व्यापकत्वम् ( ग० अव० ) । यथा लक्ष्यतावच्छेदकसमनियतो धर्मः असाधारणधर्मः इत्यादौ गोर्लक्षणस्य सास्नादिमत्त्वस्य लक्ष्यतावच्छेदकीभूतगोत्वसमनियतत्वम् । यथा वा अभिधेयत्वस्य पदार्थत्वसमनियतत्वम् ( त० दी० १ ) ।

**समभिव्याहारः**—१ [ क ] सहोच्चारणम् ( म० प्र० ४ पृ० ५६ ) । यथा यत्पदं यत्पदेन सह यादृशानुभवजनकं तत्पदस्य तत्पदसमभिव्याहारस्तादृशान्वयबोध आकाङ्क्षा इत्यादौ समभिव्याहारशब्दस्यार्थः ( न्या० म० ४ पृ० २१ ) । [ ख ] पदानां पूर्वापरीभावः । यथा

कटे शेते गुरौ वसति इत्यादि । द्वितीयस्योदाहरणं मोक्षे इच्छास्तीति । तृतीयस्योदाहरणं तु तिलेषु तैलम् इति । अत्राद्यं सामीप्यसंबन्धनिबन्धनम् । आधेयव्याप्यतावच्छेदकयत्किंचिदवयवकम् इति यावत् । द्वितीयं विषयतासंबन्धनिरूपकम् । तृतीयमाधेयव्याप्यतावच्छेदकयावदवयवकम् । कटे शेते इत्यत्र परम्परया कटाभिन्नाश्रयकः शयनानुकूलो व्यापारः इति बोधः । एवमन्यत्राप्यूह्यम् ( वै० सा० द० सुबर्थ० पृ० ८६ ) । २ क्वचित् निरूपकत्वम् निरूप्यत्वं वा सप्तम्यर्थः । यथा भूतले वर्तते घटः इत्यादौ भूतलपदोत्तरवर्तिसप्तम्या अर्थः । यथा वा इति हेतुस्तदुद्भवे ( काव्यप्र० १ ) इत्यादौ हेतुतायाम् उद्भवपदार्थोत्पत्तिनिरूपितत्वं सप्तम्या बोध्यते । ३ क्वचित् अवच्छेद्यताविशेषः । यथा वीणायां शब्दः कर्णे शब्दः वृक्षाग्रे कपिसंयोगः इत्यादौ सप्तम्यर्थः ( ग० व्यु० का० ७ पृ० ११६ ) । ४ निमित्तत्वम् । यथा चर्मणि द्वीपिनं हन्ति मशकनिवृत्तौ धूमं करोति इत्यादौ सप्तम्यर्थः ( का० व्या० पृ० ११ ) । अत्र चर्मोद्देश्यकद्वीपिकर्मकहननकर्ता इति बोधः । अधिकं तु निमित्तत्वशब्दव्याख्याने दृश्यम् । ५ उत्पत्तिः । यथा शरदि पुष्यन्ति सप्तच्छदाः इत्यादौ सप्तम्यर्थः । अत्र शरदुत्पत्तिकपुष्पाश्रयाः सप्तच्छदाः इति वाक्यार्थः ( का० व्या० पृ० १२ ) । ६ समानाधिकरणत्वम् । तच्च द्विविधम् क्वचित् कालिकम् क्वचित्तु दैशिकम् । तत्राद्यं समानकालीनत्वादिकम् । यथा गोषु दुह्यमानासु गतः इत्यादौ ( का० व्या० पृ० १२ ) । यथा वा घने वर्षति चौर आगतः इत्यादौ सप्तम्यर्थः ( म० प्र० पृ० ६—७ ) । अत्र वृष्टिसमानकालीनागमनाश्रयश्चौरः इति बोधः ( म० प्र० पृ० ७ ) । अत्रार्थे यस्य च भावेन भावलक्षणम् ( पाणि० २।३।३७ ) इत्यनेन सूत्रेण सप्तम्यनुशिष्यते । सूत्रार्थस्तु यस्य धर्मेण धर्मान्तरं निरुक्तस्वसामानाधिकरण्येन प्रतिपाद्यते तत्र सप्तमी इति ( का० व्या० पृ० १२ ) । यद्विशेषणकृदन्तार्थविशेषणतापन्नक्रियया क्रियान्तरस्य लक्षणं व्यावर्तनं तद्वाचकपदात्सप्तमी इति वा । अत्रेदमधिकं विज्ञेयम् । वर्तमानार्थककृत्समभिव्याहारस्थले गोषु दुह्यमानासु गत इत्यादौ समानकालीनत्वम् । गोषु दोग्धव्यासु गत इत्यादिभविष्यदर्थककृत्स्थले

प्राक्कालीनत्वम् । गोषु दुग्धासु गत इत्यादावतीतार्थकक्तस्थले उत्तर-कालीनत्वं संबन्धतया भासत इति । एवम् पाथसि पीते तृषा शाम्यति इत्यादावतीतार्थकक्तसमभिव्याहारात्कार्यकारणभावोपि संबन्धतया भासत इत्यादिकमूहनीयम् । अत्र सप्तम्यर्थे समानकालीनत्वे गोविशेषणकर्मता-विशेषणस्य गोदोहनस्यान्वयः । इत्थं च तादृशगोदोहनसमानकालीना-तीतगमनानुकूलकृतिमान् इत्यर्थः ( का० व्या० पृ० १२ ) । अथ वा समभिव्याहृतदोहनादिक्रियैव सप्तम्यर्थः । तस्याश्च समानकालीनत्वादिकं क्रियान्तरे संबन्धः इति ( ग० व्यु० का० ७ पृ० ११७ ) । द्वितीयं तु दैशिकसामानाधिकरण्यम् । यथा इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वात् ( ग० अवयवे ) इत्यादौ सतिसप्तम्यर्थः । अत्र सति इत्यनन्तरं सतः इत्यध्याहार्यम् । अन्यथा लक्षणीयक्रियाया अभावेनोक्तसूत्राविषयतया सप्तम्यनुपपत्तेः । तथा च तत्र अस्धातोरर्थ आधारता । गुणा-न्यत्वाद्याधारतायाश्च सत्ताधारतायां तद्व्निष्ठत्वं संबन्धतया भासत इति चिन्तामणिकारोक्तसामानाधिकरण्यलाभनिर्वाहः ( ग० व्यु० का० ७ पृ० ११७ ) । तथा चात्र गुणकर्मान्यत्वसमानाधिकरणसत्त्वात् इति शाब्दबोधः । एवं द्रव्यकर्मान्यत्वे सति सामान्यवान् गुणः इत्यादावपि बोध्यम् ( म० प्र० पृ० ६–७ ) ।

**सम्**—( अव्ययम् ) १ सम्यगर्थः । २ प्रकर्षः । ३ संगतिः । ४ शोभनम् ( शब्दच० ) । ५ समुच्चयः ( हेमच० ) ।

**समनियतत्वम्**— व्याप्यत्वे सति व्यापकत्वम् ( ग० अव० ) । यथा लक्ष्यतावच्छेदकसमनियतो धर्मः असाधारणधर्मः इत्यादौ गोर्लक्षणस्य सास्नादिमत्त्वस्य लक्ष्यतावच्छेदकीभूतगोत्वसमनियतत्वम् । यथा वा अभिधेयत्वस्य पदार्थत्वसमनियतत्वम् ( त० दी० १ ) ।

**समभिव्याहारः**—१ [ क ] सहोच्चारणम् ( म० प्र० ४ पृ० ५६ ) । यथा यत्पदं यत्पदेन सह यादृशानुभवजनकं तत्पदस्य तत्पदसमभि-व्याहारस्तादृशान्वयबोध आकाङ्क्षा इत्यादौ समभिव्याहारशब्दस्यार्थः ( न्या० म० ४ पृ० २१ ) । [ ख ] पदानां पूर्वापरीभावः । यथा

घटमानय इत्यादौ क्रियापदस्य द्वितीयान्तघटपदसमभिव्याहारः । [ ग ] साक्षात्परंपरया वा तत्पदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वमिति केचिदाहुः । २ शेषशेषिवाचकपदयोः सहोच्चारणम् इति मीमांसका आहुः । ३ साहित्यम् इति काव्यज्ञा आहुः ।

**समभिव्याहृतत्वम्**—१ एकवाक्यतापन्नत्वम् । यथा पदानां समभिव्याहृतत्वमाकाङ्क्षा इत्यादौ समभिव्याहृतत्वशब्दस्यार्थः । २ साहित्यम् । ३ सहोच्चरितत्वम् । ४ अव्यवहितत्वं च इत्यन्ये आहुः ।

**समभिहारः**—१ पौनःपुन्यम् । यथा क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ( माघ० २।४३ ) इत्यादौ समभिहारशब्दस्यार्थः । २ सातत्यम् इति शाब्दिका आहुः । ३ भृशम् इति काव्यज्ञा आहुः ।

**समम्**—( अव्ययम् ) १ साहित्यम् । यथा समं रामेण लक्ष्मणः इत्यादौ । २ एकदा ( युगपत् ) इत्यर्थः । यथा सममेव समाक्रान्तं द्वयं द्विरदगामिना ( रघु० ४।४ ) इत्यादौ ।

**समयः**—१ [ क ] अस्य शब्दस्येदमर्थजातमभिधेयम् इत्यभिधानाभिधेयनियमनियोगः ( शक्तिः ) । तस्मिन्नुपयुक्ते शब्दादर्थसंप्रत्ययो भवति ( वात्स्या० २।१।५५ ) । [ ख ] ईश्वरसंकेतः । अस्माच्छब्दादयमर्थो बोद्धव्यः इत्याकारः । यथा सामयिकः शब्दादर्थप्रत्ययः ( वै० ७।२।२० ) इत्यादौ समयशब्दस्यार्थः । यः शब्दो यस्मिन्नर्थे भगवता संकेतितः स तमर्थं प्रतिपादयति । तथा च शब्दार्थयोरीश्वरेच्छैव संबन्धः । स एव समयः । तदधीनः शब्दादर्थप्रत्ययः ( वै० उ० ७।२।२० ) । मम्मटभट्टस्तु नाभिधा समयाभावात् ( काव्यप्र० २।२२ ) इत्यादिग्रन्थेनाभिधासमययोर्भेदमुररीचकार । अत्र नैयायिकैः साध्यसमो दोष उद्भाव्यते । मीमांसकमते तु नायं दोषः । अभिधासमययोस्तैर्भेदाङ्गीकारात् इति विज्ञेयम् । समयश्च जातिमात्रे । व्यक्तेराक्षेपत एवोपस्थितेः । इतितौतातिका आहुः । जातौ व्यक्तौ चोभयत्र शक्तिः । किं तु जात्यंशे ज्ञाता व्यक्त्यंशे स्वरूपसती प्रयोजिका इति प्राभाकरा आहुः । समयः शक्तिरेव । व्यक्त्याकृतिजातयः पदार्थाः इति वृद्धा आहुः ( वै० उ० ७।२।२०

पृ० ३४१ ) ( वै० वि० ) ( भवा० ) । अन्यत्सर्वं शक्ति संकेत इत्येतच्छब्दव्याख्याने द्रष्टव्यम् । २ नियमबन्धः । ३ शास्त्रम् । ४ कालः । ५ सिद्धान्तः । ६ शपथः । ७ आचारः । ८ अङ्गीकारः । ९ क्रियाकारकः । १० निर्देशः । ११ भाषा ( मेदि० ) । १२ संपत् । १३ कालविज्ञानम् ( शब्दच० ) ।

**समर्थः**—१ यत्किंचिदर्थकारी । यत्किंचित्कार्यप्रयोजकः इति यावत् । २ शाब्दिकास्तु संगतार्थः । स च अन्वयान्वयिभावापन्नोर्थः इत्याहुः । ३ शक्तः । ४ हितश्च इति काव्यज्ञा आहुः ( अमरः ३।३।८६ ) । समर्थत्वं च सामर्थ्यम् । तच्च सामर्थ्यशब्दे दृश्यम् ।

**समर्थनम्** / **समर्थना**—१ ( लोडर्थः ) पराशक्यधर्मिकस्वशक्यत्वाध्यवसायः । यथा पर्वतमप्युत्पाटयानि समुद्रमपि शोषयाणि इत्यादौ लोडर्थः । तथा च स्वेतराशक्यं यत् पर्वतोत्पाटनम् तद्धर्मिकस्वशक्यत्वाध्यवसायवान् इत्येवं तत्रान्वयबोधः । अथ वा पर्वतमप्युत्पाटयानि समुद्रमपि शोषयाणि इत्यादौ निपातस्यैवापेर्धात्वर्थान्वितं पराशक्यत्वमर्थः । तिङस्तु स्वशक्यताध्यवसायमात्रम् । अध्यवसायोवधारणम् ( श० प्र० श्लो० १०० टी० पृ० १४५-१४६ ) । २ इदमित्थमेव इति निश्चयहेतूपन्यासेन निश्चायकव्यापारविशेषः इति केचिदाहुः । ३ युक्तायुक्तत्वेन परीक्षणम् ( अमरः २ क्षत्रियव० श्लो० २५ टी० ) ।

**समवहितत्वम्**—१ एककालीनत्वम् ( मू० म० १ ) । यथा घटसमवहितः पटः इत्यादौ समवहितत्वशब्दार्थः । २ सहवृत्तित्वम् । यथा मण्यादिसमवहितेन वह्निना दाहो न जन्यते ( त० दी० ) इत्यादौ समवहितत्वशब्दस्यार्थः । ३ सम्यगवधानयुक्तत्वम् इति साहित्यशास्त्रज्ञा आहुः ।

**समवायः**—१ ( पदार्थः ) इहेदमिति यतः कार्यकारणयोः स समवायः ( वै० ७।२।२६ ) । तदर्थश्च कार्यकारणयोरवयवावयविनोर्यतः संबन्धात् इहेदम् इति प्रत्ययः स समवायः ( वै० वि० ७।२।२६ ) । अयुतसिद्धानामाधार्याधारभूतानां यः संबन्धः इहप्रत्ययहेतुः स समवायः

( प्रशस्त० १ पृ० २५ ) इति । स च अयुतसिद्धयोः संबन्धः ( त० भा० १ ) । स च यथा अवयवावयविनोः गुणगुणिनोः क्रियाक्रियावतोः जातिव्यक्त्योः विशेषनित्यद्रव्ययोश्च संबन्धः ( त० सं० ) ( प० मा० पृ० ३८ ) । यथा घटकपालयोः संबन्धः समवायः । एवमन्यत्राप्यूह्यम् । तदुक्तम् घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः । तेषु जातेश्च संबन्धः समवायः प्रकीर्तितः ॥ ( भा० प० श्लो० ११ ) इति । अत्र भाष्यम् । अयुतसिद्धानामाधार्याधारभूतानां यः संबन्धः इहप्रत्ययहेतुः स समवायः । द्रव्यगुणकर्मसामान्यविशेषाणां कार्यकारणभूतानाम् अकार्यकारणभूतानां वा अयुतसिद्धानामाधार्याधारभावेनावस्थितानाम् इहेदम् इति बुद्धिर्यतो भवति यतश्चासर्वगतानामधिगतान्यत्वानामविष्वग्भावेनावस्थितानाम् स समवायाख्यः संबन्धः । कथम् । यथा इह कुण्डे दधि इति प्रत्ययः संबन्धे सति दृष्टः । तथा इह तन्तुषु पटः इह वीरणेषु कटः इह द्रव्ये च द्रव्यगुणकर्माणि इह द्रव्यगुणकर्मसु सत्ता इह द्रव्ये द्रव्यत्वम् इह गुणे गुणत्वम् इह कर्मणि कर्मत्वम् इह नित्यद्रव्येष्वन्त्या विशेषाः इति इहप्रत्ययदर्शनात् अस्त्येषां संबन्धः इति विज्ञायते । न चासौ संयोगः । संबन्धिनामयुतसिद्धत्वात् । अन्यतरकर्मादिनिमित्तस्याभावात् । विभागान्तत्वादर्शनात् । अधिकरणाधिकर्तव्ययोरेव च भावादिति । भाववल्लक्षणभेदात् भाववत्सर्वत्रैकः समवायः । स च द्रव्यादिभ्यः पदार्थान्तरम् । स च प्रमाणतः कारणानुपलब्धेर्नित्यः । तस्मात्स्वात्मवृत्तिः । अत एव चातीन्द्रियः । सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात् । स्वात्मगतसंवेदनाभावाच्च । तस्मात् इहबुद्ध्यनुमेयः समवायः ( प्रश० पृ० ६७ ) । समवायसत्त्वे प्रमाणं तु अनुमानम् । तच्च जात्यादिगोचरो विशिष्टव्यवहारः संबन्धनियतः । भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात् । सघटं भूतलम् इति व्यवहारवत् ( न्या० ली० पृ० ५४ ) इति । घटे घटत्वं रूपं च समवेतम् तन्तुषु पटः समवेतः इह कर्म समवेतम् इत्यनुगतसमवायाकारप्रतीत्या तत्सिद्धिः ( न्या० म० १ पृ० ९ ) । वस्तुतस्तु स्वाश्रयसमवेतत्वसंबन्धेनावयवनीलादेरवयविनीलादौ हेतुत्वात्कारणतावच्छेदकसंबन्धघटकतया सम-

वायसिद्धिः । अन्यथा स्वाश्रयवृत्तित्वसंबन्धेन हेतुत्वे नीलकपालसंयुक्तशुक्लकपालादावपि नीलोत्पत्त्यापत्तेः ( म० प्र० १ पृ० १२ ) । अत्र समवायसंबन्धेन पटत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन तन्तुत्वेन हेतुत्वात्कार्यतावच्छेदकसंबन्धविधया समवायसिद्धिः ( दि० १ पृ० ३९ ) । युतसिद्धयोः संयोग इवायुतसिद्धयोः समवाय आवश्यकः इत्यपि बोध्यम् ( त० कौ० ) । समवायत्वं च नित्यसंबन्धत्वम् ( त० सं० ) ( मु० ) । अत्र संयोगादिवारणाय नित्यत्वम् । गगनादिवारणाय संबन्धः इति । संबन्धत्वं चात्र स्वरूपत्वानवच्छिन्नसांसर्गिकविषयताश्रयत्वम् । तेन गगनादीनां स्वरूपत्वेन संबन्धत्वेपि न क्षतिः । संयोगसमवायान्यतरत्वं वा संबन्धत्वम् ( प० मा० पृ० ३८ ) । अथ वा समवायत्वं संबन्धप्रतियोग्यनुयोगिभिन्नत्वे सति संबन्धत्वम् । तेन प्रतियोग्यनुयोगिस्वात्मकस्वरूपसंबन्धे नातिव्याप्तिः ( राम० १ पृ० ३९ ) ( ता० र० श्लो० ५४ ) । इह गवि गोत्वम् इत्यादिप्रत्ययविषयसंबन्धत्वम् समवायत्वम् ( प० मा० पृ० ३८ ) । समवायस्तु समवायरहितः संबन्धः ( सर्व० सं० पृ० २१७ औ० ) । सर्वत्र समवायस्त्वेक एव नित्यश्च इति न्यायवैशेषिकसिद्धान्तः । अत्र एकत्वं च स्वाश्रयान्योन्याभावासमानाधिकरणपदार्थविभाजकोपाधिमत्त्वम् ( प्र० च० ) । अत्रैकत्वसाधने प्रमाणभूतं सूत्रं च तत्त्वं भावेन ( वै० ७।२।२८ ) इति । नित्यत्वे इत्थमनुमानम् । स चायं समवायः नित्यः । अकारणकत्वात् । भावानां हि समवायिकारणादुत्पत्तिनियमः । तदनुरुद्धे च निमित्तासमवायिनी इति । तथा च समवायस्य समवायिकारणकल्पने अनवस्थादिदोषप्रसङ्गः इति समवायस्य नित्यत्वम् ( वै० उ० ७।२।२६ पृ० ३५० ) । अत्रेदं बोध्यम् । नैयायिकानां मते समवायत्वं न जातिः । तद्बाधकस्यासंबन्धस्य सत्त्वात् । यद्यपि समवायत्वजातिबाधको व्यक्त्यभेद एव तथापि प्राभाकरादिमते उत्पादविनाशशीला बहवः समवायाः । तन्मते असंबन्ध एव जातिबाधकः इति ज्ञेयम् ( वै० उ० १।१।२ ) । समवायो नाना अनित्यश्च इति प्राभाकरा मध्वाश्चाहुः । प्रत्यक्षः समवायः इति नैयायिका आहुः । समवायस्य प्रत्यक्षत्वसाधकानुमानं च समवायो लौकिकप्रत्यक्षविषयः

योग्यप्रतियोगिकत्वे सति विशेषणतया योग्यवृत्तित्वात् भूतलादिवृत्ति-घटात्यन्ताभावादिवत् इत्यादि (वै० वि० ७।२।२८)। एतन्मते च समवायप्रत्यक्षं प्रति इन्द्रियसंबद्धविशेषणतासंनिकर्षो हेतुः इति कार्य-कारणभावो ज्ञेयः (मु०) (वै० वि० ७।२।२८)। इह कपाले घटसमवायः इति प्रत्यक्षं विशेषणतासंनिकर्षेणैव भवति (प्र० प्र०) (त० कौ०) इति । समवायोतीन्द्रियः अनुमेय एव इति वैशेषिका आहुः । वैशेषिकमते समवायस्यातीन्द्रियत्वे प्रमाणमनुमानम् । तच्च समवायोतीन्द्रियः । चेतनान्यत्वे सति असमवेतभावत्वान्मनोवत् आका-शादिवद्वा (वै० वि० ७।२।२८) (वै० उ० ७।२।२८) इति । समवायो न प्रत्यक्षः । संबन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात् । कथमन्यथा घटाकाशसंयोगो न प्रत्यक्षः । न च समवायस्य सर्वे आश्रयाः प्रत्यक्षाः । परमाण्वादेरयोग्यत्वात् (न्या० म० १ पृ० ७) इति । अनुमानं तु गुणक्रियादिविशिष्टबुद्धिर्विशेष्यविशेषणसंबन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुषः इति विशिष्टबुद्धिवत् (मु० १ पृ० ३९) इति । इदमनुमानं समवायसद्भावे प्रमाणं भवति (वै० वि० ७।२।२६) (मु० १ पृ० ३९)। सर्वत्र स्वरूपस्यैव संबन्धत्वोपपत्तौ समवायो न पदार्थान्तरम् इति भट्टा वेदान्तिनः सांख्याश्च मन्यन्ते (ता० र० श्लो० ५४) (वै० उ० ७।२।२८) (वै० वि० ४।२।११) (दि० १) (सि० च०) (राम० १ पृ० १२२)। तत्र माध्वा-नामयमाशयः । गुणादीनां गुण्यादिभिः द्रव्यादिभिः अभेदेन समवाया-भावात् । आत्मनस्तद्धर्माणां च साक्षिविषयत्वेन मनोविषयत्वाभावात् । वर्णात्मकशब्दस्याद्रव्यत्वेनाकाशविशेषगुणत्वाभावात् (प्र० प० पृ० ११) इति । गुणकर्मसामान्यादिभिर्द्रव्यस्य भेदाभेदौ । तत्र यावद्द्रव्यभाविना गुणकर्मसामान्यादिना द्रव्यस्यात्यन्ताभेद एव । अयावद्द्रव्यभाविना तु भेदः (प्र० च० परि० २ पृ० ५२) इति । २ समवायो नाम समूहः । ३ मेलनं च । यथा सेनायां समवेताः (अमरः २।८।६१) इत्यादौ इति काव्यज्ञा आहुः ।

**समवायिकारणम्**—( कारणम् ) [ क ] यत्समवेतं कार्यमुत्पद्यते तत्। यथा तन्तवः पटस्य पटश्च स्वगतरूपादेः समवायिकारणम् ( त० सं० )। यत्समवेतमित्यस्यार्थश्च यस्मिन्समवायेन संबद्धं सत् कार्यमुत्पद्यते तत् ( न्या० बो० )। यद्वा यद्धर्मावच्छिन्नं यद्धर्मावच्छिन्ने समवायेनोत्पद्यते तद्धर्मावच्छिन्नं प्रति तद्धर्मावच्छिन्नं समवायिकारणम् ( नील० १ पृ० १७ ) इति। तथा हि तन्तुषु समवायेन संबद्धं सत् पटात्मकं कार्यमुत्पद्यते। अतः तन्तुः पटस्य समवायिकारणं भवति ( न्या० बो० १ पृ० ९ ) इति। समवायिकारणत्वं च समवायसंबन्धेन कार्याधिकरणत्वम् ( ल० व० ) ( वाक्य० १ पृ० १० )। अथ वा समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वम्। तथा हि। समवायसंबन्धेन घटाधिकरणे कपालादौ कपालादेस्तादात्म्यसंबन्धेनैव सत्त्वात् समवायेन घटं प्रति तादात्म्येन कपालं कारणम् इति कार्यकारणभावः इति। समवायसंबन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः ( न्या० बो० १ पृ० ९ )। अत्र नियमः समवायिकारणत्वं द्रव्यमात्रवृत्ति इति ( भा० प० श्लो० २३ ) ( वै० १०।२।१ )। अत्राहुरपरे द्रव्यस्य समवायिकारणत्वेपि निमित्तकारणत्वमप्यस्ति। तथा हि पटं प्रति तन्तूनां समवायिकारणत्वेपि तुरीतन्तुसंयोगद्वारा निमित्तकारणत्वमपि तेषां विद्यते तुरीवत् ( त० व० २।३३ ) ( वै० उ० १०।२।२ ) इति। [ ख ] स्वसमवेतकार्योत्पादकम्। तच्च द्रव्यमेव भवति। [ ग ] उपादानकारणम् इति सांख्यमायावादिवेदान्तिप्रभृतय आहुः। अस्मिन्मते उपादानत्वं च परिणामित्वम् इति ज्ञेयम्। उपादानं निमित्तं च इति द्विविधमेव कारणम् इति च ज्ञेयम् ( प्र० च० पृ० १२ )।

**समवायित्वम्**—१ समवायानुयोगित्वम्। यथा कपाले घटसमवायित्वम् गुणक्रिययोश्च समवायित्वं द्रव्ये। २ विद्यमानत्वम् इति काव्यज्ञा वदन्ति।

**समवेतम्**—१ कस्मिंश्चित् द्रव्यगुणकर्मात्मके वस्तुनि समवायसंबन्धेन विद्यमानम्। यथा मृदा समवायेनोत्पाद्यं घटात्मकं कार्यं कपाले समवेतं

भवति । २ मिलितम् । ३ समूहान्वितं संगतं च । यथा सेनायां समवेताः सैनिकाः ( अमरः २।८।६१ ) इत्यादौ इति काव्यज्ञा आहुः ।

**समन्व्याप्तत्वम्**—समनियतत्वम् ।

**समष्टिः**—१ सम्यग्व्याप्तिः । २ वेदान्तिनस्तु संघीभूतः समस्तः पदार्थः । यथा मायावादिमते हिरण्यगर्भः ( वेदान्तसा० ) । अत्रोदाह्रियते समष्टिरीशः सर्वेषां स्वात्मतादात्म्यवेदनात् । तदभावात्तदन्ये तु ज्ञायन्ते व्यष्टिसंज्ञया ॥ ( पञ्चद० १।२५ ) । यथा वा अन्येषां वेदान्तिनां मते गरुडानन्तविष्वक्सेनादयः समष्टिजीवाः इत्याहुः ( तत्त्वसंख्या० ) । ३ समस्तत्वम् इति काव्यज्ञा आहुः ।

**समाख्या**—१ अन्वर्था संज्ञा । यथा अयोनिजेषु शरीरेषु मनुमरीचिदुर्वासःसंज्ञा ( वै० उ० ४।२।८ ) ( वै० वि० ४।२।८ ) । २ मीमांसकास्तु यौगिकः शब्दः । अत्रोक्तम् स्थानं क्रमो योगबलं समाख्या ( शास्त्रदीपिका ) इति । सा च समाख्या द्विविधा वैदिकी लौकिकी चेति । तत्राद्या यथा होतुचमसः हारियोजनः इत्यादिः । अत्र होतुचमस इत्यनया वैदिकसमाख्यया होतुश्चमसभक्षणाङ्गत्वं बोध्यते ( लौ० भा० विविनि० पृ० २८ ) । अत्र चमसस्यसोमभक्षणे श्रुतिः हविर्धाने चर्मन्नधि ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति ( तैत्तिरीयसंहिता ६।२।११ ) इति । हारियोजनशब्दार्थस्तु हरिरसि हारियोजनः इत्यनेन मन्त्रेण गृह्यमाणो ग्रहो हारियोजनः ( लौ० भा० विविनि० टी० पृ० २८ ) । लौकिकी समाख्या तु याज्ञिकैः परिकल्पिता ( लौ० भा० टी० पृ० २८ ) । सा यथा आध्वर्यवम् इत्यादिः । आध्वर्यवं काण्डम् इत्यर्थः । अनया लौकिकसमाख्यया पुरोध्वर्युर्विराजति इत्यादिना यजुर्वेदेन विहितानां पदार्थानामङ्गत्वमध्वर्योर्बोध्यते ( लौ० भा० टी० पृ० २८ ) इत्याहुः । ३ कीर्तिः इति काव्यज्ञा आहुः ।

**समाधानम्**—१ [ क ] उद्भावितदूषणनिवर्तकवाक्यप्रयोगः । यथा चतुर्मा[illegible]शिष्टुमयात्मके [illegible] परमाणु[illegible]वि-

संयोगाद्यव्याप्त्यतिव्याप्त्युद्भावनेन परेण दूषिते त्वगग्राह्यचक्षुर्ग्राह्यगुणविभाजकधर्मवत्त्वम् इति नीलकण्ठीयं समाधानम् । [ख] केचित्तु विवादभञ्जनम् । पूर्वपक्षस्य सम्यगुक्तानुगुणसिद्धान्तानुकूलतर्कादिना सम्यगर्थावधारणम् इत्याहुः । २ ध्येयवस्तुनि चित्तस्य निरन्तरस्थापनम् इति योगशास्त्रज्ञा आहुः ।

**समाधिः**—१ समाधानम् । २ योगशास्त्रज्ञास्तु चित्तस्याभिमतविषयनिष्ठत्वम् ( गौ० वृ० ४।२।३६ ) । एकाग्रतया मनसः स्थापनरूपो ध्येयमात्रस्फुरणरूपः ध्यानविशेषः इत्याहुः । अत्र सूत्रम् तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ( पात० पा० ३ सू० ३ ) इति । तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् । मनसा ध्याननिष्पाद्यं समाधिः सोभिधीयते ॥ ( वाच० ) इति पुराणमपि । समाधिर्नाम भावना । सा च भाव्यस्य विषयान्तरपरिहारेण चेतसि पुनः पुनर्निवेशनम् ( सर्व० सं० पृ० ३५६ पात० ) । समाधिः समतावस्था जीवात्मपरमात्मनोः । ब्रह्मण्येव स्थितिर्या सा समाधिः प्रत्यगात्मनः ॥ ( सर्व० सं० पृ० ३४७ पात० ) । आलंकारिकास्तु ३ अर्थालंकारविशेषः । तत्रोक्तम् समाधिः सुकरे कार्ये दैवाद्वस्त्वन्तरागमात् ( सा० द० परि० १० श्लो० ८६ ) इति । ४ काव्यगुणविशेषः समाधिः । तत्रोक्तम् श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥ इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ( काव्याद० ) इति । तस्यौजस्यन्तर्भावो यथा श्लेषः समाधिरौदार्यं प्रसाद इति वै पुनः । गुणाश्चिरंतनैरुक्ता ओजस्यन्तर्भवन्ति ते ॥ ( सा० द० परि० ८ श्लो० ९ ) इति । अत्रेदं ज्ञेयम् । समाधिरारोहावरोहक्रमरूपः । आरोह उत्कर्षः । अवरोहोपकर्षः । तयोः क्रमो वैरस्यानावहो विन्यासः । यथा चञ्चद्भुज ( वेणीसं० ) इत्यादि । अत्र पादत्रये क्रमेण बन्धस्य गाढता । चतुर्थपादे त्वपकर्षः । तस्यापि च तीव्रप्रयत्नोच्चार्यतयौजस्विता ( सा० द० परि० ८ श्लो० ९–१० टी० ) इति । ५ समाधिः मानसी व्यथा इति काव्यज्ञा आहुः ।

**समानः**—१ ( वायुः ) [ क ] आहारेषु पाकार्थं वह्नेः समानयनात्समानः ( दि० १।२ ) । [ ख ] भुक्तपरिणामाय जठरानलस्य समुन्नयनात्समानः । स च प्राणान्तर्गतो वायुः ( सि० च० ) । २ एकः । यथा समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः (गौ० १।१।२९) इत्यादौ । यथा वा यत्समानाधिकरण ( चि० २ व्याप्ति० ) इत्यादौ समानशब्दस्यार्थः । ३ तुल्यः । यथा सिंहसमानगुणयोगान्माणवकः सिंहः इत्यादौ समानशब्दस्तुल्यार्थकः । ४ साधुः इत्यन्ये वदन्ति ।

**समानधर्मः**—[ क ] विरुद्धकोटिद्वयसाधारणधर्मः (गौ० वृ० १।१।२३) । यथा स्थाणुपुरुषयोः समानो धर्म आरोहपरिणाहौ ( वात्स्या० १।१।२३ )। तादृशधर्मज्ञानं च स्थाणुर्वा पुरुषो वा इत्याकारकसंशये प्रयोजकम् इति विज्ञेयम् । [ ख ] कोटिद्वयसहचरितधर्मः ( दि० गु० ) । यथा रङ्गं रजतं न वा इति संशये हेतुभूतः रङ्गरजतयोः सामान्यधर्मश्चाकचिक्यशुक्लत्वादिः । [ ग ] साधर्म्यम् ( मु० १ ) ।

**समानपदत्वम्**—एकपदत्वम् ।

**समानप्रकारकत्वम्**—१ स्वस्मिन् ( यत्किंचिज्ज्ञानादौ ) यद्धर्मावच्छिन्नविशेष्यतानिरूपितयद्धर्मावच्छिन्नप्रकारताकत्वम् ततोन्यत्र ( ज्ञानादौ ) तादृशविशेष्यतानिरूपिततादृशप्रकारताकत्वम् । यथा संशयनिश्चययोः । २ प्रतिबध्यप्रतिबन्धकभावस्थले प्रतिबध्यज्ञाने यद्धर्मावच्छिन्नविशेष्यतानिरूपितयद्धर्मावच्छिन्नप्रकारताकत्वम् प्रतिबन्धकज्ञाने च तद्धर्मावच्छिन्नविशेष्यतानिरूपिततद्धर्मातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपकत्वम् । यथा नव्यमते पर्वतो वह्न्यभाववान् इति निश्चयस्यापि पर्वतो महानसीयवह्निमान् इति बुद्धिसमानप्रकारकत्वम् । अत्रेदमवधेयम् । तदभाववत्तानिश्चयनिष्ठायां तद्वत्ताबुद्धिप्रतिबन्धकतायां समानप्रकारकत्वं तन्त्रम् इति नव्यानां सिद्धान्तः । प्राचां सिद्धान्तस्तु तत्र समानविषयकत्वमेव तन्त्रम् इति । अत्रेदं तत्त्वम् । विशेषतद्वत्ताबुद्धिं प्रति सामान्यतदभाववत्तानिश्चयस्यापि प्रतिबन्धकत्वम् इति सर्वानुभवमनुरुध्येदमुक्तम् इति ।

**समानवित्तिवेद्यत्वम्**—तुल्यवित्तिवेद्यत्वम् ( त० प्र० ख० ४ पृ० २१ )।

**समानविभक्तिकत्वम्**—[ क ] स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम्। यथा नीलो घटः इत्यादौ नीलपदघटपदयोः समानविभक्तिकत्वम् । इदं च अभेदान्वयविषयकशाब्दबोधे प्रयोजकं भवति । अत्रेदमधिकं बोध्यम् । समानविभक्तिकत्ववत् समानवचनकत्वमप्यभेदान्वयबोधे तन्त्रम् इति नियमः । तत्र व्यवस्था । यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वम् तत्र विशेष्यविशेषणपदयोः समानलिङ्गवचनकत्वनियमः इति । तेन पुरूरवोमार्द्रवसौ विश्वेदेवाः त्रयः समुदिता हेतुः पितरो देवताः जात्याकृतिव्यक्तयः पदार्थाः प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि इत्यादिषु विभिन्नलिङ्गवचनकस्थलेष्वभेदान्वयबोध उपपद्यते ( व्यु० का० १ पृ० १–३ ) इति । अत्र विभक्तौ तादृशविभक्तिसाजात्यं च विभक्तिविभाजकप्रथमात्वादिनावगन्तव्यम् । तेन वेदाः प्रमाणम् शतं ब्राह्मणाः इत्यादौ समानविभक्तिकत्वं संपद्यते ( ग० व्यु० का० १ पृ० १ )। [ ख ] केचित्तु विरुद्धविभक्त्यनवरुद्धत्वम् । यथा नीलमुत्पलम् नीलोत्पलम् इत्यादौ समानविभक्तिकत्वम् ( म० प्र० ४ पृ० ४८ )। [ ग ] विरुद्धविभक्तिराहित्यम् । तच्च स्तोकं पचति इत्यादौ विभक्तिशून्यभागेप्यस्ति इति ज्ञेयम् ( त० प्र० ४ पृ० ४६–४७ )। [ घ ] विशेषणपदस्य विशेष्यपदाप्रकृतिकविभक्त्यप्रकृतित्वम् । यथा नीलघटमानय नीलं घटमानय इत्यादौ समानविभक्तिकत्वम् इत्याहुः ( ग० व्यु० १ पृ० ३ ) । इदं च विरुद्धविभक्तिराहित्यरूपा समासव्याससाधारणाकाङ्क्षा इत्युच्यते । तत्तु वैयाकरणखसूचिमानय इत्यादौ न प्राप्नोति इति चिन्त्यम् ।

**समानविषयकत्वम्**—तुल्यरूपविशेष्यविशेषणताशालित्वम् तद्विषयविषयकत्वं वा । यथा पर्वतो वह्निमान् पर्वतो महानसीयवह्निमांश्च इति निश्चययोः समानविषयकत्वम् । क्वचित् अभावप्रतियोगितावच्छेदकतया ग्राह्यवृत्तिधर्मावगाहित्वम् ( ग० बाध० ) । यथा पर्वतो महानसीयवह्न्यभाववान् इति निश्चयस्यापि पर्वतो वह्निमान् इति बुद्धिसमानविषयकत्वम् । अत्रेद-

भवधेयम् । तदभाववत्तानिश्चयस्य तद्वत्ताबुद्धिप्रतिबन्धकतायां समानविषयकत्वं तन्त्रम् इति प्राचीनानां सिद्धान्तः इति । इदं च बोध्यम् । सामान्यतद्वत्ताबुद्धिं प्रति विशेषतदभाववत्तानिश्चयस्यापि समानविषयकत्वेन प्रतिबन्धकत्वं प्राचीनानामभिमतम् । अतः पर्वतो महानसीयवह्न्यभाववान् इति निश्चयस्य पर्वतो वह्निमान् इति बुद्धिं प्रति प्रतिबन्धकत्वं संगच्छते इति ।

**समानाकारकत्वम्**—[ क ] स्वस्मिन्यादृशी तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारिता तादृशतद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारिताशालित्वम् ( कु० ३ )। यथा पर्वतो वह्निमान् इति निश्चयस्य पर्वतो वह्निमान् न वा इति संशयसमानाकारकत्वम् ( ग० हेत्वा० ल० २ पृ० ११ ) । इदं च संशये विषयताद्वयम् इति पक्षाभिप्रायकम् इति तु सूक्ष्मतरं विभावनीयं विद्वद्भिः । [ ख ] स्वस्मिन्यादृशनिरूप्यनिरूपकभावापन्नविषयताकत्वम् तादृशनिरूप्यनिरूपकभावापन्नविषयताकत्वम् इत्यस्मद्गुरुचरणाः प्राहुः ।

**समानाधिकरणत्वम्**—१ एकाधिकरणवृत्तिकत्वम् । यथा हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः इति व्याप्तिस्वरूपनिरुक्तौ पर्वतो वह्निमान् धूमात् इत्यादौ लक्षणघटकीभूतधूमघटात्यन्ताभावयोः समानाधिकरणत्वम् । अत्र समानम् एकम् अधिकरणम् आश्रयः ययोः तयोर्भावः इति व्युत्पत्तिर्द्रष्टव्या । २ कोटिद्वयसहचरितत्वम् । यथा धूमधूमाभावसमानाधिकरणो वह्निः ( ग० सव्यभि० ) इत्यादौ समानाधिकरणत्वशब्दार्थः । ३ शाब्दिकास्तु विभिन्नविभक्तिराहित्ये सति अभेदेनैकार्थबोधजनकत्वम् ( वृत्ति० ) । यथा नीलो घटः परमराज्यम् महानवमी इत्यादौ नीलपदादिघटपदाद्योरेकधर्मिबोधकपदत्वरूपं समानाधिकरणत्वम् इत्याहुः । अत्रोदाहरन्ति लटः शतृशानचावप्रथमासमानाधिकरणे ( पाणि० ३।२।१२४ ) इत्यत्र पचन्तं देवदत्तं पश्य पचमानं देवदत्तं पश्य इति । तत्पुरुषः समानाधिकरणः कर्मधारयः ( पाणि० १।२।४२ ) इत्यत्र परमराज्यम् महानवमी इति च ( काशिका० ) । शिष्टं तु सामानाधिकरण्यशब्दव्याख्याने दृश्यम् ।

**समासपुनरात्तत्वम्**—[ क ] क्रियान्वयेन शान्ताकाङ्क्षस्य विशेष्यवाचकपदस्य विशेषणान्तरान्वयार्थं पुनरनुसंधानम् । नियताकाङ्क्षारहितान्वयबोधोत्तरं विशेष्यवाचकपदस्य पुनरनुसंधानम् इति समुदितार्थः ( राम० १ पृ० २ ) । अत्र व्युत्पत्तिः समाप्ते वाक्यसमाप्तौ पुनरात्तता ग्रहणम् इति । तच्च समासपुनरात्तत्वम् विशेष्यवाचकपदनिष्ठः काव्यदोषः उत्थाप्याकाङ्क्षास्थल एव प्रवर्तते न तूत्थिताकाङ्क्षस्थल इति बोध्यम् ( दि० मङ्गल० ) । यथा उदयति चन्द्रः कुमुदबन्धुः इत्यादौ समासपुनरात्तत्वं दोषः । तदुदाहृतं चन्द्रालोके समासपुनरात्तं स्यादेष पीयूषभाजनम् । नेत्रानन्दी तुषारांशुरुदेत्यम्बुधिबान्धवः ॥ इति । [ ख ] केचित्तु निराकाङ्क्षबोधजनकवाक्योत्तरत्वविशिष्टतद्वाक्यघटकीभूतपदार्थान्वितविशेषणबोधकपदवत्त्वम् इति वदन्ति ।

**समाप्तिः**—१ अवसानम् । तच्च तत्तद्वस्तुकालचरमसंबन्धः । यथा समाप्ते यज्ञकर्मणि इत्यादौ । समाप्तिस्तु यस्मिन्ननुष्ठिते संपूर्णमिदं कर्म इति प्रमा । सा च ग्रन्थादौ चरमवाक्यलिखने यागादौ चरमाहुतौ पटादावन्त्यतन्तुसंयोगे ग्रामगमनादौ ग्रामचरणचरमसंयोगे प्रमा । एवं तत्र तत्रोहनीया ( वै० उ० १।१।१ पृ० ५ ) । २ चरमवर्णः ( त० प्र० १ ) । यत्र ग्रन्थसमाप्तिः । ३ चरमवर्णजन्यं तद्वितीयक्षणोत्पन्नं तत्सजातीयं वर्णान्तरम् । केचित्तु ४ आरब्धकर्मजन्यश्चरमवर्णपर्यन्तवर्णसमूहरूपग्रन्थादिः इत्याहुः । ५ चरमवर्णध्वंसः ( त० प्र० १ ) ( मू० म० १ पृ० २३ ) । चरमकृतिध्वंसः । यथा ग्रन्थसमाप्तिः स्वोत्पत्तिक्षणध्वंसः स्वस्य समाप्तिः ( म० प्र० ) । आद्या प्रवृत्तिरारम्भः इति जैमिनीयारम्भलक्षणानुसारादिदं लक्षणम् । तस्य चरमकृतिध्वंसस्य च स्वप्रतियोगिविषयत्वेन ग्रन्थनिष्ठत्वं बोध्यम् ( म० प्र० ) । ६ चरमवर्णजन्यम् आरब्धकर्मचरमवर्णांशे लौकिकप्रत्यक्षात्मकम् आनुपूर्वीविशेषविशिष्टतावद्वर्णविषयकसमूहालम्बनानुसंधानं समाप्तिः इत्यन्य आहुः ( मू० म० १ पृ० २४ ) । ७ ज्ञानविशेष एव समाप्तिः इत्यपर आहुः ( म० वा० पृ० ५ ) । ८ परिच्छेदः । ९ वधः । १० समाधानम् ( विश्वः ) । ११ समर्थनम् ( मेदि० ) । १२ प्राप्तिः ( शब्दच० ) ( वाच० ) ।

**समासः**—१ संक्षेपः । यथा विष्णुनास्य समस्तस्य समासव्यासयोगतः (तत्त्वसं० ८।५) इत्यादौ समासशब्दस्यार्थः संक्षेपः (प्र० च० पृ० ५४)। २ समर्थनम् (मेदि०)। ३ समाहारः। ४ समासो नाम धर्मिमात्राभिधानम् (सर्व० सं० पृ० १७१ नकु०)। ५ [क] अनेकेषां पदानामेकपदीभवनम्। समासपदं द्विविधम् योगरूढम् यौगिकं चेति। तत्राद्यम् पङ्कजकृष्णसर्पाधर्मादिपदम्। द्वितीयं तु कर्मधारयादिः सप्तविधः समासः। अत्र समासत्वं चाखण्डोपाधिः संकेतविशेषेण समासपदवत्त्वं वा (म० प्र० ४ पृ० ४३)। [ख] यादृशमहावाक्योत्तरः त्वतलादिः स्वार्थस्य यादृशार्थावच्छिन्नविषयताशालिबोधे हेतुः तादृशं तद्वाक्यं तथाविधार्थे समासः। इदं च यौगिकसमासस्य लक्षणम् न तु योगरूढसमासस्य इति विज्ञेयम्। अत्र वाक्यस्य महत्त्वं च प्रकृत्यर्थमात्रावच्छिन्नप्रत्ययार्थस्यान्वयबोधं प्रत्ययोग्यत्वं वाच्यम्। तेन उपकुम्भादौ नाव्याप्तिः। न वा नीलघटत्वस्वम् इत्यादौ नीलघटत्वादिभागेतिप्रसङ्गः (श० प्र० श्लो० ३१ टी० पृ० ३८)। स चायं समासः सप्तविधः कर्मधारयः द्विगुः तत्पुरुषः अव्ययीभावः बहुव्रीहिः द्वन्द्वः उपपदसंज्ञकश्चेति (श० प्र० श्लो० ३२ टी० पृ० ३९)। केवलसमासः इत्यपि केचिदाहुः। समासश्चतुर्विधः अव्ययीभावः तत्पुरुषः द्वन्द्वः बहुव्रीहिश्च इति केचिच्छाब्दिका आहुः। तत्र पूर्वपदार्थप्रधानोव्ययीभावः उत्तरपदार्थप्रधानस्तत्पुरुषः उभयपदार्थप्रधानो द्वन्द्वः अन्यपदार्थप्रधानो बहुव्रीहिः इत्यादिलक्षणमपि प्रायिकम्। उन्मत्तगङ्गम् सूपप्रति इत्याद्यव्ययीभावे अर्धपिप्पली पूर्वकायः इत्यादितत्पुरुषे द्वित्राः इत्यादिबहुव्रीहौ कुशपलाशम् इत्यादिद्वन्द्वे च परस्परव्यभिचारात् परस्परमव्याप्त्यतिव्याप्त्योः सत्त्वात् इत्यलम्। प्राचीनवैयाकरणोक्तविभागस्य प्रायिकत्वमाह। समासस्तु चतुर्धेति प्रायोवादस्तथापरः। योयं पूर्वपदार्थादिप्राधान्यविषयः स च ॥ भौतपूर्व्यात् सोपि रेखागवयादिवदास्थितः इति। अत्रोच्यते कविना सोपहासम् द्वन्द्वो द्विगुरपि चाहं मद्गेहे सततमव्ययीभावः। तत्पुरुष कर्म धारय येन सदा स्यां बहुव्रीहिः॥ (उद्भटः) इति। अत्र प्राचीना वाग्भटादयः पञ्चविधान् भेदानादाय येषां

समासानां पञ्चविधत्वं वदन्ति ते च समासा अपि पूर्वोक्तसप्तविधान्तर्गता एव भवन्ति । तथा हि । (१) कश्चित्समासः पूर्वपदार्थधर्मिकान्वयबोधजनकतया पूर्वपदप्रधान उच्यते । यथा प्राप्तजाया अर्धपिप्पली पूर्वकायः इत्यादिकस्तत्पुरुषः । यथा वा उपकुम्भाद्यव्ययीभावः पुरुषसिंहादिकर्मधारयश्च । (२) कश्चिन्मध्यमपदार्थधर्मिकधीजनकतयैव मध्यमपदप्रधानः । यथा पटानधिकरण-प्रतियोगितानवच्छेदक-इत्यादिकस्तत्पुरुषः । पटस्य नाधिकरणम् इत्यादिविग्रहे मध्यमपदार्थस्यैव विशेष्यत्वात् । (३) कश्चिदन्त्यपदार्थधर्मिकधीहेतुत्वादन्त्यपदप्रधानः । यथा राजपुरुषादिकस्तत्पुरुषः । नीलोत्पलादिकः कर्मधारयः द्विगार्ग्याद्यव्ययीभावश्च । (४) कश्चित्सर्वपदार्थधर्मिकबुद्धिहेतुत्वात् सर्वपदप्रधानः । यथा इतरेतरद्वन्द्वः द्वन्द्वमात्रं वा । (५) कश्चित्स्वाघटकान्यपदार्थधर्मिकज्ञानजनकत्वादन्यपदार्थप्रधानः । यथा बहुव्रीहिः खलेयवाद्यव्ययीभावश्च इति । नित्यानित्यभेदेनापि समासस्य द्वैविध्यं जयादित्यादिभिरुक्तम् ( श० प्र० श्लो० ३३ टी० पृ० ३९–४० ) । तत्राविग्रहः अस्वपदविग्रहो वा नित्यसमासः ( त० प्र० ख० ४ पृ० ४२ ) । [ग] वैयाकरणास्तु द्व्यादिपदानामेकपदतासंपादकः पदसाधुतार्थकः संस्कारविशेषः । यथा राजपुरुष इत्यादौ । अत्र सूत्रम् समर्थः पदविधिः ( पाणि० २।१।१ ) इति । अत्र सामर्थ्यं द्विविधम् व्यपेक्षावत्त्वम् एकार्थीभावश्च । तत्र (१) स्वार्थपर्यवसायिपदानामाकाङ्क्षादिवशाद्यः परस्परं संबन्धः सा व्यपेक्षा । परस्परनिरूप्यनिरूपकभावापन्नविषयताप्रयोजकत्वे सति एकार्थोपस्थित्यजनकत्वम् । राज्ञः पुरुषः इत्यादौ वाक्ये सत्यामाकाङ्क्षायाम् यो यो यस्मिन् संनिहितो योग्यश्च स तेन तेन संबध्यते । यथा राज्ञः पुरुषोऽश्वश्च राज्ञो देवदत्तस्य च पुरुषः ऋद्धस्य राज्ञोऽश्वो धनं च इत्यादि । वृत्तौ तु नैवम् । वृत्तीनामेकार्थीभावात् । (२) एकार्थीभावस्तु विशेष्यविशेषणभावावगाह्येकोपस्थितिजनकत्वम् । तथा च राजादिशब्देन विशिष्टैकार्थबोधकतया न तदेकदेशे ऋद्धादेरन्वयः । पुरुषांशे विशेषणतयोपस्थितस्य नाश्वादिसंबन्धिता राजादीनाम् । जनितान्वयाच्च निराकाङ्क्षतया न देवदत्तादेः स्वामितया पुरुषादावन्वयः

इति द्रष्टव्यम् । देवदत्तस्य गुरुकुलम् इत्यादौ देवदत्तादेस्तु प्रधानीभूतकुलादिनैवान्वयः । संबन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थः । अथ वा संबन्धिशब्दार्थस्य पदार्थैकदेशत्वेपि भवत्येव तत्र संबन्धप्रतियोगिनोन्वयः । तदुक्तं भर्तृहरिणा संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । वाक्यवत्सा व्यपेक्षापि वृत्तावपि न हीयते ॥ ( वाक्यप० ) इति । वार्तिककारमतमपि भर्तृहरिमततुल्यमेव । प्राचीनानां तु विरुद्धा गाथा सापेक्षे प्रत्ययो न स्यात्समासो वा कथंचन । सापेक्षं तद्विजानीयादसमस्तविशेषणम् ॥ इति । स च समासः षड्विधः सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा । सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः ॥ ( वै० सा० समा० कारि० २८ ) इति । तत्र सुपां सुपा समासो यथा राजपुरुषः इत्यादिः । सुपां तिङा यथा पर्यभूषत् इत्यादिः । अयं समासः सह सुपा ( पाणि० २।१।४ ) इत्यत्र योगविभागेन भाष्ये व्युत्पादितः स्पष्टः शब्दकौस्तुभादौ । सुपां नाम्ना यथा कुम्भकारः इत्यादिः । सुपां धातुना यथा कटप्रूः आयतस्तूः इत्यादिः । तिङां तिङा यथा पिबतखादता पचतभृज्जता इत्यादिः । तिङां सुबन्तेन यथा जहिस्तम्बः इत्यादिः इत्याहुः ।

**समाहारः**—१ साहित्यम् । तच्च [ क ] तुल्यवदेकक्रियान्वयित्वरूपम् ( न्या ०म० )। यथा मार्दङ्गिकवैणविकं वादय इत्यादौ समाहारः। तुल्यवत् समभावेनेत्यर्थः । इदं च पत्नीयजमानयोरेकयागान्वयिनोरतिव्याप्तिवारणाय । तथा च पत्न्या अनुमतिद्वारा यजमानस्य च साक्षादेव यागान्वयित्वम् न तुल्यवत् इति नातिव्याप्तिः ( म० प्र० ४ पृ० ४६ ) । तथा च क्रियायाः विधेयभूतायाः एकरूपस्तुल्यः संबन्धः समाहारः इति समुदितार्थः । यथा केषांचिन्मते पाणिपादं वादय इत्यत्र वादनक्रियायां तुल्यवदेव पाणिपादयोरन्वयः ( त० प्र० ख० ४ पृ० ५० )। [ ख ] अपेक्षाबुद्धिविशेषविषयत्वम् ( न्या० म० ४ पृ० १३ ) । [ ग ] बुद्धिविशेषविशेष्यत्वम् । यथा पाणिपादम् इत्यादौ समाहारद्वन्द्वे समाहारः ( श० प्र० श्लो० ४८ टी० पृ० ६१ ) । २ समुच्चयः । अनुद्भूतावयवविशेषः समूहः इति वैयाकरणा आहुः ( वाच० ) ।

**समाहारद्वन्द्वः**—( द्वन्द्वसमासः ) [ क ] एकवचनान्यसुबाकाङ्क्षाविहीनः समासः । यथा पाणिपादम् हस्त्यश्वम् इति समाहारद्वन्द्वः । अत्र एके प्राञ्चो नैयायिकाः आहुः । पाणिपदं पाणिप्रतियोगिकमित्यर्थं पादपदं च पाद-समाहारं लक्षयति । न पाणिपादसमाहारे शक्तिः इति । शाब्दिकास्तु समाहारे शक्तिः इत्याहुः । तथा च समाहारे द्वन्द्वे द्वित्वत्रित्वादिनैव समूहस्य बोधात्समूहत्वमेव प्रवृत्तिनिमित्तम् इति विज्ञेयम् । अन्ये प्राञ्चो नैयायि-कास्तु उत्तरपदे पाणिपादसाहित्ये लक्षणा । पाणि इति पदान्तरं तु तादृशलक्षणाया निरूढत्वसंपादकम् । तथाविधसाहित्यस्य च स्वाश्रय-निष्ठत्वादिसंबन्धेनैव द्वितीयाद्यर्थकर्मत्वादौ साकाङ्क्षत्वात् पाणिपादं वादय इत्यादेर्नायोग्यत्वम् इत्याहुः ( श० प्र० श्लो० ४८ टी० पृ० ६१ ) ( न्या० म० ४ पृ० १३ ) । नव्यास्तु चूडामणिभट्टाचार्यादयः पाणिपादं वादय इत्यत्र पाणिपादमात्रप्रतीतेः ( समाहाराप्रतीतेः ) न समाहारे लक्षणा न वा शक्तिः । इतरेतरसमाहारसंज्ञा च नदी वृद्धि इत्यादिव-त्पारिभाषिकैव । तथा च समाहार एकवद्भावेन न द्विवचनापत्तिः इति प्राहुः ( न्या० म० ४ पृ० १३ ) ( म० प्र० ४ पृ० ४६ ) । पाणि-पादम् हस्त्यश्वम् इत्यादितो हि करचरणादीनां बहूनामप्यवगतावेक-वचनमेव प्रमाणम् ( श० प्र० श्लो० ४९ टी० पृ० ६६ ) । द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ( पाणि० २।४।२ ) इति सूत्रं प्रमाणमत्र द्रष्टव्यम् । [ ख ] समूहार्थको द्वन्द्वसंज्ञकः समासः इति शाब्दिका आहुः ।

**समाहारद्विगुः**—( द्विगुसमासः ) [ क ] स्वोपस्थाप्यार्थस्य समाहार-लक्षको यदीयान्त्यशब्दः स द्विगुः समाहारद्विगुः । यथा पञ्चपूली इत्यादिः । अत्र हि योगलभ्यानां पञ्चाभिन्नपूलानां समाहारः परस्पपूल-शब्देन लक्ष्यते । न तु तत्र द्विगोः शक्तिः । अन्यलभ्ये शक्त्ययोगात् । अत एव न लक्षणापि । शक्यसंबन्धस्यैव लक्षणात्वेन वाक्ये तदसंभवात् ( श० प्र० श्लो० ३८ टी० पृ० ४७ ) इति । [ ख ] तद्धितार्थो-त्तरपदद्विगुभ्यां भिन्नो द्विगुः । यथा पञ्चपूलीं छिनत्ति । पञ्चपाचकी इत्यादिरपि । एवं च द्विगोः कर्मधारयान्तर्गतत्वेपि न क्षतिः इति तु निभावनीयम् ( श० प्र० श्लो० ३८ टी० पृ० ४७ ) ।

**समाह्वयः**—प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः ( मिताक्षरा अ० २।११९ ) ।

**समितिः**—प्राणिपीडापरिहारेण सम्यगयनम् ( सर्व० सं० पृ० ७८–७९ आर्ह० ) ।

**समीपत्वम्**—संनिकृष्टत्वम् ।

**समुच्चयः**—१ [ क ] विरोधानवगाही कोटिद्वयसामानाधिकरण्यावगाही च निश्चयः । यथा पर्वतो वह्निमान् वह्न्यभाववांश्च इति ज्ञानम् । अव्याप्यवृत्तित्वज्ञानकाले कोटिद्वयोपस्थितौ सत्यामिदं ज्ञानमुत्पद्यत इति विज्ञेयम् । गादाधरीयबाधग्रन्थफक्किकाया अयमेवाभिप्रायः इति प्रतिभाति । [ ख ] धर्मितावच्छेदकसामानाधिकरण्येनोभयकोव्यवगाहिज्ञानम् ( त० प्र० २ ) । यथा वृक्षः कपिसंयोगतदभाववान् इति ज्ञानम् । २ निरपेक्षाणामेकत्रान्वयः । स च यत्र असंबद्धे एकैकशः क्रियान्वयः । यथा धवं छिन्धि खदिरं च छिन्धि इति समुच्चये तुल्यवदसंबद्धयोः क्रियान्वयधीः । अत्रायं विशेषः प्राधान्येन यत्र क्रियान्वये तात्पर्यम् स समुच्चय इति ( त० प्र० ख० ४ पृ० ५२ ) । शाब्दिकास्तु यत्र परस्परनिरपेक्षाणामनेकेषामेकस्मिन्क्रियादावन्वयः सः । यथा देवदत्तो यज्ञदत्तश्च गच्छतीत्यत्र देवदत्तयज्ञदत्तयोः परस्परसापेक्षत्वाभावेपि एकस्मिन् गमनेन्वय इति । तद्वाचकश्च प्रायेण चकारः । क्वचित् तथा इत्यादिशब्दोपि वाचको भवति इत्याहुः । अन्वयश्च विशेष्यतया विशेषणतया वा । तत्राद्यम् चैत्रो गच्छति पचति च इत्यादौ क्रियासमुच्चये । द्वितीयम् ईश्वरं गुरुं च भजस्व इत्यादौ द्रव्यसमुच्चये ( वाच० ) । शिष्टं तु चशब्दे द्वन्द्वशब्दे च दृश्यम् ।

**समुत्थानम्**—व्रणरोपणम् ( मिताक्षरा अ० २।२२२ ) ।

**समुदयः**—रागादीनां गणोयं स्यात्समुदेति नृणां हृदि । आत्मात्मीयस्वभावाख्यः स स्यात्समुदयः पुनः ॥ ( सर्व० सं० पृ० ४६ बौ० ) ।

**समुदायः**—दुःखकारणम् । तद्विविधम् । प्रत्ययोपनिबन्धनो हेतूपनिबन्धनश्च ( सर्व० सं० पृ० ४० बौ० ) ।

**समुदायत्वम्**—[ क ] अनेकपर्याप्तो धर्मः ( ग० अवय० ) । यथा जलादित्रयोदशभेदसमुदायः पृथिव्यां साध्यते इत्यादौ समुदायत्वशब्दार्थः ( त० दी० २ पृ० २३ ) । [ ख ] अपेक्षाबुद्धिविशेषविषयत्वम् । यथा घटपटस्तम्भकुम्भैतत्समुदायत्वम् । त्रित्वादिपर्याप्तसंख्याविशेष इत्येक आहुः । एवम् समूहत्वशब्दोपि व्याख्येयः । अत्र स्मर्यते समुदायः प्रत्येकानतिरिक्तः इति नैयायिकानां सिद्धान्त इति ।

**समूहः**—१ समूहालम्बनशब्दवदस्यार्थोनुसंधेयः ( वै० सा० द० ) । २ समुदाय इति काव्यज्ञा आहुः ।

**समूहालम्बनम्**—[ क ] नानाप्रकारतानिरूपितं नानामुख्यविशेष्यताशालि ज्ञानम् ( ग० व्यु० १ ) । यथा अयं घटः अयं पटः अयं स्तम्भः अयं कुम्भश्च इत्येकं ज्ञानम् । अत्र ज्ञाने विशेषणद्वयदानेन धवखदिरौ द्वौ इति खड्गी चैत्रः कुण्डली इति च वाक्यजन्यबोधयोः समूहालम्बनात्मकत्वं निराकृतम् इति बोध्यम् ( ग० व्यु० १ ) । संशये तु नानाप्रकारतानिरूपिताया एकविशेष्यतायाः सत्त्वान्न समूहालम्बनत्वम् । [ ख ] यत्र विशेष्यताभेदेन प्रकारताभेदः तज्ज्ञानम् । नानाविशेष्यतानिरूपितनानाप्रकारताशालि ज्ञानम् इत्यर्थः ( कृष्णं० ) ।

**सम्यक्चारित्र्यम्**—संसरणकर्मोच्छित्तावुद्यतस्य श्रद्दधानस्य ज्ञानवतः पापगमनकारणक्रियानिर्वृत्तिः ( सर्व० सं० पृ० ६५ आर्ह० ) ।

**सम्यग्ज्ञानम्**—[ क ] यथार्थज्ञानम् । यथा सत्यरजते इदं रजतम् इति ज्ञानम् । [ ख ] अविसंवादकं ज्ञानम् । [ ग ] यतश्चार्थसिद्धिस्तत् इति बौद्धा आहुः ( न्या० वि० टी० पृ० ३—६ ) । एतन्मते सम्यग्ज्ञानं द्विविधम् प्रत्यक्षम् लैङ्गिकं चेति । [ घ ] येन स्वभावेन जीवादयः पदार्था व्यवस्थितास्तेन स्वभावेन मोहसंशयरहितत्वेनावगमः इत्यार्हता आहुः । तन्मते सम्यग्ज्ञानं पञ्चविधम् मतिः श्रुतम् अवधिः मनःपर्यायः केवलं च ( सर्व० पृ० ६३ आर्ह० ) ।

**सम्यग्दर्शनम्**—येन रूपेण जीवाद्यर्थो व्यवस्थितस्तेन रूपेणार्हता प्रतिपादिते तत्त्वार्थे विपरीताभिनिवेशरहितत्वाद्यपरपर्यायं श्रद्धानम् ( सर्व० सं० पृ० ६२ आर्ह० ) ।

**सर्गः**—१ सृष्टिः । २ काव्यादेः परिच्छेदः । यथा रघुवंशस्य प्रथमः सर्गः इत्यादयः (१९) सर्गाः । यथा वा सर्गोयमादिर्गतः ( नैषध० ) इत्यादौ सर्गशब्दस्यार्थः । ३ अभिमतिः ( हेमच० ) । यथा यदि सर्ग एष ते ( रघु० ३।५१ ) इत्यादौ सर्गशब्दस्यार्थोभिमतिरूपो निश्चयः ( मल्लिनाथः ) । ४ स्वभावः । ५ उत्साहः । ६ निर्मोक्षः । ७ निर्मोहः ( मेदि० ) ।

**सर्पिणी**—( विष्टिः ) वृश्चिकीशब्दे दृश्यम् ( पृ० ८०१ ) ।

**सर्वगतत्वम्**—१ विभुत्वम् । २ सर्वत्र वर्तमानत्वम् इति पौराणिका वदन्ति ।

**सर्वज्ञत्वम्**—[ क ] उक्तानुक्ताशेषार्थेषु समासविस्तरविभागविशेषतश्च तत्त्वब्यातसदोदितसिद्धिज्ञानं सर्वज्ञत्वम् ( सर्व० सं० पृ० १६६ नकु० ) । [ ख ] सर्वेषां व्यवसायाव्यवसायात्मकानां गुणपरिणामरूपाणां भावानां स्वामिवदाक्रमणं सर्वभावाधिष्ठातृत्वम् । तेषामेव शान्तोदिताव्यपदेश्यधर्मित्वेन स्थितानां विवेकज्ञानं सर्वज्ञत्वम् ( सर्व० सं० पृ० ३८५–३८६ पात० ) ।

**सर्वतन्त्रसिद्धान्तः**—( सिद्धान्तः ) [ क ] सर्वतन्त्राविरुद्धस्तन्त्रेधिकृतोर्थः सर्वतन्त्रसिद्धान्तः ( गौ० १।१।२८ ) । तदर्थस्तु सर्वतन्त्राविरुद्धोर्थः स्वतन्त्रेधिकृतश्च यः । स सर्वतन्त्रसिद्धान्तो यथा मानेन मेयधीः ॥ ( ता० र० श्लो० ५९ ) इति । तन्त्रे अधिकृत इति विशेषणं च मनस इन्द्रियत्वस्य सर्वतन्त्रसिद्धान्तत्ववारणाय इति ज्ञेयम् ( गौ० वृ० १।१।२८ ) । यथा घ्राणादीनीन्द्रियाणि गन्धादय इन्द्रियार्थाः पृथिव्यादीनि भूतानि प्रमाणैरर्थस्य ग्रहणम् ( वात्स्या० १।१।२८ ) इति । यथा वा जात्यादेरसदुत्तरत्वमपि सर्वतन्त्रसिद्धान्तः ( गौ० वृ० १।१।२८ ) । [ ख ] नव्यास्तु वादिप्रतिवाद्युभयाभ्युपगतः कथानुकूलोर्थोपि सर्वतन्त्रसिद्धान्तः इति वदन्ति ( गौ० वृ० १।१।२८ ) ।

**सर्वनाम**—[ क ] स्वोच्चारणानुकूलबुद्धिप्रकारविशिष्टम् । अत्र त्वं तदादिपदम् । अत्र त्यदादिसर्वनाम्नः शक्तिस्तु स्वोच्चारणानुकूलबुद्धिप्रकारावच्छिन्नविषयकत्व—स्वजन्यत्व—एतदुभयसंबन्धेन तदादिसर्वनामप्रकारक-

बोधविषयकः संकेतः ( ग० शक्ति० पृ० ७३ ) । त्यद् तद् यद् एतद् इदम् अदस् इत्यादयः त्यदादयः । अत्र च सर्वनामपदेन सर्वनामसंज्ञायुताः त्यत्तदादयः शब्दा गृह्यन्ते । अतो न काप्यनुपपत्तिः । सर्वनामसंज्ञाविधायकसूत्रं च सर्वादीनि सर्वनामानि ( पाणि० १।१।२७ ) इति । [ख] वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नम् ( ग० शक्ति० पृ० ६५ ) । यथा सोयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ( हनु० नाट० श्लो० १ ) इत्यादौ तच्छब्दार्थः ।

**सर्वपापहरा**—एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिभिर्मिश्रा तिथिः प्रोक्ता सर्वपापहरा स्मृता ॥ ( पु० चि० पृ० १८२ ) ।

**सर्वपृष्ठः**—षट्सु अहःसु क्रमेण रथंतरम् बृहद्वैरूपम् इत्यादिभिः षड्भिः सामभिः पृष्ठस्तोत्रं निष्पादितम् । तानि सर्वाणि पृष्ठसामानि यस्मिन्विश्वजिति सोयं सर्वपृष्ठः ( जै० न्या० अ० १० पा० ६ अधि० ५ ) ।

**सर्वभावाधिष्ठातृत्वम्**—सर्वेषां व्यवसायाव्यवसायात्मकानां गुणपरिणामरूपाणां भावानां स्वामिवदाक्रमणम् ( सर्व० सं० पृ० ३४५ पात० ) ।

**सर्वम्**—१ [क] स्वार्थान्वयितावच्छेदकधर्मव्यापकतादृशधर्मावच्छिन्नान्वयितावच्छेदकावच्छिन्नव्याप्यपर्याप्तिकधर्मावच्छिन्नम् । यथा सर्वे घटा रूपवन्तः इत्यादौ सर्वपदार्थः ( ग० शक्ति० पृ० ९६ ) । सर्वपदप्रवृत्तिनिमित्तं च उद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिको धर्मः । तथाविधश्च धर्मः सर्वे घटा रूपवन्तः इत्यादौ घटनिष्ठयावत्त्वमेव । तस्य व्यासज्यवृत्तितया तत्पर्याप्तेर्घटत्वव्यापकत्वात् रूपादिव्याप्यत्वात् । शब्दाद्घटत्वादिव्यापके रूपादिव्याप्यत्वलाभे तयोरपि व्याप्यव्यापकभावोर्थाल्लभ्यत इति । क्वचित् अशेषत्वादि क्वचित् यावत्त्ववदनेकत्वं च प्रवृत्तिनिमित्तम् ( ग० शक्ति० पृ० ९३ ) । अत्र च सर्वशब्दः स्वसमभिव्याहृतपदार्थतावच्छेदकव्यापकत्वं तादृशपदार्थान्तरे बोधयति इति नियमः । एवं च सर्वे घटा रूपवन्तः इति वाक्यात् घटत्वव्यापकं रूपवत्त्वम् इति शाब्दबोधो जन्यत इति बोध्यम् ( दि० ४ पृ० १७९ ) । अत्र अन्वयित्वं चोद्देश्यविधेयभावविशेष्यविशेषणभावसाधारणम् ( ग०

न्यु० पृ० ९६ ) । [ ख ] प्राञ्चस्तु व्यापकत्वावच्छिन्नमित्याहुः ( दि० १ पृ० १७९ ) । अत्रेदमवधेयम् । योगसिद्ध्यधिकरणे हि यः पुत्रकामो यः पशुकामः ( श्रुतिः ) इत्यादिना यज्ञक्रतूनुपक्रम्य एकस्मै वा कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो दर्शपूर्णमासौ इत्याम्नातम् । तत्र सर्वेभ्यो दर्शपूर्णमासौ ( कर्तव्यौ ) इत्यादौ सर्वान्तर्गतघटोद्देशेन दर्शपूर्णमासाद्यसंभवेन सर्वशब्दस्य संकोचः प्रकृतनिरपेक्षपुत्रादितत्तत्फलपरत्वरूपः कार्यः इति । [ ग ] बुद्धिविषयो यावत्त्वावच्छिन्नः समूहः सर्वपदार्थः इति शाब्दिका वदन्ति । [ घ ] संपूर्णम् सकलं च इति काव्यज्ञा आहुः । २ वेदान्तिनस्तु विष्णुः इत्याहुः । तत्रोक्तम् असतश्च सतश्चैव सर्वस्य प्रभवाप्ययौ । सर्वस्य सर्वदा ज्ञानात्सर्वमेतं प्रचक्षते ॥ ( विष्णुपु० ) इति ।

**सविकल्पकम्**—( प्रत्यक्षम् ) [ क ] विशिष्टग्रहणम् । [ ख ] वैशिष्ट्यावगाहि सप्रकारकं वा ज्ञानम् ( न्या० म० पृ० ४ ) ( त० सं० ) । यथा डित्थोयम् ब्राह्मणोयम् श्यामोयम् पाचकोयम् इति प्रत्यक्षज्ञानम् ( त० सं० ) । अत्र वैशिष्ट्यावगाहि इत्यस्य नामजात्यादिविशेषणविशेष्यसंबन्धावगाहि ज्ञानमित्यर्थः ( त० दी० १ पृ० १८ ) ( त० कौ० ) । सप्रकारकमित्यस्य किंचिन्निष्ठप्रकारताशालि ज्ञानम् इत्यर्थः ( त० प्र० १ ) । सविकल्पकमित्यत्र विकल्पः प्रकारता । तथा च तल्लक्षणं प्रकारतानिरूपकज्ञानत्वम् इति । अयं भावः । विषयताया ज्ञाननिरूपितत्वाज्ज्ञानस्य च विषयतानिरूपकत्वेन प्रकारतानिरूपकज्ञानत्वं तल्लक्षणम् । एवम् विशेष्यतानिरूपकज्ञानत्वम् संसर्गतानिरूपकज्ञानत्वम् इत्यपि लक्षणानि संभवन्ति । निर्विकल्पके तु अतिरिक्ता तुरीया विषयता स्वीक्रियते । त्रिविधविषयतामध्य एकापि तत्र नास्ति ( न्या० बो० १ पृ० ११ ) ( वाक्य० १ पृ० १२ ) ( नील० १ पृ० १८ ) । [ ग ] माध्ववेदान्तिनस्तु विशिष्टाकारगोचरं प्रत्यक्षम् । तदष्टविधम् तत्र ( १ ) द्रव्यविकल्पको यथा दण्डी इति । ( २ ) गुणविकल्पको यथा शुक्लः इति । ( ३ ) क्रियाविकल्पको यथा गच्छति

इति । (४) जातिविकल्पको यथा गौः इति । (५) विशेषविकल्पको यथा विशिष्टः परमाणुः इति । (६) समवायविकल्पको यथा पटसमवायिनस्तन्तवः इति । (७) नामविकल्पको यथा देवदत्तः इति । (८) अभावविकल्पको यथा घटाभाववद्भूतलम् इति इत्याहुः (प्र० प० पृ० ११)। [घ] मायावादिवेदान्तिनस्तु ज्ञातृज्ञेयभेदादिसहितं ज्ञानं सविकल्पकम् इत्याहुः । [ङ] योगशास्त्रज्ञास्तु संप्रज्ञाताख्यः समाधिविशेष इत्याहुः । अत्र सौगताः कीर्तिदिङ्नागादयो नास्तिकास्तु सविकल्पकं न प्रत्यक्षम् न च प्रमाणम् । तस्य घटत्वादिरूपालीकोपरक्तत्वाद्वन्ध्यापुत्रज्ञानवत् । निर्विकल्पकं तु स्वलक्षणवस्तूपरक्तत्वात्स्यादेव प्रत्यक्षम् प्रमाणं च इत्याहुः (वै० उ० ८।१।२) (सि० च० १ पृ० २२)। तेषां सौगतानामयमाशयः । सविकल्पकं हि न प्रमाणम्। तथा हि । अभिलापसंसर्गयोग्यप्रतिभासं हि तत् । न ह्यभिलापेन नाम्ना संभवत्यर्थस्य संबन्धः । येन घटः इति पटः इति वा नामानुरञ्जितः प्रत्ययः स्यात् । न च जात्यादि परमार्थसत् । येन तद्वैशिष्ट्यं विषयेषु इन्द्रियेण गृह्येत । न च सतः स्वलक्षणस्यासता संबन्धः संभवति । न चासदिन्द्रियगोचरः । तस्मात् इन्द्रियेणालोचनं जन्यते । आलोचनमहिम्ना च सविकल्पकमुत्पद्यमानं तत्रार्थे प्रवर्तयत् प्रत्यक्षम् इति प्रमाणम् इति चोच्यते (वै० उ० ८।१।२ पृ० ५८३) इति ।

**सविचारः**—(समाधिः) यदा तन्मात्रान्तःकरणलक्षणं सूक्ष्मं विषयमालम्ब्य देशाद्यवच्छेदेन भावना प्रवर्तते तदा सविचारः (सर्व० सं० पृ० ३५७ पात०)।

**सवितर्कः**—(समाधिः) यदा पृथिव्यादीनि स्थूलानि विषयत्वेनादाय पूर्वापरानुसंधानेन शब्दार्थोल्लेख्यसंभेदेन च भावना प्रवर्तते स समाधिः सवितर्कः (सर्व० सं० पृ० ३५६ पात०)।

**सव्यभिचारः**—(हेत्वाभासः दुष्टहेतुः) अनैकान्तिकः सव्यभिचारः (गौ० १।२।५)। अत्र व्युत्पत्तिः व्यभिचारेण सहितः सव्यभिचारः इति । साधारणस्थले व्यभिचारश्च हेतुनिष्ठसाध्याभाववद्वृत्तित्वादिरूपः

(वाक्य० २ पृ० १६) । साध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वादिरूपो वा ( ग० २ हेत्वा० सा० )। असाधारणस्थले साध्यव्यापकीभूताभावप्रतियोगित्वम्। अनुपसंहारिस्थले तु अत्यन्ताभावाप्रतियोगिसाध्यकत्वादि व्यभिचारः इति । सव्यभिचारत्वं च साधारण असाधारण अनुपसंहारि एतदन्यतमत्वम् ( मु० २ पृ० १५९ ) ( नील० २ पृ० २५ ) ( न्या० बो० २ पृ० १७ ) । व्यभिचार एकत्राव्यवस्था । सह व्यभिचारेण वर्तत इति सव्यभिचारः । निदर्शनम् नित्यः शब्दः अस्पर्शत्वात् । स्पर्शवान् कुम्भः अनित्यो दृष्टः । न च तथा स्पर्शवान् शब्दः । तस्मादस्पर्शत्वान्नित्यः शब्द इति । दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ दृश्येते । स्पर्शवांश्चाणुर्नित्यश्चेति । आत्मादौ च दृष्टान्ते उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः इति । अस्पर्शत्वादिति हेतुर्नित्यत्वं व्यभिचरति अस्पर्शा बुद्धिरनित्या चेति । एवं द्विविधेपि दृष्टान्ते व्यभिचारात् साध्यसाधनभावो नास्तीति लक्षणाभावादहेतुरिति (गौ० वात्स्या० १।२।५)। सव्यभिचारपदं साधारणमात्रे प्रयुञ्जतीदानींतनाः ( दीधि० सव्य० ) । शिष्टं विभागादिकं तु अनैकान्तिकशब्दव्याख्यानावसरे संपादितम् इति विरम्यते । सव्यभिचारत्वं च हेतुदोषः। तच्च साध्यसंदेहजनकोभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वम्। अत्रायमर्थः । उभयकोटी साध्यतदभावौ । तदुपस्थापकतावच्छेदकं च रूपं साधारणत्वादित्रितयम् । तज्ज्ञाने सति पक्षः साध्यवान्न वा इति संशय उदेति इति । अथ वा यथाकथंचित् कोटिद्वयोपस्थितिः ( साध्यतदभाव एतद्द्वयोपस्थितिः ) स्मृत्यनुभवसाधारणी संदेहजननी । नियामकं तु साधारण्यादिविशिष्टधर्मवत्ताज्ञानम् । अत एव धारावाही संदेहः इति मते धर्मितावच्छेदकविशिष्टे धर्मिणि यद्रूपविशिष्ट(धर्मवत्ता) ज्ञानं साध्यसंदेहजनकम् तद्रूपवत्त्वम् । पर्यवसितार्थस्तु तद्धर्मपर्याप्तधर्मितावच्छेदकताकयत्किंचित्संशयनिरूपितायां जनकतायामवच्छेदकीभूता या तद्धर्मनिष्ठधर्मितावच्छेदकतानिरूपकप्रकारता तन्निरूपितावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वम् ( ग० सव्य० ) इति । इदं च साध्यतदभावसाहचर्यावच्छिन्नकारणतामतमङ्गीकृत्योक्तम् इति विज्ञेयम् । यद्वा यद्रूप-

विशिष्टत्वेन गृहीतस्य धर्मस्य धर्मिवृत्तिताज्ञानं साध्यसंदेहजनकम् तद्वत्त्वम् इति। पर्यवसितार्थस्तु यत्किंचित्संशयजनकतावच्छेदकवैशिष्ट्यघटकविशेष्यतानिरूपितप्रकारतापर्याप्त्यधिकरणधर्मवत्त्वम् (ग० सव्य०) इति। इदं च कोटिद्वयसहचरितत्वादिना ज्ञातस्योर्ध्वत्वादेरूर्ध्वत्वत्वादिना धर्मिणि ज्ञानमेव संदेहजनकम् न तु तदानीं साहचर्यादिज्ञानमपेक्ष्यते इति मतमभिप्रेत्योक्तम् इति विज्ञेयम् (दीधि० २ सव्य० पृ० १९०)। तच्च सव्यभिचारित्वं साधारणत्वादित्रितयम् (म० प्र० २ पृ० २५) (चि० २ सव्य० पृ० ८५)। अत्र त्रितयं तु साधारणत्वम् असाधारणत्वम् अनुपसंहारित्वं चेति ज्ञेयम्। अथ वा विरुद्धान्यपक्षवृत्तित्वे सत्यनुमितिविरोधिसंबन्धाव्याप्तिः सव्यभिचारत्वम् (चि० २ सव्य० पृ० ८५)। यथा शब्दो नित्यः शब्दत्वात् इत्यादौ साध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यादि। विरुद्धान्येत्यादिदलद्वयस्य निष्कृष्टार्थस्तु यद्धर्मिवृत्तित्वं हेतोर्ज्ञायते तत्रैवानुमितिविरोधि यद्रूपं तद्वत्त्वम् इति (दीधि० २ सव्य० पृ० १९२)। यद्वा साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वम् (चि० २ सव्य० पृ० ८६)। केचित्तु साध्यसंदेहजनककोटिद्वयोपस्थापकपक्षधर्मताज्ञानविषयत्वे सति हेत्वभिमतत्वं सव्यभिचारत्वम् इत्याशशङ्किरे। तदर्थस्तु साध्यसंदेहजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानविषयत्वम्। धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं साध्यसंदेहजनकम् तद्रूपावच्छिन्नत्वम्। तच्च रूपं साधारणत्वादि (दीधि० २ सव्य० पृ० १८५) इति। साधारणः अन्वयेन असाधारणः व्यतिरेकेण अनुपसंहारी पक्ष एवोभयसाहचर्येण कोटिद्वयोपस्थापकः (चि० सव्य० पृ० ८४)। दीधितिकृतस्तु विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्याप्तिग्रहविरोधितावच्छेदकं रूपम्। तच्च रूपं साधारणत्वम् असाधारणत्वम् अनुपसंहारित्वं च इति प्राहुः। व्याप्तिश्चान्वयतो व्यतिरेकतश्च नानारूपा। प्रातिस्विकरूपेणोपादाय तावदवगाही ग्रहो वाच्यः। साध्यसाधनयोरप्रसिद्धेरसिद्धिभेदस्य वारणाय अविरोधिनः इत्यन्तम्। व्याप्तिग्रहप्रतिबन्धलक्षणैकप्रयोजनकत्वेन साधारणादीनामेकहेत्वाभासत्वम्। साधार-

णेन व्यापकत्वस्याव्यभिचारितत्वस्य वा असाधारणेन सामानाधिकरण्यस्य अनुपसंहारिणा च व्यतिरेकव्याप्तेर्ग्रहस्य प्रतिबन्धात् साधारणादौ लक्षणसमन्वयः ( दीधि० २ पृ० २०३ ) ।

**सव्यम्**—१ वामभागः ( अमरः ) । यथा यत्सव्यं पाणिं पादौ प्रोक्षति शिरश्चक्षुषी श्रोत्रे हृदयमालभ्य ( श्रुतिः ) इत्यादौ वामशब्दस्यार्थः । २ प्रतिकूलम् । ३ विष्णुः ( शब्दमा० ) ।

**सश्रूकः**—आस्तिकः ( मिताक्षरा अ० २ श्लो० ११२ ) ।

**सह**—( अव्ययम् ) १ [ क ] साहित्यम् । तच्च स्वान्वयितत्तत्कर्तृत्वादिकारकावच्छिन्नायाः समानकर्तृकायाः समभिव्याहृतक्रियायाः समानकालीनत्वम् । यथा पुत्रेण सहागतः सूपेन सार्धं भुक्तः चक्रेण साकं दण्डेन जनितः पुत्रेण समं मित्राय दानम् इत्यादौ सहाद्यव्ययार्थः साहित्यम् । पुत्रेणेत्यत्र सहार्थैकदेशे कर्तृत्वादिकारके स्वप्रकृत्यर्थस्याधेयत्वं तृतीयया बोध्यते । तेन पुत्रवृत्तिकर्तृताकगतिकालीनगतिकर्तृतावान् इत्याकारो बोधः । सूपेनेत्यत्र सूपनिष्ठकर्मताकभोजनकालीनभोजनकर्मतावान् ओदनः इति बोधः । चक्रेणेत्यत्र चक्रनिष्ठकरणताकोत्पत्तिकालीनदण्डनिष्ठकरणताकोत्पत्तिमान् घटः इति बोधः । पुत्रेण सममित्यत्र पुत्रसंप्रदानताकदानकालीनं मित्रसंप्रदानताकं दानम् इत्याकारो बोधः । अत्रेदं विज्ञेयम् । पटः पटत्वेन सह भासते इत्यादौ पटत्वनिष्ठविषयतायाः समानकालीनत्वमिव समानप्रतियोगिकत्वमपि सहशब्दार्थोऽङ्गीकर्तव्यः । विभिन्नज्ञानीयविषयतायां तादृशाप्रयोगात् ( श० प्र० श्लो० ९४ टी० पृ० १२० ) इति । इदं च बोध्यम् । तुल्यवदेकक्रियान्वयित्वं साहित्यम् इति प्रवादस्यापि एककारकान्वयित्वेन तुल्ययोरेकजातीयक्रिययोरन्वयित्वं समानकालीनत्वम् इत्यत्र तात्पर्यम् ( श० प्र० श्लो० ९४ टी० पृ० ११९ ) । भारमनुद्वहन्तं पुत्रमनूद्वहन्त्यामपि गर्दभ्यां एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् । सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ॥ इत्यादौ सह वर्तमाना इत्यध्याहारात् वर्तमानत्वक्रियामादायैव साहित्यबोधः इति वदन्ति ( ग० व्यु० का० २

पृ० ९१) (ल० म०) । अथ वा साहित्यं सहभावः । स च सामानाधिकरण्यम् । यथा पत्न्या सहाग्निमादध्यात् घटेन सह पटवद्भूहम् इत्यादौ सहशब्दार्थः । अत्र पत्नीकर्तृकस्याग्न्याधानस्यालौकिकत्वेन तत्समानकालीनत्वस्य प्रापयितुमशक्यत्वात् सामानाधिकरण्यरूपसहभावमात्रं सहशब्दार्थः स्वीकृतः (श० प्र० श्लो० ९४ टी० पृ० १२१)। [ख] समभिव्याहृतपदोपस्थाप्यक्रियाकालः । तस्य क्रियान्वयिनि नामार्थ एवान्वयः । तादृशकालविशिष्टे नामार्थे क्रियान्वये च क्रियायामपि तादृशकालावच्छिन्नत्वं भासते । उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य व्युत्पत्तिसिद्धत्वात् । अतः क्रियाद्वयसमानकालीनत्वलाभः (ग० व्यु० कार० ३ पृ० ९०) इति । एवम् आलापाद्गात्रसंस्पर्शान्निश्वासात्सहभोजनात् (स्मृतिः) इत्यत्र एकपङ्क्तिः सहशब्दार्थः । क्वचिच्च याजनं योनिसंबन्धं स्वाध्यायसहभोजनम् । सद्यः पतति कुर्वाणः पतितेन न संशयः ॥ (स्मृतिः) इत्यादौ एकदैकपात्रभोजनाद्यपि सहार्थो ज्ञेयः । अत्रेयं व्यवस्था । सहशब्दार्थस्तत्क्रियाकालः । स च क्वचित् तत्क्रियान्वयिप्रथमान्तपदार्थेन्वेति । क्वचिच्च समभिव्याहृतक्रियायाम् । यथा सपुत्र आगच्छति इत्यस्य पुत्रेण सहागच्छति यः इति विग्रहात् प्रथमान्तान्यपदार्थ एव पुत्रागमनकालान्वयः न तु क्रियायाम् । पुत्रेण सह नागच्छति इत्यादौ च क्रियायामेव तादृशसहार्थान्वयः इति पुत्रागमनकालीनागमनकर्तृत्वाद्यभावः प्रथमान्तार्थे प्रतीयत इति । भारमनुद्वहन्तं पुत्रमनूद्वहन्त्यामपि गर्दभ्यां सहैव दशभिः पुत्रैर्भारं वहति गर्दभी इत्यादौ सह वर्तमाना इत्यध्याहाराद्वर्तमानत्वक्रियामादायैव साहित्यबोध इति वदन्ति (ग० व्यु० कार० ३ पृ० ९१)। [ग] क्वचिच्च क्रियासमानकालीनक्रिया । यथा पुत्रैः सहागतः पिता इत्यादौ सहशब्दार्थः । अत्र क्रियायाः कर्तृत्वादिसंबन्धेन पुरुषादावन्वयः । तादृशसंबन्धेन तद्विशिष्टे च आगतः आगच्छति इत्यादिपदोपस्थाप्यागमनकर्तृत्वादीनामन्वये न व्युत्पत्तिविरोधः । विधेयस्योद्देश्यतावच्छेदकप्रकाराभेदविरहात् इति । अत्र गौणक्रियान्वयिनि तृतीया सहार्थयोगे सहयुक्तेप्रधाने (पाणि० २।३।१९) इत्यनेन । साहित्यप्रतियोगिवाचकपदात् तृतीया

इति फलितोर्थः ( ग० व्यु० का० ३ पृ० ८९ ) । अयमर्थः । पुत्रेण सहागतः पिता इत्यादौ पितुः क्रियासंबन्धः साक्षाच्छब्देनोच्यते पुत्रस्य तु प्रतीयमानः इति पुत्रस्याप्राधान्यम् इति वैयाकरणा आहुः ( काशिका २।३।१९ ) । [ घ ] तत्क्रियाकालीनत्वम् । यथा शिष्येण सहागतो गुरुः इत्यादौ । अत्र कर्तृत्वं तृतीयार्थः । तस्य सहशब्दार्थैकदेशक्रियाया-मन्वयः । सहशब्दार्थस्य तादृशकालीनत्वस्य च धात्वर्थेन्वयः । इत्थं च शिष्यकर्तृकागमनकालीनागमनकर्ता गुरुः इति बोधः ( म० प्र० पृ० ६ ) । [ ङ ] समभिव्याहृतपदोपस्थाप्यो यत्किंचिद्धर्मः । यथा शिष्येण सह गुरुर्ब्राह्मणः पुत्रेण सह पिता सुन्दरः इत्यादौ सहशब्द-स्यार्थः । अत्र सहशब्दार्थो ब्राह्मण्यसौन्दर्यादि । तस्य समानकालीनत्व-संबन्धेन ब्राह्मणसुन्दरादिपदार्थैकदेशेन्वयः । परे तु सहार्थः साहित्यम् एकधर्मान्वयित्वरूपम् । तृतीयार्थो वृत्तित्वम् संख्यामात्रं वा । तथा च शिष्यसाहित्यवान् गुरुर्ब्राह्मणः इत्यादिबोधः इत्याहुः ( काव्या० पृ० ८ ) । २ शाब्दिकास्तु सह विद्यमानत्वम् । यथा सहैव दशभिः पुत्रैर्भारं वहति गर्दभी इत्यादौ सहशब्दार्थ इत्याहुः ( ल० म० ) । ३ साक-ल्यम् । ४ सादृश्यम् । ५ यौगपद्यम् । ६ समृद्धिः । ७ संबन्धः ( मेदि० ) । ८ सामर्थ्यम् ( शब्दमा० ) ।

**सहकारः**—१ सहकर्मकरणम् ( सहकारित्वम् ) । २ सुगन्धिराम्रः इति काव्यज्ञा आहुः ( अमरः २।४।३३ ) ।

**सहकारित्वम्**—स्वभिन्नत्वे सति स्वकार्यकारित्वम् । यथा दण्डस्य मृत्तिका-कार्यघटकारित्वम् ।

**सहचरितत्वम्**—१ सामानाधिकरण्यम् । २ क्वचित् व्याप्तिमत्त्वम् । यथा साध्येनासहचरितो व्याप्यत्वासिद्धः इत्यादौ सहचरितत्वशब्दार्थो व्याप्तिः ।

**सहचारः**—सामानाधिकरण्यम् ( दीधि० २ ) ।

**सहायता**—अन्यकर्तृकक्रियायामप्राधान्येनान्वयित्वम् । यथा देवदत्तो यज्ञ-दत्तेन सह तण्डुलं पचति इत्यादौ यज्ञदत्तस्य पचनक्रियायां सहायता ।

**सहावस्थायित्वम्**—एकदेशैकक्षणावच्छिन्नसामानाधिकरण्यम् । यथा घट-पटयोर्ज्ञानेच्छयोश्च सहावस्थायित्वम् ।

**सहितत्वम्**—साहित्यम् ।

**सहृदयः**—१ प्रशस्तचित्तः । यथा व्यासगौतमकणादादयः सहृदयाः । २ आलंकारिकास्तु काव्यार्थभावनाधीनपरिपक्वबुद्धिः । यथा काव्यं यथायोगं कवेः सहृदयस्य च यश आनन्दादि करोति ( काव्यप्र० १।२ ) इत्यादौ परिष्कुर्वन्त्यर्थान् सहृदयधुरीणाः कतिपये (रसगङ्गाधरः) इत्यादौ च सहृदयशब्दस्यार्थ इत्याहुः ।

**सांकर्यम्**—१ ( दोषः ) संकरः । २ एकत्र मेलनम् इति पदार्थविज्ञानवन्त आहुः ।

**सांख्यम्**—१ सम्यग्दर्शनम् । यथा एषा तेभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ( गीता० २।३९ ) इत्यादौ सांख्यशब्दस्यार्थः । तदुक्तम् शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते ( व्यासस्मृतिः ) ( गीता मध्वभा० अ० २ श्लो० ३९ ) इति । २ [क] सम्यग्दर्शनप्रतिपादकं शास्त्रम् । यथा देवहूतीं प्रति भगवतोपदिष्टं सांख्यदर्शनम् ( भक्तियोगः ) ( भाग० स्क० ३ अ० २६–२७ ) । अत्रार्थे व्युत्पत्तिः संख्यायते इति संख्या सम्यग्ज्ञानम् । तत्संबन्धि सांख्यम् ( अण् ) इति । एतत्सांख्यस्य प्रवर्तको देवहूतीपुत्रः श्रीभगवदवतारः कपिलः श्रीमद्भागवतादौ प्रसिद्धः । तदुक्तम् कपिलस्तत्त्वसंख्याता भगवानात्ममायया । जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥ ( भाग० स्क० ३ अ० २५ श्लो० १ ) इति । अत्रोक्तम् पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् । प्रोवाचासुरये सांख्यतत्त्वग्रामविनिर्णयम् ॥ ( भाग० स्क० १ अ० ३ ) इति । अन्यच्च सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते ( मात्स्यपु० अ० ३ ) इति । [ख] सांख्योक्तो योगः । भगवदुक्तो योगस्तु योग आध्यात्मिकः पुंसामतो निःश्रेयसाय मे । अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य वै ॥ ( भाग० ३।२५।१३ ) इत्यादिना ग्रन्थेनोक्त इति विज्ञेयम् । एवम् पतञ्जलिप्रणीतस्य योगशास्त्रस्यैकाध्यायात्मकपादचतुष्टयस्यापि सांख्य-

प्रवचनसंज्ञा ज्ञेया ( सांख्य० भा० १।१ प्रस्ता० पृ० ७ ) । [ ग ] नास्तिककपिलप्रणीतो दर्शनविशेषः । अत्रेदं बोध्यम् । नास्तिककपिलेन स्वयं पूर्वप्रणीतस्य सांख्यप्रवचनसंज्ञकस्य तत्त्वसमासाख्यस्य द्वाविंशति- ( २२ ) संख्यकस्य संक्षिप्तसूत्रस्य विस्तररूपेण षडध्यायात्मकः अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः इत्यारभ्य यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः इत्येतत्पर्यन्तः सूत्रोपनिबद्धो ग्रन्थो विरचितः इति । नास्तिककपिलप्रणीतसांख्यस्य पतञ्जलिप्रणीतयोग- शास्त्रस्य चानुपादेयत्वमुक्तं भारते मोक्षधर्मेषु सांख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ॥ ( गीता० मध्वभा० अ० २ श्लो० ३९ ) इति । सांख्यमतप्रवर्तकश्च आस्तिकनास्तिकभेदेन द्विविधः । तत्रास्तिकौ द्वौ देवहूतीपुत्रः कपिलः सेश्वरसांख्यो योगशास्त्रप्रवर्तकः पतञ्जलिनामा ब्राह्मणश्च । नास्ति- कस्तु निरीश्वरसांख्यो देवहूतीपुत्रादन्यः कपिलनामा कश्चिद्ब्राह्मणः । देवहूतीपुत्रस्तु सांख्यप्रवर्तकः श्रीवासुदेवावतार आस्तिक एव । ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् ( श्वे० ५।२ ) इति श्रुतेः । सिद्धानां कपिलो मुनिः इति स्मृतेश्च । स च राजयोगाख्यमेकाध्यायं पादचतुष्टयात्मकं अथ योगानुशासनम् इत्यारभ्य पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चिच्छक्ति- रिति इत्येतत्पर्यन्तं सूत्रोपनिबद्धं योगशास्त्रं प्रणिनाय इति । अथ कपिल- मतं संक्षेपेणोच्यते । सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः । सा चैकैव । पुरुषास्तु परं भिद्यन्ते । ते च कूटस्था नित्या अपरिणामिनो नित्य- चैतन्यस्वभावाः । ते च पङ्गवः । अपरिणामित्वात् । प्रकृतिस्त्वन्धा । जडत्वात् । यदा विषयभोगेच्छा प्रकृतिपुरुषभेददिदृक्षा च प्रकृतेर्भवति तदा सा पुरुषोपरागवशात् परिणमते । तस्याश्चाद्यः परिणामो बुद्धि- रन्तःकरणविशेषः । बुद्धिरेव महत्तत्त्वम् । सा च बुद्धिर्दर्पणवन्निर्मला । तस्याश्च बहिरिन्द्रियप्रणाडिकया विषयाकारो यः परिणतिभेदो घटः इति पटः इति तत् ज्ञानम् वृत्तिः इति चाख्यायते । स्वच्छायां बुद्धौ वर्तमानेन ज्ञानेन चैतन्यस्य पुरुषस्य भेदाग्रहात् अहं जानामि इति

योभिमानविशेषः सैवोपलब्धिः । स्रक्चन्दनादिविषयसंनिकर्षादिन्द्रियप्रणाडिकयैव सुखदुःखाद्याकारो बुद्धेरेव यः परिणामविशेषः स प्रत्ययः। अत एव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माधर्माः सर्वे एव बुद्धेः परिणामविशेषाः सूक्ष्ममात्रया प्रकृतावेव वर्तमाना अवस्थाभेदादाविर्भवन्ति तिरोभवन्ति च । पुरुषस्तु पुष्करपलाशवन्निर्लेपः प्रतिबिम्बते परं बुद्धौ ( वै० उ० ८।१।१ पृ० ३५६ ) इति । तन्मते तत्त्वानि पञ्चविंशतिः मूलप्रकृतिः १ महत्तत्वम् २ अहंकारः ३ पञ्चतन्मात्राणि शब्दस्पर्शरूपरसगन्धाः ४–८ पञ्च भूतानि पृथिव्यप्तेजोवाय्वाकाशाः ९–१३ पञ्च ज्ञानेन्द्रियाणि चक्षुस्त्वग्रसनघ्राणश्रोत्राणि १४–१८ पञ्च कर्मेन्द्रियाणि पायूपस्थपाणिपादवाचः १९–२३ मनः २४ पुरुष-२५ श्चेति ( सांख्यसू० अ० १ सू० ६१ )। तत्र चतुर्धा विभागः केवला प्रकृतिः केवला विकृतिः प्रकृतिविकृत्युभयम् अनुभयं चेति । तद्यथोक्तम् मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ (सांख्यकारिका ३) इति । एतन्मते परिणामवादः । निरीश्वरसांख्यमते परमात्मा न स्वीक्रियते । अत्र शिष्टं तु मत्कृते षड्दर्शनसारनिरुक्तिनामके प्राकृतभाषाबद्धे चोपन्यासे दृश्यम् । २ सांख्यशब्देन ज्ञानवानप्युच्यते। अत्रार्थे संख्या ज्ञानम् तद्वान् संख्यः (अच् ) स एव सांख्यः इति व्युत्पत्तिर्ज्ञेया । तदुक्तं महाभारते संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते । चतुर्विंशतितत्त्वानि तेन सांख्याः प्रकीर्तिताः ॥ ( सांख्यभा० पृ० ८ ) इति ।

**सांवादिकः**—संवाददाता । स च नैयायिकः ( जटा० ) ( वाच० ) ।

**सांसिद्धिकम्**—( द्रवत्वम् ) स्वभावनिर्वृत्तम् । निमित्तान्तराजन्यमित्यर्थः। यथा जलनिष्ठं द्रवत्वं सांसिद्धिकम् । हिमादीनां घनीभावः कारणविशेषेण । द्रवीभावस्तु सांसिद्धिकः । घृतादीनां तु घनीभावः सांसिद्धिकः । द्रवीभावस्तु नैमित्तिकः इति तयोर्विशेषः । शिष्टं तु द्रवत्वशब्दव्याख्यानादौ दृश्यम् ।

**साकाङ्क्षत्वम्**—१ अन्योन्यविषयाकाङ्क्षाजनकत्वम् ( त० भा० ४ पृ० १८ ) । यथा गामानय इत्यादौ गवानयनयोः साकाङ्क्षत्वम् । नियत-

साकाङ्क्षोदाहरणं तु चैत्रस्य गुरुकुलम् मैत्रस्य दासभार्या ( महाभाष्ये २।१।१ ) इत्यादि । इदं च शाब्दप्रमितौ प्रयोजकम् । अत एव गौरश्वः पुरुषो हस्ती इति घटो घटः इति च निराकाङ्क्षवाक्यान्न शाब्दप्रमितिः इति विज्ञेयम् । अत्र पदानि साकाङ्क्षाणि अर्थाः साकाङ्क्षा वा इति प्रश्ने उत्तरमाह । अर्थास्तावत् स्वपदश्रोतरि अन्योन्यविषयाकाङ्क्षाजनकत्वेन साकाङ्क्षाः इत्युच्यन्ते । तद्द्वारेण तत्प्रतिपादकानि पदान्यपि साकाङ्क्षाणि इत्युच्यन्ते । यद्वा पदान्येव स्वार्थे प्रतिपाद्यार्थान्तरविषयाकाङ्क्षाजनकानि इत्युपचारात् साकाङ्क्षाणि (त० भा० पृ० १८) इति । २ साभिलाषत्वं साकाङ्क्षत्वम् इति काव्यज्ञा आहुः ।

**साकारत्वम्**—१ धर्माश्रयत्वम् ( मू० म० १ ) । यथा अयं घटः इति ज्ञानस्य घटत्वाश्रयत्वम् । स्वनिष्ठप्रकारतानिरूपितप्रकारितासंबन्धेन यत्किंचिद्धर्मविशिष्टत्वम् इत्यर्थः । २ माध्वाः पौराणिकाश्च मूर्तिविशिष्टत्वम् । यथा परमात्मनः साकारत्वम् इत्याहुः । अयं भावः । मध्वमते परमात्मनोप्राकृतज्ञानानन्दादिगुणरूपशरीरस्वीकारेण साकारत्वं संगच्छते । पौराणिकमते तु अपाञ्चभौतिकेच्छास्वीकृतलीलाविग्रहवत्त्वेन तस्य साकारत्वमुपपद्यते इति ।

**साक्षात्**—१ प्रत्यक्षम् । यथा साक्षाद्दृष्टो मया हरिः इत्यादौ । केचित्तु लौकिकप्रत्यक्षम् इत्याहुः । २ [ क ] मायावादिवेदान्तिनस्तु अव्यवहितम् ( बृह० उप० शांकरभा० ३।४।१ ) । तच्च सद्रूपं चैतन्यं इत्याहुः । यथा यत्साक्षादपरोक्षाद्ब्रह्म ( बृह० उप० ३।४।१ ) इति श्रुतौ साक्षात् इत्यस्यार्थः । [ ख ] परंपरासंबन्धराहित्यम् । यथा द्रव्यत्वसाक्षाद्व्याप्या जातिः पृथिवीत्वम् इत्यादौ साक्षात्शब्दार्थः । अत्र साक्षाद्व्याप्यत्वं च तद्व्याप्याव्याप्यत्वे सति तद्व्याप्यत्वं बोध्यम् । यथा च साक्षान्माता साक्षाद्भगिनी इत्यादौ साक्षात्शब्दार्थः । ३ तुल्यम् । यथा साक्षाल्लक्ष्मीरियं वधूः इत्यादौ साक्षात्शब्दार्थः इति काव्यज्ञा आहुः ( अमरः ३।३।२४२ ) ।

**साक्षात्कारः**—[ क ] प्रत्यक्षात्मकं ज्ञानम् ( न्या० म० १ पृ० ३ ) ।

यथा साक्षात्कारे सुखादीनां करणं मन उच्यते ( भा० प० श्लो० ८६ ) इत्यादौ साक्षात्कारशब्दस्यार्थः । अत्र साक्षात्कारत्वं च साक्षात्करोमि इत्यनुगतप्रतीतिसाक्षिको जातिविशेषः ( न्या० म० १ )। [ ख ] लौकिकसंनिकर्षजन्यं प्रत्यक्षं साक्षात्कार इति केचिदाहुः ।

**साक्षात्कारि**—प्रत्यक्षात्मकं ज्ञानम् । यथा साक्षात्कारिप्रमाकरणं प्रत्यक्षम् । साक्षात्कारिणी प्रमा सैवोच्यते येन्द्रियजा ( त० भा० पृ० ५ ) इत्यादौ साक्षात्कारिशब्दस्यार्थः ।

**साक्षात्संबन्धः**—पारम्पर्यरहितः संबन्धः । यथा भट्टमते शब्दो द्रव्यम् साक्षात्संबन्धेनेन्द्रियग्राह्यत्वात् घटवत् ( न्या० म० ४ पृ० ३१ ) इत्यत्र साक्षात्संबन्धशब्दस्यार्थः । अत्र साक्षात्त्वं च इतरपदार्थाप्रतियोगिकत्वे सत्युद्दिष्टपदार्थप्रतियोगिकत्वम् इति । साक्षात्संबन्धश्च संयोग समवाय एतदन्यतरः ( त० प्र० ख० ४ पृ० १२६ ) । एवमन्योपि चिन्त्यः ।

**साक्षी**—१ बोद्धृत्वे सति अकर्ता । यथा कलहे प्रवृत्ते कश्चनान्यः पुरुषः साक्षी । मायावादिवेदान्तिमते उपाध्युपहितं केवलं चैतन्यं साक्षि । यथा साक्षी चेताः केवलो निर्गुणश्च (श्रुतिः ) इत्यादौ जीवेश्वरौ साक्षिणौ इति । तन्मते जीवसाक्षीश्वरसाक्षिद्वैविध्येन प्रत्यक्षज्ञानद्वैविध्यम् । तत्र जीवसाक्षि चान्तःकरणोपहितं चैतन्यम् । तच्च जीवभेदेन नाना । ईश्वरसाक्षि तु मायोपहितं चैतन्यम् । तच्चैकम् । तदुपाधिभूतमायाया एकत्वात् इति । जीवेश्वरयोरन्तःकरणमायारूपतदुपाध्योर्जडत्वेपि तत्तदुपाधिवृत्तिचैतन्यस्यैव अवभासकत्वात्साक्षित्वमुपपद्यते ( वेदा० परि० १ पृ० १८ ) । माध्वमते तु स्वरूपेन्द्रियं साक्षि न तु मनः । अत्र साक्षिलक्षणं तु आत्मस्वरूपज्ञानादिव्यञ्जकत्वमेव इति स्पष्टम् । अत्रोक्तम् प्रत्यक्षं सप्तविधम् साक्षिषडिन्द्रियभेदात् । तत्र स्वरूपेन्द्रियं साक्षीत्युच्यते । तस्य विषया आत्मस्वरूपतद्धर्मज्ञानसुखादयः भावरूपाविद्या मनस्तमश्च ज्ञानसुखाद्याः कालो व्याकृताकाशश्चेत्याद्याः । स च स्वरूपज्ञानादिकं व्यनक्ति ( प्र० च० पृ० १५ )

इति । सांख्यमते तु बुद्धेः साक्षी पुरुषः । अत्र सूत्रम् साक्षात्संबन्धात् साक्षित्वम् (सांख्य० अ० १ सू० १६१)। अत्रार्थे पाणिनिसूत्रम् साक्षाद्द्रष्टरि संज्ञायाम् (पाणि० ५।२।९१) इति। अत्रायं विवेकः । सुषुप्त्याद्यवस्थात्रयसाक्षित्वं तु सांख्यमते बुद्धिनिष्ठसुषुप्त्यादित्रयद्रष्टृत्वमात्रं पुरुषे (सांख्य० अ० १ सू० १४८) (सांख्य० भा० १।१६१)। मायावादिमते तु तादृशबुद्धिवृत्तीनां प्रकाशनम् (वेदा० प०) इति । तदुक्तम् जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः । तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः ॥ (सांख्य० भा० अ० १ सू० १४८)। मध्वमतानुयायिनस्तु स्वप्रकाशात्मस्वरूपोनुभवः साक्षी इत्याहुः (वादावली पृ० २२) । व्यवहारशास्त्रज्ञास्तु विवादविषयप्रमाता साक्षी । तत्स्वरूपमुक्तं मनुना समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिद्ध्यति (मनु० अ० ८ श्लो० ७४) इति । साक्षिप्रयोजनमुक्तं नारदेन संदिग्धेषु तु कार्येषु द्वयोर्विवदमानयोः । दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तिदर्शनम् ॥ (वीरमित्रो० अ० २ पृ० १४२) । गौतमेनाप्युक्तम् विप्रतिपत्तौ साक्षिनिमित्ता व्यवस्था इति । स च साक्षी द्विविधः कृतः अकृतश्च । तत्राद्यः साक्षित्वेनार्थिप्रत्यर्थिभ्यां निरूपितः । द्वितीयस्तु ताभ्यामनिरूपितः । पुनश्च कृतस्य लिखितस्मारितयदृच्छाभिज्ञगूढोत्तरसाक्षिभेदेन पञ्चविधत्वम् । अकृतस्य च ग्रामादिभेदेन षड्विधत्वम् । एवं चैकादशविधाः साक्षिणः इत्याहुः । तथा चोक्तं नारदेन ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् । कार्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः ॥ कुल्याः कुलविवादेषु विज्ञेयास्तेपि साक्षिणः (वीरमित्रो० अ० २ पृ० १४४) इति । अत्राधिकं तु नारदोक्तं वीरमित्रोदयादौ द्रष्टव्यम् ।

**सादृश्यम्**—[क] असाधारणान्यतद्गतबहुधर्मवत्त्वम् (चि० ३ पृ० ३-४)। यथा चन्द्रवन्मुखम् घटसदृशः पटः इत्यादौ मुखादावाह्लादकत्वादिना चन्द्रादिसादृश्यम् (मु० १) (चि० ३ पृ० ४) । तदुक्तम् सामान्यान्येव भूयांसि गुणा-(तुल्या)-वयवकर्मणाम् । भिन्नप्रधानसामान्य-

व्यक्तं सादृश्यमिष्यते ॥ ( चि० ख० ३ पृ० २ ) इति । अत्र विप्रतिपत्तिः सादृश्यं च सप्तपदार्थातिरिक्तं वा न वा इति । तत्र सादृश्यं सप्तपदार्थातिरिक्तम् इति मीमांसकादय आहुः । तत् तदतिरिक्तः पदार्थो न भवति इति नैयायिकाः प्राहुः ( चि० ख० ३ ) । तत्र मीमांसकमते सादृश्यस्यातिरिक्तत्वे प्रमाणं च सादृश्यं न षड्भावेष्वन्तर्भवति । व्यतिरेकित्वे सति सामान्येतरवृत्तित्वे च सति सामान्यवृत्तित्वात् अभाववत् इति । सादृश्यमभावेपि नान्तर्भवति भावत्वेन प्रतीयमानत्वात् इत्यनुमानम् । तेन सादृश्यं क्लृप्तसप्तपदार्थातिरिक्तं सिद्ध्यति इति । अत्र पदप्रयोजनम् । सामान्यत्वे व्यभिचारवारणाय सामान्येतरवृत्तित्व इति पदम् । प्रमेयत्वे व्यभिचारवारणाय व्यतिरेकित्व इति पदम् । भावत्वे च द्रव्यादिषट्कान्यतमत्वरूपे हेतुमति साध्यस्य सत्वान्न व्यभिचारः इति । सादृश्यस्य सामान्यवृत्तित्वे प्रमाणं तु यथा गोत्वं नित्यम् तथाश्वत्वमपि नित्यम् इति सादृश्यप्रतीतिः । तथा च सादृश्यस्य द्रव्याद्यन्तर्भूतत्वे बाधकमपि यदि सादृश्यं द्रव्यादावन्तर्भूतं तदा द्रव्यादेः सामान्यावृत्तित्वेन यथा गोत्वं नित्यम् तथाश्वत्वम् इत्यबाधितप्रतीतिर्न स्यात् ( दि० १ पृ० २४ ) इति । नव्या अपि सादृश्यमतिरिक्तमेव । न च अतिरिक्तत्वे पदार्थविभागव्याघातः इति वाच्यम् । तस्य पदार्थविभागस्य साक्षात्परंपरया वा तत्त्वज्ञानोपयोगिपदार्थमात्रनिरूपणपरत्वात् । एवम् अधिकरणत्वम् विषयत्वम् प्रतियोगित्वम् इत्यादिकमप्यतिरिक्तः पदार्थः इत्याहुः ( दि० १ पृ० २४—२८ ) । [ ख ] तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । तच्च स्वरूपसंबन्धविशेषः ( त० व० ) । तथा च सादृश्यं नातिरिक्तमिति भावः । तद्भिन्नत्वे सतीत्यस्यार्थस्तु तद्गतभूयोधर्मसदृशधर्मवत्त्वम् । तेन चन्द्रवन्मुखम् इत्यादौ आह्लादजनकत्वरूपसादृश्यघटकजनकताया जनकभेदेन भिन्नतया चन्द्रगताह्लादजनकत्वस्य चन्द्रमात्रवृत्तितया मुखे तदभावेपि न क्षतिः । अत्र चन्द्रवन्मुखम् इत्यादौ धर्मे धर्मसादृश्यं च जनकतात्वादिना विज्ञेयम् । स च धर्मोनुगत एव इति । अवशिष्टं तु तुल्यत्वशब्दार्थे संपादितं तत्र द्रष्टव्यम् । अथ वा तत्र साधारण्येन विद्यमाना ये भूयांसो धर्माः तद्वत्त्वम् इति । अत्र सादृश्यनिरूपकेतिव्याप्ति-

वारणाय तद्भिन्नत्वे सति इति विशेषणं दत्तम् । अनुयोगितासंबन्धविवक्षणे तद्विशेषणं न देयमेव ( दि० १ पृ० २७ ) इति । अत्रायं भावः । अनुयोगितासंबन्धेन तद्गतभूयोधर्मवत्त्वम् इत्येव तत्सादृश्यम् । तद्गतधर्मस्वरूपसंबन्धे तदनुयोगिकत्वानभ्युपगमेनैव सादृश्यप्रतियोगिन्यतिव्याप्तिवारणसंभवात् तद्भिन्नत्वे सति इति विशेषणमनर्थकमेव ( राम० १ पृ० २७ ) इति । अत्रेदं बोध्यम् । सादृश्यवाचकास्तु इवादिनिपाताः सदृशादिनामानि च सन्ति । तत्र इवादिभिर्निपातैः सादृश्यस्याभिधाने प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिकत्वमपेक्षितम् । यथा गौरिव गवयः चन्द्रमिव मुखं पश्यति इत्यादि । तुल्यसादृश्याख्यसंबन्धे चैकस्य प्रतियोगिता अन्यस्यानुयोगिता । तत्र प्रतियोगिन उपमानत्वम् अनुयोगिन उपमेयत्वम् इति । उपमानोपमेयभावस्य द्वयोः संभवेपि प्रसिद्धस्यैवोपमानता । तन्निर्णयादिकं तु कविकल्पलतायां दृश्यम् । सदृशादिनाम्ना तुलोपमातिरिक्तेन सादृश्यस्याभिधाने तु प्रतियोगिपदे तृतीया षष्ठी च स्यात् । यथा पित्रा पितुर्वा सदृशः पुत्रः इति । तुलोपमाभ्यां योगे तु षष्ठी शेषे इति सूत्रेण षष्ठ्येव स्यात् । यथा तुला देवदत्तस्य नास्ति उपमा कृष्णस्य नास्ति इति । पित्रा पितुर्वेत्यत्र षष्ठीविकल्पविधायकं सूत्रं तु तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ( पाणि० २।३।७२ ) इति । साधारणासाधारणविरुद्धधर्मभेदेन सादृश्यं त्रिविधम् ( ल० म० ) ।

**साधकम्**—१ ( हेतुः ) साध्यज्ञापकम् । यथा पर्वतो वह्निमान् धूमात् इत्यादौ पर्वते वह्नेः साधको धूमः । २ साधनकर्ता । यथा साधकतमं करणम् ( पाणि० १।४।४२ ) इत्यादौ कारकविशेषः । ३ सिद्धिकारकः । यथा मन्त्रादिसिद्धिकारकः शिष्टः ( तन्त्र ) । ४ ज्योतिःशास्त्रज्ञास्तु जन्मतारावधिकानि षष्ठपञ्चदशचतुर्विंशनक्षत्राणि इत्याहुः । अत्रोक्तम् जन्मर्संपद्विपत्क्षेमं प्रत्यरिः साधको वधः । मित्रं परममित्रं च जन्मर्क्षाद्गणयेत्त्रिधा ॥ ( ज्यो० त० ) इति ।

**साधकमानम्**—१ *सिद्धिः साध्यवत्तानिश्चयः ( दीधि० २ पक्ष० पृ० १३३ ) । यथा नापि साधकबाधकमानाभावः पक्षत्वम् ( चि० पक्ष० पृ० ३२ ) इत्यादौ साधकमानशब्दस्यार्थः । २ साधकं प्रमाणम् ।*

**साधनम्**—१ ( हेतुः ) सिद्धिजनकम् ( दि० गु० ) । अत्र जनकत्वं च जनकज्ञानविषयत्वम् इति वक्तव्यम् । तेन धूमज्ञानस्यैव सिद्धिजनकत्वेन धूमे सिद्धिजनकत्वाभावेपि न क्षतिः । यथा पर्वतो वह्निमान् धूमात् इत्यादौ धूमः साधनम् । २ [ क ] कारणम् ( मथुरा० ) । यथा घटस्य साधनं दण्डः पटस्य साधनं तन्तुः इत्यादौ साधनशब्दार्थः । अत्र साधनत्वं द्विविधम् साक्षात्साधनत्वं परंपरासाधनत्वं चेति । तत्र साक्षात्साधनत्वं च अव्यवहितपूर्वत्वसंबन्धेन कार्याधिकरणीभूतक्षणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्ध्यनिरूपकधर्मवत्त्वम् । यथा स्वर्गोत्पत्तिं प्रत्यपूर्वस्य साधनत्वम् । परंपरासाधनत्वं च अव्यवहितपूर्वत्वसंबन्धेन कार्याधिकरणीभूतक्षणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्ध्यनिरूपकधर्मावच्छिन्नजनकत्वे सति कार्यनियतपूर्ववर्तितावच्छेदकान्यथासिद्ध्यनिरूपकधर्मवत्त्वम् ( मथुरा० ) । यथा स्मृतिं प्रत्यनुभवस्य साधनत्वम् । [ ख ] इतरकारणकलापे यदतिशयितं कारणम् तत्साधनम् इति मध्वमतानुयायिन आहुः ( प्र० च० पृ० १४ ) । [ ग ] कारकत्वेनान्वयि साधनम् इति शाब्दिका वदन्ति । ३ सिद्धिः अनुमितिः । यथा पर्वते धूमेन वह्निसाधने इत्यादौ साधनपदार्थः । यथा वा द्रव्यत्वादेरपि धूमेन साधनात् ( गौ० वृ० ५।१।२७ ) इत्यादौ साधनशब्दस्यार्थः ।

**साधनवैकल्यम्**—दृष्टान्ते साधनस्यावर्तमानत्वम् । अत्रेदं बोध्यम् । दृष्टान्ते साधनवैकल्यादयो निग्रहस्थानेन्तर्भवन्ति ( दि० १ ) इति ।

**साधनाप्रसिद्धिः**—( हेतुदोषः असिद्धिः ) हेतौ हेतुतावच्छेदकस्याभावः । यथा पर्वतो वह्निमान् काञ्चनमयधूमात् इत्यादौ धूमनिष्ठः काञ्चनमयत्वाभावः साधनाप्रसिद्धिः ( म० प्र० २ पृ० २७ ) । इयं च साधनाप्रसिद्धिः व्याप्यत्वासिद्धिप्रभेद इति विज्ञेयम् ( नील० २ पृ० २६ ) ( मु० २ पृ० १६१ ) । तल्लक्षणं च साधने साधनतावच्छेदकवैशिष्ट्यावगाहिग्रहविरोधिग्रहविषयत्वम् ( ल० व० ) । अत्र काञ्चनमयधूमादिहेतुकस्थले हेतुतावच्छेदकविशिष्टहेतोर्ज्ञानाभावात् तद्धेतुकव्याप्ति-

ज्ञानादेरभावः फलम् ( मु० २ पृ० १६२)। अथ वा साधनाप्रसिद्धि-ग्रहदशायाम् हेतुतावच्छेदकविशिष्टे साध्यव्याप्तिग्रहप्रतिबन्धः फलम् (नील० २ पृ० २६)। शिष्टं तु व्याप्यत्वासिद्धिशब्दव्याख्यानावसरे संपादितं तत्तत्र दृश्यम्।

**साधनासिद्धिः**—साधनाप्रसिद्धिः।

**साधर्म्यदृष्टान्तः**—अन्वयव्याप्तिग्रहणस्थलम्। यथा धूमेन वह्न्यनुमाने महानसः। यत्र यत्र धूमस्तत्राग्निर्यथा महानसः इति (प्र० च० पृ० २८)। अत्राधिकं तु दृष्टान्तशब्दे अन्वयदृष्टान्तशब्दे च दृश्यम्।

**साधर्म्यनिदर्शनम्**—[ क ] अन्वयदृष्टान्तः। [ ख ] अनुमेयेन सामान्येन लिङ्गसामान्यस्यानुविधानदर्शनम्। तद्यथा यत् क्रियावत् तद्द्रव्यं दृष्टं यथा शरः इति (प्रशस्त० २ पृ० ४८)। [ ग ] अन्वय्युदाहरणम्।

**साधर्म्यनिदर्शनाभासः**—( निदर्शनाभासः ) लिङ्गानुमेयोभयाश्रयासिद्ध्यननुगतविपरीतानुगतः। यथा यदनित्यं तन्मूर्तं दृष्टं यथा परमाणुः यथा कर्म यथाकाशम् यथा तमो घटवत् यन्निष्क्रियं तदद्रव्यं दृष्टम् इति च (प्रशस्त० २ पृ० ४८)। एवमन्वयदृष्टान्ताभासशब्दोपि व्याख्येयः।

**साधर्म्यम्**—[ क ] समानधर्मः। यथा कमलमिव सुन्दरं मुखम् इत्यादौ सौन्दर्यं मुखकमलयोः साधर्म्यम्। यथा वा षण्णां पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुः (प्रशस्त०) इत्यादौ साधर्म्यशब्दार्थः (न्या० कन्द० पृ० ६)। [ ख ] अनुगतो धर्मः (वै० उ० १।१।४)। समानो धर्मः इति फलितोर्थः (मु० १ पृ० ४५)। यथा अस्तित्वम् ज्ञेयत्वम् प्रमेयत्वम् अभिधेयत्वं च द्रव्यादीनां सप्तानां पदार्थानां साधर्म्यं भवति। अत्र ज्ञेयत्वाभिधेयत्वादिशब्दानामीश्वरीयज्ञानविषयत्वाभिधाविषयत्वादिरूपोर्थः केवलान्वयित्वोपपत्त्यर्थं स्वीकर्तव्यः। भवति च तदेव सप्तपदार्थानां लक्षणम् (मु० १ पृ० ४५)। वस्तुतः विषयत्वमेव सप्तपदार्थानां लक्षणम्। तेन ईश्वरानङ्गीकर्तृमतेपि जीवज्ञानविषयतादिकमादाय लक्षणसमन्वयः इत्यवधेयम्। यथा वा कारणत्वं

पारिमाण्डल्यभिन्नानां पदार्थानां साधर्म्यं भवति । कार्यत्वानित्यत्वे कारणवतामेव साधर्म्ये भवतः । आश्रितत्वं नित्यद्रव्यभिन्नानां पदार्थानां साधर्म्यं भवति । अत्र आश्रितत्वं च सर्वाधारतानियामकसंबन्धान्यसंबन्धेन वृत्तिमत्त्वम् । तेन काले नातिव्याप्तिः (ल० व०) । निर्गुणत्वं क्रियाशून्यत्वं च गुणादिषट्कस्य । निर्गुणत्वमित्यस्य गुणवदवृत्तिधर्मवत्त्वम् इत्यर्थः । अत्रेदमधिकं बोध्यम् । गुणादिषट्कस्य संख्यां विनापि धीविशेषविषयत्वमादायैकत्वादिप्रतीतेस्तद्व्यवहारस्य चोपपत्तिः कर्तव्या इति ( त० व० ) । गुणाधिकरणावृत्तिगुणावृत्तिधर्मवत्त्वं कर्मप्रभृतीनां पञ्चानाम् । सामान्यशून्यत्वं सामान्यादीनां चतुर्णाम् । तदर्थश्च समवायसंबन्धावच्छिन्नप्रतियोगिताकजातिसामान्याभाववत्त्वम् । सत्त्वाश्रयावृत्तिजात्यवृत्तिधर्मवत्त्वं विशेषादित्रयाणाम् । प्रतियोगित्वानुयोगित्वान्यतरसंबन्धावच्छिन्नसमवायनिष्ठावच्छेदकताकभेदवत्त्वं समवायाभावयोः । भावत्वं द्रव्यादिषट्कस्य । अत्र भावत्वं च समवाय सामानाधिकरण्य एतदन्यतरसंबन्धेन सत्तावत्त्वम् ( दि० १।१ अभावनि० पृ० ४१ ) ( ल० व० ) । अनेकत्वे सति भावत्वम् समवायित्वं च द्रव्यादिपञ्चकस्य । अनेकत्वे सतीत्यस्य अनेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वम् इति फलितोर्थः ( मु० १ पृ० ४६ ) । समवायित्वमित्यस्यार्थश्च समवायसंबन्धेन संबन्धित्वम् । तेन सामान्यादौ नाव्याप्तिः ( मु० १ पृ० ४६ ) । अथ वा समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वम् ( ल० व० पृ० ३ ) । समवेतसमवेतत्वं द्रव्यादिचतुष्टयस्य । तच्च समवेतसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वम् ( ल० व० ) ( दि० मु० १ पृ० ४६ ) । समवायेन सत्तावत्त्वम् कारणत्वं च द्रव्यादित्रयस्य । अत्र भाष्यम् । द्रव्यादीनां त्रयाणामपि सत्तासंबन्धः सामान्यविशेषवत्त्वम् स्वसमवायः अर्थशब्दाभिधेयत्वम् धर्माधर्मकर्तृत्वं च ( प्रशस्त० पृ० ३ ) इति । नित्यानित्योभयवृत्तिसत्ताभिन्नजातिमत्त्वम् कर्मावृत्तिजातिमत्त्वं वा द्रव्यगुणयोः । असमवायिकारणत्वं गुणकर्मणोः । समवायिकारणत्वं द्रव्यस्य । तत्र द्रव्यत्वम् गुणवत्त्वं च पृथिव्यादीनां नवानां

द्रव्याणाम् । गुणाश्रयवृत्तिसत्ताभिन्नजातिमत्त्वम् इत्यर्थः ( ल० व० ) ( त० दी० १ पृ० ५ ) । गुणसमानाधिकरणमनोवृत्तिधर्मवत्त्वं क्षित्याद्यष्टद्रव्याणाम् । आत्ममनःसंयोगाश्रयावृत्तिद्रव्यविभाजकधर्मवत्त्वं क्षित्यादिसप्तानाम् । जगदाधारत्वभूतत्वान्यतरवत्त्वं क्षित्यादीनां षण्णाम् । पृथिव्यादीनां पञ्चानां भूतत्वम् इन्द्रियप्रकृतित्वं च । पृथिव्यादिचतुर्णां द्रव्यारम्भकत्वम् स्पर्शवत्त्वं च । द्रव्यारम्भकत्वं च द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम् । तेन न द्रव्यानारम्भकघटादावव्याप्तिः ( मु० १ पृ० ५९ ) । रूपवत्त्वम् द्रवत्ववत्त्वम् प्रत्यक्षविषयत्वं च पृथिव्यादित्रयस्य । गुरुत्ववत्त्वम् रसवत्त्वं च पृथिवीजलयोः । नैमित्तिकद्रवत्ववत्त्वं पृथिवीतेजसोः । गन्धाश्रयावृत्तिद्रव्यविभाजकधर्मवत्त्वं जलाद्यष्टद्रव्याणाम् । रसासमानाधिकरणद्रव्यविभाजकधर्मवत्त्वं तेजःप्रभृतिसप्तद्रव्याणाम् । रूपासमानाधिकरणद्रव्यविभाजकधर्मवत्त्वं वाय्वादीनां षण्णाम् । स्पर्शवदवृत्तिद्रव्यविभाजकधर्मवत्त्वमाकाशादीनां पञ्चानाम् । भूतावृत्तिद्रव्यविभाजकधर्मवत्त्वं कालादीनां चतुर्णाम् । कालोपाध्यसमानाधिकरणशब्दवदवृत्तिद्रव्यविभाजकोपाधिमत्त्वं दिगात्ममनसाम् । स्वसमवायिकारणत्वस्वकरणेन्द्रियत्वान्यतरसंबन्धेन सुखप्रत्यक्षवत्त्वमात्ममनसोः । पृथिव्युदकज्वलनपवनजीवात्ममनसामनेकत्वापरजातिमत्त्वे । आकाशकालदिगात्मनां सर्वगतत्वम् ( विभुत्वम् ) परममहत्त्वम् सर्वसंयोगिसमानदेशत्वं च । पृथिव्युदकजीवात्मनां चतुर्दशगुणवत्त्वम् । दिक्कालयोः पञ्चगुणवत्त्वम् । सर्वोत्पत्तिमतां निमित्तकारणत्वम् । विशेषगुणवत्त्वं भूतानाम् आत्मनां च । परत्वम् अपरत्वम् मूर्तत्वम् कर्मवत्त्वम् वेगवत्त्वं च पृथिव्यादिचतुष्टयस्य मनसश्च । अव्याप्यवृत्तिविशेषगुणवत्त्वम् क्षणिकविशेषगुणवत्त्वं च आकाशजीवपरमात्मनाम् साधर्म्यं भवति ( प्रशस्त० १।१ पृ० २ ) ( भा० प० ) ( मु० १ ) ( सि० च० ) इति । क्षणिकविशेषगुणवत्त्वं च चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वम् ( मु० १ पृ० ६१ )। तथा हि। चतुःक्षणवृत्तीनि यानि जन्यानि घटा-

१ अवृत्तीति पदच्छेदः ।

दीनि तदवृत्तिर्या जातिः ज्ञानत्वादिः तद्वान् विशेषगुणः ज्ञानादिः तद्वत्त्वस्यात्मादौ सत्त्वाल्लक्षणसमन्वयः ( दि० १।१ पृ० ६१ ) । अत्रेदं बोध्यम् । यदाकाशजीवात्मनोरेव साधर्म्यमुच्यते तदास्मिन्परिष्कारे जन्य इति पदं न देयम् । द्वेषत्वादिकं धर्ममादाय तत्र लक्षणसमन्वयः कर्तव्यः ( मु० १।१ पृ० ६१ ) । एवमन्येषामपि तत्तत्साधर्म्यं स्वयमूह्यम् । ( किर० १।१ पृ० ३९ ) । तथा हि । रूपादीनां गुणानां सर्वेषां गुणत्वाभिसंबन्धः गुणादीनां द्रव्याश्रितत्वम् समवायिकारणत्वानाश्रयत्वं च साधर्म्यम् इत्यादि ( प्रशस्त० पृ० ११ ) ।

**साधर्म्यसमः**—( जातिः ) [ क ] साधर्म्येणोपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यसमः ( गौ० ५।१।२ ) । तदर्थश्च उपसंहारे साध्यस्योपसंहरणे वादिना कृते तद्धर्मस्य साध्यरूपधर्मस्य यो विपर्ययो व्यतिरेकः तस्य साधर्म्येण केवलेन व्याप्त्यनपेक्षेण यदुपपादनम् ततो हेतोः साधर्म्यसम उच्यते ( गौ० वृ० ५।१।२ ) इति । साधर्म्यमात्रं गमकतौपयिकम् इत्यभिमानात् सत्प्रतिपक्षदेशनाभासोयम् । वार्तिककृतस्तु अयमनैकान्तिकदेशनाभासः इत्यङ्गीचक्रुः ( गौ० वृ० ५।१।२ ) । अत्र भाष्यम् । साधर्म्येणोपसंहारे साध्यधर्मविपर्ययोपपत्तेः साधर्म्येणैव प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः प्रतिषेधः । निदर्शनम् क्रियावानात्मा । द्रव्यस्य क्रियाहेतुगुणयोगात् । द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान् । तथा चात्मा । तस्मात्क्रियावान् इति । एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते । निष्क्रिय आत्मा । विभुनो द्रव्यस्य निष्क्रियत्वात् । विभु चाकाशं निष्क्रियं च । तथा चात्मा । तस्मान्निष्क्रियः इति । न चास्ति विशेषहेतुः क्रियावत्साधर्म्यात् क्रियावता भवितव्यम् न पुनरक्रियसाधर्म्यान्निष्क्रियेण इति । विशेषहेत्वभावात् साधर्म्यसमः प्रतिषेधो भवति ( वात्स्या० ५।१।२ ) । [ ख ] वादिनान्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिनः साधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनम् । यथा शब्दः अनित्यः कृतकत्वाद्घटवत् व्यतिरेकेण वा व्योमवत् इत्युपसंहृते नैतदेवम् यद्यनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याद्वा अनित्यः स्यात्

नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यः स्यात् । विशेषो वा वक्तव्यः ( गौ० वृ० ५।१।२ ) इति । [ग] साधर्म्येण स्थापनाहेतुदूषकमुत्तरम् । यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवत् इति स्थापनायामुत्तरम् । यदि सक्रियसाधर्म्यात्सक्रियस्तदा विभुत्वरूपान्निष्क्रियसाधर्म्यान्निष्क्रिय एव किं न स्यात् । न चात्र किंचिद्विनिगमकमस्ति इति । क्रियाहेतुगुणश्चात्र क्रियाजनकवायुसंयोगादिरेव इति बोध्यम् ( नील० १ पृ० ४३ ) ।

**साधर्म्योदाहरणम्**—अन्वय्युदाहरणम् ।

**साधर्म्योपनयः**—अन्वय्युपनयः ।

**साधारणः**—१ ( हेत्वाभासः दुष्टहेतुः ) । [क] सपक्षविपक्षवृत्तिर्हेतुः ( भा० प० २ श्लो० ७४ ) । यथा पर्वतो वह्निमान्प्रमेयत्वात् इत्यादौ प्रमेयत्वं हेतुः साधारणः । अत्र प्रमेयत्वं हेतुर्हि सपक्षे महानसे विपक्षे महाह्रदादौ च वर्तते । अतः साधारणः ( त० सं० ) । एवम् पर्वतो धूमवान् वह्नेः इत्यादावपि । वह्निर्हि सपक्षे महानसे विपक्षे तप्तायःपिण्डादौ च वर्तते । अतः साधारणः ( त० कौ० २ पृ० १३ ) । इदं लक्षणं च प्राचीनमतमनुरुध्योक्तम् । अत्र प्राचीनमते साधारणहेतुज्ञानेन साध्यसंदेहाद्व्याप्तिग्रहो न भवति इत्याशयः (गौ० वृ० १।२।५) । अयं चानैकान्तिकप्रभेदः । तल्लक्षणं च वक्ष्यमाणं साधारणत्वमेव इति बोध्यम् । अर्वाञ्चो नैयायिकास्तु साधारणमेव हेतुं सव्यभिचारपदेन व्यवहरन्ति इति दीधितिकृदाह ( दीधि० २ सव्य० पृ० १८३ ) । [ख] साध्यात्यन्ताभाववति साध्यवदन्यस्मिन्वा वर्तमानो हेतुः । यथा शब्दो नित्यो निःस्पर्शत्वात् इत्यादौ निःस्पर्शत्वं साधारणः ( गौ० वृ० १।२।५) ( मु० २ पृ० १५९ ) ( त० सं० ) ( वाक्य० ) । अत्र निःस्पर्शत्वं हेतुर्हि अनित्ये रूपादौ वर्तत इति साधारणो भवति इति ज्ञेयम् । २ ( जातिः ) नित्यसमविशेषः । स च स्वव्याघातकमुत्तरं भवति ( सर्व० पृ० १५३ पूर्ण० ) । ३ व्यवहारशास्त्रज्ञास्तु अनेकस्वत्वकमेकं धनं साधारणम् । यथा अलंकारोपि यो येन धृतः स तस्यैव । अधृतः साधारणो विभाज्य एव ( याज्ञ० म० २ श्लो० १२२

मिता० पृ० १६७ ) इत्यादौ साधारणशब्दस्यार्थ इत्याहुः ( अमरः ३।१।८२ ) । अन्यदप्युदाह्रियते साधारणं समाश्रित्य यत्किंचिद्वाहनादिकम् ( स्मृतिः ) इति । ४ सदृशम् इति साहित्यशास्त्रज्ञा आहुः ( अमरः २।१०।३७ ) । ५ वेश्यादिनायिका साधारणी इत्यालंकारिका आहुः । ६ कुञ्चिका इति काव्यज्ञा आहुः ।

**साधारणकारणत्वम्**—( कारणत्वम् ) [ क ] कार्यत्वावच्छिन्नकार्यतानिरूपितकारणत्वम् । यथा ईश्वरतज्ज्ञानादेः कार्यमात्रे ( कार्यत्वावच्छिन्नं प्रत्येव ) कारणत्वात् साधारणकारणत्वम् ( वाक्य० १ पृ० १० ) ( न्या० बो० १ पृ० ८ ) । अत्र ईश्वरज्ञानस्य च ज्ञानत्वेन कार्यत्वेन कार्यकारणभावात् सामान्यधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वेन घटं प्रत्यपि साधारणकारणत्वम् ( म० प्र० १ पृ० ५ ) । [ ख ] सामान्यधर्मावच्छिन्नकार्यतानिरूपितकारणत्वम् ( म० प्र० १ पृ० ५ ) । अत्रायमाशयः । कार्यमात्रं प्रतीश्वरज्ञानादिकं कारणम् इति कार्यकारणभावः । न तु घटं प्रति दण्डः पटं प्रति तन्तुः कारणम् इति विशिष्य कार्यकारणभाववत् घटादिकं प्रतीश्वरादिकं कारणम् इति कार्यकारणभावः इति । अत्रेदं ज्ञेयम् । अष्टौ साधारणकारणानि ईश्वरः तज्ज्ञानेच्छाकृतयः प्रागभावः कालः दिक् अदृष्टम् ( धर्माधर्मौ ) च ( वाक्य० १ पृ० १० ) इति । केचित्तु प्रतिबन्धकसामान्याभावोपि नवमं साधारणकारणमङ्गीचक्रुः ( मु० १।१ ) ।

**साधारणत्वम्**—( हेत्वाभासः हेतुदोषः ) [ क ] पक्षादित्रयवृत्तित्वम् । अत्र पक्षादित्रयं च पक्षः सपक्षः विपक्षश्च । तेषु वर्तमानत्वम् इति विशिष्टस्यार्थः । यथा पर्वतो वह्निमान् प्रमेयत्वात् इत्यादौ प्रमेयत्वस्य साधारणत्वम् । अत्र प्रमेयत्वात्मकहेतोः पक्षे पर्वते सपक्षे महानसे विपक्षे महाह्रदादौ च वर्तमानत्वात्साधारणत्वम् इति बोध्यम् । [ ख ] विपक्षवृत्तित्वम् ( चि० २ सव्य० पृ० ८७ ) । अत्र विपक्षः साध्याभाववान् इति नव्यमतम् । विपक्षः निश्चितसाध्याभाववान् इति प्राचीनमतम् इति विज्ञेयम् ( दीधि० २ सव्य० पृ० १९३ ) । [ ग ] साध्यात्यन्ताभाव-

वद्वामित्वम् ( चि० बाध० ) ( न्या० बो० ) । [ घ ] साध्यवदन्यवृत्तित्वम् इत्यादि । यथा धूमवान्वह्नेः इत्यत्र धूमवदन्यस्मिन् तप्तायःपिण्डे वह्नेः सत्त्वाद्वह्नेः साधारणत्वम् ( न्या० म० २ पृ० २० ) । एतल्लक्षणद्वयेन प्रदर्शितं साधारणत्वं पूर्वपक्षीयम् । तच्च व्यभिचार इति व्यवह्रियते ( दीधि० २ बाध० पृ० २२४ ) । [ ङ ] साध्यासमानाधिकरणस्वसमानाधिकरणत्वम् । यथा धूमवान्वह्नेः इत्यत्र वह्नेः साधारणत्वम् । भवति हि धूमासमानाधिकरणं यत् धूमवदन्यत्वम् तत्समानाधिकरणो वह्निः (न्या० म० २ पृ० २०) इति । साध्यतावच्छेदके हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वम् ( ग० सामा० ) ( नील० ) इति तत्तात्पर्यम् । यथा पर्वतो वह्निमान्प्रमेयत्वात् इत्यादौ प्रमेयत्वस्य साधारणत्वम् । इदं च सिद्धान्तसिद्धं साधारणत्वम् इति बोध्यम् । अभिधेयत्वं प्रमेयत्वस्य व्यभिचारि इत्याकारकभ्रमात्मकव्यभिचारग्रहस्य व्यापकसामानाधिकरण्यग्रहविरोधितया तद्विरोधित्वान्यथानुपपत्त्येदं लक्षणं स्वीकार्यम् । तेन तत्र प्रमेयत्वाभावाप्रसिद्ध्या पूर्वपक्षीयव्यभिचारग्रहासंभवेपि न क्षतिः ( ग० २ सामा० ल० १ पृ० ५–६ ) ।

**साधारणधर्मः**—१ [ क ] तदितरवृत्तित्वे सति तद्वृत्तिर्धर्मः । यथा प्रमेयत्वं गोः साधारणधर्मः । यथा वा मुखं पद्ममिव सुन्दरम् इत्यादौ सौन्दर्यादिः । [ ख ] समानधर्मः । २ स्वाभाविकधर्मः । यथा प्रजासर्जनादिरूपो जन्तुमात्रधर्मः । तदुक्तम् प्रजनार्थं स्त्रियः सृष्टाः संतानार्थं च मानवाः । तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः ॥ ( मनु० अ० ९ श्लो० ९६ ) इति । अत्र अग्न्याधानादिरपि स्त्रीपुंसयोः साधारणो धर्मः ( मनु० टी० कुल्लूक० अ० ९ श्लो० ९६ ) । ३ धर्मज्ञास्तु ब्राह्मणादिचातुर्वर्ण्यविहितो धर्मः । यथा अहिंसादिः इत्याहुः । न हिंस्यात्सर्वा भूतानि ( श्रुतिः ) इत्याचाण्डालं साधारणो धर्मः ( मिता० १।१ पृ० १ ) । तदुक्तम् अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥ ( याज्ञ० अ० १ श्लो० १२१ ) ( मनु० अ० १० श्लो० ६३ ) इति ।

**साधारण्यम्**—साधारणवृत्तिर्धर्मः । स च साधारणत्वादिः ।

**साधुः**—१ प्रियकारी । यथा मातरं प्रति साधुः इत्यादौ साधुशब्दस्यार्थः (ग० व्यु० का० २ ख० २ पृ० ७६)। २ यः शब्दो यत्रेश्वरेण संकेतितः स तत्र साधुः (संज्ञाविशिष्टः)। यथा या काचिदोषधिर्नकुलदंष्ट्राग्रस्पृष्टा सा सर्वापि सर्पविषं हन्ति इत्येतादृशी संज्ञा (ईश्वरसंकेतः) (वै० उ० २।१।१९ पृ० ९४) इति । ३ शाब्दिकास्तु यः शब्दो यस्मिन्नर्थे व्याकरणेन व्युत्पादितः स तत्र साधुः प्रयोगार्हः (चि० ४) । स च व्याकरणव्यङ्ग्यसाधुताजात्याश्रयः शब्दः । यथा कर्मणि द्वितीया (पाणि० २।३।२) इत्यादौ द्वितीया कर्मार्थे साधुः इत्याहुः । अत्र साधुत्वं च अर्थविशेषे व्याकरणानुशिष्टजातीयत्वम् । अत्र जातीयत्वोपादानानाधुनिकचैत्रादिशब्देष्वव्याप्तिः (म० प्र० ४) । अत्रोक्तम् अनपभ्रंशतानादिर्यद्वाभ्युदययोग्यता । व्याक्रियाव्यञ्जनीया वा जातिः कापीह साधुता ॥ (भर्तृ०) इति । तदर्थस्तु अनपभ्रंशत्वम् अनादित्वम् अभ्युदयसाधनप्रयोगविषयत्वम् व्याकरणव्यङ्ग्या जातिर्वा साधुता इति (वाच०)। ४ पौराणिकास्तु साधुलक्षणयुक्तो जन इत्याहुः । तल्लक्षणं तु न प्रहृष्यति संमाने नापमाने च कुप्यति । न क्रुद्धः परुषं ब्रूयादेतद्वै साधुलक्षणम् ॥ (गरुडपु०) इति । यथालब्धेपि संतुष्टः समचित्तो जितेन्द्रियः । हरिपादाश्रयो लोके विप्रः साधुरनिन्दकः ॥ निर्वैरः सदयः शान्तो दम्भाहंकारवर्जितः । निरपेक्षो मुनिर्वीतरागः साधुरिहोच्यते ॥ (पद्मोत्त० ख० अ० ९९) इति च । साध्वीलक्षणं तु पतिं या नाभिचरति मनोवाक्कायसंयता । सा भर्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते ॥ (मनु० अ० ९ श्लो० २९) इति । ५ काव्यज्ञाश्च उत्तमकुलजातः । ६ सुन्दरः । ७ उचितः । ८ मुनिः इत्याहुः । ९ जिनः इति जैना आहुः (हेमच०) ।

**साध्यता**—१ विषयताविशेषः । तत्र [क] पञ्चावयवसाधनीयत्वम् (गौ० सू० ५।१।४) । स च साधयामि साध्यविशेषं वह्न्यादिकम्

इति प्रतीत्या गम्यत इति विज्ञेयम् । [ ख ] अनुमितिविधेयत्वम् । यथा पर्वतो वह्निमान् धूमात् इत्यादौ वह्नेः साध्यत्वम् । [ ग ] सिद्धिकर्मत्वम् ( त० प्र० ) ( दि० गु० ) । यथा पर्वतो वह्निमान् इति निश्चयविषयत्वं वह्नेः । सिद्धिकर्मत्वमित्यत्र कर्मत्वं च विषयत्वम् ( दि० गु० ) । [ घ ] वेदान्तिनस्तु यत्प्रतीतिर्लिङ्गेन जनयितव्या स साध्यधर्म इत्याहुः ( प्र० च० पृ० २३ ) । २ इच्छाविषयताविशेषः । यथा घटो जायताम् इत्यत्र घटीया साध्यताख्या विषयता । यथा वा पाकः साध्यताम् इतीच्छाविषयत्वम् । ३ अनन्तरभविष्यत्वम् ( त० प्र० ४ पृ० १०२ ) । यथा यागस्य कृतिसाध्यत्वम् । यथा वा घटादेर्दण्डचक्रादिघटितसामग्रीसाध्यत्वम् । अत्रेदं बोध्यम् । साध्यत्वं चासिद्धधर्मः । भाविकालवृत्तिधर्म इत्यर्थः । साधनत्वं तु सिद्धो धर्मः । पूर्वकालवृत्तिधर्मः इत्यर्थः ( त० प्र० ख० ४ पृ० १०२ ) ।

**साध्यताघटकसंबन्धः**—येन संबन्धेन साध्यता विवक्ष्यते स संबन्धः । यथा पर्वतादौ संयोगेन वह्न्यादिसाधने संयोगसंबन्धः साध्यताघटकसंबन्धः । यथा वा तमः समवायेन गगनवत् इत्यादौ समवायसंबन्धः ( दीधि० ) ( ग० संश० पक्ष० पृ० ५ ) । एवम् प्रतियोगितावच्छेदकसंबन्धानुयोगितावच्छेदकसंबन्धादयः स्वयमूह्याः ।

**साध्यतावच्छेदकम्**—येन धर्मेण संबन्धेन वा साध्यतावच्छिद्यते सः । यथा पर्वते संयोगसंबन्धेन वह्नेः साधने पर्वतः संयोगेन वह्निमान् इत्यादौ वह्नित्वं संयोगश्च साध्यतावच्छेदकः । अत्र वह्निः साध्यः । तन्निष्ठां साध्यतां वह्नित्वं संयोगश्चावच्छिनत्ति इति ज्ञेयम् । एवम् कारणतावच्छेदककार्यतावच्छेदके लक्ष्यतावच्छेदकलक्षणतावच्छेदके उद्देश्यतावच्छेदकविधेयतावच्छेदके प्रतियोगितावच्छेदकानुयोगितावच्छेदके इत्यादयः शब्दा यथायोग्यं व्याख्येयाः इति । अत्र व्युत्पत्तिः साध्यतामवच्छिनत्ति विशेषयति ( ण्वुल् ) इति । अत्र साध्यतावच्छेदकत्वं च स्वरूपसंबन्धविशेषः विषयताविशेषो वा ।

**साध्यतावच्छेदकसंबन्धः**—साध्यताघटकसंबन्धः ।

**साध्यत्वम्**—साध्यता ।

**साध्यप्रसिद्धिः**—[ क ] सिद्धिः । [ ख ] साध्यस्य ज्ञानम् ।

**साध्यम्**—१ साधनीयम् । तच्च साध्यत्ववत् । यथा पर्वतो वह्निमान् धूमात् इत्यादौ वह्निः साध्यम् ( मु० २ ) । साध्यं च द्विविधम् धर्मिविशिष्टो वा धर्मः । यथा शब्दस्यानित्यत्वम् इति । धर्मविशिष्टो वा धर्मी । यथा अनित्यः शब्दः इति ( वात्स्या० १।१।३६ ) । २ [ क ] व्यवहारशास्त्रज्ञास्तु अष्टादशविवादेषु प्रमाणादिनोद्भाव्यः पदार्थः । साक्षिलेख्यानुमानरूपक्रियादिना साधनीयं यत् तत् ( रकम इति प्र० ) । यथा ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् । ऊने वाभ्यधिके वार्थे प्रोक्ते साध्यं न सिध्यति ॥ ( कात्या० वीरमित्रो० पृ० १२४ ) इत्यादौ साध्यशब्दस्यार्थः । [ ख ] साध्यार्हः प्रतिज्ञेयः पक्षः । तदुक्तं बृहस्पतिना प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् । निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥ इति । अत्र साध्यं साध्यार्हम् । प्रत्यर्थिधर्मविशिष्टं धर्मिवचनम् इति यावत् ( वीरमित्रो० लेख्य० पृ० ६९ ) । ३ पक्षः ( गौ० वृ० १।१।३८ ) । यथा उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ( गौ० १।१।३८ ) इत्यादौ साध्यशब्दस्यार्थः पक्षः । ४ शाब्दिकास्तु लिङ्गसंख्यानन्वयिनी क्रिया । यथा पचति करोति इत्यादिक्रिया इत्याहुः । अत्रोक्तं हरिणा साध्यरूपा क्रिया तत्र धातुरूपनिबन्धना ( वाक्यप० ) इति। शिष्टं तु क्रियाशब्दव्याख्याने दृश्यम् । अत्र साध्यत्वं च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम् इति बोध्यम् । ५ पौराणिकास्तु द्वादशसंख्यको गणदेवताविशेष इत्याहुः । तदुक्तम् मनोमन्ता तथा प्राणो भरोपानश्च वीर्यवान् । निर्भयो नरकश्चैव दंशो नारायणो वृषः ॥ प्रभुश्चेति समाख्याताः साध्या द्वादश देवताः इति । ६ मौहूर्तिकाश्च स्वशास्त्रीययत्किंचित्संकेतविषयः । यथा विष्कम्भादिषु (२७) योगेषु द्वाविंशो योगविशेषः इत्याहुः । ७ मान्त्रिकादयस्तु स्वानुकूलताग्राहकः पदार्थः मन्त्रविशेषादिः इत्यङ्गीचक्रुः । अत्रोक्तम् सिद्धः साध्यः सुसिद्धोरिः क्रमाज्ज्ञेया मनीषिभिः ( वाच० ) इति ।

**साध्यसंसृष्टत्वज्ञानम्**—१ सिद्धिः । अयमर्थो गदाधर्यां पक्षतायां सिद्धिग्रन्थे तत्रत्यशब्दार्थसंकलनवेलायामुपयुज्यते । २ साध्यसंबन्धविषयकं ज्ञानम् ( मु० २ पृ० १६४ ) ।

**साध्यसमः**—१ ( हेत्वाभासः असिद्धः ) साध्याविशिष्टः साध्यत्वात्साध्यसमः ( गौ० १।२।८ ) । तदर्थश्च साध्येन वह्न्यादिना अविशिष्टः । कुत इत्यत आह साध्यत्वादिति । साधनीयत्वादित्यर्थः । यथा हि साध्यं साधनीयम् तथा हेतुरपि चेत् साध्यसमः इत्युच्यते । अत एव च असिद्धः इति व्यवह्रियते ( गौ० वृ० १।२।८ ) । अत्रोच्यते असिद्धः साध्यतुल्यत्वाद्धेतुः साध्यसमो भवेत् ( ता० र० श्लो० ८४ ) इति । अत्र व्यासस्य पक्षधर्मताप्रतीतिः सिद्धिशब्दार्थः । द्रव्यं छायेति साध्यम् । गतिमत्त्वादिति हेतुः । साध्येनाविशिष्टः साधनीयत्वात्साध्यसमः । कथम् । अयमप्यसिद्धत्वात् साध्यवत्प्रज्ञापयितव्यः । साध्यं तावदेतत् किं पुरुषवच्छायापि गच्छति आहोस्विदावरकद्रव्ये संसर्पत्यावरणसंता-( संनिधा )-नादसंनिधिसंतानोयं तेजसो गृह्यत इति । सर्पता खलु द्रव्येण यो यस्तेजोभाग आव्रियते तस्य तस्यासंनिधिरेवावच्छिन्नो गृह्यत इति । आवरणं तु प्राप्तिप्रतिषेधः ( वात्स्या० १।२।८ ) । २ ( जातिः ) [ क ] साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वात्साध्यसमः ( गौ० ५।१।४ ) । सूत्रार्थस्तु उभयसाध्यत्वात् उभयं पक्षदृष्टान्तौ । तद्धर्मो हेत्वादिः । तत्साध्यत्वं तदधीनानुमितिविषयत्वम् । साध्यस्येव पक्षादेरपीति तुल्यतापादनमिति । लिङ्गोपहितभानमते लिङ्गस्यानुमितिविषयत्वात् साध्यसमत्वम् । हेतोश्च साध्यत्वे हेतुमान्दृष्टान्तोपि साध्यः इत्याशयः । आश्रयासिद्ध्यादिदेशनाभासोयम् इति ज्ञेयम् ( गौ० वृ० ५।१।४ ) । हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यः । तं दृष्टान्ते प्रसजतः साध्यसमः । यथा आत्मा सक्रियः क्रियाहेतुगुणयोगात् इत्यादौ यदि यथा लोष्टस्तथात्मा प्राप्तस्तर्हि यथात्मा तथा लोष्ट इति । साध्यश्चायमात्मा क्रियावानिति कामं लोष्टोपि साध्यः । अथ नैवम् । न तर्हि यथा लोष्टस्तथात्मा ( वात्स्या० ५।१।४ ) । [ ख ] पक्षदृष्टान्तादेः प्रकृतसाध्य-

तुल्यतापादनम् ( गौ० वृ० ५।१।४ ) । [ ग ] दृष्टान्तस्य पक्षतुल्यताकथनं साध्यसमः । साध्यशब्दोत्र पक्षवाची ( नील० पृ० ४३ ) । तथा चोक्तम् दृष्टान्तहेतुपक्षाणां सिद्धानामपि साध्यवत् । साध्यत्वापादनं तस्माल्लिङ्गात्साध्यसमो भवेत् ॥ ( ता० र० २ श्लो० ११० ) इति । यथा वा नाभिधा समयाभावात् ( काव्यप्र० २।२२ ) इत्यत्र नैयायिकमते साध्यसमः । मीमांसकमते नायं दोषः । अभिधासमययोर्भेदात् । यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वात् इत्यादौ यदि यथा लोष्टस्तथात्मेति त्वयोच्यते तदा यथात्मा तथा लोष्ट इत्यप्यायातम् । तथा च यथात्मनि क्रियावत्त्वं साध्यते तर्हि लोष्टेपि तत्साधनीयम् । नेति चेत्तर्हि यथा लोष्टस्तथात्मेति न वाच्यम् । लोष्टसदृश आत्मा नात्मसदृशो लोष्टः इत्यत्र नियामकाभावादिति ( नील० १ पृ० ४३ ) ।

**साध्याप्रसिद्धिः**—( हेतुदोषः असिद्धिः ) साध्ये साध्यतावच्छेदकस्याभावः । यथा पर्वतः काञ्चनमयवह्निमान् धूमात् इत्यादौ वह्निनिष्ठः काञ्चनमयत्वाभावः साध्याप्रसिद्धिः । अयं च व्याप्यत्वासिद्धिप्रभेदः ( गौ० वृ० १।२।८ ) ( मु० २ पृ० १६१ ) ( नील० ) ( न्या० म० २ पृ० २१ ) ( म० प्र० २ पृ० २७ ) ( वै० वि० ३।१।१५ ) । तल्लक्षणं च साध्ये साध्यतावच्छेदकवैशिष्ट्यावगाहिग्रहविरोधिग्रहविषयत्वम् । एतज्ज्ञाने जाते साध्यतावच्छेदकविशिष्टसाध्यपरामर्शप्रतिबन्धः फलम् । तथा च प्रतिबन्धकताघटितहेत्वाभाससामान्यलक्षणाक्रान्तत्वं साध्याप्रसिद्धेः संगच्छते इति ।

**सानन्दः**—( समाधिः ) यदा रजस्तमोलेशानुविद्धं चित्तं भाव्यते तदा सुखप्रकाशमयस्य सत्त्वस्योद्रेकात्सानन्दः ( सर्व० सं० पृ० ३५७ पात० ) ।

**सापिण्ड्यम्**—सपिण्डता ।

**सापेक्षत्वम्**—१ असामर्थ्यम् । २ अभिलाषविशिष्टत्वम् इति काव्यज्ञा आहुः ।

**साम**—१ वेदविशेषः । गीतिरूपा मन्त्राः सामानि ( जै० न्या० अ० २ पा० १ अधि० १२ ) । यथा अग्न आयाहि वीतये इत्यादिः । २ सामवेदोक्तामृचमधिकृत्य गेयो गानविशेषः । यथा अग्न आयाहि

वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि इत्यस्या ऋचो गानं च ओग्ना इ आयाही ३ वीइतोया २ इ तोया २ इ गृणानो हव्यदातो २ इ तोया २ इ ना इहोतासा २३ त्सा २ इ वा २३४ औहोवा ही २३४ षी इति ( छन्द आर्चिकः १।१।१।१ ) । अत्र प्रमाणम् ऋच्यध्यूढꣳ साम गीयते ( छान्दो० उ० १।६।१ ) । तस्मात्तिसृभिः स्तुवन्ति तिसृभिरुद्गायन्ति तिसृमिर्हि साम संमितम् ( ऐतरे० ब्रा० ३।२३ ) इत्यादि । ३ नीतिशास्त्रज्ञास्तु राज्ञ उपायविशेष इत्याहुः । इदं साम द्विविधम् तथ्यम् अतथ्यं च । तत्र तथ्येन साम्ना साधुजनः साध्यः । अतथ्यं तु सामासाधुषु प्रयोक्तव्यम् ( मत्स्यपु० अ० २२१ ) इति । अधिकं तु शुक्रनीतिपरिशिष्टादौ विज्ञेयम् । ४ शत्रुवशीकरणोपायः इति मान्त्रिका आहुः । ५ पशुबन्धनरज्जुः । ६ प्रियवाक्यादिना सान्त्वनं च इति काव्यज्ञा आहुः ( वाच० ) ।

**सामग्री**—कार्यायोगव्यवच्छिन्नः कारणसमुदायः । यथा प्रत्यक्षस्य सामग्री इन्द्रियसंनिकर्षादिः । अनुमितेः सामग्री व्याप्तिज्ञानपरामर्शादिः । यथा वा घटादिकार्यस्य सामग्री कुलालदण्डचक्रादिः । पटादिकार्यस्य च कुविन्दतन्तुतुरीसंयोगादिः । अत्रेदं विज्ञेयम् । समाने विषये प्रत्यक्षानुमितिसामग्र्योर्मध्ये प्रत्यक्षसामग्री प्रबला । भिन्नविषये तु अनुमितिसामग्री प्रबला । समानविषये प्रत्यक्षशाब्दसामग्र्योर्मध्ये प्रत्यक्षसामग्री प्रबला । भिन्नविषये तु शाब्दसामग्री प्रबला । समानविषये अनुमितिशाब्दसामग्र्योर्मध्ये शाब्दसामग्री प्रबला । भिन्नविषये तु अनुमितिसामग्री प्रबला । मानसलौकिकप्रत्यक्षसामग्र्योर्मध्ये लौकिकप्रत्यक्षसामग्री प्रबला । मानससामग्री तु सर्वापेक्षया दुर्बला । परं तु यदा फलविषयिणीच्छास्ति । तदा तत्रत्या दुर्बलापि सामग्री प्रबला भवति इति विज्ञेयम् ( त० प्र० ४ ) । समाने विषये प्रत्यक्षानुमितिसामग्र्योर्मध्ये प्रत्यक्षसामग्री प्रबला यथा यत्र पर्वतादौ वह्न्यादिप्रत्यक्षजनिकायाश्चक्षुःसंनिकर्षादिघटितसामग्र्याः तत्रैव वह्न्यनुमितिजनिकायाः परामर्शादिघटितसामग्र्याश्च युगपत्सत्त्वे प्रबलेन दुर्बलस्य बाधः इति न्यायेन पूर्वोक्तप्रत्यक्ष-

सामग्र्या पर्वतादौ वह्निप्रत्यक्षमेवोत्पद्यते न त्वनुमितिः इत्यनुभवसिद्धः सिद्धान्तः । भिन्ने विषये तु प्रत्यक्षानुमितिसामग्र्योर्मध्येनुमितिसामग्री प्रबला यथा भूतलादौ घटादिप्रत्यक्षजनिकायाः घटचक्षुःसंयोगादिरूपायाः पर्वतादौ तु वह्न्याद्यनुमितिजनिकाया व्याप्तिज्ञानादिघटितायाश्च सामग्र्या युगपत्सत्त्वेनुमितिसामग्र्याः प्राबल्येन तया पर्वतादौ वह्न्याद्यनुमितिरेवोत्पद्यते न तु घटवद्भूतलादिप्रत्यक्षम् इति । एवमग्रेप्यूह्यम् ।

**सामयिकः**—समयः कालः नियमो वा । तत्र भवः उचितो वा (ठञ्) सामयिकः । तथा च निजधर्माविरोधेन यस्तु सामयिको भवेत् इति स्मृत्या नियमबद्धः इत्यर्थः ।

**सामयिकाभावः**—अत्यन्ताभावः (त० दी० ४) । तदर्थश्च सामयिकः समयविशेषे प्रतियोगिविरहसमये प्रतीयमानः अभावोत्यन्ताभावः सामयिकाभावः (नील० पृ० ४१) इति । केचित्तु उत्पादविनाशशाली अत्यन्ताभावादतिरिक्तोयमभावः इत्याहुः (वै० वि० ९।१।५) । अत्रेदमाकूतम् । यत्र भूतले पूर्वं घटादिकं स्थितमथापसारितं तत्रायं चतुर्थः संसर्गाभावः प्रतीयते नात्यन्ताभावः (वै० वि० ९।१।५) इति । अयमभिप्रायः । सामयिकाभावस्यात्यन्ताभावस्वरूपत्वाङ्गीकारेत्यन्ताभावस्य नित्यत्वेन भूतलादौ घटसत्त्वेपि तदपसारणदशायामिव तदत्यन्ताभावबुद्ध्यापत्तिः । तथाविधात्यन्ताभावस्याप्रतीयमानत्वात्तु तदतिरिक्तोयमभावोङ्गीकार्यः । भूतलादौ घटसत्त्वदशायां न तदभाववत्ताबुद्धिः । अन्यदा तु जायते । अतः सामयिकाभावोतिरिक्त एवाङ्गीकर्तव्यः (नील० पृ० ४१) इति । तन्न सहन्ते नैयायिकाः । तथा हि । यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्र घटानयनानन्तरमपि अत्यन्ताभावस्य नित्यत्वेपि च घटकालस्य संबन्धाघटकत्वात् संबन्धाभावात् घटकाले न घटात्यन्ताभावबुद्धिः (दि० १ पृ० ४३) । तथा च कालविशेषविशिष्टस्वरूपस्य संसर्गत्वोपगमादेव घटवति घटो नास्ति इति प्रतीत्यभावोपपत्तौ चतुर्थसंसर्गाभावे मानाभावः (दि० १ पृ० ४३) इति । घटाद्यनधिकरणकालावच्छिन्न-

भूतलादेरेव घटाभावादेः संसर्गतया घटकाले च तच्छून्यकालविशिष्ट-भूतलादिरूपसंसर्गस्याभावेन तदा न तदत्यन्ताभावबुद्धिः ( नील० ) इति । घटाभाववति घटानयनेत्यन्ताभावस्यान्यत्र गमनाभावेप्यप्रतीतेः घटापसरणे सति तु प्रतीतेश्च भूतले घटसंयोगप्रागभावध्वंसयोर्घटाभाव-प्रतीतेर्नियामकत्वं कल्प्यते । घटवति तत्संयोगप्रागभावध्वंसयोरसत्त्वाद-त्यन्ताभावस्याप्रतीतिः घटापसरणे च संयोगध्वंससत्त्वात् प्रतीतिः ( त० दी० पृ० ४१ ) इति ।

**सामर्थ्यम्**—१ यत्किंचित्कार्यजननयोग्यत्वम् ( दीधि० २ पृ० २०९ ) । तच्च यथा साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यक-लिङ्गत्वम् ( चि० २ पृ० ९४ ) इत्यादौ ग्रन्थे समर्थशब्दार्थघटकम् विरोधिपरामर्शस्य विरोध्यनुमितिजननयोग्यत्वरूपं सामर्थ्यम् । २ क्वचित् आकाङ्क्षायोग्यतादिमत्त्वम् ( गौ० वृ० २।१।५२ ) । यथा आप्तोपदेश-सामर्थ्यात्० ( वात्स्या० २।१।५२ ) इति । ३ समासाघटकपद-निराकाङ्क्षत्वे सति परस्परसमासघटकपदसाकाङ्क्षत्वम् ( कृष्णं० ) । यथा राजपुरुषः इत्यादौ राजपदपुरुषपदयोः सामर्थ्यम् । एतच्च सामर्थ्यं द्विविधम् व्यपेक्षारूपम् एकार्थीभावश्चेति । अयं च शाब्दिकविभागः इति बोध्यम् । तत्र व्यपेक्षा च स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादि-वशात्परस्परं संबन्धवत्त्वे सत्येकोपस्थित्यजनकत्वम् इति । एकार्थी-भावश्च विशेषणविशेष्यभावावगाह्येकोपस्थितिजनकत्वम् इति । शिष्टं तु समासशब्दव्याख्याने दृश्यम् ।

**सामानाधिकरण्यम्**—१ [ क ] तदधिकरणवृत्तित्वम् । यथा वह्निधूमयोः सामानाधिकरण्यम् । इदं सामानाधिकरण्यं द्विविधम् दैशिकम् कालिकं चेति । तत्र दैशिकं सामानाधिकरण्यं यथा वह्निधूमयोः सामाना-धिकरण्यम् । कालिकं सामानाधिकरण्यं यथा एककालावच्छेदेन वर्तमानयोः विभिन्नदेशाधिकरणकयोरपि घटपटयोः सामानाधिकरण्यम् इति विज्ञेयम् । अत्रेदं प्रसङ्गतो विज्ञेयम् । अनुमितेः सामानाधिकरण्य-मात्रावगाहित्वं च पक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितशुद्धसाध्य-

तावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविधेयताकत्वम्। यथा पर्वतो वह्निमान् इत्याकारकानुमितेः वह्निपर्वतत्वयोः सामानाधिकरण्यमात्रविवक्षायाम् तयोरवच्छेद्यावच्छेदकभावाविवक्षायाम् सामानाधिकरण्यमात्रावगाहित्वम्। प्राञ्चस्तु पक्षतावच्छेदकाक्रान्तयत्किंचिद्व्यक्तिविषयकत्वं सामानाधिकरण्यमात्रावगाहित्वम् इत्याहुः (ग० २ पक्ष० पृ० २०)। [ख] तद्वदनुयोगिकप्रतियोगित्वम्। प्रतियोगितासंबन्धेन तद्वदनुयोगिकवत्त्वम् इत्यर्थः (ग० २ व्याप्ति० सिद्धा०)। यथा द्रव्यत्वपृथिवीत्वयोः सामानाधिकरण्यम्। तथा हि द्रव्यत्ववान् घटः। तदनुयोगिकः घटे पृथिवीत्वस्य समवायाख्यः संबन्धः। तत्प्रतियोगित्वं पृथिवीत्वेस्ति इति। [ग] स्वावच्छेदकीभूतो यः कालस्तदवच्छिन्ना या स्वविशिष्टनिरूपिता यत्किंचिद्व्यक्तिनिष्ठाधेयता सा। यथा यदा सिषाधयिषा नासीत् सिद्धिश्चासीत्तदा सिद्धिसिषाधयिषाविरहयोः सामानाधिकरण्यम्। इदं च एकक्षणावच्छिन्नसामानाधिकरण्यम् इत्युच्यते। २ [क] अभेदान्वयबोधकत्वम्। यथा नीलो घटः इत्यादौ नीलपदघटपदयोः सामानाधिकरण्यम्। [ख] शाब्दिकास्तु पदयोरेकार्थाभिधायित्वम् [ग] समानविभक्तिकत्वं वा। यथा नीलो घटः इत्यादौ नीलपदघटपदयोः सामानाधिकरण्यम् इत्याहुः (वै० सा० द०)। [घ] प्रकारद्वयविशिष्टैकवस्तुबोधकत्वम्। प्रकारद्वयविशिष्टैकवस्तुपरत्वात्सामानाधिकरण्यस्य (सर्व० सं० पृ० १०१ रामानु०)।

**सामान्यम्**—१ (पदार्थः) [क] या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु यया बहूनीतरेतरतो न व्यावर्तन्ते योर्थोनेकत्र प्रत्ययानुवृत्तिनिमित्तम् तत्सामान्यम् (वात्स्या० २।२।६८) (प्रशस्त० १ पृ० २) (त० भा०)। अत्र व्युत्पत्तिः समानानां भावोनागन्तुको नित्यो धर्मः सामान्यम् (प० मा०) इति। तच्च द्रव्यगुणकर्मवृत्ति नित्यं चेति बोध्यम्। [ख] नित्यत्वे सति स्वाश्रयान्योन्याभावसमानाधिकरणम्। [ग] नित्यत्वे सत्यनेकसमवेतम्। [घ] सामान्यं नित्यमेकं स्यादनेकसमवायि च (ता० र० श्लो० ५३) इति। [ङ] अनुगतो धर्मः।

[ च ] सामान्यं तु प्रध्वंसप्रतियोगित्वरहितमनेकसमवेतम् ( सर्व० सं० पृ० २१६ औ० ) । सामान्यं द्विविधम् परम् अपरं चेति । अत्र सूत्रम् सामान्यं विशेष इति बुद्ध्यपेक्षम् ( वै० १।२।३ ) इति । तदर्थश्च सामान्यं परसामान्यम् विशेषोपरसामान्यम् इति द्वयं बुद्ध्यपेक्षम् । बुद्धिरपेक्षा लक्षणं यस्य तत् । तथा च सामान्यं द्विविधम् परम् अपरं च । तत्र परसामान्यं सत्ता । द्रव्यत्वादिकमपरसामान्यम् । तत्र सामान्यविशेषयोः परापरयोर्लक्षणं बुद्धिरेव । अनुवृत्तत्वबुद्धिः सामान्यस्य व्यावृत्तत्वबुद्धिर्विशेषस्य लक्षणम् । अनुवृत्तत्वमधिकदेशवृत्तित्वम् । व्यावृत्तत्वमल्पदेशवृत्तित्वम् ( वै० वि० १।२।३ पृ० ५१–५२ ) । तथा च भाष्यम् द्विविधं सामान्यं परम् अपरं च । स्वविषयसर्वगतम् अभेदात्मकम् अनेकवृत्ति एकद्विबहुष्वात्मस्वरूपानुवृत्तिप्रत्ययकारणम् । स्वरूपाभेदेनाधारेषु प्रबन्धेन वर्तमानम् अनुवृत्तिबुद्धिकारणमित्यर्थः । कथम् । प्रतिपिण्डं सामान्यापेक्षप्रबन्धज्ञानोत्पत्तावभ्यासप्रत्ययजनितात्संस्कारादतीतज्ञानप्रबन्धप्रत्ययावेक्षणाद्यत्समनुगतमस्ति तत्सामान्यम् इति । तत्र सत्ता परं सामान्यमनुवृत्तिप्रत्ययकारणमेव । यथा परस्परविशिष्टेषु चर्मवस्त्रकम्बलादिष्वेकस्मान्नीलद्रव्याभिसंबन्धात् नीलम् नीलम् इति प्रत्ययानुवृत्तिः तथा परस्परविशिष्टेषु द्रव्यगुणकर्मस्वविशिष्टा सत् सत् इति प्रत्ययानुवृत्तिः । सा चार्थान्तराद्भवितुमर्हतीति यत्तदर्थान्तरं सा सत्ता इति सिद्धा सत्ता । सत्तासंबन्धात् सत् इति प्रत्ययानुवृत्तिः । तस्मात्सत्ता सामान्यमेव । अपरं द्रव्यत्वगुणत्वकर्मत्वादि । तच्चानुवृत्तिव्यावृत्तिप्रत्ययहेतुत्वात् सामान्यं विशेषश्च भवति । तत्र द्रव्यत्वं परस्परविशिष्टेषु पृथिव्यादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यम् गुणकर्मभ्यो व्यावृत्तिप्रत्ययहेतुत्वाद्विशेषः । तथा गुणत्वं परस्परविशिष्टेषु रूपादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यम् द्रव्यकर्मभ्यो व्यावृत्तिप्रत्ययहेतुत्वाद्विशेषः । तथा कर्मत्वं परस्परविशिष्टेषूत्क्षेपणादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यम् द्रव्यगुणेभ्यो व्यावृत्तिहेतुत्वाद्विशेषः । एवम् पृथिवीत्वरूपत्वोत्क्षेपणत्वगोत्वपटत्वादीनां प्राण्यप्राणिगतानामनुवृत्तिव्यावृत्तिप्रत्ययहेतुत्वात् सामान्यविशेषभावः सिद्धः । तानि द्रव्यत्वादीनि प्रभूतविषयत्वात् प्राधान्येन

सामान्यानि स्वाश्रयविशेषकत्वाद्भक्त्या विशेषाख्यानि इति लक्षणभेदादेषां द्रव्यगुणकर्मभ्यः पदार्थान्तरत्वं च सिद्धम् ( प्रशस्त० सामान्यनि० पृ० ६३-६४ ) । तत्र परं सत्ता । महाविषयत्वात् । अपरं द्रव्यत्वगुणत्वकर्मत्वादि । अल्पविषयत्वात् । तच्च व्यावृत्तेरपि हेतुत्वात् सामान्यं सत् विशेषाख्यामपि लभते (मु० १) (त० सं०) इति बोध्यम् । परत्वं चात्र व्यापकत्वम् । तच्च अधिकदेशवृत्तित्वम् । तच्च स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् (ल० व० पृ० ३८) । अथ वा स्वरूपतः सर्वदेशसंबद्धत्वम् ( वै० उ० १।२।३ ) । अत्रेदं बोध्यम् । सत्ताया द्रव्यादित्रितयवृत्तित्वेनेतरसामान्यापेक्षयाधिकदेशवृत्तित्वात् परत्वं ज्ञेयम् ( त० कौ० ) । सा चानुवृत्तेरेव हेतुत्वात्सामान्यमेव ( प्रशस्त० पृ० २ ) । अत्रेदमधिकं विज्ञेयम् सत्तागुणत्वे च सर्वेन्द्रियग्राह्ये समवायोभावश्च (न्या० वा० १।१।१३ पृ० ७६ ) इति । नव्याः पुनरिमां सत्तां नाङ्गीकुर्वन्ति । अपरत्वं चात्र न्यूनदेशवृत्तित्वम् । तच्च स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् ( ल० व० ) । द्रव्यत्वादीनां सत्तापेक्षयाल्पदेशवृत्तित्वादपरत्वं बोध्यम् । अत्र सूत्रम् द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च (वै० १।२।५) इति । तथा च द्रव्यत्वादीनां सत्तापेक्षयाल्पदेशवृत्तित्वादपरत्वम् पृथिवीत्वाद्यपेक्षयाधिकदेशवृत्तित्वात्परत्वम् । एवं च परत्वमपरत्वं च तेषां विज्ञेयम् ( मु० १।१ ) । २ यत्किंचिदधिकरणवृत्तिपदार्थमात्रम् । यथा सामान्यलक्षणः संनिकर्षः इत्यादौ सामान्यशब्दार्थः । अत्रार्थे व्युत्पत्तिः समानानां भावः सामान्यम् ( मु० १ पृ० १२९ ) इति । इदं सामान्यं द्विविधम् अखण्डम् सखण्डं चेति । तत्र अखण्डम् साक्षात्संबद्धं सामान्यम् जातिः इत्युच्यते । यथा सत्ताद्रव्यत्वकर्मत्वादि । सखण्डं तु परंपरया संबद्धं सामान्यम् उपाधिः इत्युच्यते । यथा प्रमेयत्वज्ञेयत्वादि दण्डित्वकुण्डलित्वादि च । अयं च उपाधिः पदार्थमात्रवृत्तिः ( प्र० प्र० ) ( दीधि० २ पृ० ८१ ) । इदमत्राकूतम् । प्रमात्वमेव हि परंपरासंबन्धेन ( स्वाश्रयविषयत्वसंबन्धेन ) घटादिनिष्ठं प्रमेयत्वरूपम् इति प्रमात्वान्नातिरिक्तं प्रमेयत्वम् । एवम् दण्डत्वमेव परंपरासंबन्धेन ( स्वाश्रयदण्डसंयोगसंबन्धेन )

पुरुषादिनिष्ठं दण्डित्वस्वरूपम् इति दण्डित्वादि दण्डस्वात्मातिरिक्तम् ( त० कौ० पृ० २० ) इति । इदं सामान्यं कचिन्नित्यं धूमत्वादि कचिदनित्यं घटादि ( मु० १ पृ० १२९ ) इति । ३ साधारणो व्यापको वा धर्मः । यथा द्रव्यसामान्यलक्षणम् हेत्वाभाससामान्यनिरुक्तिः इत्यादौ सामान्यशब्दार्थः । ४ सर्वशब्दवदस्यार्थोनुसंधेयः । यथा प्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व यद्धर्मावच्छिन्नत्व एतदुभयाभावः ( दीधि० ) ( मु० २ व्याप्तिनि० ) इत्यादौ सामान्यशब्दस्यार्थः । तथा च प्रतियोगितासामान्ये इत्यस्य सर्वासु प्रतियोगितासु इत्यर्थः । ५ साहित्यशास्त्रज्ञास्तु सादृश्यप्रयोजको धर्मः । यथा मुखं पद्ममिव सुन्दरम् इत्यादौ सौन्दर्यादिः साधारणधर्मः सामान्यम् इत्याहुः । ६ मीमांसकाश्च अधिकविषयकम् । यथा ब्राह्मणाय दधि दीयताम् कौण्डिन्याय तक्रम् इत्यादौ दधिदानमधिकब्राह्मणविषयकत्वेन सामान्यम् इत्याहुः । अत्रेदमधिकं विज्ञेयम् । सामान्यशास्त्रं च विशेषशास्त्रेण बाध्यते । यथा मा हिंस्यात्सर्वा भूतानि इति हिंसानिषेधः सर्वविषयः । वायव्यं श्वेतमालभेत इत्यादि हिंसाशास्त्रं विशेषः । तेन सामान्यशास्त्रं वैधेतरविषय एव प्रसरति इति । अत्र बाध्यबाधकभावस्तु समान एव विषये न तु भिन्ने विषये प्रवर्तते इति नियमो द्रष्टव्यः । ७ आलंकारिकास्तु अलंकारविशेष इत्याहुः । तदुक्तम् सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः ( सा० द० परि० १० श्लो० ९० ) इति ।

**सामान्यगुणत्वम्**—[ क ] रूपस्पर्शान्यत्वे सति द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकसंयोगविभागवेगद्रवत्वावृत्तिजातिशून्यगुणत्वम् ( दि० गु० पृ० १९३ ) ( ल० व० ) । यथा संख्यादीनां गुणानां सामान्यगुणत्वम् । द्रव्यविभाजकतावच्छेदकं पृथिवीत्वादि । तद्व्याप्यतावच्छेदकं च गन्धत्वादि । तच्छून्यत्वस्य संख्यादौ सत्त्वाल्लक्षणसमन्वयः । अत्राल्पपदप्रयोजनं कथ्यते । जलीयशुक्लरूपे वायोरनुष्णाशीतस्पर्शे च पृथिव्यादिशुक्लरूपस्पर्शाव्यावृत्तजातिविशेषे मानाभावात् शुक्लरूपानुष्णाशीतस्पर्शयोरतिव्याप्तिवारणाय सत्यन्तं दलं दत्तम् । शब्द-

विशेषजनकतावच्छेदकजात्यवच्छिन्नकठिनावयवद्वयविभागे तेजोवेगातिशयेत्यन्ताग्निसंयोगनाश्यतावच्छेदकवैजात्यावच्छिन्नघृतादिवृत्तिद्रवत्वे चाव्याप्तिवारणाय अवृत्ति इत्यन्तं जातिविशेषणम् । कर्मादावतिव्याप्तिवारणाय विशेष्यदलं दत्तम् । पृथिवीत्वादिव्याप्यतावच्छेदकतत्तत्संख्यात्वादिशून्यत्वस्य तत्तत्संख्यायामभावादव्याप्तिः । तद्वारणाय जातिपदं दत्तम् ( दि० गु० पृ० १९३ ) इति । [ ख ] यद्रूपावच्छिन्नसमानाधिकरणं यत्किंचिद्द्रव्यविभाजकोपाधिद्वयं भवति तद्भिन्ना स्थितिस्थापकवृत्तिभिन्ना च या जातिस्तादृशजातिमद्भिन्नगुणत्वम् ( नील० गु० पृ० ३९ ) । तथा हि । यद्रूपम् संख्यात्वसंयोगत्वविभागत्वादि । तदवच्छिन्नः संख्यासंयोगविभागादिः । तत्समानाधिकरणं यत्किंचिद् द्रव्यविभाजकोपाधिद्वयम् पृथिवीत्वजलत्वादि भवति तद्भिन्ना ( संख्यात्वसंयोगत्वादिभिन्ना ) या जातिः रूपत्वादिः ज्ञानत्वादिश्च तद्वद्भिन्नगुणत्वं संख्यादौ वर्तते इति लक्षणसमन्वयो बोध्यः । सामान्यगुणाश्चैकादश संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः परत्वम् अपरत्वम् गुरुत्वम् नैमित्तिकद्रवत्वम् वेगः स्थितिस्थापकश्चेति (मु० गु० पृ० १९२–१९३)। अत्र केषांचिन्मते स्थितिस्थापकस्य पृथिव्यादिद्रव्यचतुष्टयवृत्तित्वाङ्गीकारात् तन्मताभिप्रायेण स्थितिस्थापकस्य सामान्यगुणेष्वन्तर्भावः कृतः । तस्य पृथिवीमात्रवृत्तित्वाङ्गीकारे तु विशेषगुणत्वमेव इति विज्ञेयम् ।

**सामान्यच्छलम्**—( छलम् ) [ क ] संभवतोर्थस्यातिसामान्ययोगादसंभूतार्थकल्पना सामान्यच्छलम् ( गौ० सू० १।२।१३ ) । अत्र व्युत्पत्तिः सामान्यनिमित्तं छलं सामान्यच्छलम् इति । यद्विवक्षितमर्थमाप्नोति चात्येति च तदतिसामान्यम् । यथा ब्राह्मणत्वं विद्याचरणसंपदं क्वचिदाप्नोति क्वचिदत्येति । अहो खल्वसौ ब्राह्मणो विद्याचरणसंपन्नः इत्युक्ते कश्चिदाह । संभवति हि ब्राह्मणे विद्याचरणसंपत् इति । अस्य वचनस्य विघातोर्थविकल्पोपपत्त्या असंभूतार्थकल्पनया क्रियते यदि ब्राह्मणे विद्याचरणसंपत्संभवति व्रात्येपि संभवेत् व्रात्योपि ब्राह्मणः सोप्यस्तु विद्याचरणसंपन्नः (वात्स्या० १।२।१३) इति । [ ख ] सामान्यविशिष्टसंभवदर्थाभिप्रायेणो-

क्तस्यातिसामान्ययोगादसंभवदर्थकल्पनया दूषणाभिधानम् । यथा ब्राह्मणोयं विद्याचरणसंपन्नः इत्युक्ते ब्राह्मणत्वेन विद्याचरणसंपदं साधयति इति कल्पयित्वा परो वदति कुतो ब्राह्मणत्वेन विद्याचरणसंपत् बाल्ये व्यभिचारात् ( गौ० वृ० १।२।१३ ) इति । तदुक्तम् सामान्यच्छलमेतत्स्यादतिसामान्ययोगतः । तात्पर्यवैपरीत्येन कल्पितार्थस्य बाधनम् ॥ ( ता० र० १ श्लो० ९६ ) इति । अत्र सामान्यविशिष्टः संभवदर्थश्च एतद्ब्राह्मणः । अतिसामान्यं तु ब्राह्मणत्वसामान्यम् इति ज्ञेयम् ।

**सामान्यतो दृष्टम्**—( अनुमानम् ) [ क ] व्रज्यापूर्वकम् अन्यत्र दृष्टस्य अन्यत्र दर्शनम् इति । यथा चादित्यस्य । तस्मादस्त्यप्रत्यक्षाप्यादित्यस्य व्रज्येति । यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः संबन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते । यथा इच्छादिभिरात्मा । इच्छादयो गुणाः । गुणाश्च द्रव्यसंस्थानाः । तद्यदेषां स्थानं स आत्मेति ( वात्स्या० १।१।५ ) । [ ख ] कार्यकारणभिन्नलिङ्गकमनुमानम् । यथा पृथिवीत्वेन द्रव्यत्वानुमानम् । [ ग ] अन्वयव्यतिरेक्यनुमानम् । यथा वह्निमान् धूमात् इत्यादि ( गौ० वृ० १।१।५ ) ।

**सामान्यप्रत्यासत्तिः**—सामान्यलक्षणशब्दवदस्यार्थोनुसंधेयः ।

**सामान्यलक्षणः**—( अलौकिकः संनिकर्षः ) अलौकिकप्रत्यक्षविशेषे कारणं संनिकर्षविशेषः । स च १ [ क ] इन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतं सामान्यम् । यथा घटत्वधूमत्वादि । अत्रार्थे सामान्यं लक्षणं स्वरूपं यस्य इति व्युत्पत्त्या सामान्यमेव प्रत्यासत्तिः ( दीधि० २ पृ० ८० ) ( मु० १ पृ० १२७ ) । अत्रेदं विज्ञेयम् । सामान्यं ज्ञायमानमेव स्वाश्रयाणां संनिकर्षः । ज्ञायमानघटत्वसंनिकर्षेण घटाः इत्याकारकं सकलघटानां प्रत्यक्षं जन्यते ( त० कौ० ) इति । तथा यत्रेन्द्रियसंयुक्तो धूमादिः तद्विशेष्यकं धूमः इति ज्ञानं जातम् । तत्र ज्ञाने धूमत्वं प्रकारः । तत्र धूमत्वेन संनिकर्षेण धूमाः इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते ( मु० १ पृ० १२७ ) ( दीधि० २

पृ० ८१ ) इति । अयं संनिकर्षश्च अतीतानागतानामिन्द्रियासंनिकृष्टानां सामान्याश्रयाणां सर्वेषां व्यक्तीनामलौकिकं प्रत्यक्षं जनयति इति बोध्यम् । सामान्यलक्षणायाः प्रत्यासत्त्याः सामान्यप्रकारकज्ञानजनकत्वनियमात् ( दीधि० २ ) । मीमांसका मायावादिवेदान्तिनश्च सामान्यलक्षणं संनिकर्षं नाङ्गीचक्रुः ( म० प्र० ४ पृ० ३९ ) । तन्न सहन्ते नैयायिकाः । यदि सामान्यलक्षणा प्रत्यासत्तिर्नास्ति तदा अनुकूलतर्कादिकं विना धूमादौ व्यभिचारसंशयो न स्यात् । प्रसिद्धधूमे वह्निसंबन्धावगमात् कालान्तरीयदेशान्तरीयधूमस्य मानाभावेनाज्ञानात् । सामान्येन तु सकलधूमोपस्थितौ धूमान्तरे विशेषादर्शनेन संशयो युज्यते ( चि० २ पृ० १८–१९ ) । अतः सामान्यलक्षणावश्यकी इति । अत्र सामान्यं च सखण्डाखण्डभेदेन द्वेधा । सखण्डे चाखण्डमेव परंपरया संबद्धं प्रत्यासत्तिः । येन संबन्धेन चेन्द्रियसंबद्धे सामान्यं ज्ञायते तेन संबन्धेनाधिकरणानां प्रत्यासत्तिः ( दीधि० २ पृ० ८१ ) । अत्र इन्द्रियसंबद्ध इत्युक्त्या इन्द्रियसंबन्धस्य संयोगादेरिन्द्रियप्रतियोगिकत्वात् तद्घटितस्येन्द्रियसंयुक्तविशेष्यकज्ञानप्रकारीभूतधूमत्वादेः प्रत्यासत्तित्वं जन्यत्वघटितव्यापारत्वं च निर्वहति इति विज्ञेयम् ( दि० १ पृ० १२७ ) । अत्र बहिरिन्द्रियस्य संबन्धश्च लौकिको ग्राह्यः । तेन एतादृशसंबन्धघटितं सामान्यं बहिरिन्द्रियप्रत्यक्षस्थले ह्युपयुज्यते ( मु० १ पृ० १२९ ) ( सि० च० ) । ज्ञानस्य तदिन्द्रियजन्यत्वं च नियामकम् । एवं च अणुत्वेन यत्किंचिदणूपस्थितावपि सकलाणुगोचरो मानसो बोधः इति वदन्ति । दीधितिकृता तु स्वमते सामान्यलक्षणायाः प्रत्यासत्तित्वं निराकृतम् इति विज्ञेयम् । [ ख ] ज्ञानप्रकारीभूतं सामान्यम् । यथा घटत्वपरमाणुत्वादि । अत्र अणुत्वेन यत्किंचिदणूपस्थितावपि सकलाणुगोचरो मानसो बोधो भवति इति भावः । इदं मानसप्रत्यक्षस्थले ह्युपयुज्यते ( मु० ) ( सि० च० ) । २ सामान्यविषयकं ज्ञानम् । यथा घटत्वज्ञानम् ( मु० १ पृ० १३० ) ( सि० च० ) । तथा हि अयं घटः इति घटत्वविषयकलौकिकप्रत्यक्षेण सर्वे घटाः इति सकलघटविषयकालौकिकप्रत्यक्षं जायते ( सि० च० ) इति । सामान्यविषयकं

ज्ञानमित्यस्यार्थश्च इन्द्रियसंबद्धविशेष्यकं सामान्यप्रकारकं ज्ञानम् इति । अत्रार्थे व्युत्पत्तिः सामान्यं लक्षणं निरूपकं विषयः यस्य तत् ( मु० १ पृ० १३० ) ( दीधि० २ पृ० ८० ) इति । इदानीं सामान्यलक्षणज्ञानलक्षणयोः संनिकर्षयोर्भेद उच्यते । तत्र सामान्यलक्षणसंनिकर्षः सामान्याश्रयसकलव्यक्तिविषयकं ज्ञानं जनयति । ज्ञानलक्षणसंनिकर्षस्तु यस्य सामान्यस्य ज्ञानं संनिकर्षः अस्ति तस्यैव ज्ञानं जनयति ( भा० प० ) ( मु० ) इति । अथ कारणतावच्छेदकभेदेन कार्यतावच्छेदकभेदेन च तयोर्भेद उच्यते । तत्र सामान्यलक्षणायाः कार्यकारणभावश्च तत्तत्संबन्धावच्छिन्नघटत्वादिप्रकारिताशालिज्ञानत्वेन स्वरूपतस्तत्संबन्धावच्छिन्नघटत्वादिप्रकारिताकतत्तत्संबन्धावच्छिन्नघटत्वाद्याश्रयताशालिमुख्यविशेष्यकप्रत्यक्षत्वेन इति । ज्ञानलक्षणायाः कारणतावच्छेदकं तु सामान्यतः संसर्गावच्छिन्नघटत्वादिविषयताशालिज्ञानत्वम् । घटत्वादिप्रकारकज्ञानादिव घटत्वादिविषयक( घटत्वादिविशेष्यक )ज्ञानादपि घटत्वादिप्रकारकोपनीतभानोदयात् । केचित्तु ज्ञानलक्षणायाः प्रकारकघटत्वादिज्ञानत्वं कारणतावच्छेदकम् इत्याहुः । भाषापरिच्छेदकारादयस्तु संसर्गावच्छिन्नतद्विषयताशालिज्ञानत्वेन कारणता योगजधर्माजन्यसामान्यलक्षणाप्रत्यासत्त्यजन्यतद्विषयकप्रत्यक्षत्वेन कार्यता इत्याहुः । अत्र तद्विषयिता चालौकिकी ग्राह्या । तेन तल्लौकिकप्रत्यक्षे न व्यभिचारः ( म० म० २ पृ० २७१ ) ।

**सामान्यलक्षणा**—( प्रत्यासत्तिः ) सामान्यलक्षणशब्दवदस्यार्थोनुसंधेयः ।

**सामान्यविधिः**—( विधिः ) १ विशेषापवाद्यो विधिः । यथा कौण्डिन्याय तक्रम् इति विशेषापवादः सर्वेभ्यो दधि दीयताम् इति सामान्यविधिः । यथा वा मतविशेषे अग्नीषोमीयं पशुमालभेत इति विशेषापवाद्यो न हिंस्यात्सर्वा भूतानि इति हिंसासामान्यनिषेधविधिः सामान्यविधिः । शिष्टं सामान्यशब्दे दृश्यम् । २ मीमांसकास्तु अनारभ्य विधिः । यथा सामिधेन्यृचा सासदश्यस्यानारभ्याधीतत्वेन सामान्यविधिः । यथा वा यस्य पर्णमयी जुहूर्भवति न स पाप९ श्लोक९ शृणोति ( तैत्ति०

सं० ३।५।७ ) इत्यादौ पर्णताया अनारभ्याधीताया दर्शपूर्णमासरूपप्रकृतियागेन्वय इत्याहुः । तथा हि सामान्यविधेरस्पष्टत्वात्तस्य विशेषेणोपसंहारो भवति । तथा चोक्तम् सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ( लौ० भा० टी० पृ० २३ ) इति ।

**सामासिकम्**—( योगरूढं नाम ) समासात्मकं नाम । यथा कृष्णसर्पादि । कृदन्तस्य पङ्कज इत्यादियोगरूढस्य सामासिक एवान्तर्भावः ( श० प्र० श्लो० २९ पृ० ३७ ) ।

**सायम्**—संध्याशब्दे दृश्यम् ।

**सार्थकः**—१ ( शब्दः ) यादृशः शब्दः शब्दान्तरं सहकृत्यैव स्वस्य स्वघटकस्य वा वृत्त्युपस्थाप्ययादृशार्थावगाहिबोधं प्रत्यनुकूलः स तथाविधेर्थे सार्थकः । यथा पटपाचकाद्याः प्रकृतयः सुप्तिङाद्याः प्रत्ययाः चादयो निपाताश्च स्वोपस्थाप्यार्थस्य बोधं नियमतः शब्दान्तरं सहकृत्य जनयन्ति । सार्थकः शब्दस्त्रिविधः प्रकृतिः प्रत्ययः निपातश्चेति । शशविषाणादिकः शब्दोपि शशीयत्वादिना विषाणादेरन्वयबोधमादधानस्तादृशविषयताकबोधने सार्थक एव । परं त्वयोग्यः । वाक्यानि पुनः शब्दान्तरमसहकृत्यापि स्वोपस्थाप्यार्थस्य बोधं जनयन्ति इति न तत्रातिव्याप्तिः ( श० प्र० श्लो० ६ पृ० ७ ) । २ समूहः सार्थः इति काव्यज्ञा आहुः ।

**सास्मितः**—( समाधिः ) यदा रजस्तमोलेशानभिभूतं शुद्धं सत्त्वमालम्बनीकृत्य या प्रवर्तते भावना तदा तस्यां सत्त्वस्य न्यग्भावाच्चितिशक्तेरुद्रेकाच्च सत्त्वमात्रावशेषत्वेन सास्मितः समाधिः ( सर्व० सं० पृ० ३५७ पात० ) ।

**साहचर्यम्**—१ साहित्यम् । २ सामानाधिकरण्यम् ( त० दी० ) ( न्या० बो० ) । ३ समभिव्याहारः ।

**साहसम्**—सहसा क्रियते कर्म यत्किंचिद्बलदर्पितैः । तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥ ( मिताक्षरा अ० २ श्लो० २३० ) । यथा विषशस्त्रादिनिमित्तं प्राणव्यापादनादि ( मिताक्षरा अ० २ श्लो० १२ ) । तदुक्तम् मनुष्यमारणं चौर्यं परदाराभिमर्शनम् । पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ॥ ( मिताक्षरा अ० २ श्लो० ७२ ) ।

**साहाय्यम्**—सहायता ।

**साहित्यम्**—१ तत्तत्क्रियाकालवृत्तित्वम् सहवर्तमानत्वं वा । यथा एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् । सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ॥ इत्यादौ सहशब्दस्यार्थः । अत्र वर्तमान इत्यध्याहारात् वर्तमानत्वक्रियामादायैव साहित्यबोधः इति वदन्ति ( ग० व्यु० का० ३ पृ० ९१ )। अथ वा विद्यमान इत्यध्याहारात् विद्यमानत्वमपि सहशब्दार्थः । अत एव विद्यमानसहार्थे तृतीयेयम् इति शाब्दिकमतमपि वरीवर्ति । अत्र पुत्रेषु भारवहनकर्तृत्वाभावेपि सहशब्दप्रयोगादध्याहार आवश्यकः इति ज्ञेयम् ( का० व्या० पृ० ८ ) । २ [ क ] तुल्यवदेकक्रियान्वयित्वम् ( न्या० म० ४ ) ( दि० ४ ) । तदर्थश्च एककारकान्वयित्वेन तुल्ययोरेकजातीयक्रिययोरन्वयित्वम् (समानकालीनत्वम्) ( श० प्र० श्लो० ९४ टी० पृ० ११९ ) इति । [ ख ] अन्ये तु परस्परसापेक्षाणां तुल्यरूपाणामेकक्रियान्वयित्वम् इत्याहुः ( श्राद्ध० ) ( वाच० ) । शाब्दिकास्तु समभिव्याहृतत्वं सहितत्वम् इत्याहुः ( सि० कौ० ) । ३ बुद्धिविशेषविषयत्वम् । ५ काव्यज्ञास्तु पद्यात्मकं काव्यं साहित्यम् इत्याहुः । शिष्टं तु सहशब्दव्याख्याने द्रष्टव्यम् ।

**सिंहासनम्**—विजयो जयदो नाम रिपुघ्नोतिप्रियंकरः । दुःसहो धर्मदः शान्तः सर्वारिष्टविनाशनः ॥ एतेष्टौ संनिधौ प्रोक्तास्तव सिंहा महाबलाः । तेन सिंहासनेति त्वं विप्रैर्वेदेषु गीयसे ॥ ( पु० चि० पृ० ७२ ) ।

**सिद्धम्**—१ इदमित्थंभूतं च इत्यभ्यनुज्ञायमानमर्थजातम् । यथा सिद्धान्त इत्यादौ सिद्धशब्दस्यार्थः ( वात्स्या० १।१।२६ ) । २ सिद्धिविषयः । ३ निश्चितम् । ४ परिनिष्ठितम् । यथा परब्रह्म सिद्धम् इत्यादौ सिद्धशब्दार्थ इति मायावादिवेदान्तिनो वदन्ति । ५ देवयोनिविशेषः इति पौराणिका आहुः । ६ मौहूर्तिकास्तु विष्कम्भादिषु मध्ये ( २१ ) एकविंशो योगः इत्याहुः । ७ कृष्णधत्तूरम् इति भिषज आहुः । ८ मन्त्रविशेषः सिद्धियुक्तमन्त्रश्च इति मान्त्रिका आहुः । ९ शाब्दिकास्तु क्रियाविशेषः इत्याहुः । १० निष्पन्नम् इति काव्यज्ञा आहुः ।

**सिद्धसाधनम्**—( दोषः ) १ प्रमाणान्तरेणावगतार्थसाधनम् अनुमानम् । यथा पर्वते वह्निनिश्चयानन्तरमपि पुनस्तत्साधनाय विहितं पर्वतो वह्निमान् धूमात् इत्यनुमानम् । अत्र न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेनुमातारः इत्यनुभवो द्रष्टव्यः ( तत्त्वचिन्तामणौ वाचस्पतिमिश्रः ) । अत्र सिषाधयिषाया असत्त्वे इति ग्रन्थ आदौ पूरणीयः । सिषाधयिषायाः सत्त्वे तु अनुमितेरुदयेन तदा सिद्धसाधनस्य न दोषत्वम् ( पक्षताविघटकत्वम् ) इत्यवधेयम् । अत्र प्रत्यक्षकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः इत्यनुभवो द्रष्टव्यः ( चिन्तामणौ वाचस्पतिमिश्रः ) । २ साध्यपक्षतावच्छेदकयोरैक्ये सिद्धसाधनम् । यथा पर्वतः पर्वतत्ववान् धूमात् इत्यादौ सिद्धसाधनम् । अत्र पूर्वं पक्षतावच्छेदकपर्वतत्वविशिष्टपक्षज्ञानेनैव साध्यसिद्ध्युपपत्तौ पुनस्तत्साधनं सिद्धसाधनम् इति भावः । केचित्तु पक्षतावच्छेदकभेदे न सिद्धसाधनं दोषः । यथा नित्ये वाङ्मनसे इत्यत्र । यथा वा घटत्वावच्छेदेनेतरभेदस्य सिद्धत्वेपि द्रव्यत्वावच्छेदेनेतरभेदसाधने न सिद्धसाधनम् इत्याहुः । सिद्धसाधनं च हेत्वाभासो निग्रहस्थानं वेति मतभेदः । तत्र सिद्धसाधनं पक्षताविघटकत्वेनाश्रयासिद्धेन्तर्भवति इति प्राञ्चः जरन्नैयायिकाः आहुः । तन्मते पक्षतायाः साध्यसंशयरूपतया तद्विघटकत्वं साध्यनिश्चयस्याक्षतम् । तथा च संदिग्धसाध्यवतः पक्षस्याभावादाश्रयासिद्धिः इति भावः ( नील० २ ) ( प्र० च० पृ० ३१ ) । नव्यास्तु सिषाधयिषितपक्षविघटनद्वारा सिद्धसाधनं दूषणम् न स्वतः । सत्यपि सिद्धसाधने ( साध्यनिश्चये ) सिषाधयिषयानुमित्युदयान्न सिद्धसाधनं हेत्वाभासान्तरम् । किंतु निग्रहस्थानान्तरम् इत्याहुः ( चि० २ ) ( न्या० म० २ पृ० २१ ) ( म० प्र० २ पृ० २८ ) ( त० दी० २ पृ० २७ ) ( सि० च० ) । नव्यानामयमाशयः । सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यैव सिद्धान्तसिद्धपक्षतात्वस्वीकारात् सत्यामपि सिद्धौ ( साध्यनिश्चये ) सिषाधयिषादशायां चानुमित्युदयेन सिद्धेरनुमितिप्रतिबन्धकत्वाभावान्न व्यापकत्वघटितहेत्वाभासलक्षणाक्रान्तत्वं सिद्धिविषयस्य साध्यवत्पक्षस्य इति न सिद्धसाधनस्य हेत्वाभासत्वं ( दुष्टहेतुत्वम् ) संभवति ( नील० २ पृ० २७ ) इति ।

**सिद्धान्तः**—१ [ क ] तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ( गौ० १।१।२६ ) । समुदितार्थश्च तन्त्रार्थसंस्थितिस्तन्त्रसंस्थितिः । अधिकरणानुषक्तार्थसंस्थितिरधिकरणसंस्थितिः । अभ्युपगमसंस्थितिरनवधारितार्थपरिग्रहः । तद्विशेषपरीक्षणायाभ्युपगमसिद्धान्तः ( वात्स्या० १।१।२६ ) । अथ वा तन्त्रं शास्त्रं तदेवाधिकरणं ज्ञापकतया यस्य तादृशस्य योभ्युपगमस्तस्य समीचीनतया असंशयरूपतया स्थितिः इति । अत्र अभ्युपगम्यमानोर्थः सिद्धान्तः इति भाष्यम् । अभ्युपगमव्यवस्था सिद्धान्तः । अभ्युपगमः इदमित्थंभूतं वा इति न्यायवार्तिकटीका ( गौ० वृ० १।१।२६ ) ( न्या० वा० १ पृ० १७ ) । अत्रेयं व्युत्पत्तिः सिद्धस्य संस्थितिः सिद्धान्तः इति । संस्थितिरित्थंभावव्यवस्था धर्मनियमः ( वात्स्या० १।१।२६ अवतर० पृ० ४७ ) । [ ख ] शास्त्रितार्थनिश्चयः ( गौ० वृ० १।१।२६ ) । शास्त्रप्रतिपादितार्थनिश्चय इत्यर्थः । [ ग ] प्रामाणिकत्वेनाभ्युपगतोर्थः ( त० दी० पृ० ४३ ) ( त० भा० पृ० ४२ ) ( सर्व० पृ० २३८ अक्ष० ) । तथा चोक्तं तार्किकरक्षायाम् अभ्युपेतः प्रमाणैः स्यादाभिमानिकसिद्धिभिः । सिद्धान्तः सर्वतन्त्रादिभेदात्स च चतुर्विधः ॥ ( ता० र० श्लो० ५८ ) इति । [ घ ] तत्तच्छास्त्रसिद्धार्थः ( दि० १ ) । तन्त्रभेदात्तु खलु स चतुर्विधः सर्वतन्त्रसंस्थितिः प्रतितन्त्रसंस्थितिः अधिकरणसंस्थितिः अभ्युपगमसंस्थितिश्च इति ( गौ० १।१।२७ ) ( त० भा० पृ० ४२ ) । २ अबाधितार्थः ( म० प्र० पृ० ३ ) । यथा न्यायसिद्धान्तमञ्जरी इत्यादौ सिद्धान्तशब्दस्यार्थः ( न्या० म० पृ० १ ) । ३ मीमांसकास्तु पञ्चावयवयुक्ताधिकरणस्य चरमोङ्गविशेषः सिद्धान्त इत्याहुः । ४ ज्योतिषज्ञास्तु ज्योतिःशास्त्रग्रन्थविशेषः । यथा सूर्यसिद्धान्तसोमसिद्धान्तादिः इत्याहुः । तल्लक्षणमुक्तम् त्रुट्यादिप्रलयान्तकालकलनामानप्रभेदः क्रमाच्चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः । भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते सिद्धान्तः स उदाहृतोत्र गणितस्कन्धप्रबन्धे बुधैः ॥ ( सि० शि० ) इति । ५ वादिजनास्तु प्रमाणाद्युपन्यासेन पूर्वपक्षनिरासकः सिद्धपक्षस्य स्थापनरूपो वाक्यस्तोम इत्याहुः ।

**सिद्धिः**—१ निश्चयः । स च साध्यवत्तानिश्चयः (दीधि० २) (ग० सत्प्र०) । पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहिनिश्चयः इत्यर्थः (नील० २) । यथा पर्वते धूमेन वह्निसाधने पर्वतो वह्निमान् इति निश्चयः । इयं सिद्धिर्द्विविधा पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिनी पक्षतावच्छेदकव्यापकत्वावगाहिनी चेति । इयं सिद्धिरसत्यामनुमित्सायां कामिनीजिज्ञासा कार्यमात्रस्येव अनुमितेः पृथक् प्रतिबन्धिका भवति । अनुमित्सा तु तत्रोत्तेजिका भवति इति ज्ञेयम् (ग० पक्ष०) । अनुमित्सा सिषाधयिषा । अत्रानुभवमनुरुध्य प्रतिबध्यप्रतिबन्धकभावः कल्प्यते । पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेनैव सिद्धिर्विरोधिनी न तु पक्षतावच्छेदकसामानाधिकरण्येनापि सिद्धिर्विरोधिनी । पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितिं प्रति तूभयविधापि सिद्धिर्विरोधिनी (मु० २ पक्ष०) (दीधि० २) इति । २ व्याप्तस्य पक्षधर्मताप्रतीतिः सिद्धिरुच्यते । यथा असिद्धो हेत्वाभासः इत्यादौ सिद्धिशब्दस्यार्थः (ता० र० श्लो० ८४) । ३ सांख्यास्तु आध्यात्मिकादिदुःखत्रयविघातास्त्रयो मुख्यसिद्धय इत्याहुः । अत्र सूत्रम् ऊहादिभिः सिद्धिः (सांख्य० सू० अ० ३ सू० ४४) इति । तदर्थश्च ऊहादिभेदैः सिद्धिरष्टधा भवति इति । इदं सूत्रं कारिकयापि व्याख्यातम् । यथा ऊहः शब्दोध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः । दानं च सिद्धयोष्टौ सिद्धेः पूर्वोङ्कुशस्त्रिविधः ॥ (सांख्य० भा० ३।४४) इति । ४ योगशास्त्रज्ञास्तु ऐश्वर्यम् । अत्र सूत्राणि ते समाधावुपसर्गा व्युत्थाने सिद्धयः (पात० पा० ३ सू० ३७) जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः (पात० पा० ४ सू० १) इत्यादीनि । तदर्थश्च ते प्रतिभादयः सिद्धयः समाहितचित्तस्योत्पद्यमाना उपसर्गाः विघ्नाः । तत्त्वदर्शनप्रत्यनीकत्वात् । व्युत्थितचित्तस्योत्पद्यमानाः सिद्धयः प्रियाः (भाष्य०) इति । तत्र जन्मना सिद्धिर्यथा यक्षगन्धर्वादीनामाकाशगमनादिसिद्धिः । देवहूतीपुत्रकपिलादीनां तु स्वाभाविकी सिद्धिः । ओषधिभिः असुरभवने माण्डव्यादिमुनीनां रसायनेन इत्येवमादिः । मन्त्रैरणिमादिलाभः केषांचित् । तपसा विश्वा-

मित्रादीनां सिद्धिः । संकल्पसिद्धिः कामरूपी यत्र तत्र कामगः इत्येव-मादिः । समाधिजाः सिद्धयस्तु परमाण्वादिमूलप्रकृत्यन्तवस्तूनां साक्षा-त्कारः ऋतंभराख्याध्यात्मप्रसादश्च इत्यादयः ( पात० १।४७–४८ ) । अष्टौ सिद्धयस्तु अणिमा महिमा लघिमा गरिमा प्राप्तिः प्राकाम्यम् वशित्वम् ईशित्वं चेति । तत्र भूतजयेनाणिमाद्यष्टसिद्धयः प्राप्नुवन्ति । तत्र अणिमा परमाणुवत्सूक्ष्मस्वरूपेणावस्थानम् । महिमा विभुत्वप्राप्तिः । लघिमा कार्पासवल्लघुत्वभवनम् । गरिमा मेरुपर्वतवद्गुरुत्वभवनम् । प्राप्तिः अङ्गुल्या चन्द्रमण्डलस्पर्शनम् । प्राकाम्यं सत्यसंकल्पत्वम् । वशित्वं सर्वप्राणिनियन्तृत्वम् । ईशित्वं च सर्वभूतोत्पादनशक्तिमत्त्वम् ( पात० ३।४५ ) इति । ५ तान्त्रिकास्तु मन्त्रसिद्धिरित्याहुः । इयं सिद्धिरुत्तममध्यमाधमभेदेन त्रिविधा । तत्रोत्तमा मनोरथानामक्लेशपरकाय-प्रवेशादिः । मध्यमा ख्यातिवाहनभूषादिलाभः । अधमा तु धनित्व-पुत्रदारादिलाभः ( तन्त्रसा० ) इति ।

**सिनीवाली**— दृष्टचन्द्राममावास्यां सिनीवालीं प्रचक्षते ( पु० चि० पृ० ३१८ ) ।

**सिषाधयिषा**—[ क ] तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारिकानुमितिवि-षयिणीच्छा ( दीधि० २ पक्ष० पृ० १२४ ) । [ ख ] अनुमितित्व-प्रकारकेच्छा ( ग० सार्व० पक्ष० ) । यथा पर्वते वह्न्यनुमितिर्मे जाय-ताम् इत्याकारिकेच्छा । अत्रेदं चिन्त्यम् । सिद्धौ सत्यामपि सिषाध-यिषासत्त्वेनुमितिदर्शनात्सिषाधयिषाया अनुमितावुत्तेजकत्वमुक्तम् । तच्चो-त्तेजकत्वम् तत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वप्रत्यक्षातिरिक्तत्वैत-त्क्षणानन्तरक्षणानुमितित्वैतन्निष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकवि-षयिताकत्वरूपेणानुगतेन वाच्यम् ( ग० पक्ष० ) इति । परे तु पर्वते वह्निमनुमिनुयाम् इत्याद्यनुगतेच्छानामनुगतरूपेणैवोत्तेजकत्वम् । प्रत्यक्षा-तिरिक्तं ज्ञानं जायताम् इत्याद्यननुगतेच्छानां तु तत्तद्व्यक्तित्वेनैवोत्तेजकत्वं वाच्यम् इत्याहुः ( दि० २ पक्षता० पृ० १४९ ) ।

**सीमा**—१ मर्यादा ( ग० व्यु० कार० २ ख० २ पृ० ७५ ) ।

२ अवधिः । ३ स्थितिः । ४ अण्डकोशः ( मेदि० ) । यथा सीम्नि पुष्कलको हतः इत्यादौ सीमन्शब्दस्यार्थः ( सि० कौ० सुब० ) ।

सु—( अव्ययम् ) १ प्रशंसा । यथा सुरूपः इत्यादौ सुशब्दस्यार्थः । २ अनुमतिः । यथा सुकृतम् इत्यादौ सुशब्दार्थः । ३ पूजा । यथा सुसाधुः इत्यादौ सुसंस्तुतम् इत्यादौ च सुशब्दार्थः । ४ भृशम् ( अतिशयः ) । यथा सुतप्तः इत्यादौ सुशब्दस्यार्थः । ५ कृच्छ्रम् । यथा सुदुष्करम् इत्यादौ सुशब्दार्थः । ६ शुभम् । यथा सुगन्धः इत्यादौ सुशब्दस्यार्थः ( गण० ) । ७ अनायासः ( मेदि० ) । यथा सुलभः इत्यादौ सुशब्दार्थः । ८ समृद्धिः । यथा सुभिक्षम् इत्यादौ सुशब्दार्थः ।

सुखम्—१ ( गुणः ) [ क ] धर्ममात्रासाधारणकारणकगुणः ( सि० च० गणनि० पृ० ३५ ) ( त० कौ० ) । सुखं तु जगतामेव काम्यं धर्मेण जन्यते । तथा च धर्मत्वेन सुखत्वेन कार्यकारणभावः ( भा० प० गु० श्लो० १४६ ) । अयं च धर्मसुखयोः सामान्यकार्यकारणभावः प्राचां मतेनोक्तः । नवीनमते तु नित्यं विज्ञानमानन्दं ब्रह्म इति श्रुत्या भगवति नित्यसुखसिद्धौ धर्मस्य कार्यतावच्छेदकं जन्यसुखत्वम् सुखत्वावान्तर-जातिर्वा इति बोध्यम् ( दि० गु० पृ० २२० ) । सुखस्य लक्षणं तु सुख्यहम् इत्याद्यनुव्यवसायगम्यसुखत्वं जातिविशेषः ( त० दी० ) । यद्वा काम्यभावत्वम् । अथ वा इतरेच्छानधीनेच्छाविषयत्वे सति भावत्वम् ( न्या० बो० ) । दुःखाभावस्य काम्यत्वेपि स्वतः पुरुषार्थत्वेपि च तस्य भावत्वाभावान्नातिव्याप्तिः । [ ख ] इतरेच्छानधीनेच्छाविषयीभूतो गुणः । सुखेच्छा सुखत्वप्रकारकज्ञानेनैव जन्यते । नेष्टसाधनत्वज्ञा-नेनापि । तथा च उपायेच्छाया इष्टसाधनत्वविषयकज्ञानेनापि जन्य-त्वेन तादृशज्ञानजन्योपायेच्छाविषयत्वेपि इतरेच्छानधीनेच्छाविषयत्वा-भावेन नोपायेतिव्याप्तिः । अत एव सुखानन्तरमिष्टान्तरस्याभावात् सुखस्य स्वतः पुरुषार्थत्वमुपपद्यते ( मु० गु० पृ० २२१ ) इति । अत्र मतभेदः । सुखं चात्मधर्मः इति नैयायिका आहुः । तत्र चित्त-

धर्मः इति सांख्या आहुः । अत्र सांख्यानां मायावादिनां चायमाशयः सुखं चित्तधर्मोप्यध्यस्ततया प्रतिबिम्बरूपेण आत्मनि वर्तत इति । अत्रेदं विज्ञेयम् । कणादमहर्षिश्च कण्ठतः सुखदुःखयोः इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः (वै० १०।१।१) इत्यनेन कारणभेदात् भिन्नपदार्थत्वमुक्तवान् । तथा चायमर्थः । दुःखाभिन्नं सुखं न भवति । तथा च सुखं दुःखमिश्रितत्वेन दुःखाभिन्नमस्ति इति प्रत्ययस्तु भ्रम एव इति । कार्यभेदेनापि सुखस्य दुःखाद्भेदमाहुः । अनुग्रहाभिष्वङ्गनयनप्रसादादि सुखस्य कार्यम् इति प्रशस्तपादाचार्यादयः (वै० उ० १०।१।१ पृ० ४१७) । अत्र भाष्यम् । अनुग्रहलक्षणं सुखम् । स्वर्गाद्यभिप्रेतविषयसांनिध्ये सति इष्टोपलब्धीन्द्रियार्थसंनिकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगाद्यदनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत्सुखम् । तदिदमतीतेषु विषयेषु स्रक्चन्दनादिषु स्मृतिजम् । अनागतेषु संकल्पजम् । यत्तु विदुषामसत्सु विषयानुस्मरणेच्छासंकल्पेष्वाविर्भवति तत् विद्याशमसंतोषधर्मविशेषनिमित्तम् (प्रशस्त० २ पृ० ३२) इति । [ग] अनित्येच्छानधीनेच्छाविषयः (प्र० प्र०) । [घ] सुखत्वसामान्यवत् । इदं च जीवेश्वरसुखसाधारणलक्षणम् इति विज्ञेयम् । [ङ] निरुपाध्यनुकूलवेद्यम् । अत्र अनुकूलमिच्छाविषयः उपाधिः प्रयोजकः इत्यर्थः (प० च० पृ० ३०) । [च] सर्वात्मनामनुकूलवेदनीयम् (त० भा०) (त० सं०) । अत्रानुकूलत्वं चेष्टत्वम् (सि० च०) । तथा च यदनुभवाय चित्तमनुकूलं भवति तत् इत्यर्थः इति कश्चिदाह । तन्न । इच्छाविषयत्वेन ज्ञानविषयः इति तु वयं ब्रूमः । २ क्वचित् दुःखाभावः । यथा भारवाहकस्य भारापगमे दुःखाभावः । अयमाशयः । भारवाहकस्य भारापगमे सुखी संवृत्तोहम् इति प्रत्ययस्य दुःखाभावविषयकत्वेनोपगमात् दुःखाभावे सुखत्वमुपचर्यते इति । दृष्टश्च दुःखाभावेपि सुखशब्दप्रयोगो बहुधा लोके । यथा ज्वराद्यपगमे लौकिका व्याचक्षाणा भवन्ति सुखिनः संवृत्ताः स्मः इति (न्या० वा० १।१।२२ पृ० ९०) (मु० १ आत्मनि० पृ० १०३) । अधिकं शिष्टं तु दुःखशब्द-

व्याख्यानावसरे संपादितमेव इति । ३ बुद्धिसत्त्वस्य परिणामविशेषः इति सांख्या आहुः । ४ निद्रा इति केचिदाहुः । ५ स्वर्गः इति मीमांसका आहुः । ६ सुखकरम् ७ सुखी च इति काव्यज्ञा आहुः । ८ वृद्धिनामौषधिविशेषः इति भिषज आहुः । ९ वरुणपुरी इति पौराणिका आहुः । न्यायमते सुखं चतुर्विधम् वैषयिकम् आभिमानिकम् मानोरथिकम् आभ्यासिकं चेति । तत्र आद्यं विषयसाक्षात्कारजन्यम् । द्वितीयं राज्याधिपत्यपाण्डित्यगर्वादिजन्यम् । तृतीयं विषयध्यानजन्यम् । तुरीयं च सूर्यनमस्कारायासादिजन्यं लाघवरूपम् ( सि० च० ) इति । मीमांसकमते च सुखं द्विविधम् सांसारिकम् पारमार्थिकं च । तत्राद्यम् प्रयत्नोत्पाद्यं साधनाधीनं सुखम् । द्वितीयं तु स्वर्गः इति । वेदान्तिमते च सुखं द्विविधम् नित्यम् जन्यं च । तत्र विषयसंपर्काद्वैषयिकं सुखं जन्यम् । ब्रह्मस्वरूपं सुखं तु नित्यम् इति । तदेतद्वेदान्तिमायावादिमतम् मुक्तिवादे मणिकृता निराकृतम् । तत्र न च नित्यसुखाभिव्यक्तिर्मुक्तिः इत्युपक्रम्योक्तम् स्वप्रकाशसुखात्मकब्रह्मणो नित्यत्वे मुक्तसंसारिणोरविशेषप्रसङ्गः । पुरुषप्रयत्नं विना तस्य सत्त्वात् । अपुरुषार्थत्वाच्च । अविद्यानिवृत्तिः प्रयत्नसाध्या इति चेत् । अविद्या यदि मिथ्याज्ञानम् अर्थान्तरं वा उभयथापि सुखदुःखाभावसाधनेतरत्वेन तन्निवृत्तेरपुरुषार्थत्वम् ( चि० २ परिशिष्ट० मुक्ति० पृ० ४६—४७ ) इति । दुःखध्वंसस्यैव परमप्रयोजनत्वम् स एव मोक्षः ( चि० २ परिशि० मुक्ति० पृ० ४० ) इति च । पातञ्जलास्तु वैषयिकसुखानां परिणामदुःखादिभिः दुःखत्वमेव वैराग्यार्थं मन्यन्ते । अत्र सूत्रम् परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ( पात० पा० २ सू० १५ ) इति ।

**सुगतः**—१ बुद्धः । २ सुष्ठु गतियुक्तः ( अमरः ३।४।२ ) ।

**सुतराम्**—( अव्ययम् ) अवधारितार्थस्यातिशयौचित्यम् । यथा धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः ( रघु० स० २ श्लो० ५२ ) इत्यादौ सुतराम् इत्यस्यार्थः । अत्र कातराक्ष्या धेन्वा दृश्यमानत्वेन दयालुत्वस्यातिशयौचित्यम् इति विज्ञेयम् । अत्र व्याकरणम्

सु अतिशयेर्थे द्विवचनविभज्योपपदे तरबीयसुनौ ( पाणि० ५।३।५७ ) इत्यादिना तरप् आम् इति ।

**सुप्**—( विभक्तिः ) [ क ] प्रकृत्यर्थधर्मिकस्वार्थसंख्यान्वयबोधिका विभक्तयः सुप उच्यन्ते । यथा घटोस्ति इत्यादौ घटपदोत्तरं सुविभक्तिः । तिङस्तु स्वार्थभावनाद्यन्वयिन्येव स्वार्थसंख्यामवबोधयन्ति न तु स्वप्रकृत्यर्थे इति तासां व्युदासः ( श० प्र० श्लो० ६३ टी० पृ० ७३ ) । ताः सुपः प्रथमाद्वितीयादिभेदेन सप्तविधाः । सुप् प्रकारान्तरेण द्विधा कारकार्था कारकार्थान्या चेति । कारकार्था कारकविभक्तिः । तत्र वृत्त्या कारकस्य बोधिका कारकार्था । तदन्यस्य बोधिका कारकार्थान्या ( श० प्र० श्लो० ६७ टी० पृ० ७७ ) । [ ख ] वैयाकरणास्तु व्याकरणपरिभाषिताः सुप्रभृतिसुप्पर्यन्ताः सुप्प्रत्याहारान्तर्गताः एकविंशतिसंख्याकाः प्रत्ययविशेषाः । यथा रामः इत्यादौ रामपदोत्तरं सुविभक्तिः इत्याहुः । ते च प्रत्ययाः सु औ जस् अम् औट् शस् टा भ्यां भिस् ङे भ्याम् भ्यस् ङसि भ्याम् भ्यस् ङस् ओस् आम् ङि ओस् सुप् ( पाणि० ४।१।२ ) इति । शिष्टं तु विभक्तिशब्दव्याख्याने दृश्यम् ।

**सुप्तः**—निद्रितः । यथा निर्विकल्पककालस्ले सुप्तोत्थितस्य अयं घटः इति विशिष्टज्ञानं न स्यात् ( त० कौ० १ पृ० ८ ) इत्यादौ ग्रन्थे सुप्तशब्दार्थः । अत्रोच्यते प्रसक्तो व्यवहारोपयोगि । क्षुधितस्तृषितः कामी विद्यार्थी कृषिकारकः । भाण्डारी च प्रवासी च सप्त सुप्तान् प्रबोधयेत् ॥ इति । अन्यच्च मक्षिका भ्रमरः सर्पो राजा वै बालकस्तथा । परश्वापि च मूर्खश्च सप्त सुप्तान्न बोधयेत् ॥ ( नीतिसारे ) इति ।

**सुभद्रा**—( कल्याणीशब्दे दृश्यम् ) ।

**सुरा**—पैष्ट्याख्यो मद्यविशेषः । यथा न सुरां पिबेत् ( मनु० अ० ११ श्लो० ९३ ) इत्यादौ सुराशब्दस्यार्थः । अत्रेदं बोध्यम् । यद्यपि सुराशब्दवाच्याः गौडी माध्वी पैष्टी इति तिस्रः तथापि सुराशब्दो पैष्टीमात्रे मुख्यः । गौडीमाध्व्योर्गौणः । तथोक्तं भविष्यपुराणे सुरा च

पैष्टी मुख्योक्ता न तस्यास्त्वितरे समे ( मनु० टी० कुल्लू० अ० ११ श्लो० ९० ) इति । पैष्टी तण्डुलपिष्टसाध्या अन्नविकारः ( मिता० ) । तदन्यन्मद्यम् । अत्र त्रैवर्णिकानामुत्पत्तिप्रभृति पैष्टीप्रतिषेधः । ब्राह्मणस्य तु मद्यमात्रनिषेधोप्युत्पत्तिप्रभृत्येव । राजन्यवैश्ययोस्तु न कदाचिदपि गौड्यादिमद्यप्रतिषेधः । शूद्रस्य तु न सुराप्रतिषेधः । नापि मद्यमात्रप्रतिषेधः ( मिताक्ष० अ० ३ श्लो० २५३ पृ० ८१ ) ( मनु० अ० ११ श्लो० ९३ कुल्लूक० ) । कामतः सकृत्सुरापानेपि प्रायश्चित्तं तु सुरां पीत्वा द्विजो मोहात् ( रागमूढतया ) अग्निवर्णां सुरां पिबेत् । तया स काये निर्दग्धे मुच्यते किल्बिषात्ततः ॥ ( मनु० अ० ११ श्लो० ९० ) इति । अकामतः जलादिबुद्ध्या सुरापाने तु द्वादशवार्षिकं ब्रह्महत्याव्रताचरणम् । छर्दनानन्तरं तु त्रैवार्षिकं पिण्याकादिभक्षणं प्रायश्चित्तम् । केवलतालुमात्रसुरासंयोगे तु वर्षपर्यन्तं सकृत्पिण्याकादिभक्षणं प्रायश्चित्तं बोध्यम् इति । मत्या मद्यपाने गौडीमाध्व्योरज्ञानतः पाने च कृच्छ्रातिकृच्छ्रसहितः पुनः संस्कारः । अकामतोमुख्यसुरापाने तु वर्षपर्यन्तं प्रतिरात्रं सकृत् पिण्याकादिभक्षणम् तप्तकृच्छ्रपूर्वकं पुनरुपनयनादि च ज्ञेयम् ( याज्ञ० अ० ३ श्लो० २५३–२५५ ) ( मनु० अ० ११ श्लो० ९२ ) ।

**सुवर्णम्**—१ ( आकरजं तेजः ) पार्थिवभागसंयुक्तो द्रवद्रव्यविशेषः । यथा सुवर्णाङ्गुलीयकम् इत्यादौ सुवर्णशब्दार्थः । सुवर्णस्य तैजसत्वं यथा पीतिमगुरुत्वाश्रयस्यात्यन्ताग्निसंयोगेपि पूर्वरूपापरावृत्तिदर्शनात् पूर्वरूपपरावृत्तिप्रतिबन्धकं विजातीयं द्रवद्रव्यं कल्प्यते । तथा ह्यनुमानम् अग्निसंयोगिपीतिमगुरुत्वाश्रयः विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणपार्थिवत्वात् जलमध्यस्थपीतपटवत् ( मु० १ तेजो० पृ० ८१ ) इति । अत्रोक्तम् पीतिमा च गुरुत्वं च दाहे यस्य च रक्तता । तस्य लोकप्रसिद्धस्य स्वर्णत्वं केन वार्यते ॥ अनुच्छिन्नद्रवत्वं तु वस्तु यत्त्विह भासते । सुवर्णव्यवहारोयं तन्त्रशास्त्रे प्रवर्तते ॥ वस्तुभेदे प्रसिद्धेपि शब्दसाम्यं प्रवर्तते । रसः

स्वभावमधुरो ध्वनिश्च मधुरो यथा ॥ भूसंसर्गवशाच्चास्य रूपं नैव प्रतीयते । स्फटिकस्य जपायोगाद्यथा रूपं न भासते ॥ (न्या० ली० तेजोनि० पृ० ९) इति । अथ सुवर्णस्य तैजसत्वे प्रकारान्तरेणानुमानमुच्यते । सुवर्णं तैजसम् असति प्रतिबन्धकेत्यन्तानलसंयोगेपि अनुच्छिद्यमानद्रवत्वात् यन्नैवं तन्नैवं यथा पृथिवी (मु० तेजोनि० पृ० ८१) इति । अग्नौ सुवर्णमक्षीणम् (याज्ञ० २।१७८) इति स्मृतेरग्निसंयोगेपि तस्य नोच्छेदः । अत्रेदं विज्ञेयम् । अत्यन्तानलसंयोगे सति पार्थिवे घृतादौ द्रवत्वनाशदर्शनेन जलमध्यस्थघृतादौ द्रवत्वनाशादर्शनेन असति प्रतिबन्धके पार्थिवद्रवत्वनाशात्यन्ताग्निसंयोगयोः कार्यकारणभावावधारणात् सुवर्णस्यात्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पार्थिवत्वानुपपत्तिः । तस्मात् पीतद्रव्यद्रवत्वनाशप्रतिबन्धकतया द्रवद्रव्यान्तरसिद्धौ नैमित्तिकद्रवत्वाधिकरणतया जलत्वानुपपत्तेः रूपवत्तया वाय्वादिष्वनन्तर्भावात् तैजसत्वसिद्धिः । तस्योष्णस्पर्शभास्वररूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धादनुपलब्धिः । तस्मात् सुवर्णं तैजसम् इति सिद्धम् (त० दी० १ पृ० ८–९) । आगमोपि अग्नेरपत्यं प्रथमं हिरण्यम् (दि० १ पृ० ८१) इति । ब्राह्मणस्वामिकसुवर्णचौर्ये महापातकम् । तत्संग्रहस्तु पातकशब्दव्याख्याने (पृ० ४९८) द्रष्टव्यः । एवम् हिरण्य रौप्य इत्यादयः शब्दा व्याख्येयाः । २ कर्षपरिमाणम् । यथा प्रायश्चित्तप्रत्याम्नायादौ सुवर्णशब्दार्थः कर्षपरिमाणम् । ३ धनम् । ४ धत्तूरम् इत्यादि ।

**सुषुप्तिः**—[क] प्रदेशविशेषावस्थितमनःसंयोगः (नील० गु० पृ० ३८) । स च प्रदेशः पुरीतदात्मकः । [ख] निद्रानाड्यवच्छिन्नात्ममनोयोगः (कृष्णं०) । [ग] पुरीतता मनसः संयोगः । यथा पुरुषः सुप्तः स्वप्नया चरति । तौ ह सुप्तं पुरुषमाजग्मतुः (कौषीत० ४।१५–१९) इत्यादौ स्वप्धात्वर्थः स्वापः । स एव सुषुप्तिः । सुषुप्तेरुत्पत्तिमाहुर्नव्याः । प्रथमम् सुषुप्त्यनुकूलमनःक्रियया पुरीतद्व्यतिरिक्तात्मप्रदेशान्मनसो विभागः । ततस्तत्संयोगनाशः । ततः पुरीतदात्मकोत्तर-

देशेन मनसः संयोग उत्पद्यते । सैव सुषुप्तिः ( दि० १।३ पृ० ११५ ) इति । अत्रेदं बोध्यम् । सुषुप्तौ न किंचिदपि ज्ञानमुत्पद्यते । सुषुप्तिकाले पुरीतति त्वगिन्द्रियाभावेन तत्र स्थितमनसस्त्वक्संयोगासंभवात् । पुरीतद्भिन्नदेशावच्छिन्नमनःसंयोगस्य ( त्वङ्मनःसंयोगस्य ) ज्ञानसामान्यं प्रति कारणत्वात् ( राम० १ पृ० ११४–११५ ) इति । पुरीतत् अन्त्र इत्याख्यो नाडीविशेषः इति ज्ञेयम् ( अमरः २।६।६६ ) । अत्र श्रुतिः । अथ यदा सुप्तो भवति तदा न कस्यचन ( न कंचन ) वेद । हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते । ताभिः प्रत्यवसृप्य पुरीतति शेते ( शतपथब्रा० १४ बृह० २।१।१९ ) । यत्रैतत्पुरुषः सुप्तः स्वप्नं ( स्वप्नसृष्टं फलम् ) न कंचन पश्यति ( कौषीत० उप० ३।३ ) । तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति ( छान्दो० उ० ८।६।३ ) इत्यादिः । मायावादिवेदान्तिनस्तु [ घ ] ज्ञानशून्यो जीवस्यावस्थाविशेष इत्याहुः । अत्र श्रुतिः यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत् सुप्तमिति (बृह० उ० ४।३।१९ ) इति । अत्रेदं विज्ञेयम् । सांख्यमते सुषुप्त्यवस्था च द्विविधा । अर्धलयसमप्रलयभेदात् । तत्रार्धलये विषयाकारा वृत्तिर्न भवति । किं तु स्वगतसुखदुःखमोहाकारैव बुद्धिवृत्तिर्भवति । समप्रलये तु बुद्धेर्वृत्तिसामान्याभावो मरणादाविव भवति ( सांख्य० भा० अ० १ सू० १४८ ) । किं च मायावादिमते समप्रलये जीवः परमात्मनैक्यमाप्नोति ( शारी० भा० १।१।९ ) । तत्र श्रुतिः यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य तदा संपन्नो भवति । स्वमपीतो भवति । तस्मादेनं स्वपितीत्याचक्षते ( छान्दो० ६।८।१ ) इति । मध्वमते तु तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम् एवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम् ( बृह० उप० ६।३।२१ ) इति श्रुत्या जीवः सुषुप्त्यवस्थायां परमात्मन आलिङ्गनमात्रं प्राप्नोति इति प्रतिपाद्यते इत्यलं विस्तरेण । [ ङ ] प्रबोधसहकार्यभावेन क्लेशस्याभिव्यक्तिः इति योगिन आहुः ( सर्व० पृ० ३५९ पातञ्जल० ) । [ च ] निद्रा इति काव्यज्ञा आहुः ( अमरः १।७।३६ ) ।

सूक्तवाकः—इदं द्यावापृथिवी भद्रमभूत् इत्यादिको मन्त्रः । यथा सूक्तवाकेन प्रस्तरं प्रहरति इति । प्रस्तरो दर्भमुष्टिः ( जै० न्या० अ० ३ पा० २ अधि० ५ ) ।

सूक्ष्मम्—१ अत्यल्पः पदार्थः । यथा अणुपरिमाणयुतः परमाण्वादिः । यथा वा अध्यात्मपदार्थः सूक्ष्मशरीरम् । यथा वा केषांचिद्वेदान्तिनां मते अपञ्चीकृतानि पृथिव्यादीनि पञ्च महाभूतानि सूक्ष्माणि तन्निर्मितं शरीरं सूक्ष्मशरीरम् । तदुक्तम् पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ इति । इदं च लोकान्तरगामि भोगोपभोगसमर्थं लिङ्गशरीरम् इत्युच्यते । सांख्यास्तु महदहंकारैकादशेन्द्रियपञ्चतन्मात्राणां समुदायः सूक्ष्मशरीरम् । शान्तघोरमूढैरिन्द्रियैरन्वितत्वात् विशेषः इति प्रतिपेदिरे ( सांख्य० कौ० कारि० ४० ) । अत्रोक्तम् सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ( सांख्य० का० श्लो० ३९ ) इति । सूक्ष्माः सूक्ष्मदेहाः । ते च अनुमिताः । परलोके कर्मफलभोगः सूक्ष्मदेहं विना अनुपपन्नो भोगत्वात् स्थूलदेहारब्धकृष्यादिजनितस्य सस्यस्य स्वदेहेनैव भोगवत् इति । स्वदेहारब्धकर्मादिफलं यत् तत् स्वदेहेनैव भोग्यम् नेतरेण । अन्यथा कृतहानाकृताभ्यागमप्रसङ्गः इत्यादिस्तर्कस्तत्रानुसंधेयः । २ अर्थालंकारविशेषः । तदुक्तम् संलक्षितस्तु सूक्ष्मोर्थ आकारेणेङ्गितेन वा । कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ॥ ( साहि० परि० १० श्लो० ९१ ) । ३ कतकवृक्षः इति भिषज आहुः । ४ कैतवम् इति काव्यज्ञा आहुः । ५ सूक्ष्मं संपूर्णषड्गुणं वासुदेवाख्यं परं ब्रह्म ( सर्व० पृ० ११६ रामा० ) ।

सूत्रम्—१ शास्त्रीयबह्वर्थप्रतिपादकसंक्षिप्तवाक्यविशेषः । शास्त्रीयसूत्राणि षड्विधानि ब्रह्ममीमांसासूत्रम् धर्ममीमांसासूत्रम् न्यायसूत्रम् वैशेषिकसूत्रम् सांख्यसूत्रम् योगसूत्रं चेति । अत्र वेदान्तिनः सूत्रलक्षणमाहुः । अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥ ( मध्वभा० १।११ प्रक्राश० पृ० ३ ) इति । शाब्दि-

कास्तु सूत्रलक्षणमाहुः संज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोधिकारश्च षड्विधं सूत्रलक्षणम् ॥ इति । पाणिन्यादिप्रणीतानि व्याकरणसूत्राणि तु वेदाङ्गान्येव । न तु शास्त्रीयसूत्रषट्कान्तर्भूतानि । एवम् आश्वलायनापस्तम्बादिमहर्षिप्रणीतानि धर्मगृह्यश्रौतसूत्राणि बहूनि सन्ति । २ नाटकज्ञास्तु नाटकोपकरणं प्रस्तावः । यथा सूत्रधारः इत्यादौ सूत्रशब्दस्यार्थ इत्याहुः । ३ तन्तुः इति काव्यज्ञा आहुः ।

**सूनृतव्रतम्**—प्रियं पथ्यं वचस्तथ्यं सूनृतं व्रतमुच्यते ( सर्व० सं० पृ० ६५ आई० ) ।

**सृङ्का**—शब्दवती रत्नमाला ( कठोपनिषत् रङ्गरामानुज पृ० ३७ प० १७ ) ।

**सृष्टिः**—१ उत्पत्त्यनुकूलव्यापारविशेषः । यथा ससर्ज भगवानादौ त्रीन् गुणान् प्रकृतेः परः । महत्तत्त्वं ततो विष्णुः सृष्टवान् ब्रह्मणस्तनुम् ॥ महत्तत्त्वादहंकारं ससर्ज शिवविग्रहम् । दैवान् देहान् मनः खानि खं च स त्रिविधात्ततः ॥ आकाशादसृजद्वायुं वायोस्तेजो व्यजीजनत् । तेजसः सलिलं तस्मात् पृथिवीमसृजद्विभुः ॥ ततः कूटस्थमसृजद्विधिं ब्रह्माण्डविग्रहम् । तस्मिंस्तु भगवान् भूयो भुवनानि चतुर्दश ॥ ( मणिमञ्जरी स० १ श्लो० २–५ ) इत्यादौ सृज्धात्वर्थः सृष्टिः । स च व्यापारो जगदुत्पत्तावीश्वरेच्छारूपः । घटाद्युत्पत्तौ तु कुलालादीनां कर्मादिः । अत्र तदैक्षत बहु स्यां प्रजायेय ( छान्दो० उ० ६।२।३ ) तत्सृष्ट्वा तदेवानुप्राविशत् ( तैत्ति० उ० २।६।१ ) इत्यादिश्रुतयोनुसंधेयाः । मनुराह ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः ॥ सोभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु बीजमवासृजत् ॥ ( मनु० अ० १ श्लो० ६–८ ) इत्यादि । पौराणिका नवविधं सर्गं जगुः सर्गो नवविधस्तस्य प्राकृतो वैकृतस्तु यः । कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः ॥ ( भाग० स्क० ३ अ० १० ) इत्यादि । मत्स्यपुराणे च मत्स्य उवाच तपश्चचार प्रथममराणां पितामहः । आविर्भूतास्ततो वेदाः साङ्गोपाङ्गपदक्रमाः ॥ पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् । नित्यं शब्दमयं

पुण्यं शतकोटिप्रविस्तरम् ॥ अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः । मीमांसा न्यायविद्याश्च प्रमाणाष्टकसंयुताः ॥ इत्यादिसृष्टिप्रकारः सविस्तरो द्रष्टव्यः । इदानीं सृष्टिक्रमः कथ्यते । प्राणिनां भोगभूतये परमेश्वरस्य सिसृक्षा जायते । सर्गादौ भगवानीश्वरः प्रयोज्यप्रयोजकवृद्धशरीरद्वयं परिगृह्य तथा व्यवहरति । ततस्तद्व्यवहाराद्बालः पूर्ववत्संकेतं गृह्णाति (न्या० म० ४ पृ० ५) । ततो लब्धवृत्तिकाददृष्टविशिष्टात्मसंयोगात् दोधूयमानेषु पवनपरमाणुषु प्रथमतः कर्मोत्पत्तिः । ततो द्वयोः पवनपरमाण्वोः संयोगः । ततो द्व्यणुकोत्पत्तिः । ततस्त्रिषु द्व्यणुकेषु कर्मोत्पत्तिः । ततस्तेषां संयोगः । ततस्त्र्यणुकोत्पत्तिः । एवं चतुरणुकाद्युत्पत्तिक्रमेण महावायुरुत्पद्य विहायसि दोधूयमानस्तिष्ठति । ततस्तस्मिन्वायौ जलपरमाणुभ्यो द्व्यणुकादिक्रमेण महाजलराशिरुत्पन्नः पोप्लूयमानः तिष्ठति । ततस्तस्मिन्महोदधौ पृथिवीपरमाणुतो द्व्यणुकादिक्रमेण महापृथिव्युत्पद्य संहतावतिष्ठते । ततः तस्मिन्नेव जले तैजसेभ्य उत्पन्नो महातेजोराशिर्देदीप्यमानस्तिष्ठति इति । तत्र तेजःपरमाणुसहितपृथिवीपरमाणुभिरीश्वराभिध्यानादण्डमुत्पद्यते तस्मिन्ब्रह्मोत्पद्यते (त० व० १२५-१२७) (सि० च० ) इति । अथ प्रकारान्तरेण सृष्टिविधिरुच्यते । खण्डप्रलयानन्तरम् प्राणिनां भोगभूतये परमेश्वरस्य सिसृक्षानन्तरं सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगेभ्यो द्व्यणुकादिक्रमेण महावायुः समुत्पन्नो नभसि दोधूयमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव वायावाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव सलिलनिधौ पार्थिवेभ्यः परमाणुभ्यो द्व्यणुकादिक्रमेण समुत्पन्ना महापृथिवी संहता घनीभूतावतिष्ठते । तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्यः परमाणुभ्यो द्व्यणुकादिक्रमेण समुत्पन्नो महांस्तेजोराशिर्देदीप्यमानस्तिष्ठति । एवं समुत्पन्नेषु चतुर्षु महाभूतेषु परमेश्वरस्याभिध्यानमात्रात् (इच्छामात्रात् न तु व्यापारान्तरात्) तैजसेभ्योऽणुभ्यः पार्थिवादिपरमाणुसहितेभ्यो महदण्डमारभ्यते । तस्मिंश्चतुर्वदनं सकललोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य

प्रजासर्गे नियुङ्क्ते । स च महेश्वरेण नियुक्तो ब्रह्मातिशयज्ञानवैराग्यैश्वर्यसंपन्नः सर्वप्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपज्ञानवैराग्यभोगायुषः सुतान् प्रजापतीन्मानसान्मनून् देवर्षिपितृगणान् मुखबाहूरुपादतश्चतुरो वर्णानन्यानि चोच्चावचानि भूतानि सृष्ट्वा आशया( वासना )नुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयति ( प्रशस्त० १ पृ० ६ ) ( प० मा० कालनि० पृ० ९३ ) ( त० व० परि० ५ पृ० १२६–१२७ ) । अत्र श्रुतिः ब्राह्मणोस्य मुखमासीत् बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ( ऋग्वे० पु० सू० ) इति । अत्रेदं बोध्यम् । एषा ह्यादिसृष्टिरयोनिजैव । तत्रोच्चा धर्मविशेषसहकृतेभ्योणुभ्योवचा चाधर्मविशेषसहकृतेभ्यो जायते । ब्रह्मा अयोनिजोतिशयितधर्मविशेषसहकृतेभ्योणुभ्यो जायते ईश्वराभिध्यानमात्रात् ( प्रशस्त० टिप्प० पृ० १९ ) इति । महाप्रलयानन्तरं तु न तादृशी सृष्टिः स्यात् । सर्वमुक्तौ सर्वोत्पत्तिनिमित्तस्यादृष्टस्यापायात् । सर्वभोक्तृप्रवृत्तौ ( मुक्तौ ) प्रयोजनाभावाच्च । न हि बीजप्रयोजनाभ्यां विना कार्योत्पत्तिः ( प० मा० कालनिरू० पृ० ९३ ) ( त० व० परि० ५ पृ० १२५–१२७) इति । अत्रेदं चिन्त्यम् । केचित् वेदान्तिनः जलोत्पत्तेः पूर्वमेव तेज उत्पद्यते इत्याचक्षते ( त० व० ) । अत्र वयं ब्रूमः । यदाचक्षते तत्तु युक्तमेव । ज्वलने सति जलस्य नाशः इति भाष्यादौ प्रलयप्रक्रमे प्रतिपादनात् । अतः तेजःसृष्ट्यनन्तरमेव जलसृष्टिर्युक्ता । अन्यथा तेजोनाशानन्तरमेव जलनाशः इति प्रतिपाद्येत । परं तु तथा न प्रतिपाद्यते इति जलसृष्टेः पूर्वमेव तेजःसृष्टिर्युक्ता इति । तथा च श्रुतिः तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योन्नम् । अन्नात्पुरुषः ( तैत्तिरीय-उप० २।१ ) इति । अत्रेदं विज्ञेयम् । प्रथमतो जगदुत्पत्तौ परमाण्वादयोवयवाः समवायिकारणम् । परमाणुद्वयसंयोगादिकमसमवायिकारणम् । ईश्वरतज्ज्ञानेच्छाकृतिकालकर्मादृष्टादि निमित्तकारणम् इति वैशेषिकमतम् ( सि० च० ) इति । एवमन्यत्रापि भावकार्योत्पत्तौ कारणत्रयमूह्यम् । २ नामरूपविभागविभक्तस्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्यावस्थम् । ब्रह्मणस्तथाविधस्थूलभावश्च

सृष्टिरित्यभिधीयते ( सर्व० सं० पृ० १०९ रामानु० )। २ सृष्टिशब्दोपेता मन्त्रा यासामिष्टकानामुपधाने विद्यन्ते ता इष्टकाः सृष्टय उच्यन्ते । यथा सृष्टीरुपदधाति (जै० न्या० अ० १ पा० ४ अधि० १७)।

**सेकः**—[ क ] द्रवद्रव्यक्रियानुकूलव्यापारः । यथा वृक्षायोदकमासिञ्चति इत्यादौ सिचूधात्वर्थः ( ग० व्यु० का० ४।९४ ) । [ ख ] क्षरणम् इति कश्चिदाह ( वाच० ) ।

**सेना**—तत्तद्गजाश्वादिसमुदायः । यथा सेनानिवेशान् पृथिवीक्षितोपि जग्मुः ( रघु० ७।२ ) इत्यादौ सेनाशब्दस्यार्थः । अत्र सेनात्वं च अनियतदिग्देशसंबन्धिषु गजतुरगस्यन्दनेषु परप्रत्यासत्त्युपगृहीतेषु अवधारितानवधारितेयत्तेषु वर्तमाना बहुत्वसंख्या ( न्या० वा० १।१।१४ पृ० २९ )। अथ वा तत्तदश्वादिविषयकज्ञानविषयत्वम् ( त० प्र० ख० ४ पृ० ५० )।

**सेवनम्**—१ भजनम् । आराधनम् । अत्रेदं विज्ञेयम् । वैष्णवमते जीवस्य मोक्षदशायामपि जीवपरमात्मनोः सेव्यसेवकभावो वर्तत एव । तदानीमपि तयोर्भेदस्य सत्त्वात् इति । सेवाशब्दस्याप्ययमेवार्थः । सा च सेवा अङ्कननामकरणभजनभेदात्त्रिविधा ( सर्व० सं० पृ० १३७ पूर्णप्र० )। २ आश्रयणम् । ३ उपभोगः ।

**सोपपदा**—सिता ज्येष्ठे द्वितीया तु आश्विने दशमी सिता । चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥ ( पु० चि० पृ० ४४२ ) ।

**सौत्रान्तिकः**—( बौद्धः ) तदर्थतन्मते च बौद्धशब्दव्याख्याने ( पृ० ६०९–६१० ) दृश्ये ।

**स्कन्धः**—द्व्यणुकादयः स्कन्धाः ( सर्व० सं० पृ० ७२ आर्ह० ) ।

**स्तब्धीभावः**—अहमाकारवृत्त्यन्यवृत्तिसामान्याभावः (न्या० र० पृ० २०२)।

**स्तुतिः**—१ [ क ] गुणवत्तया ख्यापनम् ( चि० १ पृ० १०२ ) । यथा निर्विघ्नसमाप्तिकामो देवतास्तुतिमाचरेत् इत्यादौ ग्रन्थे स्तुतिशब्दार्थः ( चि० मङ्ग० १ पृ० १०० ) ( वै० सा० द० पृ० १ ) । उत्कर्षवत्तया ज्ञानानुकूलः शब्दः इत्यर्थः । तेन व्यापारान्तरे तादृशि नाति-

प्रसङ्गः । अत्र ज्ञानपदेन आरोपितज्ञानं गृह्यते । तेन तादृशि स्वरूपाख्याने नातिव्याप्तिः । भगवत्स्तुत्यादिषु तत्प्रयोगो भाक्तः ( मू० म० मङ्ग० १ पृ० १०३–१०४ ) । [ ख ] सर्वोत्कृष्टगुणवत्ताप्रतिपादकशब्दः ( म० वा० पृ० १० ) । [ ग ] आरोप्यमाणगुणकथनम् इति प्रामाणिका आहुः । [ घ ] ज्ञानविशेषोपधायकः शब्दः इति नव्या आहुः ( मू० म० मङ्ग० १।१०४ ) । २ [ क ] विधेः फलवादलक्षणा या प्रशंसा सा स्तुतिः । संप्रत्ययार्थं स्तूयमानं श्रद्दधीत इति । प्रवर्तिका च । फलश्रवणात्प्रवर्तते ( वात्स्या० २।१।६४ ) । [ ख ] साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यम् । यथा सर्वजिता वै देवाः सर्वमजयन् इति विधेः सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयति इत्येवमादि वाक्यं स्तुतिः ( गौ० वृ० २।१।६४ ) । यथा वा अहरहः संध्यामुपासीत इति विधेः संध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥ इत्याद्यर्थवादवाक्यं स्तुतिः । [ ग ] विधेयस्तावकं वाक्यम् । यथा वायव्यꣳ श्वेतमालभेत भूतिकामः इति विधेः वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति ( तैत्तिरीयसंहिता २।१।१ ) ( म० प्र० ४ पृ० ६४ ) इति । इदं वाक्यं हि वायूद्देश्यकः श्वेतपशुकरणको यागः प्रशस्तः इति प्राशस्त्यबोधनेन विध्यर्थं स्तौति । तथा च विध्युद्देशेनैकवाक्यत्वादर्थवादः प्रमाणम् ( शाब० भा० १।२।७ ) । [ घ ] गुणकथनपरमेकं वाक्यम् ( जै० न्या० अ० ९ पा० २ अधि० ३ ) । ३ स्तोत्रम् । तच्च गुणकर्मादिभिः प्रशंसनम् । यथा यो देवदत्तश्चतुर्वेदाभिज्ञः इत्युक्ते सर्वे जनाः स्तुतिमवगच्छन्ति । गुणिनमुपसर्जनीकृत्य तन्निष्ठानां गुणानां प्राधान्येन कथनम् इत्यर्थः ( ऋग्वेदभाष्ये सायणः ) । स्तोत्रं चतुर्विधम् द्रव्यस्तोत्रं कर्मस्तोत्रं विधिस्तोत्रं तथैव च । तथैवाभिजनस्तोत्रं स्तोत्रमेतच्चतुर्विधम् ॥ ( मत्स्यपु० अ० १२३ ) इति ।

**स्तोत्रम्**—[ क ] स्तुतिः । [ ख ] प्रगीतमन्त्रसाध्या स्तुतिः ( जै० न्या० अ० २ पा० १ अधि० ५) । अत्रेदमवधेयम् । प्रगीतमन्त्रसाध्यं स्तोत्रम् । अप्रगीतमन्त्रसाध्यं शस्त्रम् इति स्तोत्रशस्त्रयोर्भेदः इति ।

**स्तोभः**—१ [ क ] अर्थशून्यो गानादिस्वरपरिपूरणार्थः शब्दविशेषः । यथा सामवेदे इडा होई इत्यादिः । इदं च वर्णमात्रस्तोभस्य लक्षणम् । वाक्यस्तोभस्य तु नव विधा भवन्ति आशास्तिः स्तुतिसंख्याने प्रणवः परिदेवनम् । प्रैषमन्वेषणं चैव सृष्टिराख्यानमेव च ॥ ( साम्नो गानग्रन्थ० ) इति । [ ख ] अधिकत्वे सत्यृग्विलक्षणवर्णः स्तोभः । [ ग ] सभायां विप्रलम्भकेनोच्यमानं प्रकृतार्थानन्वितं कालक्षेपमात्रहेतुं शब्दराशिं स्तोभ इत्याचक्षते ( जै० न्या० अ० ९ पा० २ अधि० ११ )। [ घ ] वेदान्तिनस्तु व्यर्थाक्षरवत्त्वम् । यथा अस्तोभमनवद्यं च इत्यादिसूत्रलक्षणे स्तोभशब्दस्यार्थः इत्याहुः ( तत्त्वप्रका० १।१।१ पृ० ३ )। २ हेलनम् । ३ स्तम्भनम् ( हेमच० ) ।

**स्तोमः**—१ आत्मगुणाविष्करणम् । यथा स्तोमयति इत्यादौ सामस्तोममस्तौषन् ( श्रुतिः ) इति पुराकल्पे च स्तोमशब्दस्यार्थः । २ समूहः । ३ यज्ञः । ४ स्तवः । ५ धनम् । ६ मस्तकम् । ७ शस्यम् । ८ लोहाग्रदण्डः ( वाच० ) ।

**स्त्यानम्**—चित्तस्याकर्मण्यत्वम् ( सर्व० सं० पृ० ३५५ पात० ) ।

**स्त्रीत्वम्**—१ योनिमत्त्वम् । यथा अजा अश्वा शूद्रा श्यामा चपला ब्राह्मणी गौरी सुकेशी गर्भिणी इत्यादौ । अत्र प्रातिपदिकप्रकृतिकाः स्त्रियाम् ( पाणि० ४।१।३ ) इत्यधिकारे विहिताष्टाबादयः स्त्रीत्वं प्रकृत्यर्थविशेषणतया बोधयन्ति ( ग० व्यु० स्त्रीप्र० पृ० ११८ ) । २ भार्यात्वम् । यथा आचार्यानी मनावी अर्यी शूद्री इत्यादौ । अत्र स्त्रीप्रत्ययप्रतिपाद्यम् भार्यात्वं च संबन्धविशेषः । तत्रैव निरूपकत्वेन प्रकृत्यर्थान्वयः ( ग० व्यु० स्त्री० पृ० ११९ ) । तथा च आचार्यनिरूपकभार्यात्ववती इति शाब्दबोधः । एवमुत्तरत्रापि बोध ऊह्यः । अत्र स्त्रीपुंधर्मश्च अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् । विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे ॥ पिता रक्षति कौमारे भर्ता रक्षति यौवने । रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥ अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् । शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य चेक्षणे ॥

(मनु० अ० ९ श्लो० २,३,११) इति । अन्यत्राप्युक्तम् । (अ० ५ श्लो० १४७-१६६)। अधिवेत्तारं प्रत्याह आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् । त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥ (याज्ञ० अ० १ श्लो० ७६ ) इति । व्यभिचारे स्त्रिया मौण्ड्यमधःशयनमेव च । कदन्नं च कुवासश्च कर्म चावस्करोज्झनम् ॥ (याज्ञ० अ० १ श्लो० ७० मिताक्षरायां नारदः ) । अविभाज्यं स्त्रीधनं च अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥ (मनु० अ० ९ श्लो० १९४ ) । पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकाद्यं च स्त्रीधनं तत्प्रकीर्तितम् ॥ (याज्ञ० अ० १ श्लो० १४८)। स्त्रीपुरुषभेदस्तु रतिमञ्जर्याम् पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा । शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम् ॥ इति । २ लिङ्गरूपसंज्ञाविशेषः । यथा अटवी इत्यादिशब्देषु । अत्रेदं विज्ञेयम् । खट्वाटवीदेवतापदे च स्त्रीप्रत्यया नार्थबोधकाः । तत्र प्रकृत्यर्थे योनिमत्त्वरूपस्त्रीत्वस्यायोग्यतयानन्वयात् । न च शब्दगतं स्त्रीत्वादिरूपधर्मान्तरमेव तत्र परंपरासंबन्धेनार्थगततया भासते इति श्रीपतिदत्तोक्तं युक्तम् । तद्भाने मानाभावात् (ग० व्यु० स्त्री० पृ० ११९) इति ।

**स्त्रीलिङ्गम्**—( नाम ) [ क ] स्त्रीलिङ्गत्वेन परिभाषितं पदम् । यथा तटी इत्यादिपदम् । परिभाषायाः प्रयोजनं चेह पदसंस्कारः । स च तटी इत्यादौ स्त्रीत्वेन ङीबादिप्रत्ययः । [ ख ] क्वचित् योन्यादिमत्त्वलक्षणस्त्रीत्ववाचकं पदम् । यथा न विप्रा वेदमुच्चरेत् इत्यादौ विप्रापदम् । अत्र टाबादिना प्रत्ययेनैव ( न तु प्रकृत्या ) स्वार्थस्य योन्यादिमत्त्वलक्षणस्त्रीत्वं प्रकृत्यर्थेऽनुभूयत इति ज्ञेयम् ( श० प्र० श्लो० ५४ टी० पृ० ६९ ) ।

**स्थलम्**—१ [ क ] तत्तत्पक्षसाध्यादिवाचकप्रयोगः । यथा पर्वतपक्षकवह्निसाध्यकधूमहेतुकस्थले इत्यादौ ग्रन्थे स्थलशब्दस्यार्थः । [ ख ] तत्तद्व्यवहारजन्यशाब्दबोधविषयः । यथा पर्वते वह्निसाध्यकस्थलं हि पर्वतो वह्निमान् इति शब्दबोधविषयो वह्निमत्पर्वतादि । २ उदाहरणवाक्यम् इति केचिद्वदन्ति । ३ जलशून्योऽकृत्रिमो भूभागः । यथा ऊषरं स्थलम् इति काव्यज्ञा आहुः ( अमरः २।१।५) । ४ गजपृष्ठगतं काष्ठासनम् ।

**स्थानम्**—१ ज्ञापकम् (गौ० वृ० १।२।१९) । यथा निग्रहस्थानम् इत्यादौ वेदाः स्थानानि विद्यानाम् (याज्ञ० १।३) इत्यादौ च स्थानशब्दस्यार्थः । २ स्थितिः । सा च कचित् स्वाभिप्रायबोधानुकूला स्थितिः । यथा गोपी कृष्णाय तिष्ठते इत्यादौ तिष्ठतेरर्थः । अत्र कृष्णसंप्रदानकबोधानुकूला स्थितिः इति शाब्दिकमते बोधः ( ल० म० का० ४ पृ० १०३ ) । ३ प्रसङ्गः । यथा स्थानेन्तरतमः (पाणि० १।१।५०) इत्यादौ आदिश्यमानस्य यणादेः कारणीभूतेगादेः प्रसङ्गः स्थानम् इति शाब्दिका वदन्ति । ४ आश्रयः इति काव्यज्ञाः संगिरन्ते । ५ मीमांसकास्तु देशसामान्यम् । लक्षणं च संनिधिविशेषत्वम् ( लौ० भा० टी० पृ० २६ ) । स्थानं क्रमश्चेत्यनर्थान्तरम् । अत्रोक्तम् स्थानं क्रमो योगबलं समाख्या ( पार्थसारथिः ) इति । यथा ऐन्द्राग्नमेकादशकपालं निर्वपेत् वैश्वानरं द्वादशकपालं निर्वपेत् इत्येवंक्रमविहितेष्टिषु इन्द्राग्नी रोचनादिवः वैश्वानरोजीजनत् इत्यादीनां याज्यानुवाक्यामन्त्राणां यथासंख्यं प्रथमस्य प्रथमम् द्वितीयस्य द्वितीयम् इत्येवंरूपो विनियोगः यथासंख्यपाठात् इत्याहुः । तच्च स्थानं द्विविधम् पाठसमानदेशत्वम् अनुष्ठानसमानदेशत्वं च । तत्राद्यमपि द्विविधम् यथासंख्यपाठः यथासंनिधिपाठश्चेति । तत्र यथासंख्यपाठत्वेन समानदेशत्वं ऐन्द्राग्नम् इत्यादिषूदाहरणेषु बोध्यम् ( लौ० भा० पृ० २६ ) । ६ सादृश्यम् । ७ अवकाशः । ८ संनिवेशः । ९ वसतिः । सा च लोकविशेषः इति पौराणिका आहुः । लोकश्च सम्यग्वर्तिनां स्वस्वधर्मानुष्ठायिनां जनानामुपभोगस्थानम् । अत्रोक्तमग्निपुराणे प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् । क्षत्रियाणां तथा चैन्द्रं संग्रामेष्वनिवर्तिनाम् ॥ गान्धर्वं शूद्रजातीनां परिचर्यानुकारिणाम् इत्यादि । १० नीतिवेदिनस्तु उपचयापचयहीनं साम्यावस्थानम् इत्याहुः ।

**स्थाने**—( अव्ययम् ) १ योग्यम् । यथा स्थाने तच्चलमर्त्यगण्डनृपतेः ( प्रतापरु० ) स्थाने भवानेकनराधिपः सन् ( रघु० ५।१६ ) स्थाने वृता भूपतिभिः परोक्षैः ( रघु० ७।१३ ) इत्यादौ स्थाने इत्यस्यार्थः । २ सत्यम् । ३ सादृश्यम् । ४ करणार्थः ( शब्दर० ) ।

**स्थावरः**—पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः (सर्व० सं० पृ० ७०आर्ह०)।

**स्थितिः**—१ स्वोत्पत्त्यवस्था। यथा स्थितिस्थापकः इत्यादौ स्थितिशब्दस्यार्थः। २ स्वभावः इत्यन्य आहुः। ३ वसतिः इति काव्यज्ञा आहुः। ४ गतिनिवृत्तिः। यथा तिष्ठति इत्यादौ इति शाब्दिका आहुः। ५ वृत्तिरहितस्य चित्तस्य स्वरूपनिष्ठः प्रशान्तवाहितारूपः परिणामविशेषः स्थितिः (सर्व० सं० पृ० ३६६ पात०)।

**स्थितिबन्धः**—यथा अजागोमहिष्यादिक्षीराणामेतावन्तमनेहसं माधुर्यस्वभावादप्रच्युतिस्थितिः। तथा ज्ञानावरणादीनां मूलप्रकृतीनाम् आदितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटिकोट्यः परा स्थितिः इत्याद्युक्तकाला दुर्धानवत्स्वीयस्वभावादप्रच्युतिस्थितिः (सर्व० सं० पृ० ७७–७८ आर्ह०)।

**स्थितिस्थापकः**—(गुणः) [क] क्रियाविशेषजनकः क्रियाविशेषजन्यः स्वजन्यक्रियानाश्यो गुणविशेषः (दि० गु० पृ० २३३)। ऋजुत्वाद्यापादकः संस्कारप्रभेदोयम् कार्मुककटादिपृथिवीमात्रवृत्तिः अतीन्द्रियः अनित्यश्चेति (त० सं०)। तस्यातीन्द्रियत्वे मानं च आकृष्टतरुशाखादीनां परित्यागे पुनर्गमनं स्थितिस्थापकसाध्यम् इति (मु० गु० पृ० २३३)। तथा च शरादीनां नमनोत्तरं त्यागे यथास्थाननियतसंयोगजनककर्मजनकतया सिद्ध्यति सः (प० मा०)। स च आकृष्टतरुशाखादौ स्पन्दं प्रति कारणमपि भवति। केचित्तु अयं स्पर्शवद्विशेषवृत्तिः। तेन पृथिव्यादिचतुष्टये वर्तते इत्याहुः (प्र० प्र०) (भा० प० श्लो० १६०) (त० कौ०) (दि० गु० पृ० १९३)। तल्लक्षणं च पृथिवीमात्रसमवेतसमवेतसंस्कारत्वव्याप्यजातिमत्त्वम् (सि० च० गु० पृ० ३५)। अत्र भाष्यम्। स्थितिस्थापकस्तु स्पर्शवद्द्रव्येषु वर्तमानो घनावयवसंनिवेशविशिष्टेषु कालान्तरावस्थायिषु स्वाश्रयमन्यथाकृतं यथावस्थितं स्थापयति। स्थावरजङ्गमेषु विकारेषु धनुःशाखादन्तशृङ्गादिषु सूत्रचर्मवस्त्रकम्बलादिषु भुग्नसंवर्तितेषु तस्य कार्यं संलक्ष्यते। नित्यानित्यत्वनिष्पत्तयोस्यापि गुरुत्ववद्द्रष्टव्याः (प्रशस्त० गु० पृ० ५३) इति।

[ ख ] अन्यथाकृतस्य पुनस्तदवस्थापादकः संस्कारः ( त० सं० ) । पूर्वसंयोगविजातीयसंयोगनाशकत्वे सति पूर्वसंयोगसजातीयसंयोगजनकः इति समुदितार्थः । अत्र क्रियावारणाय सत्यन्तं दलं दत्तम् । विभागवारणाय विशेष्यदलम् ( वाक्य० गु० पृ० २२ ) । [ ग ] आश्रये पूर्वावस्थापादकः संस्कारः । स यथा आकृष्टतरुशाखादेः पूर्वावस्थां जनयति ( प्र० प्र० ) । [ घ ] स्वोत्पत्त्यवस्थापादको गुणः ।

स्नायुः—सूक्ष्मनाडी ।

स्नेहः—१ ( गुणः ) [ क ] स्नेहत्वजातिमान् ( प्र० प्र० ) । स्नेहश्चिक्कणता जलमात्रवृत्तिः चणकचूर्णादिव्यञ्जकश्च । पयोघृततैलादौ स्नेहोपलम्भस्तु पयआद्यन्तर्गतजलोपाधिकः जलगत एवोपलभ्यते । स्नेहो जलपरमाणुगतो नित्यः जलद्व्यणुकादिरूपकार्यगतः अनित्यः ( त० कौ० ) ( प्र० प्र० ) ( प्रशस्त० २ पृ० ३३ ) ( त० सं० ) ( भा० प० ) ( वाक्य० ) । अत्र भाष्यम् स्नेहोपां विशेषगुणः संग्रहमृजादिहेतुः । अस्यापि गुरुत्ववन्नित्यानित्यत्वनिष्पत्तयः ( प्रशस्त० २ गु० पृ० ३३ ) इति । मृजा शुद्धिः । अत्र विचार्यते । न च सांसिद्धिकद्रवत्वादेव संग्रहसंभवे किं स्नेहेन इति वाच्यम् । चणकचूर्णादिना जलद्रवत्वयोरुत्कर्षस्यानाधानादन्यस्य च संग्रहहेतोरभावे तदुत्कर्षस्याकस्मिकत्वप्रसङ्गात् । अतः स्नेह आवश्यकः ( प० च० ) इति । [ ख ] चूर्णादिपिण्डीभावहेतुर्गुणः ( त० सं० ) । यथा प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थया इत्यादौ तैलसंयुक्तजलगतः स्नेहः । जले स्नेहो द्विविधः प्रकृष्टस्नेहः अपकृष्टस्नेहश्च । तत्र तैलादौ प्रतीयमानः प्रकृष्टस्नेहो दीपादिज्वालादेरनुकूलः । पानीयगतस्तु अप्रकृष्टस्नेहो वह्निं नाशयति ( मु० गु० पृ० २३२ ) । [ ग ] स्निग्धधीर्यद्विशिष्टार्थे स्नेहश्चिक्कणता च सः ( ता० र० श्लो० ४८ ) । अत्रेदं बोध्यम् । सत्यपि द्रवत्वे द्रुतसुवर्णादिभिः सत्यपि च स्नेहे हिमकरकादिभिः पिण्डीभावाजननात् स्नेहसहितमेव द्रवत्वं पिण्डीभावकारणम् ( त० व० पृ० २३० ) इति । यद्वा पिण्डीभावे स्नेहस्यैवासाधारणकारणत्वम् । न तु जलादिगत-

द्रवत्वस्य । तथा सति द्रुतसुवर्णादिसंयोगे चूर्णादेः पिण्डीभावापत्तेः । हिमकरकादिभिः पिण्डीभावापत्तेश्च । अतः स्नेहस्यैवासाधारणकारणत्वम् । वस्तुतस्तु द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वम् । स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात् । जले द्रुतत्वविशेषणात्करकादिव्यावृत्तिः (न्या० बो० १ पृ० ६) । अत्र प्रसङ्गतः स्नेहनविधिरुच्यते । स्नेहश्चतुर्विधः प्रोक्तो घृतं तैलं वसा तथा । मज्जा च तां पिबेन्मर्त्यः किंचिदभ्युदिते रवौ ॥ स्थावरो जङ्गमश्चैव द्वियोनिः स्नेह उच्यते । तिलतैलं स्थावरेषु जङ्गमेषु घृतं वरम् ॥ द्वाभ्यां त्रिभिश्चतुर्भिर्वा यमकस्त्रिवृतो महान् ॥ ( भावप्र० ) इति । अत्रोद्भटः अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् । परोपकारनिरता मणिदीपा इवोत्तमाः ॥ इति । २ प्रेम इत्यालंकारिका वदन्ति । प्रेमरूपस्नेहश्च वत्सलरसस्य स्थायिभावः । स च रसो भरतसंमतः । तदुक्तम् स्फुटं चमत्कारितया वत्सलं च रसं विदुः । स्थायी वत्सलता स्नेहः पुत्राद्यालम्बनं मतम् ॥ ( सा० द० परि० ३ श्लो० २५१ ) इति ।

**स्पन्दनम्**—वाय्वभिभूतस्येव शरीरावयवानां कम्पनम् ( सर्व० सं० पृ० १७० नकु० ) ।

**स्पर्धा**—पराभिभवेच्छा । यथा स्पर्धते इत्यादौ ।

**स्पर्शः**—१ ( गुणः ) [ क ] त्वगिन्द्रियमात्रग्रहणो योर्थः स स्पर्शः ( वै० उ० ३।१।१ ) ( प्रश० पृ० १२ ) । स तु बाह्यैकेन्द्रियग्राह्यः पृथिवीजलतेजोवायुवृत्तिः । अत्र विवेकः कठिनसुकुमारस्पर्शौ पृथिव्या एव ( भा० प० ) इति । तत्र वायुगतस्पर्शस्तु बहुविधः । तथा चोक्तम् वायव्यश्च गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः । उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च ॥ तथा खरो मृदू रूक्षो लघुर्गुरुतरोपि च ॥ ( भार० शा० अ० १८१ ) इति । कठिनस्याप्युपलक्षणमिदम् । यथोक्तम् वायोश्चापि गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः । रूक्षः शीतस्तथैवोष्णः स्निग्धश्च विशदः खरः ॥ कठिनश्चिक्कणः श्लक्ष्णः पिच्छलो दारुणो मृदुः । एवं द्वादशविस्तारो वायव्यो

गुण एव च ॥ ( भार० आश्व० अ० ५० ) इति । त्वगिन्द्रियमात्रग्रहणो योर्थ इत्यत्र अर्थशब्देन धर्मो भावभूत उच्यते । तेन स्पर्शत्वादौ स्पर्शाद्यभावे च नातिव्याप्तिः । तथा च त्वगिन्द्रियग्राह्यगुणवृत्तिगुणत्वावान्तरजातिमत्त्वम् इति पर्यवसितोर्थः । तेन नातीन्द्रियस्पर्शाद्यनुपग्रहः ( वै० उ० ३।१।१ ) । अत्रेदं बोध्यम् । स्पर्शः द्रव्यप्रत्यक्षे त्वक्सहकारी रूपानुविधायी च ( वै० उ० ३।१।१ ) ( त० सं० ) ( प्रशस्त० पृ० १२ ) । तदर्थस्तु रूपसमानाधिकरणात्यन्ताभावाप्रतियोगी इति । रूपवति स्पर्शो नियमेन वर्तते इति सुगमोर्थः । [ ख ] त्वगिन्द्रियमात्रग्राह्यो गुणः ( त० सं० १ ) । अत्र स्पर्शत्वेतिव्याप्तिवारणाय गुणपदम् । संयोगादावतिव्याप्तिवारणाय मात्रपदम् ( त० दी० १ पृ० १३ ) इति । [ ग ] त्वङ्मात्रग्राह्यजातिमान् ( त० कौ० १ ) । सा च जातिः स्पर्शत्वम् । यथा त्वचा घटं स्पृशति इत्यादौ स्पृश्धात्वर्थः स्पर्शः । न्यायवैशेषिकमते स्पर्शस्त्रिविधः शीतः उष्णः अनुष्णाशीतश्चेति । तत्र शीतो जले वर्तते । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोर्वर्तते । तत्र नित्यायामनित्यायां चेति द्विविधायामपि पृथिव्यां स्पर्शः अनित्यः पाकजश्च । जलतेजोवायुषु च द्रव्येष्वपाकजः नित्यगतो नित्यः अनित्यगतः अनित्यश्चेति ( प्रशस्त० पृ० १४ ) ( वै० उ० ७।१।६ ) ( त० सं० ) । चित्रस्पर्शस्तु रूपस्थलीययुक्त्या ( पृ० ६९० ) स्वीकरणीय एव ( वै० वि० ७।१।६ पृ० २९२ ) इति । केचित्तु कठिनादिः स्पर्शः संयोगविशेष एव नातिरिक्तः इति मन्यन्ते । बौद्धास्तु नामरूपेन्द्रियाणां मिथः संयोगः स्पर्शः इत्याहुः । २ वेदान्तिनस्तु संबन्धः ( संनिकर्षः ) ( गीता मध्वभा० ) । यथा मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ( गीता० २।१४ ) इत्यादौ स्पर्शशब्दस्यार्थ इत्यङ्गीचक्रुः । ३ वैयाकरणास्तु कादयो मावसानाः ( २५ ) वर्ग्यवर्णाः इत्याहुः । ४ काव्यज्ञास्तु ग्रहणम् ५ दानम् ६ युद्धं च इत्याहुः । ७ रोगः इति भिषज आहुः ।

**स्पर्शतन्मात्रम्**—१ स्पर्शः । २ सांख्यास्तु वायूपादानकारणं स्पर्शमात्रगुणकः सूक्ष्मभूतविशेषः इत्याहुः ।

**स्पार्शनम्**—त्वगिन्द्रियजन्यं प्रत्यक्षम् । यथा द्रव्यस्पार्शनप्रत्यक्षं प्रति स्पर्शः कारणम् इत्यादौ ग्रन्थे स्पार्शनशब्दस्यार्थः । स्पार्शनं च द्विविधम् स्पर्शविषयकम् स्पर्शवद्द्रव्यविषयकं चेति ।

**स्पृहा**—( दोषः ) धर्माविरोधेन प्राप्तीच्छा ( गौ० वृ० ४।१।३ ) । यथा पुष्पेभ्यः स्पृहयति इत्यादौ स्पृहधात्वर्थः । यथा वा स्पृहावती वस्तुषु केषु मागधी ( रघु० ३।५ ) मिथुने स्पृहावती ( कुमार० ) इत्यादौ च स्पृहाशब्दार्थः ।

**स्फुटत्वम्**—१ तद्विषयकजिज्ञासानधीनप्रतिपत्तिविषयत्वम् । यथा दोषलक्षणे कृते दुष्टहेतुलक्षणस्य स्फुटत्वेन लाभः इत्यादौ स्फुटत्वशब्दस्यार्थः ( ग० हेत्वा० सामा० लक्ष० १ ) । २ ज्योतिषज्ञास्तु सूर्यादिग्रहाणां मेषादिराशिष्वंशविशेषस्थितिः तत्तदंशकलादिगतिश्च इत्याहुः । ३ विकाशनम् ४ विदलनं च इति काव्यज्ञा आहुः ।

**स्फोटः**—वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्यः शब्दः ( सर्व० सं० पृ० ३०० पाणि०) (तर्कप्र० ख० पृ० १२६) । अत्र व्युत्पत्तिः स्फुट्यते व्यज्यते वर्णैः इति स्फोटः इति स्फुटत्यर्थोस्मात् इति स्फोटः इति च यौगिकशब्दाभिधेयत्वं शब्दब्रह्मणः सूचयति ( वै० सा० पृ० २१२ ) । स्फोटत्वं च स्फुटत्यभिव्यक्तीभवत्यर्थोस्मात् अनेन वा इति व्युत्पत्त्या अर्थप्रकाशकत्वम् । प्रकाशश्च ज्ञानम् । तथा च अर्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वं पर्यवस्यति । वर्णस्यैव तत्त्वाभ्युपगमे वर्णस्फोटः पदादीनां तत्त्वाभ्युपगमे तु पदादिस्फोटः इति व्यवहारः ( वै० सा० द० पृ० २१२)। स्फोटस्यावश्यकत्वमाह । पदानां वर्णसमूहरूपाणामाशुविनाशितयैकक्षणावस्थायित्वाभावादप्रत्यक्षत्वं तावन्निरूढम् । तथा च पदाप्रत्यक्षे पदार्थस्मृतेः शाब्दबोधहेतोः असंभवः स्यात् । अतः स्फोटः कश्चनाङ्गीकर्तव्यः यतोऽर्थप्रत्ययः इति । अथ वा वर्णानां प्रत्युच्चारणमन्यथा प्रतीयमानतया अनित्यत्वेन आशुविनाशिनां च तेषां मेलनासंभवेन तत्समुदायस्यापि संबन्धित्वाभावेन प्रत्येकं वर्णेषु वृत्तौ व्यभिचारेण च पूर्वपूर्ववर्णानुभवजन्यसंस्कारबीजवत्यन्त्यवर्णजनितपरिपाकशालिनि हृदये झटिति

समुदीयमानस्य स्फोटरूपस्यैव नित्यतया तत्रैव नित्यसंबन्धस्य योग्यतया वृत्तिमत्त्वमुचितम् इति । तथा च योगसूत्रभाष्यकृद्व्यास आह तदेतेषामर्थसंकेतेनावच्छिन्नानामुपसंहृतध्वनिक्रमाणां य एको बुद्धिनिर्भासस्तत्पदं वाचकं वाच्यस्य संकेत्यते तदेकं पदमेकबुद्धिविषय एकप्रयत्नाक्षिप्तमभागमक्रमवर्णं बौद्धमन्त्यवर्णप्रत्ययोपस्थापितं प्रतीयते इति । स्फोटश्च पूर्वपूर्ववर्णानुभवसहितचरमवर्णानुभवव्यङ्ग्यः । अत्र स्फोटस्याभिव्यक्तौ प्राकृतो ध्वनिः कारणम् । चिरचिरतरस्थितौ तु प्राकृतध्वनिजातवैकृतध्वनिः कारणम् इति विवेको ज्ञेयः (ल० म० १)। स च शाब्दिकमतप्रसिद्धः । अत्र महाभाष्यम् अथ गौरित्यत्र कः शब्दः । येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणानां संप्रत्ययो भवति स शब्द उच्यते इति । तथा च भागवते ( १२।६।४० ) स्फोटश्रवणस्यात्मलिङ्गत्वमुक्तम् शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक् । येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥ ( मञ्जूषायाम् ) इति । नैयायिकमते तु स्फोटो नाङ्गीक्रियत एव । यद्यङ्गीक्रियेत तदापि वर्णवत्सोनित्य एव इति मन्तव्यम्। अयं भावः । पूर्वपूर्ववर्णगोचरसंस्कारसहितश्चरमवर्णोपलम्भ एव स्फोटव्यञ्जकः इति शाब्दिकैः स्वीकरणीयम्। तथा च नैयायिकमतेपि तादृशचरमवर्णोपलम्भेनैवार्थप्रत्ययोपपत्तावलं स्फोटाङ्गीकारेण (न्या० म० ४ पृ० ३२) (त० प्र० ४ पृ० १२७) इति । अथ स्फोटभेदा उच्यन्ते । अष्टौ स्फोटा भवन्ति (१) वर्णस्फोटः (२) पदस्फोटः (३) वाक्यस्फोटः (४) अखण्डपदस्फोटः (५) अखण्डवाक्यस्फोटः (६) वर्णजातिस्फोटः (७) पदजातिस्फोटः (८) वाक्यजातिस्फोटश्च इति । तत्र वाक्यस्फोट एव वास्तवः अन्येषां त्ववास्तवत्वम् इति वैयाकरणानां सिद्धान्तः ( वै० सा० पृ० ५९ ) । अत्र वर्णस्फोटमारभ्याखण्डवाक्यस्फोटपर्यन्तं पञ्च व्यक्तिस्फोटा भवन्ति । शिष्टास्तु त्रयो जातिस्फोटा भवन्ति इति बोध्यम् । अत्र मीमांसका वेदान्तिनश्च प्रत्येकपदशक्तिसाचिव्येनाकाङ्क्षादिवशात्पदाद्वाक्यार्थबोधस्तदा पदस्फोटः । यदा तु तन्निरपेक्षैव सा बोधं जनयति तदा वाक्यस्फोटः इत्याहुः (वै० सा० द० पृ० ४२५) । पुनश्च स्फोटो द्विविधः सखण्डः अखण्डश्च । तत्र पदवाक्ययोरखण्डत्वं चाविद्यमानावयवकत्वम् ।

**स्फ्यः**—खड्गाकारं काष्ठम् (जै० न्या० अ० ३ पा० १ अधि० ६)।

**स्मयः**—१ (दोषः) गुणवति निर्गुणत्वधीः (गौ० वृ० ४।१।३)। २ अद्भुतरसस्थायिभावः इत्यालंकारिका आहुः। ३ गर्वः इति काव्यज्ञा आहुः। ४ कातर्यम् इति नाटकज्ञा आहुः। गायकः इति गानशास्त्रज्ञा आहुः।

**स्मरणम्**—१ स्मृतिः। २ अर्थालंकारविशेषः इत्यालंकारिका आहुः। तदुक्तम् सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते (सा० द० परि० १० श्लो० २७) इति। ३ चिन्तनम् इति काव्यज्ञा वदन्ति।

**स्मार्तः**—१ स्मृतिशास्त्राभिज्ञः। २ स्मृतिविहितं कर्म। यथा स्मार्तं वैदिकवच्चरेत् अन्योपि स्मार्तमाचरेत् इत्यादौ गृह्याग्न्युपासनवैश्वदेवदानादि स्मार्तं भवति।

**स्मृतिः**—१ (बुद्धिः) संस्कारमात्रजन्यं ज्ञानम् (त० सं०)। प्रत्यक्षबुद्धिनिरोधे तदनुसंधानविषयः स्मृतिः (न्या० वा०) इति वार्तिके उक्तम्। यथा मातुः स्मरति इत्यादौ स्मृधात्वर्थः। संस्कारमात्रजन्यम् इत्यस्य चक्षुराद्यजन्यत्वे सति संस्कारजन्यम् इत्यर्थः। मात्रपदोपादानेन प्रत्यभिज्ञायां नातिव्याप्तिः। प्रत्यभिज्ञायाश्चक्षुर्जन्यत्वात् (नील० १ पृ० १४) इति। अत्र प्राञ्चो नैयायिकाः स्मृतिलक्षणे न मात्रपदमावश्यकम्। न च सोयं देवदत्तः इति प्रत्यभिज्ञायामतिव्याप्तिः इति वाच्यम्। तत्र संस्कारजनिततत्तास्मृतिरेव हेतुः। न तु संस्कारोपि इत्यतिव्याप्तिविरहात् इत्याहुः (त० कौ० १ पृ० ६)। मध्वाचार्यानुयायिनस्तु स्मृतिः मनोजन्या न तु संस्कारजन्या। संस्कारस्तु मनसस्तदर्थसंनिकर्षरूप एव। यथा योगीन्द्रियाणां योगजो धर्म इत्याहुः (प्र० प० पृ० ९)। स्मृतिश्च वैशेषिकनये बुद्ध्यन्तर्गतविद्याप्रभेदः (प्रशस्त० पृ० २५)। लिङ्गदर्शनेच्छानुस्मरणाद्यपेक्षादात्ममनसोः संयोगविशेषात् पट्वभ्यासादरप्रत्ययजनिताच्च संस्कारात् दृष्टश्रुतानुभूतेष्वर्थेषु विशेषानुस्मरणेच्छाद्वेषहेतुः तदतीतविषया स्मृतिः (प्रशस्त० २ पृ० ३२) इति। अत्र पाठान्तरम् विशेषानुव्यवसायेच्छानुस्मरणद्वेषहेतुः (प्रशस्त० २

पृ० ४९–५० ) इति । अत्र सूत्रम् आत्ममनसोः संयोगविशेषात् ( प्रणिधानादिसंनिधानादसमवायिकारणात् ) संस्काराच्च स्मृतिः ( वै० ९।२।६ ) इति । अत्र स्मृतौ संयोगविशेषोसमवायिकारणम् । संस्कारो निमित्तकारणम् । आत्मा समवायिकारणम् इति विज्ञेयम् ( वै० उ० ९।१।६ )। अत्रेदं बोध्यम् ॥ भावनाख्यः संस्कारोनुभवेन जन्यते स्मृतिं जनयति च इति । संस्कारस्तूद्बुद्ध एव स्मृतिं जनयति । उद्बोधकाश्च संस्कारस्य सदृशदर्शनादयः ( त० भा० पृ० ३७ ) । तथा चोक्तम् सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः इति । गौतमसूत्रे ( ३।२।४२ ) च ते प्रदर्शिताः । अत्र कश्चिदाह स्मृतिजननाय संस्कारोद्दीपनमुद्बोधः ( वाच० ) इति । अत्र मतभेदः । स्मृतिं संस्कारं च प्रति अनुभवस्यानुभवत्वेनैव जनकत्वम् इति प्राचां मतम् । नवीनानां मते तु अनुभवस्य ज्ञानत्वेन जनकत्वम् ( नील० गु० पृ० ३८ ) इति । प्राचामयमभिप्रायः तत्तद्विषयकस्मृतिं तादृशसंस्कारं च प्रति तत्तद्विषयकानुभवत्वेनैव हेतुता । न तु तत्तद्विषयकज्ञानत्वेन । अनुभवत्वस्यापि जातित्वेन ज्ञानत्वापेक्षया गौरवाभावात् । न च विनिगमनाविरहः इति शङ्क्यम् । व्याप्यधर्मपुरस्कारेण कारणत्वसंभवे व्यापकधर्मस्यान्यथासिद्धिनिरूपकत्वात् इति । नव्यानां पुनरयमाशयः । तत्तद्विषयकस्मृतिं तादृशसंस्कारं च प्रति तत्तद्विषयकज्ञानत्वेनैव हेतुता । न त्वनुभवत्वेन । संस्कारस्य फलनाश्यतया प्रथमस्मरणेनैवानुभवजन्यसंस्कारस्य नाशेन सकृदनुभूतस्य स्मरणोत्तरमस्मरणप्रसङ्गात् ( नील० मु० पृ० ३८–३९ ) इति । स्मृतिर्द्विविधा यथार्था अयथार्था चेति । तत्र आद्या प्रमाजन्या । द्वितीया अप्रमाजन्या ( त० सं० )। जागरे तदुभयं संभवति । स्वप्ने तु सर्वमेव ज्ञानं स्मरणम् अयथार्थं च ( त० भा० ) इति । द्वयोर्लक्षणे च संस्कारसंबन्धावच्छिन्नानुभवप्रमाभ्रमनिष्ठजनकतानिरूपितजन्यते बोध्ये ( वाक्य० गु० पृ० २१ ) । अत्र वेदान्तिन आहुः स्मृतिरपि ( प्रमाजन्यापि ) प्रमाणमेव ( प्रमा ) ( प्र० प० पृ० ४ ) इति । अयं भावः स्मृतेः प्रमारूपत्वेन प्रमाकरणत्वरूपप्रमाणलक्षणाक्रान्तत्वादनुभवस्यापि प्रत्यक्षादिचतुष्टयस्येव प्रमाणा-

न्तरत्वमिष्टमेव इति । २ योगशास्त्रज्ञास्तु अनुभवप्रातिपूर्वा वृत्तिः इत्याहुः । अत्र सूत्रम् अनुभूतविषयासंप्रमोषः स्मृतिः ( पात० पा० १ सू० ११ )। सर्वाः स्मृतयः प्रमाणविपर्ययविकल्पनिद्रास्मृतीनामनुभवात् प्रभवन्ति ( भोजवृत्ति० ) ( भा० ) । २ धर्मज्ञास्तु धर्मशास्त्रम् । अत्रार्थे स्मृतिशब्दस्य व्युत्पत्तिः स्मर्यते वेदधर्मोनेन ( करणे क्तिन् ) इति । तच्च वेदार्थानुभवजन्यं वेदार्थानुवादकं धर्मे च प्रमाणं मुनिप्रणीतं वाक्यरूपम् । यथा मनुस्मृतियाज्ञवल्क्यस्मृत्यादिरित्याहुः । तदुक्तं मनुना वेदोखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ( मनु० अ० २ श्लो० ६ ) ( गौ० १।१ ) इति । अत्रोक्तम् श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ( मनु० अ० २ श्लो० १० ) इति । इयं स्मृतिरपि सात्त्विकराजसतामसभेदेन त्रिविधा । तत्र सात्त्विक्यो यथा वासिष्ठं चैव हारीतं व्यासं पाराशरं तथा । भारद्वाजं काश्यपं च सात्त्विक्यो मुक्तिदाः शुभाः ॥ ( पद्मपु० उत्त० अ० ४३ ) इति । राजस्यस्तामस्यस्तु तत्रैवान्वेषणीयाः । विस्तरभयादत्र न संगृहीताः ।

**स्पन्दनम्**—१ प्रस्रवणम् । तच्च संनिकृष्टदेशस्य द्रवद्रव्यस्य च संयोगानुकूलव्यापारः ( वाक्य० १ पृ० ९ ) । यथा स्पन्दनासमवायिकारणं द्रवत्वम् इत्यादौ ग्रन्थे स्पन्दनशब्दस्यार्थः । अत्र सूत्रम् द्रवत्वात् स्पन्दनम् (वै० ५।२।४) इति । तदर्थश्च स्पन्दनं द्रवत्वादसमवायिकारणादुत्पद्यते । तथा हि क्षितौ पतितानामपां बिन्दूनां परस्परसंयोगेन महज्जलमवयवि स्रोतोरूपं यज्जायते तस्य यत् स्पन्दनं दूरसंसरणं तद्द्रवत्वादसमवायिकारणादुत्पद्यते गुरुत्वान्निमित्तकारणात् अप्सु समवायिकारणेषु ( वै० उ० ५।२।४ ) । २ गमनत्वव्याप्यजातिमत् । यथा भ्रमणं रेचनं स्पन्दनोर्ध्वज्वलनमेव च ( भा० प० श्लो० ७ ) इत्यादौ स्पन्दनशब्दस्यार्थः । ३ जलम् ४ रथश्च इति काव्यज्ञा आहुः । ५ तिनिशवृक्षः ( तिवस ) इति भिषज आहुः ( अमरः २।४।२६ ) ।

**स्याद्वादः**—( वादः ) यत्र वादे दिगम्बराः जैनाः सर्वत्र सप्तभङ्गीनयाख्यं न्यायमवतारयन्ति सः । स्याद्वादः सर्वथैकान्तत्यागात्किंवृत्तचि-

द्विधेः । सप्तभङ्गिनयापेक्षो हेयादेयविशेषकृत् ॥ ( सर्व० सं० पृ० ८४ आर्ह० ) । सप्तभङ्गीनयस्तु (१) स्यादस्ति (२) स्यान्नास्ति (३) स्यादस्ति च नास्ति च (४) स्यादवक्तव्यः (५) स्यादस्ति चावक्तव्यः (६) स्यान्नास्ति चावक्तव्यः (७) स्यादस्ति च नास्ति चावक्तव्यः इति । अत्र स्याच्छब्दः खल्वयं निपातस्तिङन्तप्रतिरूपकोनेकान्तद्योतकः ( सर्व० सं० पृ० ८४ आर्ह० ) । स्यात् इत्यव्ययम् तिङन्तप्रतिरूपकम् कथंचिदर्थकम् । स्यादस्ति कथंचिदस्ति इत्यर्थः । एवमग्रेपि ( शारी० भा० टी० २।२।३३ पृ० ३४ ) । यथा घटः स्वस्वरूपेणास्ति पटस्वरूपेण नास्ति इत्यादि । एवम् एकत्वनित्यत्वादिष्वपीममेव सप्तभङ्गीनयं योजयन्ति ( शारीर० भा० २।२।३३ ) । अयं भावः । घटादेर्हि सर्वात्मना सदेकरूपत्वे प्राप्यात्मनाप्यस्त्येव सः इति तत्प्राप्तये यत्नो न स्यात् । अतो घटत्वादिरूपेण कथंचिदस्ति प्राप्तत्वादिरूपेण कथंचिन्नास्ति इत्येवमनेकरूपत्वं वस्तुमात्रस्यास्थेयम् ( शा० भा० टी० र० प्र० २।२।३३ ) इति । एवम् एकत्वमनेकत्वं चेति द्वयमादाय (१) स्यादेकः (२) स्यादनेकः (३) स्यादेकोनेकश्च (४) स्यादवक्तव्यः (५) स्यादेकोवक्तव्यः (६) स्यादनेकोवक्तव्यः (७) स्यादेकोनेकश्चावक्तव्यश्च इति । तथा स्यान्नित्यः स्यादनित्यः इत्याद्यूह्यम् ( शारी० भा० टी० रत्नप्र० २।२।३३ ) ।

**स्वगतम्**—१ स्वस्मिन्विद्यमानम् । यथा पटश्च स्वगतरूपादेः समवायिकारणम् ( त० सं० ) इत्यादौ ग्रन्थे स्वगतशब्दस्यार्थः । यथा वा वेदान्तिमते एकमेवाद्वितीयम् ब्रह्म ( छा० उ० ६।२।१ ) इत्यादिश्रुतौ एकमेव इतिशब्दार्थस्वगतभेदाभेदनिवृत्तिघटकस्वगतशब्दार्थः । २ नाटकशास्त्रज्ञास्तु अश्राव्यं वाक्यं स्वगतम् इत्याहुः ।

**स्वतःप्रामाण्यम्**—विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वं प्रमायाः स्वतस्त्वम् ( सर्व० सं० पृ० २८३ जैमि० ) ।

**स्वतन्त्रः**—स्वतन्त्रो भगवान्विष्णुर्निर्दोषोशेषसद्गुणः ( सर्व० सं० पृ० १२८ पूर्णप्र० ) ।

**स्वतन्त्रत्वम्**—१ इतरसत्तानधीनसत्ताकत्वम् । यथा परमेश्वरस्य राज्ञश्च वा स्वातन्त्र्यम् । इतरसत्तेत्यस्यार्थस्तु इतरव्यापारानधीनव्यापारवत्त्वम् । स्वरूपप्रमितिप्रवृत्तिलक्षणे सत्तात्रैविध्ये परानपेक्षत्वम् इति मध्वमतानुयायिवेदान्तिन आहुः ( प्र० च० परि० २ पृ० ४७ ) । २ समभिव्याहृतक्रियाकारकान्तरानधीनत्वे सति कारकत्वम् ( ग० व्यु० कार० ३ ) । यथा चैत्रस्तण्डुलं पचति इत्यादौ चैत्रस्य स्वातन्त्र्यम् । इदं च स्वतन्त्रः कर्ता ( पाणि० १।४।५४ ) इति सूत्रे कर्तुः स्वातन्त्र्यम् । तच्च समभिव्याहृतक्रियाकारकान्तरानधीनव्यापारवत्त्वम् इति । ३ क्वचित् शब्दाप्रयोज्यत्वं स्वतन्त्रत्वम् इति केचिदाहुः ( मू० म० १ ) ।

**स्वतो ग्राह्यत्वम्**—स्वग्राहकसामग्र्या ग्राह्यत्वम् । यथा मीमांसकमते ज्ञानप्रामाण्यं स्वतोग्राह्यं भवति । ज्ञानग्राहकसामग्र्या ग्राह्यं भवति । तन्न इति नैयायिकमतम् । अत्राधिकं तु प्रमात्वशब्दव्याख्याने सविस्तरं संपादितम् इत्यत्रैव विरम्यते ।

**स्वतो व्यावर्तकत्वम्** }
**स्वतो व्यावृत्तत्वम्** } —विशेषशब्दे अनयोः प्रपञ्चः संपादितः स तत्र ( पृ० ७८६ ) दृश्यः ।

**स्वत्वम्**—[ क ] यथेष्टविनियोगयोग्यत्वम् इति प्राञ्च आहुः ( का० व्या० पृ० ६ ) ( त० दी० ) । यथा चैत्रस्य धनम् इत्यादौ धने चैत्रनिरूपितं स्वत्वम् । तत्रायमर्थः । यथेष्टविनियोगयोग्यत्वं शास्त्रानिषिद्धविनियोगोपायः क्रयप्रतिग्रहादिस्तद्विषयत्वम् । तच्च न बहिरिन्द्रियवेद्यम् । प्रतिग्रहादेर्मानसज्ञानविशेषरूपस्य बहिरिन्द्रियायोग्यत्वात् ( का० व्या० पृ० ६ ) इति । अत्र विप्रतिपत्तिः स्वत्वं लौकिकम् अलौकिकं वा इति । तत्र स्वत्वमलौकिकम् शास्त्रैकसमधिगम्यम् इति पूर्वपक्षः जीमूतवाहनादीनाम् । तच्च लौकिकमेव लोकप्रसिद्धमेव इति सिद्धान्तः विज्ञानेश्वर मित्रमिश्रादीनाम् इति मिताक्षरावीरमित्रोदयादौ सिद्धान्तितम् । तच्च स्वत्वं जन्मनैवोत्पद्यत इति मिताक्षराकारादयः विज्ञानेश्वरप्रभृतयः आहुः । तच्च विभागेन पित्रादिमरणादिनैव वोत्पद्यत इति वङ्गदेशीयाः

जीमूतवाहनप्रभृतयः आहुः । तत्रापि समुदायद्रव्ये स्वत्वम् इति मिताक्षराकृदादय आहुः । प्रदेशभेदे इति वङ्गदेशीया आहुः ( वीरमित्रो० अ० २ पृ० ५२१–५५० ) । अत्राधिकं च वीरमित्रोदयजीमूतवाहनादौ दृश्यम् । [ ख ] द्रव्याणां यथेष्टक्रयविक्रयादिक्रियासु विनियोजको धर्मविशेषः । स चातिरिक्तः पदार्थः न तु यथेष्टविनियोगयोग्यत्वरूपः इति नव्याः दीधितिकारादयः आहुः ( का० व्या० पृ० ६ ) । तदर्थश्च दानादिनाश्यः प्रतिग्रहजन्यः सप्तपदार्थातिरिक्तः कश्चनानिर्वाच्यः पदार्थः ( ल० म० ) इति । तत्रायमाशयः । प्रतिग्रहादिनाशोत्तरमपि स्वत्वव्यवहारात् दानादितः स्वत्वं नश्यति प्रतिग्रहादितश्च स्वत्वमुत्पद्यते । अत एव निबन्धादौ भाविन्यपि स्वत्वम् । अन्यथा प्रतिमासं प्रतिवर्षं वा देयत्वेन प्रतिश्रुतस्य धान्यादिरूपस्य भावित्वेन तत्र स्वत्वोत्पत्त्यनुपपत्तेः ( लीलावतीरहस्ये चूडामणिः ) ( श्रीकृष्णतर्कालंकारः ) । अतस्तादृशप्रत्ययव्यवहारप्रामाण्यानुरोधेन स्वत्वमतिरिक्तः पदार्थः । तच्च स्वत्वं दानादितो नश्यति प्रतिग्रहादितश्च जायते । तच्च बहिरिन्द्रिययोग्यम् । स्वं पश्यामि इति प्रतीतेः । वस्तुतः स्वत्वस्यानुमितिरेव न तु साक्षात्कारः ( का० व्या० पृ० ६ ) ( नील० ) इति । अत्रेदं बोध्यम् । सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः । प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥ ( मनु० १०।११५ ) इति । स्वत्वोत्पत्तौ साधारणोपायास्तु गौतमेनोक्ताः स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु इति । असाधारणोपायास्तु ब्राह्मणस्याधिकं लब्धम् क्षत्रियस्य विजितम् निर्विष्टं वैश्यशूद्रयोः ( मिता० अ० २ दायभा० ) इति । केचित्तु जीमूतवाहनादयः प्रतिग्रहो न स्वत्वजनकः । अपि तु यथेष्टविनियोगार्हताप्रयोजकः । तथा च उत्पन्नमपि स्वत्वं संप्रदानव्यापारेण ममेदम् इति ज्ञानेन ( स्वीकारेण ) यथेष्टव्यवहारार्हं क्रियते इत्याहुः ( वीरमित्रो० अ० २ पृ० ५४२ ) ।

**स्वधर्मः**—१ यत्किंचिद्व्यक्तिवृत्तिपदार्थमात्रम् । यथा घटवृत्तिर्धर्मो घटत्वादिः । २ धर्मशास्त्रे स्वानुरूपो वेदाद्युक्तः अविगीतः आचारादिधर्मः । यथा श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः

परधर्मो भयावहः ॥ (गीता अ० ३ श्लो० ३५) इत्यादौ स्वधर्मशब्दस्यार्थ इत्याहुः । तदुक्तम् यो यस्य विहितो धर्मः स तज्जातेः प्रकीर्तितः । तस्मात्स्वधर्मं कुर्याच्च द्विजो नित्यमनापदि ॥ (वाचस्पत्ये नरसिंहपुराणम्) इति ।

**स्वधा**—१ [क] पित्रुद्देश्यकत्यागः । यथा पितृभ्यः स्वधेत्यादौ स्वधाशब्दस्यार्थः । वेदादेशितोच्चारणकर्तृत्वोपलक्षितपुरुषीयत्यागः इति फलितोर्थः (ग० व्यु० का० ४ पृ० १००) । अत्र निपातस्वधायोगे त्यागोद्देश्यवाचकपदात् नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च (पाणि० २।३।१६) इत्यनेन सूत्रेण चतुर्थी । [ख] पितृदेवोद्देशेन हविषस्त्यागः । यथा इदमन्नं पित्रे स्वधा इत्यादौ स्वधाशब्दार्थः । अत्र स्वधाशब्दार्थत्यागस्य विषयतयान्नादावन्वयः । तस्य स्वधाशब्दस्य निपातत्वेन तदर्थस्य भेदेनान्वयस्य व्युत्पत्तिसिद्धत्वात् । तथा च पित्रुद्देश्यकत्यागविषय इदमन्नम् इति बोधः । [ग] स्वस्वकरणको हविस्त्यागः । यथा इदं पित्रे स्वधा इत्यादौ स्वधाशब्दस्यार्थः । अत्र पित्रुद्देश्यकस्य स्वधापदकरणकस्य हविस्त्यागस्य कर्मेदम् इत्याकारको बोधः (श० प्र० श्लो० ९४ टी० पृ० १२६) । २ पौराणिकाः कर्मज्ञाश्च मातृकाविशेषः । यथा नमः स्वधायै स्वाहायै (पितृगाथा) इत्यादौ स्वधाशब्दस्यार्थ इत्याहुः । इयं च दक्षकन्या । ब्रह्मणो मानसी कन्या च पितृपत्नी । अत्राधिकं तु ब्रह्मवैवर्ते द्रष्टव्यम् ।

**स्वप्नः**—प्रदेशविशेषावस्थितमनःसंयोगः (नील० गु० पृ० ३८) मेध्यामनःसंयोगो वा । यथा न कंचन स्वप्नं पश्यति (बृह० उ० ४।३।१९) इत्यादौ स्वप्नशब्दार्थः । यथा वा स्वप्नज्ञानं मानसविपर्ययः इत्यादौ ग्रन्थे स्वप्नशब्दार्थः । अत्र प्रदेशविशेषस्तु पुरीतद्धृदिर्देशयोः संधिः । निरिन्द्रियात्मप्रदेशो वा चिन्त्यः ।

**स्वप्नज्ञानम्**—(बुद्धिप्रभेदः अविद्या) [क] जाग्रदवस्थायां बाह्यवस्त्वनुभवजन्यमयथार्थं स्मरणम् । तच्च निराकारमेव (त० भा० प्रमेयनि० पृ० ४०) । स्वप्ने च सर्वमेव ज्ञानं स्मरणम् अयथार्थम् । दोषवशेन

तत् इति स्थाने इदम् इत्युदयात् । सर्वं ज्ञानं निराकारमेव न तु ज्ञानं तत्तद्विषयाकारम् । साकारज्ञानवादनिराकरणात् ( त० भा० प्रमेय-नि० पृ० ४० ) । तथा स्वप्नः ( वै० ९।२।७ ) इति सूत्रे चेत्थमुक्तम् । स्मृतौ यथा संस्कारः कारणं तथा स्वप्नसंज्ञकमानसज्ञानेपि इत्याह तथा इति । तथा आत्ममनःसंयोगविशेषात् पूर्वानुभवजनितसंस्काराच्च स्वप्नो मानसज्ञानविशेषो भवतीति । अत्र संयोगे विशेषो मेध्यामनःसंयोगात्मकदोषविशिष्टत्वम् । अत एव तदानीं भ्रम एव भवति । पूर्वानुभवश्चैहिको जन्मान्तरीयो वा ( वै० वि० ९।२।७ पृ० ४०९ ) । अत्रेदं बोध्यम् । स्वप्नज्ञानं पुरीतद्बहिर्देशयोः संधौ मनसि स्थिते अदृष्टविशेषेण चिन्ताविशेषेण धातुदोषेण वा जन्यते । तच्च मानसविपर्ययेन्तर्भवति ( सि० च० गु० पृ० ३४ ) ( त० दी० गु० पृ० ३८ ) । स्वप्नज्ञानमनुभूतपदार्थस्मरणसंस्कारकफपित्तादिधातुशुभाशुभादृष्टैर्जन्यते । तच्च बाधितार्थविषयकम् ( नील० गु० पृ० ३८ ) इत्यन्यत्रोक्तम् । तत्र स्वप्नज्ञाने असमवायिकारणं स्वप्नः । धात्वदृष्टादिकं निमित्तकारणम् । आत्मा समवायिकारणम् इति ज्ञेयम् । स्वप्नस्य स्मृतिरूपत्वमुक्तं प्रशस्तदेवाचार्यैः अतीतज्ञानप्रत्यवेक्षणात्स्मृतिरेव इति । उक्तं च वृत्तिकारैः । अनुभूतवस्तुस्फुरणार्थतया न स्मरणादर्थान्तरं स्वप्नज्ञानम् ( वै० उ० ९।२।८ पृ० ४११ ) इति । तेन यत्तु नीलकण्ठ्यां स्मृतिरूपत्वं स्वप्नज्ञानस्य खण्डितम् तद्भाष्यादितात्पर्यानाकलनादेव इति मम भाति । [ ख ] निद्रादुष्टान्तःकरणजं ज्ञानम् । [ ग ] मानसविपर्ययः ( त० दी० गु० पृ० ३८ ) ( सि० च० ) । [ घ ] मिथ्याप्रत्ययप्रवाहः ( न्या० ली० गु० पृ० ३१ ) । [ ङ ] सिद्धाभिभूतज्ञानम् ( न्या० ली० गु० पृ० ५९ ) । [ च ] उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्येन्द्रियद्वारेण यदनुभवनं मानसं तत् । स्वप्नज्ञानमित्थमुत्पद्यते । यदा बुद्धिपूर्वादात्मनः- शरीरारब्धव्यापारादहनि खिन्नानां प्राणिनां निशि विश्रान्त्यर्थमाहारपरिणामार्थं वा अदृष्टकारितप्रयत्नापेक्षात्मान्तःकरणसंबन्धजन्यक्रियाप्रबन्धादतीतमन्तर्हृदये निरिन्द्रियात्मप्रदेशे निश्चलं मनस्तिष्ठति तदा प्रलीनमनस्क इत्याख्यायते । प्रलीने च तस्मिन्नुपरतेन्द्रियग्रामो भवति ।

तस्यामवस्थायां प्रबन्धेन प्राणापानसंतानप्रवृत्तावात्ममनःसंयोगविशेषात् स्वापाख्यात् संस्काराच्चेन्द्रियद्वारेणेवासत्स्वपि विषयेषु प्रत्यक्षाकारं ज्ञानमुत्पद्यते (प्रशस्त० गु० पृ० २५)। अत्र च मानसं ज्ञानं ज्ञानलक्षणरूपालौकिकसंनिकर्षाद्भवति स्मरणं च संस्कारात् इति विशेषः (वै० वि० ९।२।७)। तच्च स्वप्नज्ञानं त्रिविधम् (१) किंचित् संस्कारपाटवात् (२) किंचित् धातूनां वातपित्तश्लेष्मणां दोषात् (३) किंचित् धर्माधर्मरूपादृष्टविशेषाच्चोत्पद्यते। तत्राद्यं (१) यथा कामी क्रुद्धो वा यदा यमर्थमादृतश्चिन्तयन्स्वपिति तदा सैव चिन्तासंततिः प्रत्यक्षाकारा संजायते (प्रशस्त० २ पृ० २५)। यथा वा पुराणादिश्रवणजनितसंस्कारवशाज्जायते कर्णार्जुनीयं युद्धमिदम् इत्याकारम्। द्वितीयं (२) यथा वातदोषादाकाशगमनवसुन्धरापर्यटनव्याघ्रादिभयपलायनादीनि पश्यति। पित्तोपचयदोषमहिम्ना वह्निप्रवेशवह्निज्वालालिङ्गनकनकपर्वतविद्युल्लताविस्फुरणदिग्दाहादिकं पश्यति। श्लेष्मदोषप्राबल्यात्तु समुद्रसंतरणनदीमज्जनधारासारवर्षणरजतपर्वतादि पश्यति। तृतीयं (३) यथा तज्जन्मानुभूतेषु जन्मान्तरानुभूतेषु वा सिद्धोपप्लुतान्तःकरणस्य यज्ज्ञानमुत्पद्यते तत्र शुभावेदकं धर्मात् गजारोहणपर्वतारोहणच्छत्रलाभपायसभक्षणराजसंदर्शनादिविषयकम्। अधर्मात्तु तैलाभ्यञ्जनान्धकूपपतनोष्ट्रारोहणपङ्कमज्जनस्वविवाहदर्शनादिविषयकं स्वप्नज्ञानमुत्पद्यते (वै० उ० ९।२।७) इति। सांख्या मायावादिवेदान्तिनश्च संस्कारमात्रजन्यः स्वप्नावस्थाशब्दवाच्यो बुद्धेर्विषयाकारः परिणामः स्वप्नः इत्याहुः। स्वप्नस्थपदार्थविषये सत्यत्वमिथ्यात्वाभ्यां विप्रतिपत्तिः। तत्र स्वप्नदृष्टपदार्थस्य मिथ्यात्वम् इति मायावादिवेदान्तिनोङ्गीचक्रुः। श्रुतिश्च स यत्र प्रस्वपिति इत्युपक्रम्य न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान्रथयोगान् पथः सृजते (बृह० उप० ६।३।९–१०) इति। सूत्रं च मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् (ब्रह्मसू० अ० ३ पा० २ सू० ३) इति। तथा सूचकश्च हि श्रुतेराचक्षते च तद्विदः (ब्रह्मसू० अ० ३ पा० २ सू० ४) इति। सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः। तथा हि श्रूयते

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने ( छान्दो० ५।२।९ ) इति । तथा पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति इति । आचक्षते च स्वप्नाध्यायविदः कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरयानादीन्यधन्यानि ( शारी० भा० ३।२।४ ) इति । अत्र शुभाशुभसूचकत्वं स्वप्नभेदस्य मत्स्यपुराणादौ ( अ० २४२ ) सविस्तरमुक्तम् तत्तत्र द्रष्टव्यम् । द्वैतवादिनः श्रीपूर्णप्रज्ञाचार्यास्तु स्वप्नसृष्टपदार्थानां सत्यत्वमेव । तथा हि स्वप्नेपि गजादिदर्शनं यथार्थमेव । मानसवासनाजन्यत्वाद्गजादीनाम् । तेषु यद्बाह्यत्वज्ञानं तद्विपर्यय एव इति प्राहुः ( प्र० प० पृ० ५ ) । अयं भावः । ईश्वरोनादिमनोगतांश्च संस्कारानुपादानीकृत्य स्वेच्छामात्रेण प्रदर्शयति पदार्थान् । अत्र श्रुतिः य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः इति विज्ञेया । न तत्र रथा न रथयोगाः ( बृह० उ० ६।३।१० ) इत्यादौ तु ईश्वरं विना इति पूरयित्वा अन्वयो योज्यः ( मध्वभाष्य० ३।२।१–३ ) इति । पुराणे चोक्तम् मनोगतांश्च संस्कारान्स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय स स्वप्न इति गीयते ॥ यदन्यथात्वजाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता । अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवेत् ॥ ( मध्वभाष्ये ब्रह्माण्डपु० ३।२।३ ) इति । अत्र गजादिरूपकार्यस्योपादानं वासना ईश्वरः कर्ता अदृष्टादिकं निमित्तम् इति द्रष्टव्यम् ( प्र० प० टी० वेदेश० पृ० १४ ) ।

**स्वप्नान्तिकम्**—( बुद्धिप्रभेदः अविद्या ) १ तत्कालोत्पन्नानुभवजनितसंस्कारजन्यं ज्ञानम् । तदर्थस्तु स्वप्नान्तिकं स्वप्नस्यान्ते भवम् । स्वप्नानुभवजसंस्कारजम् इति यावत् । इदं ज्ञानं स्वप्नावस्थाजातानुभवजनितसंस्कारेण जायते । किंतु स्मृत्यात्मकम् न मानसम् इति विशेषः ( वै० वि० ९।२।८ ) । तथा च स्वप्नान्तिकस्वप्नज्ञानयोरेतावान् विशेषः । स्वप्नज्ञानं पूर्वानुभवजनितात्संस्कारादुत्पद्यते । स्वप्नान्तिकं तु तत्कालोत्पन्नानुभवजनितसंस्कारादेव । तदुक्तं प्रशस्तदेवाचार्यैः अतीतज्ञानप्रत्यवेक्षणात् स्मृतिरेव ( वै० उ० ९।२।८ ) इति । अत्र सूत्रम् स्वप्नान्तिकम् ( वै० ९।२।८ ) इति । तदर्थश्च स्वप्नज्ञानं यथात्ममनः-

संयोगविशेषसंस्कारोभयजन्यम् तथा स्वप्नान्तिकाख्यं ज्ञानमपि ( वै० वि० ९।२।८ ) इति । स्वप्नान्तिकं यद्यप्युपरतेन्द्रियग्रामस्य भवति तथाप्यतीतज्ञानप्रबन्धस्य प्रत्यवेक्षणात्स्मृतिरेवेति ( प्रशस्त० गु० पृ० २५ )। २ केचित्तु स्वप्नमध्ये प्रमाभूतं यज्ज्ञानम् तत् स्वप्नान्तिकम् । यथा शय्यायां शयानोस्मि इत्यादि इत्याहुः ( वै० उ० ९।२।८ ) ।

**स्वभावः**—हेत्वन्तरानपेक्षो वस्तुधर्मविशेषः । यथा स्वभावो दुरतिक्रमः अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथानिलः । केनेदं चित्रितं तस्मात्स्वभावात्तद्व्यवस्थितिः ॥ ( सर्व० पृ० १३ चार्वा० ) इत्यादौ स्वभावशब्दस्यार्थः । तत्र प्राणिस्वभावस्तु द्विविधः निसर्गः स्वरूपं चेति । तदुक्तम् बहिर्हेत्वनपेक्षी तु स्वभावोथ प्रकीर्तितः । निसर्गश्च स्वभावश्च इत्येष भवति द्विधा ॥ निसर्गः सुदृढाभ्यासजन्यः संस्कार उच्यते । अजन्यस्तु स्वतःसिद्धः स्वरूपो भाव उच्यते ॥ ( उज्ज्वलदत्त० ) इति ।

**स्वम्**—१ [ क ] समभिव्याहृतपदोपस्थाप्यः पदार्थः ( ग० शक्ति० पृ० ११६–११७ )। निष्कृष्टार्थस्तु साक्षात्परंपरया वा यः स्वार्थस्य विशेष्यः यश्च स्वसमभिव्याहृतक्रियाकारकपदार्थः तदुभयम् । यथा चैत्रः स्वपुत्रं पश्यति इत्यादौ स्वपदार्थः ( ग० शक्ति० पृ० १२२ )। [ ख ] तद्घटितवाक्यघटकक्रियान्वितः समभिव्याहृतपदोपस्थाप्यः । यथा चैत्रः स्वपुत्रं पश्यति इत्यादौ स्वपदार्थश्चैत्रः । तद्घटितेत्यत्र तच्छब्देन स्वपदं ग्राह्यम् । क्रियान्वित इत्यन्तेन चैत्रस्य भ्राता स्वपुत्रं पश्यति इत्यादौ स्वशब्देन न चैत्रप्रतीतिः । २ व्यवहारज्ञास्तु स्वकीयम् धनादि इत्याहुः । ३ आत्मा । ४ ज्ञातिः ।

**स्वयमुक्तिः**—स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत् । सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति ॥ ( मिताक्षरा अ० २ श्लो० ६९ ) ।

**स्वरः**—१ उदात्तानुदात्तस्वरितरूपो वर्णोच्चारणयत्नविशेषः । २ व्यञ्जनवर्णभिन्ना अकारादयो वर्णाः इति शाब्दिका आहुः । एषामचामुदात्तादिस्वरवत्त्वात् स्वरपदाभिधेयता । अत्र शिक्षा उदात्तश्चानुदात्तश्च स्वरितश्च स्वराश्रयः । ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि ॥

इति । ३ तान्त्रिकास्तु प्राणादिवायोर्व्यापारविशेष इत्याहुः । ४ भिषजस्तु प्रकुपितवायोर्व्यापारविशेष इत्याहुः ( सुश्रुते ) । ५ गायकास्तु निषादादयस्तन्त्रीकण्ठोत्था गानजध्वनय इत्याहुः । ते च स्वराः सप्त षड्ज ऋषभगान्धारौ मध्यमः पञ्चमस्तथा । धैवतश्च निषादश्च स्वराः सप्त प्रकीर्तिताः ॥ ( भरतः ) ( अमरः १।७।१ ) इति । तत्र निषादादिस्वराणां प्राणिविशेषस्वरतुल्यता नारदोक्ता यथा षड्जं रौति मयूरो हि वृषो नर्दति चर्षभम् । अजा विरौति गान्धारं क्रौञ्चो नर्दति मध्यमम् ॥ पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् । अश्वश्च धैवतं रौति निषादं रौति कुञ्जरः ॥ इति ( अमर० टी० ) । स्वराणामुत्पत्तिस्थानादिकं च भरतशास्त्रादौ विज्ञेयम् । ६ केचिच्छकुनज्ञास्तु इष्टानिष्टफलसूचको नासिकानिर्गतो वायोर्व्यापारविशेष इत्याहुः । ७ मध्वाचार्यास्तु स्वरतेस्तु स्वरः विष्णुः इत्याहुः ( तैत्ति० शिक्षा० मध्वभा० पृ० १ ) ।

स्वरसः—१ विवादशून्यत्वम् । यथा घटत्वेन घटो नास्ति इति प्रत्ययस्य विवादशून्यत्वम् ( ग० चतुर्द० खण्डन० पृ० ७२ ) । अत्र च विवादविषयस्तु घटत्वेन पटो नास्ति इत्याकारको व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावविषयकः प्रत्ययः इति बोध्यम् ( व्यधि० अभा० खण्डन० ) । २ स्वाभिप्रायः । यथा वाक्यादौ रचनाभङ्गीविशेषरूपः । ३ भिषजस्तु क्वाथः इत्याहुः । अत्रोक्तं वैद्यके सद्यः क्षुण्णादार्द्रद्रव्यादुद्धृत्य यन्त्रादिपीडनात् । यो रसस्त्वभिनिर्याति स्वरसः स प्रकीर्तितः ॥ (वाच०) इति । ४ अन्ये तु शिलापिष्टकल्कविशेष इत्याहुः ( शब्दर० ) ( वाच० ) ।

स्वरुः—१ [क] छिद्यमानस्य यूपस्य यः प्रथमं पतितः शकलः स स्वरुः ( जै० न्या० अ० ४ पा० २ अधि० १ ) । [ख] स्वरुः काष्ठशकलम् ( जै० सू० वृ० अ० ४ पा० २ सू० १ ) । २ पश्वङ्गम् ( जै० न्या० अ० ४ पा० ४ अधि० १० ) ।

स्वरूपम्—१ स्वात्मकः पदार्थः । यथा घटस्वरूपं द्रव्यम् इत्यादौ स्वरूपशब्दस्यार्थः । काव्यज्ञास्तु २ स्वभावविशेषः ( अमरः १ नाट्य० ३८ ) ३ पण्डितः ४ सुन्दरश्च इत्याहुः ( अमरः २।३।१३१ ) ।

**स्वरूपयोग्यत्वम्**—( जनकत्वादिकम् ) तदवच्छेदकधर्मवत्त्वम् । यथा अरण्यस्थस्यापि दण्डस्य घटं प्रति जनकत्वं स्वरूपयोग्यत्वम् ( सि० च० १ पृ० २० ) । अत्र च अरण्यस्थदण्डस्यापि घटकारणतायामवच्छेदकीभूतदण्डत्ववत्त्वात्स्वरूपयोग्यत्वरूपं जनकत्वं युज्यत इति बोध्यम् । यथा वा परमाणुवृत्तिरूपादेश्चक्षुरविषयत्वेपि चक्षुर्विषयत्वस्वरूपयोग्यत्वम् । तदर्थस्तु चक्षुर्जन्यज्ञानविषयत्वावच्छेदकीभूतधर्मवत्त्वम् इति । स च धर्मोत्र रूपत्वम् । तच्च परमाणुवृत्तावपि रूपादौ वर्तत इति सर्वं सुस्थम् ।

**स्वरूपलक्षणम्**—स्वरूपान्तर्गतत्वे सति व्यावर्तकम् ( सर्व० सं० पृ० ४६६ शां० ) ।

**स्वरूपसंबन्धः**—संबन्धान्तरेण विशिष्टप्रतीतिजननायोग्यत्वम् ( चि० १ ) । यथा भूतले घटो नास्ति इत्यादौ घटाभावादेर्भूतलेन संबन्धः । स द्विविधः केवलस्वरूपः विशेषणता चेति । तत्राद्यो भावाभावान्यतरप्रतियोगिकः । यथा आधेयत्वप्रतियोगित्वादीनां संबन्धः । द्वितीयस्त्रिविधः दैशिकविशेषणता दिक्कृतविशेषणता कालिकविशेषणता चेति । तत्राद्यश्चाभावमात्रप्रतियोगिकः । यथा भूतलादिना घटाभावादीनां संबन्धः । द्वितीयतृतीयौ तु दिक्कालानुयोगिकौ जन्यमात्रप्रतियोगिकौ च । यथा गन्धघटादीनां संबन्धौ दिक्कालाभ्याम् इति । इमावेव सर्वाधारताप्रयोजकसंबन्धौ इति जेगीयेते ( त० दी० १ कालनि० पृ० १० ) । अत्राहुः । स्वरूपसंबन्ध इत्यस्य अनुयोगिप्रतियोग्यन्यतरस्वरूपः संबन्धविशेषः इत्यर्थः । यद्वा स्वरूपसंबन्धो धर्मिद्वयात्मकः । अथ वा षट्पदार्थातिरिक्तः भावरूपः पदार्थविशेषः स्वरूपसंबन्धः इति ।

**स्वरूपासिद्धः**—( हेत्वाभासः ) [ क ] यो हेतुराश्रये नावगम्यते सः । यथा सामान्यमनित्यं कृतकत्वात् इत्यादौ कृतकत्वं स्वरूपासिद्धम् । अत्र कृतकत्वं हेतुराश्रये सामान्ये नास्ति ( त० भा० हे० पृ० ४५ ) । यथा वा शब्दो गुणश्चाक्षुषत्वात् इत्यादौ चाक्षुषत्वं स्वरूपासिद्धम् । अत्र चाक्षुषत्वं शब्दे पक्षे नास्ति शब्दस्य श्रावणत्वात् इति चाक्षुषत्वं स्वरूपासिद्धं भवति इति ज्ञेयम् ( त० सं० ) । अयमेव हेतुः शुद्धासिद्धः

इत्युच्यते ( सि० च० २ पृ० २८ ) । स्वरूपासिद्धश्च शुद्धासिद्धभागासिद्धविशेषणासिद्धविशेष्यासिद्धासमर्थविशेषणासमर्थविशेष्यभेदेन बहुविधः ( त० भा० पृ० ४५ ) ( त० सं० २ ) ( सि० च० २ ) । स्वरूपासिद्धश्चायमसिद्धप्रभेदः । लक्षणं तु वक्ष्यमाणा स्वरूपासिद्धिरेव । सा च हेतुनिष्ठपक्षावृत्तित्वादिः स्वरूपासिद्धिशब्दे द्रष्टव्या ( सि० च० )। स्वरूपासिद्धश्चायं क्वचित् संदेहसिषाधयिषयोरभावात् सिद्धसाधने अन्तर्भवति ( वै० उ० ३।१।१५ पृ० १५६ ) । [ ख ] यो हेतुः पक्षे न वर्तते स स्वरूपासिद्धः । यथा तप्तायःपिण्डो वह्निमान् धूमात् इत्यादौ धूमो हेतुः स्वरूपासिद्धः । यथा वा शशादिरश्वो विषाणित्वात् इत्यादौ विषाणित्वं हेतुः स्वरूपासिद्धः ( प्र० प्र० ) । अत्र सूत्रम् यस्माद्विषाणी तस्मादश्वः ( वै० ३।१।१६ ) इति । [ ग ] पक्षनिष्ठाभावप्रतियोगी हेतुः । यथा ह्रदो द्रव्यं धूमात् इत्यादौ धूमः स्वरूपासिद्धः ( त० कौ० २ ) । अत्र पक्षे ह्रदे वर्तमानः धूमस्याभावः तस्य प्रतियोगी धूमो भवति इति ह्रदो द्रव्यं धूमात् इत्यादौ धूमो हेतुः स्वरूपासिद्धः । स्वरूपासिद्धत्वज्ञानं परामर्शप्रतिबन्धकम् । ह्रदे धूमो नास्ति इति ज्ञाने सति द्रव्यत्वव्याप्यधूमवान् ह्रदः इति परामर्शासंभवात् । एतस्य परामर्शस्य ह्रदे धूमसंबन्धावगाहित्वात् ( त० कौ० २ ) इति ।

**स्वरूपासिद्धिः**—( हेतुदोषः ) पक्षे व्याप्यत्वाभिमतस्याभावः । यथा घटः पृथिवी पटत्वात् इत्यत्र घटरूपपक्षे हेत्वभावः ( न्या० म० २ ) । यथा वा ह्रदो द्रव्यं धूमात् इत्यादौ ह्रदनिष्ठो धूमाभावः स्वरूपासिद्धिः ( मु० २ ) ( गौ० वृ० १।२।८ ) ( वै० वि० ३।१।१५ ) ( न्या० बो० ) ( न्या० म० २ पृ० २१ ) । स्वरूपासिद्धिश्चेयमसिद्धिप्रभेदः । भागासिद्धिरत्रैवान्तर्भवति ( त० मा० ) । अत्र च हेत्वभाववत्पक्षः हेतुमदन्यः पक्षः पक्षावृत्तिर्हेतुः पक्षे हेत्वभावः पक्षनिष्ठं हेत्वभाववत्त्वम् पक्षनिष्ठं हेतुमदन्यत्वम् हेतुनिष्ठं पक्षावृत्तित्वम् हेतुनिष्ठं पक्षवृत्तित्ववदन्यत्वम् हेतुमन्निष्ठं पक्षान्यत्वादिकम् हेतुनिष्ठं पक्षनिष्ठाभावप्रतियोगित्वम् विशिष्टहेतौ पक्षादेर्विशेष्याभाववत्त्वादिकम् पक्षादेर्हेत्वसमानाधिकरणधर्मवत्त्वम् इत्यादयः स्वरूपासिद्धिव्यक्तयो बाधवदूह्याः ।

एतासां विभाजकं तु प्रकृतपक्षप्रकृतसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयवैशिष्ट्यग्रहविरोधितावच्छेदकं रूपम् (दीधि० २ पृ० २१७) इति। अत्रेदं विज्ञेयम् स्वरूपासिद्धेर्हेतवः पञ्च तर्काः। ते च आत्माश्रयः अन्योन्याश्रयः संशयः चक्रकाश्रयः अनवस्था चेति (ता० र० श्लो० ९०)।

**स्वर्गः**—१ [क] सुखविशेषः (मु० गु०)। यथा यागात्स्वर्गो भवति इत्यादौ स्वर्गशब्दस्यार्थः। यथा वा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते इत्यादौ स्वर्शब्दस्यार्थः। इदं च इच्छामात्रसाधनसाध्यं सुखम् इति वदन्ति। अत्राम्नायते यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥ (श्रुतिः) इति। अत्र दुःखासंभिन्नत्वं च स्वावच्छेदकशरीरानवच्छिन्नत्वम्। तेन दुःखसमानकालीने सुखे नातिव्याप्तिः। [ख] अधर्मानारब्धदेहावच्छेद्यसुखम् (प० च०)। २ पौराणिकास्तु देवानामावासस्थानं लोकविशेषः। तदुक्तं महाभारते उपरिष्टाच्च स्वर्लोको योयं स्वरिति संज्ञितः। ऊर्ध्वगः सत्पथः शश्वद्देवयानचरो मुने॥ नातप्ततपसः पुंसो नामहायज्ञयाजिनः। नानृता नास्तिकाश्चैव तत्र गच्छन्ति मुद्गल॥ धर्मात्मानो जितात्मानः शान्ता दान्ता विमत्सराः। दानधर्मरता लोकाः शूराश्चाहवलक्षणाः॥ तत्र गच्छन्ति इत्यादि। तत्र गुणप्रशंसा न शोको न जरा तत्र नायासपरिदेवने। ईदृशः स मुने लोकः स्वकर्मफलहेतुकः॥ न वर्तयन्त्याहुतिभिस्तेनाप्यमृतभोजनाः। तथा दिव्यशरीरास्ते न च विग्रहमूर्तयः॥ इत्यादिः। तत्र दोषास्तु कृतस्य कर्मणस्तत्र भुज्यते यत्फलं दिवि। न चान्यत्क्रियते कर्म मूलच्छेदेन भुज्यते॥ सोत्र दोषो मम मतस्तस्यान्ते पतनं च यत् (भार० व० अ० २६०) इत्यादयः। अयं च लोकः भूर्लोकः भुवर्लोकः स्वर्लोकः महर्लोकः जनलोकः तपोलोकः सत्यलोकश्च इत्येतेषु भूरादिषु सप्तसु लोकेषूर्ध्वस्थस्तृतीय इत्याहुः।

**स्वस्ति**—१ आशीः। यथा स्वस्ति भवते इत्यादौ स्वस्त्यर्थः। अत्र चतुर्थ्यर्थः संबन्धः। तस्य स्वस्त्यर्थहितेन्वयः। एवं च भवदीयहितविषयिणी

मदीयेच्छा इति बोधः ( ग० व्यु० का० ४ ) । अत्र आशीश्च परहित-विषयकेच्छा न तु स्वहितविषयकेच्छा विज्ञेया । अत्र व्याकरणम् अस्ति ( सु अस् क्तिच् ) इति विभक्तिप्रतिरूपकमव्ययम् । स्वस्तिशब्दयोगे क्षेमादिसंबन्धिनि चतुर्थी भवति । २ कल्याणम् ( कुशलम् ) । यथा स्वस्त्यस्तु मह्यम् इत्यादौ स्वस्तिशब्दस्यार्थः ( ग० व्यु० का० ४ ) । यथा वा स्वस्त्यस्तु प्रजाभ्यः इत्यादौ स्वस्तिशब्दस्यार्थः । अत्राद्ये चतुर्थ्यर्थः संबन्धः । तस्य च कल्याणेन्वयः ( ग० व्यु० का० ४ ) । शाब्दबोधस्तु पूर्ववज्ज्ञेयः । स्वस्त्यस्तु प्रजाभ्य इत्यत्र प्रजानिष्ठं कुशलम् इत्यर्थः । स्वस्ति-शब्दस्य कुशलवाचित्वात् । कुशलस्याशंसास्थले तु स्वस्त्यस्तु प्रजाभ्यः इतिवत् स्वस्त्यस्तु प्रजानाम् इत्यपि प्रमाणम् । आशास्यैर्धनकुशलायुष्यार्थै-र्योगे चतुर्थी वा इति भागुरिस्मृतेः इत्यपि वदन्ति ( श० प्र० श्लो० ९४ टी० पृ० १२६ ) । ३ पुण्यम् । ४ स्वीकारसूचनम् ।

**स्वहस्तितत्वम्**—स्वीकृतत्वम् ( राम० ) । यथा अनुभवस्य त्वया स्वहस्तितत्वात् ( दि० ) इत्यादौ ग्रन्थे स्वहस्तितत्वशब्दस्यार्थः ।

**स्वागतम्**—१ शोभनमागमनम् ( कुमा० टी० २।१८ ) । यथा स्वागतं स्वानधीकारान् ( कुमार० स० २ श्लो० १८ ) इत्यादौ स्वागतशब्द-स्यार्थः । २ कुशलम् । ३ कुशलप्रश्नः ( हारा० ) । यथा स्वागतं वो महाभागाः वयं किं करवाम ते ( भाग० ९ ) इत्यादौ स्वागतशब्द-स्यार्थः । ४ देवतापूजकास्तु षोडशोपचारमध्ये द्वितीयोपचारः । यथा आसनं स्वागतं पाद्यम् इत्यादौ स्वागतशब्दस्यार्थः इत्याहुः ।

**स्वातन्त्र्यम्**—स्वतन्त्रस्याप्रयोज्यत्वं करणादिप्रयोक्तृता । कर्तुः स्वातन्त्र्यमेतद्धि न कर्माद्यनपेक्षता ( सर्व० सं० पृ० १७७ शै० ) ।

**स्वादः**—१ प्रीतिः । २ प्रीणनम् । ३ रसिकास्तु रसानुभवः । यथा रसास्वादेन तरला ये माद्यन्ति विपश्चितः ( प्रतापरु० ) इत्यादौ स्वाद-शब्दस्यार्थः इत्याहुः । ४ लेहनम् इति काव्यज्ञा आहुः ।

**स्वाध्यायः**—१ अध्ययनम् ( अमरः २।७।४७ ) । यथा स्वाध्यायो जप इत्युक्तो वेदाध्ययनकर्मणि ( स्मृतिः ) इत्यादौ स्वाध्यायशब्दस्यार्थः ।

२ अध्ययनकर्म आम्नायादि । यथा स्वाध्यायोध्येतव्यः (श्रुतिः) इत्यादौ स्वाध्यायशब्दस्यार्थः । ३ अर्थानुसंधानपूर्वकमन्त्रजपादिः इति नारदपञ्चरात्रविद आहुः । तदुक्तम् स्वाध्यायो नाम अर्थानुसंधानपूर्वको मन्त्रजपो वैष्णवसूक्तस्तोत्रपाठो नामसंकीर्तनं तत्त्वप्रतिपादकशास्त्राभ्यासश्च (सर्व० सं० पृ० ११७ रामानु०) इति । ४ प्रणवगायत्रीप्रभृतीनामध्ययनं स्वाध्यायः (सर्व० सं० पृ० ३६७ पात०) ।

**स्वापः**—१ [क] स्वप्नः । [ख] निद्रा इति काव्यज्ञा आहुः । [ग] सुषुप्तिः । २ अज्ञानम् इति वेदान्तिन आहुः । स्पर्शाज्ञता इति मेदिनीकार आह । ३ स्वप्नज्ञानम् (कृष्णं०) ।

**स्वाभाविकम्**—यस्मिन्सति कारणविलम्बाद्विलम्बो यस्योत्पत्तौ न भवति तस्य तत्स्वाभाविकम् । यथा न ह्यग्नेः स्वाभाविकादौष्ण्यान्मोक्षः संभवति । स्वाभाविकस्य यावद्द्रव्यभावित्वात् । जलस्य शीतस्पर्शः स्वाभाविकः । इत्यादौ ग्रन्थे स्वाभाविकशब्दस्यार्थः ।

**स्वारसिकः**—सकलजनसाधारणः (कृष्णं०) । सकलजनाभिप्रेतः । यथा कश्चन सुष्ठु शब्दप्रयोगः स्वारसिकः ।

**स्वारसिकलक्षणा**—(लक्षणा) अधुनातनतात्पर्यविषयीभूतार्थनिष्ठा लक्षणा । यथा वटे गावः शेरते इत्यादौ वटपदस्य वटसमीपे लक्षणा । गङ्गायां घोषः इत्यादौ घोषपदस्य मत्स्यादौ या लक्षणा सा स्वारसिकी । अत्र व्युत्पत्तिः स्वस्य वक्तुः रसः इच्छा तदधीना लक्षणा इति ।

**स्वार्थम्**—१ (अनुमानम्) [क] न्यायाप्रयोज्यानुमानम् (न्या० बो० २ पृ० १५) । अत्रार्थे स्वार्थशब्दस्य व्युत्पत्तिरर्थश्च स्वस्यार्थः प्रयोजनं साध्यसंशयनिवृत्तिरूपम् यस्मात् इति व्युत्पत्त्या स्वीयसंशयनिवृत्तिप्रयोजनकमनुमानम् (नील० २ पृ० २०) इति । तच्च ज्ञानात्मकम् (न्या० बि० परि० २ टी० पृ० २१) । व्याप्तिपक्षधर्मतासंवेदनम् (न्या० ली० पृ० ५९) इत्यन्यत्रोक्तम् । [ख] यत्तु स्वयमेव महानसादौ विशिष्टेन प्रत्यक्षेण धूमाग्न्योर्व्याप्तिं गृहीत्वा पर्वते धूमं पश्यन्वह्निमनुमिनोति तत्स्वार्थानुमानम् (त० भा० पृ० ११) । तच्चार्थज्ञानरूपम् न तु परार्थानुमानवच्छब्द-

रूपम् । अत्र भाष्यम् । अनुमानम् द्विविधम् दृष्टं सामान्यतोदृष्टं च । तत्र दृष्टम् प्रसिद्धसाध्ययोरत्यन्तजात्यभेदेनुमानम् । यथा गव्येव सास्नामात्रमुपलभ्य देशान्तरे सास्नामात्रदर्शनाद्गौरिति प्रतिपत्तिर्भवति । प्रसिद्धसाध्ययोरत्यन्तजातिभेदे लिङ्गानुमेयधर्मसामान्यानुवृत्तितोनुमानं सामान्यतोदृष्टम् । यथा कर्षकवणिग्राजपुत्राणां प्रवृत्तेः साफल्यमुपलभ्य वर्णाश्रमिणामपि दृष्टं प्रयोजनमनुद्दिश्य प्रवर्तमानानां फलानुमानमिति । तत्र लिङ्गदर्शनं प्रमाणम् । प्रमितिरग्निज्ञानम् । अथ वाग्निज्ञानमेव प्रमाणम् । प्रमितिरग्नौ गुणदोषमाध्यस्थ्यदर्शनम् । तत्त्वनिश्चितार्थमनुमानम् (प्रशस्त० २ गु० पृ० ४५ ) इति । स्वार्थानुमानस्य प्रयोजनं तु स्वस्यैवानुमितिः ( त० सं० ) । तथा हि कश्चित्पुरुषः स्वयमेव भूयोदर्शनेन यत्र धूमस्तत्राग्निः इति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ संदिहानः पर्वते वर्तिनीमविच्छिन्नमूलामभ्रंलिहां धूमलेखां पश्यन् धूमदर्शनादुद्बुद्धसंस्कारो व्याप्तिं स्मरति यत्र धूमस्तत्राग्निः इति । तदनन्तरं वह्निव्याप्यधूमवानयं पर्वतः इति ज्ञानमुत्पद्यते । अयमेव लिङ्गपरामर्शः इत्युच्यते । तस्मात् पर्वतो वह्निमान् इति स्वस्य ज्ञानमनुमितिरुत्पद्यते । तदेतत्स्वार्थानुमानम् ( त० सं० ) ( त० भा० पृ० ११ )। २ स्वप्रयोजनम् । यथा मनीषिणः स्वार्थमुद्दिश्य प्रयतन्ते इत्यादौ स्वार्थशब्दस्यार्थः । ३ स्वाभिधेयः । यथा स्वार्थकः स्वार्थबोधकृत् इत्यादौ स्वार्थशब्दस्यार्थः ( शब्द० च० )। ४ व्यवहारशास्त्रज्ञास्तु स्वस्वत्वकं धनं स्वार्थम् इत्याहुः ।

**स्वाहा**—१ [ क ] अग्निप्रक्षेपोपहितदेवोद्देश्यकत्यागः । यथा इन्द्राय स्वाहा इत्यादौ स्वाहाशब्दस्यार्थः ( ग० व्यु० का० ४ पृ० १०० ) ( अमरः ३।४।८ ) । वेदादेशितोच्चारणकर्तृत्वोपलक्षितपुरुषीयत्यागः इति फलितोर्थः । तेन तान्त्रिकपूजायामर्घ्याचमनीयादिदाने स्वाहास्वधाशब्दप्रयोग उपपद्यते ( ग० व्यु० का० ४ पृ० १०१ ) । [ ख ] स्वत्वकरणको हविस्त्यागः । यथा इदमग्नये स्वाहा इत्यादौ स्वाहाशब्दस्यार्थः । अत्र देवोद्देश्यकस्य स्वाहापदकरणकस्य हविस्त्यागस्य कर्मेदम्

इत्याकारको बोधः ( श० प्र० श्लो० ९४ टी० पृ० १२६ )। २ पौराणिकास्तु अग्निभार्या ( अमरः २ ब्रह्मवै० २१ )। यथा स्वाहयेव हविर्भुजाम् ( रघु० १।५६ ) इत्यादौ स्वाहां तु दक्षिणे पार्श्वे ( वैश्वदे० ) इत्यादौ च स्वाहाशब्दस्यार्थ इत्याहुः । अत्रोक्तम् प्रकृतेः कलया चैव सर्वशक्तिस्वरूपिणी । बभूव दाहिका शक्तिरग्नेः स्वाहा स्वकामिनी ॥ ग्रीष्ममध्याह्नमार्तण्डप्रभाच्छादनकारिणी । त्वमग्नेर्दाहिका शक्तिर्भव पत्नी च सुन्दरी ॥ ( ब्रह्मवै० प्र० अ० ३७ ) इत्यादि । ३ कर्मज्ञास्तु मातृकाविशेषः । यथा नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ( पितृगाथा ) इत्यादौ स्वाहाशब्दस्यार्थ इत्याहुः । ४ तान्त्रिकास्तु दुर्गाशक्तिविशेषः । यथा दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोस्तु ते ( दुर्गापूजामन्त्रः ) इत्यादौ स्वाहाशब्दस्यार्थ इत्याहुः ।

**स्वित्**—( अव्ययम् ) १ प्रश्नः । २ वितर्कः । यथा तस्मिन् द्रव्यं गुणः कर्म वा इति संदेहः विशेषस्योभयथा दृष्टत्वात् । किं द्रव्यस्य सतो गुणकर्मभ्यो विशेषः आहोस्विद्गुणस्य सतः इति ( वात्स्या० १।१।२३ ) इत्यादौ ग्रन्थे स्विद्शब्दस्यार्थः । ३ पादपूरणार्थम् ।

**स्वीकारः**—ममेदम् इति ज्ञानात्मकः संप्रदानव्यापारः ( वीरमित्रो० दाय० पृ० ५४३)। शिष्टं तु प्रतिग्रहशब्दव्याख्याने ( पृ० ५२२ ) दृश्यम् ।

**स्वेदः**—१ पाकविशेषः ( सेको दाहः ) । २ गात्रादितो जलादेर्निष्यन्दनम् ( घर्मः ) । यथा अयोनिजपार्थिवशरीरेषु यूकालिक्षादीनां शरीरं स्वेदजम् इत्यादौ ग्रन्थे स्वेदशब्दस्यार्थः । स च स्वेदः एकाङ्गसर्वाङ्गगतः स्निग्धो रूक्षस्तथैव च इति द्विविधः । स चाग्निगुणजन्यस्त्रयोदशविधः व्यायामोष्णसदनादिजन्यो दशविधश्च इत्यादि सुश्रुतग्रन्थे सविस्तरं प्रतिपादितम् तत् तत्र दृश्यम् । स्वेदजन्यजन्तूनाह । संस्वेदजविकारांश्च यथा येभ्यो भवन्ति च । मानुषस्वेदमलजा मक्षिकाद्या भवन्ति च ॥ नवमेघप्रसिक्तायां पिपीलिकगदादयः । संस्वेदजास्तु विज्ञेया वृक्षगोपशुजन्तवः ॥ समिद्भ्यो माषमुद्गेभ्यः फलेभ्यश्चैव जन्तवः । जायन्ते क्रमयो विप्राः काष्ठेभ्यो घुणकादयः ॥ तथा शुक्रविकारेभ्यः पूतिकाः प्रभवन्ति

च । संस्वेदजाश्च जायन्ते वृश्चिकाः शुष्कगोमयात् ॥ गोभ्यो हि महिषेभ्यश्च मानुषेभ्यश्च जन्तवः । मत्स्यादिभ्यश्च विविधा अन्तःकुक्षौ विशेषतः ॥ अथान्यानि च सूक्ष्माणि सूक्ष्मयूकास्तथैव च । गोभ्योश्वेभ्यस्तथा चैव अष्टापदकिनीनकाः ॥ मक्षिकाणां विकाराश्च उत्सृष्टोदककर्दमैः । शरावति विकाराश्च करीषेभ्यो भवन्ति हि ॥ एवमादिरसंख्यातो गणः संस्वेदजो मया । सर्वासां निहितो ह्येष प्राक्कर्मवशजः स्मृतः ॥ ( वाचस्पत्ये वह्निपु० ) इति ।

## ह.

**ह**—१ पादपूरणम् । २ संबोधनम् । ३ नियोगः । ४ क्षेपः । ५ निग्रहः । ६ निन्दा । ७ प्रसिद्धिः । ८ शिवः । ९ जलम् । १० शून्यम् । ११ आकाशः । १२ रक्तम् । १३ स्वर्गः । १४ धारणम् । १५ पापहरणम् । १६ चन्द्रः । १७ सकोपवारणम् । १८ शुष्कम् ( मेदि० ) ( शब्दर० ) ( अमरः ) ( एकाक्षरको० ) ।

**हठयोगः**—प्राणायामादिक्रियाभ्यासजन्यः राजयोगं विनैव परमात्मसाक्षात्काररूपश्चित्तवृत्तिनिरोधः । स च तन्त्रप्रसिद्धः । तत्प्रकारस्तु हठदीपिकादावुक्तो द्रष्टव्यः । अत्र विग्रहः हठेन बलात्कारेण योगः चित्तवृत्तिनिरोधः इति ।

**हननम्**—१ स्यात्प्राणवियोगफलव्यापारो हननं स्मृतम् । यथा आततायिनमायान्तं हन्यादेवाविचारयन् ( स्मृतिः ) इत्यादौ हन्धात्वर्थः । वीरमित्रोदये आततायिवधे सिद्धान्तसिद्धनिर्णयस्तु हत्वा तु प्रहरन्तं वै ब्राह्मणं वेदपारगम् । कामतोपि चरेद्वीर द्वादशाब्दाख्यमुत्तमम् ॥ इति शिखावानपि गोविप्रं न हन्याद्वै कदाचन ( भविष्यपु० ) इति च स्मृतेः । आततायिन्यदोषोन्यत्र । अतः गोब्राह्मणं यदा हन्यात्तदा प्रायश्चित्तं कुर्यात् ( संवर्तः ) । नाततायिवधे दोषोन्यत्र गोब्राह्मणात् अतः प्रायश्चित्तं कुर्यात् ( सुमन्तुः ) । अत्र अधिकं तु हिंसाशब्दव्याख्याने वधशब्दव्याख्याने च द्रष्टव्यम् । २ आलंकारिकास्तु गतिः । यथा कुञ्जं

हन्ति कृशोदरि इत्यादौ हन्तेरर्थः इत्याहुः । ३ गुणकास्तु गुणनम् । यथा त्रिभिर्हतम् सप्तभिर्हतम् इत्यादौ हनधात्वर्थः इत्याहुः ।

**हन्त**—( अव्ययम् ) १ हर्षः । २ अनुकम्पा । ३ विषादः । ४ वाक्यारम्भः । ५ आर्तिः । ६ वादः । ७ संभ्रमः । ८ खेदः ( शब्दच० ) ( मेदि० ) । ९ अन्तःकल्पनम् ( अजयपालः ) ( वाच० ) ।

**हरिवासरः**—द्वादश्याः प्रथमः पादो हरिवासरसंज्ञकः ( पु० चि० पृ० २१२ ) ।

**हर्षः**—१ [ क ] चित्तोत्साहः । स च कचित् मिथ्याकारणं भवति । यथा हृष्टो दर्पति दृप्तो धर्ममतिक्रामति धर्मातिक्रमे खलु पुनर्नरकः ( आपस्त० ध० सू० ) इत्यादौ हृषधात्वर्थः । [ ख ] इष्टाधिगमजन्य आनन्दः । [ ग ] अभिप्रेतविषयकप्रार्थनाप्राप्तौ सुखानुभवो हर्षः ( न्या० बा० ) । २ पौराणिकास्तु कन्दर्पपिता इत्याहुः ( वामनपु० अ० ५ ) । ३ आधुनिकास्तु कलियुगीयो राजविशेषः । यथा हर्षचरितम् इत्यादौ हर्षशब्दार्थः इत्याहुः ।

**हवनम्**—[ क ] प्राचीनमते अग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारः । यथा संस्कृतेऽग्नौ घृतं जुहोति इत्यत्र जुहोत्यर्थः ( ग० व्यु० का० २ पृ० ४२ ) । [ ख ] अग्निसंयोगानुकूलक्रियानुकूलघृतादिवृत्तिनोदनादिव्यापारः ( दि० गु० धर्मनि० पृ० २३४ ) । यथा घृतं जुहोति इत्यादौ हुधात्वर्थः । अत्र घृतवृत्त्यग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारानुकूलकृतिमान् इत्यन्वयबोधः ( का० व्या० का० ४ पृ० ५ ) । [ ग ] वह्न्यधिकरणकपतनावच्छिन्नमन्त्रकरणकक्रिया । यथा घृतं जुहोति इत्यादौ हुधातोरर्थः । वह्नौ जुहोति इत्यत्र सप्तम्यन्तस्यार्थो न धात्वर्थनिविष्टे पतनेऽन्वेति । वह्निवृत्तित्वविशिष्टपतने तद्वृत्तित्वस्यान्वये निराकाङ्क्षतापत्तेः । परंतु तदवच्छिन्नक्रियायामेवान्वेति । प्रतिमादौ घृतादिस्नपनं मन्त्रकरणकमपि नाग्न्यधिकरणकम् । वह्नौ घृतस्य प्रक्षेपमात्रमग्न्यधिकरणकतत्पतनानुकूलमपि न मन्त्रकरणकम् । अतस्तदुभयं न होमः । प्राजापत्येपि होमे मानस एव मन्त्रः करणम् इति स होमः । तादृशी क्रिया चात्र

सघृतस्य करादेः प्रसारणन्युब्जीकरणादिरेव । अत एव घृतादेः परित्यागित्वविरहादृत्विजादेर्न यष्टृत्वम् । किंतु होतृत्वमेव इति विज्ञेयम् । अत्र धात्वर्थघटकपतने घृतस्याधेयत्वेनान्वयः । तथा च अग्न्यधिकरणकस्य घृतवृत्तिपतनस्यानुकूलमन्त्रकरणकक्रियावान् इत्येवं तत्र बोधो भवति इति विज्ञेयम् ( श० प्र० श्लो० ७३ टी० पृ० ९५ )। [ घ ] वह्निसंयोगावच्छिन्नपतनानुकूलमन्त्रकरणकक्रिया । यथा घृतं जुहोति इत्यत्र हुधात्वर्थः । अत्र वह्निसंयोगजनकं यद्घृतस्य पतनम् तदनुकूलमन्त्रकरणकक्रियाविशेषवान् इत्याकारको बोधः ( श० प्र० श्लो० ७३ टी० पृ० ९५ )। [ ङ ] वैध आधारे हविषः प्रक्षेपः इति शाब्दिका वदन्ति । [ च ] देवतोद्देश्यकोऽग्नौ मन्त्रपूर्वकं हविःप्रक्षेपः । यथा ऋत्विजो जुह्वति इत्यादावपि ऋत्विजां होतृत्वम् । अत्र प्रक्षेपश्च अग्निसंयोगानुकूलक्रियानुकूलघृतादिवृत्तिनोदनादिव्यापारः (का० व्या० का० ४ पृ० ५)। [ छ ] नवीनमते तु विशिष्टदेशावच्छिन्नप्रक्षेपोपहितत्यागो हवनम् ( दायभाग० ) ( का० व्या० का० ४ पृ० ५ ) इति ज्ञेयम् ।

**हविष्ट्वम्**—त्यागकर्मत्वम् । यथा मन्त्रकरणकहविस्त्यागः इत्यादौ ग्रन्थे हविःशब्दस्यार्थः ( त० प्र० ख० ४ पृ० १२३ ) । हविर्द्रव्यं तु आज्यपशुपुरोडाशादि यथाविधि विज्ञेयम् ।

**हानम्**—१ [ क ] निवृत्तिप्रयोजकमनिष्टसाधनताज्ञानम् । स्वानिष्टसाधनताप्रकारकं ज्ञानम् इत्यर्थः ( प० च० )। [ ख ] दुःखसाधनत्वज्ञानम् । यथा सर्पो मे दुःखसाधनम् इति ज्ञानम् ( सि० च० १ पृ० २१ )। २ केचित्तु ज्ञानम् । तच्च क्वचित् तत्त्वज्ञानम् इत्याहुः ( न्या० वा० पृ० ४ )। ३ काव्यज्ञास्तु परित्यागः ( इच्छाविशेषः )। यथा हिमहामकृता न कृता क्वचन ( भट्टिः १०।५ ) इत्यादौ हानशब्दार्थ इत्याहुः ।

**हासः**—१ [ क ] प्रीत्या मुखकमलादेर्विकासः । यथा हसति इत्यादौ हस्धात्वर्थः । [ ख ] कण्ठौष्ठपुटविस्फूर्जनपुरःसरं अहहह इत्यट्टहासः ( सर्व० सं० पृ० १६९ नकु० ) इति पाशुपता आहुः । [ ग ] दोषदर्शनपूर्वको हासः । यथा ततो जहासातिरुषा भीमं भैरवनादिनी ( सप्तश० ७।१९ )

इत्यादौ । २ आलंकारिकास्तु हास्यस्थायिभावको रसविशेष इत्याहुः । तदुक्तम् विकृताकारवाग्वेषचेष्टादेः कुहकाद्भवेत् । हासो हास्यस्थायिभावः श्वेतः प्रमथदैवतः ॥ ( सा० द० परि० ३ श्लो० २१४ इति ।

**हि**—( अव्ययम् ) १ हेतुः । २ अवधारणम् । ३ विशेषः । ४ प्रश्नः । ५ संभ्रमः । ६ हेतूपदेशः । ७ असूया । ८ पादपूरणम् । ९ शोकः । १० वर्धनम् । ११ गतिः ।

**हिंसा**—१ [ क ] नवीनमते अनुनिष्पादितमरणफलकव्यापारः ( चि० ४ ) । स च कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तॄणामिन्द्रियाणां वधः । तदर्थस्तु कार्यं सुखदुःखसंवेदनम् । तस्यायतनमधिष्ठानमाश्रयः शरीरम् इति । वधोत्र उपघातः पीडा वैकल्यलक्षणः प्रबन्धोच्छेदो वा प्रमापणलक्षणो वा ( वात्स्या० ३।१।६ ) । प्राचीनमते तु हिंसा [ ख ] साक्षान्मरणानुकूलव्यापारः ( दि० गु० पृ० २२९ ) । [ ग ] दृष्टमरणोद्देशेनानुष्ठीयमानत्वे सति अदृष्टाद्वारकमरणानुकूलव्यापारः ( म० प्र० ४ पृ० ६१ ) । यथा मा हिंस्यात्सर्वा भूतानि इत्यादौ न हिंस्यात्सर्वाणि भूतानि इत्यादौ च हिंसा । यथा वा अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः ( श्रुतिः ) इत्यादौ च हिंसाशब्दस्यार्थः । अत्र दृष्टमरणेत्यनेन विशेषणेन कूपादौ गवि विनष्टे सति तत्कूपकर्तुर्गोवधकर्तृत्वप्रसङ्गः निवारित इति बोध्यम् । अदृष्टाद्वारकेत्यनेन विशेषणेन गङ्गामरणमुद्दिश्य कृतत्रिसंध्यस्तवपाठादेर्हिंसात्वं निवारितम् । अत एव श्येनेनाभिचरन् यजेत इत्यत्र श्येनस्य न हिंसारूपत्वम् । श्येनेनादृष्टद्वारैव शत्रुमरणजननात् ( म० प्र० ४ पृ० ६१ ) । तथा हि श्येनो हि वधसाधनम् । न तु नरकसाधनम् । श्येनाच्च वधो वधाच्च नरकः इत्येतस्मादेव हेतुमात्रादास्तिकानां न श्येनादौ प्रवृत्तिः ( न्या० म० ४ पृ० २७ ) इति । प्राचीनमते श्येनो न स्वरूपतो निषिद्धः । किंतु फलतो निषिद्धः । नव्यनैयायिकानां मते तु श्येनः स्वरूपत एव निषिद्धः । अतस्तत्र हिंसात्वमस्त्येवेति ज्ञेयम् ( न्या० म० ४ पृ० २७ ) । अत्र श्येन इति कर्मनामधेयम् । यथा वै श्येनो निपात्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं

निपात्यादत्ते ( श्रुतिः ) इत्यर्थवादे श्येनसाम्येन प्रकृतयागस्तवनात् । अभिचरन् शत्रुवधं कामयमानः । तथा च श्येननामको यागः शत्रुवधरूपेष्टसाधनत्वे सति कृतिसाध्यः इत्यन्वयबोधः ( म० प्र० ख० ४ पृ० ६१ ) । अत्रत्यविषयस्तु अभिचारशब्दव्याख्यानावसरे संपादितो दृश्यः । हिंसा च द्रोहेण जन्यते ( गौ० वृ० ४।१।३ ) । अत्रेदमधिकं विज्ञेयम् । भोक्तानुमन्ता संस्कर्ता क्रयिविक्रयिहिंसकाः । उपहर्ता घातयिता हिंसकाश्चाष्टधा मताः ॥ ( काशीख० ) ( मनु० ५।५१ ) इति । तस्माद्यज्ञे वधोऽवधः ( मनु० अ० ५ श्लो० ३९ ) इति या वेदविहिता हिंसा नियतास्मिंश्चराचरे । अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ ॥ ( मनु० अ० ५ श्लो० ४४ ) इति च मनुनोक्तत्वाद्यागीया हिंसा अहिंसैव । अत्रायं भावः । वैधपशुहिंसा राजसत्वेन न ब्राह्मणविषया । अपि तु काम्यविषयकत्वेन क्षत्रियादिविषयैव । तत्रापि तस्या नरकसाधनत्वमस्त्येव । घृतपिष्टादिरूपपशूनां तु न काम्यविषयत्वम् । अपि तु मोक्षफलकतत्त्वज्ञानसाधनयागाङ्गत्वमेव । तथा च मनुः कुर्याद्घृतपशुं संगे कुर्यात्पिष्टपशुं तथा । न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कदाचन ॥ ( मनु० अ० ५ श्लो० ३७ ) इति । अत्र संगे इत्यस्य सम् सम्यक् गम् गतिः इति व्युत्पत्त्या सम्यग्ज्ञानम् इत्यर्थः । तत्त्वज्ञानम् इति यावत् । संगे इत्यस्य आसक्तौ पशुबलिप्रसक्तौ स्मार्तकर्मणि वा इत्यादिकं तु कुल्लूकभट्टराघवानन्दादीनामपव्याख्यानमेव । ननु पश्विष्ट्यादौ हिंसाया वैधत्वेन मनुवचनादहिंसात्वमेवेति न तद्धिंसाया नरकप्रयोजकत्वम् इति चेन्न । मा हिंस्यात्सर्वा भूतानि इति शास्त्रेण तद्धिंसाया अपि निषेधात् । न च मा हिंस्यात्सर्वा भूतानि इति सामान्यशास्त्रं विशेषशास्त्रेण अग्नीषोमीयं पशुमालभेत इत्यनेन बाध्यते इति वाच्यम् । विरोधाभावात् । विरोधे हि बलीयसा दुर्बलं बाध्यते । न चास्ति विरोधः । भिन्नविषयत्वात् । तथा हि मा हिंस्यात् इति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न पुनरक्रत्वर्थत्वमपि । अग्नीषोमीयं पशुमालभेत इत्यनेन तु पशुहिंसायाः क्रत्वर्थत्वमुच्यते । न त्वनर्थ-

---

[1] वधः अवधः इति पदच्छेदः ।

हेतुत्वाभावः । तथा सति वाक्यभेदप्रसङ्गात् । न च अनर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिदस्ति विरोधः । तस्मात् समाने विषये एव बाध्यबाधकभावः इति नियमात्प्रकृते भिन्नविषयत्वाद्बाध्यबाधकभावासंभवात् निषिद्धत्वाच्च पशुहिंसायाः श्येनवदनर्थप्रापकत्वमेव इत्यलं विस्तरेण (वाच० )। २ द्रोहः इति परे मन्यन्ते ( गौ० वृ० ४।१।३ ) । ३ चौर्य वृत्तिनाश इत्यादिकर्म इति काव्यज्ञा आहुः ( अमरः ३।३।२२८ ) ।

**हितम्**—१ इष्टसाधनम् । यथा यजनं विप्राय हितम् इत्यादौ हितशब्दस्यार्थः । अत्र संबन्धश्चतुर्थ्यर्थः । विप्रसंबन्धि हितम् इति बोधः । एवम् सुखयोगेपि विप्राय सुखम् इत्यादौ शाब्दबोधो विज्ञेयः ( ल० म० सुबर्थ० कार० ४ पृ० १०४–१०५ ) । २ गतम् । ३ मङ्गलं च इति काव्यज्ञा आहुः ।

**हिन्दुः**—[ क ] जातिविशेषः । अत्र व्युत्पत्तिः हीनं दूषयति ( दुष् डु पृषो० ) इति । अत्रोक्तम् पश्चिमाम्नायमन्त्रास्तु प्रोक्ताः पारस्यभाषया । अष्टोत्तरशताशीतिर्येषां संसाधनात्कलौ ॥ पञ्च खानाः सप्त मीरा नव शाहा महाबलाः । हिन्दुधर्मप्रलोप्तारो जायन्ते चक्रवर्तिनः ॥ हीनं च दूषयत्येव हिन्दुरित्युच्यते प्रिये । पूर्वाम्नाये नव शतं षडशीतिः प्रकीर्तिताः ॥ फिरिङ्गभाषया मन्त्रास्तेषां संसाधनात्कलौ । अधिपा मण्डलानां च संग्रामेष्वपराजिताः ॥ इंरेजा नवषट् पञ्च लण्ड्जाश्चापि भाविनः ( मेरुतन्त्रे० प्र० २३ ) इति । इदं मेरुतन्त्रमप्रमाणम् इति वाचस्पत्ये तारानाथतर्कवाचस्पतिराह । [ ख ] अर्वाचीनास्तु भरतखण्डस्थजनानां हिन्दु इति संज्ञा । यथा भरतखण्डस्य हिन्दुस्थानम् इति नाम इत्यादौ कल्पितवाक्ये हिन्दुशब्दस्यार्थ इति प्रलपन्ति । अत्रार्थे तुष्यतु दुर्जन इति न्यायेन व्युत्पत्तिः । सिन्धुशब्दः अपभ्रंशात् सकारस्थाने हकारोच्चारणात् हिन्दुः इति । तथा च वेदप्रतिपाद्यधर्मस्य सिन्धुनदीपर्यन्तत्वात् तद्धर्मवन्तोपि सिन्धुनामानः इति विज्ञेयम् । अत एव अर्वाचीनाः सिन्धुपरिसरं भरतखण्डं हिन्दुस्थानम् इति व्यवहरन्ति । यथा दश दस इति स्थाने दाहा इति सार सारु इति स्थाने हारु इति च ।

**हिमम्**—१ ( जलम् ) कारणविशेषेण घनीभूतं जलम् । यथा गङ्गा हिमवतो जज्ञे सर्वलोकैकपावनी ( देवीपु० अ० २ ) इत्यादौ हिमशब्दस्यार्थः । एवम् करकापि ज्ञेया । तत्प्रपञ्चस्तु आपः इति शब्दव्याख्याने ( पृ० १२४ ) दृश्यः । २ शीतस्पर्शवत् ( अमरः १।३।१९ ) । यथा हिमांशुश्चन्द्रः इत्यादौ हिमशब्दस्यार्थः । ३ ऋतुविशेषः । ४ चणिका ( वाचस्पत्ये राजनि० ) ।

**हीनवादी**—पूर्वपादं परित्यज्य योन्यमालम्बते पुनः । पदसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥ ( मिताक्षरा अ० २ श्लो० ९ ) ।

**हु**—( धातुः ) देवताद्रव्यसंबन्धविशिष्टद्रव्यप्रतियोगिकसंयोगरूपो व्यापारो जुहोत्यर्थः ( जै० सू० वृ० अ० ४ पा० २ सू० २८ ) ।

**हुडुकारः**—जिह्वाताल्वुसंयोगान्निष्पाद्यमानः पुण्यो वृषनादसदृशो नादः ( सर्व० सं० पृ० १६९ नकु० ) ।

**हे**—( अव्य० ह्वाडे ) १ संबोधनम् । २ आह्वानम् । ३ असूया ( मेदि० ) । एवम् है हो इत्यादयः शब्दा व्याख्येयाः ( वाच० ) ।

**हेतुः**—१ ज्ञापकः । यथा पर्वते धूमेन वह्निसाधने पर्वतो वह्निमान् धूमात् इत्यादौ धूमः । अयमेव लिङ्गशब्देन अनुमानशब्देनापि च व्यवह्रियत इति बोध्यम् । अत्र सूत्रम् हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् ( वैशे० सू० ९।२।४ ) । अत्र ज्ञापकज्ञानविषयत्वरूपं प्रयोजकत्वमेव हेतुत्वं ज्ञानज्ञाप्यत्वरूपं हेतुमत्त्वं वा तृतीयार्थः ( ग० व्यु० का० ३ पृ० ८७ ) । केचित्तु परामर्शीयप्रकारत्वं हेतुत्वम् इत्यङ्गीचक्रुः । स चायं हेतुर्द्विविधः सद्धेतुः असद्धेतुश्चेति । तत्राद्यः पर्वतादिपक्षकवह्न्यादिसाध्यकस्थले धूमादिः । द्वितीयो हेत्वाभासः दुष्टहेतुः । अत्रेदं विज्ञेयम् । पक्षसत्त्व सपक्षसत्त्व विपक्षासत्त्व अबाधितविषयत्व असत्प्रतिपक्षितत्व एतत्पञ्चरूपोपपन्न एव हेतुः सद्धेतुर्भवति । कश्चित् चतूरूपोपपन्नोपि हेतुः सद्धेतुर्भवति । यथा इदं वाच्यं ज्ञेयत्वात् इत्यादौ ज्ञेयत्वं सद्धेतुः । कश्चित् त्रिरूपोपपन्नोपि हेतुः सद्धेतुर्भवति । यथा सर्वं प्रमेयमभिधेयत्वात् इत्यादौ अभिधेयत्वं सद्धेतुर्भवति ( ल० व० २ पृ० २७ ) इति । २ [ क ] कारणम् ( उत्पादकम् ) । यथा मृत् घटस्य हेतुः इत्यादौ मृत्

उत्पादिका। अत्रेदं ज्ञेयम् हेतुत्वात्मिका संगतिरपि कारणत्वरूपा उपजीव्यत्वरूपा वा भवति नातिरिक्ता ( भवा० ) ( जागदी० ) इति। [ ख ] कारकम्। यथा यज्ञमनु प्रावर्षत् इत्यादौ अनुशब्दस्यार्थः। ३ स्वतन्त्रं प्रेरयन् ( ल० म० )। ४ शाब्दिकास्तु फलसाधनयोग्यः पदार्थः। यथा धनेन कुशलम् विद्यया यशः इत्यादौ तृतीयार्थो हेतुः इत्याहुः ( व्या० वृत्ति० )। अत्र हेतौ ( पाणि० २।३।२३ ) इत्यनेन सूत्रेणानुशिष्यते तृतीया। ५ फलम्। यथा अध्ययनेन वसति इत्यादौ तृतीयार्थः फलम् अध्ययनम्। ६ आलंकारिकास्तु अर्थालंकारविशेष इत्याहुः। ७ ( न्यायावयवः ) [ क ] पञ्चम्यन्तं तृतीयान्तं वा लिङ्गप्रतिपादकं वचनम्। यथा पर्वते धूमेन वह्निसाधने धूमवत्त्वात् इति वाक्यम् ( तर्कभा० ) ( तर्कदी० )। अत्रेदं बोध्यम्। पञ्चावयवप्रयोगे कर्तव्ये पर्वतो वह्निमानिति साध्यनिर्देशानन्तरं कुतः इत्याकाङ्क्षायां साधनताव्यञ्जकविभक्तिमल्लिङ्गवचनमेवोचितम्। अन्यथानाकाङ्क्षाभिधाने निग्रहापत्तेः। लोके तथैवाकाङ्क्षानिवृत्तिरिति व्युत्पत्तेः। अतः प्रतिज्ञानन्तरं हेतूपन्यासः ( चि० २ पृ० ७८ )। लिङ्गज्ञानं हेतुप्रयोजनम् ( त० दी० २ पृ० २२ )। हेतुत्वं च अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकसाध्याविषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वम्। हेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वं वा। उदाहरणप्रयोजकजिज्ञासाजनकशाब्दज्ञानजनकन्यायावयवत्वं वा। अत्रायं भावः। कचिज्जिज्ञासानुत्पादेपि तद्योग्यतासत्त्वान्नाव्याप्तिः। अनुक्तोदाहरणस्थलेपि तादृशयोग्यतासत्त्वात् न्यायावयव इति पदम् ( दीधि० २ अवय० पृ० १७४ )। साध्याविषयकज्ञानजनकहेतुपञ्चम्यन्तानुमितिपरशब्दत्वं वा। अत्र अयं न दण्डात् दण्डसंयोगाजन्यद्रव्यत्वात् इत्यादौ प्रतिज्ञानिगमनयोर्वारणाय साध्याविषय इत्यादि। उपनयविशेषवारणाय हेतुपञ्चम्यन्त इति पदम् ( दीधि० २ अवय० पृ० १७४ )। यद्वा प्रतिज्ञावाक्यधीजन्यकारणाकाङ्क्षानिवर्तकज्ञानजनकहेतुविभक्तिमद्वाक्यत्वम् पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वं वा। तदर्थश्च प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितप्रकृतसाध्यान्वितस्वार्थबोधकपञ्चम्यन्तलाक्षणिकपदवदवयव-

त्वम् ( दीधि० २ अवय० पृ० १७६ ) इति । अन्ये तु अनुमितिहेतुज्ञानकरणधूमवत्त्वात् इति शब्दजन्यज्ञानवृत्तिप्रतिज्ञादिजन्यज्ञानावृत्तिजातियोगिज्ञानजनकवाक्यत्वम् इत्याहुः ( चि० अव० २ पृ० ७८–७९ )। तथान्यत्रान्यदप्युक्तम् । प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितार्थान्वितस्वार्थबोधकन्यायावयवत्वम् । अत्र निगमनवारणाय उपस्थापित इत्यन्तं दत्तम् ( दीधि० २ अवय० पृ० १७७ ) । स्वार्थविशिष्टवैशिष्ट्यबोधजनकन्यायावयवत्वं वा । तथा हि एकवाक्यतया हेत्वर्थविशिष्टसाध्यस्य वैशिष्ट्यं भासते न पुनरवयवान्तरार्थविशिष्टस्य कस्यचित् ( दीधि० २ अवय० पृ० १७७ ) इति । विशिष्टवैशिष्ट्यबोधजनकस्वार्थोपस्थितिजनकन्यायावयवत्वं वा । विशिष्टबोधजनकस्वार्थविशिष्टबोधजनकन्यायावयवत्वं वा ( दीधि० २ अवय० पृ० १७७ ) । प्रकृतपक्षतावच्छेदकावच्छिन्नान्वितस्वार्थबोधजनकहेतुविभक्तिघटितत्वे सति प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयिताबहिर्भूतविषयिताशून्यबोधजनकवाक्यत्वं वा । अत्र विषयितायां तादृशविषयिताबहिर्भूतत्वं च तादृशविषयिताशालिनिश्चयत्वसमनियतप्रतिबन्धकतानवच्छेदकत्वम् ( ग० अव० प्रतिज्ञाग्र० पृ० ४२ ) ( हेतुग्रन्थे० पृ० ५० ) । तद्यथा एतद्धूमात् इति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम् ( न्या० म० २ पृ० २३ ) । अत्र एष चासौ धूमात् इति शब्दश्च इति विग्रहः । एतत् अयं शब्दो वह्निधूमन्यायघटकपरः । एवमुदाहरणादिलक्षणेपीयमेव रीतिर्बोध्या ( म० प्र० २ पृ० ३३ ) । [ ख ] साध्यसाधनम् ( गौ० १।१।३४ ) । साध्यतावच्छेदकावच्छिन्नसाध्यान्वितज्ञापकत्वबोधकः साध्यान्वितस्वार्थबोधको वावयवः इति फलितार्थः ( गौ० वृ० १।१।३४ )। [ ग ] प्राचीनास्तु पञ्चम्यन्तलाक्षणिकपदवन्न्यायप्रविष्टवाक्यं हेत्ववयवः इत्याहुः ( म० प्र० २ पृ० ३३ ) । सोयं हेतुर्द्विविधः अन्वयिहेतुः व्यतिरेकिहेतुश्चेति । उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः । तथा वैधर्म्यात् ( गौ० १।१।३४–३५ ) इति सूत्रद्वयमत्रानुसंधेयम् । परे तु तृतीयोन्वयव्यतिरेकी इत्यपि वदन्ति ( गौ० वृ० १।१।३४ ) ।

**हेतुमत्**—कार्यम् । यथा हेतुहेतुमतोः इत्यादौ हेतुमत् इति शब्दस्यार्थः ।

**हेतुसमः**—( जातिः ) हेतोर्वैकल्यसाध्यार्थं पूर्वापरसहोदयम् । त्रेधापि तस्य हेतुत्वभङ्गो हेतुसमो भवेत् ॥ ( ता० र० २ श्लो० ११८ ) । एतत्कारिकाव्याख्यानं तु अहेतुसमशब्दव्याख्यानरीत्या दृश्यम् ।

**हेत्वन्तरम्**—( निग्रहस्थानम् ) [ क ] अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ( गौ० ५।२।६ ) । सूत्रार्थश्चेत्थम् । अत्र हेतौ इत्यनेन हेत्ववयवांशो न विवक्षितः । अपि तु साधकांशः । स च हेत्ववयवस्थ उदाहरणादिस्थो वा । अविशेषोक्ते इति पूर्वोक्त इत्यर्थः । विशेषमिच्छतः इति साभिप्रायम् । तेन परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ विशेषणान्तरप्रक्षेपोन्यहेतुकरणं वा द्वयमपि हेत्वन्तरम् ( गौ० वृ० ५।२।६ ) इति । अत्र भाष्यम् । निदर्शनम् एकप्रकृतीदं व्यक्तमिति प्रतिज्ञा । कस्माद्धेतोः । एकप्रकृतीनां विकाराणां परिमाणात् । मृत्पूर्वकाणां शरावादीनां दृष्टं परिमाणम् । यावान्प्रकृतेर्व्यूहो भवति तावान्विकार इति । दृष्टं च प्रतिविकारं परिमाणम् । अस्ति चेदं परिमाणं प्रतिव्यक्तम् । तदेकप्रकृतीनां विकाराणां परिमाणात्पश्यामो व्यक्तमिदमेकप्रकृति इति । अस्य व्यभिचारेण प्रत्यवस्थानम् नानाप्रकृतीनामेकप्रकृतीनां च विकाराणां दृष्टं परिमाणमिति । एवं प्रत्यवस्थिते आह । एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनात् सुखदुःखमोहसमन्वितं हीदं व्यक्तं परिमितं गृह्यते । तत्र प्रकृत्यन्तररूपसमन्वयाभावे सत्येकप्रकृतित्वमिति । तदिदमविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं ब्रुवतो हेत्वन्तरं भवति । सति च हेत्वन्तरभावे पूर्वस्य हेतोरसाधकत्वान्निग्रहस्थानम् । हेत्वन्तरवचने सति यदि हेत्वर्थनिदर्शनो दृष्टान्त उपादीयते नेदं व्यक्तमेकप्रकृति भवति । प्रकृत्यन्तरोपादानात् । अथ नोपादीयते । दृष्टान्ते हेत्वर्थस्यानिदर्शितस्य साधकभावानुपपत्तेरानर्थक्याद्धेतोरनिवृत्तं निग्रहस्थानमिति ( वात्स्या० ५।२।६ ) । [ ख ] परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्टवचनम् । [ ग ] प्राञ्चस्तु हेतौ विशेषणदान एव हेत्वन्तरम् इत्याहुः । यथा शब्दः अनित्यो बाह्येन्द्रियप्रत्यक्षत्वात् इत्युक्ते सामान्येनैकान्तिकत्वेन च प्रत्युक्ते सामान्यवत्त्वे सति इति विशेषणम् । एवं विशिष्टहेतुमुक्त्वा

यद्बाह्येन्द्रियप्रत्यक्षं तदनित्यम् इत्युदाहरणे न्यूनत्वेन विशिष्टोक्तौ । एवमुपनयविशेषणेपि (गौ० वृ० ५।२।६) (दि० १) । [घ] परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुकोटौ विशेषणान्तरोपादानम् (नील० पृ० ४५) ।

**हेत्वप्रसिद्धिः**—साधनाप्रसिद्धिः ।

**हेत्वसिद्धिः**—(व्याप्यत्वासिद्धिः) साधनाप्रसिद्धिः । अपरे तु व्यर्थविशेषणघटितं हेतुतावच्छेदकमेव हेत्वसिद्धिः इत्याहुः ।

**हेत्वाभासः**—१ (हेतोर्दोषः) [क] यस्य हि ज्ञानमनुमितिप्रतिबन्धकम् सः (चि० २ बाध० पृ० ११६) । अत्र हेतोः हेतौ वा आभासः इति व्युत्पत्त्या हेत्वाभासपदस्य हेतुदोषः इत्यर्थः । हेत्वाभासत्वं च अनुमितिकारणीभूताभावप्रतियोगि( अनुमितिप्रतिबन्धक )यथार्थज्ञानविषयत्वम् । अनुमितिप्रतिबन्धकीभूतयथार्थज्ञानविषयत्वम् इति समुदितार्थः (त० दी० २) । यद्विषयकत्वेन (लिङ्ग)ज्ञानस्य अनुमितिविरोधित्वं तत्त्वमिति वा । अत्रेदमधिकं विज्ञेयम् । गदाधर्यां द्वितीयहेत्वाभासलक्षणे ह्रदो वह्निमान् धूमात् इत्यादौ प्रमेयत्वविशिष्टबाधस्य (प्रमेयत्वविशिष्टवह्न्यभाववद्ध्रदस्य) दोषत्वानङ्गीकारादलक्ष्यतया तत्रातिव्याप्तिवारणाय लक्षणघटकयत्पदार्थे विशिष्टान्तराघटितत्वविशेषणम् । तत्रैव वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदादावतिव्याप्तिवारणाय यत्पदार्थे विशिष्टद्वयाघटितत्वविशेषणं च दत्तम् । तत्रैव जातित्वेन ह्रदत्वावगाहिजातिमान्वह्न्यभाववान् इत्यप्रतिबन्धकज्ञानमादायासंभववारणाय लक्षणघटकज्ञानपदार्थे अव्यापकविषयिताशून्यत्वविशेषणमपि दत्तं गदाधरभट्टाचार्यैः इति । इदं च बोध्यम् । अत्रानुमितिपदमजहत्स्वार्थलक्षणया अनुमितितत्करणान्यतरपरम् । साध्यव्याप्यहेतुमान् पक्षः साध्यवान् इत्याकारानुमितिपरं वा । तेन एकत्र हेतौ व्यभिचारादिग्रहेप्यन्यस्य परामर्शादनुमित्यनुत्पादेन व्यभिचारात् व्याप्त्यादिज्ञानेनान्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेपि न क्षतिः (व्यभिचारादौ नाव्याप्तिः) (दीधि० २ हेत्वा० पृ० १७८) । अथ वा ज्ञायमानं सद्यदनुमितिप्रतिबन्धकम् तत्त्वम् (चि० २ सामा० पृ० ८३) (मु० २) । अत्र वदन्ति । यद्विषयकनिश्चयस्य विरोधिविषयिता-

प्रयुक्तस्तदुत्तरमनुमितावनाहार्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकः (अभावः) तत्त्वम् इति । इदं च सिद्धान्तसिद्धं हेतुदोषलक्षणम् इति मन्यन्ते नैयायिकाः । तथा च लक्षणसमन्वयः । ह्रदो वह्निमान् धूमात् इत्यादौ वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकनिश्चयानन्तरम् ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्च इत्याकारकानुमितेः कदाचिदप्यनुदयेन घटाद्यनुमितय एव तादृशनिश्चयाव्यवहितोत्तरानुमितिसामान्यान्तर्गता भवन्ति । तासु च ह्रदत्वादिविशिष्टे यद्वह्नित्वाद्यवच्छिन्नवह्निवैशिष्ट्यावगाहित्वम् वह्नित्वाद्यवच्छिन्नवह्निव्याप्तिविशिष्टधूमत्वाद्यवच्छिन्नवैशिष्ट्यावगाहित्वं च तदुभयाभाववत्त्वमक्षतमेव इति । तत्र तादृशोभयाभावे तादृशनिश्चयीयविरोधिविषयिता(वह्न्यभाववद्ध्रदादिविषयिता)-प्रयुक्तत्वमप्यक्षतम् । स्वनिष्ठप्रतिबन्धकतावच्छेदकधर्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छेदकधर्माभावं प्रति प्रयोजकत्वम् इति नियमात् (ग० २ हेत्वा० सामा० पृ० २०) । केचित्तु यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः संभवन्ति तावदन्यान्यत्वम् इति प्राहुः (दीधि० २ सामा० पृ० १८०) (म० प्र० २ पृ० २५) (मु० २) । तत्तद्विषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वम् इत्यर्थः (ग० २ हेत्वा० सामा० पृ० २१) । [ख] अनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयो धर्मः (हेत्वाभासत्वोपाधिः) (त० कौ० २) (म० प्र० २ पृ० २५) । यथा ह्रदो वह्निमान् धूमात् इत्यादौ वह्न्यभाववद्ध्रदादिरूपो दोषो बाधः हेत्वाभासः । अत्र तद्वत्ताबुद्धौ तदभाववत्तानिश्चयः प्रतिबन्धकः इति नियमात् वह्न्यभावविशिष्टस्य ह्रदस्य निश्चयः वह्न्यभाववान् ह्रदः इत्याकारकः ह्रदो वह्निमान् इत्यनुमितौ प्रतिबन्धको भवति सः वह्न्यभावविशिष्टो ह्रदः दोषः इति विज्ञेयम् । अन्यतरेत्युक्त्या व्यभिचारविरोधसाधनाप्रसिद्धिस्वरूपासिद्धिष्वनुमित्यप्रतिबन्धकत्वेपि तत्करणव्याप्तिपक्षधर्मताज्ञानप्रतिबन्धकत्वसत्त्वान्नाव्याप्तिः (म० प्र० २ पृ० २५) (ग० २ हेत्वा० सामा०

ल० १ पृ० ३ ) । तत्र गौतमवृत्तिकारादीनां नैयायिकानां नये स हेत्वाभासः पञ्चविधः व्यभिचारः विरोधः सत्प्रतिपक्षः असिद्धिः बाधश्चेति । अत्र नैयायिकसिद्धान्तस्तु बाधसत्प्रतिपक्षभिन्ना ये हेत्वाभासास्तद्व्याप्या अपि तत्रैवान्तर्भवन्ति । बाधव्याप्यस्यापि तु सत्प्रतिपक्षस्य स्वतन्त्रेच्छेन मुनिना गौतमेन पृथगुपदेशान्न बाधेन्तर्भावः । सत्प्रतिपक्षव्याप्यस्तु नानुमितिप्रतिबन्धकः । तद्वत्ताज्ञाने तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वेपि तदभावव्याप्यव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वे मानाभावान्न हेत्वाभासलक्षणाक्रान्तत्वं तस्येति पञ्चैव हेत्वाभासाः ( म० प्र० २ पृ० २८ ) इति । अत्रायं भावः । सव्यभिचारत्वादयो ये दोषाः तद्व्याप्या अपि त एव भवन्ति । तथा च सव्यभिचारत्वव्याप्यं सव्यभिचारत्वमेव विरुद्धत्वव्याप्यं विरुद्धत्वमेव इत्याद्यूह्यम् । परं तु बाधव्याप्यो भिन्न एव । स च सत्प्रतिपक्षो भवति । सत्प्रतिपक्षव्याप्यस्तु न सत्प्रतिपक्षः । तस्यानुमितिविरोधित्वाभावेन हेत्वाभाससामान्यलक्षणानाक्रान्तत्वात् इति । अन्यत्र चैवमुक्तम् । यत्र धर्मिणि यो धर्मो यादृशो हेत्वाभासस्तत्र तद्व्याप्यधर्मोपि स एव हेत्वाभासो भवति विना सत्प्रतिपक्षम् । बाधव्याप्यस्तु सत्प्रतिपक्षनामा हेत्वाभासो भिन्न एव । महर्षिणा गौतमेन पृथगुपदेशात् अविरोधाच्च ( दीधि० २ हेत्वा० पृ० २०४ ) ( मुक्ता० २ पृ० १६७ ) इति । कणादप्रशस्तपादादीनां वैशेषिकाणां नये हेत्वाभासस्त्रिविधः असिद्धिः विरोधः संदिग्धत्वं चेति । संदिग्धत्वमनैकान्तिकत्वम् । अत्रेदं तात्पर्यम् । बाधसत्प्रतिपक्षौ तु काश्यपीये ( काणादे ) मते न स्वतन्त्रौ । तत्र बाधः आश्रयासिद्ध्यादौ अनैकान्तिके वा पर्यवस्यति । अत्रेदमाकूतम् । पक्षस्य साध्यशून्यत्वे हि बाधत्वमाहुः । तच्च साध्यशून्यत्वमत्र नातिरिच्यते । यत्र हि अश्वपिण्डं पक्षयित्वा अयं गौर्विषाणित्वात् इति साध्यते तत्र साध्यस्य गोत्वस्य पक्षे वृत्तिर्नास्तीति बाधत्वं वाच्यम् । तच्च कणादमतेनैकान्तिकत्वमेव । अत्रासिद्धिरप्यस्ति । पक्षेश्वपिण्डे विषाणित्वविरहात् । अत एवाहुः बाधोयमपक्षधर्मो हेतुरनैकान्तिको वा ( त० व० ३।२ श्लो० ५२—५३ पृ० ८३ ) ( वै० उ० ३।१।१७ पृ० १६१ ) इति । सत्प्रतिपक्षोप्यन्यतरत्र व्याप्त्यादि-

संशयमापादयन्ननैकान्तिकादावेव पर्यवस्यति ( वै० उ० ३।१।१७ पृ० १६०–१६१ ) इति । अत्रायमाशयः । यत्र वायुर्न प्रत्यक्षः नीरूपबहिर्द्रव्यत्वाद्गगनवत् इति साधिते वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् घटवत् इति प्रत्यवतिष्ठते । तत्र हि सत्प्रतिपक्ष इत्युच्यते नैयायिकैः । न चात्र द्वयोर्यथार्थत्वं संभवति । न ह्येकमेव वस्तु प्रत्यक्षमप्रत्यक्षं च भवितुमर्हति इति सुतरामेवान्यतरस्य भ्रान्तत्वमुपेयम् । तथा च अस्यापि व्याप्त्यादिसंशयाधायकतयानैकान्तिकादावेवान्तर्भावः ( त० व० पृ० ८५ ) इति । केषांचिन्मते अनध्यवसितत्वनामा चतुर्थोपि हेत्वाभासः ( प्रशस्त० ) ( वै० उ० ) ( मु० ) इति । [ ग ] वेदान्तिनस्त्वाहुः । हेत्वाभासः ( हेतुदोषः ) उपपत्तिदोषः इत्युच्यते । उपपत्तिदोषो द्विविधः ( १ ) विरोधः ( २ ) असंगतिश्चेति । तत्र आद्यः जातिनिग्रहस्थानहेत्वाभासेभ्यः संगृहीतः ( प्र० च० ) । स च विरोधस्त्रिविधः प्रतिज्ञाविरोधः हेतुविरोधः दृष्टान्तविरोधश्च । तत्र प्रतिज्ञाविरोधो द्विविधः प्रमाणविरोधः स्ववचनविरोधश्च । तत्र प्रमाणविरोधोपि द्विविधः प्रबलप्रमाणविरोधः समबलप्रमाणविरोधश्च । तत्र प्रबलप्रमाणविरोधस्योदाहरणं प्रपञ्चो मिथ्या दृश्यत्वात् यद्दृश्यं तन्मिथ्या यथा शुक्तिरजतम् इति । अत्र सन् घटः इत्यादिप्रत्यक्षेण विमतं सत्यम् अर्थक्रियाकारित्वात् संप्रतिपन्नवत् इत्याद्यनुमानेन विश्वं सत्यम् इत्यागमेन च जगतः सत्यत्वावधारणात् प्रबलप्रमाणविरोधो द्रष्टव्यः ( प्र० च० पृ० २९ ) । अयं हेतुर्नैयायिकैः बाधितः इत्युच्यते । समबलप्रमाणविरोधस्योदाहरणं तु विमतं मिथ्या दृश्यत्वात् शुक्तिरजतवत् विमतं सत्यम् प्रामाणिकत्वात् आत्मवत् इति । अत्रानुमानद्वये व्याप्तिपक्षधर्मतयोः साम्यात् समबलप्रमाणविरोधो ज्ञातव्यः ( प्र० च० पृ० २९ ) । अयं च हेतुर्नैयायिकैः सत्प्रतिपक्षितः इत्युच्यते । स्ववचनविरोधोपि द्विविधः अपसिद्धान्तः जातिश्चेति । तत्र पूर्वाचार्यैर्यत् प्रामाणिकतयाभ्युपगतं तद्विरुद्धाङ्गीकारोपसिद्धान्तः । यथा निरीश्वरसांख्यमत ईश्वराङ्गीकारः । अयं भावः पूर्वाचार्यवचनस्यापि स्वयमङ्गीकृतत्वेन स्ववचनत्वादपसिद्धान्तः स्ववचनविरोधो भवति ( प्र० च० पृ० २९ ) इति । स्ववचन एव स्वव्याहति-

र्जातिः । यथा मे माता वन्ध्या इत्यादि । हेतुविरोधोपि द्विविधः स्वरूपासिद्धिः अव्याप्तिश्चेति । तत्र स्वरूपासिद्धेरुदाहरणं शब्दो नित्यश्चाक्षुषत्वात् इति । अत्र चाक्षुषत्वं शब्दे नास्ति । तस्य श्रावणत्वात् इति ज्ञेयम् (प्र० च० पृ० २९) । अव्याप्तिस्त्रिविधः लिङ्गस्य साध्येन तदभावेन च संबन्धः साध्यसंबन्धाभावे सति तदभावेनैव संबन्धः उभयसंबन्धाभावश्चेति । तत्र आद्या यथा शब्दो नित्यः प्रमेयत्वात् इति । अयं हेतुः साधारणानैकान्तिकः इत्युच्यते नैयायिकैः इति ज्ञेयम् । द्वितीया यथा शब्दो नित्यः कृतकत्वात् इति । अयं हेतुः विरुद्धः इत्युच्यते नैयायिकैः इति विज्ञेयम् । तृतीया यथा सर्वमनित्यं सत्त्वात् इति । अत्र सर्वस्यापि पक्षत्वेनोभयसंबन्धो नास्ति (प्र० च० पृ० ३०) इति । अयं हेतुः अनुपसंहारी इति नैयायिकैरुच्यते इति विज्ञेयम् । दृष्टान्तविरोधोपि द्विविधः साध्यवैकल्यम् साधनवैकल्यं चेति । तत्राद्यो यथा मनः अनित्यम् मूर्तत्वात् परमाणुवत् इति । द्वितीयो यथा मनः अनित्यम् मूर्तत्वात् कर्मवत् इति । अत्रेदं विज्ञेयम् । दृष्टान्ते साध्यवैकल्यसाधनवैकल्यादयः उदाहरणाभासाद्याश्च यथायथं निग्रहस्थानादावन्तर्भवन्ति इति न हेत्वाभासाधिक्यम् इति नैयायिकानां सिद्धान्तः (दि० १) इति। आकाङ्क्षाविरहः असंगतिः । असंगतेरुदाहरणं तु ईश्वरवादिनं प्रति क्षित्यादिकं सकर्तृकम् कार्यत्वात् घटवत् इति । अत्र अनाकाङ्क्षितसाधनप्रयुक्तत्वादसंगतिर्भवति इति विज्ञेयम् (प्र० च० पृ० ३०) । एवम् उदाहरणाभासा अपि दोषाः उदाहरणलक्षणरहिता उदाहरणवदवभासमानाः । ते चानेकप्रकाराः । तत्र साधर्म्योदाहरणे तावत् साध्यवैकल्यम् यथा मनः अनित्यम् मूर्तत्वात् इति । साधनवैकल्यं यथा मनः अनित्यम् मूर्तत्वात् कर्मवत् इति । अत्राद्ये यन्मूर्तं तदनित्यम् यथा परमाणुः इति साध्यवैकल्यम् । द्वितीये कर्मणः अनित्यत्वेपि मूर्तत्वाभावात् साधनवैकल्यम् इति विज्ञेयम् (प्र० च० पृ० ३४) । उभयवैकल्यं यथा मनः अनित्यम् मूर्तत्वात् आकाशवत् इति । वैधर्म्योदाहरणे साध्याभाववैकल्यम् । यथा मनः अनित्यम् मूर्तत्वात् इत्यत्र यदनित्यं न भवति तन्मूर्तं न भवति यथा कर्म इति । साधनाभाव-

वैकल्यं यथा मनः अनित्यं मूर्तत्वात् इत्यत्र यदनित्यं न भवति तन्मूर्तं न भवति यथा परमाणुः इति । उभयाभाववैकल्यं यथा मनः अनित्यं मूर्तत्वात् इत्यत्र यदनित्यं न भवति तन्मूर्तं न भवति यथा घटः ( प्र० च० पृ० २८-३५ ) इत्यलं विस्तरेण । २ दुष्टो हेतुः [ क ] हेतुलक्षणाभावादहेतुर्हेतुसामान्याद्धेतुवदाभासमानः ( वात्स्या० १।२।४ ) । अत्र हेतुवदाभासते इति व्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुः इत्यर्थः ( ग० २ हेत्वा० सामा० प्रस्ताव० पृ० २ ) । यद्वा हेतोराभासः सदृशः ( न्या० बिन्दु० टी० परि० ३ पृ० ६६ ) । अत्र श्रुतमस्मद्गुरुमुखात् । अत्र सादृश्यं च पञ्चम्यन्तपदप्रतिपाद्यत्वेन इति साताराग्रामस्थास्त्रिपथगाकर्तारो गजेन्द्रगडकर इत्युपाह्वा राघवेन्द्राचार्याः प्राहुः इति । दुष्टहेतोर्लक्षणं च सव्यभिचाराद्यन्यतमत्वम् ( न्या० म० ) । निरुक्तदोषवत्त्वं वा ( नील० २ हेत्वा० पृ० २४ ) । अत्र निरुक्तदोषस्तु हेत्वाभासशब्दस्य प्रदर्शिते प्रथमेर्थे दृश्यः । अत्रेदं विज्ञेयम् । हेतौ तादृशदोषविशिष्टत्वं च स्वविषयकज्ञानविषयत्वविशिष्टप्रकृतहेतुतावच्छेदकवत्त्वसंबन्धेन बोध्यम् । तेन हेतुषु दोषसंबन्धः ( दोषाणां हेतुनिष्ठत्वम् ) संगच्छते ( दीधि० २ हेत्वा० पृ० १७९ ) ( ग० हे० सामा० ) इति । हेत्वाभासप्रयोजनं तु इत्थम् । द्वयं ह्युद्देश्यम् परानुमितिप्रतिबन्धः स्थापनाया असाधकतासाधकत्वं च । अत्रासाधकत्वं च स्वज्ञानदशायां पक्षे साध्यप्रत्ययाजनकत्वम् । तत्राद्यं दूषणमात्रज्ञानादेव । द्वितीयं तु अलिङ्गत्वज्ञापनात् प्रतिबन्धकत्ववदनेनापि रूपेण दूषकत्वसंभवः इत्यभिप्रायेण वा असाधकतासाधनत्वम् ( चि० २ हेत्वा० पृ० १११ ) इति । किंच विपरीतकोटिसाधकस्य हेतोः हेत्वाभासत्वज्ञानेन स्वस्य तत्त्वनिर्णयः ( प्रमितकोटिनिश्चयः साध्यवत्ताज्ञाने प्रमात्वनिश्चयो वा ) भवति । स्वस्य परोक्तहेतौ हेत्वाभासत्वज्ञाने सति तत्र दोषोद्भावनेन व्याप्त्यादिविशिष्टहेतोः संन्यायप्रयोगकरणेन च विजयोपि भवति ( ग० २ हेत्वा-सामा-प्रस्ताव० पृ० १-२ ) इति । अत्रेदं बोध्यम् । हेत्वाभासो निग्रहस्थानमेव । तथा च सूत्रम् हेत्वाभासाश्च यथोक्ताः ( गौ० ५।२।२४ ) इति । अत्र चकारः साध्यविकलत्वादि-

दृष्टान्तदोषम् अनुपदर्शितान्वयत्वादियुक्तिदोषम् आत्माश्रयत्वादिव्याघातम् अनुक्तं त्रयमपि समुच्चिनोति ( सा० सं० पृ० १२० ) । अत्र चकारस्य दृष्टान्ते साधनवैकल्यादिसमुच्चायकत्वम् इति केचिदाहुः । तन्न । यथोक्ताः इत्यस्यानन्वयापत्तेः ( गौ० वृ० ५।२।२४ ) इति । अत्र भाष्यम् हेत्वाभासाश्च निग्रहस्थानानि हेत्वाभासलक्षणेनैव निग्रहस्थानभावः ( वात्स्या० ५।२।२४ ) इति । हेत्वाभासाः पुनर्यथा येन रूपेण पूर्वम् ( गौ० सूत्रे १।२।४–९ ) उक्ताः तेनैव रूपेण तेषां निग्रहस्थानत्वम् इति न लक्षणान्तरमपेक्षितम् ( गौ० वृ० ५।२।२४ ) ( ता० र० परि० ३ श्लो० १५४ ) । ते च हेत्वाभासाः निग्रहस्थानम् । निग्रहस्थानत्वं प्राप्तानां पुनरेषां पृथगुपदेशो वादे देशनीयत्वात् । तथा च भाष्यम् निग्रहस्थानेभ्यः पृथगुपदिष्टाः हेत्वाभासा वादे चोदनीया भविष्यन्तीति ( वात्स्या० १।१।१ पृ० ६ ) । वार्तिककारैरप्युक्तम् यस्मात्किलैते वादे देश्यन्ते अतः पृथगुपदिश्यन्ते न्यायसूत्रेण ( १।१।१ ) ( न्या० वा० १ पृ० २० ) इति । [ ख ] पञ्चरूपोपपन्नत्वाभावे सति तद्रूपेण भासमानः ( गौ० वृ० १।२।४ ) । पञ्च रूपाणि तु पक्षसत्त्वम् सपक्षसत्त्वम् विपक्षासत्त्वम् अबाधितत्वम् असत्प्रतिपक्षितत्वं चेति ( गौ० वृ० १।२।४ ) ( वै० उ० ३।१।१७ ) । [ ग ] पक्षधर्मत्वादीनां पञ्चानां रूपाणां मध्य एकेनापि रूपेण हीनो यो हेतुः सोपि कतिपयहेतुरूपयोगाद्धेतुवदवभासमानः ( त० भा० पृ० ४४ ) ( वै० उ० ३।१।१७ ) ( त० व० ) । तथा चोक्तं तार्किकरक्षायाम् हेतोः केनापि रूपेण रहिताः केश्चिदन्विताः । हेत्वाभासाः पञ्चधा ते गौतमेन प्रपञ्चिताः ॥ ( ता० र० श्लो० ८० ) ( वै० उ० ३।१।१७ ) । अत्र न्यायवार्तिकमपि अन्यतमलिङ्गधर्मानुविधानेन प्रवर्तमाना अहेतवः सन्तो हेतुवदवभासन्त इति हेत्वाभासाः ( न्या० वा० १ पृ० २० ) इति । [ घ ] यस्य हेतोर्यावन्ति रूपाणि गमकतौपयिकानि तदन्यतररूपहीनः स हेतुराभासः ( वै० उ० ३।१।१७ पृ० १५९ ) । एवं च गमकतौपयिकान्यतररूपशून्यत्वं हेत्वाभासत्वम् । तेन अन्यतररूपशून्यत्वस्य निश्चयवत् संदेहोप्यनुमितिप्रतिबन्धकः वादिहेतोरसाधकतासाधकः ।

न च केवलान्वयिकेवलव्यतिरेकिणोर्हेत्वोरन्यतररूपशून्यतया हेत्वाभासत्वापत्तिः। केवलान्वयिनि विपक्षासत्त्वस्य केवलव्यतिरेकिणि सपक्षसत्त्वस्य गमकत्वौपयिकत्वाभावात्। एवं च आश्रयासिद्धस्वरूपासिद्धभागासिद्धानां पक्षसत्त्वरूपविरहादाभासत्वम्। व्याप्यत्वासिद्धविरुद्धसाधारणानैकान्तिकानां विपक्षासत्त्वरूपवैकल्यात्। असाधारणानैकान्तिकानुपसंहारिणोः सपक्षसत्त्ववैकल्यात्। बाधितसत्प्रतिपक्षितयोरबाधितत्वासत्प्रतिपक्षितत्वविरहात्। एवम् सोपाधिकाप्रयोजकयोरपि विपक्षासत्त्वनिश्चयाभावादगमकत्वम्। अनुकूलतर्काभावप्रतिकूलतर्कयोरपि विपक्षासत्त्वनिश्चयविरहात्। एवम् साध्यविकलसाधनविकलोभयविकलदृष्टान्ताभासानां यदि हेत्वाभासविधया दोषत्वम् तदा सपक्षसत्त्वानिश्चयात्। यदि स्वातन्त्र्येण दृष्टान्ताभासतया तथापि द्वारं हेतोः सपक्षसत्त्वानिश्चय एव। अनुपदर्शितान्वयानुपदर्शितव्यतिरेकास्तु न्यूनाप्राप्तकालनिग्रहस्थानपर्यवसन्ना एव। आत्माश्रयान्योन्याश्रयचक्रकानवस्थास्तु व्याप्तिनिश्चयं विघटयन्तः सपक्षसत्त्वविपक्षासत्त्वान्यतररूपविकला एव हेत्वाभासतामापादयन्ति (वै० उ० ३।१।१७ पृ० १५९–१६०) इति। [ङ] असाधको हेतुत्वेनाभिमतः (सर्व० पृ० २३९ अक्ष०)। यथा ह्रदो वह्निमान् धूमात् इत्यादौ धूमो हेत्वाभासः। अत्र वह्न्यभाववद्ध्रदो बाधः वह्न्यभावव्याप्यवद्ध्रदः सत्प्रतिपक्षः धूमाभाववद्ध्रदः स्वरूपासिद्धिश्च एतद्दोषत्रयवान् धूमो भवति इति धूमो हेत्वाभासः। यथा वा वायुर्गन्धवान्स्नेहात् इत्यादौ स्नेहः (दि० २)। यथा वा घटः पटोस्ति कुड्यत्वात् इत्यादौ कुड्यत्वं हेत्वाभासः। हेत्वाभासस्य पञ्चविधत्वकथनमप्येतादृशस्थलाभिप्रायेणैव। तथा चात्र पञ्चानामपि दोषाणां संभवः। तथा हि गन्धाभाववद्वृत्तिः स्नेहः साधारणानैकान्तिकः। गन्धव्यापकीभूताभावप्रतियोगी स्नेहोसाधारणानैकान्तिकः। गन्धवदवृत्तिः स्नेहो विरुद्धः। स्नेहाभाववान्वायुरसिद्धिः तद्वान्स्नेहः असिद्धः स्वरूपासिद्धः। गन्धाभावव्याप्यवायुत्ववान् वायुः सत्प्रतिपक्षः तद्वान्स्नेहः सत्प्रतिपक्षितः। गन्धाभाववान्वायुर्बाधः तद्वान्स्नेहो बाधितश्च इति। एवम् घटः पटोस्ति कुड्यत्वात् इत्यादावपि हेतौ पञ्चदोषवत्त्वमुन्नेयम्। अत्रेदं बोध्यम्। एकस्यैव

हेतुस्य अनैकान्तिकः विरुद्धः इत्यादिपञ्चत्वव्यवहारः कथम् इत्याशङ्कायामुत्तरम् । उपधेयसंकरेप्युपाध्यसंकरः इति न्यायाद्दोषगतसंख्यामादाय दुष्टहेतौ पञ्चत्वादिसंख्याव्यवहारः (दीधि० २ हेत्वा० पृ० १७८) इति। तेन यत्र क्वचिद्धेतावेकविध एव दोषः क्वचिद्वौ क्वचित्तु त्रयः पञ्चविधा वा संभवेयुः तत्रापि तत्तद्व्यवहारः संगमनीयः इति । गौतमे मते हेत्वाभासः पञ्चधा सव्यभिचारः विरुद्धः प्रकरणसमः साध्यसमः कालातीतश्चेति (गौ० १।२।४) । वृत्तिकारोपि अप्रसिद्धोनपदेशोसन् संदिग्धश्चानपदेशः (वै० ३।१।१५) इति सूत्रस्थचकारस्य बाधसत्प्रतिपक्षसमुच्चयार्थकतामुक्त्वा गौतमीयमेव मतमनुधावति (वै० उ० ३।१।१७ पृ० १६१) । पर्यायान्तरेण हेत्वाभासः पञ्चधा असिद्धः विरुद्धः अनैकान्तिकः प्रकरणसमः कालात्ययापदिष्टश्चेति (त० भा०) । पर्यायान्तरेणापि हेत्वाभासः पञ्चधा सव्यभिचारः विरुद्धः असिद्धः सत्प्रतिपक्षितः बाधितश्चेति (न्या० म० २ पृ० २०) (त० सं०)। एवं च अनुकूलतर्काभावादयः असिद्धभेदा एव। विशेषणासिद्ध विशेष्यासिद्ध असमर्थविशेषण असमर्थविशेष्य असमर्थोभय संदिग्धासमर्थविशेषण संदिग्धासमर्थविशेष्य संदिग्धासमर्थोभय इत्यादयः सहस्रधाभेदभिन्नासिद्धप्रभेदाः स्वरूपासिद्धे अन्तर्भवन्ति (वै० उ० ३।१।१७ पृ० १५८–१५९) (त० भा० हेत्वा० पृ० ४५) । व्यर्थविशेषणस्तु व्याप्यत्वासिद्धे अन्तर्भवति इति न हेत्वाभासाधिक्यम् इति विज्ञेयम् । काश्यपमते (कणादमते) तु हेत्वाभासस्त्रिधा असिद्धः विरुद्धः संदिग्धश्चेति । अत्र भाष्यम् अनुमेयेन संबद्धं प्रसिद्धं च तदन्विते । तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥ विपरीतमतो यत्स्यादेकेन द्वितयेन वा । विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोब्रवीत् ॥ (प्रशस्त० २ पृ० ४४) इति । तथा हि काश्यपसूत्रम् अप्रसिद्धोनपदेशोसन् संदिग्धश्चानपदेशः (वै० ३।१।१५) इति । अनध्यवसितो नामातिरिक्तश्चतुर्थो हेत्वाभासः इति केचिदाहुः (प्रशस्त०) (त० व० ३।२ श्लो० ५६ पृ० ८४) । साध्यासाधकः पक्ष एव वर्तमानो हेतुः अनध्यवसितः इत्युच्यते । तथा च भाष्यम् यश्चानुमेये विद्यमानः तत्समानासमानजातीययोरसन्नेव

सोन्यतरासिद्धोनध्यवसायहेतुत्वादनध्यवसितः । यथा सत् कार्यमुत्पत्तेः इति । अयमप्रसिद्धोनपदेशः (वै० ३।१।१५) इति वचनादविरुद्धः (प्रशस्त० २ पृ० ४७) इति । सोपि कणादमते संदिग्धादावन्तर्भवति इति न त्रैविध्यविभागविरोधः (त० व० ३।२ श्लो० ५६ पृ० ८४)। अत्र भाष्यम् एतेन अप्रसिद्धविरुद्धसंदिग्धानध्यवसितवचनानामनपदेशत्वमुक्तं भवति (प्रशस्त० २ पृ० ४६) इति । लीलावतीकारा अप्याहुः हेत्वाभासाश्चत्वारः विरुद्धासिद्धसव्यभिचारानध्यवसिताः । बाधप्रतिरोधावपि स्तः इति चेन्न । तयोः व्याप्तिपक्षधर्मतापहारेणैवानुमानदूषकत्वात् सिद्धसाधनवत् (न्या० ली० पृ० ४३) इति । अत्रेदं चिन्त्यम् । उत्पत्तिकालीनो घटो गन्धवान्पृथिवीत्वात् इत्यादौ मूलावच्छिन्नो वृक्षः कपिसंयोगी इत्यादौ चासंकीर्णदोषस्थले बाधस्यैवातिरिक्तदोषत्वमवश्यमङ्गीकर्तव्यम् (भा० प० श्लो० ७९) (चि० २) इति । मञ्जरीप्रकाशकारस्तु आद्यक्षणावच्छिन्नो घटो गन्धवान् स्नेहात् इत्यादौ व्यभिचारादिदोषपञ्चकमपि संभवति इत्याह (म० प्र० २ पृ० २५)।

**होत्रकः**—मैत्रावरुणब्राह्मणाच्छंसिपोत्रादय ऋत्विजो होत्रकाः (जै० न्या० अ० ३ पा० २ अधि० १२)।

**होमः**—[क] याग एव विशिष्टदेशप्रक्षेपोपहितो होम इत्युच्यते (का० व्या० कार० ४ पृ० ५)। यथा नित्यं गृहस्थकर्तव्येषु पञ्चसु यज्ञेषु मध्ये देवयज्ञः । यथा वा आपस्तम्बीयैः क्रियमाणं श्राद्धीयविप्रपाणौ श्राद्धीयान्नभागस्य मन्त्रेण दानम् (पाणिहोमः) (श्रा० त०) । [ख] त्यक्तस्य वह्नौ प्रक्षेपः होमः (जै० न्या० अ० ४ पा० २ अधि० १३) । अत्र होमत्वं च मानसप्रत्यक्षगम्यो जातिविशेषः इत्यन्ये आहुः (दि० गु० धर्मनि० पृ० २३४) ।

**होलाका**—वसन्तोत्सवः (जै० न्या० अ० १ पा० ३ अधि० ८) ।

**होलिका**—सर्वदुष्टापहो होमः सर्वरोगोपशान्तिदः । क्रियतेस्यां द्विजैः पार्थ तेन सा होलिका स्मृता ॥ (पु० चि० पृ० ३०९)। अत्र विशेषः सार्धयामत्रयं वा स्याद्द्वितीये दिवसे यदा । प्रतिपद्वर्धमाना तु तदा सा होलिका स्मृता ॥ (पु० चि० पृ० ३१२ ) इति ।

स्नेहस्य अनैकान्तिकः विरुद्धः इत्यादिपञ्चत्वव्यवहारः कथम् इत्याशङ्कायामुत्तरम् । उपधेयसंकरेप्युपाध्यसंकरः इति न्यायाद्दोषगतसंख्यामादाय दुष्टहेतौ पञ्चत्वादिसंख्याव्यवहारः (दीधि० २ हेत्वा० पृ० १७८) इति। तेन यत्र कचिद्धेतावेकविध एव दोषः कचिद्द्वौ कचित्तु त्रयः पञ्चविधा वा संभवेयुः तत्रापि तत्तद्व्यवहारः संगमनीयः इति। गौतमे मते हेत्वाभासः पञ्चधा सव्यभिचारः विरुद्धः प्रकरणसमः साध्यसमः कालातीतश्चेति (गौ० १।२।४)। वृत्तिकारोपि अप्रसिद्धोनपदेशोसन् संदिग्धश्चानपदेशः (वै० ३।१।१५) इति सूत्रस्थचकारस्य बाधसत्प्रतिपक्षसमुच्चयार्थकतामुक्त्वा गौतमीयमेव मतमनुधावति (वै० उ० ३।१।१७ पृ० १६१)। पर्यायान्तरेण हेत्वाभासः पञ्चधा असिद्धः विरुद्धः अनैकान्तिकः प्रकरणसमः कालात्ययापदिष्टश्चेति (त० भा०)। पर्यायान्तरेणापि हेत्वाभासः पञ्चधा सव्यभिचारः विरुद्धः असिद्धः सत्प्रतिपक्षितः बाधितश्चेति (न्या० म० २ पृ० २०) (त० सं०)। एवं च अनुकूलतर्काभावादयः असिद्धभेदा एव। विशेषणासिद्ध विशेष्यासिद्ध असमर्थविशेषण असमर्थविशेष्य असमर्थोभय संदिग्धासमर्थविशेषण संदिग्धासमर्थविशेष्य संदिग्धासमर्थोभय इत्यादयः सहस्रधाभेदभिन्नासिद्धप्रभेदाः स्वरूपासिद्धे अन्तर्भवन्ति (वै० उ० ३।१।१७ पृ० १५८—१५९) (त० भा० हेत्वा० पृ० ४५)। व्यर्थविशेषणस्तु व्याप्यत्वासिद्धे अन्तर्भवति इति न हेत्वाभासाधिक्यम् इति विज्ञेयम्। काश्यपमते (कणादमते) तु हेत्वाभासस्त्रिधा असिद्धः विरुद्धः संदिग्धश्चेति। अत्र भाष्यम् अनुमेयेन संबद्धं प्रसिद्धं च तदन्विते। तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्॥ विपरीतमतो यत्स्यादेकेन द्वितयेन वा। विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोब्रवीत्॥ (प्रशस्त० २ पृ० ४४) इति। तथा हि काश्यपसूत्रम् अप्रसिद्धोनपदेशोसन् संदिग्धश्चानपदेशः (वै० ३।१।१५) इति। अनध्यवसितो नामातिरिक्तश्चतुर्थो हेत्वाभासः इति केचिदाहुः (प्रशस्त०) (त० व० ३।२ श्लो० ५६ पृ० ८४)। साध्यासाधकः पक्ष एव वर्तमानो हेतुः अनध्यवसितः इत्युच्यते। तथा च भाष्यम् यश्चानुमेये विद्यमानः तत्समानासमानजातीययोरसन्नेव

सोन्यतरासिद्धोनध्यवसायहेतुत्वादनध्यवसितः । यथा सत् कार्यमुत्पत्तेः इति । अयमप्रसिद्धोनपदेशः ( वै० ३।१।१५ ) इति वचनादविरुद्धः ( प्रशस्त० २ पृ० ४७ ) इति । सोपि कणादमते संदिग्धादावन्तर्भवति इति न त्रैविध्यविभागविरोधः (त० व० ३।२ श्लो० ५६ पृ० ८४)। अत्र भाष्यम् एतेन अप्रसिद्धविरुद्धसंदिग्धानध्यवसितवचनानामनपदेशत्वमुक्तं भवति ( प्रशस्त० २ पृ० ४६ ) इति । लीलावतीकारा अप्याहुः हेत्वाभासाश्चत्वारः विरुद्धासिद्धसव्यभिचारानध्यवसिताः । बाधप्रतिरोधावपि स्तः इति चेन्न । तयोः व्याप्तिपक्षधर्मतापहारेणैवानुमानदूषकत्वात् सिद्धसाधनवत् ( न्या० ली० पृ० ४३ ) इति । अत्रेदं चिन्त्यम् । उत्पत्तिकालीनो घटो गन्धवान्पृथिवीत्वात् इत्यादौ मूलावच्छिन्नो वृक्षः कपिसंयोगी इत्यादौ चासंकीर्णदोषस्थले बाधस्यैवातिरिक्तदोषत्वमवश्यमङ्गीकर्तव्यम् ( भा० प० श्लो० ७९ ) ( चि० २ ) इति । मञ्जरीप्रकाशकारस्तु आद्यक्षणावच्छिन्नो घटो गन्धवान् स्नेहात् इत्यादौ व्यभिचारादिदोषपञ्चकमपि संभवति इत्याह ( म० प्र० २ पृ० २५ )।

**होत्रकः**—मैत्रावरुणब्राह्मणाच्छंसिपोत्रादय ऋत्विजो होत्रकाः ( जै० न्या० अ० ३ पा० २ अधि० १२ ) ।

**होमः**—[ क ] याग एव विशिष्टदेशप्रक्षेपोपहितो होम इत्युच्यते ( का० व्या० कार० ४ पृ० ५ ) । यथा नित्यं गृहस्थकर्तव्येषु पञ्चसु यज्ञेषु मध्ये देवयज्ञः । यथा वा आपस्तम्बीयैः क्रियमाणं श्राद्धीयविप्रपाणौ श्राद्धीयान्नभागस्य मन्त्रेण दानम् ( पाणिहोमः ) ( श्रा० त० ) । [ ख ] त्यक्तस्य वह्नौ प्रक्षेपः होमः ( जै० न्या० अ० ४ पा० २ अधि० १३ ) । अत्र होमत्वं च मानसप्रत्यक्षगम्यो जातिविशेषः इत्यन्ये आहुः ( दि० गु० धर्मनि० पृ० २३४ ) ।

**होलाका**—वसन्तोत्सवः ( जै० न्या० अ० १ पा० ३ अधि० ८ ) ।

**होलिका**—सर्वदुष्टापहो होमः सर्वरोगोपशान्तिदः । क्रियतेस्यां द्विजैः पार्थ तेन सा होलिका स्मृता ॥ ( पु० चि० पृ० ३०९ ) । अत्र विशेषः सार्धयामत्रयं वा स्याद्द्वितीये दिवसे यदा । प्रतिपद्वर्धमाना तु तदा सा होलिका स्मृता ॥ ( पु० चि० पृ० ३१२ ) इति ।

ह्नवः—( चौर्यम् ) बोधविषयमितरादर्शनयोग्यदेशस्थापनम् । यथा गोपी कृष्णायात्मानं ह्नुते इत्यत्र ह्नुधात्वर्थः । अत्र सपत्नीभियात्मादेस्तथा स्थापनं बोध्यम् । एवं च गोपीकर्तृका कृष्णसंप्रदानिका अर्थात् कृष्णवृत्तिबोध—विषयात्मकर्मकतथावस्थानानुकूला क्रिया इति बोधः ( ल० म० कार० ४ पृ० १०३ ) वैयाकरणमते भवतीति बोध्यम् ।

ह्यः—( अव्ययम् ) अव्यवहितातीतदिवसः ( वै० सा० द० ) । यथा ह्यस्तने अहमागतः इत्यादौ ।

ह्रदः—१ अगाधजलाशयः ( अमरः १।१०।२५ ) । यथा ह्रदो वह्निमान् धूमात् इत्यत्र वह्न्यभाववद्ध्रदो बाधः इत्यादौ ग्रन्थे ह्रदशब्दस्यार्थः । तज्जलगुणाश्च ह्रदवारि वह्निजननं मधुरं कफवातहारि पथ्यं च ( वाचस्पत्ये राजनि० ) इति । २ किरणः ( रामाश्रमः ) ।

ह्रस्वत्वम्—१ (गुणः) इदं ह्रस्वम् इति व्यवहारसिद्धः परिमाणविशेषः ( वै० वि० ७।१।१७) । २ एकमात्राकालोच्चार्यत्वम् इति शाब्दिका आहुः । ३ भूमिजम्बूवृक्षस्य धर्मविशेषो ह्रस्वत्वम् इति वनस्पतिशास्त्रज्ञा आहुः ।

ह्लादः—१ आनन्दविशेषः । यथा यथा प्रह्लादनाच्चन्द्रः (रघु० ४।१२) इत्यादौ ह्लादनशब्दार्थः । २ आलंकारिकास्तु चमत्कृतिः । यथा चन्द्र इव मुखं लोकान्ह्लादयति इत्यादौ ह्लादधात्वर्थश्चमत्कृतिः इत्याहुः इति संक्षेपः इति शम् ॥

इति श्रीमत्सकलसद्विद्वद्वृन्दसंसेव्यवैष्णवमतावतंसश्रीमध्वसिद्धान्तानुयायिनः कर्णाटदेशीयझळकीग्रामनिवासिश्रीयुतरामभट्टात्मजस्य श्रीयुतसरस्वतीतनूद्भवस्य श्रीयुतभिक्षुशास्त्रिभ्योधीतन्यायशास्त्रस्य मुंबईस्थैल्फिन्स्टन्पाठशालायां न्यायाद्यनेकदर्शनाध्यापकस्य आङ्ग्लभूपालप्रदत्तमहामहोपाध्यायपदाङ्कितस्य च भट्टभीमाचार्यस्य कृतौ न्यायकोशः समाप्तः ॥

न्यायकोशस्य द्वितीयावृत्तौ शब्दानां संख्या १८९४ आसीत् । अस्यां तृतीयावृत्तावधिकाः शब्दाः ६६८ संगृहीताः । संकलनया चात्र शब्दानां संख्या २५६२ वरिवर्ति ॥

अब्धीन्द्विभेन्दुमानेन ( १८१४ ) मिते शाके च नन्दने ।
वत्सरे (खिस्त्यब्दाः १८९२) भट्टभीमेन न्यायकोशः समापितः ॥ १ ॥
अनेन पुष्पकोशेन कालान्तरविकासिना ।
समर्पितेनाञ्जलिना प्रीयतां पुरुषोत्तमः ॥ २ ॥

॥ श्रीशः शंकरो भवतु ॥

# Bhandarkar Oriental Research Institute

**POONA ( No. 4 )**

# PRICE-LIST

## OF THE

( I ) **Bombay Sanskrit and Prakrit Series**

( II ) **Government Oriental Series**

(III) **Miscellaneous Publications**

(IV) **Annals of the Institute**

( V ) **Reports of the All-India Oriental Conferences**

(IV) **Critical Edition of the Mahābhārata**

1933

Printed by Tatva-Vivechaka Press, Victoria Gardens Road, Byculla, Bombay No. 8 and published by S. K. Belvalkar, M. A., Ph. D., Secretary, at the Bhandarkar Oriental Research Institute, Poona No. 4.

## Bhandarkar Oriental Research Institute

**Rates of Discount :—**

**( N. B.—No discount is given on fraction of a rupee )**

| Class of Purchasers | Older Government Publications in the B. S. S. | 1. New B.S.S Publications 2. Revisions & Reprints 3. Govt. Or. Series 4. Mbh. ed | 1 Reports and Proceedings of the All-India Oriental Conferences 2. Miscellaneous | Remarks |
|---|---|---|---|---|
| 1. Members of the Institute | 25 per cent | 20 per cent. | 12½ per cent. | For one copy of each publication only More copies at booksellers' rates. |
| 2. Recognised Booksellers* | 20 per cent. | 20 per cent. | 12½ per cent. | On orders of Rs 25 or more. |
| 3. —do— | 12½ per cent. | 12½ per cent | 10 per cent. | On orders of less than Rs.25. |
| 4. Other purchasers | 6¼ per cent. | 6¼ per cent. | 6¼ per cent. | Only on orders of Rs. 10 or more. |

* *Credit is given to recognised firms agreeing to clear up all arrears on demand, or within one month ( in India ), and three months ( outside India ), of the date of purchase. All prices are exclusive of postage.*

I

## BOMBAY SANSKRIT AND PRAKRIT SERIES

Edited under the Supervision of the
Publication Department
Bhandarkar Oriental Research Institute, Poona (4)

### (i) *Works already published*

| | Rs. | as. |
|---|---|---|
| No. I *Pañcatantra, Books IV and V, edited with Notes* by Dr. G. Bühler ... ... ... | 0 | 6 |
| No. II Nâgojibhaṭṭa's Paribhâṣenduśekhara, Part I. Sanskrit Text and Various Readings, edited by Dr. F. Kielhorn (*out of stock*) ... ... | ... | |
| No. III Pañcatantra, Books II, and III, edited with Notes, by Dr. G. Bühler ... ... | 0 | 6 |
| No. IV Pañcatantra, Book I, edited with Notes, by Dr. F. Kielhorn ... ... ... | 0 | 6 |
| No. V Raghuvaṁśa of Kâlidâsa, with the commentary of Mallinâtha, Part I (Cantos I–VI), edited with Notes, by S. P. Pandit, (*out of stock*) ... | ... | |
| No. VI *Mâlavikâgnimitra* of Kâlidâsa, edited with Notes, by S. P. Pandit, 2nd edition (*out of stock*) ... ... ... ... | | |
| No. VII *Nâgojibhaṭṭa's* Paribhâṣenduśekhara, Part IIA (Paribhâṣâs 1–37) Translation and Notes, by Dr. F. Kielhorn (*out of stock*) ... ... | ... | |
| No. VIII Raghuvaṁśa of Kâlidâsa, with the commentary of Mallinâtha, Part II (Cantos VII–XIII), edited with Notes, by S. P. Pandit, (*out of stock*) | ... | |
| No. IX Nâgojibhatta's Paribhâṣenduśekhara, Part IIB, (Paribhâṣâs 38–69), Translation and Notes, by Dr. F. Kielhorn (*out of stock*) ... ... | | |

| | Rs. | as. |
|---|---|---|
| No. X Daśakumâracarita of Daṇḍin, Part I, by Dr. G. Bühler and Part II, by Dr. P. Peterson, re-edited with Notes in one Volume, by G. J. Agashe ... | 4 | 6 |
| No. XI Nîtiśataka and Vairâgyaśataka of Bhartṛhari, edited with Notes, by Justice K. T. Telang, ( *copy-right restored to the editor* ) ... ... | ... | |
| No. XII Nâgojibhaṭṭa's Paribhâsenduśekhara, Part IIC, (Paribhâṣâs 70–122); Translation and Notes, by Dr. F. Kielhorn (*out of stock*) ... ... | ... | |
| No. XIII Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha, Part III (Cantos XIV–XIX) edited with Notes, by S. P. Pandit, (*out of stock*) ... ... ... ... | ... | |
| No. XIV Vikramâṅkadevacarita of Bilhaṇa, by Dr. G. Bühler, (*copy-right restored to the editor*) ... | ... | |
| No. XV Mâlatî–Mâdhava, with the Commentary of Jagaddhara, edited with the Critical Notes, etc. by Dr. R. G. Bhandarkar, *Second edition* ... | 4 | 4 |
| No. XVI Vikramorvaśîya of Kâlidâsa, with Notes, by S. P. Pandit, *Third edition* ... ... | 2 | 0 |
| No. XVII Hemacandra's Deśî–nâmamâlâ, Part I, by Prof. Pischel and Dr. G. Bühler (*in Press*) ... | ... | |
| No. XVIII* Vyâkaraṇa–Mahâbhâṣya of Patañjali, Vol. I, Part I, by Dr. F. Kielhorn, (*out of stock*) ... | ... | |
| No. XIX* Vyâkaraṇa–Mahâbhâṣya of Patañjali, Vol. I, Part II, by Dr. F. Kielhorn, (*out of stock*) ... | ... | |
| No. XX* Vyâkaraṇa–Mahâbhâṣya of Patañjali, Vol. I, Part III, by Dr. F. Kielhorn, (*out of stock*) ... | ... | |

* Nos 18, 19 and 20 are bound together in one volume, the whole volume being priced Rs. 4–8.

